णमो नमो निम्मल दंसणस्स

पंचम गणधर श्री सुधर्मास्वामिने नमः

# १८ जम्बूद्वीपप्रज्ञप्ति-उपाङ्गसूत्रम्

सटीकं

(सप्तमं उपाङ्गम्)

(मूलसूत्रम् + शान्तिचन्द्रवाचकविरचिता वृत्तिः)

[આ ઉપાંગનો ક્રમ આ ટીકામાં છઠ્ઠો જ બતાવેલ છે (જો કે ઉપાંગક્રમ વિશે મતભેદોનો ઉલ્લેખ પણ ટીકાકારે કર્યો જ છે) પરંતુ સૂર્યપ્રજ્ઞપ્તિ ચન્દ્રપ્રજ્ઞપ્તિ ઉપાંગની વર્તમાન કાળે જે સામ્યતા જોવા મળે છે તે કારણથી પૂજ્ય આગમોદ્ધારક આચાર્ય દેવ આનંદસાગરસૂરિજી મ.સા. પહેલા સૂર્ય પછી ચંદ્ર પછી જંબૂદ્વીપ એમ ત્રણે પ્રજ્ઞપ્તિનો ક્રમ ગોઠવેલ છે તેથી અમે પણ તે-જ ક્રમ અહીં સ્વીકારેલ છે.

॥१॥ जयति जिनः सिद्धार्थ सिद्धार्थनरेन्द्रनन्दनो विजयी।
अनुपहतज्ञानवचाः सुरेन्द्रशतसेव्यमानाङ्गः ॥

॥२॥ सर्वानुयोगसिद्धान् वृद्धान् प्रणिदध्महे महिमऋद्धान्।
प्रवचनकाञ्चननिकषान् सूरीन् श्रीगन्धहस्तिमुखान् ॥

॥३॥ यज्ञातवृत्तिमलयजराजिजिनागमरहस्यरसनिवहः।
संशयतापमपोहति जयति स सत्योऽत्र मलयगिरिः ॥

॥४॥ श्रीमद्गुरोर्विजयदानसहस्रभानोः, सिद्धान्तधामधरणात् समवाप्तदीप्ति।
यो दुष्षमारजनिजातमपास्तपारं, प्राणाशयद् भरतभूमिगतं तमिस्रम् ॥

॥५॥ दीपः स रत्नमय एव परानपेक्षं, प्रोद्दीपयन् विशदयन् स्वपदं स्वभाभिः।
गौरैर्गुणैरिह निदर्शितपूर्वसूरिः, श्रीसूरिहीरविजयो विजयाय वोऽस्तु ॥ युग्मम् ॥

॥६॥ यत्प्रभावादश्मनोऽपि, मम वाणीरसोऽभवत्।
ते श्रीसकलचन्द्राख्या, जीयासुर्वाचकोत्तमाः ॥

॥७॥ जम्बूद्वीपादिप्रज्ञप्तेर्दृष्टशास्त्रनुसारतः।
प्रमेयरत्नप्रशत्या, नाम्ना वृत्तिर्विधीयते ॥

इह तावद्विकटभवाटवीपर्यटनसमापतितशारीराद्यनेकदुःखार्दितो देही अकामनिर्जरायोगतः सञ्जातकर्मलाघवस्तज्जिहासया सकलकर्मक्षयलक्षणं परमपदमाकाङ्क्षति, तच्च परमपुरुषार्थत्वेन सम्यग्ज्ञानादिरत्नत्रयीगोचरपरमपुरुषकारोपार्जनीयं, स चेष्टसाधनताजातीयज्ञानजन्यः, तद्याप्तोपदेशमूलकं, आप्तश्च परमः केवलालोकावलोकितलोकालोकनिष्कारणपरोपकारैकप्रवृत्यमूयमानतीर्थकृन्नामकर्मा पुरुष एव, तदुपदेशश्च गणधरस्थविरादिभिर्द्दष्टोपाङ्गादिशास्त्रेषु

प्रपञ्चितः, तत्र अङ्गानि द्वादश, उपाङ्गान्यपि अङ्गैकदेशप्रपञ्चरूपाणि प्रायः प्रत्यङ्गमेकैकभावात् तावन्त्येव, तत्राङ्गानि आचाराङ्गादीनि प्रतीतानि, तेषामुपाङ्गानि क्रमेणामूनि–

आचाराङ्गस्यौपपातिकं १ सूत्रकृदङ्गस्य राजप्रश्नीयं २ स्थानाङ्गस्य जीवाभिगमः ३ समवायाङ्गस्य प्रज्ञापना ४ भगवत्याः सूर्यप्रज्ञप्ति ५ ज्ञाताधर्मकथाङ्गस्य जम्बूद्वीपप्रज्ञप्ति ६ उपासकदशाङ्गस्य चन्द्रप्रज्ञप्ति ७ अन्तकृद्दशाङ्गादीनां दृष्टिवादपर्यन्तानां पञ्चानामप्यङ्गानां निरयावलिकाश्रुतस्कन्धगतकल्पिकादिपञ्चवर्गा पञ्चोपाङ्गानि, तथाहि–अन्तकृद्दशांगस्य कल्पिका ८ अनुत्तरोपपातिकदशाङ्गस्य कल्पावतंसिका ९ प्रश्नव्याकरणस्य पुष्पिता १० विपाकश्रुतस्य पुष्पचूलिका ११ दृष्टिवादस्य वृष्णिदशा १२ इति।

**अत्र च उपाङ्गक्रमे सामाचार्यादौ कश्चिद्भेदोऽप्यस्ति,** अंगानां च मध्ये द्वे आद्ये अङ्गे श्रीशीलांकाचार्यैर्विवृते स्तः, शेषाणि नवाङ्गानि श्रीअभयदेवसूरिपादैर्विवृतानि सन्ति, दृष्टिवादस्तु वीरनिर्वाणात् वर्षसहस्रे व्यवच्छिन्न इति न तद्विवरणप्रयोजनं, उपाङ्गानां च मध्ये प्रथममुपाङ्गं श्रीअभयदेवसूरिभिर्विवृतं, राजप्रश्नीयादीनि षट् श्रीमलयगिरिपादैर्विवृतानि, पञ्चोपाङ्गमयी निरयावलिका च श्रीचन्द्र प्रभ सूरिभिर्विवृता, तत्र प्रस्तुतोपाङ्गस्य वृत्ति श्रीमलयगिरिकृताऽपि संप्रति कालदोषेण व्यवच्छिन्ना, इदं च गम्भीरार्थतयाऽतिगहनं तेनानुयोगरहितं मुद्रितराजकीयकमनीयकोशगृहमिव न तदर्थिनां हस्तार्पितसिद्धिकं सञ्जायत इति कल्पितार्थकल्पनकल्पद्रुमायमाणयुगप्रधानसमानसम्प्रतिविजयमानगच्छनायकपरमगुरुश्रीहीरविजयसूरीश्वरनिर्देशेन कोशाध्यक्षाज्ञया प्रेष्येणोवोन्मुद्रणमिव मया तदनुयोगः प्रारभ्यते। स च चतुर्द्धा–धर्मकथानुयोग उत्तराध्ययनादिकः गणितानुयोगः सूर्यप्रज्ञप्त्यादिकः द्रव्यानुयोगः पूर्वाणि सम्मत्यादिकश्च चरणकरणानुयोगश्च आचाराङ्गादिकः, प्रस्तुतशास्त्रस्य क्षेत्रप्ररूपणात्मकत्वात् तस्याश्च गणितसाध्यत्वाद् गणितानुयोगेऽन्तर्भावः, नन्वेवं चरणकरणात्मकाचारादिशास्त्राणामिव नास्य मुक्त्यङ्गता, साक्षात् मोक्षमार्गभूतरत्नत्रयानुपदेशकत्वात् इति चेत्, न, साक्षादुपदेशकत्वाभावेऽपि तदुपकारितया शेषाणामपि त्रयाणामनुयोगानां मुक्त्यङ्गत्वाविरोधात्, तथा चोक्तम्–

॥१॥ "चरणपडिवत्तिहेऊ धम्मकहा कालि दिक्खमादीया।
दविए दंसणसोही दंसणसुद्धस्स चरणं तु॥"

अत्र व्याख्या–अत्र वृत्तावतिदेशोक्तसम्मत्युक्तग्रन्थयोर्दुर्गपदव्याख्याने आपरिसमाप्ति अत्र व्याख्या इति संकेतो बोध्यः। चरणप्रतिपत्तिहेतुर्धर्मकथानुयोगः काले–गणितानुयोगे दीक्षादीनि व्रतानि, कोऽर्थः? –शुद्धगणितसिद्धे प्रशस्ते काले गृहीतानि प्रशस्तफलानि स्युः, कालश्च ज्योतिश्चाराधीनः, स च जम्बूद्वीपादिक्षेत्राधीनव्यवस्थस्तेनायं कालापरपर्यायो गणितानुयोग इति, द्रव्ये–द्रव्यानुयोगे शुद्धे दर्शनशुद्धिर्भवति, कोऽर्थः? –धर्मास्तिकायादिद्रव्याणां द्रव्यानुयोगतः सिद्धौ सत्यां तदास्तिक्ये प्रतिपन्ने दर्शनशुद्धिर्भवतीति, दर्शनशुद्धस्य चरणानुयोगो भवतीति।

इह यद्यपि श्रीमलयगिरिपादानां क्व च परकृताक्षेपपरिहारप्रभविष्णुवचनरचनाचातुर्यं क्व च तथाविधसम्प्रदायसाचिव्यं क्व च तत्तन्निबन्धबन्धुरतानैपुण्यं क कुशाग्रसमः प्रतिभाविभवश्च क्व च मे तत्तत्पूर्वपक्षोत्तरपक्षरचनास्वकुशलत्वं, क्व च ताध्कसंप्रदायराहित्यं क्व च कठोरग्रन्थग्रथनकर्मठत्वं कटरिकठिनः कुण्ठजनहठग्रह इत्युपहासपात्रतामात्रफलतया चन्द्राकर्षकमृगेन्द-

रानुयानि श्री मालस्येव ममानीचितीमञ्चति, तथापि लोहशालाविकीर्णानां लोहसारकणानां चुम्ब-काश्मप्रयोगेणैव महता प्रयत्नेन प्रायस्तत्प्राचीनजीवाभिगमादिवृत्तिषु ध्थनामेव व्याख्यालवानामेकत्र मीलनमनुविचिन्त्य अन्वाख्यानरूपमेवेदं व्याख्यानं विधीयत इति नानौचितीलेशोऽपीति सर्वं सुस्थं इति शास्त्रप्रस्तावना ॥

तस्य चानुयोगस्य फलादिद्वारप्ररूपणतः प्रवृत्तिर्भवति, यत उक्तम्–

॥ १ ॥ "तस्स फलजोगमंगलसमुदयत्था तहेव दाराइं ।
तब्भेयनिरुत्तिकमपओयणाइं च वच्चाइं ॥" ति

तत्र प्रेक्षावतां प्रवृत्तये तस्य–अनुयोगस्य फलमवश्यं वाच्यं, अन्यथाऽस्य निष्फलत्वमाकलय्य व्याख्यातारः श्रोतारश्च कण्टकशाखामर्द्दन इव नात्र प्रवर्त्तेरन्निति, तच्च द्विधा–कर्त्तुः श्रोतुश्च, एकैकमपि द्विधा–अनन्तरं च, तत्र कर्तुरनन्तरं द्वीपसमुद्रादिसंस्थानपरिज्ञानेऽतिपरिकर्मितमतिकत्वेन स्पष्टतया यथासंभवं संस्मरणात् स्वात्मनः सुखेनैव संस्थानविचयाभिधानधर्मध्यानसमवाप्तिर्मन्दमेघसामनुग्रहश्च श्रोतुः पुनर्जम्बूद्वीपवर्त्तिपदार्थपरिज्ञानं, परम्परं तु द्वयोरपि मुक्त्यवाप्ति, यदाह–

॥ १ ॥ "सर्वज्ञोक्तोपदेशेन, यः सत्वानामनुग्रहम् ।
करोति दुःखतप्तानां, स प्राप्नोत्यचिराच्छिवम् ॥"

॥ २ ॥ -तथा- "सम्यग्भावपरिज्ञानाद्विरक्ता भवतो जनाः ।
क्रियासक्ता ह्यविघ्नेन, गच्छन्ति परमां गतिम् ॥"

तथा योगः–सम्बन्धो वाच्यः, तेन हि ज्ञातेन फलव्यभिचारमनाशङ्कमानाः प्रेक्षावन्तः प्रवर्त्तन्त इति, स द्विधा–उपायोपेयभावलक्षणो गुरुपर्वक्रमलक्षणश्च, तत्र आद्यस्तर्कानुसारिणः प्रति, अनुयोग उपायोऽर्थावगमादि चोपेयं, स च फलाभिधानादेवाभिहितः, अन्यश्च केवलश्रद्धानुसारिणः प्रति, स चैवम्–अर्थतो भगवता वर्द्धमानस्वामिना जम्बूद्वीपप्रज्ञप्तिरुक्ता सूत्रतो गणधरैर्द्वादशाङ्ग्यामुपनिबद्धा, ततोऽपि मन्दमेघसामनुग्रहाय सातिशयश्रुतधारिभिः षष्ठाङ्गादाकृष्य पृथगध्ययनत्वेन व्यवस्थापिता, अमुमेव च सम्बन्धमनुविचिन्त्य सूत्रकृदुपोद्घातमाधास्यति अथवा 'शास्तुः प्रामाण्ये शास्त्रप्रामाण्य'मिति आद्यसम्बन्धस्यैव प्रामाण्यग्रहार्तमपरसम्बन्धनिरूपणं, न हि विदितपरमतत्वाः सत्वानुग्रहैकप्रवृत्तिमन्तो भगवन्तो जातूपेयानुपयोगि भाषन्ते, भगवत्ताभङ्गादिति, अथवा योगः–अवसरः,ततः प्रस्तुतोपाङ्गस्य दाने कोऽवसर इति ?, उच्यते, उपाङ्गस्याङ्गार्थानुवादकतयाऽङ्गस्य सामीप्येन वर्त्तमानाद्य तदीयाङ्गस्यावसरः स एवास्यापीति, तत्रावसरसूचिका इमा गाथाः–

॥ १ ॥ "तिवरिसपरियायस्स उ आयारपकप्पनाममज्झयणं ।
चउवरिसस्स य सम्मं सूअगडं नाम अंगंति ॥

॥ २ ॥ दसकप्पव्ववहारा संवच्छरपणगदिक्खियस्सेव ।
ठाणं समवाओवि अ अंगे ते अट्ठवासस्स ॥

॥ ३ ॥ दसवासस्स विवाहो एगारसवासगस्स य इमे ऊ ।
खुड्डियविमाणभाई अज्झयणा पंच नायव्वा ॥

॥ ४ ॥ बारसवासस्स तहा अरुणोवायाइ पंच अज्झयणा ।
तेरसवासस्स तहा उट्ठाणसुयाइया चउरो ॥
॥ ५ ॥ चउदसवासस्स तहा आसीविसभावणं जिणा बिंति ।
पन्नरसवासगस्स य दिट्ठीविसभावणं तहय ॥
॥ ६ ॥ सोलसवासाईसु य एगुत्तरवुड्ढिएसु जहसंखं ।
चारणभावणमहसुविणभावणा तेअगनिसग्गा ॥
॥ ७ ॥ एगूणवीसगस्स उ दिट्ठीवाओ दुवालसं अंगं ।
संपुण्णवीसवरिसो अणुवाई सव्वसुत्तस्स ॥

इति, अत्र पञ्चवस्तुकसूत्रे दशवर्षपर्यायस्य साधोः भगवत्यङ्गप्रदानेऽवसरस्य प्रतिपादनात् षष्ठाङ्गताय ज्ञाताधर्मकथाङ्गस्य प्रदाने तदनन्तरमवसरः, कारणविशेषे दुर्वाज्ञावशादर्वागपि, ततस्तदुपाङ्गत्वादस्य तदनन्तरमवसर इति संभाव्यते, योगविधान-सामाचार्यामपि अङ्गयोगोद्वहनानन्तरमेवोपाङ्गयोगोद्वहनस्य विधिप्राप्तत्वादिति २ ।

तथेदमुपाङ्गमपि प्रायः सकलजम्बूद्वीपवर्त्तिपदार्थानुशासनात्मकं, तस्य च सम्यग्ज्ञानद्वारा परमपदप्रापकत्वेन श्रेयोभूतता, अतो मा भूदत्र विघ्न इति तदपोहाय मङ्गलमुपदर्शनीयं, यतः-

॥ १ ॥ "बहुविग्घाइं सेयाइं तेण कयमंगलोवयारेहिं ।
घेत्तव्वो सो सुमहानिहिव्व जह वा महाविज्जा ॥"

इति, तच्च त्रिविधं-आदिमध्यावसानभेदात्, तत्र आदिमङ्गलं 'नमो अरिहंताण' मित्यविघ्न-तया शास्त्रस्य परिसमाप्त्यर्थं, मध्यमङ्गलं 'जया णं एक्कमेक्के चक्कवट्टिविजए भगवंतो तित्थगरा समुप्पज्जंति'त्ति तस्यैव स्थैर्याय, अस्य च द्वितीयाधिकारादिसूत्रस्य त्रिभुवनोद्भूतजनजन्म-कल्याणकसूचकत्वेन परममङ्गलत्वात्, अन्त्यमङ्गलं तु 'समणे भगवं महावीरे मिहिलाए नगरीए' इत्यादिनिगमनसूत्रे श्रीमन्महावीरनामग्रहणमिति, तस्यैव शिष्यप्रशिष्यादिपरम्परया अव्यवच्छेदार्थं, नन्विदं सम्यग्ज्ञानरूपत्वेन निर्जरार्थत्वात् अथवा "जो जं पसत्थमत्थं पुच्छइ तस्सत्थसंपत्ती" इति निमित्तशास्त्र द्वीपसमुद्राभिधानग्रहणस्य परममङ्गलत्वेन निवेदनादस्य द्वीपप्ररूपणात्मकत्वात् स्वयमेव सर्वात्मना मङ्गलं (लता) किं मङ्गलान्तरोपन्यासेन ?, अनवस्थाप्रसङ्गात्, मैवं, मङ्गलतया हि परिगृहीतं शास्त्र मङ्गलमिति व्यवह्रियते फलदं च भवति, साधुवत्, अन्यथोपहासनमस्कारादेरपि मङ्गलत्वं स्यात्, न हि लोकोऽपि स्वरूपसतां दधिदूर्वादीनां द्रव्यमङ्गलत्वं किन्तु मङ्गलाभिप्रायेण प्रयुक्तानाम्, अन्यथा तद्विषयकदर्शनस्पर्शनादीनां निर्मूलकतापातात्, इह अस्य शास्त्रस्य फलादि निरूपितं तदनुयोगस्य द्रष्टव्यं, तयोः कथञ्चिदभेदादिति ३ ।

अथेदानीं समुदायार्थश्चिन्त्यते, तत्र समुदायः सामान्यत- शास्त्रसङ्ग्रहणीयः पिण्डस्तद्रूपोऽर्थो वक्तव्यः, किमुक्तं भवति ?-अवयवविभागनिरपेक्षतया शास्त्रगतं प्रमेयं प्रकटनीयं, तच्च वर्द्ध- मानादिवत् यथार्थनामतो भवति, तत्रैव समुदायार्थपरिसमाप्तेः, न तु पलाशादिवदयथार्थनामतो डित्थादिवदर्थशून्यनामतश्च, प्रस्तुते च जम्बूद्वीपप्रज्ञप्तिरितिनाम्नः कः शब्दार्थ इति ?, उच्यते, जम्ब्वा-सुदर्शनापरनाम्नयाऽनाध्तदेवावासभूतयोपलक्षितो द्वीपो जम्बूद्वीपस्तस्य प्रकर्षेण- निशेषकुतीर्थिकसार्थागम्ययथावस्थितस्वरूपनिरूपणलक्षणेन

ज्ञप्ति–ज्ञापनं यस्यां ग्रन्थपद्धतौ ज्ञप्तिर्ज्ञानं वा यस्याः सकाशात् सा जम्बूद्वीपप्रज्ञप्ति, अथवा जम्बूद्वीपं प्रान्ति–पूरयन्ति स्वस्थित्येति जम्बूद्वीपप्राः जगतीवर्षवर्षधराद्यास्तेषां ज्ञप्तिर्यस्याः सकाशात् सा जम्बूद्वीपप्रज्ञप्तिरिति सान्वर्थशास्त्रनाम- प्रतिपादनेन जम्बूद्वीपप्रज्ञप्त्याः पिण्डार्थोऽय दर्शितः, अत एवाभिधेयशून्यतामाकलयन्तस्सन्तोऽत्र प्रवृत्तौ मा मन्दायन्तामित्यभिधेयसूचापि कृतैव, नामनिक्षेपचिन्ता तु द्वितीयानुयोगयोजनायां करिष्यत इति समुदायार्थः ४ ।

तथैवानुयोगद्वाराणि वाच्यानि, तथाहि–प्रस्तुताध्ययनस्य महापुरस्येव चत्वारि अनुयोग-द्वाराणि भवन्ति–उपक्रमो निक्षेपोऽनुगमो नयश्च, तत्र अनुयोजनमनुयोगः–सूत्रस्यार्थेन सह सम्बन्धनं, अथवाऽनुरूपोऽनुकूलो वा योगो–व्यापारः सूत्रस्यार्थप्रतिपादनरूपोऽनुयोगः, आह च–

॥ १ ॥ "अनुजोजणमणुओगो सुअस्स नियएण जमभिहेएण ।
वावारो वा जोगो जो अनुरूवोऽनुकूलो वा ॥"

इति, यद्वा अर्थापेक्षया अणोः–लघोः पश्चाज्जाततया वाऽनुशब्दवाच्यस्य योऽभिधेयो योगो–व्यापारस्तत्सम्बन्धो वाऽणुयोगोऽनुयोगो वेति, आह च–

॥ १ ॥ "अहाव जमत्थओ थोवपच्छभावेहिं सुअमणुं तस्स ।
अभिधेये वावारो जोगो तेणं व संबंधो ॥" त्ति ।

तस्य द्वाराणीव द्वाराणि–प्रवेशमुखानि, अस्याध्ययनपुरस्यार्थाधिगमोपाया इत्यर्थः, पुरदृष्टान्तश्चात्र, यथा हि अकृतद्वारकं पुरमपुरमेव, कृतैकद्वारमपि दुरधिगमं कार्यातिपत्तये च स्यात्, चतुर्मूलद्वारं तु प्रतिद्वारानुगतं सुखाधिगमं कार्यानतिपत्तये च, एवं जम्बूद्वीपप्रज्ञप्त्यध्ययन-पुरमप्यर्थाधिगमोपायद्वारशून्यमशक्याधिगमं भवति एकद्वारानुगतमपि च दुरधिगमं सप्रभेद-चतुर्द्वारानुगतं तु सुखाधिगमं कार्यातिपत्तये च स्यादतः फलेप्रहिद्वारोपन्यास इति ५ ।

तानि च द्वित्रिद्विद्विभेदानि क्रमेण भवन्तीति तद्भेदाः ६ ।

निरुक्तिस्तु उपक्रमणमुपक्रम इति भावसाधनः व्याचिख्यासितशास्त्रस्य समीपानयनेन निक्षेपावसरप्रापणं, उपक्रम्यते वाऽनेन गुरुवाग्योगेनेत्युपक्रम इति करणसाधनः, उपक्रम्यतेऽस्मिन्निति वा शिष्यश्रवणभावे सतीत्युपक्रम इत्यधिकरणसाधनः, उपक्रम्यतेऽस्मादिति वा विनेयविनयादित्युपक्रमः इत्यपादानसाधन इति, एवं निक्षेपणं निक्षिप्यतेऽनेनास्मिन्नस्मादिति वा निक्षेपः–उपक्रमानीतव्याचिख्यासितशास्त्रस्य नामादिभिर्न्यसनमित्यर्थः निक्षेपो न्यासः स्थापनेति पर्यायाः, एवमनुगमनमनुगम्यतेऽनेनास्मिन्नस्मादिति वाऽनुगमः–निक्षिप्तसूत्रस्यानुकूलः परिच्छेदोऽर्थकथनमितियावत्, एवं नयनं नीयतेऽनेनास्मिन्नस्मादिति वा नयः–अनन्तधर्मात्मकस्य वस्तुन एकांशपरिच्छेदः, एकेनैव धर्मेण पुरस्कृतेन वस्त्वङ्गीकार इत्यर्थः ७ ।

उपक्रमादिद्वाराणामित्थंन्यासे किं प्रयोजनमिति ?, उच्यते, न ह्यनुपक्रान्तमसमीपीभूतं निक्षिप्यते न चानिक्षिप्तं नामादिभिरर्थतोऽनुगम्यते, न चार्थतोऽननुगतं नयैर्विचार्यते इतीदमेव क्रमप्रयोजनं, उक्तं च–

॥ १ ॥ "दारक्कमोऽयमेव उ निक्खिप्पइ जेण नासमीवत्थं ।
अणुगम्मइ नानत्थं नाणुगमो नयमयविहूणो ॥"त्ति ८ ।

तदेवं फलादीन्युक्तानि, साम्प्रतमनुयोगद्वारभेदभणनपुरस्सरमिदमेवाध्ययनमनुविचिन्त्यते,

तत्रोपक्रमो द्विधा–आगमतो नोआगमतश्च, आगमत उपक्रमशब्दार्थस्य ज्ञाता, तत्र चानुपयुक्तः 'अनुपयोगो द्रव्य'मिति वचनात्, नोआगमतस्त्रिविधो–ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात्, तत्र यदुपक्रमशब्दार्थज्ञस्य शरीरं जीवविप्रमुक्तं सिद्धशिलातलादिगतं तद्भूतभावत्वात् ज्ञशरीर-द्रव्योपक्रमो, यस्तु बालको नेदानीमुपक्रमशब्दार्थमवबुध्यते अथ चावश्यमायत्यां भोत्स्यते स भाविभावनिबन्धनत्वात् भव्यशरीरद्रव्योपक्रमः, ज्ञशरीरभव्यशरीरव्यतिरिक्तस्त्रिविधः–सचित्ता-चित्तमिश्रभेदात्, तत्र सचित्तद्रव्योपक्रमो द्विपदचतुष्पापदोपाधिभेदभिन्नस्त्रिविधः, पुनरेकैको द्विविधः–परिकर्मणि वस्तुविनाशे च। तत्रावस्थितस्यैव द्रव्यस्य गुणविशेषापादनं परिकर्म तस्मिन् परिकर्मणि, सचित्तद्विप- दद्रव्योपक्रमो यथा मनुष्याणां वर्णकर्णस्कन्धनकवृद्ध्यादिकरणं, सचित्तचतुष्पदद्रव्योपक्रमो यथा हस्त्यादीनां शिक्षाद्यापादनं सचित्तापदद्रव्योपक्रमो यथा वृक्षादेर्वृक्षायुर्वेदोपदेशाद् वृद्ध्यादिगुणकरणं, वस्तुविनाशे पुनस्त्रिविधोऽपि सचित्तद्रव्यो-पक्रमस्तेषामेव मनुष्यादीनां खड्ग-गादिभिर्विनाशकरणं, अचित्तद्रव्योपक्रमो द्विविधः–परिकर्मणि वस्तुविनाशे, मिश्रद्रव्योपक्रमोऽपि द्विविधः परिकर्मणि वस्तुविनाशे च, तत्र परिकर्मणि कटकादिभूषितपुरुषादिद्रव्यस्य गुणविशेष- करणं, वस्तुविनाशे विवक्षितपर्यायोच्छेदः, तथा क्षेत्रकालोपक्रमावपि द्विविधः–परिकर्मणि वस्तुविनाशे च।

तत्र क्षेत्रम्–आकाशं तच्चामूर्तं नित्यं चेति न तस्य परिकर्मरूपो विनाशरूपो वा उपक्रमो घटते तथापि मंचाः क्रोशन्तीत्यादिन्यायादुपचारेण तदाश्रितस्येक्षुक्षेत्रादेर्हलादिभि परिकर्म गज-बन्धनादिभिस्तु विनाश इति, एवं कालस्यापि पूर्वोक्तन्यायेन उपक्रमासम्भवेऽपि शंकादिच्छा-यादिभिर्यथार्थपरिज्ञानं स परिकर्मणि कालोपक्रमः, यच्च ग्रहनक्षत्रादिचारैरनिष्टफलदायकतया परिणमनं स विनाशे कालोपक्रमः, तथा च लौकिकी वागपि–अमुकेन ग्रहेण नक्षत्रेण वा इत्थमित्थं गच्छता विनाशितः काल इति, भावोपक्रमो द्विधा–आगमतो नोआगमतश्च, आगमत उपक्रम-शब्दार्थस्य ज्ञाता तत्र चोपयुक्तः 'उपयोगो भावनिक्षेप' इति वचनादिति, नोआगमतो द्विधा–अप्रशस्तः प्रशस्तश्च, तत्राद्यो जामातृपरीक्षकब्राह्मणीवेश्यामात्यानामपि संसाराभिवर्धिना-ऽध्यवसायेन परभावोपक्रमणरूपः, परश्च श्रुतादिनिमित्तमाचार्यभाववधारणरूपः, अनेनेहाधि-कारः, अथानुयोगाङ्गप्रतिपादनाधिकारे गुरुभावोपक्रमाभिधानमनर्थकम्, अतदङ्गत्वात्, तदसम्यक्, तस्याप्यनुयोगाङ्गत्वाद्, यद्भाष्यकारः–

॥ १ ॥ "गुरुचित्तायत्ताइं वक्खाणंगाइं जेण सव्वाइं।
तेण जह सुप्पसन्नं होइ तयं तं तहा कज्जं ॥"

आह–यद्येवं तर्हि गुरुभावोपक्रम एव दर्शनीयः न शेषाः, निष्प्रयोजक (त्व) त्वादिति, न, गुरुचित्तप्रसादनार्थं तेषामप्युपयोगित्वात्, तथाहि–बालग्लानादिसाधून् पथ्यान्नपानादिना प्रतिजाग्रति वैयावृत्यनियुक्ते साधौ द्रव्योपक्रमात् गुर्वासनशयनाद्युपभोगिभूतलप्रमार्जनादिना संस्कुर्वति क्षेत्रोपक्रमात् भव्यस्य छायालग्नादिना दीक्षादिसमयं सम्यक् साधयति कालोपक्रमाच्च गुरु प्रसीदति, नामस्थापनोपक्रमौ तु प्रस्तुतेऽनुपयोगिनाविति, अथवा उपक्रमसाम्यात् ये केचन संभविन उपक्रमभेदास्ते सर्वेऽपि दर्शनीयाः, यतोऽनुपयोगिनिरासेनोपयोगिनि निष्प्रतिपक्षा प्रतिपत्तिरुपजायते, तथा चाप्रस्तुतार्थापाकरणं प्रस्तुतार्थव्याकरणं च नामादिन्यासव्याख्यायाः फलमुपवर्णयन्ति महाधियः। उक्तः लौकिक उपक्रमः, अथ शास्त्रीय उच्यते–सोऽपि षोढैव,

आनुपूर्वीनामप्रमाणवक्त- व्यतार्थाधिकारसमवतारभेदात्, एतद्व्यक्तयर्थिना तु अनुयोगद्वारसूत्रं विलोक्यं, ग्रन्थविस्तरभयात्तु नेह तन्यते, केवलं आनुपूर्व्यादिषु पंचसूपक्रमभेदेषु षष्ठे समवतारभेदे विचार्यमाणे इदमध्ययनं समवतारयेत्, ततश्चानुपूर्व्यादिरुपक्रमः षड्विधोऽप्यभिहितो भवति, तथाहि–दशविधायामप्यानुपूर्व्यामस्याध्ययनस्योत्कीर्तनगणनानुपूर्व्योः समवतारः, तत्रोत्कीर्तन –संशब्दनं नामकथनमात्रं यथा द्वादशाङ्गोपाङ्गानां मध्ये औपपातिकं राजप्रश्नीयं जीवाभिगमाध्ययनं प्रज्ञापना सूर्यप्रज्ञप्तिः चन्द्रप्रज्ञप्तिः जम्बूद्वीपप्रज्ञप्तिरित्यादि ।

गणनं–परिसंख्यानं एकं द्वे त्रीणीत्यादि सा च गणनानुपूर्वी त्रिधा–पूर्वानुपूर्वी पश्चानुपूर्वी अनानुपूर्वी चेति, तत्र पूर्वानुपूर्व्या इदं षष्ठं पश्चानुपूर्व्या सप्तमं अनानुपूर्व्या अनियतं, नाम च एकनामादिदशनामपर्यन्तं, तत्र षड्नाम्न्यस्यावतारः, तत्र च षड् भावा औदयिकादयो निरूप्यन्ते, तत्रास्य क्षायोपशमिके भावेऽवतारः, सर्वश्रुतस्य क्षायोपशमिकभावरूपत्वात् ।

प्रमाणं चतुर्द्धा–द्रव्यक्षेत्रकालभावभेदात्, तत्रेदमध्ययनं क्षायोपशमिकभावात्मकत्वाद् भावप्रमाणविषयं, तदपि भावप्रमाणं त्रिधा–गुणनयप्रमाणसंख्याभेदात्, तत्राद्यं जीवाजीवगुण- प्रमाणभेदात् द्विधा, तत्रा जीवोपयोगरूपत्वाज्जम्बूद्वीपप्रज्ञप्त्यध्ययनस्य जीवगुणप्रमाणे समवतारः, तदपि ज्ञानदर्शन चारित्रभेदात् त्रिधा, तत्र बोधात्मकत्वादस्य ज्ञानगुणप्रमाणे, तदपि प्रत्यक्षान- मानोपमानागमभेदाच्चतुष्प्रकारं, तत्रास्य आप्तोपदेशरूपत्वादागमे, सोऽपि लौकिकलोकोत्तरभेदाद् द्विविधः, तत्र परममुनिप्रणीतत्वेन लोकोत्तरे, सोऽपि द्विधा–

आवश्यकमावश्यकव्यतिरिक्तश्च, तत्रेदमावश्यकव्यतिरिक्ते, आवश्यकव्यतिरिक्तो द्विधा–अङ्गप्रविष्टानङ्गप्रविष्टभेदात्, तत्रेदमनङ्गप्रविष्टे, सोऽपि द्विधा–कालिकोत्कालिकभेदात्, तत्रेदं कालिके, सोऽपि सूत्रार्थोभयभेदात् त्रिधा, तत्रेदं सूत्रार्थरूपत्वात् तदुभये, सोऽपि आत्मा- नन्तरपरम्परागमभेदात् त्रिविधः, तत्र चेवं गणभृतां सूत्रत आत्मागमस्तच्छिष्याणामनन्तरागमः ततप्रशिष्याणां तु परम्परागमः, अर्थतोऽर्हतामात्मागमः गणधराणामनन्तरागमः ततः परम्परागम इति त्रिष्वप्यागमेष्वस्याध्ययनस्यावतार इति, ननु अङ्गप्रविष्टसूत्रं गणधरप्रणीतमिति भवतु तेषामात्मागमः, इदं तूपाङ्गत्वेनानङ्गप्रविष्टत्वात् स्थविरकृतं, यदाह–

॥ १ ॥ "गणधरकयमंगसुअं जं कय थेरेहिं बाहिरं तं तु ।
नियमं अंगपविट्ठं अनियमसुय बाहिरं तं तु ॥

ततः कथं गणधराणामात्मागमत्वेन भाव्यते ?, उच्यते, गणधरैर्द्वादशाङ्गीविरचने पर- मार्थतस्तदकेदेशरूपोपाङ्गानामपि विरचनमाख्यातमिति तेषामपीदमुपाङ्गं सूत्रत आत्मागम इति न कश्चिद्विरोधः, व्यवहारस्तु स्थविरकृतत्वेनेदमुपाङ्गं स्थविराणामेव सूत्रत आत्मागमः, "सुत्तं थेराण अत्तागमोत्ति" इति श्रीउत्तराध्ययनबृहद्वृत्तिवचनादिति, अयमेव शास्त्रप्रामाण्यसूचकोऽर्थ पूर्वं गुरुपर्वक्रमरूपसम्बन्धावसरे निरूपित इति । नयप्रमाणे तु नास्य सम्प्रत्यवतारो, मूढनयत्वात्, आगमस्य, उक्तं च– "मूढनइयं सुयं कालियं च (तु)" इत्यादि ।

संख्या नामस्थापनाद्रव्यक्षेत्रकालौपम्यपरिमाणभावभेदात् अष्टप्रकारा, तत्र चास्य परिमाण- संख्यायामवतारः, तत्रापि कालिकश्रुतपरिमाणसंख्यायां समवतारः, साऽपि द्विधा–सूत्रतोऽर्थतश्च, तत्र सूत्रतः परिमितपरिमाणं (अर्थतोऽनन्तार्थत्वात्, सर्वेषां सूत्राणामपरिमाणं) । सम्प्रति वक्तव्यता,

सा च त्रिधा -स्वपरोभयसमयवक्तव्यताभेदात्, तत्र स्वसमयवक्तव्यतायामस्यावतारः, तथाऽर्थाधिकारो वक्तव्यताविशेष एव, स चेह जम्बूद्वीपवक्तव्यतालक्षणः समुदायार्थकथनादेव उक्तः, उक्त उपक्रमः । अथ निक्षेपः, स च त्रिधा-ओघनामसूत्रालापकनिष्पन्नभेदात्, तत्रौघो यत् सामन्य-मध्ययनादि नाम, तन्निक्षेपोऽनुयोगद्वारादिभ्योऽवसेयः, तत्रेह भावाध्ययनादिनाऽधिकारः, नाम- निष्पन्ने तु निक्षेपेऽस्य जम्बूद्वीपप्रज्ञप्तिरिति नाम, ततो जम्बूशब्दस्य प्रज्ञप्तिशब्दस्य च निक्षेपो वाच्यः, तत्र जम्बूशब्दस्य नामस्थापनाद्रव्यभावभेदात् चतुर्धा निक्षेपः, तत्र नामजम्बूर्यस्य जम्बूरिति नाम, यथा जम्बूरन्तिमकेवली जम्ब्वा अभिधानं वा, स्थापनाजम्बूर्या जम्बूरिति स्थापना क्रियते यथा चित्रलिखितजम्बूवृक्षादि, द्रव्यजम्बूर्द्विधा आगमतो नोआगमतश्च, आगमतस्तदर्थ-ज्ञाताऽनुपयुक्तो, नोआगमतो ज्ञशरीरभव्यशरीरोभयव्यतिरिक्तभेदात् त्रिधा, तत्राद्यौ भेदौ सुप्रतीतौ, उभयव्यतिरिक्तद्रव्यजम्बूरपि त्रिधा-एकभविकबद्धायुष्काभिमुखनामगोत्रजन्तुभेदात्, तत्रैकभविको नाम य एकभवानन्तरं जम्बूत्वेनोत्पत्स्यते, बद्धायुष्कस्तु येन जम्ब्वायुर्बद्धं, अभिमुख-नामगोत्रस्तु यस्य जम्ब्वा नामगोत्रकर्मणी अन्तर्मुहूर्तानन्तरमुदयमायास्यत इत्ययं त्रिविधोऽपि भाविभावजम्बूकारणत्वाद्द्रव्यजम्बूरिति, भावजम्बूरपि द्विधा-आगमतो नोआगमतश्च, तत्रागमतो ज्ञातोपयुक्तः, नोआगमतस्तु जम्बूद्रुम एव जम्बूद्रुमनामगोत्रकर्मणी वेदयन्निति, आह-

यथा अभिमुखजम्बूभावस्य जीवस्य द्रव्यजम्बूत्वं 'भाविनि भूतवदुपचार' इति न्यायात् तथा आसन्नपश्चात्कृतजम्बूभावस्यापि 'भूतपूर्वकस्तद्वदुपचार' इति न्यायात् कथं न द्रव्यजम्बूत्वं निर्दिष्टं ?, उच्यते, इदमुपलक्षणं, तेन तस्यापि द्रव्यनिक्षेप एवान्तर्भावः 'भूतस्य भाविनो वे'त्यादि-द्रव्यलक्षणस्य सद्भावात्, अत्रानिर्देशकारणं तु श्रीउत्तराध्ययनद्रुमपत्रीयाध्ययननिर्युक्तौ श्रीमद्भद्रबा-हुस्वामिपादैः द्रुमनिक्षेपेऽविवक्षणं, तत्तुल्यन्यायत्वादस्य निक्षेपस्येति, प्रस्तुते च नोआगमतो भावजम्ब्वा अधिकारः । द्वीपोऽपि पूर्ववच्चतुर्द्धा, तत्र नामद्वीपो यस्य द्वीप इति नाम, स्थापनाद्वीपो या द्वीपस्य स्थापना, यथा चित्रलिखितजम्बूद्वीपादि, द्रव्यद्वीपो द्विधा-आगमतो नोआगमतश्च, तत्र आगमतस्तदर्थज्ञाताऽनुपयुक्तः, नोआगमतस्तु ज्ञशरीरभव्यशरीरद्रव्यद्वीपौ सुबोधौ, तद्व्यतिरिक्त- द्रव्यद्वीपो द्विधा-सन्दीनोऽसन्दीनश्च, तत्र यो हि संदीयते-जलप्लावनात् पक्षमासादावुदकेन प्लाव्यते स सन्दीनो विपरीतस्त्वसन्दीनः सिंहलद्वीपादि, भावद्वीपोऽपि द्विधा-आगमतो नोआगमतश्च, तत्रागमतस्तदर्थज्ञानोपयुक्तः, नोआगमतस्तु साधुः, कथमित्याह-यथा हि नदीसमुद्रबहु- मध्यप्रदेशे सांयात्रिका द्रव्यद्वीपमवाप्याऽऽश्वसन्ति तथा पारातीतसंसारपारावारान्तरचार- खेदभेदस्विनो देहिनः परमपरोपकारैकप्रवृत्तं साधुं समवाप्याऽऽश्वसन्ति अतो भावतः-परमार्थतो द्वीपो भावद्वीप उच्यते, सोऽपि सन्दीनासन्दीन-भेदाद् द्विधा, तत्र परीषहोपसर्गाद्यैः क्षोभ्यः सन्दीनः तदितरस्त्वसन्दीनः, अथवा भावद्वीपः सम्यक्त्वं, तच्च प्रतिपातित्वादौपशमिकं क्षायोपशमिकं च सन्दीनो भावद्वीपः, क्षायिकं चासन्दीन इति ।

ननु क्वचित्तत्पर्यायापन्नं वस्तु भावनिक्षेपे निक्षिप्यते यथाऽत्रैव जम्बूपर्यायमनुभवन् भावजम्बूत्वे निक्षिप्तः, क्वचित्तदन्यपर्यायापन्नं वस्तु भावनिक्षेपे निक्षिप्यते, यथाऽत्रैव भावद्वीप-पर्यायमनुभवन् साधुः सम्यक्त्वं चेति परस्परमुदाहरणवैषम्यं कथं युक्तिमदिति ?, अत्रोच्यते, वस्तुगत्या तत्पर्यायाधारतया भवनं भाव इतिकृत्वा तत्पर्यायार्येव वस्तु भावनिक्षेपे निक्षिप्यते,

यत्तु तदन्यद्वस्तु भावनिक्षेपे निक्षिप्यते तत्तद्गत गुणारोपादौपचारिकमिति न दोषः, विवक्षाया विचित्रत्वादिति, द्विधा गता लवणोदस्य आपोऽस्मादिति अन्वर्थवशाद् द्वीपत्वं, पृथिव्यादिपरिणामरूपत्वाद् द्रव्यद्वीपत्वं, तत्र च द्रव्यद्वीपेनात्राधिकारः, तत्रापि असन्दीनेन, अथवेत्थं नामादिभेदाद् द्वीपश्चतुर्द्धा, नामद्वीपो द्वीप इति नाम नामनामवतोरभेदोपचारात्, स्थाप-नाद्वीपो द्वीपस्य स्थालवलयाद्याकारः, द्रव्यद्वीपो द्वीपारम्भकद्रव्याणि पृथिव्यादीनि, तदात्मकत्वाद् द्वीपानां, यदाह– "जंबुद्दीवे णं भंते ! किं पुढविपरिणामे आउप० जीवप० पोग्गलप० गो० ! पुढविपरिणामेवि जाव पुग्गलपरिणामेवि" भावद्वीपस्तु स्थालाद्याकृतिमत् स्थालात्मकं सर्वतः समुद्रजलवलयितं क्षेत्रखण्डं, एतदनुसारेण तु चतुर्भिरपि द्वीपैरत्राधिकार इत्यलं विस्तरेण ।

प्रज्ञप्तिरपि नामादिभिश्चतुर्द्धा, तत्र प्रज्ञप्तिरिति नाम यथा प्रज्ञप्तिर्विद्यादेवी, स्थापनाप्रज्ञप्ति प्रज्ञप्तिशब्दार्थज्ञसाध्वादिः, (आकृति) द्रव्यप्रज्ञप्तिर्द्विधाः आगमतो नोआगमतश्च, तत्रागम-तस्त-दर्थज्ञाताऽनुपयुक्तः, नोआगमतस्तु ज्ञशरीरभव्यशरीरोभयव्यतिरिक्तद्रव्यप्रज्ञप्तिभेदात् त्रिधा, तत्राद्यौ भेदौ सुबोधौ, उभयव्यतिरिक्ता द्रव्यप्रज्ञप्तिर्द्विधा–लौकिकी लोकोत्तरा च, एकैकाऽपि त्रिविधा–सचित्ताचित्तमिश्रद्रव्यविषयभेदात्, तत्राद्या–यथा प्रयियासोर्नृपस्य मन्दुरासमानीतहयज्ञापनं द्वितीया तस्यैव रथज्ञापनं तृतीया तस्यैव पर्याणादिपरिस्कृतहयज्ञापनं रथस्य चाऽश्वादियुक्तस्य ज्ञापनं, लोकोत्तरा तु सचित्तविषया यथा प्रव्राजनाचार्यस्य नवप्रव्रजितं प्रति शाल्यादिसचित्तज्ञापनं सैव द्वितीया शस्त्रपरिणतशाल्यादिज्ञापनं सैव तृतीया दुष्पकशाल्यादिज्ञापनं चेति, अथ भावप्रज्ञप्तिरपि द्विधा–आगमतो नोआगमतश्च, तत्र आगमतस्तदर्थज्ञानोपयुक्तः, नोआगमतस्तु भावप्रज्ञप्तिर्द्विधा– प्रशस्ताप्रशस्तभावप्रज्ञप्तिभेदात्, तत्राप्रशस्तभावप्रज्ञप्तिर्यथा ब्राह्मण्याः स्वसुताः प्रति जामातृभावनिवेदनं, प्रशस्तभावप्रज्ञप्तिरियमेव अर्हतोऽर्हतां गणधरान् सूत्रतो गणधराणां स्वशिष्यान् प्रति, उक्तावोघनामनिष्पन्नौ निक्षेपौ, सम्प्रति सूत्रालापकनिष्पन्नः, स चावसरप्राप्तोऽपि न निक्षिप्यते, तस्य सूत्रपदाविनाभावित्वात्, सूत्रं च सूत्रानुगमे समयप्राप्तं भवति, ततो लाघवार्थं सूत्रानुगमसमय एव निक्षेप्स्यते, निक्षेपसाम्यमात्रत्वाच्चोपदर्शनं, अथानुगमो व्याख्यानरूपः, स च द्विधा–निर्युक्त्यनुगमः सूत्रानुगमश्च, तत्र आद्यस्त्रेधाःनिक्षेपनिर्युक्तिउपोद्-घातनिर्युक्तिसूत्र- स्पर्शिकनिर्युक्त्यनुगमभेदात्, तत्र निक्षेपनिर्युक्तयनुगमो जम्ब्वादिशब्दानां निक्षेपप्रतिपादनादनुगत एव, उपोदघातनिर्युक्त्यनुगमस्तु 'उद्देसे निद्देसे अ' इत्यादिगाथाद्वया-दवसेयः, सूत्रस्पर्शिक-निर्युक्त्यनुगमस्तु संहितादौ षड्विधे व्याख्यालक्षणे पदार्थपदविग्रहचालना-प्रत्यवस्थान- लक्षण्याख्यानभेदचतुष्टयस्वरूपः, स च सूत्रानुगमे संहितापदलक्षणव्याख्यानभेदद्वय-लक्षणे सति भवतीत्यतः सूत्रानुगम एवोच्यते, तत्र चाल्पग्रन्थं महार्थं द्वात्रिंशद्दोषविरहितमष्टगणोपेतं स्खलितादिदोषवर्जितं सूत्रमुच्चारणीयं, तच्चेदम्–

## वक्षस्कारः –१

**मू. (१)** *नमो अरिहंताणं । ते णं कालेणं ते णं समए णं मिहिला नामं नयरी होत्था, रिद्धत्थमियसमिद्धा वण्णओ, तीसे णं मिहिलाए नयरीए वहिया उत्तरपुरच्छिमे दिसीभाए एत्थ णं माणिभद्दे नामं चेइए होत्था, वण्णओ । जियसत्तु राया, धारिणी देवी, वण्णओ । ते णं काले णं ते णं समए णं सामी समोसढो, परिसा निग्गया, धम्मो कहिओ, परिसा पडिगया ।*

वृ. 'नमो अरिहंताणं'० अस्य च व्याख्या संहितादिक्रमेण, तत्रास्खलितसूत्रपाठः संहिता, सूत्रे चास्खलितादिगुणोपेते उच्चारिते केचिदर्था अवगताः प्राज्ञानां भवन्त्यतः संहिता व्याख्याभेदो भवत, अनधिगतार्थाधिगमाय च पदादयो व्याख्याभेदाः प्रवर्त्तन्त इति, तत्र पदानि नमः अर्हद्भ्यः इति, एवं पदकरणे सूत्रालापकनिष्पन्ननिक्षेपावसरः, तत्र नमस्कारस्य नामादिभिश्चतुर्द्धा निक्षेपः, तत्र नामनमस्कारो नम इत्यभिधानं, स्थापनानमस्कारो नमस्कारकरणप्रवृत्तस्य संकोचितकरचरणस्य काष्ठपुस्तचित्रादिगतः साध्वादेराकारः, द्रव्यनमस्कार आगमतो नोआगमतश्च, तत्रागमतस्तदर्थज्ञाताऽनुपयुक्तः, नोआगमतो ज्ञशरीरभव्यशरीरनमस्कारौ प्रतीतौ, ज्ञशरीरभव्यशरीरव्यतिरिक्तो द्रव्यनमस्कारो निह्नवादीनां, तेषां मिथ्यादृष्टित्वेनाप्रधानत्वात्, सम्यग्दृष्टेरप्यनुपयुक्ततया नमस्कुर्वतो द्रव्यनमस्कारः, राजादेर्द्रव्यार्थं वा नमस्करणं तस्यैव वा भयादिना द्रमकादेर्नमस्करणं बलवन्नरपुरुषाक्रान्तस्य धनुरादेर्नम्रीभावो वा द्रव्यनमस्कारः, भावनमस्कारोऽपि आगमतो नोआगमतश्च, आगमतस्तदर्थज्ञातोपयुक्तो, यदा तु मनसोपयुक्तो वचनेन नमोऽर्हद्भ्य इति ब्रुवाणः कायेन तु सङ्कोचितकरचरणो नमस्कारं करोति तदा नोआगमतो भावनमस्कारः, अनेन चात्राधिकार–, अर्हन्–जिनः सोऽपि नामादिभेदैश्चतुर्द्धा, ते च नामादयो भेदाः–

॥ १ ॥ "नामजिना जिननामा ठवणजिणा पुण जिणिंदपडिमाओ ।
दव्वजिना जिनजीवा भावजिना समवसरणत्था ॥"

अनया गाथया अवगन्तव्याः, अत्र प्रकारान्तरेणापि निक्षेपः सम्भवति परं स विस्तरभयान्नोपदर्श्यते, एवमन्येष्वपि सूत्रालापकेषु स्वधिया यथासम्भवं निक्षेपः कार्य इति ।

उक्तः सूत्रालापकनिष्पन्ननिक्षेपः, पदार्थ पुनरेवं–नम इति नैपातिकं पदं द्रव्यभावसंकोचार्थं, आह च–"नेवाइयं पयं दव्वभावसंकोयण पयत्थो" नमः–करचरणमस्तकसुप्रणिधानरूपो नमस्कारो भवत्वित्यर्थः, केभ्य इत्याह–'अर्हद्भ्यः' अमरवरविनिर्मिताशोकाद्यष्टमहाप्रातिहार्यरूपां पूजामर्हन्तीत्यर्हन्तस्तेभ्यः, इह च चतुर्थ्यर्थे षष्ठी प्राकृतशैलीवशात्, अत्र द्रव्यसङ्कोचो करशिरःपादादिसङ्कोचः, भावसङ्कोचनं तु विशुद्धस्य मनसोऽर्हदादिगुणेषु निवेशः, तत्र च भङ्गचतुष्कं–द्रव्यसङ्कोचो न भावसङ्कोचो यथा पालकादीनाम् १ भावसङ्कोचो न द्रव्यसङ्कोचो यथाऽनुत्तरसुरादीनां २ द्रव्यसङ्कोचो भावसङ्कोचश्च यथा शाम्बस्य न द्रव्यसङ्कोचो न भावसङ्कोच इति भङ्गः शून्यः ४, इह च तृतीयभङ्गस्योपयोगः, भावसङ्कोचप्रधानद्रव्यसङ्कोचरूपत्वात् प्रस्तुतनमस्कारस्य, अनेन च मङ्गलान्तरस्य फलव्यभिचारित्वेनानैकान्तिकत्वात्तदपहाय तदन्यस्वरूपतयाऽवश्यं भावेनाभिलषितार्थसाधनसमर्थत्वादत्यन्तोपादेयं परमेष्ठिनमस्कारलक्षणं भावमङ्गलमुपात्तं, सत्स्वपि तपःप्रभृतिष्वन्यभावमङ्गलेषु यदस्योपादानं तत् शास्त्रादावस्यैव व्यवहारप्राप्तत्वमिति ज्ञापनार्थं, अत्र च बहुवचनं व्यासपर्थं, तेन सकलनिक्षेपगतजिनपरिग्रहः ।

अथ पदविग्रहः, स च समस्तपदे सति सम्भवतीत्यत्र नोक्तः । अथ चालनाप्रत्यवस्थाने–नन्वर्हतां परममङ्गलत्वेन नमस्काराभिदानतोऽप्यादौ तदुपादानमुचितमिति, सत्यं, स्वयं मङ्गलभूता अप्यर्हन्तः परेषां नमनस्तवनादिनैवाभीष्टफलदा भवन्तीति ज्ञापनायार्हद्भ्योऽपि नमस्कारस्यादावुपन्यास इति, किञ्च–'अरिहंताण'मित्यत्र जात्यपेक्षयैकवचनेनापि सर्वार्हतां ग्रहणे सिद्धे बहुवचनेन नामस्थापनाद्रव्यभावार्हतां चतुर्णामपि तुल्यकक्षतया नमस्कार्यत्वस्य ज्ञापितत्वादेकान्ततः

स्वमतप्राधान्यवादितया परस्परं विवदमानेषु नामनयादिषु प्रथमतः स्वोत्प्रेक्षितयुक्त्युपदर्शनपुरस्सरं नामनयः प्राह—तथा च प्रयोगः—वस्तुस्वरूपं नाम, तत्प्रत्ययहेतुत्वात्, स्वधर्मवत्, इह यद्यस्य प्रत्ययहेतुस्तत्तस्य धर्मो यथा घटस्य स्वधर्मरूपा घटादयः, यद्यस्य धर्मो न भवति न तत्तस्य प्रत्यहेतुः, यथा घटस्य धर्मा पटस्य, सम्पद्यते च घटाभिधानाद् घटे सम्प्रत्ययः, तस्मात्तत्तस्य धर्म इति, सिद्धश्च हेतुर्घटशब्दात् पटादिव्यावृत्त्या घटप्रतिपत्तेः प्रतीतत्वात्, किञ्च—लक्ष्यलक्षण-संव्यवहाराणामात्मलाभो नामायत्त एव, तत्र लक्ष्यं जीवत्वादि लक्षणमुपयोगः संव्यवहारः प्रेषणाध्ये-षणादिरिति, तथा यदि नाम्नो वस्तुधर्मत्वं नाभ्युपगम्यते तदा संशयादयोऽपि भवेयुः, यदुक्तम्—

॥ १ ॥ "संसयविवज्जओ वाऽणज्झवसाओऽहवा जहिच्छाए ।
होज्जऽत्थे पडिवत्ती न वत्थुधम्मो जया नामं ॥"

अत्र व्याख्यानेनः केनचिद् घटशब्दे समुच्चारिते श्रोतुः किमप्यनेनोक्तं संशयः अथवा पटप्रतिपत्तिलक्षणो विपर्ययः अथवा न जाने किमप्यनेनोक्तमिति वस्त्वप्रतिपत्तिरूपोऽनध्यवसायः यदिवा यदृच्छयाऽर्थे प्रतिपत्ति—कदाचिद् घटस्य कदाचित्पटस्येत्यादि, ततोऽवश्यं वस्तुधर्मो नामाभ्युपगन्तव्यमित्यादि, तदेवं नामनयेन स्वमते व्यवस्थापित स्थापनानयः प्राहः नाम्नो वस्तुसंज्ञामात्ररूपस्य वाच्यवाचकभावसम्बन्धमात्रेणैव स्थितत्वाद्वस्तुनोऽतिदूरत्वं स्थापनायास्तु वस्तुसंस्थानरूपायास्तादात्म्यसम्बन्धेनावस्थितत्वाद्भावप्रत्यासन्नत्वं, किञ्च—देशान्तर-कालान्तरविप्रकृष्टमपि वस्तु स्थाप्यप्रतिमादौ सन्निदधाति अन्यथा मन्त्रागमे सन्निधापन्यादि-मुद्राप्ररूपणानां नैष्फल्यप्रसङ्गः, यथा च स्थापनेन्द्रः शचीकुलिशादिसान्निध्येन निर्विलम्बं तदेक-तानानां भावधियं जनयति न तथा नामेन्द्रः तस्यानाकारत्वात्, तस्मात् स्थापनैव प्रधानाऽस्तु, स्थापनानयेनैवमुक्ते द्रव्यनयः स्वाशयमाविर्भावयति—को हि नाम स्थापनानयस्याकारग्रहो ? यस्मादनादिमदुत्प्रेक्षितपर्यायशृङ्खलाधारस्य मृदादिद्रव्यस्य पूर्वपर्यायमात्रतिरोभावेऽग्रेतन-पर्यायमात्राविर्भावलक्षणपरिणामव्यतिरेकेण नान्यत् किमप्याकारदर्शनं, किन्तूत्पादव्ययरहितं उत्फणविफणकुण्डलिताकारसमन्वितसर्पद्रव्यवन्निर्विकारं द्रव्यमेवास्ति, न ह्यत्र किमप्य-पूर्वमुत्पद्यमानं वा विनश्यति (वा) येन विकारः स्यात् । ननु कथमुत्पादादिरहितं द्रव्यं ?,

यावता सर्पादिके द्रव्ये उत्फणविफणादयः पर्याया उत्पद्यमाना निवर्तमानाश्च साक्षादेव दृश्यन्ते इति चेत्, न, आविर्भावतिरोभावमात्रपरिणामस्य कारणं द्रव्यं, यथा सर्प उत्फण-विफणावस्थयोरिति, न ह्यत्रापूर्वं किञ्चिदुत्पद्यते, किं तर्हि ?, छन्नरूपतया विद्यमानमेवाविर्भवति, नाप्याविर्भूतं सद् विनश्यति, किन्तु छन्नरूपतया तिरोभावमात्रमेवासादयति, एतश्च सत्याविर्भावतिरोभावमात्र एव कार्योपचारात्कारण मस्यौपचारिकमेव, तस्मादुत्पादादिरहितं द्रव्यमुच्यत इति, ननु यद्येकस्वभावं निर्विकारं द्रव्यं तर्ह्यनन्तकालभाविनामनन्तानामप्याविर्भाव-तिरोभावानामेकहेलयैव कारणं किमिति न भवतीति ?, उच्यते, अचिन्त्यस्वभाव हि द्रव्यं, तेनैकस्वभावस्यापि तस्य क्रमेणैवाविर्भावतिरोभावमात्रप्रवृत्ति सर्पादिद्रव्येष्वेकस्वभावेष्व-प्युत्फणविफणादिपर्यायाणां क्रमवृत्तेः प्रत्यक्षसिद्धत्वादिति, ननु यद्येवमुत्फणविफणादिबहुरूपत्वात् पूर्वावस्थापरित्यागेन चोत्तरावस्थाधिगमादनित्यता द्रव्यस्य किमिति न भवति ?, उच्यते, वेषान्तरापन्ननटवद् बहुरूपमपि द्रव्यं नित्यमेव, न हि नटो वेषान्तराणि कुर्वाणोऽप्यनित्यो भवति,

तस्य स्वयमविकारित्वादिति द्रव्यमेव प्रधानमिति,

एवंद्रव्यनयेन स्वमते व्यवस्थापिते भावनयः प्राह—भावेभ्यः पर्यायापरनामभ्योऽर्थान्तरभूतं किमपि द्रव्यं नास्ति, किन्तु भाव एव यदिदं दृश्यते त्रिभुवने वस्तुनिकुरम्बमिति, यतः प्रतिक्षणं भवनमेवानुभूयते, किमुक्तं भवति ? —भावस्यैकस्यापत्ति परस्य तु विपत्ति, न च भावापत्तिविपत्ती हेत्वपेक्षे, यश्च हेतुः स एव द्रव्यमिति वाच्यं, न हि भावो घटादिरुत्पद्यमानो भावान्तरं मृत्पिण्डादिकमपेक्षते किन्तु निरपेक्षमेवोत्पद्यते, अपेक्षा हि विद्यमानस्यैव भवति, न च मृत्पिण्डादिकारणकाले घटादि कार्यमस्ति, अविद्यमानस्य चापेक्षायां खरविषाणस्यापि तथाभावप्रसङ्गात्, यदिचोत्पत्तिक्षणात् प्रागपि घटादिरस्ति, तर्हि किं मृत्पिण्डाद्यपेक्षया ?, तस्य स्वत एव विद्यमानत्वात्, अथोत्पन्नः सन् घटादि पश्चात् मृत्पिण्डादिकमपेक्षते, हन्त ! तदिदं मुण्डितशिरसो दिनशुद्धिपर्यालोचनं, यदि हि स्वत एव कथमपि निष्पन्नो घटादि किं तस्य पश्चात् मृत्पिण्डाद्यपेक्षते, हन्त ! तदिदं मुण्डितशिरसो दिनशुद्धिपर्यालोचनं, यदि हि स्वत एव कथमपि निष्पन्नो घटादि किं तस्य पश्चात् मृत्पिण्डाद्यपेक्षयेति तथा विनाशोऽपि निर्हेतुक एव, मुद्गरोपनिपातादिसव्यपेक्षा एव घटादयो विनाशमाविशन्तो दृश्यन्ते न हि निर्हेतुका इति चेत्, नैवं, विनाशहेतोरयोगात् ।

-तथाहि—मुद्गरादिना विनाशकाले किं घटादिरेव क्रियते आहोश्वित्कपालादय उत तुच्छरूपोऽभाव इति त्रयी गति ?, तत्र न तावद् घटादिस्तस्य स्वहेतुभूतकुलालादिसामग्रीत एवोत्पत्तेः, नापि कपालादयस्तत्करणे घटादेस्तदवस्थत्वप्रसङ्गात्, न ह्यन्यकरणे अन्यस्य निवृत्तिर्युक्तिमती, एकनिवृत्तौ शेषभुवनत्रयस्यापि निवृत्तिप्रसङ्गात्, नापि तुच्छरूपोऽभावः, खरशृङ्गस्येव नीरूपस्य तस्य कर्त्तुमशक्यत्वात्, करणे वा घटादेस्तदवस्थताप्रसङ्गाद्, अन्यकरणेऽ-न्यनिवृत्त्यसम्भवादिति विनाशे मुद्गरादिकं सहकारिकारणमेव न तु तज्जनकं, घटादिस्तु क्षणिकत्वेन निर्हेतुकः स्वयमेव निवर्त्तते, तस्माज्जन्मविनाशयोर्न किञ्चित्केनचिदपेक्ष्यते, अपेक्षणीयाभावाद्य न किञ्चित्कस्यचित्कारणं, तथा च सति न किञ्चिद्द्रव्यं, किन्तु पूर्वापरीभूताः परापरक्षणरूपाः पर्याया एव सन्तीति । अत्र नामादिनयाधिकारे बहु वक्तव्यं तत्तु विशेषावश्यकादवसेयमिति, एवमसम्पूर्णार्थग्राहित्वाद् गजगात्रभिन्नदेशसंस्पर्शने बहुविधविवादमुखरजात्यन्धवृन्दवद्विवदमाने नयवृन्दे मिथ्यादृष्टित्वमुद्भाव्य तत्तिरस्करणाय सर्वनयसमूहात्मकस्याद्वादसुधारसास्वादरसिकतामनमयतामयमुद्गारः, तथाहि—लोके यत्किमपि घटपटादिकं वस्त्वस्ति तत् सर्वमन्योऽन्यसापेक्षनामादिच-तुष्टयात्मकं, न पुनः केवलनाममयं वा केवलाकाररूपं वा केवलद्रव्यलाश्लिष्टं वा केवलभावात्मकं वा, यतः एकस्मिन्नपि शचीपत्यादौ इन्द्र इति नाम तदाकारस्तु स्थापना उत्तरावस्थाकारणत्वं तु द्रव्यत्वं दिव्यरूपसम्पत्तिकुलिशधारणपरमैश्वर्यादिसम्पन्नत्वं तु भाव इति नामादिचतुष्टयमपि प्रतीयते, एतदर्थसंवादका उत्तराध्ययनबृहद्वृत्युक्ताः श्लोका अपि यथा—

॥ १ ॥ "संविन्निष्ठैव सर्वापि, विषयाणां व्यवस्थिति ।
संवेदनश्च नामादिविकलं नानुभूयते ॥

॥ २ ॥ तथाहि—घटोऽयमिति नामैतत्, पृथुबुध्नादि चाकृति ।
मृद्द्रव्यं भवनं भावो, घटे दृष्टं चतुष्टयम् ॥

॥ ३ ॥ तत्रापि नाम नाकारमाकारो नाम नो विना ।

तौ विना नाम नान्योऽन्यमुत्तरावपि संस्थितौ ॥

॥४॥ मयूराण्डरसे यद्वद्वर्णा नीलादयः स्थिताः ।

सर्वेऽप्यन्योऽन्यमुन्मिश्रास्तद्वन्नामादयो घटे ॥ इति

तदेवं सर्वं वस्तु नामादिचतुष्टयात्मकमेव, तेनात्र नामस्थापनाद्रव्यभावार्हन्त- श्चत्वारोऽपि नमस्कार्या एवेत्यागतमिति ।

अत्र कश्चिदग्राह्यनामधेयो भक्षितलशुनपिशुनभूतमुद्गिरति—भवतु नाम वाच्यवाचकभावसम्बन्धेन भावसन्निहितत्वान्नाम्नो नमस्कार्यत्वं, स्थापनायास्तु भावविप्रकृष्टत्वेन तत्कथमिति चेत्, उच्यते, तस्या अपि जिनबुद्ध्युत्पादकत्वादिभिर्हेतुभिः सुतरां भावासन्नत्वान्नमस्कार्यत्वमुपपन्नमिति मा मुग्ध मुधाऽनन्ततीर्थकृदनुज्ञातस्थापनाऽपलापपापपङ्किलतां कलय, कलयसि न किं स्थापनाद्रोणाचार्यसम्यग्विनयोपनतां जगदतिशायिनीमर्जुनसन्तर्जनीं धनुर्वेदसिद्धिं, तथा च प्रतिक्रमणादौ वन्दनकप्रदाने रजोहरणादिकं गुरुचरणतया व्यपदिशसि स्थापनानिक्षेपं चापलपसि अहो वदद्व्याघातस्तव, अपि च—चित्रार्पितनिजजनकवदनमुपानद्भ्यां प्रहरते नराय कुप्यसि चित्रन्यस्तकुम्भस्तनीं निध्यायन् दृष्यसि मिथ्यावादं कुर्वंस्तथापि न तृप्यसि.

किमपराद्धं तव पुरुषधुरन्धरस्थापनया ?, तथा वदामि सुहृद्भावेन—भावकारणतया द्रव्यमपि स्वीकुरु नमस्कार्यतया, अन्यथा पद्मनाभादीन् द्रव्यजिनान् नम स्कुर्वतः द्रव्यनृपं च भावी राजेतिबुद्ध्या उपचरतश्च तवार्द्धनारीश्वरवेषविडम्बना समापतिता, तेन त्यज टिट्टिभमानं भज श्रीजिनाज्ञा सबहुमानं, ततस्तवापि युक्तियुक्तं सर्वेषामर्हन्निक्षेपाणां नमस्कार्यत्वमित्यलं प्रसङ्गेन, अथ प्रकृतं प्रस्तुमः, उक्तः सूत्रस्पर्शिकनिर्युक्त्यनुगमः, तदेवं मङ्गलसूत्रमधिकृत्य सूत्रानुगमसूत्रालापकनिक्षेपसूत्रस्पर्शिकनिर्युक्त्यनुगमनया उपदर्शिताः, एवं प्रतिसूत्रं स्वयमनुसरणीयं ।

अथ यस्यां नगर्यां यस्मिन्नुद्याने यथा भगवान् गौतमस्वामी भगवतः श्रीमन्महावीरस्यान्ते पृष्टवान् यथा च तस्मै भगवान् व्यागृणाति स्म तथोपोद्घातमुपदिदर्शयिषुरिदमाह—'तेणं' ति, ते इति प्राकृतशैलीवशात्तस्मिन्निति द्रष्टव्यं, अस्यायमर्थो—यदा भगवान् विहरति स्म तस्मिन्निति 'काले' वर्तमानावसर्पिणीचतुर्थारकविभागरूपे, उभयत्रापि णमिति वाक्यालङ्कारे, अथवा सप्तम्यर्थे तृतीया आर्षत्वात्, यदाहुः श्रीहेमसूरिपादाः, "आर्षे तृतीयापि दृश्यते तेणं कालेणं तेणं समएणं, तस्मिन् काले तस्मिन् समये इत्यर्थः । 'तेणं समएणं'ति समयोऽवसरवाची, तथा च लोके वक्तारो—नाद्याप्येतस्य समयो वर्त्तते, नास्त्यस्यावसर इत्यर्थः, तस्मिन्निति यस्मिन् समये भगवान् प्रस्तुतां जम्बूद्वीपवक्तव्यतामचकथत् तस्मिन् समये मिथिला नाम नगरी अभवत्, नन्विदानीमपि सा नगरी वर्तते ततः कथमुक्तमभवदिति उच्यते, वक्ष्यमाणवर्णकग्रन्थोक्तविभूतिसमेता तदैवाभवत्, नतु विवक्षितप्रकरणकर्त्तु प्रकरणपगच्छन्ति, एतच्च सुप्रतीतं जिनप्रवचनवेदिनामतोऽभवदित्युच्यमानं न विरोधभाक्, सम्प्रति अस्या नगर्या वर्णकमाह—

'रिद्धत्थिमियसमिद्ध'त्ति ऋद्धा—भवनैः पौरजनैश्चातीव वृद्धिमुपागता, 'ऋधूच् वृद्धा'विति-वचनात्, स्तिमिता—स्वचक्रपरचक्रादिसमुत्थभयकल्लोलमालावर्जिता, समृद्धा—धनधान्यादिविभूति युक्ता, ततः पदत्रयस्य कर्मधारयः, 'वण्णओ'ति ऋद्धस्तिमितसमृद्धा इत्यादि औपपातिको-

पाङ्गप्रसिद्धः समस्तोऽपि वर्णको द्रष्टव्यः अत्रालिखनं तु ग्रन्थगौरवभयादिति ।

तस्याः णमिति पूर्ववत्, मिथिलाया नगर्या बहिस्तात् उत्तरपौरस्त्ये—उत्तरापूर्वान्तरालरूपे दिग्भाग ईशानकोण इत्यर्थः, अत्र एकारो मागधभाषानुरोधतः प्रथमैकवचनप्रभवः, यथा— 'कयरे आगच्छइ दित्तरूवे' इत्यादौ, 'अत्र' अस्मिन्नुत्तरपौरस्त्ये दिग्विभागे माणिभद्रं नाम चैत्यमभवत्, चितेः—लेप्यादिचयनस्य भावः कर्म वा चैत्यं, तच्च संज्ञाशब्दत्वाद्देवताप्रतिबिम्बे प्रसिद्धं, ततस्तदाश्रयभूतं यद्देवताया गृहं तदप्युपचाराच्चैत्यमुच्यते, तच्चेह व्यन्तरायतनं द्रष्टव्यं, न तु भगवतामर्हतामायतनं, तस्य च चिरातीतमित्यादिर्वर्णकस्तत्परिक्षेपिवनखण्डवर्णकसहित औपपातिकतोऽवसेयः, तस्यां मिथिलायां नगर्यां जितशत्रुर्नाम राजा, तस्य सकलस्त्रीगुणधारिणी धारिणी नामा देवी, कृताभिषेका पट्टराज्ञी इत्यर्थः, उभयत्राप्यभवदिति शेषः, 'वण्णओ' त्ति अत्र राज्ञो 'महयाहिमवन्तमहन्ते' त्यादिको राज्ञ्याश्च 'सुकुमालपाणिपाये' त्यादिको वर्णकः प्रथमोपाङ्गप्रसिद्धोऽभिधातव्यः । अथात्र यज्ञातं तदाह—'तेणं कालेणं० ति पूर्ववत्, स्वामीति समर्थविशेषणं विशेष्यमाक्षिपति तेनात्र श्रीमन्महावीरः समवसृत इत्यर्थः, आत्यन्तिकं स्वामित्वं तस्यैव त्रिभुवनविभोरिति, अत्र च यथा निरुपमप्रातिहार्यादिसमृद्ध्या समन्वितो यथा च श्रमणादिपरिवारेण परिवृतः यथा च समवसरणवर्ण्णकं तथौपपातिकग्रन्थादवसेयं ।

पर्षन्निर्गता—मिथिलाया नगर्या बालवृद्धो जनः समस्तोऽपि भगवन्तमागतं श्रुत्वा विवन्दिषया स्वस्मात् स्वस्मात् आश्रयाद्विनिर्गत इत्यर्थः, 'तए णं मिहिलाए नयरीए सिंघाडगे' त्यादिकं 'जाव पंजलिउडा पज्जुवासंती' ति पर्यन्तमौपपातिकगतमवगन्तव्यं ।

तस्याः पर्षदः पुरतो निःशेषजनभाषापरिणामिन्याऽर्द्धमागधभाषया धर्म कथितः, स चैवं—''अत्थि लोए अत्थि अलोए अत्थि जीवा अत्थि अजीवा'' इत्यादि तथा—

॥१॥ ''जह जीवा बज्झंती मुच्चंती जहय संकिलिस्संति ।
जह दुक्खाणं अंतं करेंति केई अपडिबद्धा ॥
॥२॥ अट्टदुहट्टियचित्ता जह जीवा दुक्खसागरमुविंति ।
जह वेरग्गमुवगया कम्मसमुग्गं विहाडेंति ॥
॥३॥ जह रागेण कडाणं कम्माणं पावओ फलविवागो ।
जह य परिहीणकम्मा सिद्धा सिद्धालयमुविंति ॥

तहा आइक्खति'' त्ति पर्षत् प्रतिगता-स्वस्थानं गता, प्रतिगमनसूत्रमपि 'तए णं सा महइम० परिसा' इत्यादि 'तामेव दिसं पडिगया' इति पर्यन्तं तत एवोपाङ्गादवगन्तव्यमिति ।

अथ पर्षत्प्रतिगमनानन्तरं यज्ञातं तदाह—

**मू. (२)** *तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स जेट्ठे अंतेवासी इंदभूई नामं अनगारे गोअमगोत्तेणं सत्तुस्सेहे समचउरंससंठाणे जाव एवं वयासी-*

**वृ.** 'तेणं कालेणं' ति तस्मिन् काले—भगवतो धर्मदेशनाव्युपरमकाले तस्मिन् समये—पर्षत्प्रतिगमनावसरे श्राम्यति—तपस्यति नानाविधमिति श्रमणस्तस्य भगः—समग्रैश्वर्यादिलक्षणः सोऽस्यास्तीति भगवान् तस्य 'शूर वीर विक्रान्तौ' वीरयति कषायान् प्रति विक्रामति स्मेति वीरः महांश्चासौ वीरश्च महावीरस्तस्य ज्येष्ठः—प्रथमः अन्तेवासी—शिष्यः, अनेन पदद्वयेन तस्य

सकलसङ्घाधिपतित्वमाह, इन्द्रभूतिरिति मातपितृकृतनामधेयः 'नाम'त्ति विभक्तिपरिणामेन नाम्नेत्यर्थः, अन्तेवासी किल विवक्षया, आगारोऽपि स्यादित्यत आह-'अणगारे'-गृहं विद्यत इत्यनगारः, अयं च विगीतगोत्रोऽपि स्यादत आह-गौतमो गोत्रेण, गौतमाह्वयगोत्रजात इत्यर्थः, अयं च तत्कालोचितदेहमानापेक्षया न्यूनाधिकदेहोऽपि स्यादिति 'समोत्सेधः' सप्तहस्तप्रमाण-कायोच्छ्रयः, मयूरव्यंसकादित्वात मध्यपदलोपः सहस्रार्जुनशब्दवत् ।

अयं च लक्षणहीनोऽपि स्यादिति 'समचतुरस्र' समाः-शरीरलक्षणशास्त्रोक्तप्रमाणावि-संवादिन्यश्चतस्रोऽश्रयः-चतुर्दिग्विभागोपलक्षिताः शरीरावयवा यस्य स तथा, अन्ये त्वाहुः-समा अन्यूनाधिकाश्चतस्रोऽप्यश्रयो यस्येति पूर्ववत्, अस्रयश्च पर्यङ्कासनोपविष्टस्य जानुनोरन्तरं आसनस्य ललाटोपरिभागस्य चान्तरं दक्षिणस्कन्धस्य जानुनश्चान्तरं वामस्कन्धस्य दक्षिणजानुनश्चान्तरमिति, यावच्छब्दादिदमवसेयं-''वज्जरिसहनारायसंघयणे कणगपुलगनिघसपम्हगोरे उग्गतवे ओराले घोरे घोरगुणे घोरतवस्सी घोरबंभचेरवासी उच्छूढसरीरे संखित्तविउलतेउलेसे चउदसपुव्वी चउनाणोवगए सव्वक्खरसन्निवाई जाव अप्पाणं भावेमाणे विहरइ ।

-तए णं से भगवं गोअमे जायसड्ढे जायसंसए जायकोऊहल्ले उप्पन्नसड्ढे ३-संजायसड्ढे ३ समुप्पन्नसड्ढे ३ उट्ठाए उट्ठेइ २ त्ता जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ २ त्ता समणं भगवं महावीरं तिक्खुत्तो आयाहिणं पयाहिणं करेइ २ त्ता वंदइ नमंसइ वंदित्ता नमंसित्ता नच्चासन्ने नाइदूरे सुस्सूसमाणे नमंसमाणे अभिमुहे विनएणं पंजलिउडे पज्जुवासमाणे एवं वयासी' अत्र व्याख्या-अनन्तरोक्तविशेषणो हीनसंहननोऽपि स्यादत आह-'वज्ज'त्ति, वज्रर्षभनाराचसंहननः, तत्र नाराचम्-उभयतो मर्कटबन्धः ऋषभः-तदुपरि वेष्टनपट्टः कीलिका-अस्थित्रयस्यापि भेदकमस्थि एवंरूपं संहननं यस्य स तथा, अयं च निन्द्यवर्णोऽपि स्यादत आह-'कणग'त्तिक-नकस्य-सुवर्णस्य पुलकोलवस्तस्य यो निकषः-कषपट्टके रेखारूपः तद्वत्, तथा 'पम्ह'त्ति अवयवे समुदायोपचारात् पद्मशब्देन पद्मकेसराण्युच्यन्ते तद्वद् गौर इति, अयं च विशिष्टचरणरहितोऽपि स्यादत आह-उग्रम्-अप्रधृष्यं तपः-अनशनादि यस्य स तथा, यदन्येन चिन्तितुमपि न शक्यते तद्विधेन तपसा युक्त इत्यर्थः, तथा दीप्तं-जाज्वल्यमानदहन इव कर्मवनगहन दहनसमर्थतया ज्वलितं तपो-धर्मध्यानादि यस्य स तथा, तथा तप्तं तपो येन स तथा -

-एवं हि तेन तप्तं तपो येन सर्वाण्यशुभानि कर्माणि भस्मसात्कृतानीति, तथा महद्-प्रशस्त-माशंसादिदोषरहितत्वात् तपो यस्य स तथा, तथा उदारः-प्रधानः, अथवा 'ओरालो' भीष्मः, उग्रादिविशेषणविशिष्टतपःकरणतः पार्श्वस्थानामल्पसत्वानां भयानक इत्यर्थः, तथा घोरो-निर्घृणः, परीषहेन्द्रियादिरिपुगणविनाशनमाश्रित्य निर्दय इत्यर्थः, अन्ये तु आत्मनिरपेक्षं घोरमाहुः, तथा घोरा-इतरैर्दुरनुचरा गुणाः-मूलगुणादयो यस्य स तथा, तथा घोरैस्तपोभिस्तपस्वी, तथा घोरं-दारुणमल्पसत्त्वैर्दुरनुचरत्वात् यद् ब्रह्मचर्यं तत्र वस्तुं शीलं यस्य स तथा, उच्छूढं-उज्झितं संस्कारपरित्यागात् शरीरं येन स तथा, सङ्क्षिप्ता-शरीरान्तर्गतत्वेन ह्रस्वतां गता विपुला-विस्तीर्णा अनेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्थत्वात् तेजोलेश्या-विशिष्टतपोजन्यलब्धिविशेषप्रभवा तेजोज्वाला यस्य स तथा, चतुर्दश पूर्वाणि विद्यन्ते यस्य स तथा, तेन तेषां रचितत्त्वात्, अनेन तस्य श्रुतकेवलितामाह, स चावधिज्ञानादिविकलोऽपि स्यादत आह-'चतुर्ज्ञानोपगतः' मतिश्रुता-

वधिमनःपर्यायरूपज्ञानचतुष्कसमन्वित इत्यर्थः, उक्तविशेषणद्वयकलितोऽपि कश्चिन्न समग्रश्रुतविषयव्यापिज्ञानो भवति, चतुर्दशपूर्वविदां षट्स्थानपतितत्वेन श्रवणात्, अत आह-सर्वे च ते अक्षरसन्निपाताश्च-अक्षरसंयोगास्ते ज्ञेयतया सन्ति यस्य स तथा।

-किमुक्तं भवति ? -या काचिज्जगति पदानुपूर्वी वाक्यानुपूर्वी वा सम्भवति ताः सर्वा अपि जानाति, अथवा श्रव्याणि-श्रुतिसुखकारीणि अक्षराणि साङ्गत्येन नितरां वदितुं शीलमस्येति स तथा, एवंगुणविशिष्टो भगवान् विनयराशिरिव साक्षादितिकृत्वा शिष्याचारत्वाच्च श्रमणस्य भगवतो महावीरस्य अदूरसामन्तेन विहरतीति योगः, तत्र दूरं-विप्रकृष्टं सामन्तं-संनिकृष्टं तत्प्रतिषेधाद् अदूरसमान्तं तत्र, नातिदूरे नातिनिकटे इत्यर्थः, किंविधः सन् तत्र विहरतीति ? -ऊर्ध्वं जानुनी यस्य स तथा, शुद्धपृथिव्यासनवर्जनादौपग्रहिकनिषद्याया अभावाच्चोत्कटुकासन इत्यर्थः, अधःशिराः नोर्द्ध तिर्यग्वा विक्षिप्तदृष्टि, किन्तु नियतभूभागनियमितदृष्टिरित्यर्थः, ध्यानं धर्म्यं शुक्लं वा तदेव कोष्ठः-कुशूलो ध्यानकोष्ठस्तमुपागतः, यथा हि कोष्ठके धान्यं निक्षिप्तमविप्रसृतं भवति एवं भगवानपि ध्यानतोऽविप्रकीर्णेन्द्रियान्तःकरणवृत्तिरित्यर्थः, संयमेन-पञ्चाश्रवनिरोधादिलक्षणेन तपसा-अनशनादिना चशब्दोऽत्र समुच्चयार्थो लुप्तो द्रष्टव्यः, संयमतपसोर्ग्रहणं चानयोः प्रधानमोक्षाङ्गत्वख्यापनार्थं, प्राधान्यं च संयमस्य नवकर्मानुपादानहेतुत्वेन तपसश्च पुराणकर्मनिर्जराहेतुत्वेन, अभिनवकर्मानुपादानात् पुराणकर्मक्षपणाच्च सकलकर्मक्षयलक्षणो मोक्ष इति।

आत्मानं 'भावयन्' वासयन् 'विहरती'ति तिष्ठतीत्यर्थः, ततो ध्यानकोष्ठोपगततया विहरणादनन्तरं, 'से' इति प्रस्तुतपरामर्शार्थ, अनेन गतार्थत्वे यत्पुनर्भगवान् गौतम इत्युपादानं तत्पुनः पुनरुपात्तं पापापनोदकं भगवतो गौतमस्य नामेति सुगृहीतनामधेयत्वमाह, इत्यादि, जातश्रद्धादिविशेषणः सन्नुत्तिष्ठतीति योगः, तत्र जाता-प्रवृत्ता श्रद्धा-इच्छा वक्ष्यमाणार्थतत्वज्ञानं प्रति यस्य स तथा, तथा जातः संशयो यस्य स तथा, संशयो नामानवधारितार्थं ज्ञानं, स चैवं-तीर्थान्तरीयैर्जम्बूद्वीपवक्तव्यताऽन्यथोपदिश्यते ततः किं तत्वमिति संशयः, तथा जातं कुतूहलं यस्य स तथा, जातौत्सुक्य इत्यर्थः, कथमेनां जम्बूद्वीपवक्तव्यतां सर्वज्ञो भगवान् प्रज्ञापयिष्यतीति, तथा उत्पन्ना-प्रागभूता सती भूता श्रद्धा यस्यासौ, अथ जातश्रद्ध इत्येतावदेवास्तु किमर्थमुत्पन्नश्रद्ध इत्यभिधीयते ?, प्रवृत्तश्रद्धत्वेनैवोत्पन्नश्रद्धत्वस्य लब्धत्वात्, न ह्यनुत्पन्ना श्रद्धा प्रवर्त्तते इति, अत्रोच्यते, हेतुत्वप्रदर्शनार्थं, हेतुत्वप्रदर्शनं च उचितमेव, यथाहुः-"प्रवृत्तदीपामप्रवृत्तभास्करां, प्रकाशचन्द्रां बुबुधे विभावरीम्।" इह यद्यपि प्रवृत्तदीपत्वादेवाप्रवृत्तभास्करत्वमवगतं तथाप्यप्रवृत्तभास्करत्वं प्रवृत्तदीपत्वादेर्हेतुतयोपन्यस्तमिति सम्यक्, तथा 'उप्पन्नसंसये उप्पन्नकोउहल्ले' इति प्राग्वत्, तथा 'संजायसड्ढे' इत्यादिपदषट्कं प्राग्वत्, नवरमिह संशब्दः प्रकर्षादिवचनो वेदितव्यः, अन्ये त्वाहुः-जातश्रद्धत्वाद्यपेक्षयोत्पन्नश्रद्धत्वादयः समानार्था विवक्षितार्थस्य प्रकर्षप्रतिपादनाय स्तुतिमुखेन ग्रन्थकृतोक्ताः, न चैवं पुनरुक्तदोषः, यदाह-

॥१॥ "वक्ता हर्षभयादिभिराक्षिप्तमनाः स्तुवंस्तथा निन्दन्।
यत्पदमसकृद् ब्रूते तत्पुनरुक्तं न दोषाय॥" इति।

उत्थानमुत्था-ऊर्ध्वं वर्त्तनं तया उत्तिष्ठति-उर्द्धो भवति, ऊर्द्धेति पाठान्तरम्, इह

'उट्ठेई' त्युक्ते क्रियारम्भमात्रमपि प्रतीयते यथा वक्तुमुत्तिष्ठत इति ततस्तद्व्यवच्छेदार्थमुक्तमुत्थायेति, उपागच्छतीत्युत्तरक्रियापेक्षया उत्थानक्रियायाः पूर्वकालताभिधानायोत्थायेति क्त्वाप्रत्ययेन निर्दिशति, यद्यपि द्वयोः क्रिययोः पूर्वोत्तरनिर्देशाभ्यां पूर्वकाल आक्षेपलभ्य एव तथापि भुञ्जानो व्रजति इत्यादौ द्वयोः क्रिययोर्यौगपद्यदर्शनादानन्तर्यसूचनार्थमित्थमुपन्यासः, उत्थानक्रिया-सव्यपेक्षत्वादुपगमनक्रियाया इति, तथा प्राकृतशैलीवशादव्ययत्वाद्वा 'येने'ति यस्मिन्नित्यर्थे द्रष्टव्यं, यस्मिन्नेव दिग्भागे श्रमणो भगवान् महावीरो वर्त्तते । 'तेणेवे'ति तस्मिन्नेव दिग्भागे उपागच्छति,

इह वर्त्तमानकालनिर्देशस्तत्कालापेक्षया उपागमनक्रियाया वर्त्तमानत्वात्, परमार्थ-तस्तूपागतवानिति द्रष्टव्यं, उपागम्य च श्रमणं भगवन्तं महावीरं कर्मताऽऽपन्नं त्रिकृत्वः—त्रीन् वारान् 'आदक्षिणप्रदक्षिणं करोति' आदक्षिणाद्—दक्षिणहस्तादारभ्य प्रदक्षिणः—परितो भ्राम्यतो दक्षिण एव आदक्षिणप्रदक्षिणस्तं करोति, कृत्वा वन्दते—वाचा स्तौति नमस्यतिकायेन प्रणमति, वन्दित्वा नमस्यित्वा च नैवात्यासन्नः— अतिनिकटोऽवग्रहपरिहारात्, अथवा नात्यासन्ने स्थाने वर्त्तमान इति गम्यं, तथा नैवातिदूरे— अतिविप्रकृष्टेऽनौचित्यपरिहारात्, अथवा नातिदूरे स्थाने वर्त्तत इति गम्यं, 'शुश्रूषन्' भगवद्वचनानि श्रोतुमिच्छन् अभि—भगवन्तं लक्षीकृत्य मुखमस्येत्य-भिमुखः विनयेनप्रकृष्टः—प्रधानो ललाटतटघटितत्वेनाञ्जलि—संयुतहस्तमुद्राविशेषः कृतो—विहितो येन स प्राञ्जलिकृतः, आहि- ताग्न्यादेराकृतिगणतया कृतशब्दस्य परनिपातः, 'पर्युपासीनः' सेवमानः, अनेन विशेषणकदम्बकेन च श्रवणविधिर्दर्शितः, यदाह—

॥ १ ॥ "निद्दाविगहापरिवज्जिएहिं गुत्तेहिं पंजलिउडेहिं ।
भत्तिबहुमानपुव्वं उवउत्तेहिंसुणेयव्वं ॥"

'एवं' वक्ष्यमाणप्रकारेणावादीत्—जम्बूद्वीपवक्तव्यताविषयं प्रश्नमुक्तवान्, जम्बूद्वीप-प्रज्ञप्तिमातृकारूपचतुःप्रश्नीं हृदयाभिसंहितां भगवत्पुरतो वाग्योगेन प्रकटीचकारेत्याशयः । ननु गौतमोऽपि चतुर्दशपूर्वधारी सर्वाक्षरसन्निपाती सम्भिन्नश्रोताः सकलप्रज्ञापनीयभावपरिज्ञानकुशलः सूत्रतश्च प्रवचनस्य प्रणेता सर्वज्ञदेशीय एव, उक्तं च—

॥ १ ॥ "संखाईएवि भवे साहइ जं वा परो उ पुच्छिज्जा ।
न य णं अणाइसेसी वियाणई एस छउमत्थो ॥" इति

कथं तस्य संशयसम्भवः ? तदभावाच्च कथं पृच्छतीति ? , यद्यपि भगवान् गौतमो यथोक्त-गुणविशिष्टस्तथापि तस्याद्यापि छद्मस्थत्वात् कदाचिदनाभोगोऽपि जायते, यत उक्तम्—

॥ १ ॥ "न हि नामानाभोगश्छद्मस्थस्येह कस्यचिन्नास्ति ।
ज्ञानावरणीयं हि ज्ञानावरणप्रकृति कर्म ॥"

ततोऽनाभोगसम्भवादुपपद्यते भगवतो गौतमस्यापि संशयः, न चैतदनार्षं यदुक्त-मुपासकदशासु आनन्दश्रमणोपासकावधिनिर्णयविषये— "तेणं भंते ! किं आनंदेणं समणोवासाएणं तस्स ठाणस्स आलोइयव्वं जाव पडिक्कमियव्वं उदाहु मए ?, तओ णं गोअमाइ समणे भगवं महावीरे एवं वयासी— गोअमा तुमं चेव णं तस्स ठाणस्स आलोयाहि जाव पडिक्कमाहि, आनंदं च समणोवासयं एयमट्ठं खामेहि, तए णं समणे भगवं गोअमे समणस्स भगवओ महावीरस्स अंतिए एअमट्ठं विनएणं पडिसुणइ २ त्ता तस्स ठाणस्स आलोएइ जाव पडिक्कमइ, आनंदं च समणोवासयं

एअमट्ठं खामेइ'त्ति, अथवा भगवानपगतसंशयोऽपि स्वकीयबोधसंवादार्थम- ज्ञलोकबोधनार्थं शिष्याणां वा स्ववचसि प्रत्ययोत्पादनार्थं पृच्छति, अथवाइत्थमेव सूत्ररचनाकल्प इति न कश्चिद्विरोधः

मू. *(३) कहि णं भंते ! जंबुद्दीवे ! केमहालए णं भंते ! जंबुद्दीवे ? २ किंसंठिए णं भंते ! जंबुद्दीवे ३ किमायारभावपडोयारे णं भंते ! जंबुद्दीवे ४ पन्नत्ते ?,*

*गोयमा ! अयण्णं जंबुद्दीवे २ सव्वदीवसमुद्दाणं सव्वब्भंतराए १ सव्वखुड्डाए २ वट्टे तेल्लापूयसंठाणसंठिए वट्टे रहचक्कवालसंठाणसंठिए वट्टे पुक्खरकण्णियासंठाणसंठिए वट्टे पडिपुन्नचंदसंठाणसंठिए ४ एगं जोयणसयसहस्सं आयामविक्खंभेणं तिन्नि जोयणसयसहस्साइं सोलस सहस्साइं दोन्नि य सत्तावीसे जोयणसए तिन्नि य कोसे अट्ठावीसं च धनुसयं तेरस अंगुलाइं अद्धंगुलं च किंचिविसेसाहियं परिक्खेवेणं पन्नत्ते ॥*

वृ. किमुक्तवानित्याह- 'कहिं णं' इति क-कस्मिन् देशे, 'भंते'त्ति गुरोरामन्त्रणं, अत्र एकारो मागधभाषाप्रभवः ततश्च हे भदन्त ! हे सुखकल्याणस्वरूप ! 'भदुङ् सुखकल्याणयो'रिति वचनात् प्राकृतशैल्या वा भवस्य-संसारस्य भयस्य वा-भीतेरन्तहेतुत्वात्, भवान्तो भयान्तो वा तस्यामन्त्रणं हे भवान्त ! भयान्त ! वा प्राग्वर्णितान्वर्थकी जम्बूद्वीपो नाम द्वीपो वर्त्तत इति शेषः, अनेन जम्बूद्वीपस्य स्थानं पृष्टं १ । तथा भदन्त ! किंप्रमाणो महानालयः-आश्रयो व्याप्यक्षेत्ररूपो यस्य स तथा, कियत्प्रमाण- मस्य महत्वमित्यर्थः, एतेन प्रमाणं पृष्टं २ ।

अथ भदन्त ! किं संस्थानं यस्य स तथा, एतेन संस्थानं पृष्टं ३ । तथा भदन्त ! आकारभावः-स्वरूपविशेषः कस्याकारभावस्य प्रत्यवतारो यस्य स किमा- कारभावप्रत्यवतारः, बहुलग्रहणाद्वैय- धिकरण्येऽपि समासः, यद्वा आकारश्च-स्वरूपं भावाश्च- जगतीवर्षवर्षधराद्यास्तद्गतपदार्था आकारभावास्तेषां प्रत्यवतारः-अवतरणं आविर्भाव इतियावत् आकारभावप्रत्यवतारः कः-कीदृग् आकारभावप्रत्यवतारो यस्मिन् स तथा, अनेन जम्बूद्वीपस्वरूपं तद्गतपदार्थाश्च पृष्टाः ४ ।

-इति इन्द्रभूतिना प्रश्नचतुष्टये कृते प्रतिवचःश्रवणसोत्साहताकरणार्थं जगत्प्रसिद्ध- गोत्राभिधानेन तमामन्त्र्य निर्वचनचतुष्टयीं भगवानाह-गौतमेत्यत्र दीर्घत्वमामन्त्रणप्रभवं तेन हे गौतम ! 'अयं' यत्र वयं वसामः, अनेन समयक्षेत्रबहिर्वर्त्तिनामसङ्ख्येयानां जम्बूद्वीपानां व्यवच्छेदः, जम्बूद्वीपो नाम द्वीपः । कथम्भूत इत्याह- 'सर्वद्वीपानां' धातकीखण्डादीनां 'सर्वसमुद्राणां' लवणोदादीनां सर्वात्मना-सामस्त्येन अभ्यन्तरः सकलतिर्यग्लोकमध्यवर्त्ती सर्वाभ्यन्तर एव सर्वाभ्यन्तरकः स्वार्थे कप्रत्ययः, अभ्यन्तरमात्रं धातकीखण्डेऽपि पुष्करवरद्वीपापेक्षयाऽस्ति अतः सर्वशब्दोपादा- नमिति, अनेन जम्बूद्वीपस्यावस्थानमुक्तं १ ।

तथा सर्वेभ्योऽपि -शेषद्वीपसमुद्रेभ्यः क्षुल्लको-लघुः, तथाहि-सर्वे लवणादयः समुद्राः धातकीखण्डादयश्च द्वीपा जम्बूद्वीपादारभ्य द्विगुणद्विगुणविष्कम्भायामपरिधयः, ततः शेषद्वीपसमुद्रापे- क्षयाऽयं दीर्घत्वं प्राकृतत्वात्, अनेन सामान्यतः प्रमाणमभिहितं, विशेषतस्त्वायामादिगतं प्रमाणमग्रे वक्ष्यति, अत्र विशेषप्रमाणमवसरप्राप्तमपि यन्नोक्तं तत्सूत्रकाराणां विचित्रा प्रवृत्तिरिति, तथा वृत्तः, स च शुषिरवृत्तोऽपि स्याद् अत आह- 'तैलापूपसंस्थानसंस्थितः' तैलेन पक्वोऽपूपस्तैलापूपः, तैलेन हि पक्वोऽपूपः प्रायः परिपूर्णवृत्तो भवति न घृतपक्व इति तैलविशेषणं, तस्येव यत्संस्थानं तेन संस्थितः, अत्र तैलादित्वा- ल्लकारस्य द्वित्वं, तथा वृत्तो रथचक्रवालसंस्थानसंस्थितः,

रथस्य--अवयवे समुदायोपचारात् रथाङ्गस्य चक्रस्य चक्रवालं -मण्डलं तस्येव संस्थानेन संस्थितः, अथवा चक्रवालं-मण्डलं मण्डल- त्वधर्मयोगाच्च रथचक्रमपि रथचक्रवालं शेषं प्राग्वत, एवं वृत्तः 'पुष्करकर्णिकासंस्थानसंस्थितः' पुष्करकर्णिकाःपद्मबीजकोशः सकलमध्यभाग इतियावत्, वृत्तः परिपणर्मचन्द्रसंस्थानसंस्थितः प्राग्वत् पदद्वयं भावनीयं, एकेनैव चरितार्थकल्वेऽपि नानादेशजविनेयानां क्षयोपशमवैचित्र्यात् कस्य चित् किञ्चिद्बोधकमित्युमापदनात्वं, अत एव प्रत्युपमापदं योज्यमानत्वात् वृत्तपदस्य न पौनरुक्त्यशङ्काऽपि, एतेन संस्थानमुक्तं ३ ।

अथ सामान्यतः प्रागुक्तं प्रमाणं विशेषतो निर्वक्तुमाह—एकं योजनशतसहस्रं, प्रमाणाङ्गुलनिष्पन्नं योजनलक्षमित्यर्थः 'आयामविष्कम्भेन' अत्र च समाहारद्वन्द्वस्तेन क्लीबे एकवद्भावः, आयामविष्कम्भाभ्यामित्यर्थः, अत्राह परः—जम्बूद्वीपस्य योजनलक्षं प्रमाणयुक्तं तच्च पूर्वपश्चिमयोर्जगतीमूलविष्कम्भसत्कद्वादशद्वादशयोजनक्षेपे चतुर्विंशत्यधिकं भवति, तथा (च) यथोक्तं मानं विरुध्यत इति, न, जम्बूद्वीपजगतीविष्कम्भेन सहैव लक्षं पूरणीयं, लवणसमुद्रजगतीविष्कम्भेन लवणसमुद्रलक्षद्वयं, एवमन्येष्वपि द्वीपसमुद्रेषु, अन्यथा समुद्रमानाज्जगतीमानस्य पृथगभणने मनुष्यक्षेत्रपरिधिरतिरिक्तः स्यात्, स हि पञ्चचत्वारिंशलक्षप्रमाणक्षेत्रापेक्षयाऽभिधीयते, अयमेवाशयः श्रीअभयदेवसूरिभिः चतुर्थाङ्गवृत्ती पञ्चपञ्चाशत्तमे समवाये प्रादुष्कृतोऽस्तीति, तथा त्रीणि योजनशतसहस्राणि षोडश सहस्राणि द्वे योजनशते सप्तविंशे—सप्तविंशत्यधिके त्रयः क्रोशा अष्टाविंशं—अष्टाविंशत्यधिकं धनुःशतं त्रयोदशाङ्गुलानि अर्द्धाङ्गुलञ्च किञ्चिद्विशेषाधिकमित्येतावान् परिक्षेपेण—परिधिना प्रज्ञप्तः । अत्र सप्तविंशमष्टाविंशमित्यादिकाः शब्दाः 'अधिकं ततसंख्यमस्मिन् शतसहस्र शतिशद्दशान्ताया ड' इति सूत्रेण डप्रत्यये सप्तविंशत्यधिकमष्टाविंशत्यधिकमित्यर्थः । परिध्यानयनोपायस्त्वयं चूर्णिकारोक्तः—

॥ १ ॥ "विक्खंभवग्गदहगणकरणी वट्टस्स परिरओ होइ ।
विक्खंभपायगुमिओ परिरओ तस्स गणियपयं ॥"

अत्र व्याख्या—जम्बूद्वीपस्य विष्कम्भो—व्यासः, १०००००, तद्वर्गः क्रियते जातं १००००००००००, स च दशगुणः क्रियते, शून्यानि ११, तदनु वर्गमूलमानीयते ।

॥ १ ॥ 'विषमात्पदतस्त्यक्त्वा वर्गं स्थानच्युतेन मूलेन ।
द्विगुणेन भजेच्छेषं लब्धं विनिवेशयेत् पङ्क्त्याम् ॥

॥ २ ॥ तद्वर्गं संशोध्य द्विगुणीकुर्वीत पूर्ववल्लब्धम् ।
उत्सार्य ततो विभजेच्छेषं द्विगुणीकृतं दलयेत् ॥

—इत्यनेन करणेनानीते वर्गमूले जातोऽधस्तनच्छेदराशि ६३२४४७, अत्र सप्तकरूपोऽन्त्योऽङ्को न द्विगुणीकत इति तद्वर्जं शेषं सर्वमप्यर्द्धीक्रियते, लब्धं योजनानि ३१६२२७, छेदराशिश्च सप्तकेऽपि द्विगुणीकृते जातः ६३२४५४, उपरि शेषांशाः ४८४४७१, एते च योजनस्थानीया इति क्रोशानयनार्थं चतुर्भिर्गुणिताः जाताः १९३७८८४, छेदराशिना भागे लब्धं क्रोशाः ३, शेषं ४०५२२, धनुरानयनाय द्विसहस्रगुणं, जातं ८१०४४०००, छेदराशिना भागे लब्धानि धनूंषि १२८, शेषं ८९८८८, षन्नवत्यङ्गुलमानत्वाद्धनुषोऽङ्गुलानयनार्थं षण्णवतिगुणं, जातं ८६२९२४८, छेदेन भागेलब्धं अङ्गुलानि १३, शेषं ४०७३४६, अत्र 'व्याख्यातो

विशेषप्रतिपत्ति'रिति न्यायात् यवादिकमप्यानीयते, तथाहि–ते ऽङ्गुलांशा 'अष्टभिर्यवैरङ्गुल'मिति अष्टभिर्गुण्यन्ते, जाताः ३२५८७६८ छेदः स एव लब्धाः यवाः ५।

-ततोऽप्यष्टगुणने यूकादयः स्यु, तत्र यूका १, एतत्सर्वमप्यर्द्धाङ्गुलस्य किञ्चिद्विशेषाधिकत्वकथेन सूत्रकारेणापि सामान्यतः संगृहीतमिति बोध्यं, गणितपदं तत्करणं च सोदाहरणमग्रे भावयिष्यत इति। अथाकारभावप्रत्यवतारविषयकं प्रश्नं निर्वक्तुमाह--

*मू. (४) से णं एगाए वइरामईए जगईए सव्वओ समंता संपरिक्खित्ते, सा णं जगई अट्ठ जोयणाइं उद्धं उच्चत्तेणं मूले बारस जोअणाइं विक्खंभेणं मज्झे अट्ठ जोयणाइं विक्खंभेणं उवरिं चत्तारि जोअणाइं विक्खंभेणं मूले विच्छिन्ना मज्झे संक्खित्ता उवरिं तणुया गोपुच्छसंठाणसंठिया सव्ववइरामई अच्छा सण्हा लण्हा घट्ठा मट्ठा नीरया निम्मा निप्पंका निक्कंकडच्छाया सप्पभा समिरीया सउज्जोया पासादीया दरिसणिज्जा अभिरूवा पडिरूवा।*

*सा णं जगई एगेणं महंतगवक्खकडएणं सव्वओ समंता संपरिक्खित्ता, से णं कवक्खकडए अद्धजोअणं उद्धं उच्चत्तेणं पंच धनुसयाइं विक्खंभेणं सव्वरयणामए अच्छे जाव पडिरूवे, तीसे णं जगईए उप्पिं बहुमज्झदेसभाए एत्थ णं महई एगा पउमवरवेइया पन्नत्ता, अद्धजोयणं उद्धं उच्चत्तेणं पंच धनुसयाइं विक्खंभेणं जगईसमिया परिक्खेवेणं सव्वरयणामई अच्छा जाव पडिरूवा*

*तीसे णं पउमवरवेइयाए अयमेयारूवे वण्णावासे पन्नत्ते, तंजहा--वइरामया नेमा एवं जहा जीवाभिगमे जाव अट्ठो जाव धुवा नियया सासया जाव निच्चा ॥*

वृ. 'सेण'मिति, सोऽनन्तरोदितायामविष्कम्भपरिक्षेपपरिमाणो जम्बूद्वीपः, णमिति पूर्ववत्, 'एकया' एकसंख्यया अद्वितीयया (वा) 'वज्रमय्या' वज्ररत्नात्मिकया 'जगत्या' जम्बूद्वीपप्राकाररूपया द्वीपसमुद्रसीमाकारिण्या महानगरप्राकारकल्पया सर्वतो दिक्षु समन्ताद्विदिक्षु सम्परिक्षिप्तः–सम्यग्वेष्टितः, प्राकृतत्वाद्दीर्घत्वं वज्रशब्दस्य, सा जगती अष्ट योजनान्यूर्द्धोच्चत्वेन, वस्तुनो ह्यनेकधोच्चत्वं ऊर्ध्वस्थितस्यैकं अपरं तिर्यकस्थितस्य अन्यद् गुणोन्नतिरूपं, तत्रेतरापोहेनोर्ध्वस्थितस्य यदुच्चत्वं तदूर्ध्वोच्चत्वमित्यागमे रूढमिति, अत्रानुस्वारः प्राकृतत्वात्, मूले द्वादश योजनानि विष्कम्भेन मध्येऽष्टौ उपरि चत्वारि, अत एव मूले विष्कम्भमधिकृत्य विस्तीर्णा मध्ये सङ्क्षिप्ता त्रिभागोनत्वात् उपरि तनुका मूलापेक्षया त्रिभागमात्रविस्तारभावात्, एतदेवोपमया प्रकटयति–गोपुच्छस्येव संस्थानं तेन संस्थिता, ऊर्ध्वीकृतगोपुच्छाकारेति भावः।

सर्वात्मनासामस्त्येन वज्रमयी–वज्ररत्नात्मिका, दीर्घत्वं च प्राकृतशैलीप्रभवं, 'अच्छा' आकाशस्फटिकवदति- स्वच्छा 'सण्हा' श्लक्ष्णा श्लक्ष्णपुद्गलस्कन्धनिष्पन्ना श्लक्ष्णपुद्गलस्कन्धनिष्पन्ना श्लक्ष्णदलनिष्प- न्नपटवत्, 'लण्हा' मसृणा घुंटितपटवत्, 'घट्ठा' घृष्टा इव घृष्टा खरशाणया पाषाप्रतिमावत्, तथा मृष्टा इव मृष्टा सुकुमारशाणया पाषाणप्रतिमावत्, तथा 'नीरजाः' सहजरजोरहिता, तथा 'निर्मला' आगन्तुकमलरहिता, तथा 'निष्पङ्का' कलङ्कविकला कर्दमरहिता वा, तथा निष्कंकटा– निष्कवचा निरावरणा छाया–दीप्तिर्यस्याः सा तथा, सप्रभा–स्वरूपतः प्रभावती अथवा स्वेन– आत्मना प्रभाति–शोभते प्रकाशते वेति स्वप्रभा, तथा समरीचिका–सकिरणा वस्तुस्तोमप्रकाशकरी इत्यर्थः, तथा प्रसादाय -मनःप्रसत्तये हिता तत्कारित्वात् प्रासादीया मनःप्रह्लाद- कारिणीति भावः, तथा 'दर्शनीया' दर्शनयोग्या यां पश्यतश्चक्षुषी श्रमं न गच्छत

इति, तथा 'अभिरूवा' अभि-सर्वेषां द्रष्टणां मनःप्रासादानुकूलतया अभिमुखं रूपं यस्याः सा, अत्यन्तकमनीया इति भावः।

अत एव प्रतिविशिष्टम्-असाधारणं रूपं यस्याः सा प्रतिरूपा, अथवा प्रतिक्षणं नवं नवमिव रूपं यस्याः सा तथा, अथ अत्र सूत्रेऽनुक्तोऽपि वाचयितृणामधिकार्थजिज्ञासाविषया जगत्या इष्टस्थाने विस्तानयनोपायः प्रदर्श्यते, तत्र मूले मध्ये उपरि च विष्कम्भपरिमाणं साक्षादेव सूत्रे लभ्यते, अपान्तराले उपरिष्टादधोगमनेऽमुपायः-जगतीशिखरादधो यावदुत्तीर्णं तस्मिंस्त्रेकेन भक्ते सति यल्लब्धं तच्चतुर्भिर्युतमिष्टस्थाने विस्तारः, तथाहि-उपरितनागाद्योजनमेकं गव्यूताधिकमवतीर्णं ततोऽस्य राशेः एकेन भागे हृते लब्धमेकं योजनं गव्यूताधिकं, तच्च योजनचतुष्कयुतं क्रियते, जातानि पञ्च योजनानि गव्यूताधिकानि, एतावांस्तत्र प्रदेशे विष्कम्भः, एवं सर्वत्र भाव्यं, सम्प्रति मूलादूर्द्धगमने विस्तारानयनोपायः-मूलादूर्ध्वगमने यावदूर्ध्वं गतं तस्यैकेन भागे हृते यल्लब्धं तस्मिन्मूलविस्ताराच्छोधिते यच्छेषं स तत्र योजनादावतिक्रान्ते विस्तारः, तद्यथा-मूलादुत्पत्य योजनमेकं गव्यूतद्वयाधिकं गतस्ततो योजनस्य गव्यूतद्वयाधिकस्यैकेन भागे हृते यल्लब्धं योजनं गव्यूतद्वयाधिकं, एतन्मूलसम्बन्धिनो द्वादशयोजनप्रमाणविस्तारादपनीयते, स्थितानि दश योजनानि गव्यूतद्वयाधिकानि, एतावत्प्रमाणः सार्द्धयोजनातिक्रमे विस्तारः, एवं सर्वत्रापि भाव्यं।

एवं ऋषभकूटजम्बूशाल्मलीवृक्षवनगतकूटानामिष्टस्थाने विस्तारानयनार्थमिदमेवकरणं भाव्यं, अथास्यां गवाक्षकटकवर्णनायाह-'सा' अनन्तरोदितस्वरूपा 'जगती ण' मिति प्राग्वत् जगती एकेन महागवाक्षकटकेन-बृहज्जालकसमूहेन सर्वतः सर्वासु दिक्षु समन्तात्, सामस्त्येन संपरिक्षिप्ता व्याप्तेत्यर्थः, स गवाक्षकटक ऊर्ध्वोच्चत्वेनार्द्धयोजनं द्वे गव्यूते विष्कम्भेन पञ्च धनुःशतानि, सर्वात्मना रत्नमयः, तथा अच्छः, अत्र यावत्करणात् प्राग्व्यावर्णितं विशेषणपदं ग्राह्यं, इयञ्च गवाक्षश्रेणिर्लवणोदपार्श्वे जगतीभित्तिबहुमध्यभागगताऽवगन्तव्या, रिरंसुदेवविद्याधरवृन्दरमणस्थानं। अथ जगत्युपरिभागवर्णनायाह-

'तस्या' यथोक्तस्वरूपाया जगत्या 'उपरि' उपरितने तले यो बहुमध्यदेशलक्षणो भागः, भागश्च प्रदेशलक्षणोऽपि स्यात् तत्र च पद्मवरवेदिकाया अवस्थानासम्भवः अतो देशग्रहणेन महान् भाग इत्यर्थः, स च चतुर्योजनात्मकजगत्युपरितनतलस्य मध्ये पञ्चधनुःशतात्मक इति, सूत्रे एकारान्तता मागधभाषालक्षणानुरोधात्, 'अत्र' एतस्मिन् बहुममध्यदेशभागे णमिति प्राग्वत महती एका पद्मवरवेदिका-देवभोगभूमि प्रज्ञप्ता मया शेषैश्च तीर्थकरैः, सा च ऊर्ध्वोच्चत्वेनार्द्धयोजनं पञ्च धनुःशतानि विष्कम्भेन जगत्याः समा-समाना जगतीसमा सैव जगतीसमिका परिक्षेपेण-परिरयेण, कोऽर्थः ?-जम्बूद्वीपस्य सर्वतो वलयाकारएण व्यवस्थिताया जगत्या यावदुपरितनं तलं चतुर्योजनविस्तारात्मकं तस्माल्लवणदिशि देशोनयोजनद्वये त्यक्ते अर्वाक् यावान् जगतीपरिरयस्तावानस्या अपीति, सर्वरत्नमयी-सामस्त्येन रत्नखचिता, 'अच्छा सण्हा' इत्यादिविशेषणकदम्बकं पाठतोऽर्थतश्च प्राग्वत्। अथास्या अतिदेशगर्भवर्णकसूत्रमाह-

तस्याः पद्मवरवेदिकाया 'अय' मिति वक्ष्यमाणतया प्रत्यक्षः स चोच्यमानो न्यूनाधिकोऽपि स्यादिति एतद्रूपः-एतदेव रूपं-स्वरूपं यस्य स तथा 'वण्णावासो' वर्ण-श्लाघा यथावस्थितस्वरूपकीर्त्तनं तस्यावासो-निवासो ग्रन्थपद्धतिरूपो वर्णकनिवेश इत्यर्थः, अथवा वर्णव्यासो-

वर्णकग्रन्थविस्तरः प्रज्ञप्तः, तद्यथेत्युपदर्शने, 'वइरामये'त्यादि, 'वइरामया नेमा' इत्यादिक 'एव' मिति अनेन प्रकारेण यथा जीवाभिगमे पद्मवरवेदिकावर्णकविस्तर उक्तः तथा बोध्य इति शेषः, स च कियत्पर्यन्त इत्याह– यावदर्थ पद्मवरवेदिकाशब्दस्यार्थनिर्वचनं, ततोऽपि कियत्पर्यन्त इत्याह–'जाव धुवा नियया सासया' 'जाव निच्चा' इति, स च समग्रपाठोऽयं–

'वइरामया नेमा रिट्ठामया पइट्ठाणा वेरुलियामया खंभा सुवण्णमया फलगा लोहियक्खमईओ सूईओ वइरामई संधी णाणामणिमया कलेवरा नानामणिमया कलेवरसंघाडा नानामणिमया रूवा नानामणिमया रूवसंघाडा अंकामया पक्खा पक्खबाहाओ य जोइरसामया वंसा वंसकवेल्लुया य रययामईओ पट्टियाओ जायरूवमईओ ओहाडणीओ वइरामईओ उवरिं पुंछणीओ सव्वसेइ रययामए छायणे, सा णं पउमवरवेइया एगमेगेणं हेमजालेणं एगमेगेणं कणगवक्खजालेणं एगमेगेणं खिंखिणीजालेणं एगमेगेणं घण्टाजालेणं एगमेगेणं मुत्ताजालेणं एगमेगेणं मणिजालेणं एगमेगेणं कणगजालेणं एगमेगेणं रयणजालेणं एगमेगेणं पउमजालेणं सव्वरयणामएणं सव्वओ समंता संपरिक्खित्ता, ते णं जाला तवणिज्जलंबूसगा सुवण्णपयरगमंडिया नानामणिरयणहारद्धहार-उवसोभियसमुदया ईसिमण्णमण्णमसंपत्ता पुव्वावरदाहिणुत्तरागएहिं वाएहिं मंदायं मंदायं एइज्जमाणा एइज्जमाणा पलंबमाणा पलंबमाणा पझंमाणा पझंझमाणा ओरालेणं मणुण्णेणं मनहरेणं कण्णमणनिव्वुइकरेणं सद्देणं ते पएसे सव्वओ समंता आपूरेमाणा सिरीए अईव २ उवसोभेमाणा २ चिट्ठंति। तीसे णं पउमवरवेइयाए तत्थ तत्थ देसे तहिं तहिं बहवे हयसंघाडा गयसंघाडा नरसंघाडा किंनरसंघाडा किंपुरिससंघाडा महोरगसंघाडा गंधव्वसंघाडा वसहसंघाडा सव्वरयणामया जाव पडिरूवा, एवं पंतीओवि विहीओवि मिहुणगाइवि ८।

तीसे णं पउमवरवेइयाए तत्थ तत्थ देसे तहिं २ बहुईओ पउमलयाओ नागलयाओ असोगलयाओ चंपगलयाओ वणलयाओ वासंतीलयाओ अइमुत्तलयाओ कुंदलयाओ सामलयाओ निच्चं कुसुमियाओ निच्चं मउलियाओ निच्चं लवइयाओ निच्चं थवइयाओ निच्चं गुलइयाओ निच्चं गुच्छिआओ निच्चं जमलियाओ निच्चं जुअलियाओ निच्चं विणमियाओ निच्चं पणमियाओ निच्चं सुविभत्तपडिमंजरिवडिंसगधरीओ निच्चं कुसुमियमउलियलवइयथवइयगुलइय-गुच्छियजमलिअ-जुअलियविणमियपणमियसुविभत्तपडिमंजरीवडिंसगधरीओ सव्वरयणामईओ अच्छा जाव पडिरूवा। तीसे णं पउमवरवेइयाए तत्थ तत्थ देसे तहिं २ बहवे अक्खयसोत्थिया प० सव्वरयणामया अच्छा जाव पडिरूवा, से केणत्थेणं भंते! एवं वुच्चइ–पुउमवरवेइया (२)?, गा०! पउमवरवेइयाए तत्थ तत्थ देसे तहिं तहिं वेइयासु वेइयाबाहासु वेइयापुडंतरेसु खंभेसु खंभबाहासु खंभसीसेसु खंभपुडंतरेसु सूईसु सूइमुहेसु सूईफलएसु सुऊपुडंतरेसु पक्खेसु पक्खबाहासु बहूइं उप्पलाइं पउमाइं कुमुयाइं सुभगाइं सोगंधियाइं पोंडरीयाइं सयवत्ताइं सहस्सवत्ताइं सव्वरयणामयाइं अच्छाइं जाव पडिरूवाइं महावासिक्कछत्तसमाणाइं पन्नत्ताइं समणाउसो!, पउमवरवेइया णं भंते! किं सासया असासया?, गो०! सिअ सासया सिअ असासया, (से केणट्ठेणं०?) गोअमा दव्वट्ठयाए सासया वण्णपज्जवेहिं गंधप० रसप० फासप० असासया, से तेणट्ठेणं एवं वुच्चइ–सिय सासया सिय असासया।

पउमवरवेइया णं भंते! कालओ केवचिरं होइ, गोअमा! न कयाइ नासी न कयाइ न

भवइ न कयाइं न भविस्सइ भुविं च भवई य भविस्सइ य धुवा नियया सासया अक्खया अव्वया अवट्ठिआ निच्चा" इति, अत्र व्याख्या—अनन्तरोक्तायाः पद्मवरवेदिकायाः वज्रमया—वज्ररत्नमया नेमाः, नेमा नाम भूमिभागादूर्ध्वं निष्क्रामन्तः प्रदेशाः, वज्रशब्दस्य दीर्घत्वं प्राकृतत्वात्, एवमन्यत्रापि द्रष्टव्यं, तथा रिष्ठरत्नमयानि प्रतिष्ठानानि—मूलपादाः, तथा वैडूर्यरत्नमयाः स्तम्भाः, सुवर्णरूप्यमयानि फलकानि—पद्मवरवेदिकाङ्गभूतानि, लोहिताक्षरत्नमय्यः सूचयः—फलकद्वयस्थिरसम्बन्धकारिपादुकास्थानीयाः, वज्रमयाः—सन्धयः फलकानां, किमुक्तं भवति ? —वज्ररत्नापूरिताः फलकानां सन्धयः, नानामणिमयानि कलेवराणि - मनुष्यशरीराणि, तथा नानामणिमयाः कलेवरसङ्घाटाः—मनुष्यशरीरयुग्मानि, सङ्घाटशब्दो युग्मवाची यथा साधुसङ्घाट इति, नानामणिमयानि रूपाणि—हस्त्यादीनां रूपकाणि, रूपसङ्घाटा अपि तथैव, तानि च कानिचिच्छोभार्थं कानिचिद्विनोदार्थं कानिचिच्च दृग्दोषनिवारणार्थं यथा राजद्वारादिषु हस्त्यादिरूपाणि कम्पमानलम्बकूर्चकवृद्धरूपाणि च क्रियन्ते, तथाऽत्र फलकेषु रत्नमयानि सन्तीत्यर्थः, अङ्के—रत्नविशेषस्तन्मयाः पक्षाः—तदेकदेशाः पक्षबाहवोऽपि तदेकदेशभूता एवाङ्कमय्यः, ज्योतीरसं नाम रत्नं तन्मया वंशाः -महान्तः, पृष्ठवंशा मध्यवलका इत्यर्थः, महतां पृष्ठवंशानामुभयतस्तिर्यक् स्थाप्यमाना वंशाः कवेलुकानि प्रतीतानि, अत्र द्वितीयवंशशब्दा- द्विभक्तिलोपः प्राकृतत्वात् ।

अक्रमप्राप्तनामपि कवेलुकानां पृष्ठवंशैर्वंशैश्च सह यदेकत्र विशेषणे योजनं तत्र ज्योतीरसरत्नमयत्वं हेतुरिति, रजतमय्यः पट्टिकाः—वंशानामुपरि कम्बास्थानीयाः, जातरूपं—सुवर्णविशेषस्तन्मय्यः अवघाटिन्यः—आच्छादनहेतुकम्बोपरिस्थाप्य महामहाप्रमाणकिलिञ्चस्थानीयाः, वज्रमय्यः अवघाटिनीनामुपरि पुञ्छन्यो—निविडतराच्छादनहेतुश्लक्ष्णतरतृणविशेषस्थानीयाः, सर्वश्वेतं रजतमयं पुञ्छनीनामुपरि कवेलुकानामध आच्छादनं, सा पद्मवरवेदिका एकैकेन किङ्किणीजालेन किङ्किण्यः—क्षुद्रघण्टिकाः एकैकेन घण्टाजालेन—किङ्किण्यपेक्षया किञ्चिन्महत्यो घण्टाः एकैकेन मुक्ताजालेन—मुक्ताफलमयेन दामसमूहेन एकैकेन मणिजालेन मणिमयेन दामसमूहेन एकैकेन 'कनकजालेन' कनकं—पीतरूपः सुवर्णविशेषस्तन्मयेन दामसमूहेन एकैकेन रत्नजालेन—रत्नमयदामसमूहेन, अत्र स्थलजाता मणयो जलजातानि रत्नानीति रत्नमण्योर्भेदः, एकैकेन सर्वरत्नमयपद्मात्मकेन दामसमूहेन, सर्वतः समन्तादिति प्राग्वत्, संपरिक्षिप्ता, एतानि च दामरूपाणि हेमजालादीनि जालानि लम्बमानानि वेदित०, तथा च आह—

'ते णं जाला' इति, अत्र पुंस्त्वनिर्देशः प्राकृतत्वात्तेन तानि जालानि तपनीयम्—आरक्तं सुवर्णं तन्मयो लम्बूसगो—दाम्नामग्रिमभागे मण्डनविशेषो येषां तानी तथा, पार्श्वतः सामस्त्येन सुवर्णस्य प्रतरकेण—पत्रेणा मण्डितानि, अन्तरा अन्तरा लम्बमानहेमपत्रकालङ्कृतानि, तथा नानारूपाणां—जातिभेदेनानेकप्रकाराणां मणीनां रत्नानां च ये विचित्रवर्णा हारा—अष्टादशसरिका अर्द्धहारा—नवसरिकास्तैरुपशोभितः समुदायो येषां तानि तथा, ईषत्—मनाक् अन्योऽन्यं—परस्परसम्प्राप्तानि—असंलग्नानि पूर्वापरदक्षिणोत्तरागतैर्वातैर्मन्दायं मन्दायमिति—मन्दं मन्दं एज्यमानानि—कम्प्यमानानि "भृशाभीक्ष्ण्याविच्छेदे द्विःप्राक्तमवादे" रित्यविच्छेदे द्विर्वचनं यथा पचति पचतीत्यत्र, एवमत्रापि, ईषत्कम्पनवशात् प्रकर्षत इतस्ततो मनाक् चलनेन लम्बमानानि २, ततः परस्परं सम्पर्कवशतः "पझंझमाणा पझंझमाणा' इति शब्दायमानानि २, उदारेण—स्फारेण

शब्देनेति योगः, स च स्फारशब्दो मनःप्रतिकूलोऽपि भवति तत आह-

'मनोज्ञेन' मनोऽनुकूलेन, तच्च मनोऽनुकूलत्वं लेशतोऽपि स्यादत आह- 'मनोहरेण' मनांसि श्रोतॄणां हरति- आत्मवशं नयतीति मनोहरो, लिहादेराकृतिगणत्वाद्‌चप्रत्ययः तेन, तदपि मनोहरत्वं कुत इत्याह- 'निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शन'मिति वचनात् हेतौ तृतीया, ततोऽयमर्थः-प्रतिश्रोतृ कर्णयोर्मनसश्च निर्वृतिकरः- सुखोत्पादकस्ततो मनोहरस्तेन इत्थंभूतेन शब्देन तान् प्रत्यासन्नान् प्रदेशान् सर्वतः समन्तात् आपूरयन्ति २ शतृप्रत्ययान्तस्य शाविदं रूपम् अत एव 'श्रिया' शोभया अतीव २ उपशोभमानानि २ तिष्ठन्ति।

पुनरस्यां यदस्ति तदुपदर्शयति- 'तस्याः' पद्मवरवेदिकायाः 'तत्र २ देशे तहिं २ इति तस्यैव देशस्य तत्र २ एकदेशे, एतावता किमुक्तं भवति ? यत्र देशे एकस्तत्रान्येऽपि विद्यन्त इति, बहवो हयसङ्घाटा अपि वाच्याः, एते च सर्वे सर्वात्मना रत्नमयाः अच्छा यावत् प्रतिरूप इत्यादि सर्वं प्राग्वत्, एते च सर्वेऽपि हयसङ्घाटादयः पुष्पावकीर्णका उक्ताः, सम्प्रत्येषामेव हयादीनां पङ्क्त्यादिप्रतिपादनार्थमाह- 'एव'मिति, यथाऽमीषां हयादीनामष्टानां सङ्घाटा उक्तास्तथा पङ्क्त्योऽपि वीथ्योऽपि मिथुनकानि च वाच्यानि, तानि चैवम्- 'तीसे णं पउमवरवेइयाए तत्थ तत्थ देसे तहिं २ बहूआओ हयपंतीओ गयपंतीओ' इत्यादि, नवरमेकस्यां दिशि या श्रेणि सा पङ्क्तिरभिधीयते, उभयोरपि पार्श्वयोरेकैकश्रेणिभावेन यत् श्रेणिद्वयं सा वीथी, एते च वीथीपङ्क्तिसङ्घाटहयादीनां पुरुषाणामुक्ताः, सम्प्रत्येतेषामेव हयादीनां स्त्रीपुरुष- युग्मप्रतिपादनार्थं 'मिहुणाई' इत्युक्तं, उक्तेनैव प्रकारेण हयादीनां मिथुनकानि-स्त्रीपुरुषयुग्म- रूपाणि वाच्यानि, यथा तस्यैव देशस्य तत्र तत्र एकदेशे अत्रापि 'तत्थ तत्थ देसे तहिं तहिं' इति वदता यत्रैका लता तत्रान्या अपि बह्व्यो लताः सन्तीति प्रतिपादितं द्रष्टव्यं, बह्व्यः पद्मलताः-पद्मिन्यः नागलताः-नागा द्रुमविशेषास्त एव लतास्तिर्यकशाखाप्रसराभावात् नागलताः, एवमशोकलताः चम्पकलताः 'वणलता' वणा-तरुविशेषा वासन्तिकालताः अतिमुक्तलताः कुन्दलताः श्यामलताः।

कथंभूता एता इत्याह- 'नित्यं' सर्वकालं षट्स्वपि ऋतुष्वित्यर्थः 'कुसुमिताः' कुसुमानि सञ्जातान्यास्विति कुसुमिताः, तारकादिदर्शनादितप्रत्ययः, एवं नित्यं मुकुलिताः मुकुलानि नाम- कुड्मलानि कलिका इत्यर्थः, तथा नित्यं लवकिताः लव एव लवकः स्वार्थे कः प्रत्ययः स सञ्जात आस्विति लवकिताः, सञ्जातपल्लवलवा इत्यर्थः, तथा नित्यं गुच्छिताः-सञ्जातगुच्छाः, गुच्छश्च पत्रसमूहः, यद्यपि च पुष्पस्तबकयोरभेदो नामकोशेऽधीतस्तथाऽप्यत्र पुष्पपत्रकृतो विशेषो ज्ञेयः, नित्यं यमलिताः, यमलं नाम समानजातीययोर्लतयोर्युग्मं तत्सञ्जातमास्विति यमलिताः, नित्यं युगलिताः, युगलं-सजातीयविजातीययोर्लतयोर्द्वन्द्वं, तथा नित्यं विनमिता नित्यं फलपुष्पादि- भारेण विशेषेण नमिता-नीचैर्भावं प्रापिताः, तथा नित्यं प्रणमिताः-तेनैव नमयितुमारब्धाः, प्रशब्दस्यादिकर्मार्थत्वात्, अन्यथा पूर्वविशेषणादभेदः स्यात्, नित्यं सुविभक्तेत्यादि, सुविभक्तः- सुविच्छित्तिकः प्रतिविशिष्टो मञ्जरीरूपो योऽवतंसकस्तद्धराः-तद्धारिण्यः। औपपातिकादौ तु 'सुविभत्तपडिमंजरीवडिंसगधराओ' इति पाठस्तत्र सुविभक्ता-अतिविविक्ता सुनिष्पन्नतया पिण्डयो- लुम्ब्यो मञ्जर्यश्च प्रतीताः, शेषं तथैव, एषः सर्वोऽपि कुसुमितत्वादिको धर्म एकैकस्याः २ लताया उक्तः, साम्प्रतं कासाञ्चिल्लतानां सकल- कुसुमितत्वादिधर्मप्रतिपादनार्थमाह- नित्यं

कुसुमित- मुकुलितलवकितस्तबकित गुल्मितगुच्छितयमलितयुगलवितविनमितप्रणमितसुवि-भक्तप्रतिमञ्जर्यवतंसकधर्य इति, अर्थस्तु प्राग्वत्, एताश्च सर्वा अपि लताः किंरूपा इत्याह—सर्वात्मना रत्नमय्यः, 'अच्छा सण्हा' इत्यादिविशेषणानि प्राग्वत्।

अत्र तीसे णमित्यादि अक्खयसोत्थियासूत्रं दृश्यते, परं वृत्तिकारेण न व्याख्यातमिति न व्याख्यायते। अधुना पद्मवरवेदिकाशब्दप्रवृत्तिनिमित्तं जिज्ञासुः पृच्छति—सेशब्दोऽथशब्दार्थ अथ 'केनार्थेन' केन कारणेन भदन्त! एवमुच्यते—पद्मवरवेदिका पद्मवरवेदिकेति, किमुक्तं भवति?—पद्मवरवेदिकेत्येवंरूपस्य शब्दस्य तत्र प्रवृत्तौ किं निमित्तमिति एवमुक्ते भगवानाह—गौतम! पद्मवरवेदिकायां तत्र तत्र देशे तस्यैव देशस्य तत्र तत्र एकदेशे वेदिकासु—उपवेशनयोग्य-मत्तवारणरूपासु वेदिकाबाहासु—वेदिकापार्श्वेषु वेइयापुडंतरेसु इति—द्वे वेदिके वेदिकापुटं तेषामन्तराणि तेषु, स्तम्भेषु सामान्यतः, स्तम्भबाहासु—स्तम्भपार्श्वेषु, स्तम्भीशीर्षेषु (स्तम्भाग्रभागेषु स्तम्भपुटान्तरेषु)—द्वौ स्तम्भौ स्तम्भपुटं तेषामन्तराणि तेषु, सूचीषु फलकसम्बन्ध विघटनाभावहेतुप-दुकास्थानीयासु तासामुपरि इति तात्पर्यार्थः, सूचीमुखेषु—यत्र प्रदेशे सूची फलकं भित्वा मध्ये प्रविशति तत्प्रत्यासन्नो देशः सूचीमुखं तेषु, तथा सूचीफलकेषु—सूचीभि सम्बन्धिता ये फलकप्रदेशास्तेऽप्युपचारात् सूचीफलकानि तेषु सूचीनामध उपरि च वर्त्तमानेषु, तथा सूचीपुटान्तरेषु द्वे सूच्यौ सूचीपुटं तेषामन्तरेषु, पक्षाः पक्षबाहा वेदिकैकदेशविशेषाः तेषु बहूनि उत्पलानि—गर्द्दभकानि ईषन्नीलानि वा पद्मानि—सूर्यविकासीनि ईषच्छ्वेतानि वा, नलिनानि—ईषद्रक्तानि कुमुदानि—चन्द्रविकासीनि सुभगानि—पद्मविशेषाः, सौगन्धिकानि—कल्हाराणि पुण्डरीकाणि—श्वेतपद्मानि तान्येव महान्ति महापुण्डरीकाणि शतपत्राणि—दलशतकलितानि सहस्रपत्राणि—सहस्रदलकलि-तानि एतौ च पद्मविशेषौ पत्रसङ्ख्याविशेषात् पृथगुपात्तौ, सर्वरत्नमयानि चैतानि, अच्छा इत्यादिविशेषणानि प्राग्वत्, महान्ति—महाप्रमाणानि वार्षिकाणि - वर्षाकाले पानीयरक्षणार्थंयानि कृतानि तानि वार्षिकाणि तानि च तानि छत्राणि च २ तत्समानानि प्रज्ञप्तानि, हे श्रमण!—तपः प्रवृत्त! हे आयुष्मन्!—प्रशस्तजीवित!

—'से एएणट्ठेण' मित्यादि, तदेतेनार्थेन—अन्वर्थेन गौतम! एवमुच्यते—पद्मवरवेदिका २ तेषु २ यथोक्तरूपेषु यथोक्तरूपाणि पद्मानि पद्मवरवेदिकाशब्दस्य प्रवृत्तिनिमित्तमिति भावः, व्युत्पत्तिश्चैवं—पद्मवरा पद्मप्रधाना वेदिका पद्मवरवेदिकेति, अथापरश्च प्रवृत्तिनिमित्तं, किन्तदि-त्याह—पद्मवरवेदिकायाः शाश्वतं नामधेयं प्रज्ञप्तमिति, अयमभिप्रायः—प्रस्तुतपुद्गलप्रचयविशेषे पद्मवरवेदिकेतिशब्दस्य निरुक्तिनिरपेक्षाऽनादिकालीना रूढि प्रवृत्तिनिमित्तमिति। 'पउवरवेइया णं भंते' त्ति पद्मवरवेदिका शाश्वती उताशाश्वती?, "प्रत्यये ङीर्न वा" इत्यनेन प्राकृतसूत्रेण ङीप्रत्ययस्य वैकल्पिकत्वेन आद्यन्ततया सूत्रे निर्देशः, किं नित्या उत अनित्येतिभावः, भगवानाह—गौतम! स्याच्छाश्वती स्यादशाश्वती, कथञ्चिद् नित्या कथञ्चिदनित्येत्यर्थः, स्याच्छब्दो निपातः कथञ्चिदित्येतदर्थवाची, एतदेव सविशेषं जिज्ञासुः पृच्छति -

'से केणट्ठेण' मित्यादि, सेशब्दोऽथशब्दार्थ स च प्रश्ने, केनार्थेन—केन कारणेन भदन्त! एवमुच्यते - यथा स्याच्छाश्वती स्यादशाश्वतीति, भगवानाह—गौतम! द्रव्यार्थतया शाश्वती, तत्र द्रव्यं सर्वत्रान्वयि सामान्यमुच्यते द्रवति—गच्छति तान् तान् पर्यायान् विशेषानिति वा द्रव्यमिति

व्युत्पत्तेः, द्रव्यमेवार्थ—तात्त्विकः पदार्थो यस्य स तथा द्रव्यार्थः— द्रव्यमात्रास्तित्वप्रतिपादको नयविशेषः तद्भावो द्रव्यार्थता तया-द्रव्यमात्रास्तित्वप्रतिपादकनयाभिप्रायेणेतियावत् शाश्वती, द्रव्यार्थिकनयमतपर्यालोचनायामुक्तरूपस्य पद्मवरवेदिकाया आकारस्य सदाभावाद्, तथा वर्णपर्यायैः—कृष्णादिभिः गन्धपर्यायैः—सुरभ्यादभि रसपर्यायैः—तिक्तादिभिः स्पर्शपर्यायैः—कठिनत्वादिभि अशाश्वती—अनित्या, तेषां वर्णादीनां प्रतिक्षणं कियतकालानन्तरं वाऽन्यथा अन्यथा भवनात्, अतादवस्थस्य चानित्यत्वात्, न चैवमपि भिन्नाधिकरणे नित्यत्वानित्यत्वे, द्रव्यपर्याययोर्भेदाभेदोपगमात्, अन्यथोभयोरप्यसत्त्वापत्तेः, तथाहि—शक्यते वक्तु परपरिकल्पितं द्रव्यमसत्, पर्यायव्यतिरिक्तत्वात्, बालत्वादिपर्यायशून्यवन्ध्यासुतवत्, तथा परपरिकल्पिताः पर्याया असन्तो, द्रव्यव्यतिरिक्तत्वात्, वन्ध्यासुतगतबालत्वादिपर्यायवत्, उक्तं च-

॥ १ ॥ "द्रव्यं पर्यायवियुतं, पर्याया द्रव्यवर्जिताः ।
क्व कदा केन किंरूपा, दृष्टा मानेन केन वा ॥"

इति कृतं प्रसङ्गेन, 'से एएणट्ठेण'मित्याद्युपसंहारवाक्यं सुगमं, इह द्रव्यास्तिकनयवादी स्वमतप्रतिष्ठापनार्थमेवमाह— "नासतो विद्यते भावो, नाभावो विद्यते सतः" इति वचनात्, यौ तु दृश्येते प्रतिवस्तु उत्पादविनाशौ तदाविर्भाव- तिरोभावमात्रं, यथा सर्पस्य उत्फणत्वविफणत्वे, तस्मात्, सर्वं वस्तु नित्यमिति, एवं च तन्मतचिन्तायां संशयः—किं घटादिवत् द्रव्यार्थतया शाश्वती उत सकलकालमेवंरूपेति ? ततः संशयापनोदार्थं० भगवन्तं भूयः पृच्छति—

'पउमवरवेइया णं'मित्यादि, पद्मवरवेदिका णमिति पूर्ववत् भदन्त!—परमकल्याणयोगिन् कियच्चिरं—कियन्तं कालं यावद्भवति, एवंरूपा कियन्तं कालमवतिष्ठते इति, भगवानाह—गौतम न कदाचिन्नासीत्, सर्वदैवासीदितिभावः, अनादित्वात्, तथा न कदाचिन्न भवति, सर्वदैव वर्त्तमानकालचिन्तायां भवतीति, भावः, सर्वदैव भावात्, तथा न कदाचिन्न भविष्यति, किन्तु भविष्यच्चिन्तायां सर्वदैव भविष्यतीति प्रतिपत्तव्यं, अपर्यवसितत्वात्, तदेवं कालत्रयचिन्तायां नास्तित्वप्रतिषेधं (विधाय) सम्प्रत्यस्तित्वं प्रतिपादयति- 'भुविं च'इत्यादि, अभूच्च भवति च भविष्यति चेति, एवं त्रिकालावस्थायित्वात् ध्रुवा मेर्वादिवत् ध्रुवत्वादेव सदैव स्वस्वरूपेति नियता, नियतत्वादेव च शाश्वती—शश्वद्भवनस्वभावा शाश्वत्वादेव च सततगङ्गासिन्धुप्रवाहप्रवृत्तावपि पौण्डरीक (पद्म) हृद इवानेकपुद्गलविघटनेऽपि तावनमात्रापुद्गलोच्चटनसम्भवात् अक्षया—न विद्यते क्षयो—यथोक्तस्वरूपाकारपरिभ्रंशो यस्याः सा अक्षयत्वादेवाव्यया—अव्ययशब्दवाच्या, मानगपि स्वरूपचलनस्य जातुचिदप्यसम्भवात्, अव्ययत्वादेव स्वप्रमाणेऽवस्थिता मानुषोत्तरपर्वताद्बहि समुद्रवत्, एवं स्वस्वप्रमाणे सदावस्थानेन चिन्त्यमाना नित्या धर्मास्तिकायादिवत् ।

अथ जगत्या उपरि पद्मवरवेदिकायाः परतो यदस्ति तदावेदयति -

**मू. (५)** *तीसे णं जगईए उप्पिं बाहिं पउमवरवेइयाए एत्थ णं महं एगे वनसंडे पन्नत्ते, देसूणाइं दो जोअणाइं विक्खंभेणं जगईसमए परिक्खेवेणं वनसंडवण्णओ नेयव्वो ।*

**वृ.** 'तीसे णं'मिति प्राग्वत्, जगत्या उपरि पद्मवरवेदिकायाः बहिः परतो यः प्रदेशस्तत्र, एतस्मिन् णमिति पूर्ववत्, महानेको वनखण्डः प्रज्ञप्तः, अनेकजातीयानामुत्तमानां महीरुहाणां

समूहो वनखण्डः, यदुक्तम् -''एगजाइएहिं रुक्खेहिं वणं, अनेगजाइहिं उत्तमेहिं रुक्खेहिं वनसंडे'-'इति, स च वनखण्डो देशोने किञ्चिदूने द्वे योजने विष्कम्भतो विस्तारतः, देशश्चात्र सार्द्धधनुःशतद्वयरूपोऽवगन्तव्यः, तथाहि-चतुर्योजनविस्तृतशिरस्काया जगत्या बहुमध्यभागे पञ्चधनुःशतव्यासा पद्मवरवेदिका, तस्याश्च बहिर्भागे एको वनखण्डोऽपरश्चान्तर्भागे, अतो जगतीमस्तकविस्तारो वेदिकासविस्तारधनुःशतपञ्चकोनोऽर्द्धीक्रियते, ततो यथोक्तं मानं लभ्यत इति, तथा जगतीसम एव जगतीसमकः-जगतीतुल्यः परिक्षेपेण-परिरयेण, वनखण्डवर्णकः सर्वोऽप्यत्र प्रथमोपाङ्गगतो नेतव्यः-स्मृतिपथं प्रापणीयः।

स चायं ''किण्हे किण्होभासे नीले नीलोभासे हरिए हरिओभासे सीए सीओभासे निद्धे निद्धोभासे तिव्वे तिव्वोभासे किण्हे किण्हच्छाए नीले नीलच्छाए हरिए हरियच्छाए सीए सीअच्छाए निद्धे निद्धच्छाए तिव्वे तिव्वच्छाए घणकडिअच्छाए रम्मे महामेहणिकुरंबभूए, ते णं पायवा मूलमंतो कंदमंतो खंधमंतो तयामंतो सालमंतो पवालमंतो पत्तमंतो पुप्फमंतो फलमंतो बीअमंतो अणुपुव्विसुजायरुइलवट्टभावपरिणया एगखंधी अनेगसाहप्पसाहविडिमा अनेगनरवाम-सुप्पसारियागेज्झघणविउलवट्टखंधा अच्छिद्दपत्ता अविरलपत्ता अवाईणपत्ता अणईइपत्ता निद्धूय-जरढपंडुरपत्ता नवहरिअभिसंतपत्तभारंधयारगंभीरदरिसणिज्जा उवविणिग्गयनवतरुणपत्तप-ल्लवकोमलउज्जलचलंतकिसलयसुकुमालपवालसोभियवरंकुरग्गसिहरा निच्चं कुसुमिया जाव निच्चं पणमिया निच्चं कुसुमिअमउलिअलवइअथवइअगुलइअगोच्छिअजमलिअजुअलिअविणमिय-पणमियसुविभत्तपडिमंजरिवडिंसयधरा सुअबरहिणमयणसलागकोइलकोरगभिंगारग कोंडलकजीवंजीवगणंदीमुहकविलपिंगलक्खगकारंडवचक्कवायकलहंससारसअणे गसउण-गणविरइअसद्दुन्नइअमहुरसरणाइआ सुरम्मा संपिंडिअदरियभमरमहुअरिपहकरपरिलिंत-मत्तछप्पयकुसुमासवलोलमहुरगुमगुमेंतगुंजंतदेसभागा अब्भिंतरपुप्फफला बाहिरपत्तछन्ना पुप्फेहिं फलेहि य उच्छन्नपलिच्छन्ना नीरोअया अकंटया साउफला नानावि- हगुच्छगुम्ममंडवगसोहिया विचित्तसुहकेउभूया वाविपुक्खरिणीदीहियासुनिवेसियरम्मजालघरगा पिंडिमनीहारिमसुगंधिसुह-सुरभिमनहरं च महया गंधद्धणिं मुअंता सुहसेउकेउबहुला अनेगरहजाणजुग्गसिबिअसंदमाणि-आपविमोअणा पासादीया जाव पडिरूवा''इति

अत्र व्याख्या-इह प्रायो मध्यमे वयसि वर्त्तमानानि पत्राणि कृष्णानि भवन्ति, ततस्तद्योगाद्वनखण्डोऽपि कृष्णः, न चोपचारमात्रतः कृष्ण इति व्यपदिश्यते, किन्तु तथाप्रतिभासनात्, तथा चाह-कृष्णावभासः, यावति भागे कृष्णानि पत्राणि सन्ति तावति भागे स वनखण्डोऽतीव कृष्णोऽवभासते-प्रतिभाति द्रष्टजनलोचनपथ इति कृष्णोऽवभासो यस्य स कृष्णावभासः, तथा प्रदेशान्तरे नीलपत्रयोगाद्वनखण्डोऽपि नीलः, एवं नीलावभासः, तथा प्रदेशान्तरे हरितो हरितावभासश्च, तत्र नीलो मयूरकण्ठवत् हरित्तु शुकपिच्छवत् हरितालाभ इति वृद्धाः, तथा प्रायो दिनकरकराणामप्रवेशाद्वृक्षाणां पत्राणि शीतानि भवन्ति तद्योगात् वनखण्डोऽपि शीतः, न चासावुपचारमात्रत इत्यत आह शीतावभास इति, अधोवर्त्तिव्यन्तरदेवदेवीनां तद्योगशीत-वातस्पर्शतः शीतो वनखण्डोऽवभासते, तथा एते कृष्णनीलहरितवर्णा यथास्वं स्वस्मिन् २ स्वरूपेऽत्यर्थमुत्कटाः स्निग्धा भण्यन्ते तीव्राश्च ततस्तद्योगाद्वनखण्डोऽपि स्निग्धस्तीव्रश्चोक्तः,

न चैतदुपचारमात्रं किन्तु प्रतिभासोऽपि। तत उक्तं-स्निग्धावभासस्तीव्रावभास इति, इह चावभासो भ्रान्तोऽपि स्याद्यथा मरुमरीचिकासु जलावभासस्ततो नावभासमात्रोपदर्शनेन यथावस्थितं वस्तुस्वरूपमुपवर्णितं भवति किन्तु तथास्वरूपप्रतिपादनेन ततः कृष्णत्वादीनां तथास्वरूपप्रतिपादनार्थमनुवादपुरस्सरं विशेषणान्तरमाह – कृष्णो वनखण्डः, कुत इत्याह—कृष्णच्छायः, 'निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शन'मिति वचनात् हेतौ प्रथमा, ततोऽयमर्थयस्मात् कृष्णा छाया—आकारः सर्वविसंवादितया यस्य स तस्मात् कृष्णः, एतदुक्तं भवति—

सर्वाविसंवादितया तत्र कृष्णा आकार उपलभ्यते, न च भ्रान्तावभाससम्पादितसत्ताकः सर्वाविसंवादी भवति, ततस्तत्त्ववृत्या स कृष्णो न भ्रान्तावभासमात्रव्यवस्थापित इति, एवं नीलो नीलच्छ इत्याद्यपि भावनीयं, नवरं शीतः शीतच्छाय इत्यत्र छायाशब्द आतपप्रतिपक्षवस्तुवाची द्रष्टव्यः, 'घण'त्ति इह शरीरस्य मध्यभागे कटिस्ततोऽन्यस्यापि मध्यभागः कटिरिव कटिरित्युच्यते, कटिस्तटमिव कटितटं घना—अन्योऽन्यशाखाप्रशाखानुप्रवेशतो निबिडा कटितटे—मध्यभागे छाया यस्य (स) घनकटितटच्छायः, मध्यभागे निबिडतरच्छाय इत्यर्थः, वाचनान्तरे 'घणकडिअकडच्छाए'ति पाठे तु कटः सञ्जातोऽस्येति कटितः कटान्तरेणोपर्यावृत इत्यर्थः कटितश्चासौ कटश्च कटितकटः, घना निबिडा कटितकटस्येवाधोभूमौ छाया यस्य स घनकटितकटच्छायः, अत एव रम्यो—रमणीयः, तथा महान् -जलभारावनतः प्रावृट्कालभावी यो मेघनिकुरम्बो—मेघसमूहस्तं भूतो—गुणैः प्राप्तो महामेघवृन्दोपम इत्यर्थः।

'ते णं पायव'त्ति यत्सम्बन्धी वनखण्डस्ते पादपाः 'मूलमन्त'इत्यादीनि दश पदानि, तत्र मूलानि प्रभूतानि दूरावगाढानि च सन्त्येषामिति मूलवन्तः, यानि कन्दस्याधः तानि मूलानि तेषामुपरिवर्त्तिनः कन्दाः स्कन्धः—स्थुडं यतो मूलशाखा प्रभवन्ति त्वक्—छल्ली शाला—शाखा प्रवालः—पल्लवाङ्कुरः, पत्रपुष्पफलबीजानि प्रसिद्धानि, सर्वत्रातिशायने क्वचिद् भूम्नि वा मतुप् प्रत्ययः, 'आनुपुव्वि'त्ति आनुपूर्व्या—मूलादिपरिपाट्या सुष्ठु जाता आनुपूर्वीसुजाताः रुचिराः—स्निग्धतया दीप्यमानच्छविमन्तः तथा वृत्तभावेन परिणता वृत्तभावपरिणताः, किमुक्तं भवति? —एवं नाम सर्वासु दिक्षु विदिक्षु च शाखादिभि प्रसृता यथा वर्त्तुलाकृतयो जाता इति, ततः पदत्रयस्य कर्मधारयः, तथा ते पादपाः प्रत्येकमेकस्कन्धाः, प्राकृते चास्य स्त्रत्वमिति एगक्खंधी इति सूत्रपाठः, अनेकाभि शाखाभि प्रशाखाभिश्च मध्यभागे विटपो—विस्तारो येषां ते तथा, तथा तिर्यग्बाहुद्वयप्रसारणप्रमाणो व्यामः अनेकैः नरव्यामैः—पुरुषव्यामैः सुप्रसारितैरग्राह्यः—अमेयो घनो—निबिडो विपुलो—विस्तीर्ण स्कन्धो येषां ते तथा –

अच्छिद्राणि पत्राणि येषां तेऽच्छिद्रपत्राः, किमुक्तं भवति ? —न तेषां पत्रेषु वातदोषतः कालदोषतो वा गड्डरिकादिरीतिरुपजायते येन तेषु छिद्राण्यभविष्यन्नित्यच्छिद्रपत्राः, अथवा एवं नामान्योऽन्यं शाखाप्रशाखानुप्रवेशात् पत्राणि पत्राणामुपरि जातानि येन मनागप्यन्तरालरूपं छिद्रं नोपलक्ष्यत इति, अच्छिद्राः कुत इत्याह—'अविरलपत्ता'इथि, अत्र हेतौ प्रथमा, ततोऽयमर्थः—यतोऽविरलपत्रा अतः अच्छिद्रपत्राः, अविरलपत्रा अपि कुत इत्याह—'अवाईण'त्ति वाती- नानि—वातोपहतानि वातेन पातितानीत्यर्थः, न वातीनानि अवातीनानि पत्राणि येषां ते तथा, किमुक्तं भवति ? —न तत्र प्रबलो वातः खरपरुषो वाति येन पत्राणि त्रुटित्वा भूमौ पतन्ति,

ततोऽवातीनपत्रत्वादविरलपत्रा इति, अच्छिद्रपत्रा इत्यत्र प्रथमव्याख्यापक्षे हेतुमाह–

'अणीइपत्ता'इति न विद्यते ईति–गड्डरिकादिरूपा येषु तान्यनीतिनि अनीतीनि पत्राणि येषां ते तथा, अयमाशयः–यानि वृक्षस्थानि उक्तस्वरूपाणि पत्राणि तानि वातेन निर्द्धूय २ भूमौ पात्यन्ते ततोऽपि च प्रायो निर्द्धूय निर्द्धूयान्यत्राणमार्यन्त इति, तथा नवेन–सद्यस्केन हरितेन–शुकपिच्छाभेन 'भिसन्त'त्ति भासमानेन स्निग्धत्वचा दीप्यमाने पत्रभारेण–दलसञ्चयेन यो जातोऽन्धकारस्तेन गम्भीरा–अलब्धमध्यभागाः सन्तो दर्शनीयाः नवहरितभासमानपत्र-भारान्धकारवगम्भीरदर्शनीयाः, तथा उपविनिर्गतैः–निरन्तरविनिर्गतैर्नवतरुणपत्रपल्लवैस्तथा कोमलैः–मनेज्ञैरुज्ज्वलैः शुद्धैश्चलद्भिः–ईषत्कम्पमानैः किशलयैः–अवस्थाविशेषोपेतैः पल्लवविशेषैस्तथा सुकुमारैः प्रवालैः–पल्लवाङ्कुरैः शोभितानि वराङ्कुराणि–वराङ्कुरोपेतानि अग्रशिखराणि येषां ते तथा, इह चाङ्कुरप्रवालयोः कालकृतावस्थाविशेषाद्विशेषो भावनीय इति

'निच्चं कुसुमिया'इत्यादिकं 'वडेंसयधरा'इत्यन्तं सूत्रं पूर्ववद् व्याख्येयं, तथा शुकबर्हिणमदनशलाकाकोकिलकोरकभृङ्गारककोण्डलकजीवंजीवक नन्दीमुखकपिलपिङ्गला-क्षककारण्डवचक्रवाककलहंससार सायानामनेकेषां शकुनिगणानां–पक्षिकुलानां मिथुनैः–स्त्रीपुंसयुग्मैर्विरचितं शब्दोन्नतिकं च -उन्नतशब्दकं मधुरस्वरं च नादितं–लपितं येषु ते तथा, अत एव सुरम्या–अतिमनोज्ञाः, अत्र शुकाः–कीराः बर्हिणा–मयूराः मदनशलाकाः–सारिकाः कोकिलचक्रवाककलहंससारसाः प्रतीताः, शेषास्तुजीवविशेषाः लोकतोऽवसेयाः, संपिंडिता–एकत्र पिण्डीभूता दृप्ता–मदोन्मत्ततया दर्पाध्माता भ्रमरमधुकरीणां पहकराः–संघाताः यत्र ते तथा, तथापरिलीयमाना–अन्यत आगत्यागत्याश्रयन्तो मत्ताः षट्पदाः कुसुमासवलोलाः–किंजल्कपानलम्पटा मधुरं गुमगुमायमाना गुञ्जन्तश्च–शब्दविशेषं विदधाना देशभागेषु येषां ते तथा, गमकत्वादेवमपि समासः, ततो भूयः पूर्वपदेन सह विशेषणसमासः, तथा अभ्यन्तराणि–अन्तर्वर्तीनि पुष्पफलानि येषां ते तथा तथा बहिः पत्रैः छन्ना–व्याप्ताः ।

तथा पत्रैश्च पुष्पैश्च छन्नपरिच्छन्ना–एकार्थिकशब्दद्वयोपादानात् अत्यन्तमाच्छादिताः, तथा नीरोगका–रोगवर्जिता वृक्षचिकित्साशास्त्रेषु येषां प्रतिक्रिया तैः रोगैः स्वत एव विरहिता इत्यर्थः, तथाऽकण्टकाः न तेषु मध्ये बदर्यादयः सन्तीतिभावः, तथा स्वादूनि फलानि येषां ते स्वादुफलाः, स्निग्धफला इत्यपि क्वचि, नानाविधैर्गुच्छैः–वृन्ताकीप्रभृतिर्गुल्मैः–नवमालिकादि-भिर्मण्डपकैः–द्राक्षामण्डपकैः शोभिताः उक्तरूपैर्गुच्छादिभिस्तं संश्रिता इत्यर्थः, तथा विचित्रान् शुभान्केतून्–ध्वजान्प्राप्ताः 'विचित्तसुहकेउबहुला' इतिपाठान्तरं, तत्र विचित्रैः शुभैः मङ्गलभूतैः केतुभिर्ध्वजैर्बहुला–व्याप्ताः, तथा वाप्यश्चतुरस्रका- रास्ता एव वृत्ताः–पुष्करिण्यः दीर्घिका–ऋजु-सारिण्यः, तासु सुष्ठु निवेशितानि रम्याणि जालगृह- काणि यत्र ते तथा, अयमर्थः–यत्र ते वृक्षा आसन् तत्र वाप्यादिषु गवाक्षवन्ति गृहाणि व्यन्तरमिथुनानां जलकेलिकृते बहूनि सन्तीति ।

पिंडिमनिर्हारिमा–पुद्गलसमूहरूपां दूरदेशगामिनीं च सुगन्धि–सद्गन्धिकां शुभसुरभिभ्यो गन्धान्तरेभ्यः सकाशान्मनोहरा या सा तथा तां च महता–मोचनप्रकारेण प्राकृतत्वाद्वा द्वितीयार्थे तृतीया महतीमित्यर्थः गन्धघ्राणिं–यावद्भिर्गन्धपुद्गलैर्घ्राणेन्द्रियस्य तृप्तिरुपजायते तावती

पुद्गलसंहतिरुपचाराद् गन्धघ्राणिरित्युच्यते तां निरन्तरं मुञ्चन्त इत्यर्थः, तथा शुभाः–प्रधानाः सेतवो–मार्गा आल[illegible]वो वा केतवो–[illegible] येषां ते तथा, रथाः–क्रीडारथादयः यानानि–उक्तवक्ष्यमाणातिरिक्तानि शकटादीनि–वाहनानि युग्यानि–गोल्लविषय-प्रसिद्धानि द्विहस्तप्रमाणानि चतुरस्रवेदिकायुतानि जम्पानानि शिबिकाः–कूटाकारेणाच्छादिताः जम्पानविशेषाः स्यन्दमानिकाः–पुरुषप्रमाणजम्पानविशेषाः, अनेकेषां रथादीनामधोऽतिविस्तीर्ण-त्वात् प्रविमोचनं येषु ते तथा, 'पासादीया' प्राग्वत् । अथ वनखण्डस्य भूमिभागवर्णनमाह–

*मू. (६) तस्स णं वनसंडस्स अंतो बहुसमरमणिज्जे भूमिभागे पन्नत्ते से जहानामए आलिंगपुक्खरेइ वा जाव नानाविहपंचवण्णेहिं मणीहिं तणेहिं उवसोभिए, तंजहा–*

*किण्हेहिं एवं वण्णे गंधो रसो फासो सद्दो पुक्खरिणीओ पव्वयगा घरगा मंडवगा पुढवि-सिलावट्टया गोयमा ! णेयव्वा, तत्थ णं बहवे वाणमंतरा देवा य देवीओ य आसयंति सयंति पुरापोराणाणं सुपरक्कंताणं सुभाणं कल्लाणाणं कडाणं कम्माणं कल्लाणफलवित्तिविसेसं पच्चणुभवमाणा विहरंति । तीसे णं जगईए उप्पिं अंतो पउमवरवेइआए एत्थ णं एगे महं वनसंडे पन्नत्ते, देसूणाइं दो जोअणाइं विक्खंभेणं वेदिआसमएण परिक्खेवेणं किण्हे जाव तणविहूणे नेअव्वो ।*

वृ. तस्य णमिति पूर्ववत् वनखण्डस्यान्तः–मध्ये बहु–अत्यन्तं समो बहुसमः स चासौ रमणीयश्च स तथा, भूमिभागः प्रज्ञप्तः, कीदृश इत्याह–'से' इति तत् सकललोकप्रसिद्धं 'यथे'ति दृष्टान्तोपदर्शने 'नामे'ति शिष्यामन्त्रणे 'ए' इति वाक्यालङ्कारे, आलिङ्गो–मरजो वाद्यविशेषस्तस्य पुष्करं–चर्म्मपुटकं तत्किलात्यन्तसममिति तेनोपमा क्रियते, इतिशब्दाः सर्वेऽपि स्वस्वोप-माभूतवस्तुसमाप्तिद्योतकाः, वाशब्दाः समुच्चये, यावच्छब्देन बहुसमत्ववर्णको मणिलक्षणवर्णकश्च ग्राह्य इति, स चायं 'मुइंगपुक्खरेइ वा सरतलेइ वा करतलेइ वा चंदमंडलेइ वा सूरमंडलेइ वा आयंसमंडलेइ वा उरब्भचम्मेइ वा वसहचम्मेइ वा वराहचम्मेइ वा सीहचम्मेइ वा वग्घचम्मेइ वा छगलचम्मेइ वा दीवियचम्मेइ वा अनेगसंकुकीलगसहस्सवितते आवत्तपच्चावत्तसेढिपसेढिसोत्थिय-सोवत्थियपूसमाण वद्धमाणगमच्छंडकमगरंडकजारमारफुल्लावलिपउमपत्तसागरतरंगवासंती पमलयभत्तिचित्तेहिं सच्छाएहिं सप्पभेहिं समिरीइएहिं सउज्जोएहिं' इति ।

अत्र व्याख्या–मृदङ्गो लोकप्रतीतो मर्दलस्तस्य पुष्करं मृदङ्गपुष्करं तथा परिपूर्णं–पानीयेन भृतं तडागं–सरस्तस्य तलं–उपरितनो भागः सरस्तलं, अत्र 'व्याख्यातो विशेषप्रतिपत्ति'रिति निर्वातं जलपूर्णं सरो ग्राह्यं, अन्यथा वातोद्धूयमानतयोच्चावचजलत्वेन विवक्षितः समभावो न स्यादित्यर्थः, करतलं प्रतीतं, चन्द्रमण्डलं सूर्यमण्डलं च यद्यपि वस्तुगत्या उत्तानीकृतार्धकपित्थाकार-पीठप्रासादापेक्षया वृत्तालेखमिति तद्गतो दृश्यमानो भागो न समतलस्तथापि प्रतिभासते समतल इति तदुपादानं, आदर्शमण्डलं सुप्रसिद्धं 'उरब्भचम्मेइ वा' इत्यादि, अत्र सर्वत्रापि 'अनेग-संकुकीलगसहस्सवितते' इति पदं योजनीयं, उरभ्र–ऊरणः वृषभवराहसिंहव्याघ्रछगलाः प्रतीताः द्वीपी–चित्रकः, एतेषां प्रत्येकं चर्म्म अनेकैः शङ्कुप्रमाणैः कीलकसहस्रैर्यतो महद्भिः कीलकैस्ताडितं प्रायो मध्ये क्षामं भवति न समतलं तथारूपताडासम्भवात् अतः शङ्कुग्रहणं विततं–विततीकृतं ताडितमिति भावः, यथाऽत्यन्तं बहुसमं भवति तथा तस्यापि वनखण्डस्यान्तर्बहुसमो भूमिभागः । पुनः कथंभूत इत्याह–'नानाविहपंचवण्णेहिं मणीहिं तणेहिं उवसोभिए' इति योगः,

नानाविधा–जातिभेदान्नानाप्रकारा ये पञ्चवर्णा मणयस्तृणानि च तैरुपशोभितः, कथंभूतै-र्मणिभिरित्याह–आवर्त्तादीनि–मणीनां लक्षणानि, तत्र आवर्त्तः प्रतीतः एकस्यावर्त्तस्य प्रत्यभिमुखः आवर्त्तः प्रत्यावर्त्तः श्रेणि तथाविधबिन्दुजातदेः पङ्क्ति तस्याश्च श्रेणेर्या विनिर्गताऽन्या स्त्रीणि सा प्रश्रेणि स्वस्तिकः–प्रतीतः, सौवस्तिकपुष्पमाणवौ च लक्षणविशेषौ लोकात् प्रत्येतव्यौ, वर्द्धमानकं– शरावसंपुटं मत्स्याण्डकमकराण्डके जलचरविशेषाण्डके प्रसिद्धे, 'जारमारे'ति लक्षणविशेषौ सम्यग्मणिलक्षणवेदिनो लोकाद्वेदितव्यौ, पुष्पावलिपद्मपत्रसागरतरङ्गवासन्तीलता-पद्मलताः प्रतीताः, तासां भक्त्या–विच्छित्या चित्रं–आलेखो येषु ते तथा, किमुक्तं भवति ?–आवर्त्तादिलक्षणोपेतैः तथा सती–शोभना छाया–शोभा येषां ते तथा तैः ।

'सप्पभेहिं' इत्यादि विशेषणत्रयं प्राग्वत्, एवंभूतैः नानाविधैः पञ्चवर्णैः मणिभिस्तृणै-श्चोपशोभितः, तद्यथेत्युपदर्शने, कृष्णैः–कृष्णवर्णोपेतैः एवं 'वण्णओ'त्ति 'एवं' अमुना प्रकारेण शेषोऽपि नीलादिको वर्णो मणितृणविशेषणतया योजनीयो यथा नीलवर्णैर्लोहितवर्णै हारिद्रवर्णै शुक्लवर्णैश्चेति, तथा तेषां मणितृणानां गन्धः स्पर्शः शब्दश्च नेतव्यः, तथा तस्य वनखण्डस्य भूमिभागे पुष्करिण्यः पर्वतका गृहकाणि मण्डपकाः पृथिवीशिलापट्टकाश्च नेतव्याः–बुद्धिपथं प्रापणीयाः, भवन्ति हि सूत्रकाराणां गतेर्थैरित्यादीदृशानि लाघवार्थकानि एवं जाव तहेव इच्चाइ वण्णओ सेसं जहा' इत्याद्यनेकप्रकारकपदाभिव्यङ्ग्यानि अतिदेशरूपाणि सूत्राणि, यदाह–

॥ १ ॥ ''कत्थइ देसग्गहणं कत्थइ भण्णंति निरवसेसाइं ।
उक्कमकमजुत्ताइं कारणवसओ निरुत्ताइं ॥'' इति ।

अत्रैतत्सूत्राभिप्रायाभिव्यक्तये जीवाभिगमादिग्रन्थोक्तः कियान् पाठो लिख्यते, 'तत्थ णं जे ते किण्हा मणी तणा य तेसिं णं अयमेयारूवे वण्णावासे पन्नत्ते, तं०–से जहानामए जीमूतेइ वा अंजणेइ वा खंजणेइ वा कज्जलेइ वा मसीइ वा मसीगुलियाइ वा गवलेइ वा गवलगुलियाइ वा भमरेइ वा भमरावलीइ वा भमरपत्तसारेइ वा जंबूफलेइ वा अद्दारिट्ठेइ वा परपुट्ठेइ वा गएइ वा गयकलभेइ वा किण्हसप्पेइ वा किण्हकेसरेइ वा आगासथिग्गलेइ वा किण्हासोएइ वा किण्हकणवीरेइ वा किण्हबंधुजीवेइ वा, भवे एयारूवे ?, गो० नो इणट्ठे समट्ठे, ते णं कण्हामणी तणा य इत्तो इट्ठतरिया चेव कंततराए चेव मणुण्णतराए चेव मणामतराए चेव वण्णेणं प०

'तत्थ ण'मित्यादि, तत्र–तेषां पञ्चवर्णानां मणीनां तृणानां च मध्ये णमिति प्राग्वत्, ये ते कृष्णा मणयस्तृणानि च, ये इत्येव सिद्धे ये ते इति वचनं भाषाक्रमार्थं, 'तेसिं णमित्यादि से जहा-णामए' इत्यन्तं च सूत्रं पूर्ववत्, जीमूतो–मेघः, स चेह प्रावृट्प्रारम्भसमये जलपूर्णो वेदितव्यः, तस्यैव प्रायोऽतिकालिमसम्भवात्, इतिशब्द उपमाभूतवस्तुनामपरिसमाप्तिद्योतकः वाशब्द उपमानान्तरापेक्षया समुच्चये, एवं सर्वत्र इतिवाशब्दौ द्रष्टव्यौ, अञ्जनं–सौवीराञ्जनं रत्नविशेषो वा खञ्जनं–दीपमल्लिकामलः स्नेहाभ्यक्तशकटाक्षघर्षणोद्भवमित्यपरे कज्जलं–दीपशिखापतितं मषी–तदेव कज्जलं ताम्रभाजनादिषु सामग्रीविशेषेण घोलितं मषीगुलिका–घोलितकज्जलगुटिका गवलं–माहिषु शृङ्गं तदपि चापसारितोपरितनत्वग्भागं ग्राह्यं, तत्रैव विशिष्टस्य कालिम्नः सम्भवात्

तथा तस्यैव माहिषशृङ्गस्य निबिडतरसारनिर्वर्तिता गुटिका गवलगुटिका भ्रमरः–प्रतीतः भ्रमरावली–भ्रमरपङ्क्ति तथा भ्रमपत्रसारः–भ्रमरस्य पत्रं–पक्षस्तस्य सारः–तदन्तर्गतो

विशिष्टश्यामतोपचितः प्रदेशः जम्बूफलं–प्रतीतं आर्द्रारिष्ठः–कोमलकाकः परपुष्टः–कोकिलः गजो गजकलभश्च प्रसिद्ध कृष्णसर्प–कृष्णवर्ण सर्पजातिविशेषः कृष्णकेसरः–कृष्णबकुलः 'आकाशथिग्गलं' शरदि मेघमुक्तमाकाशखण्डं, तद्धि कृष्णमतीव प्रतिभातीति तदुपादानं, कृष्णाशोककृष्णकणवीरकृष्णबन्धु जीवाः अशोककणवीरबन्धुजीववृक्षभेदाः, अशोकादयो हि पञ्चवर्णा भवन्ति ततः शेषव्युदासार्थं कृष्णग्रहणं, एतावत्युक्ते भगवन्तं गौतमः पृच्छति–'भवे एयारूवे' इति भवेत् मणीनां तृणानां च कृष्णो वर्ण एतद्रूपो–जीमूतादिरूपः, काकुपाठाच्चास्य प्रश्नसूत्रता वेदितव्या, भगवानाह–गौतम! नायमर्थ समर्थः–नायमर्थ उपपन्नो, यदुत–एवंभूतः कृष्णो वर्णो मणीनां तृणानां च, किन्तु ते किन्तु ते कृष्णा मणयस्तृणानि च इतो–जीमूतादेः सकाशादिष्टतरका एव –कृष्णेन वर्णेन ईप्सिततरका एव, तत्र किञ्चिदकान्तमपि केषाञ्चिदिष्टतरं भवति ततोऽकान्ततात्व- वच्छित्यर्थमाह–कान्ततरका एव–अतिस्निग्धमनोहारिकालिमोपचिततया जीमूतादेः कमनीयतरका एव, अत एव मनोज्ञतरका–मनसा ज्ञायन्ते अनुकूलतया स्वप्रवृत्तिविषयीक्रियन्ते इति मनोज्ञा– मनोऽनुकूलाः ततः प्रकर्षविवक्षायां तपप्रत्ययः, तत्र मनोज्ञमपि किञ्चिन्मध्यमं भवति ततः सर्वोत्कर्षप्रतिपादनार्थमाह–मनआपतरका एव–द्रष्टृणां मनांसि आप्नुवन्ति–आत्मवशतां नयन्तीति मनआपाः ततः प्रकर्षविवक्षायां तरपप्रत्ययः, प्राकृतत्वात् पकारस्य मकारे मणामतरा इति भवति, अथवा कोऽपि शब्दः कस्यापि प्रसिद्धो भवतीति नानादेशजविनेयानुग्रहार्थं एकार्थिका एवैते शब्दा इति।

'तत्थ णं जे ते नीलगा मणी तणा य तेसि णं अयमेयारूवे वण्णावासे पन्नत्ते तंजहा–से जहा नामए भिंगेइ वा भिंगपत्तेइ वा चासेइ वा चासपिच्छेइ वा सुएइ वा सुअपिच्छेइ वा नीलीइ वा नीलीभेएइ वा नीलीगुलियाइ वा सामाएइ वा उच्चंतएइ वा वनराईइ वा हलधरवसणेइ वा मोरग्गीवाइ वा पारेवयगी वाइ वा अयसिकुसुमेइ वा बाणकुसुमेइ वा अंजणकेसियाकुसुमेइ वा नीलुप्पलेइ वा नीलासोएइ वा नीलकणवीरेइ वा नीलबंधुजीवेइ वा, भवे एयारूवे!, गोअमा ! नो इणट्ठे समट्ठे ते णं नीला मणी तणा य इत्तो इट्ठतरया चेव कंततरया चेव मणुण्णतरया चेव मणामतरया चेव वण्णेणं पन्नत्ते'ति, पदयोजना प्राग्वत्, भृङ्गः–कीटविशेषः पक्ष्मलः भृङ्गपत्रं– तस्यैव कीटविशेषस्य पक्ष्मशुकः–कीरः शुकपिच्छं–शुकस्य पत्रं प्रसिद्धं चापः–पक्षिविशेषः चाषपिच्छं–तस्यैव पिच्छं नीली–प्रसिद्धा नीलीभेदो–नीलीच्छेदः नीलीगुलिका–नीलीगुटिका श्यामाको–धान्यविशेषः, प्रज्ञापनायां तु 'सामा'इति पाठः, तत्र श्यामा–प्रियङ्गु, उच्चंतगो–दन्तरागः वनराजीप्रतीता, हलधरो–बलभद्रः तस्य वसनं, तद्य किल नीलं भवति, सर्वदैव बलो गौरशरीरत्वाच्छोभाकारीति नीलमेव वस्त्र परिधत्ते, मयूरग्रीवापारापतग्रीवाअलसीकुसुमबाणकुसुमानि प्रतीतानि, अञ्जनकेशिका–वनस्पतिविशेषः तस्याः कुसुमं नीलोत्पलं–कुवलयं नीलाशोकनीलकणवीरनीलबन्धुजीवाअशोकादिवृक्षविशेषाः, 'भवे एयारूवे' इत्यादि प्राग्वत् व्याख्येयं।

'तत्थ णं जे ते लोहिअगा मणी तणा य तेसि णं अयमेयारूवे वण्णावासे पन्नत्ते तं०–से जहानामए ससगरुहिरेइ वा उरब्भरुहिरेइ वा वराहरुहिरेइ वा मणुस्सरुहिरेइ वा महिसरुहिरेइ वा बालिंदगोवेइ वा बालदिवायरेइ वा संझब्भरागेइ वा गुंजद्धरागेइ वा जायहिंगुलएइ वा सिलप्पवालेइवा पवालंकुरेइ वा लोहिअक्खमणीइ वा लक्खारसेइ वा किमिरागकंबलेइ वा

चीणपिट्ठरासीइ वा जासुअणकुसुमेइ वा किंसुअकुसुमेइ वा पालियायकुसुमेइ वा रत्तुप्पलेइ वा रत्तासोएइ वा रत्तकणवीरेइ वा रत्तबंधुजीवेइ वा, भवे एयारूवे ?, गोअमा ! नो इणट्ठे समट्ठे, ते णं लोहिअगा मणी तणा य एत्तो इट्ठतरया चेव कंततरया चेव मणुन्नतरया चेव मणामतरया चेव वण्णेणं पन्नत्ते'ति, शसरुधिरं–प्रतीतं, उरभ्रः–ऊरणस्तस्य रुधिरं वराहः–शूकरः तस्य रुधिरं मनुष्यरुधिरं महिषरुधिरं च प्रतीतं, एतानि हि शेषरुधिरेभ्यो लोहितवर्णोत्कटानि भवन्ति तेनैषामुपादानं, बालेन्द्रगोपकः–सद्योजात इन्द्रगोपकः, स हि वृद्ध– सन् ईषतपाण्डुरक्तो भवति ततो बालग्रहणं, इन्द्रगोपकः–प्रावृटकालभावी कीटविशेषः बालदिवाकरः–प्रथममुदगच्छन् सूर्य, स हि उदये रक्तो भवतीति बालपदोपादानं, सन्ध्याभ्ररागो–वर्षासु सन्ध्यासमयभावी अभ्ररागः गुञ्जा–रक्तिका तस्याः अर्द्ध तस्य रागः गुञ्जार्द्धरागः, गुञ्जाया हि अर्द्धमतिरक्तं भवति अर्द्धमतिकृष्णं अतो गुञ्जार्द्धग्रहणं, जात्यहिङ्गुलको व्यक्तः, शिलाप्रवालं–प्रवालनामा रत्नविशेषः प्रवालाङ्कुरः–तस्यैवाङ्कुरः, स हि प्रथमोद्गतत्वेनात्यन्तरक्तो भवत्यतस्तदुपादानं, लोहिताक्षमणिर्नाम रत्नविशेषः लाक्षारसः–प्रसिद्धः कृमिरागेण रक्तः रम्बलः कृमिरागकम्बलः चीनपिष्टं–सिन्दूरं तस्य राशि, जपाकुसुमकिंशुककुसुमपारिजातकुसुमरक्तोत्पलरक्ताशोकरक्तकणवीर-रक्तबन्धुजीवाः प्रतीताः, 'भवे एयारूवे' इत्यादि प्राग्वत् ।

''तत्थ णं जे ते हालिद्दा मणी तणा य तेसि णं अयमेयारूवे वण्णावासे प०–से जहानामए चंपगेइ वा चंपगच्छल्लीइ वा चंपगच्छेएइ वा हालिद्दाइ वा हालिद्दामेएइ वा हालिद्दागुलि- याइ वा हलियालियाइ वा हरियालियागुलियाइ वा चिउरेइ वा चिउरंगरागेइ वा वरकणगेइ वा वरकणगनिघसेइ वा वरपुरिसवसणेइ वा अल्लईकुसुमेइ वा चंपगकुसुमेइ वा कोहंडियाकु० कोरंटमल्लदामेइ वा तडउडाकु० वा घोसाडियाकु० वा सुवण्णजूहिया० वा सुहिरण्णियाकु० वा बीअगकु० वा पीयासोएइ वा पीकणवीरेइ वा पीअबंधुजीवेइ वा, भवे एआरूवे ?, गो० ! नो इणट्ठे समट्ठे, ते णं हालिद्दा मणी तणा य एत्तो इट्ठतरा चेव जाव वण्णेणं प० ।

'तत्रे'त्यादि पदयोजना प्राग्वत्, चम्पकः–सामान्यतः सुवर्णचम्पको वृक्षः, चम्पकच्छल्ली–सुवर्णचंपकत्वत् चम्पकभेदः–सुवर्णचम्पकच्छेदः हरिद्रा व्यक्ता, हरिद्राभेदो–हरिद्राच्छेदः हरिद्रा-गुलिका–हरिद्रासारनिर्वर्त्तिता गुटिका हरितालिका–पृथिवीविकाररूपा प्रतीता हरितालिकाभेदो–हरितालिकाच्छेदः हरितालिकागुलिका –हरितालिकासारनिर्वर्त्तिता गुटिका चिकुरो–रागद्रव्य-विशेषः, चिकुराङ्गरागः–चिकुरसंयोगनिमित्तो वस्त्रादौ रागः, वरं–प्रधानं यत् कनकं पीतसुवर्णमि-त्यर्थ वरकनकं तस्य निघर्ष निकषो वा–कषपट्टके रेखारूपः वरपुरुषो–वासुदेवस्तस्य वसनं–वस्त्र, तद्धि किल पीतमेव भवतीति तदुपादानं, अल्कीकुसुमं लोकतोऽवसेयं, चम्पककुसुमं सुवर्ण-चम्पककुसुमं कूष्माण्डिकाकुसुमं–पुंस्फलीपुष्पं, कोरण्टकमाल्यदाम–कोरण्टकः पुष्पजातिविशेषः स च कण्टासेलिआख्यः सम्भाव्यते तस्य मालायै हितानीति कृत्वा माल्यानि–पुष्पाणि तेषां दाम–माला, समुदाये हि वर्णोत्कटयं भवतीति दामग्रहणं, तडवडा –आउली तस्याः कुसुमं तडव-डाकुसुमं, तथा घोषातकीकुसुमं सुवर्णयूथिकाकुसुमं च प्रतीतं, सुहिरण्यिका –वनस्पतिविशेषः, बीअको वृक्षविशेषः प्रतीतस्तस्य कुसुमं, पीताशोकादयो व्यक्ताः, शेषं पूर्ववत् ।

''तत्थ णं जे ते सुक्किल्ला मणी य तणा य तेसि णं अयमेयारूवे वण्णावासे पन्नत्ते, तंजहा–से

जहानामए अंकेइ वा खीरेइ वा खीरपूरेइ वा कोंचावलीइ वा हारावलीइ वा बलायावलीइ वा साइअबलाहएइ वा धं,धोअरुप्पपट्टेइ वा सालिपिट्ठरासीइ वा कुंदपुप्फरासीइ वा कुमुअरासीइ वा सुक्कछिवाडिआइ वा पेहुणमिंजिआइ वा भिसेइ वा मुणालेइ वा गयदंतेइ वा लवंगदलेइ वा पोंडरीयदलेइ वा सिंदुवारमल्लदामेइ वा सेआसोएइ वा सेअकणवीरेइ वा सेअबंधुजीवेइ वा, भवे एयारूवे ?, गो० ! नो इणट्ठे समट्ठे, तेणं सुक्किल्ला मणी तणा य इत्तो इट्ठतरा चेव जाव वण्णेणं प०"

"तत्थ णमित्यादिपदयोजना प्राग्वत्, अङ्कः–रत्नविशेषः शङ्खचन्द्रौ प्रसिद्धौ कुन्दं–पुष्पविशेषः दकं–गङ्गाजलादि दकरजः–उदककणास्ते ह्यतिशुभ्रा भवन्तीत्युपात्ताः, दधिधनो–दधिपिण्डः क्षीरं–प्रतीतं, क्षीरपूरं कथ्यमानामतितापादूर्ध्वं गच्छत् क्षीरं क्रौञ्चावलिहारावलिहंसावलिबलाकावलयः प्रकटार्थाः, आवलिपदोपादानं वर्णोत्कटयप्रतिपादनार्थं, चन्द्रावली–तटागादिषु जलमध्ये प्रतिबिम्बिता चन्द्रपङ्क्तिः, शारदिकबलाहकः–शरत्कालभावी मेघः ध्मातधौतरूप्यपटः–ध्मातः–अग्निसम्पर्कतोऽतिनिर्मलीकृतो धौतो–भूतिखर्टितहस्तसम्मार्जनेनातितेजितो रूप्यमयपट्टः, अन्ये तु व्याचक्षते–ध्मातेन–अग्निसंयोगेन धौतः–शोधितो रूप्यपट्टः, शालिपिष्टं–शालिचूर्णं तस्य राशि–शुक्ला भत्यतस्तद्राशि कुमुदराशिश्च स्पष्टः, छेवाडीनाम–वल्लादिफलिका सा च क्वचिद्देशविशेषे शुष्का सती अतीव शुभ्रः कुन्दपुष्पदुपादानं, "पेहुणमिंजिका पेहुणं–मयूरपिच्छं तन्मध्यवर्तिनी मिंजा सा चातिशुक्लेति तदुपन्यासः, शेषं प्राग्वत्, 'भवे एयारूवेइत्यादि भावितार्थं, तदेवमुक्तं वर्णस्वरूपं, सम्प्रति गन्धस्वरूपप्रतिपादनार्थमाह– "तेसि णं भंते मणीणं तणाण य केरिसए गंधे प० से जहा० कोट्ठपुडाण वा तगरपुडाण वा एलापुडाण वा चोअपुडाण वा चंपगपुडाण वा दमणगपुडाण वा कुंकुमपुडाण वा चदनपुडाण वा ओसीपुडाण वा मरुअगपुडाण वा जाइपुडाण वा जूहिआपुडाण वा मल्लिआपुडाण वा ण्हाणमल्लिआ- पुडाण वा केअइपुडाण वा पाडलपुडाण वा णोमालियापुडाण वा अगरुगपुडाण वा लवंगपुडाण वा वासपुडाण वा कप्पूरपुडाण वा अणुवायंसि उब्भिज्जमाणाण वा णिब्भिज्जमाणाण वा कुट्टिज्जमाणाण वा रुंचिज्जमाणाण वा उक्किरिज्जमाणाण वा परिभुंजमाणाण वा भंडाओ भंडं साहरिज्जमाणाणं उराला मणुण्णा मणोहरा घाणमणनिव्वुइकरा सव्वओ समंता गंधा अभिणिस्सवंति, भवे एयारूवे गोअमा ! नो इणट्ठे समट्ठे ।

तेसि णं मणीण य तणाण य इत्तो इट्ठतरए चेव जाव मणामतरए चेव गंधे पन्नत्ते" तेषां जगतीपद्मवरवेदिकावनखण्डस्थानां भदन्त ! मणीनां तृणानां च कीदृशो गन्धः प्रज्ञप्तः ?, भ०–गौ० ! प्राकृतत्वात् से इति बहुवचनार्थ, ते यथा नाम 'ए' इति वाक्यालङ्कारे गन्धा अभिनिश्रवन्तीति सम्बन्धः, कोष्ठं–गन्धद्रव्यं तस्य पुटाः कोष्ठपुटाः तेषां वाशब्दः सर्वत्र समुच्चयार्थः, इह एकस्य पुटस्य प्रायो न तादृशो गन्धः प्रसरति गन्धद्रव्य- स्याल्पत्वात् ततो बहुवचनं, तगरमपि गन्धद्रव्यं एलाः–प्रतीताः चोअं–गन्धद्रव्यं चम्पकदमनक- कुङ्कुमचन्द नोशीरमरुवकजातीयूथिका-ल्लिकास्नानमल्लिकाकेतकीपाटलानवमालिकाअकगुरुल- वङ्गवासकर्पूराणि नवरमुशीरं–वीरणं मूलं, अत्र क्वचित् 'हिरिबेरपुडाण वा' इति, तत्र, हीरिबेरपुटानां–वालपुटानां स्नानमल्लिका–स्नानयोग्यो मल्लिकाविशेषः एतेषामनुवाते– आघ्रायकविवक्षितपुरुषाणामनुकूलवाते वाति सति उद्भिद्यमानानां–उद्घाट्यमानानां निर्भिद्यमानानां–नितरां–अतिशयेन भिद्यमानानां ।

'कोट्टिज्जमाणाण वा' इति इह पुटैः परिमितानि यानि कोष्ठादिगन्धद्रव्याणि तान्यपि परिमेये

परिमाणोपचारात्, कोष्ठपुटादीनीत्युच्यन्ते तेषां कुट्टयमानानां—उदूखलादिषु कुट्टयमानानां रुचिऊमाणाण वा इति—श्लक्ष्णखण्डीक्रियमाणानां, एतच्च विशेषणद्वयं कोष्ठादिद्रव्याणामवसेयं, तेषां प्रायः कुट्टनश्लक्ष्णखण्डीकरणसम्भवात्, न तु यूथिकादीनां, तथा उत्कीर्यमाणानां—क्षुरिकादिभि कोष्ठादिपुटानां कोष्ठादिद्रव्याणां वा उद्भिद्यमानानां, तथा विकीर्यमाणानां—इतस्ततो विप्रकीर्यमाणानां परिभुज्यमानानां—परिभोगायोपयुज्यमानानां कचित् 'परिभाएज्जमाणाण वा' इति पाठ—, तत्र परिभाज्यमानानां—पार्श्ववर्त्तिभ्यो मनाक् मनाक् दीयमानानां, तथ भाण्डात्—स्थानादेकस्मादन्यद्भाण्डं—भाजनान्तरं संह्रियमाणानां, उदाराः—स्फारास्ते चामनोज्ञा अपि भवन्त्यत आह—मनोज्ञा—मनोऽनुकूलाः तच्च मनोज्ञत्वं कुत इत्याह—मनोहरा—मनो हरन्ति—आत्मवशतां नयन्तीति मनोहराः यतस्ततो मनोज्ञाः, तदपि मनोहरत्वं कुत इत्याह—घ्राणमनोनिर्वृतिकराः—नासासचिवचेतः सुखोत्पादकाः, एवम्भूताः सर्वतः—दिक्षु समन्ततः—सामस्त्येन गन्धा अभिनिःस्रवन्ति—जिघ्रतामभिमुखं निस्सरन्ति, एवमुक्ते शिष्यः पृच्छति—भवेदेतद्रूपः ?, भगवानाह—गौतम ! नायमर्थ समर्थः, तेषां मणीनां तृणानां च इत इष्टतरकश्चैव यावन्मनआपतरकश्चैव गन्धः प्रज्ञप्त इति ।

'तेसि णं भंते ! मणीणं तणाण य केरिसए फासे पन्नत्ते, से जहानामए आइणगेइ वा रूएइ वा बूरेइ वा नवनीएइ वा हंसगब्भतूलीइ वा सिरीसकुसुमनिचएइ वा बालकुमुदपत्तरासीइ वा, भवे एयारूवे ?, गोअमा ! नो इणट्ठे समट्ठे, तेसि णं मणीणं तणाण य इत्तो इट्ठतरए चेव जाव फासे णं पन्नत्ते' तेषां भदन्त ! मणीनां तृणानां च कीदृशः स्पर्शः प्रज्ञप्तः ?, भगवानाह—गौतम ! 'से जहानामए' इत्यादि, तद्यथा—अजिनकं—चर्म्ममयं वस्त्रं रूतं—कर्प्पासपक्ष्म बूरो—वनस्पतिविशेषः, नवनीतं—म्रक्षणं, हंसगर्भतूली शिरीषकुसुमनिचयश्च प्रकटः, बालानि—अचिरकालजातानि यानि कुमदपत्राणि तेषां राशि, कचिद्बालकुसुमपत्रराशिरिति पाठः ।

'भवे एयारूवे' इत्यादि पूर्ववत् । 'तेसि णं भंते ! मणीणं तणाण य पुव्वावरदाहिणुत्तरागएहिं वाएहिं मंदायं मंदायं एइयाणं वेइयाणं कंपियाणं चालियाणं फंदियाणं घट्टियाणं खोभिआणं उदीरियाणं केरिसए सद्दे पन्नत्ते गो० ! से जहानामए, सिबिआए वा संदमाणिआए वा रहस्स वा सच्छत्तस्स सज्झयस्स सघंटायस्स सपडायस्स सतोरणवरस्स सनंदिघोसस्स सखिंखिणीहेमजालपेरंतपरिक्खित्तस्स हेमवयचित्ततिणिसकणगणिज्जुत्तदारुआगस्स सुपिणद्धारगमंडलधुरागस्स कालायससुकयणेमिजंतकम्मस्स आइण्णवरतुरगसुसंपउत्तस्स कुसलनरछेअसारहिसुसंपग्गहियस्स सरसयबत्तीसतोणपरिमंडियस्स सकंकडवयंसगस्स सचावसरपहरणावरणभरिअजोहजुज्झसज्जस्स रायंगणंसि वा अंतेउरंसि वा रम्मंसि वा मणिकुट्टिमतलंसि अभिघट्टिज्जमाणस्स जे उराला मणुण्णा कण्णमणनिव्वुइकरा सद्दा सव्वओ समंता अभिनिस्सरंति, भवे एयारूवे सिआ ?, नो इणट्ठे समट्ठे' अत्र व्याख्या—

तेषां मणीनां तृणानां च भदन्त ! पूर्वापरदक्षिणोत्तरागतैर्वातैर्मन्दं मन्दमेजितानां—कम्पितानां तथा व्यंजितानां—विशेषतः कम्पितानां, एतदेव पर्यायशब्देन व्याचष्टे—कम्पितानामिति, तथा चालितानां—इतस्ततो विक्षिप्तानां, एतदेव पर्यायेणाह—स्पन्दितानामिति तथा घट्टितानां—परस्परं घर्षयुक्तानां, कथं घट्टिता इत्याह—क्षोभितानां—स्वस्थानाच्चालितानां, स्वस्थानाच्चालनमपि कुत इत्याह—उदीरितानां—उत्—प्राबल्येनेरितानां—प्रेरितानां, कीदृशः शब्दः प्रज्ञप्तः ?, भगवानाह—

गौतम ! स यथानामकः शिबिकाया वा स्यन्दमानिकाया वा रथस्य वा, तत्र शिबिका-जम्पान विशेषरूपा उपरिच्छादिता कोष्ठाकारा, तथा दीर्घो जम्पानविशेष पुरुषस्य स्वप्रमाणावकाशदायी स्यन्दमानिका, अनयोश्च शब्दः पुरुषोत्पाटितयोः क्षुद्रहेमघण्टिकादिचलनवशतो वेदितव्यः, रथश्चेह रणरथः प्रत्येतव्यः न क्रीडारथः, तस्याग्रेतनविशेषणानामसम्भवात्, तस्य च फलकवेदिका यस्मिन् काले ये पुरुषास्तदपेक्षया कटिप्रमाणावसेया, तस्य च रथस्य विशेषणान्यभिधत्ते-सच्छत्रस्य सध्वजस्य सघण्टाकस्य-उभयपार्श्वावलम्बिमहाप्रमाणघण्टोपेतस्य सपताकस्य-सलघुध्वजस्य, सतोरणवरस्य-प्रधानतोरणोपेतस्य सनन्दिघोषस्य-द्वादशविधतूर्यनिनादोपेतस्य, द्वादश तूर्याणि च।

॥ १ ॥ "भंभा १ मकुन्द २ मद्दल ३ कडंब ४ झल्लरि ५ हुडुक्क ६ कंसाला ७ ।
काहल ८ तलिमा ९ वंसो १० संखो ११ पणवो १२ अ बारसमो ॥"

तथा 'सकिङ्किणीकहेमजालपर्यन्तपरिक्षिप्तस्य' सह किङ्किणीभि-क्षुद्रघण्टाभिर्वर्त्तन्त इति सकिङ्किणीकानि यानि हेमजालानि-हेममयदामसमूहास्तैः पर्यन्तेषु-बहिःप्रदेशेषु परिक्षिप्तो-व्याप्तः तस्य, तथा हैमवतं-हिमवत्पर्वतभावि चित्रं-विचित्रं मनोहारि तैनिशं-तिनिशद्रुमसम्बन्धि कनकनियुक्तं-कनकविच्छुरितं कनकपट्टिकासंवलितमित्यर्थ (तत्) तथाविधं दारु-काष्ठं यस्य स तथा तस्य, प्रथमो बहुव्रीहौ कः द्वितीयः स्वार्थिकः, पूर्वस्य च दीर्घत्वं प्राकृतत्वात्, तथा सुष्ठु-अतिशयेन सम्यक् पिनद्धमरकमण्डलं धूश्च यस्य स सुसंपिनद्धारकमण्डलधूर्ककस्तस्य, तथा कालायसेन-लोहेन सुष्ठु-अतिशयेन कृतं नेमेः-बाह्यपरिधेर्यन्त्रस्य चारकोपरि फलकचक्रवालस्य कर्म यस्मिन् स कालायससुकृतनेमियन्त्रकर्मा तस्य, आकीर्णा-गुणैर्व्याप्ता ये वराः-प्रधानास्तुरगास्ते सुष्ठु-अतिशयेन सम्यक् प्रयुक्ता-योजिता यस्मिन् स तथा तस्य, बहुव्रीवावपि निष्ठान्तस्य परनिपातः प्राकृतत्वात्, तथा सारथिर्मणि ये कुशलनरास्तेषां मध्ये अतिशयेन छेको-दक्षः सारथिस्तेन सुष्ठु-सम्यक्परिगृहीतस्य, तथा शराणां शतं प्रत्येकं येषु तानि शरशतानि तानि च द्वात्रिंशत्तूणानि च-बाणाश्रयाः शरशतद्वात्रिंशत्तूणानि तैर्मण्डितः ।

किमुक्तं भवति ? -एवं नाम तानि द्वात्रिंशत् शरशतानि तूणानि रथस्य सर्वतः पर्यन्तेष्ववलम्बितानि तस्य रणायोपकल्पितस्यातीव मण्डनाय भवन्तीति, तथा कङ्कटः-कवचं अवतंसः-शिरस्त्राणं ताभ्यां सह वर्त्तते यः स तथा तस्य, सह चापेन ये शरा यानि च कुन्तादीनि प्रहरणानि यानि च खेटकादीन्यावरणानि तैर्भृतः-पूर्णस्तथा योधानां युद्धं तन्निमित्तं सज्जः-प्रगुणीभूतो यः स योधयुद्धसज्जस्ततः पूर्वपदेन कर्मधारयः, तस्य इत्थंभूतस्य राजाङ्गणे वा अन्तःपुरे वा रम्ये वा मणिकुट्टिमतले-मणिबद्धभूमितले अभीक्ष्णं-मुहुर्मुहुर्मणिकोट्टिमतलप्रदेशैः राजाङ्गणादिप्रदेशैर्वा 'अभिघट्टिज्जमाणस्से'ति अभिघट्ट्यमानस्य-वेगेन गच्छतो ये उदारा-मनोज्ञाः कर्णमनोनिर्वृतिकराः सर्वतः समन्तात् शब्दाः अभिनिस्सरन्ति-श्रोतॄणामभिमुखं निस्सरन्ति ।

-'भवे एयारूवे सिआ ?' इति स्यात्-कथञ्चिद्भवेदेतद्रूपस्तेषां मणीना तृणानां च शब्दः भगवानाह-गौतम ! नायमर्थः समर्थः, पुनरपि गौतमः प्राह-'से जहानामए वेआलियाए वीणाए उत्तरमंदामुच्छिआए अंकेसुपइट्ठियाए कुसलणरणारिसुसंपग्गहियाए चंदनसारकोणपरिघट्टियाए पच्चूसकालसमयंसि मंदं मंदं एइयाए वेइयाए चालियाए घट्टियाए फंदियाए खोभियाए उराला मणुण्णा कण्णमणणिव्वुइकरा सव्वओ समंता सद्दा अभिनिस्सवंति, भवे एयारूवे सिया ?, नो

इणट्टे समट्टे'' अत्र व्याख्या—स यथानामकः प्रातः सन्ध्यायां देवतायाः पुरतो या वादनायोपस्थाप्यते सा किल मङ्गलपाठिका, तालाभावे च वाद्यते इति वितालेु–तालाभावे भवतीति वैतालिकी तस्या वैतालिक्या वीणाया 'उत्तरमंदामुच्छियाए' इति मूर्च्छनं मूर्च्छा सा सञ्जाता अस्या इति मूर्च्छिता उत्तरमन्दया—उत्तरमन्दाभिधया गन्धारस्वरान्तरगतया सप्तम्या मूर्च्छनया मूर्च्छिता तस्याः, अयमाशयःगन्धारस्वरस्य सप्त मूर्च्छना भवन्ति, तथाहि–

॥ १ ॥ "नंदी य खुड्डिमा पूरिमा य चोत्थी य सुद्धगंधारा ।
उत्तरगंधारावि अ हवई सा पंचमी मुच्छा ॥
॥ २ ॥ सुट्ठुत्तरमायामा छट्ठी सा नियमसो उ बोद्धव्वा ।
उत्तरमंदा य तहा हवई सा सत्तमी मुच्छा ॥

अथ किंस्वरूपा मूर्च्छना ?, उच्यते, गन्धारादिस्वरस्वरूपामोचनेन गायतोऽतिमधुरा अन्यान्यस्वरविशेषा यान् कुर्वन् आस्तां श्रोतृन् मूर्च्छितान् करोति किन्तु स्वयमपि मूर्च्छित इव तान् करोति, यदिवा स्वयमपि साक्षान्मूर्च्छा करोति, यदुक्तम्–

॥ १ ॥ "अन्नन्नसरविसेसे उप्पायंतस्स मुच्छणा भणिया ।
कत्तावि मुच्छिओ इव कुणए मुच्छंव सो वत्ति ॥"

गन्धारस्वरान्तर्गतानां च मूर्च्छनानां मध्ये सप्तमी उत्तरमन्दा मूर्च्छना किलातिप्रकर्षप्राप्ता ततस्तदुपादानं, तथा च मुख्यवृत्त्या वादयिता मूर्च्छितो भवति परमभेदोपचाद्वीणापि मूर्च्छितेत्युक्ता, साऽपि यद्यङ्के सुप्रतिष्ठिता न भवति ततो न मूर्च्छना प्रकर्ष विदधाति तत आह—अङ्के—उत्सङ्गे स्त्रीयाः पुरुषस्य वा सुप्रतिष्ठितायाः तथा कुशलेन—वादननिपुणेन नरेण नार्या वा सुष्ठु—अतिशयेन सम्प्रक्प्रगृहीतायाः तथा चन्दनस्य सारो—गर्भस्तेन निर्मापितो यः कोणो—वादनदण्डः तेन परिघट्टितायाः—संघट्टितायाः प्रत्यूषकालसमये-प्रभातकालसमये, कालश्च वर्णोऽपि स्यादत आह—'समयेति' समयश्च सङ्केतोऽपि स्यादृत आह—'काले'ति मंदं मंदं—शनैः शनैः एजितायाः—चन्दनसारकोणेन मनाक् कम्पितायाः तथा व्येजितायाः—विशेषतः कम्पितायाः, एतदेव पर्यायेण व्याचष्टे—चालितायाः तथा घट्टितायाः—ऊर्ध्वाधोगच्छता चन्दनसारकोणेन गाढतरं वीणादण्डेन सह तन्त्र्याः स्पृष्टया इत्यर्थः, तथा स्पन्दितायाः नखाग्रेण स्वरविशेषोत्पादनार्थमीषच्चालितायाः क्षोभितायाःमूर्च्छा प्रापितायाः ये उदारा मनोहरा मनोज्ञाः कर्णमनोनिर्वृतिकराः सर्वतः समन्ताच्छब्दा अभिनिस्सरन्ति, स्यात्—कथञ्चिद् भवेदेतद्रूपस्तेषां मणीनां तृणानां च शब्दः ?, भगवानाह—गौतम नायमर्थः समर्थः । पुनरपि गौतम— प्राह—'से जहानामए किंनराण वा किंपुरिसाण वा महोरगाण वा गंधव्वाण वा भद्दसालवणगयाण वा नंदनवनगयाण वा सोमनसवनगयाण वा पंडगवनगयाण वा महाहिमवंतमलयमंदरगिरिगुहासमन्नागयाण वा एगओ सहियाणं संमुहागयाणं समुपविट्ठाणं सन्निविट्ठाणं पमुइयपक्कीलियाणं गीयरइ गंधव्वहरिसिअमणाणं गेज्जं पज्जं कत्थं पयबद्धं पायबद्धं उक्खित्तायं पवत्तायं मंदायं रोइयावसाणं सत्तसरसमण्णागयं अट्ठरससंपउत्तं इक्कारसालंकारं छद्दोसविप्पमुक्कं अट्ठगुणोववेयं रत्तं तिट्ठाणकरणसुद्धं सकुहरगुंजंतवंसतंतीतलतालल्यग्गहसुसंपउत्तं महुरं समं सुललिअं मनोहरमउयरिभियपयसंचारं सुरइं सुणइ वरचारुरूवं दिव्वं नट्टसज्जं गेयं पगीयाणं, भवे एयारूवे सिया ?, गो० ! एवंभूए सिआ,' अत्र व्याख्या–

स यथानामकः किन्नराणां वा किंपुरुषाणां वा महोरगाणां वा गन्धर्वाणां वा, वाशब्दाः सर्वेऽपि विकल्पार्थाः, एते किन्नरादयो रत्नप्रभायाः उपरितनयोजनसहस्रवर्त्तिव्यन्तरनिकायाष्टक-मध्यगतपञ्चमषष्ठसप्तमाष्टमनिकायरूपा व्यन्तरविशेषाः, तेषां कथम्भूतानामित्याह– भद्रशालवनगतानां वा इत्यादि, तत्र मेरोः समन्ततो भूमौ भद्रशालवनं, तत्र प्रथममेखलायां नन्दनवनं, द्वितीयमेखलायां सोमनसवनं, शिरसि चूलिकायाः पार्श्वेषु सर्वतः पण्डकवनं तत्र गतानां, महाहिमवान्–हैमवतक्षेत्रस्योत्तरतः सीमाकारी वर्षधरपर्वतस्तस्य, उपलक्षणं चैतत् शेषवर्षधरपर्वतानां मलयपर्वतस्य मन्दरगिरेश्च–मेरुगिरेर्गुहां समन्वागतानां–गुहाप्राप्तानां, वाशब्दा विकल्पार्था, एतेषु स्थानेषु प्रायः किन्नरादयः प्रमुदिता भवन्ति तत एतेषामुपादानं, एकतः–एकस्मिन् स्थाने सहितानां–समुदितानां तथा परस्परं सम्मुखागतानां–सम्मुखं स्थितानां नैकोऽपि कस्यापि पृष्ठं दत्वा स्थित इत्यर्थः, पृष्ठदाने हर्षविघातोत्पत्तेः, तथा सम्यक्–परस्परानाबाधया उपविष्टाः–समुपविष्टस्तेषां। तथा सन्निविष्टानां–सम्यक्–स्वशरीरानाबाधया न तु विषमसंस्थानेन निविष्टास्तेषां, तथा 'प्रमुदितप्रक्रीडितानां' प्रमुदिताः–हर्षं गताः प्रक्रीडिताः–क्रीडितुमारब्धवन्तस्ततो विशेषणसमासः तेषां, तथा गीते रतिर्येषां ते गीतरतयो गन्धर्वैः कृतं गान्धर्वं नाट्यादि तत्र हर्षितमनसः गान्धर्वहर्षित- मनसः, ततः पूर्वपदेन विशेषणसमासस्तेषां, 'रागगीत्यादिकं गीतं पदस्वरतालावधानात्मकं गान्धर्व'मिति भरतादिशास्त्रवचनात् गद्यादिभेदादष्टधा गेयं, तत्र गद्यं यत्र स्वरसञ्चारेण गद्यं गीयते यत्र तु पद्यं–वृत्तादि यद् गीयते तत्पद्यं यत्र कथिकादि गीयते तत् कथ्यं पदबद्धं यदेकाक्षरादि यथा ते ते इत्यादि पादबद्धं यद्वृत्तादिचतुर्भागमात्रे पादे बद्धं उत्क्षिप्तकं प्रथमतः समारभ्यमाणं, अत्र ककारात्पूर्वं दीर्घत्वं प्राकृतत्वात्, एवमुत्तरत्रापि द्रष्टव्यं, प्रवृत्तकं।

प्रथमसमारम्भादूर्ध्वमाक्षेपपूर्वकं प्रवर्त्तमानं, तथा मन्दाकं–मध्यभागे सकलमूर्च्छनादि-गुणोपेतं मन्दं मन्दं सञ्चरन् अथवा मन्दमयते–गच्छति अतिपरिघोलनात्मकत्वात् मन्दायं रोचितावसानं–रोचितं अवसानं यस्य तत् शनैः २ प्रक्षिप्यमाणस्वरं यस्य गेयस्यावसानं तद्रोचितावसानमित्यर्थः, इह हि पद्यं पादबद्धं चैक एव भेदः, उभयत्रापि वृत्तरूप- तानतिक्रमात्, तेन गेयस्याष्टप्रकारताकथनं न विरुद्धमिति, तथा सप्त स्वराः षडादयः, उक्तं च–

॥१॥ "सज्जे रिसह गंधारे, मज्झिमे पंचमे सरे।
धेवए चेव नेसाए, सरा सत्त विआहिआ॥"

ते च सप्त स्वराः पुरुषस्य स्त्रीया वा नाभीतः समुद्भवन्ति, 'सत्त सरा नाभीओ' इति पूर्वमहर्षिवचनात्, तथा अष्टमी रसैः–शृङ्गारादिभि सम्यक्–प्रकर्षेण युक्तं, तथा एकादशालङ्काराः पूर्वान्तर्गते स्वरप्राभृते सम्यगभिहितास्तानि च पूर्वाणि सम्प्रति व्यवच्छिन्नानि तेन तेभ्यो लेशो विनिर्गतानि यानि भरतविशाखिलप्रभृतीनि तेभ्यो वेदितव्याः, तथा 'षड्दोषविप्रमुक्तं' षड्भिर्दोषैर्विप्रमुक्तं, ते चामी षड्दोषाः–

॥१॥ "भीअं १ दुअं २ मुप्पिच्छं ३ उत्तालं च कमसो मुणेयव्वं।
काकस्सरमणुण्णासं ६ छद्दोसा हुंति गेयस्स॥"

अत्र व्याख्या–भीतं–उत्त्रस्तं, किमुक्तं भवति?–यत् उत्त्रस्तेन मनसा गीयते तद्भीत-पुरुषनिबन्धनत्वात् तद्धर्मानुवृत्तत्वाद्भीतमुच्यते, द्रुतं–यत् त्वरितं गीयते, त्वरितगाने हि

रागतानादिपुष्टिरक्षरव्यक्तिश्च न भवति, 'उप्पिच्छं' श्वाससंयुक्तमिति, पाठान्तरेण 'रहस्सं'ति ह्रस्वस्वरं लघुशब्दमित्यर्थः, 'उत्तालं' उत्-प्राबल्येन अतितालं अस्थानतालं वा, तालस्तु कंसिकादिस्वरविशेषः, काकस्वरं-श्लक्ष्णाश्रव्यस्वरं अनुनासं-नासिकाविनिर्गतस्वरानुगतमिति, तथा अष्टभिर्गुणैरुपेतं अष्टगुणोपेतं, ते चाष्टामी गुणाः-

॥ १ ॥ "पुण्णं रत्तं अलंकियं च वत्तं तहेव अविघुट्ठं ।
महुरं समं सुललिअं, अट्ठ गुणा हुंति गेयस्स ॥"

तत्र यत् स्वरकलाभि पूर्णं गीयते तत् पूर्णं १ गेयरागानुरक्तेन यत् गीयते तद्रक्तं २ अन्योऽन्यस्फुटशुभस्वरविशेषाणां करणादलङ्कृतं ३ अक्षरस्वरस्फुटकरणाद् व्यक्तं ४ विक्रोशनमिव यद्विस्वरं न भवति तदविघुष्टं ५ मधुरं-मधुरस्वरं कोकिलारुतवत् ६ तालवंशस्वरादिसमनुगतं समं ७ स्वरघोलनाप्रकारेण सुष्ठु-अतिशयेन ललतीव यत् सुललितं, यदिवा यत् श्रोत्रेन्द्रियस्य शब्दस्पर्शनमतीव सूक्ष्ममुत्पादयति सुकुमारमिव (च) प्रतिभासते तत् सुललितं ८, एते अष्टौ गुणा गेयस्य भवन्ति, एतद्विरहितं तु विडम्बनामात्रं तदिति, इदानीमेतेषामेवाष्टानां गुणानां मध्ये कियतो गुणान् अन्यांश्च प्रतिपिपादयिषुराह-

'रत्त'मित्यादि रक्तं-पूर्वोक्तलक्षणं तथा 'त्रिस्थानकरणशुद्धं' त्रीणि स्थानानि उरःप्रभृतीनि तेषु करणेन-क्रियया शुद्धं त्रिस्थानकरणशुद्धं, तद्यथा-उरःशुद्धं कण्ठशुद्धं शिरोविशुद्धं च, तत्र यद्युरसि स्वरो विशालस्तदुरोविशुद्धं, स एव यदि कण्ठे वर्त्तितोऽस्फुटितश्च ततः कण्ठविशुद्धं, यदि पुनः शिरसि प्राप्तः सन्ननुनासिको भवति ततः शिरोविशुद्धं अथवा उरःकण्ठशिरस्सु श्लेष्मणा अव्याकुलेषु विशुद्धेषु प्रशस्तेषु यद् गीयते तदुरःकण्ठशिरोविशुद्धत्वात् त्रिस्थानकरणविशुद्धं, तथा सकुहरः-सच्छिद्रो गुञ्जन्-शब्दायमानो यो वंशो ये च तन्त्रीतलतालतलयग्रहास्तैः सह सुष्ठु-अतिशयेन सम्प्रयुक्तं-अविरुद्धतया प्रवर्त्तितं, किमुक्तं भवति सकुहरे वंशे गुञ्जति तन्त्र्या च वाद्यमानायां यद्वंशतन्त्रीस्वरेणाविरुद्धं तत् सकुहरगुञ्जद्वंशतन्त्रीसुसम्प्रयुक्तं, तथा परस्पराहतहस्ततालस्वरानुवर्त्ति यद् गीतं तत्तालसुसम्प्रयुक्तं, यत् मुरजकंशिकादीनामातोद्यानामाहतानां यो ध्वनिर्यश्च नृत्यन्त्या नर्त्तक्याः पादोत्क्षेपस्तेन समं तत् तालसुसम्प्रयुक्तं, तथा शृङ्गदारुदन्तादिमयो योऽङ्गुलिकोशकस्तेनाहतायास्तन्त्र्याः स्वरप्रकारो लयस्तमनुसरद् गेयं लयसुसंप्रयुक्तं, तथा प्रथमतो वंशतन्त्र्यादिभिर्यः स्वरो गृहीतस्तत्समेन स्वरेण गीयमानं ग्रहसुसंप्रयुक्तं, तथा मधुरमित्यादि विशेषणत्रयं प्राग्वत्, अत एव मनोहरं, मृदुकं-मृदुना स्वरेण युक्तं न निष्ठुरेण, तथा यत्र स्वरोऽक्षरेषु घोलनास्वरविशेषेषु च सञ्चरन् रागेऽतीव प्रतिभासते स पदसञ्चारो रिभितमुच्यते मृदुरिभितपदेषु-गेयनिबद्धेषु संचारो यत्र गेये तत् मृदुरिभितपदसंचारं, तथा सुष्ठु-शोभना रति श्रोतॄणां यस्मिन् तत् सुनति, सुष्ठु-शोभना नति-अवनामोऽवसाने यस्मिन् तत् सुनति, पर्यन्ते मन्द्रस्वरस्य विधानात्, तथा वरं-प्रधानं विशिष्टचङ्गिमोपेतं रूपं-स्वरूपं यस्य तत्तथा, दिव्यं-देवसम्बन्धि, यतः नाट्ये-नृत्यविधौ सज्ज्ं नाट्यसज्ज्ं गीतवाद्ये तथाविधे हि नाट्यविधिरपि सुमनोहरः स्यादिति, उक्तस्वरूपं गेयं प्रगीतानां-गातुमारब्धवतां यादृशः शब्दोऽतिमनोहरो भवति, स्यात्-कथञ्चिद्भ- वेदेतद्रूपस्तेषां मणीनां तृणानां च शब्दः ?, दृष्टान्तस्य सर्वसाम्याभावात् स्यादिति पदोपादानं, एवमुक्ते भग० गौ० ! स्यादेवंभूतः शब्द इति ।

अथ पुष्करिणीसूत्रं यथा–'तस्स णं वनसंडस्स तत्थ तत्थ देसे तहिं तहिं बहुइओ खुड्डाखुड्डियाओ वावीओ पुक्खरिणीओ दीहियाओ गुंजालियाओ सराओ सरपंतीओ सर २ पंतीओ बिलपंतीओ अच्छाओ सण्हाओ रययामयकूलाओ समतीरा वयरामयपासाणाओ तवणिज्जतलाओ सुवण्णसुब्भरययवालुयाओ वेरुलियमणिफालियपडलपच्चोअडाओ सुओयारसुहोत्ताराओ नानामणितित्थसुबद्धाओ चाउक्कोणाओ अणुपुव्वसुजायवप्पगंभीरसीयलजलाओ संछन्नपत्तभिसमुणालाओ बहुउप्पलकुमुयणलिणसुभगसोगंधियपुंडरीयमहापुंडरीयसयपत्तसहस्सपत्त- फुल्लकेसरोवचियाओ छप्पयपरिभुज्जमाणकमलाओ अच्छविमलसलिलपुण्णाओ परिहत्थभमंत- मच्छकच्छभअनेगसउणमिहुणपविअरियाओ पत्तेयं २ पउमवरवेइयापरिक्खित्ताओ पत्तेयं २ वनसंडपरिक्खित्ताओ अप्पेगइयाओ आसवोदगाओ अ० वारुणोदगाओ अ० खोदोदगाओ अ० अमयरससमरसोदगाओ अ० उदगरसेणं प० पासादीयाओ ४' अत्र व्याख्या–

तस्ये'त्यादि प्राग्वत् बह्व्यः क्षुद्राः–अखातसरस्यस्ता एव लघ्व्यः–क्षुल्लिका वाप्यः–चतुरस्राकाराः पुष्करिण्यो–वृत्ताकाराः दीर्घिकाः–सारण्यः ता एव वक्रा गुञ्जालिकाः, बहूनि केवलकेवलानि पुष्पावकीर्णकानि सरांसि, सूत्रे स्त्रत्वं प्राकृतत्वात्, बहूनि सरांसि एकपङ्क्त्या व्यवस्थितानि सरःपङ्क्ति ता बह्व्यः सरः पङ्क्त्यः, तथा येषु सरस्सु पङ्क्त्या व्यवस्थितेषु एकस्मात् सरसोऽन्यस्मिन् तस्मात्तदन्यत्रैवं संचारकपाटकेनोदकं संचरति सा सरः सरः पङ्क्त्यस्ता बह्व्यः सरः सरः पङ्क्त्यः, बिलानि–कूपास्तेषां पङ्क्त्यो बिलपङ्क्त्यः, एताश्च सर्वा अपि कथम्भूता इत्याह– अच्छाः–स्फटिकवद् बहिर्निर्मलप्रदेशाः श्लक्ष्णाः–श्लक्ष्णपुद्गलनिष्पादितबहिप्रदेशाः रजतमयं– रूप्यमयं कूलं यासां तास्तथा, समं न गर्त्तासद्भावतो विषमं तीरवर्त्तिजलापूरितं स्थानं यासां ताः समतीराः, तथा वज्रमयाः पाषाणाः यासां तास्तथा, तथा तपनीयं–हेमविशेषस्तन्मयं तलं यासां तास्तथा। तथा 'सुवण्णसुब्भरययवालुयाओ' इति सुवर्णं–पीतं हेम सुब्भं–रूप्यविशेषः रजतं–प्रतीतं तन्मय्यो वालुका यासु ताः सुवर्णसुब्भरजतवालुकाः, तथा 'वेरुलियमणिफलिहपडलपच्चोयडाओ' इति वैडूर्याणि–वैडूर्यमणिमयानि स्फाटिकपडलमयानि–स्फाटिकरत्नसम्बन्धिपटलमयानि प्रत्यवतटानि–तटसमीपवर्त्त्यभ्युन्नतप्रदेशा यासां तास्तथा, तथा सुखेनावतारो–जलमध्ये प्रवेशनं यासु ताः स्ववतराः तथा सुखेनोत्तारो–जलाद्बहिर्विनिर्गमनं यासु ताः सुखोत्ताराः, ततः पूर्वपदेन विशेषणसमासः, तथा नानामणिभि सुबद्धानि तीर्थानि यासां तास्तथा, अत्र बहुव्रीहावपि क्तान्तस्य परनिपातो भार्यादिदर्शनात् प्राकृतशैलीवशाद्वा, 'चाउक्कोणाओ' इति चत्वारः कोणा यासां ताः तथा, दीर्घत्वं च 'अतः समृद्ध्यादौ वा' इति सूत्रेण प्राकृतलक्षणवशात्, एतच्च विशेषणं वापीः कूपांश्च प्रति द्रष्टव्यं।

तेषामेव चतुष्कोणत्वसम्भवात् न शेषाणां, आनुपूर्व्येण–क्रमेण नीचैर्नीचैस्तरभावरूपेण सुष्ठु–अतिशयेन यो जातो वप्रः–केदारो जलस्थानं तत्र गम्भीरं–अलब्धस्ताधं शीतलं जलं यासु ताः आनुपूर्व्यसुजातवप्रगम्भीरशीतलजलाः, तथा संछन्नानि–जलेनान्तरितानि पत्रबिशमृणालानि यासु ताः तथा, इह बिशमृणालसाहचर्यात् पत्राणि पद्मिनीपत्राणि द्रष्टव्यानि बिशानि–कन्दाः मृणालानि पद्मनालानि, तथा बहूनामुत्पलकुमुदनलिनसुभगसौगन्धिकपुण्डरीकमहापौण्डरीकशतपत्रसहस्रपत्राणां फुल्लानां विकस्वराणां केशरैः–किञ्जल्कैः उपचिता–भृताः, विशेषणस्या-

व्यवस्थिततया निपातः प्राकृतत्वात्, तथा षटपदैः—भ्रमरैः परिभुज्यमानानि कमलानि उपलक्षण-मेतत् कुमुदादीनि यासु ताः तथा, अच्छेन—स्वरूपतः स्फटिकवत् शुद्धेन निर्मलेन—आगन्तुकमल-रहितेन सलिलेन पूर्णा तथा 'पडिहत्था' अतिरेकिताः अतिप्रभूता इत्यर्थः, देशीशब्दोऽयं 'पडिहत्थ-मुद्धुमायं अइरेइयं च जाण आउण्णं' इति वचनात्, उदाहरणं चात्र—

॥ १ ॥ 'घनपडिहत्थं गयणं सराई नवसलिलमुद्धुमायाइं।
अइरेइयं मह उण चिंताए मणं तुहं विरहे ॥' इति।

भ्रमन्तो मत्स्यकच्छपा यत्र ताः पडिहत्थभ्रमनमत्स्यकच्छपाः, अनेकैः शकुनिमिथुनकैः प्रविचरिता इतस्ततो गमनेन सर्वतो व्याप्ताः, ततः पूर्वपदेन विशेषणसमासः, एता वाप्यादयः सरस्सरःपङ्क्तिपर्यवसानाः 'प्रत्येक'मिति एकं एकं प्रति प्रत्येकं अत्राभिमुख्ये प्रतिशब्दो न वीप्साविवक्षायां पश्चात्प्रत्येकशब्दस्य द्विर्वचनमिति, पद्मवरवेदिकया परिक्षिप्ताः प्रत्येकं २ वनखण्डपरिक्षिप्ताश्च, अपिर्बाढार्थे, बाढमेककाः काश्चन वाप्यादय आसवमिव—चन्द्रहासादिप-रमासवमिव उदकं यासा ताः तथा, अप्येकिकाः वारुणस्येव—वारुणसमुद्रस्येव उदकं यासां ताः, अप्येकिकाः क्षीरमिवोदकं यासां ताः अप्येकिकाः घृतमिवोदकं यासां ताः अप्येकिकाः क्षोद इव—इक्षुरस इवोदकं यासां ताः अप्येकिकाः अमृतरससमरसं उदकं यासां ताः अमृतरससमरसोदकाः अप्येकिकाः उदकरसेन—स्वाभाविकेन प्रज्ञप्ताः 'पासाईया' इत्यादि प्राग्वत्।

''तासि णं खुड्डाखुड्डियाणं वावीणं जाव बिलपंतीणं पत्तेयं पत्तेयं चउद्दिसिं चत्तारि तिसोवाणपडीरूवगा प० तेसि णं तिसोवाणप० अयमेयारूवे वण्णावासे प०त० वइरामया णेमा रिट्ठामया पइट्ठाणा वेरुलियामया खंभा सुवण्णरूप्पमया फलगा वइ० संधी लोहिअक्खमईओ सूईओ नानामणिमया अवलंबणबाओ पासाईया ४'' अत्र व्याख्या— तासां क्षुद्राणां क्षुद्रिकाणां यावद्बिलपङ्क्तीनां प्रत्येकं २ चतुर्णां दिशां समाहारश्चतुर्दिक् तस्मिंश्चतुर्दिशि, चत्वारि एकैकस्यां दिशि एकैकभावात् त्रिसोपानप्रतिरूपकाणि, तथा प्रतिविशिष्टं रूपं येषां तानि प्रतिरूपकाणि, त्रयाणां सोपानां समाहारः त्रिसोपानं, त्रिसोपानानि च तानि प्रतिरूपकाणि चेति विशेषणसमासः, विशेषणस्य परनिपातः प्राकृतत्वात्, तानि प्रज्ञप्तानि, तेषां च त्रिसोपान- प्रतिरूपकाणामयं—वक्ष्यमाणः एतद्रूपो वर्णकनिवेशः प्रज्ञप्तः, —वज्ररत्नमया नेमाः—भूमेरूर्ध्वं निष्क्रामन्तः प्रदेशाः रिष्टरत्नमयानि प्रतिष्ठानानि—त्रिसोपानमूलपादाः वैडूर्यमयाः स्तम्भाः सुवर्णरूप्यमयानि फलकानि—त्रिसोपानाङ्गभूतानि वज्ररत्नमयापूरिताः सन्धयः—फलकद्वयापान्त- रालप्रदेशाः लोहिताक्षमय्यः सूचयः—फलकद्वयसम्बन्ध विघटनाभावहेतुपादुकास्थानीयाः, नाना- मणिमया अवलम्ब्यन्ते इति अवलम्बना—अवतरतामुत्तरतामवलम्बनहेतुभूताः, अवलम्बनबाहातो विनिर्गताः केचिदवयवाः 'अवलम्बनबाहाओ' इति अवलम्बनबाहा अपि नानामणिमय्यः, अवलम्बनबाहा नाम उभयोः पार्श्वयोः अवलम्बनाश्रयभूता भित्तयः 'पासाईयाओ' ४ इत्यादि पदचतुष्ट्यं प्राग्वत्।

''तेसि णं तिसोवाणपडिरूवगाणं पुरओ पत्तेयं २ तोरणा प०'' तेसि णं तोरणाणं अयमेयारूवे वण्णावासे पन्नत्ते, ते णं तोरणा नानामणिमएसु खंभेसु उवनिविट्ठसंनिविट्ठा विविहमुत्तंतरोवियाविविहतारारूवोविया ईहामिगउसभतुरगणरमगरविहगवालगकिंनररुरुसरभचमरकुंजरवण-लयपउमलयभत्तिचित्ता खंभुग्गयवरवइरवेइयापरिगयाभिरामा विज्जाहरजमलजुअलजंतजुत्ता-

विव अच्चीसहस्समालणीया रूवगसहस्सकलिया भिसमाणा भिब्भिसमाणा चक्खुल्लोअणलेसा सुहफासा सस्सिरीयरूवा पासाईया ४'' इति, अत्र व्याख्या–'तेसि णं'मित्यादि, तेषां त्रिसोपान-प्रतिरूपकाणां पुरतः प्रत्येकं २ तोरणानि प्रज्ञप्तानि, तेषां तोरणानामयमेतद्रूपो वर्णावासो–वर्णकनिवेशः प्रज्ञप्तः, तद्यथा– 'ते णं तोरणा' इत्यादि, तानि तोरणानि नानामणिमयानि मणयः–चन्द्रकान्तादयः विविध- मणिमयानि नानामणिमयेषु स्तम्भेषु उपनिविष्टानि–सामीप्येन स्थितानि, तानि च कदाचिच्चलानि अथवाऽपदपतितानि शङ्क्येरन्, तत आह–सम्यग्–निश्चलतया-ऽपदपरिहारेण च निविष्टानि, ततो विशेषणसमासः, विविधा–नानाविधविच्छित्तिकलिता मुक्ता–मुक्ताफलानि अन्तराशब्दोऽ- गृहीतवीप्सोऽपि वीप्सां गमयति, अन्तरा अन्तरा 'ओविया' इति आरोपिता यत्र तानि तथा, विविधैस्तारारूपैः–तारिकारूपैरुपचितानि, तोरणेषु हि शोभार्थं तारकानि बध्यन्ते इति प्रतीतं लोकेऽपि, ईहामृगा–वृकाः ऋषभा–वृषभाः व्याला–भुजंगाः रुरवो–मृगविशेषाः शरभा–अष्टापदाः चमरा–आटव्यो गावः, वनलता–अशोकलताद्याः पद्मलताः–पद्मिन्यः, शेषाः प्रतीताः, एतासां भक्त्या–विच्छित्या चित्रं–आलेख्यो येषु तानि तथा, स्तम्भोद्गतया–स्तम्भोपरिवर्त्तिन्या वज्ररत्नमय्या वेदिकया परिगतानि–परिकरितानि सन्ति यानि अतिरमणीयानि तानि तथा, विद्याधरयोः– विशिष्टशक्तिमत्पुरुषविशेषयोर्यमलं–समश्रेणीकं युगलं–द्वन्द्वं तेनैव यन्त्रेण संचरिष्णुपुरुषप्रति- मारूपरूपेण युक्तानि, आर्षत्वाद्वैवंविधः समासः, तथा अर्चिषां–मणिरत्नप्रभाणां सहस्रैर्माल- नीयानि–परिवारणीयानि रूपकसहस्रकलितानि स्पष्टं 'भिसमाणा' इति दीप्यमानानि 'भिब्भिसमाणा' इति अत्यर्थं दीप्यमानानि।

तथा चक्षुः कर्तृ लोचनेअवलोकने लिसतीव–दर्शनीयतातिशयतः श्लिष्यतीव यत्र तानि तथा, 'सुहफासा' इति शुभस्पर्शानि सश्रीकानि–सशोभाकानि रूपकाणि यत्र तानि सश्रीकरूपाणि, 'पासाईया' इत्यादि विशेषणचतुष्टयं प्राग्वत्, ''तेसि णं तोरणाणं उप्पिं अट्ठट्ठमंगलगा पन्नत्ता, सोत्थिय १ सिरिवच्छ २ नंदियावत्त ३ वद्धमाणग ४ भद्दासण ५ कलस ६ मच्छ ७ दप्पणा ८ सव्वरयणामया अच्छा जाव पडिरूवा'' अत्र व्याख्या–तेषां तोरणानामुपरि इत्यादि सुगमं, नवरं 'जाव पडिरूवा' इति यावत्करणात् घट्ठा मट्ठा नीरया इत्यादिग्रहः, 'तेसि णं तोरणाणं उवरिं किण्हचामरज्झया नीलचामरज्झया लोहियचामरज्झया हालिद्दचामरज्झया सुक्किल्लचामरज्झया अच्छा सण्हा रुप्पपट्टा वइरदंडा जलयामलगंधिया सुरम्मा पासाईया ४'' इति, तेषां तोरणानामुपरि बहवः कृष्णचामरयुक्ताः ध्वजाः कृष्णचामरध्वजाः एवं बहवो नीललोहितहारिद्रशुक्लचामरयुक्ताः ध्वजा वाच्याः, कथम्भूता एते सर्वेऽपीत्याह–'अच्छा सण्हा' इति स्पष्टं रूप्यमयो वज्रमयस्य दण्डस्योपरि पट्टो येषां ते तथा, वज्रो– वज्रमयो दण्डो रूप्यपट्टमध्यवर्त्ती येषां ते तथा, जलजा-नामिव–पद्मानामिवामलो न तु कुद्रव्यगन्धसम्मिश्रो योगन्धः स विद्यते येषां ते जलजामलगन्धिकाः, 'अतोऽनेकस्वरा'दितीकप्रत्ययः अत एव सुरम्याः 'पासादीया' इत्यादि प्राग्वत्।

''तेसि णं तोरणाणं उप्पिं बहवे छत्ताइछत्ता पडागाइपडागा घंटाजुअला चामरजुअला उप्पलहत्थगा पउमहत्थगा जाव सहस्सपत्तहत्थगा सव्वरयणामया अच्छा जाव पडिरूवा'' तेषां तोरणानामुपरि बहूनि छत्रातिच्छत्राणि–छत्राल्लोकप्रसिद्धादेकसंख्याकाद् अतिशायीनि द्विसंख्यानि त्रिसंख्यानि वा छत्राणि छत्रातिच्छत्राणि बह्व्यः पताकाभ्योऽतिशायिन्यो दीर्घत्वेन विस्तरेण च

पताकाः पताकातिपताकाः बहूनि घण्टायुगलानि बहूनि चामरयुगलानि बहव उत्पलहस्तकाः–उत्पलाख्यजलजकुसुमसमूहविशेषाः, एवं पद्महस्तकाः बहवे नलिनहस्तकाः बहवः सुभगहस्तकाः बहवः सौगन्धिकहस्तकाः बहवः पुण्डरीकहस्तकाः बहवः शतपत्रहस्तकाः बहवः सहस्रपत्रहस्तकाः, उत्पलादीनां व्याख्यानं प्राग्वत्, एते च छत्रातिच्छत्रादयः सर्वेऽपि सर्वरत्नमयाः, 'जाव पडिरूवा' इति यावत्करणात् 'अच्छा सण्हा लण्हा' इत्यादिविशेषणकदम्बकपरिग्रहः ।

अथ पर्वतकसूत्रं यथा–"तासि णं खुड्डियाणं वावीणं जाव बिलपंतियाणं तत्थ तत्थ देसे तहिं तहिं बहवे उप्पायपव्वयगा नियइपव्वयगा जगईपव्वयगा दारुपव्वयगा दगमंडवगा दगमंचगा दगमालगा दगपासाया उसडा खुड्डा अंदोलगा पक्खंदोलगा सव्वरयणामया अच्छा जाव पडिरूवगा" अत्र व्याख्या–तासां क्षुल्लिकानां वापीनां यावद्बिलपङ्क्तीना अत्र यावत्करणात् पुष्करिण्यादिग्रहः, अपान्तरालेषु तत्र तत्र देशे 'तहिं तहिं' इति तस्यैव देशस्य तत्र तत्रैकदेशे बहव उत्पातपर्वताः–यत्रागत्य बहवो व्यन्तरदेवा देव्यश्च विचित्रक्रीडानिमित्तं वैक्रियशरीरमारचयन्ति नियत्या–नैयत्येन पर्वताः, क्वचिन्नियपव्वया इति पाठः, तत्र नियताः–सदा भोग्यत्वेनावस्थिताः पर्वताः यत्र व्यन्तरा देवदेव्यो भवधारणीयेन वैक्रियशरीरेण प्रायः सदा रमन्ते इति भावः, जगतीपर्वताः–पर्वतविशेषाः, दारुपर्वतका–दारुनिर्मापिता इव पर्वतकाः दकमण्डपकाः–स्फटिकमण्डपकाः एवं दकमञ्चकाः दकमालकाः दकप्रासादाः । एते च दकमण्डपकादयः केचित् उत्सृता–उच्चा इत्यर्थः, केचित् क्षुल्ला–लघवः क्वचित् खुड्डखुड्डगा इति पाठः क्षुल्लक्षुल्लका–अतिलघवः आयताश्च, तथा अन्दोलकाः पक्ष्यन्दोलकाश्च तत्र यत्रागत्य २ मनुष्या आत्मानमन्दालेयंति इति, आन्दोलका इति लोके प्रसिद्धाः, यत्र तु पक्षिण आगत्यागत्यात्मानमन्दोलयंति ते पक्ष्यन्दोलकाः, ते चान्दोलकाः पक्ष्यन्दोलकाश्च तस्मिन् वनखण्डे तत्र तत्र प्रदेशे वानमन्तरदेवदेवीक्रीडायोग्या बहवः सन्ति, ते चोत्पातपर्वतादयः कथम्भूता इत्याह– सर्वरत्नमया अच्छा इत्यादिविशेषणजातं प्राग्वत् "तेसु णं उप्पायपव्वएसु जाव पक्खंदोलएसु बहूइं हंसासणाइं कोंचासणाइं गरुलासणाइं उण्णयासणाइं पणयासणाइं दीहासणाइं भद्दासणाइं मगरासणाइं पउमासणाइं सीहासणाइं दिसासोवत्थियासणाइं सव्वरयणामयाइं अच्छाइं जाव पडिरूव"त्ति ।

अत्र व्याख्या–तेषु उत्पातपर्वतेषु यावत्पक्ष्यन्दोलकेषु अत्र यावत्करणात् नियतपर्वतादिपरिग्रहः बहूनि हंसासनानि, तत्र येषामासनानामधोभागे हंसा व्यवस्थिता यथा सिंहासने सिंहास्तानि हंसासनानि, एवं क्रौञ्चासनानि गरुडासनानि भाव्यानि, उन्नतासनानि–यान्युच्चासनानि प्रणतासनानि–निम्नासनानि दीर्घासनानि–शय्यारूपाणि भद्रासनानि–येषामधोभागे पीठिकाबन्धः पक्ष्यासनानि–येषामधोभागे नानारूपाः पक्षिणः, एवं मकरासनानि सिंहासनानि च भावनीयानि, पद्मासनानि–पद्माकाराणि आसनानि दिक्सौवस्तिकासनानि–येषामधोभागे दिक्सौवस्तिका–दिक्प्रधानाः स्वस्तिका आलिखिताः सन्ति, अत्र यथाक्रममासनानां संग्राहिका संग्रहणीगाथा–

॥ १ ॥ "हंसे कोंचे गरुले उण्णय पणए य दीह भद्दे य ।
पक्खे मयरे पउमे सीह दिसासोए बारसमे ॥"

एतानि सर्वाण्यपि कथम्भूतानित्याह–'सव्वरयणामयाइं' इत्यादि प्राग्वत् । अथ गृहकसूत्रं यथा–"तस्स णं वनसंडस्स तत्थ तत्थ देसे तहिं तहिं बहवे आलिघरगा मालिघरगा कयलीघरगा

अच्छणघरगा पेच्छणघरगा मज्जणघरगा पसाहणघरगा गब्भघरगा मोहनघरगा मालघरगा जालघरगा कुसुमघरगा चित्तघरगा गंधव्वघरगा आयंसघरगा सव्वरयणामया अच्छा जाव पडिरूवा'' इति, अत्र व्याख्या—तस्य वनखण्डस्य मध्ये तत्र तत्र प्रदेशे तस्यैव प्रदेशस्य तत्र तत्र एकदेशे बहूनि आलिगृहकाणि, आलि—वनस्पतिविशेषस्तन्मयानि गृहकाणि, मालिरपि वनस्पति-विशेषः तन्मयानि गृहकाणि मालिगृहकाणि, कदलीगृहकाणि लतागृहकाणि च प्रतीतानि, अवस्थान-गृहकाणि येषु यदा तदा वाऽऽगत्य स्वेच्छया सुखासिकया अवतिष्ठन्ते, प्रेक्षणकगृहकाणि प्रेक्षणकानि विदधति नरीक्ष्यन्ते च, मज्जन० यत्रागत्य स्वेच्छया मज्जनं कुर्वन्ति, प्रसाधनगृ० यत्रागत्य स्वं परं च मण्डयन्ति, गर्भगृहाकाराणि मोहन० मोहनं—मैथुनसेवा तत्प्रधानानि गृहकाणि वासभवनानीति भावः, शाला०—पट्टशालाप्रधानानि गृहकाणि जाल०—जालयुक्तानि गृहकाणि कुसुम०—कुसुमप्र-करोपचितानि गृहकाणि चित्र०—चित्रप्रधानानि गृहकाणि गन्धव०—गीतनृत्या-भ्यासयोग्यानि गृहकाणि, आदर्श०—आदर्शमयानीव गृहकाणि, अत्र सूत्रे सर्वत्र ककारः स्वार्थिको-ऽवसेयः, एतानि कथंभूतानीत्याह--'सव्वरयणामयाइं' इत्यादि प्राग्वत्, ''तेसुणं आलिघरेसुं जाव आयंसघरेसु बहूइं हंसासणाइं जाव दिसासोवत्थियासणाइं सव्वरयणामयाइं जाव पडिरूवाइं'' इति गतार्थम्,

अथ मण्डपकसूत्रं यथा— ''तस्स णं वनसंडस्स तत्थ तत्थ देसे तहिं तहिं बहवे जाइमंडवगा जूहियामंडवगा मल्लियामं० नोमालियामं० वासंतीमं० दधिवासुयामं० सूरिल्लिमं० तंबोलीम० णागलयाम० अतिमुत्तयम० अप्फोआमं० मालुआम० सव्वरयणामया जाव निच्चं कुसुमिया जाव पडिरूवा'' अत्र व्याख्या— 'तस्ये'त्यादि पदयोजना सुगमा, जाति—मालती तन्मया मण्डपकाः जातिमण्डपकाः, एवं उत्तरत्रापि पदयोजना कार्या, यूथिका प्रतीता मल्लिका— विचकिलः, वनमालिका वासन्ती स्पष्टे, एते च पुष्पप्रधाना वनस्पतयः, दधिवासुका नाम वनस्पति- विशेषः, सूरिल्लिपरि स एव, ताम्बूली—नागवल्ली नागो—द्रुमविशेषः स एव लता नागलता, इह यस्य तिर्यक् तथाविधा शाखा प्रशाखा वा प्रसृता सा लतेत्यभिधीयते, अतिमुक्तकः—पुष्पप्रधान- वनस्पति 'अप्फोआ' वनस्पतिविशेषः, मालुका—एकास्थिकफला वृक्षविशेषास्तद्युक्ता मण्डपका मालुका-मंडपका, एते च कथंभूता इत्याह— 'सव्वरयणामया'इत्यादि प्राग्वत्।

'तेसु णं जाइमंडवगेसु जाव मालुआमंडवगेसु बहेव पुढविसिलावट्टगा पन्नत्ता, अप्पेगइया हंसासणसंठिया अ० कोंचासणसंठिआ अ० गरुडासणसंठिआ अ० उण्णयासणसंठिया अ० पणयासणसंठिआ अ० दीहासणसंठिया अ० भद्दासणसंठिया अ० पक्खासणसंठिया अ० मगरास-णसंठिया अ० पउमासणसंठिआ अ० सीहासणसंठिया अ० दिसाओवत्थियासमसंठिया अप्पेगे बहवे वरसयणासणविसिट्ठसंठाणसंठिया प० समणाउसो ! आईणगरूअबूरनवनीयतूल-फासमउआ सव्वरयणामया अच्छा जाव पडिरूवा' अत्र व्याख्या—तेषु जातिमण्डपकेषु यावत् मालुकामण्डपकेषु बहवः शिलापट्टकाः प्रज्ञप्ताः, तद्यथा—अपिर्बाढार्थे एकके शिलापट्टकाः हंसासनवत् संस्थितं—भावे क्तप्रत्ययविधानात् संस्थानं येषां ते तथा, एवं क्रौञ्चासनसंस्थितादिष्वपि वाच्यं, अन्ये च बहवः शिलापट्टकाः यानि विशिष्टचिन्हानि विशिष्टनामानि च वराणि—प्रधानानि शयनानि आसनानि च तद्वत् संस्थिता वरशयनासनविशिष्टसंस्थानसंस्थिताः क्वचित् 'मांसलसुघट्टविसिट्ठसंठाणसंठिया' इति पाठः, तत्रान्ये च बहवः शिलापट्टकाः मांसला —अकठिना

इत्यर्थः सुवृष्य–अतिशयेन मसृणा इति भावः, विशिष्टसंस्थानसंस्थिताश्च प्रज्ञप्ताः, हे श्रमण! हे आयुष्मन्! आईणगेत्यादि सुगममिति।

अथ प्रस्तुतसूत्रमनुश्रियते, 'तत्थ ण'मिति अत्र व्याख्या–तत्रैतेषु उत्पातपर्वतादिगतहंसासनादिषु यावन्नानारूपसंस्थानसंस्थितपृथिवीशिलापट्टकेषु णमिति पूर्ववत्, बहवो वनानामन्तरेषु भवाः पृषोदरादित्वान्मागमे वानमन्तरा देवा देव्यश्च यथासुखमासते आश्रयन्ति वाऽऽश्रयणीयं स्तम्भादि शेरते दीर्घकायप्रसारणेन वर्त्तन्ते, नतु निद्रां कुर्वन्ति, तेषां देवयोनिकतया निद्राया अभावात्, अत्रोपलक्षणात् 'चिट्ठंती'त्यादिकः पाठो जीवाभिगमोक्तो लिखितोऽस्ति, तिष्ठन्ति–ऊर्ध्वस्थानेन वर्त्तन्त निषीदन्ति–उपविशन्ति 'तुअट्टंति'त्ति त्वग्वर्त्तनं कुर्वन्ति वामपार्श्वतः परावृत्य दक्षिणपार्श्वेनावतिष्ठन्ते दक्षिणपार्श्वतो वा परावृत्य वामपार्श्वेनावतिष्ठन्त इति, रमन्ते–रतिमाबध्नन्ति, तथा ललन्ति–मनईप्सितं यथा भवति तथा वर्त्तन्ते इति भावः, तथा क्रीडन्ति–यथासुखमितस्ततो गमनविनोदेन गीनृत्यादिविनोदेन वाऽवतिष्ठन्ते, तथा मोहन्ति–मैथुनसेवां कुर्वन्ति, इत्येवं। 'पुरा पोराणाण'मित्यादि पुरा–पूर्वं प्राग्भवे इति भावः कृतानां कर्मणामिति योगः अत एव पौराणानां सुचीर्णानां–सुचरितानां, इह सुचरितजनितं कर्मापि कार्ये कारणोपचारात् सुचरितमिति विवक्षितं, ततोऽयं भावार्थ–विशिष्टतथाविधधर्मानुष्ठानविषयाप्रमादकरणक्षान्त्यादिसुचरितानामिति, तथा सुपराक्रान्तानां अत्रापि कार्ये कारणोपचारात् सुपराक्रमजनितानि कर्माणिसुपराक्रान्तानि इत्युक्तं भवति, सकलसत्त्वमैत्रीसत्यभाषणपरद्रव्यानपहारसुशीलादिरूपं सुपराक्रमजनितानामिति, अत एव शुभानां–शुभफलानां इह किञ्चिदशुभफलमपि इन्द्रियमतिविपर्यासात् शुभफलमाभाति ततस्तात्त्विकशुभफलप्रतिपत्त्यर्थमस्यैव पर्यायमाह–कल्याणानां–तत्त्ववृत्त्या तथाविधविशिष्टफलदायिनां अथवा कल्याणानां–अनर्थोपशमकारिणां कल्याणं–कल्याणरूपं फलविपाकं 'पच्चणुभवमाणा' प्रत्येकमनुभवन्तो विहरन्ति–आसते।

तदेवं पद्मवरवेदिकाया बहिस्थितवनखण्डवक्तव्यतोक्ता, सम्प्रति तस्या एवार्वाक्स्थितवनखण्डवक्तव्यतामभिधित्सुराह–'तीसे णं जगईए' इत्यादि, तस्या जगत्या उपरि पद्मवरवेदिकाया अन्तर्मध्ये यः प्रदेशः एतस्मिन् महानेको वनखण्डः प्रज्ञप्तः, देशोने द्वे योजने विष्कम्भेन वेदिका–पद्मवरवेदिका तस्याः समकःतुल्यः परिक्षेपेण, अयं भावः–पद्मवरवेदिकाया यावान् (तावान्) अस्यापि, पद्मवरवेदिकाबहिःप्रदेशात अन्तः पंचधनुःशतागमने यत् परिक्षेपन्यूनत्वं तत्र विवक्षितमल्पत्वादिति, 'किण्हे'त्ति कृष्णो यावदितिपदेन च बहिर्वनखण्डवदविशेषेण वनखण्डवर्णको ग्राह्यः, नवरं तृणविहीनो ज्ञातव्यः, अत्र तृणजन्यः शब्दोऽपि तृणशब्देनाभिधीयते उपचारादतस्तृणशब्दविहीनो ज्ञातव्यः, उपलक्षणत्वादस्य मणिशब्दविहीनोऽपि, पद्मवरवेदिकान्तरिततया तथाविधः वाताभावतो मणीनां तृणानां चाचलनेन परस्परं संघर्षाभावात् शब्दाभावः, उपपन्नश्चायमर्थ, जीवाभिगमसूत्रवृत्त्योस्तथैव दर्शनादिति।

सम्प्रति जम्बूद्वीपस्य द्वारसंख्याप्ररूपणार्थमाह–

*मू. (७) जंबुद्दीवस्स णं भंते! दीवस्स कइ दारा पन्नत्ता, गो० ! चत्तारि दारा पं०, तं० –विजए १ वेजयंते २ जयंते ३ अपराजिए ४, एवं चत्तारिवि दारा सरायहाणिआ भाणि०।*

वृ. अत्र सूत्रे प्रश्ननिर्वचने उभे अपि सुगमे, नवरं पूर्वातः प्रादक्षिण्येन विजयादीनि द्वाराणि ज्ञेयानि, द्वारणामेव स्थानविशेषनियमनायाह–

*मू. (८) कहि णं भंते ! जंबुद्दीवस्स दीवस्स विजए नामं दारे पन्नत्ते ?, गो० जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरत्थिमेणं पणयालीसं जोयणसहस्साइं वीइवइत्ता जंबुद्दीवदीवपुरत्थिमपेरंते लवणसमुद्दपुरत्थिमद्धस्स पच्चत्थिमेणं सीआए महानईए उप्पिं एत्थ णं जंबुद्दीवस्स विजए नामं दारे पन्नत्ते । अट्ठ जोयणाइं उद्धं उच्चत्तेणं चत्तारि जोयणाइं विक्खंभेणं तावइयं चेव पवेसेणं, सेए वरकणगथूभियाए, जाव दारस्स वण्णओ जाव रायहाणि ।*

वृ. 'कहि णं भंते !' इत्यादि, क्व भदन्त ! जम्बूद्वीपस्य द्वीपस्य विजयमिति प्रसिद्धं 'नामं' ति प्राकृतत्वात्, विभक्तिपरिणामेन नाम्ना द्वारं प्रज्ञप्तम्, भगवानाह - गौतम ! जम्बूद्वीपे द्वीपे यो मन्दरपर्वतो - मेरुगिरि : तस्य 'पुरत्थिमेणं' ति पूर्वस्यां दिशि पञ्चचत्वारिंशत् योजनसहस्राणि व्यति व्रज्य अतिक्रम्य जम्बूद्वीपे द्वीपे पौरसत्य पर्यन्ते लवणसमुद्र पूर्वार्द्धस्य पच्चत्थिमेणं' ति पाश्चात्यभागे शीताया महानद्या उपरि यः प्रदेश इतिगम्यं एतस्मिन् विजय नाम्ना द्वारं प्रज्ञप्तम् अष्टौ योजनान्यूर्ध्वोच्चत्वेता चत्वारि योजनानि विष्कम्भेन–विस्तारेण ।

इदं च द्वारविष्कम्भमानं स्थूलन्यायेनोक्तं, सूक्ष्मेक्षिकया तु विभाव्यमानं द्वारशाखा-द्वयविष्कम्भसत्कक्रोशद्वयप्रक्षेपे सार्द्धयोजनप्रमाणं भवति, तत्र विवक्षितमिति, 'तावइयं चेव पवेसेणं' ति तावदेव चत्वारीत्यर्थः, योजनानि प्रवेशेन–भित्तिबाहल्यलक्षमेन कथंभूत-मित्याह–श्वेतं–श्वेतवर्णोपेतं बाहुल्येनाङ्करत्नमयत्वात्, 'वरकनकस्तूपिकाकं' वरकनका– वरकनकमयी स्तूपिका–शिखरं यस्य तत् । अथ शेषं द्वारवर्णकं राजधानीवर्णकं चातिदेशेनाह– 'जाव' त्यादि, यावद् द्वारस्य वर्णको– 'जाव रायहाणी' ति यावद्राजधानीवर्णकश्च जीवाभिगमोपाङ्गोक्तो निरवशेषो वक्तव्यः, तत्र प्रथमं द्वारवर्णको यथा–

'ईहामिगउसमतुरगणरमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्ते खंभुग्गयवरवेइयापरिगयाभिरामे विज्जाहरजमलजुअलजंतजुत्ते इव अच्चीसहस्समालणीए, रूवगसहस्सकलिए भिसमाणे भिब्भिसमाणे चक्खुल्लोअणलेसे सुहफासे अस्सिरीयरूवे वण्णओ दारस्स तस्सिमो होइ, तंजहा–वइरामया णेमा रिट्ठामया पइट्ठाणा वेरुलिअरुइलखंभे जायरूवोवचियपवरपंचवण्णमणिरयणकुट्टिमतले हंसगब्भमएलुए गोमेज्जमए इंदकीले लोहिअक्खमईओ दारचेडाओ जोईरसामए उत्तरंगे वेरुलिआमया कवाडा वइरामया संधी लोहिअक्खमईओ सूईओ नानामणिमया समुग्गया वइरामया अग्गला अग्गलपासाया रययामया आवत्तणपेढिया अंकुत्तरपासए निरंतरिए घणकवाडे भित्तीसु चेव भित्तिगुलिया छप्पन्ना तिन्नि होंति गोमाणसीओ तत्तिआओ नानामणिरयणवालरुवगलीलट्ठिअसालभंजिआगे वइरामए कूडे रययामए उस्सेहे सव्वतवणिज्जमए उल्लोए · नानामणिरयणजालपंजरमणिवंसगलोहियक्खपडिवंसगरययभोमे अंकामया पक्खा पक्खवाहाओ जोईसामयावंसा वंसकवेल्लुया य रययामईओ पट्टिआओ जायरूवमइओ ओहाडणीओ वइरामइओ उवरिपुच्छणीओ सव्वसेए रययामयच्छाणे अंकामयकणगकूडतवणिज्जथूभिआए सेए संखतलविमलनिम्मलदधिघणगोखीरफेणरययणिग- रप्पगासे तिलगरयणद्धचंदचित्ते नानामणिदामालंकिए अंतो बाहिं च सण्हे तवणिज्जवालुआपत्थडे सुहफासे सस्सिरीअरूवे

पासाईए ४'' इति, अत्र व्याख्या—

'ईहामिगे'त्यादि विशेषणदशकं पद्मवरवेदिकागतवापीतोरणाधिकारे व्याख्यातार्थमिति ततोऽवसेयं, 'वण्णो दारस्स तस्सिमो होइ' इति वर्णको—वर्णकनिवेशो द्वारस्य—विजयाभिधानस्यायं—वक्ष्यमाणो भवति, तमेवाह—'तंजहे'त्यादि, तद्यथा—'वयरामया णेमा' इत्यादि, अत्र च क्वचिद्वर्णकनिवेशे यत्र केवलं विशेषणं तत्र सप्तम्याद्य....स्य विशेषणता यत्र तु विशेष्यसहितं तत्र तस्यैति गम्यं, तेन तस्य विजयद्वारस्य वज्रमया नेमा—भूमिभागादूर्ध्वं निष्क्रामन्तः प्रदेशाः रिष्ठरत्नमयानि प्रतिष्ठानानि—मूलपादाः वैडूर्या—वैडूर्यरत्नमयाः रुचिराः स्तम्भाः यस्य तत्तथा, तथा जातरूपेण—सुवर्णेनोपचितैः—युक्तैः प्रवरं पञ्चवर्णमणिरत्नैः कुट्टिमतलं—बद्धभूमितलं यस्य तत्तथा, तथाऽस्य विजयद्वारस्य हंसगर्भरत्नमय एलुको—देहली गोमेदकरत्नमय इन्द्रकीलो—गोपुरकपाटयुगसन्धिनिवेशस्थानं लोहिताख्यं—पद्मरागाख्यं रत्नं तन्मय्यौ द्वारपिण्डयौ—द्वारशाखे सूत्रे स्त्रीत्वनिर्देश आर्षत्वात् ज्योतीरसमयं उत्तरङ्गं—द्वारस्योपरितिर्यग्व्यवस्थितं काष्ठं वैडूर्यमयौ कपाटौ लोहिताक्षमय्यो—लोहिताक्षरत्नात्मिकाः सूचयः—फलकद्वयसम्बन्धविघटनाभाव हेतुपादुकास्थानीयाः तत्र वज्रमयाः सन्धयः—सन्धिमेलाः फलकानां। किमुक्तं भवति ?—

वज्ररत्नापूरिताः फलकानां सन्धयः, तथा नानामणिमयाः समुद्गका—चूलिकागृहाणि, तानि नानामणिमयानि, यत्र न्यस्तौ कपाटौ निश्चलतया तिष्ठतः, वज्रमया अर्गला अर्गलापरासादाः, तत्रार्गलाः प्रतीताः अर्गलाप्रासादा यत्रार्गला नियम्यन्ते, रजतमयी आवर्त्तनपीठिका, आवर्तनपीठिका च यत्रेन्द्रकीलो भवति, तथा अङ्का—अङ्करत्नमया उत्तरपार्श्वा यस्य तत्तथा, निर्गता अन्तरिका—लघ्वन्तररूपा ययोस्तौ निरन्तरिकौ अत एव घनकपाटौ यस्य तत्था 'भित्तिसु चेव भित्तिगुलिया छप्पन्ना तिन्नि होंति' इति तस्य द्वारस्योभयोः पार्श्वयोर्भित्तिषु भित्तिषु गता भित्तिगुलिकाः पीठकसंस्थानीयाः तिस्रः षट्पञ्चाशतः—षट्पञ्चाशत्त्रिकप्रमिता भवन्ति, अष्टषष्ट्यधिकं शतमित्यर्थः, तथा गोमानस्यः—शय्याः तावन्मात्राः—षट्पञ्चाशतत्रिकप्रमिताः, नानामणिरत्नमयानि व्यालरूपाणि—फलिरूपकाणि, लीलास्थितशालभञ्जिकाश्च— लीलास्थितपुत्रिका यत्र तत्तथा, तथा तस्य द्वारस्य वज्रमयः, कूटो— माढभागः रजतमय उत्सेधः, शिखरं केवलं, शिखरमत्र तस्यैव माढभागस्य सम्बन्धि द्रष्टव्यं न द्वारस्य, तस्य प्रागेवोक्तत्वात्, सर्वात्मना तपनीयमय 'उल्लकः' उपरिभागः 'नानामणिरयणजालप- ञ्जरमणि०' इति मणयो—मणिमया वंशा येषां तानि मणिवंश- कानि तथा लोहिताक्षा—लोहिताक्षमयाः प्रतिवंशाः येषां तानि लोहिताक्षप्रतिवंशकानि, तथा रजतमयी भूमिर्येषां तानि रजतभूमानि, प्राकृतत्वात् समासान्तो मकारस्य च द्वित्वं, मणिवंशकानि लोहिताक्षप्रतिवंशकानि रजतभूमानि।

—नानामणिरत्नानि—नानामणिरत्नमयानि जालपंजराणि—गवाक्षापरपर्यायाणि यस्मिन् द्वारे तत्तथा, पदानामन्यथोपनिपातः प्राकृतत्वात्, 'अङ्कमया पक्खा इत्यत आरभ्य रययामए छाणे' इत्यन्तानि पद्मवरवेदिकावद्भावनीयानि, 'अंकामयकणगकूडतवणिज्जथूभियागे' इति, अङ्कमयं—बाहुल्येनाङ्करत्नमयं पक्षबाह्वादीनामङ्करत्नात्मकत्वात् कनकं—कनकमयं कूटं—महच्छिखरं यस्य तत्तथा, तपनीया - तपनीयमयी स्तूपिका—लघुशिखररूपा यस्य तत्तथा, ततः पदत्रयस्य पदद्वयमीलनेन २ कर्मधारयः, एतेन यत्प्राक् सामान्येनोत्क्षिप्तं 'सेए वरकणगथूभियागे' इति

तदेव प्रपञ्चतो भावितमिति, सम्प्रति तदेव श्वेतत्वमुपसंहारव्याजेन भूय उपदर्शयति–श्वेतं, श्वेतत्वमेवोपमया द्रढयति–विमलं निर्मलं यत् शङ्खतलं–शङ्खस्योपरितनो भागो यश्च निर्मलो दधिधनो–घनीभूतं दधि गोक्षीरफेनो रजतनिकरश्च–रूप्यराशिस्तद्वत्प्रकाशः–प्रतिभता यस्य तत्तथा, तिलकरत्नानि–पुण्ड्रविशेषाः तैरर्द्धचन्द्रैश्च–अर्द्धचन्द्राकारैः सोपानविशेषैश्चित्रं–चित्रकारि तिलकरत्नार्द्धचन्द्रचित्रं, तथा –नानामणिमयानि दामानि–मालास्तैरलङ्कृतं नानामणिदामालङ्कृतं, तथा अन्तर्बहिश्च –श्लक्ष्णपुद्गलस्कन्ध-निर्मापितं –तपनीयमय्यो वालुकाः–सिकतास्तासां –प्रस्तटो यत्र तत्तपनीय-वालुकाप्रस्तटं, 'सुहफासे' इत्यादि प्राग्वत्।

"विजयस्स णं दारस्स उभओ पासिं दुहओ निसीहियाए दो दो चंदणकलसा पन्नत्ता, ते चंदनकलसा वरकमलपइट्ठाणा सुरभिवरवारिपडिपुण्णा चंदनकयचच्चागा आविद्धकंठेगुणा पउमुप्पलपिहाणा सव्वरयणामया अच्छा सण्हा जाव पडिरूवा महया महया महिंदकुंभसमाणा पन्नत्ता समणाउसो !" अत्र व्याख्या–विजयस्य द्वारस्योभयोः पार्श्वयोरेकैकनैषेधिकीभावेन दुहओ' त्ति प्राकृतत्वात् ह्रस्वत्वे द्विधातो–द्विप्रकारायां नैषेधिक्यां,नैषेधिकी चात्र निषदनस्थानं, तत्र प्रत्येकं द्वौ द्वौ वन्दनाय कलशौ वन्दनकलशौ–माल्यघटौ प्रज्ञप्तौ, ते च वन्दनकलशा वरकमलं प्रतिष्ठानं–आधारो येषां ते तथा, सुरभिवरवारिपरिपूर्णा, चन्दनकृतचर्चाकाः— चन्दनकृतोपरागाः, आविद्धः–आरोपिताः कण्ठे गुणो–रक्तसूत्ररूपो येषां ते तथा, कण्ठेकालवत् सप्तम्या अलुप्, तथा पद्ममुत्पलं च यथायोगं पिधानं येषां ते तथा, 'सव्वरयणामया' इत्यादि प्राग्वत्, अतिशयेन महान्तो 'महेन्द्रकुम्भसमानाः' कुम्भानामिन्द्र इन्द्रकुम्भो, राजदन्तादिदर्शनादिन्द्रशब्दस्य पूर्वनिपातः, महांश्चासाविन्द्रकुम्भश्च तस्य समाना महेन्द्रकुम्भसमाना–महाकलशप्रमाणाः यद्वा महीन्द्रो–राजा तदर्थं तस्य सम्बन्धिनो वा कुम्भा–अभिषेककलशाः तत्समानाः प्रज्ञप्ताः।

हे श्रमण ! हे आयुष्मन् !, 'विजयस्स णं दारस्स उभओपासिं दुहओ निसीहियाए दो दो नागदंतगा पन्नत्ता, ते णं नागदंतगा मुत्ताजलंतरूसिअहेमजालगवक्खजालखिंखिणीघंटाजाल-परिक्खित्ता अब्भुग्गया अभिनिसिट्ठा तिरिअं सुसंपग्गहिया अहेपन्नगद्धरूवा पन्नगद्धसंठाण-संठिया सव्वइरामया अच्छा जाव पडिरूवा महया २ गयदंतसमाणा पन्नत्ता समणाउसो !' विजयस्य द्वारस्येत्यादिपदयोजना प्राग्वत्, द्वौ द्वौ नागदन्तकौ–नर्कुटिकौ अङ्कुटिकावित्यर्थ प्रज्ञप्तौ, ते च नागदन्तका मुक्ताजालानामन्तरेषु यानि उच्छ्रितानि–लम्बमानानि हेमजालानि–हेममया दामसमूहा यानि च गवाक्षजालानि–गवाक्षाकृतिरत्नविशेषाः दामसमूहा यानि च किंकिणीघण्टा-जालानि–क्षुद्रघण्टासमूहास्तैः परिक्षिप्ताः–सर्वतो व्याप्ताः, अभिमुखमुद्गता अभ्युद्गता–अग्रिम-भागे मनागुन्नता इति भावः, येन तेषु माल्यदामानि सुस्थितानि भवन्ति, अभिमुखं–बहिर्भागाभिमुखं निसृष्टा–निर्गताः अभिनिसृष्टाः तिर्यग्–भित्तिप्रदेशैः सुष्ठु–अतिशयेन सम्यग्–मनागप्यचलनेन परिगृहीताः 'अहेपन्नगद्धरूवा' इति अधः–अधस्तनं यत् पन्नगस्य–सर्पस्यार्द्धं तस्येव रूपं–आकारो येषां ते तथा अधःपन्नगार्द्धवदतिसरला दीर्घाश्चेति भावः, एतदेव व्याचष्टे–'पन्नगार्द्धसंस्थानसंस्थिताः अधःपन्नगार्द्धसंस्थानसंस्थिताः सर्वात्मना वज्रमयाः 'अच्छा' इत्यादि प्राग्वत्, 'महया महया' इति अतिशयेन महान्तो गजदन्तसमानाः–गजदन्ताकाराः प्रज्ञप्ताः, हे श्रमण ! हे आयुष्मन् !।

"तेसु णं नागदंतएसु बहवे किण्हसुत्तवद्धवग्घारिअमल्लदामकलावा एवं नील० लोहिअए०

हालिद्द० सुक्किल्लसुत्तबद्धवग्घारिअमल्लदामकलावा, ते णं दामा तवणिज्जलंबूसगा सुवण्णपयरग मंडिया णाणामणिरयणविविहहारद्धहारउवसोभियसमुदया जाव सिरीइ अईव उवसोभेमाणा २ चिट्ठंति" –तेषु च नागदन्तकेषु बहवः कृष्णसूत्रबद्धा, अवलम्बिताः माल्यदा- मकलापाः–पुष्पमाला- समूहाः, एवं नीललोहितहारिद्रशुक्लसूत्रबद्धा अपि माल्यदामकलापा वाच्याः, तानि दामानि 'तवणिज्जलंबूसगा' इति तपनीयः–तपनीयमयो लम्बूसगो– दाम्नामग्रिमभागे प्रान्ते लम्बमानो मण्डनविशेषो गोलकाकृतिर्येषां तानि तपनीयलम्बूसकानि, तथा पार्श्वतः–सामस्त्येन सुवर्णप्र- तरकेण–सुवर्णपत्रकेण मण्डितानि सुवर्णप्रतरकमण्डितानि तथा नानारूपाणां मणीनां रत्नानां च ये विविधा विचित्रवर्णा हारा–अष्टादशसरिकास्तैरुपशोभितः समुदायो येषां तानि तथा –

– 'जाव सिरीए अईव उवसोभेमाणा २ चिट्ठंति' अत्र यावत्करणात् एवं परिपूर्ण पाठो द्रष्टव्यः "ईसिमण्णोण्णमसंपत्ता पुव्वावरदाहिणुत्तरागएहिं वाएहिं मंदायं २ एइज्जमाणा २ पलंबमाणा २ पझंझमाणा २ उरालेणं मणुण्णेणं मनहरेणं कण्णमणनिव्वुइकरेणं सद्देणं ते पएसे सव्वओ समंता आपूरेमाणा २ सिरिए अतीव उवसोभेमाणा २ चिट्ठंति' एतच्च पूर्वं पद्मवरवेदिकावर्णने व्याख्यातमिति न भूयो व्याख्यायते, "तेसि णं नागदंतगाण उवरिं दो दो नागदंतगा पन्नत्ता, ते णं नागदंतगा मुत्ताजालंतरूसिया तहेव जाव समणाउसो !, तेसु णं नागदंतएसु बहवे रययामया सिक्कया पन्नत्ता, तेसु णं रययामएसु सिक्कएसु बहूईओ वेरुलियामईओ धूवघडीओ पन्नत्ताओ, ताओ णं धूवघडीओ कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुआभिरामाओ सुगंधवरगंधिआओ गंधवट्टिभूयाओ ओरालेणं मणुण्णेणं घाणमणनिव्वुइकरेणं गंधेणं ते पएसे सव्वओ समंता आपूरेमाणीओ २ सिरीए अईव उवसोभेमाणा २ चिट्ठंति" अत्र व्याख्या–

तेषां नागदन्तानामुपरि अन्यौ द्वौ द्वौ नागदन्तकौ प्रज्ञप्तौ, ते च नागदन्तका मुत्तालंतरूसि- अहेमजालगवक्खजाल इत्यादि प्रागुक्तं सर्वं द्रष्टव्यं, यावद् गजदन्तसमानाः प्रज्ञप्ताः हे श्रमण ! हे आयुष्मन् !, 'तेसु णं'मित्यादि तेषु नागदन्तकेषु बहूनि रजतमयानि सिक्ककानि प्रज्ञप्तानि, तेषु रजतमयेषु सिक्ककेषु बह्व्यो वैडूर्यमय्यो धूपघटयः–धूपघटिकाः प्रज्ञप्ताः, ताश्च धूपघटिकाः कालागुरुश्च–कृष्णागुरु प्रवरकुन्दुरुक्कं च–चीडाभिधानो गन्धद्रव्यविशेषः तुरुष्कं च–सिल्हकं धूपश्च–दशाङ्गादि गन्धद्रव्यसंयोगज इति द्वन्द्वे तेषां सम्बन्धी यो 'मघमघंत'त्ति मघमघायमानो- ऽतिशयवान् उद्धुतः–इतस्ततो विप्रसृतो गन्धस्तेनाभिरामाः, उद्धुतशब्दस्य परनिपात आर्षत्वात्, सुष्ठु–शोभनो गन्धो येषां ते तथा, समासान्तविधेरनित्यत्वादत्रेदरूपस्य समासान्तस्याभावो यथा सुरभिगन्धेन वारिणेति, ते च ते वरगन्धाश्च–प्रधानवासास्तेषां गन्धः स आसु अस्तीति सुगन्धवरग- न्धगन्धिकाः 'अतोऽनेकस्वरा'दितीकप्रत्ययः अत एव गन्धवर्त्तिभूताः–सौरभ्यातिशयाद्गन्धद्रव्य- गुटिकाकल्पाः उदारेण स्फारेण मनोज्ञेन–मनोऽनुकूलेन, कथं मनोऽनुकूलत्वमत आह घ्राणमनोनि- र्वृतिकरेण गन्धेन तान्–प्रत्यासन्नान् प्रदेशान् आपूरयन्त्यः २ श्रिया अतीव शोभमानाः २ तिष्ठन्ति।

"विजयस्स णं दारस्स उभओ पासिं दुहओ निसीहियाए दो दो सालभंजियाओ पन्नत्ताओ, ताओ णं सालभंजियाओ लीलट्ठियाओ सुपइट्ठिआओ सुअलंकियाओ नानाविहरागवसणाओ रत्तावंगाओ असियकेसीओ मिउविसयपसत्यलक्खणसंवेल्लियग्गसिरयाओ नानामल्लपिणद्धाओ मुट्ठिगिज्झसुमज्झाओ आमेलगजमलजुअलवट्टिअअब्भुन्नयपीणरइअसंठियपयोहराओ ईसिं

असोगवरपायवसमुट्ठियाओ वामहत्थगहियग्गसालाओ ईसिं अद्धच्छिकडक्खचिट्ठिएहिं लूसेमाणीओविव चक्खुल्लोअणलेसहिं अन्नमन्न खिज्जमाणीओविव पुढवीपरिणामाओ सासयभावमुवगयाओ चंदननाओ चंदविलासिणीओ चंदद्धसमणिडालाओ चंदाहियसोमदंसणाओ उक्का इव उज्जोएमाणीओ विज्जुघणमरीचिसूरदिप्पंततेअअहिअयरसण्णिगासाओ सिंगारागारचारुवेसाओ पासादीयाओ तेअसा अईव २ उवसोभेमाणीओ चिट्ठंति' अत्र व्याख्या–

विजयस्य द्वारस्योभयोः पार्श्वयोरेकैकनैषेधिकीभावे द्विधातो–द्विप्रकारायां नैषेधिक्यां द्वे द्वे शालभञ्जिके–पञ्चाल्यौ प्रज्ञप्ते, ताश्च शालभञ्जिका लीलया–ललिताङ्गनिवेशरूपया स्थिताः लीलास्थिताः सुष्ठु–मनोज्ञतया प्रतिष्ठिताः सुप्रतिष्ठिताः सुष्ठु–अतिशयेन रमणीयतया अलंकृताः स्वलंकृताः, तथा 'नानाविहरागवसणाओ' इति नानाविधो–नानाप्रकारो रागो–रञ्जनं येषां तानि तादृशानि वसनानि–वस्त्राणि संवृततया यासां तास्तथा, रक्तोऽपाङ्गो–नयनप्रान्तं यासां ताः रक्तापाङ्गाः, असिताः–श्यामाः केशाः यासां ता असितकेशाः मृदवः–कोमला विशदा–निर्मलाः प्रशस्तानि–शोभनान्यस्फुटिताग्रत्वप्रभुतीनि लक्षणानि येषां ते प्रशस्तलक्षणाः, संवेल्लितं–संवृतं किञ्चिदाकुञ्चितं अग्रं येषां शेखरकरणात् ते संवेल्लिताग्राः शिरोजाः–केशाः यासां ता मृदुविशदप्रशस्तलक्षणसंवेल्लिताग्रशिरोजाः, नानारूपाणि माल्यानि–पुष्पाणि पिनद्धानि–आविद्धानि यथोचितस्थानेषु स्थापितानि यासां ता नानामाल्यपिनद्धाः, निष्ठान्तस्य परनिपातो भार्यादिदर्शनात्, मुष्टिग्राह्यं तनुतरत्वात् सुष्ठु मध्यं–मध्यभागो यासां ता मुष्टिग्राह्यसुमध्याः।

आमेलग० - आपीडः– शेखरकस्तस्य यमलं–समश्रेणीकं युगलं तद्वद्वर्तितौबद्धस्वभावावुपचितकठिनभावाविति भावः, अत एवाभ्युन्नतौ–तुङ्गौ पीनरतिदसंस्थितौपीवरसुखदसंस्थानौ पयोधरौ–स्तनौ यासां तास्तथा, तथा 'ईसिं ० इति, ईषत्–मनाक् अशोक वरपादपे समवस्थिता–आश्रिताः तथा वामहस्तेन गृहीतमग्रं शालायाः–शाखाया अर्थादशोकपादपस्य याभिस्ताः वामहस्तगृहीताग्रशाखाः, 'ईसिं ० ति ईषत्–मनाक् अर्द्ध–तिर्यग्वलितं अक्षि–चक्षुर्येषु कटाक्षरूपेषु चेष्टितेषु श्रृङ्गाराविर्भावकक्रियाविशेषेष्वित्यर्थ तैर्मुष्णन्त्य इव सुरजनमनांसीति गम्यं, तथा 'चक्खुल्लोअणलेसेहिं'' अन्नमन्नं–परस्परं चक्षुषां लोकनेन–अवलोकनेन लेशाः–संश्लेषास्तैः खिद्यमाना इव,

किमुक्तं भवति ?– एवं नाम ताः तिर्यग्वलिताः कटाक्षैः परस्परमवलोकमानाः अवतिष्ठन्ति यथा नूनं परस्परसौभाग्यासहनतः तिर्यग्वलिताक्षिकटाक्षैः परस्परं खिद्यन्त इवेति, तथा इति पृथ्वीपरिणामरूपाः शाश्वतभावमुपगता विजयद्वारवत्, चन्दराननाः–चन्द्रमुख्यः चन्द्रवन्मनोहरं विलसन्तीत्येवंशीलाश्चन्द्रविलासिन्यः चन्द्रार्द्धेन–अष्टमीचन्द्रेण समं–सदृशं ललाटं यासां ताः चन्द्रार्द्धसमललाटाः, चन्द्रादप्यधिकं सोमं–सुभगं कान्तिमद्दर्शनं–आकारो यासां ताः तथा, उल्का इव–गगनाग्निज्वाला इवोद्योतमानाः विद्युतो–मेघवह्नयस्तासां घना–निबिडा मरीचयस्तेभ्यो यच्च सूर्यस्य दीप्यमानं घनाघनावृतं तेजस्तस्मादधिकतरः सन्निकाशः–प्रकाशो यासां तास्तथा, श्रृङ्गारो–मण्डनभूषणाटोपस्तत्प्रधान आकारो यासां तास्तथा, चारुवेषाः–मनोहरनेपथ्याः, पश्चात्कर्मधारयः, अथवा श्रृङ्गारस्य–प्रथमरसस्यागारमिव–गृहमिव चारु वेषो यासां तास्तथा, प्रासादीया इत्यादिपचतुष्टयं प्राग्वत्।

''विजयस्स णं दारस्स उभओ पासिं दुहओ निसीहियाए दो दो जालकडगा पन्नत्ता, ते णं

जालकडगा सव्वरयणामया अच्छा सण्हा जाव पडिरूवा'' विजयस्येत्यादि प्राग्वत्, द्वौ द्वौ जालक ट्कौ-जालकाकीर्णौ रम्यसंस्थानौ प्रदेशविशेषौ प्रज्ञप्तौ, ते च जालकटकाः सर्वरत्नमयाः 'अच्छा' इत्यादि प्राग्वत्। ''विजयस्स णं दारस्स उभओपासिं दुहओ निसीहियाए दो दो घंटाओ पन्नत्ताओ, तासि णं घंटाणं अयमेयारूवे वण्णावासे पन्नत्ते, तंजहा-जंबूणयामईओ घंटाओ वइरामईओ लालाओ णाणामणिमया घंटापासगा तवणिज्जमईओ संकलाओ रययामईओ रज्जू, ताओ णं घंटाओ ओहस्सराओ मेहस्सराओ हंसस्सराओ कोंचस्सराओ सीहस्सराओ दुंदुभिस्सराओ नंदिस्सराओ नंदिघोसाओ मंजुघोसाओ सुस्सराओ सुस्सरघोसाओ उरालेणं मणुण्णेणं मनहरेणं कण्णमणनिव्वुइकरेणं सद्देणं जाव चिट्ठंति'' अक्षरगमनिका प्राग्वत्।

द्वे द्वे घण्टे प्रज्ञप्ते, 'तासि णं' तासां घण्टानामयमेतद्रूपो वर्णावासः प्रज्ञप्तः, तद्यथा-जाम्बूनदमय्यो घण्टाः, वज्रमय्यो लालाः नानामणिमया घण्टापार्श्वा-घण्टैकदेशविशेषाः, तपनीयमय्यः श्रृङ्खला यासु ता अवलम्बितास्तिष्ठन्ति, रजतमय्यो रज्जवः प्रतीताः ताश्च घण्टा ओघेन-प्रवेहणे स्वरो यासां तास्तथा, मेघस्येवातिदीर्घ स्वरो यासां तास्तथा, हंसस्येव मधुरः स्वरो यासां तास्तथा, एवं क्रौञ्चस्वराः, सिंहस्येव प्रभूतदेशव्यापी स्वरो यासां तास्तथा, एवं दुन्दुभिस्वराः, नन्दि-द्वादशतूर्यसंघातस्तद्वत्स्वरो यासां तास्तथा, नन्दिवत् घोषो-निनादो यासां तास्तथा, मञ्जु-प्रियः कर्णमनः-सुखदायी स्वरो यासां तास्तथा, एवं मञ्जुघोषाः, किंबहुना?, सुस्वराः सुस्वरघोषाः, अथवा सुष्ठु यत् स्वं-स्वकीयं अनन्तरोक्तं वर्णं श्रृङ्खलादिकं तेन राजन्ते इति सुस्वराः तथा शोभनौ स्वरघोषौ यासां ताः, 'उरालेण' मित्यादि प्राग्वत्।

''विजयस्स णं दारस्स उभो पासि दुहओ निसीहियाए दो दो वणमालाओ पन्नत्ताओ, ताओ णं वणमालाओ नानादुमलयकिसलयपल्लवसमाउलाओ छप्पयपरिभुज्जमाणसोभंतसस्सिरीयाओ पासादीयाओ ४'', द्वे द्वे वनमाले प्रज्ञप्ते, ताश्च वनमाला द्रुमाणां नानालतानां च ये किशलयरूपा अतिकोमला इत्यर्थः, पल्लवास्तैः समाकुलाः-सम्मिश्राः षट्पदैः परिभुज्यमानाः सत्य शोभमानाः षट्पदपरिभुज्यमानशोभमानाः, अत एव सश्रीकाः, ततः पूर्वपदेन विशेषणसमासः, ''विजयस्स णं दारस्स उभओ पासिं दुहओ निसीहियाए दो दो पकंठगा पन्नत्ता ते णं पकंठगा चत्तारि जोअणाइं आयामविक्खंभेणं दो जोअणाइं बाहल्लेणं सव्ववइरामया अच्छा जाव पडिरूवा'' इति, द्वौ द्वौ प्रकण्ठकौ प्रज्ञप्तौ, प्रकण्ठको नाम पीठविशेषः, चूर्णौ तु ''आदर्शवृत्तौ पर्यन्तावनतप्रदेशौ पीठौ प्रकण्ठा''विति, ते च प्रकण्ठकाः चत्वारि योजनान्यायामविष्कम्भेन- आयामविष्कम्भाभ्यां द्वे योजने बाहल्येन-पिण्डेन 'सव्ववइरामया' इति सर्वात्मना वज्रमयाः ते प्रकण्ठकाः 'अच्छा' इत्यादि विशेषणकदम्बकं प्राग्वत्।

''तेसि णं पकंठगाणं उवरिं पत्तेयं पत्तेयं पासायवडिंसगा पन्नत्ता, ते णं पासायवडिंसगा चत्तारि जोयणाइं उद्धं उच्चत्तेणं दो जोयणाइं आयामविक्खंभेणं अब्भुग्गयमूसिअपहसिया विविहमणिरयणभत्तिचित्ता वाउद्धुअविजयवेजयंतीपडागच्छत्तातिच्छत्तकलिया तुंगा गगनतलमणुलिहंतासिहरा जालंतररयणपंजरुम्मीलिअ इव मणिकणगथूभिआगा विअसियसयवत्तपोंडरीयतिलगरयणद्धचंदचित्ता अंतो बाहिं च सण्हा तवणिज्जवालुआपत्थडा सुहफासा सस्सिरीयरूवा पासाईया ४'' तेषां प्रकण्टकानामुपरि प्रत्येकं प्रासादावंसकाः प्रज्ञप्ताः, प्रासादावतंसको

नाम प्रासादविशेषः, तद्व्युत्पत्तिश्चैवं -प्रासादानामवतंसक इव–शेखरक इव प्रासादावतंसकः, ते च प्रासादावतंसकाः प्रत्येकं चत्वारि योजनान्यूर्द्ध्वोच्चत्वेन द्वे योजने आयामविष्कम्भाभ्यां 'अब्भुग्गये'त्यादि, अभ्युद्गता–आभिमुख्येन सर्वतो विनिर्गताः उत्कृताः–प्रबलतया सर्वासु दिक्षु प्रसृता या प्रभा तया सिता इव–बद्धा इव तिष्ठन्तीति गम्यते, अन्यथा कथमिव तेऽत्युच्चा निरालम्बास्तिष्ठन्तीति भावः, तथा 'विविहमणिरयणभत्तिचित्ता' इति विविधा–अनेकप्रकारा ये मणयः–चन्द्रकान्ताद्याः यानि च रत्नानि–कर्केतनादीनि तेषां भक्तिभि-विच्छित्तिभिश्चित्रा–नानारूपा आश्चर्यवन्तो वा, नानाविधमणिरत्नभक्तिचित्राः, तथा -

'वाउद्धुअ०' वातोद्धुता–वायुकम्पिता विजयः–अभ्युदयस्तत्संसूचिका वैजयन्तीनाम्न्यो याः पताकाः, अथवा विजया इति वैजन्तीनां पार्श्वकर्णिका उच्यन्ते, तत्प्रधाना वैजयन्त्यो विजयवैजयन्त्यः–पताकास्ता एव विजयवर्जिता वैजयन्त्यः, छत्रातिछत्राणि–उपर्युपरिस्थितान्यातपत्राणि तैः कलिता वातोद्धूतविजयवैजयन्तीपताकाछत्रातिछत्रकलिताः, तुङ्गाः–उच्चाः, उच्चस्त्वेन चतुर्योजनप्रमाणत्वात्, अत एव गगनतलं–अम्बरमनुलि- खन्ति–अभिलंघयन्ति शिखराणि येषां ते तथा, तथा जालानि–जालकानि गृहभित्तिषु लोके यानि प्रतीतानि, तदन्तरेषु विशिष्टशोभानिमित्तं रत्नानि येषु ते जालान्तररत्नाः, सूत्रे चात्र विभक्ति-लोपः प्राकृतत्वात्, तथा पञ्जरादुन्मीलिता इव–बहिष्कृता इव पञ्जरोन्मीलिताः, यथा किल किमपि वस्तु वंशादिमयप्रच्छादनविशेषाद्बहिष्कृतमत्यन्त मविनष्टच्छायंभवति, एवं तेऽपि प्रासादवतंसकाः इति भावः, अथवा जालान्तर-गतरत्न पञ्जरै रत्न समुदाय विशेषैरुन्मीलिता इव–उन्मिषितलोचना इवेत्यर्थः, मणिकनकस्तूपिका इति प्रतीतं, विकसितानि–विकस्वराणि शतपत्राणि पुण्डरीकाणि च–कमलविशेषाः द्वारादौ प्रतिकृतित्वेन स्थितानि तिलकरत्नानि- -भित्यादिषु पुण्ड्रविशेषाः अर्द्धचन्द्राश्च द्वारादिषु तैश्चित्रा–नानारूपा आश्चर्यभूता वा नानामणिमयदामालंकृता इति व्यक्तं अन्तर्बहिश्च श्लक्ष्णा–मसृणाः, तपनीयस्य–रक्तसुवर्णस्य वालुकास्तासां प्रस्तटः–प्रसतरः प्राङ्गणेषु येषां ते तथा, शेषं पूर्ववत्, "तेसि णं पासायवडिंसगाणं उल्लोआ पउमलयाभत्तिचित्ता असोग-लयाभत्तिचित्ता चंपगलयाभ० चूअलयाभ० वणलयाभ० वासंतिलयाभ० सव्वतवणिज्जमया जाव पडिरूवा" तेषां प्रासादावतंसकानामुल्लोकाः–उपरितनभागाः पद्मलता-भक्तिचित्राः अशोकलताभक्तिचित्राः चम्पकलताभक्तिचित्राः चूतलताभक्तिचित्राः वनल-ताभक्तिचित्राः वासन्तिकलताभक्तिचित्राः, सर्वात्मना तपनीयमयाः 'जाव पडिरूवा' इति विशेषणकदम्बकं प्राग्वत् ।

"तेसि णं पासायवडिंसगाणं अंतो बहुसमरमणिज्जे भूमिभागे पन्नत्ते, से जहानामए आलिंगपुक्खरेइ वा जाव मणीहिं उवसोभिए मणीणं वण्णो गंधो फासो अ णेअव्वो"त्ति, तेषां प्रासादावतंसकानामन्तर्बहुसमरमणीयो भूमिभागः प्रज्ञप्तः, "तेसि णं बहुसमरमणिज्जाणं भूमिभागाणं बहुमज्झदेसभाए पत्तेयं सीहासणाणं अयमेयारूवे वण्णावासे पन्नत्ते, तंजहा–रययामया सीहा सोवण्णिया पाया तवणिज्जमया चक्कला नानामणिमयाइं पायसीसगाइं जंबूणयामयाइं पत्ताइं वइरामया संधी नानामणिमयं चेव्वं ते णं सीहासणा ईहामिगउसभ जाव पउमलयाभत्तिचित्ता, संसारसारोवचिअविविहमणिरयणपायपीढा अत्थरयमिउमसूरगणवतयकुसंतलिच्चकेसर-पच्चत्थुयाभिरामा आईणगरूअबूरनवनीयतूलफासा सुविरइयरयत्ताणा ओअविअखोमदुगुल्लप-

द्दुपडिच्छायणा उवरिं रत्तंसुयसंवुडा सुरम्मा पासाइया ४'' इति ।

'तेसि णं'मित्यादि, तेषां प्रासादावतंसकानामन्तर्बहुसमरमणीयानां भूमिभागानां बहुमध्यदेशभागे प्रत्येकं सिंहासनं प्रज्ञप्तं, तेषां च सिंहासनानामयमेतद्रूपो वर्णावासो–वर्णकनिवेशः प्रज्ञप्तः, तद्यथा रजतमयाः सिंहाः, यैरुपशोभितानि सिंहासनानि, सौवर्णिकाः–सुवर्णमयाः पादाः, तपनीयमयानि चक्कलानि--पादानामधःप्रदेशाः भवन्ति, मुक्तानानामणिमयानि पादशीर्षकाणि–पादानामुपरितना अवयवविशेषाः, जाम्बूनदमयानि गात्राणि--ईषादीनि, वज्रमया–वज्ररत्नापूरिताः सन्धयो गात्राणां सन्धिमेलाः नानामणिमयं चेच्चं–व्यूतं विशिष्टं वानमित्यर्थः, तानि च सिंहासनानि ईहामृगऋषभजाव पद्मलता भक्तिचित्राणि, तथा सारसारैः–प्रधानप्रधानैर्विविधैर्मणिरत्नैरुपचितैः पादपीठैः सह यानि तानि तथा, प्राकृतत्वादुपचितशब्दस्यान्तरुपन्यासः ।

'अत्थरय०' इति आस्तरकं–आच्छादनं मृदु येषां मसूरकाणां तान्यास्तरकमृदूनि, विशेषणस्य परनिपातः प्राकृतत्वात्, नवा त्वक् येषां ते नवत्वचः कुशान्ता–दर्भपर्यन्ता नवत्वचश्च ते कुशान्ताश्च नवत्वक्कुशान्ताः–प्रत्यग्रत्वगदर्भपर्यन्तरूपा लिच्चानि–कोमलानि नम्रशीलानि च केसराणि, कचित् सिंहकेसरेतिपाठः तत्र सिंहकेसराणीव केसराणि मध्ये येषां मसूरकाणां तानि नवत्वक्कुशान्तलिच्चकेसराणि, सिंहकेसरेति पाठपक्षे एकस्य केसरशब्दस्य शाकपार्थिवादिदर्शनाल्लोपः, आस्तरकमृदुभिर्मसूरकैर्नवत्वककुशान्तलिच्चकेसरैः प्रत्यवस्तृतानि–आच्छादितानि सन्ति यानि अभिरामाणि तानि तथा, विशेषणपूर्वापरनिपातो यादृच्छिकः प्राकृतत्वात्, तथा 'आईणग०' इति आजिनकं–चर्ममयं वस्त्रं तच्च स्वभावादतिकोमलं स्यात् रूतं–कर्पासपक्ष्म बूरो–वनस्पतिविशेषः नवनीतं–म्रक्षणं तूलं–अर्कतूलं तेषामिव स्पर्शो येषां तानि तथा, सुविरचितं रजस्त्राणं प्रत्येकमुपरि येषां तानि तथा, परिकर्मितं यत् क्षौमं–दुकूलं कार्पासिकं वस्त्रं तत्प्रतिच्छादनं–रजस्त्राणस्योपरि द्वितीयमाच्छादनं येषां तानि तथा, रक्तांशुकेन–अतिरमणीयेन वस्त्रेण संवृतानि –आच्छादितानि रक्तांशुकसंवृतानि, अत एव सुरम्याणि, 'पासाईया'इत्यादि प्राग्वत् ।

''तेसि णं सीहासणाणं उप्पिं विजयदूसे पन्नत्ते, ते णं विजयदूसा संखकुंददगरयमयमहिअफेणपुंजसन्निकासा सव्वरयणामया अच्छा जाव पडिरूवा'' तेषां सिंहासनानामुपरि प्रत्येकं २ प्रतिसिंहासनमेकैकभावात् विजयदूष्यं–वितानकरूपो वस्त्रविशेषः प्रज्ञप्तः, तानि च विजयदूष्याणि शङ्खः प्रतीतः 'कुंदे' ति कुन्दकुसुमं दकरजः–उदककणाः अमृतस्य–क्षीरोदधिजलस्य मथितस्य यः फेनपुञ्जो–डिण्डीरोत्करस्तत्सन्निकाशानि–तत्समप्रभाणि, सर्वात्मना रत्नमयानि, शेषं प्राग्वत्, ''तेसि णं विजयदूसाणं बहुमज्झदेसभाए पत्तेयं पत्तेयं वइरामया अंकुसा प०, तेसु णं वइरामएसु अंकुसेसु पत्तेयं २ कुंभिक्का मुत्तादामा प०, ते णं कुंभिक्का मुत्तादामा अन्नेहिं चउहिं तदद्धुच्चत्तप्पमाणमित्तेहिं अद्धकुंभिक्केहिं मुत्तादामेहिं सव्वओ समंता संपरिक्खित्ता, ते णं दामा तवणिज्जलंबूसगा सुवण्णपयरगमंडिया जाव चिट्ठंति'' तेषां सिंहासनोपरिस्थितानां विजयदूष्याणां प्रत्येकं २ बहुमध्यदेशभागे अङ्कुशा अङ्कुशाकारा मुक्तादामावलम्बनाश्रयभूताः प्रज्ञप्ताः, तेषु च वज्रमयेष्वङ्कुशेषु प्रत्येकं प्रत्येकं कुम्भाग्रं–मगध- देशप्रसिद्धं कुम्भपरिमाणं मुक्तामयं मुक्तादाम प्रज्ञप्तं, अत्र वृत्त्यनुसारेण 'कुंभिक्के मुत्तादामे पन्नत्ते' इति पाठः सम्भाव्यते, कुम्भमानं तु उत्तरत्र चर्मरत्नछत्ररत्नसमुद्गकस्थितस्य चक्रिणो गृहपतिरत्नेन धान्यराशिसमर्पणाधिकारे वक्ष्यते,

तानि च कुम्भाग्राणि मुक्तादामानि प्रत्येकं प्रत्येकमन्यैश्चतुर्भिः कुम्भाग्रैर्मुक्तादामभिस्तद र्धोच्चत्वप्रमाणमात्रैः सर्वतः–सर्वासु दिक्षु समन्ततः–सामस्त्येन संपरिक्षिप्तानि, 'अद्धकुंभिक्केहिं' इत्यत्र अर्द्धशब्दः सूत्रे दृश्यमानोऽपि वृत्तावव्याख्यातत्वान्न व्याख्यात इति ।

'ते णं दामा' इत्यादि दामवर्णकसूत्रं पद्मवरवेदिकादामवर्णकवद् व्याख्येयं, अत्र सूत्रादर्शेषु क्वचित् 'तेसि णं पासायवडिंसगाणं उप्पिं अट्ठट्ठमंगलगा पन्नत्ता, सोत्थियसीहासन जाव छत्ताइछत्ता' इति सूत्रं दृश्यते, तदव्याख्यानं च व्यक्तमिति, 'विजयस्स णं दारस्स उभओपासिं दुहओनिसीहियाए दो दो तोरणा पन्नत्ता, ते णं तोरणा नानामणिमया तहेव जाव अट्ठट्ठमंगलगा झया छत्ताइछत्ता, तेसि णं तोरणाणं पुरओ दो दो सालभंजिआ पन्नत्ता जहेव हेट्ठा तहेव, तेसि णं तोरणाणं पुरओ दो दो नागदंतगा पन्नत्ता, ते णं नागदंतगा मुत्ताजालंतरूसिए तहेव, तेसु णं नागदंतएसु बहवे किण्हसुत्तवद्धवग्घारियमल्लदामकलावा जाव चिट्ठंति' सर्वं चैतत् सूत्रं प्राग्वत् ज्ञेयं, नवरं नागदन्तकसूत्रे उपरि नागदन्तका न वक्तव्याः अभावादिति, "तेसि णं तोरणाणं पुरओ दो दो हयसंघाडगा जाव उसहसंघाडगा सव्वरयणामया अच्छा जाव पडिरूवा, एवं पंतीओ वीहीओ मिहुणगा, तेसि णं तोरणाणं पुरओ दो दो पउमलयाओ जाव पडिरूवाओ ।

अत्र व्याख्या–तेषां तोरणानां पुरतो द्वौ द्वौ हयसंघाटकौ द्वौ द्वौ गजसंघाटकौ द्वौ द्वौ नरसंघाटकौ द्वौ द्वौ किंपुरुषसंघाटकौ द्वौ द्वौ महोरगसंघाटकौ द्वौ द्वौ गन्धर्वसंघाटकौ द्वौ द्वौ वृषभसंघाटकौ, एते च कथंभूता इत्याह–'सव्वरयणामया अच्छा सण्हा' इत्यादि प्राग्वत्, एवं पंक्तिवीथीमिथुनकान्यपि प्रत्येकं वाच्यानि, 'तेसि णं' मित्यादि, तेषां तोरणानां पुरतो द्वे द्वे पद्मलते यावत्करणात् द्वे द्वे नागलते द्वे द्वे अशोकलते द्वे द्वे चम्पकलते द्वे द्वे चूतलते द्वे द्वे वासन्तीलते द्वे द्वे कुन्दलते द्वे द्वे अतिमुक्तलते इति परिग्रहः, द्वे द्वे श्यामलते, एताश्च कथंभूता इत्याह–'निच्चं कुसुमियाओ' इत्यादि यावत्करणात् 'निच्चं मउलियाओ निच्चं लवइयाओ निच्चं थवइयाओ निच्चं गुलइयाओ निच्चं गुच्छियाओ निच्चं जमलियाओ निच्चं जुअलियाओ निच्चं विणमियाओ निच्चं पणमियाओ निच्चं सुविभत्तपडिमंजरिवडिंसगधरीओ निच्चं कुसुमियमउलियलवइयथवइयगुलइय गोच्छियविणमियपणमियसुविभत्तपडिमंजरिवडिंसगधरीओ' इति परिगृह्यते, अस्य व्याख्यानं प्राग्वत् ।

पुनः कथंभूता इत्याह–'सव्वरयणामया जाव पडिरूवा' इति अत्रापि यावत्करणात् 'अच्छा सण्हा' इत्यादिविशेषणकदम्बकपरिग्रहः, स च प्राग्वद्भावनीयः, "तेसि णं तोरणाणं पुरओ दो दो वंदनकलसा पन्नत्ता, ते णं वंदनकलसा वरकमलपइट्ठाणा तहेव सव्वरयणामया जाव पडिरूवा" इति, तेषां तोरणानां पुरतो द्वौ द्वौ वन्दनकलशौ प्रज्ञप्तौ, वर्णकश्च प्राक्तनो वक्तव्यः, "तेसि णं तोरणाणं पुरओ दो दो भिंगारगा पन्नत्ता वरकमलपइट्ठाणा तहेव सव्वरयणामया अच्छा जाव पडिरूवा मत्तगयमहामुहागिइसमाणा पन्नत्ता समणाउसो !' तेषां तोरणानां पुरतो द्वौ द्वौ भृङ्गारकौ कनकालुकापरपर्यायौ प्रज्ञप्तौ, तेषामिव–वन्दनकलशानामिव वर्णको वक्तव्यः, नवरं पर्यन्ते 'मत्तगयमहामुहागिईसमाणा पन्नत्ता समाउसो' इति वक्तव्यं, मत्तो यो गजस्तस्य महद्–अतिविशालं यन्मुखं तस्याकृति–आकारस्तत्समानाः प्रज्ञप्ताः हे श्रमण ! हे आयुष्मन् ! ।

"तेसि णं तोरणाणं पुरओ दो दो आदंसगा पन्नत्ता, तेसि णं अयमेयारूवे वण्णावासे पन्नत्ते, तंजहा–तवणिज्जमया पगंठगा वेरुलियमया छरुहा वइरामया वारगा नानामणिमया

वलक्खा अंकामया मण्डला अणोग्घसिअनिम्मलाए छायाए सव्वओ चेव समणुबद्धा चंदमंडलपडिनिकासा महया २ अद्धकायसमाणा पन्नत्ता समणाउसो !" तेषां तोरणानां पुरतो द्वौ द्वावादर्शकौ—दर्पणौ प्रज्ञप्तौ, तेषां चादर्शकानामयमेतद्रूपो वर्णावासः प्रज्ञप्तः, तद्यथा—तपनीयमया प्रकंठका—पीठविशेषाः वैडूर्यमयाः थासकाः—आदर्शगण्डप्रतिबद्धप्रदेशाः, आदर्शगण्डानां मुष्टिग्रहणयोग्याः प्रदेशा इति भावः, वज्रमया वारगा—गंडा इत्यर्थः, नानामणिमया वलक्षाः, वलक्षो नाम शृङ्खलादिरूपमवलम्बनं येन सम्बद्ध आदर्श सुस्थिरो भवति, तथा अङ्करत्नमयानि मण्डलानि यत्र प्रतिबिम्बसंभूति, तथा अवघर्षणमवघर्षितं भावे क्तप्रत्ययः भूत्यादिना निर्माज्ञनमित्यर्थः अवघर्षितस्याभावोऽनवघर्षितं तेन निर्मला अनवघर्षितनिर्मला तया छायया—कान्त्या समनुबद्धा—युक्ताः, तथा 'चंदमंडलपडिनिकासा' इति चन्द्रमण्डलसदृशाः 'महयामहया' इति अतिशयेन महान्तोऽर्द्धकायसमानां—आलोककव्यन्तरादिकायार्द्धप्रमाणा इत्यर्थः ।

"तेसि णं तोरणाणं पुरओ दो दो वइरनाभा थाला पन्नत्ता, ते णं अच्छतिच्छडियासालिसंदुलनहसंदट्ठपडिपुण्णाविव चिट्ठंति सवजंबूणयामया अच्छा जाव पडिरूवा महया महया रहचक्कसमाणा पन्नत्ता समणाउसो !" तेषां तोरणानां पुरतो द्वे द्वे वज्रमयो नाभि—मध्यभागो ययोस्ते वज्रनाभे स्थाले प्रज्ञप्ते, तानि च स्थालानि तिष्ठन्तीति क्रियायोगः, अच्छा—निर्मलाः शुद्धस्फटिकवत् त्रिच्छटिकाः—त्रीन् वारान् छटिता—निस्त्वचिता अत एव 'नखसंदष्टाः' नखाः—नखिकाः संदष्टा—मुसलादिभिश्चुम्बिता येषां ते तथा, अत्र निष्ठान्तस्य परनिपातः भार्योढादिदर्शनात्, अच्छैः त्रिच्छटितैः शालितन्दुलैः नखसंदष्टैः परिपूर्णानीव अच्छत्रिच्छटितशालितन्दुलनखसंदष्टपरिपूर्णानि, पृथिवीपरिणामरूपाणि तानि तथा स्थितानि केवलमेवमाकाराणीत्युपमा, तथा चाह—

'सव्वजंबूमयामया' इति सर्वात्मना जाम्बूनदमयानि 'अच्छा सण्हा' इत्यादि प्राग्वत्, 'महयामहया' इति अतिशयेन महान्ति रथचक्रसमानानि प्रज्ञप्तानि, हे श्रमण ! हे आयुष्मन् !
"तेसि णं तोरणाणं पुरओ दो दो पाईओ पन्नत्ताओ, ताओ णं पाईओ अच्छोदगपडिहत्थाओ नानाविहस्स फलहरिअस्स बहुपडिपुण्णाओ विव चिट्ठंति, सव्वरयणामईओ जाव पडिरूवाओ, महयामहया गोकलिंजचक्कसमाणाओ पन्नत्ताओ समणाउसो !" तेषां तोरणानां पुरतो द्वे द्वे पात्र्यौ प्रज्ञप्ते, ताश्च पात्र्योऽच्छेनोदकेन 'पडिहत्थाओ' त्ति परिपूर्णा देशीशब्दोऽयं, 'नानाविहस्स फलहरिअस्स बहुपडिपुण्णाओ विवे' ति अत्र षष्ठी तृतीयार्थे बहुवचने चैकवचनं प्राकृतत्वात्, नानाविधैः हरितफलैः बहुप्रभूतं प्रतिपूर्णा इव तिष्ठन्ति, न खलु तानि फलानि जलं वा किन्तु तथारूपाः शाश्वतभावमुपगताः पृथिवीपरिणामास्तत उपमानमिति, 'सव्वरयणामईओ' इत्यादि प्राग्वत्, 'महयामहया' इति अतिशयेन महत्यः, गवां चरणार्थं यद्वंशदलमयं महद्भाजनं डल्लेति प्रसिद्धं तद् गोकलिञ्जमुच्यते, तदेव चक्रं वृत्ताकारत्वात् तत्समानाः प्रज्ञप्ताः हे श्रमण ! हे आयुष्मन्

"तेसि णं तोरणाणं पुरओ दो दो सुपइट्ठगा पन्नत्ता, ते णं सुपइट्ठगा सुसव्वोसहिपडिपुण्णा नानाविहस्स पसाहणगभंडस्स बहुपडिपुण्णाविव चिट्ठंति, सव्वरयणामया अच्छा जाव पडिरूवा" तेषां तोरणानां पुरतो द्वौ द्वौ सुप्रतिष्ठकौ—आधारविशेषौ प्रज्ञप्तौ, ते च सुप्रतिष्ठकाः सुसर्वौषधिप्रतिपूर्णा नानाविधैः पञ्चवर्णैः प्रसाधनाभाण्डैश्च बहुपरिपूर्णा इव तिष्ठन्ति, अत्रापि तृतीयार्थे षष्ठी बहुवचने चैकवचनं प्राकृतत्वात्, उपमानभावना प्राग्वत्, 'सव्वरयणामय' इत्यादि प्राग्वत् "तेसि णं

तोरणाणं पुरओ दो दो मनोगुलियाओ पन्नत्ताओ, ताओ णं मनोगुलिआओ सव्ववेरुलियामईओ जाव पडिरूवाओ, तासु णं मणोगुलियासु बहवे सुवण्णरूप्पमया फलगा पन्नत्ता, तेसु णं सुवण्णरुप्पामएसु फलएसु बहवे वइरामया नागदंतगा पन्नत्ता, तेसु णं णागदंतएसु बहवे रययामया सिक्कगा पन्नत्ता'' सर्वमेतत् सूत्रं व्याख्यातपूर्वं, नवरं मनोगुलिकाः–पीठिका इति।

''तेसु णं रययामएसु सिक्कएसु बहवे वायकरगा पन्नत्ता, ते णं वायकरगा किण्हसुत्तसिक्कगगवच्छिआ जाव सुक्किल्लसुत्तसिक्कगगवच्छिया सव्ववेरुलियामया अच्छा जाव पडिरूवा'' इति, तेषु रजतमयेषु शिक्यकेषु बहवो वातकरका जलशून्याः करका इत्यर्थः प्रज्ञप्ताः, ते च वातकरकाः, आच्छादनं गवच्छः, गवच्छाः सञ्जाता एष्विति गवच्छिताः कृष्णसूत्रैः–कृष्णसूत्रमयैः गवच्छैरिति गम्यते शिक्यकेषु गवच्छिताः कृष्णसूत्रशिक्य- कगवच्छिताः, एवं नीलसूत्रशिक्यकगवच्छिता इत्याद्यपि भावनीयं, ते च वातकरकाः सर्वात्मना वैडूर्यमयाः, 'तेसि णं तोरणाणं पुरओ दो दो चित्ता रयणकरंडगा प०, से जहानामए रन्नो चाउरंतचक्कवट्टिस्स चित्ते रयणकरंडगे वेरुलिअमणिफालिअपडलपच्चोअडे साए पभाए ते पएसे सव्वओ समंता ओभासेइ उज्जोवेइ तावेइ पभासेइ एवामेव तेवि चित्ता रयणकरंडगा वेरुलिय जाव पभासिंति''त्ति,

अत्र व्याख्या– तेषां तोरणानां पुरतो द्वौ द्वौ चित्रौ–चित्रवर्णोपेतौ नानाश्चर्यकरौ वा रत्नकरण्डकौ प्रज्ञप्तौ, एतावेव दृष्टान्तेन भावयति–'से जहानामए' इत्यादि स यथा नाम राज्ञश्चतुरन्तचक्रवर्तिनः चतुर्षु दक्षिणोत्तरपूर्वापररुपेषु पृथिवीपर्यन्तेषु चक्रेण वर्तितुं शीलं यस्य स चातुरन्तचक्रवर्ती तस्य चित्रः–आश्चर्यभूतो नानामणिमयत्वेन नानावर्णो वा 'वेरुलिअमणिफालिअपडलपच्चोअडे'त्ति बाहुल्येन वैडूर्यमणिमयस्तथा स्फाटिकपटलप्रत्यवतटः–स्फाटिकपटलमयाच्छादनः स्वकीयया प्रभया तान् प्रदेशान् सर्वतः सर्वासु दिक्षु समन्ततः –सामस्त्येन अवभासयति, एतदेव पर्यायत्रयेण व्याचष्टे–उद्योतयति तापयति प्रभासयति, 'एवमेवे'त्यादि सुगमं, 'तेसि णं तोरणाणं पुरओ दो दो हयकंठा पन्नत्ता जाव उसभकंठा पन्नत्ता सव्वे रयणामया जाव पडिरूवा'' तेषां तोरणानां पुरतो द्वौ द्वौ हयकण्ठौ–हयकण्ठप्रमाणौ रत्नविशेषौ रत्नविशेषौ प्रज्ञप्तौ, एवं गजनरकिन्नर- किंपुरुषमहोरगगान्धर्ववृषभकण्ठा अपि वाच्याः, तथा चाह–'सव्वे रयणामया' इति, सर्वे रत्नमया इति रत्नविशेषरूपाः 'अच्छा'इत्यादि प्राग्वत्।

''तेसि णं तोरणाणं पुरओ दो दो पुप्फचंगेरीओ पन्नत्ताओ, एवं मल्लचुण्णगंधवत्थाभरणसिद्धत्थगलोमहत्थगचंगेरीओ सव्वरयणामईओ अच्छाओ जाव पडिरूवाओ'' इति, तेषां तोरणानां पुरतो द्वे द्वे पुष्पचङ्गेर्यौ प्रज्ञप्ते, एवं माल्यचूर्णगन्धवस्त्रभरणसिद्धार्थकलोमहस्तकचङ्गेर्योऽपि वक्तव्याः, एताश्च सर्वा अपि सर्वात्मना रत्नमयाः 'अच्छा' इत्यादि प्राग्वत्, ''तेसि णं तोरणाणं पुरओ दो दो पुप्फपडलगाइं जाव लोमहत्थगपडलगाइं सव्वरयणामयाइं अच्छाइं जाव पडिरूवाइं'' एवं पुष्पादिचङ्गेरीवत् पुष्पादीनामष्टानां पडलकान्यपि द्विद्विसंख्याकानि वाच्यानि,
''तेसि णं तोरणाणं पुरओ दो दो सीहासणाइं पन्नत्ताइं, तेसि णं सीहासणाणं अयमेयारूवे वण्णवासे पन्नत्ते, तहेव जाव पासादीया ४'' इति, तेषां तोरणानां पुरतो द्वे द्वे सिंहासने प्रज्ञप्ते, तेषां च सिंहासनानां वर्णकः प्रागुक्तो निरवशेषो वक्तव्यो यावद्दामवर्णनं।

'तेसि णं तोरणाणं पुरओ दो दो रुप्पच्छदा छत्ता पन्नत्ता, ते णं छत्ता वेरुलियविमलदंडा

जंबूणयकण्णिया वइरसंधी मुत्ताजालपरिगया अट्ठसहस्सवरकंचणसलागा दद्दरमलयसुगंधिसव्वो-उयसुरहिसीयलच्छाया मंगलभत्तिचित्ता चंदागारोवमा' इति, अत्र व्याख्या–तेषां तोरणानां पुरतो द्वे द्वे रूप्यच्छदे–रजतमयाच्छादने छत्रे प्रज्ञप्ते, तानि च छत्राणि वैडूर्यरत्नमयविमलदण्डानि जाम्बूनदं–सुवर्णं तन्मयी कर्णिका येषां तानि जाम्बूनदकर्णिकानि, तथा वज्रसन्धीनि–वज्ररत्ना-पूरितदण्डशलाकासन्धीनी मुक्ताजालपरिगतानि अष्टौ सहस्राणि–अष्टसहस्रसंख्याका वरकाञ्चन-शलाका–वरकाञ्चनमय्यः शलाका येषु तानि अष्टसहस्रवरकांचनशलाकानि, तथा 'दद्दरमलय-सुगंधिसव्वोउयसुरहिसीअलच्छाया' इति दर्दरः–चीवरावनद्धं कुण्डिकादिभाजनमुखं तेन गालिताः तत्र पक्वा वा ये मलय इति–मलयोद्भवं श्रीखण्डं तत्सम्बन्धिनः सुगन्धयो गन्धवासास्तद्वत्सर्वेषु ऋतुषु सुरभि शीतला च छाया येषा तानि तथा, 'मंगलभत्तिचित्ता' मङ्गलानां–स्वस्तिकादीनां अष्टानां भक्त्या–विच्छित्या चित्रं–आलेखो येषां तानि तथा, 'चंदागारोवमा' इति चन्द्राकारः–चन्द्राकृति सा उपमा येषां तानि तथा, चन्द्रमण्डलवत् वृत्तानीति भावः ।

"तेसि णं तोरणाणं पुरओ दो दो चामराओ पन्नत्ताओ, ताओ णं चामराओ चंदप्पभवइ-रवेरुलियणाणामणिरयणखचियविचित्तदंडाओ सुहुमरययदीहवालाओ संखंककुंददगरय-अमयमहिअफेणपुंजसण्णिगासाओ अच्छाओ जाव पडिरूवाओ" तेषां तोरणानां पुरतो द्वे द्वे चामरे प्रज्ञप्ते, सूत्रे चामरशब्दस्य स्त्रत्वं प्राकृतत्वात्, तानि च चामराणि ,चंद० इति चन्द्रप्रभः–चन्द्रकान्तो वज्रं वैडूर्यं च प्रतीतं चन्द्रप्रभवज्रवैडूर्याणि शेषाणि च नानामणिरत्नानि खचितानि येषु दण्डेषु ते तथा, एवंरूपाश्चित्रा–नानाकारा दण्डा येषां चामराणां तानि तथा, सूक्ष्मा रजतमया दीर्घा वाल येषां तानि तथा, संख० इति शङ्खः–प्रतीतः अङ्को –रत्नविशेषः 'कुंदे'ति कुन्दपुष्पं दकरजः–उदककणाः अमृतमथितफेनपुञ्जाः–क्षीरोदजलमथनसमुत्था फेनपुंजास्तेषामिव सन्निकाशः–प्रभा येषां तानि तथा, "अच्छाओ इत्यादि प्राग्वत् ।

"तेसि णं तोरणाणं पुरओ दो दो तेल्लसमुग्गया पन्नत्ता कोट्ठसमुग्गा पत्तसमुग्गा चोअसमुग्गा तगरसमुग्गा एलासमुग्गा हरिआलसमुग्गा हिंगुलयसमुग्गा मणोसिलासमुग्गा अंजणसमुग्गा सव्वरयणामया अच्छा जाव पडिरूवा" तैषां तोरणानां पुतो द्वौ द्वौ तैलसमुद्गकौ–सुगन्धितैलाधार-विशेषौ प्रज्ञप्तौ, एवं कोष्ठादिसमुद्गका अपि वाच्याः, नवरं कोष्ठ–गन्धद्रव्यविशेषः पत्रं–तमालपत्रादि चोअं–त्वग्नामकं गन्धद्रव्यं अञ्जनं–सौवीराञ्जनं, अत्र सङ्ग्रहणिगाथा–

॥ १ ॥ "तेल्ले कोट्ठ समुग्गे पत्ते चोए अ तगर एला य ।
हरिआले हिंगुलए मणोसिला अंजणसमुग्गे ॥"

इति, एते सर्वेऽपि समुद्गकाः सर्वात्मना रत्नमया इत्यादि प्राग्वत्, "विजए णं दारे अट्ठसयं चक्कज्झयाणं अट्ठसयं मिगज्झयाणं अट्ठसयं गरुलज्झयाणं अट्ठसयं विगज्झयाणं अट्ठसयं छत्तज्झयाणं अट्ठसयं पिच्छज्झयाणं अट्ठसयं सउणिज्झयाणं अट्ठसयं सिंहज्झयाणं अट्ठसयं वसहज्झयाणं अट्ठसयं सेआणं चउविसाणवरनागकेऊणं एवामेव सपुव्वावरेणं विजयद्वारे असीयं केउसहस्सं भवतित्तिमक्खायं" अत्र व्याख्या–तस्मिन् विजयद्वारे अष्टशतं–अष्टाधिकं शतं चक्रध्वजानां चक्रालेखरूपचिन्होपेतानां ध्वजानां, एवं मृगगरुडवृकच्छत्रपिच्छशकुनिसिंहवृषभ-चतुर्दन्तहस्तिध्वजानामपि प्रत्येकमष्टशतमष्टशतं वक्तव्यं, एवामेव– अनेन प्रकारेण सह पूर्वं

यस्य येन वा सपूर्वं सपूर्वं च तदपरं च २ तेन सपूर्वापरेण पूर्वापरसमुदायेनेत्यर्थः

– विजयद्वारेऽशीतं—अशीत्यधिकं केतुसहस्रं भवतीत्याख्यातं, मयाऽन्यैश्च तीर्थकृद्भिरिति शेषः, "विजयस्स णं दारस्स पुरओ नव भोमा पन्नत्ता, तेसि णं भोमाणं अंतो बहुसमरमणिज्जा भूमिभागा पन्नत्ता जाव मणीणं फासो, तेसि णं भोमाणं उप्पिं उल्लोआ पउमलया जाव सामलयाभत्तिचित्ता जाव सव्वतवणिज्जमया अच्छा जाव पडिरूवा, तेसि णं भोमाणं बहुमज्झदेसभाए जे से पंचमे भोमे तस्स णं भोमस्स बहुमज्झदेसभाए महं एगे सीहासणे पन्नत्ते, सीहासणवण्णओ, विजयदूसे जाव अंकुसे जाव दामा चिट्ठंति" अत्र व्याख्या–

विजयस्य द्वारस्य पुरतो नव भौमानि—विशिष्टानि स्थानानि प्रज्ञप्तानि, तुर्याङ्गे तु 'विजयस्स णं दारस्स एगमेगाए बाहाए णव णव भोमा पन्नत्ता' इति संख्याशब्दस्य पुरतो वीप्सावचनेन उभयबाहासत्कमीलनेनाष्टादशसंख्या अङ्कतो भौमानां सम्भाव्यते, तत्त्वं तु सातिशयजनगम्यमिति तेषां च भौमानां भूमिभागः उल्लोकाश्च पूर्ववद्वक्तव्याः, तेषां च भौमानां बहुमध्यदेशभागे यत्पञ्चमं भौमं तस्य बहुमध्यदेशभागे विजयद्वाराधिपविजयदेवयोग्यं सिंहासनं प्रज्ञप्तं, तस्य च सिंहासनस्य वर्णनं विजयदूष्यकुम्भाग्रमुक्तादामवर्णनं च प्राग्वत् 'उत्तरपुरच्छिमेणं एत्थ णं विजयस्स देवस्स चउण्हं सामानिअसाहस्सीणं चत्तारि भद्दासणसाहस्सीओ पन्नत्ताओ, तस्स णं सीहासनस्स दाहिणपुरच्छिमेणं एत्थ णं विजअस्स देवस्स अब्भिंतरिआए परिसाए अट्ठण्हं देवसाहस्सीणं अट्ठ भद्दासणसाहस्सीओ पन्नत्ताओ, तस्स णं सीहासणस्स दाहिणेणं एत्थ णं विजयस्स देवस्स अब्भिंतरिआए परिसाए अट्ठण्हं देवसाहस्सीणं अट्ठ भद्दासणसाहस्सीओ पन्नत्ताओ, तस्स णं सीहासणस्स दाहिणेणं एत्थ णं विजयस्स देवस्स मज्झिमियाए परिसाए दसण्हं देवसाहस्सीणं दस भद्दासणसाहस्सीओ पन्नत्ताए, तस्स णं सीहासणस्स दाहिणपच्चच्छिमेमं एत्थ णं विजयस्स देवस्स बाहिरियाए परिसाए बारसण्हं देवसाहस्सीणं बारस भद्दासणसाहस्सीओ पन्नत्ताओ, तस्स णं सीहासणस्स पुरच्छिमेणं दाहिणेणं पच्चच्छिमेणं उत्तरेणं एत्थ णं विजयस्स देवस्स सोलसआयरक्खदेवसाहस्सीणं सोलस भद्दासणसाहस्सीओ पन्नत्ताओ, तंजहा—पुरच्छिमेणं चत्तारि साहस्सीओ, एवं चउसुवि जाव उत्तरेणं चत्तारि साहस्सीओ, अवसेसेसु भोमेसु पत्तेयं पत्तेयं सीहासणं सपरिवारं पन्नत्तं" अत्र व्याख्या–

तस्य सिंहासनस्य 'अवरोत्तरेणं'ति अपरोत्तरस्यां वायव्यकोणे इत्यर्थः, 'उत्तरेणं'ति उत्तरस्यां दिशि उत्तरपूर्वस्यां च—ईशानकोणे सर्वसङ्कलनया तिसृषु दिक्षु अत्र विजयदेवस्य चतुर्णां समाने—विजयदेवसदृशे आयुर्द्युतिविभवादौ भवाः सामानिकास्तेषां 'साहस्सीणं'ति प्राकृतत्वाद् दीर्घत्वं स्त्रीत्वं च सहस्राणां चत्वारि भद्रासनसहस्राणि प्रज्ञप्तानि, तस्य च सिंहासनस्य पूर्वस्यामत्र विजयदेवस्य चतसृणामग्रमहिषीणां, इह 'कृताभिषेका देवी महिषी'त्युच्यते, सा च स्वपरिवारभूतानां सर्वासामपि देवीनामग्रा—प्रधाना, ताश्च ता महिष्यश्च अग्रमहिष्यस्तासामग्रमहिषीणां प्रत्येकमेकैकसहस्रसंख्यदेवीपरिवारसहितानां चत्वारि भद्रासनसहस्राणि प्रज्ञप्तानि, तस्य सिंहासनस्य दक्षिणपूर्वस्यामाग्नेय्यां विदिशीत्यर्थः, अत्र विजयस्य देवस्य अभ्यन्तरिकायाः पर्षदः—अभ्यन्तरपर्षद्रूपाणामष्टानां देवसहस्राणां योग्यान्यष्ट भद्रासनसहस्राणि प्रज्ञप्तानि, तस्य सिंहासनस्य दक्षिणस्यां दिशि अत्र विजयदेवस्य मध्यमिकायाः पर्षदो दशानां देवसहस्राणां योग्यानि दश

भद्रासनसहस्राणि प्रज्ञप्तानि, तस्य सिंहासनस्य दक्षिणापरस्यां दिशि नैऋत्यां विदिशीत्यर्थः, अत्र विजयदेवस्य बाह्यपर्षदो द्वादशानां देवसहस्राणां योग्यानि द्वादश भद्रासनसहस्राणि प्रज्ञप्तानि, ननु केऽभ्यन्तरमध्यबाह्यपर्षत्का देवाः यैरभ्यन्तरपर्षदादिव्यवहारो भवति ?, उच्यते।

अभ्यन्तरपर्षत्का देवा आहूता एव स्वामिनोऽन्तिकमायान्ति न त्वनाहूताः, परमगौरवपात्रत्वात्, मध्यमपर्षत्कास्तु आहूता अपि अनाहूता अपि स्वामिनोऽन्तिकमायान्ति, मध्यमप्रतिपत्तिविषयत्वात्, बाह्यपर्षत्काः पुनरनाहूताः स्वामिनोऽन्तिकमायान्ति, तेषामाकारणलक्षणगौरवानर्हत्वात्, अथवा यय सहोत्तममतित्वात् पर्यालोच्य विजयदेवः कार्यं विदधाति सा गौरवे पर्यालोचनायां चात्यन्तमभ्यन्तराऽस्तीत्यभ्यन्तरिका, यस्याः पुरोऽभ्यन्तरपर्षदा सह पर्यालोच्य दृढीकृतं पदं गुणदोषकथनतः प्रपञ्चयति सा गौरवे पर्यालोचनायां च मध्यमे भावेऽस्तीति मध्यमिका, यस्याश्च पुरः प्रथमपर्षदा सह पर्यालोचितं द्वितीयपर्षदा सह प्रपञ्चितं पदमाज्ञाप्रधानः सन्निदं विधेयमिदं न विधेयं वेति प्ररूपयति सा गौरवात्पर्यालोचनाञ्च बहिर्भावेऽस्तीति बाह्या, तस्य सिंहासन्य पश्चिमेन—पश्चिमायां दिशि अत्र विजयस्य देवस्य सप्तानामनीकाधिपतीनां सप्त भद्रासनानि प्रज्ञप्तानि, अथ परिक्षेपान्तरमाह— तस्य सिंहासनस्य पूर्वस्यां दक्षिणस्यां पश्चिमाया उत्तरस्यां एवं चतसृषु दिक्षु अत्र विजयस्य देवस्य षोडशानामात्मरक्षकदेवसहस्राणां योग्यानि षोडश भद्रासनसहस्राणि प्रज्ञप्तानि, तद्यथा—पूर्वस्यां चत्वारि भद्रासनसहस्राणि, एवं चतसृष्वपि दिक्षु यावदुत्तरस्यां चत्वारि भद्रासनसहस्राणि प्रज्ञप्तानीति, एतद् व्याख्यानं साम्प्रतदृश्यमानजीवाभिगमसूत्रबहवादर्शपाठानुसारि, वृत्तौ तु तस्य सिंहासनस्य सर्वतः—सर्वासु दिक्षु समन्ततः—सामस्त्येनेत्यादि व्याख्यानमस्ति, तत्पाठान्तरापेक्षयेति सम्भाव्यते, अवशेषेषु भौमेषु पूर्वापरमीलनेनाष्टसङ्ख्यकेषु प्रत्येकं प्रत्येकं सिंहासनं सपरिवारं सामानिकादिदेवयोग्यभद्रासनरूपपरिवारसहितं प्रज्ञप्तं, 'विजयस्स णं दारस्स उवरिमागारे सोलसविहेहिं रयणेहिं उवसोभिए, तंजहा—

रयणेहिं १ वइरेहिं २ वेरुलिएहिं ३ लोहिअक्खेहिं ४ मसारगल्लेहिं ५ हंसगब्भेहिं ६ पुलएहिं ७ सोगंधिएहिं ८ जोइरसेहिं ९ अंकेहिं १० अंजणेहिं ११ रयएहिं १२ जयारूवेहिं १३ अंजणपुलएहिं १४ फलिहेहिं १५ रिट्ठेहिं १६'' विजयस्य द्वारस्य उपरितन आकार—उत्तरङ्गादिरूपः, षोडशविधैः रत्नैरुपशोभितः, तद्यथा—रत्नैः १ वज्रैः २ वैडूर्यैः ३ लोहिताक्षैः ४ मसारगल्लैः ५ हंसगर्भैः ६ पुलकैः ७ सौगन्धिकैः ८ ज्योतीरसैः ९ अङ्कैः १० अञ्जनैः ११ रजतैः १२ जातरूपैः १३ अञ्जनपुलकैः १४ स्फटिकैः १५ रिष्ठैः १६। तत्र रत्नानि सामान्यतः कर्केतनादीनि, वज्रादीनि तु रत्नविशेषाः प्रतीता एव, नवरं रजतं—रूप्यं जातरूपं—सुवर्णं, एते अपि रत्ने एवेति, ''विजयस्स णं दारस्स उवरिं अट्ठट्ठमंगलगा पन्नत्ता, तंजहा—सोत्थिय सिरिवच्छ जाव दप्पणा सव्वरयणामया अच्छा जाव पडिरूवा'' 'विजयस्स ण'मित्यादि, विजयस्य द्वारस्योपरि अष्टावष्टौ स्वस्तिकादीनि मङ्गलकानि प्रज्ञप्तानि, 'तद्यथे'त्यादिना तान्येवोपदर्शयति, 'सव्वरयणामया'इत्यादि प्राग्वत्, ''विजयस्स णं दारस्स उप्पिं बहवे किण्हचामरज्झया जाव सव्वरयणामया अच्छा जाव पडिरूवा, विजयस्स णं दारस्स उप्पिं बहवे छत्ताइछत्ता तहेव'' विजयस्स णं दारस्स उप्पिं बहवे किण्हचामरज्झया'' इत्यादि सूत्रपाठः जीवाभिगम- सूत्रबह्वादर्शेषु दृष्टत्वाल्लिखितोऽस्ति, स च पूर्ववद् व्याख्येयः, वृत्तौ तु केनापि हेतुना व्याख्यातो नास्तीति।

'से केणट्ठेणं भंते ! एवं वुच्चइ विजए दारे २ ?, गोयमा ! विजए णं दारे विजए नामं देवे महिड्ढिए महज्जुईए महाबले महायसे महासोक्खे पलिओवमठिइए परिवसइ, से णं तत्थ चउण्हं सामानियसाहस्सीणं चउण्हं अग्गमहिसीणं सपरिवाराणं तिण्हं परिसाणं सत्तण्हं अनीयाणं सत्तण्हं अणियाहिवईणं सोलसण्हं आयरक्खदेवसाहस्सीणं विजयस्स णं दारस्स विजयाए अ रायहाणीए अन्नेसिं च बहूणं विजयारायहाणीवत्थव्वाणं देवाणं देवीण य आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे दिव्वाइं भोगभोगाइं भुंजमाणे विहरइ, से तेणट्ठेणं एवं वुच्चइ विजए दारे २'' इति ।

अथ केनार्थेन भदन्त ! एवमुच्यते-विजयद्वारे विजयद्वारमिति ? भगवानाह-गौतम ! विजये द्वारे विजयो नाम प्राकृतत्वादव्ययत्वाद्वा नामशब्दात्परस्य टावचनस्य लोपस्ततोऽयमर्थ-प्रवाहतः-अनादिकालसन्ततिपतितेन विजय इति नाम्ना देवो महर्द्धिको-महती ऋद्धि-भवन-परिवारादिका यस्यासौ महर्द्धिकः, 'महाद्युतिकाः' महती द्युति शरीरगता आभरणगता च यस्यासौ महाद्युतिकः, तथा महत् बलं-शारीरः प्राणो यस्य स महाबलः, तथा महत् यशः-ख्यातिर्यस्यासौ महायशाः, तथा 'महेसक्खे' इति महान् ईश इत्याख्या-प्रसिद्धिर्यस्यासौ महेशाख्यः, अथवा ईशनं ईशो भावे घञ्प्रत्ययः एश्वर्यमित्यर्थः, 'ईश एश्वर्ये' इति वचनात्, तत ईशं-एश्वर्यं आत्मनः ख्याति-अन्तर्भूतण्यर्थतया ख्यापयति-प्रथयति स ईशाख्यः महांश्चासावीशाख्यश्च महेशाख्यः, कचिन्महासोक्खे इति पाठः, तत्र महत्सौख्यं-प्रभूतसद्वेद्योदयवशाद्यस्य स महासौख्यः, पल्योप-मस्थितिकः परिवसति, स च तत्र चतसृणां सामानिकसहस्राणां चतसृणामग्रमहिषीणां सपरिवाराणां प्रत्येकमेकैकसहस्रसंख्यपरिवारसहितानां तिसृणामभ्यन्तरमध्यमबाह्यरूपाणां यथाक्रममष्ट-दशद्वादशदेवसहस्रसङ्ख्याकानां पर्षदां, सप्तानीकानां-हयानीकगजानीकरथानीकपदात्यनीक-महिषानीकगन्धर्वानीकनाट्यानीकरूपाणां सप्तानामनीकाधिपतीनां षोडशानामात्मरक्षकसहस्राणां विजयस्य द्वारस्य विजयायाश्च राजधान्या अन्येषां च बहूनां विजयराजधानीवास्तव्यानां देवानां देवीनां च अधिपतेः कर्म आधिपत्यं रक्षा इत्यर्थः, सा च रक्षा सामान्येनाप्यात्मरक्षकेणेव क्रियते तत आह-पौरपत्यं पुरस्य पति पुरपति तस्य कर्म पौरपत्यं, सर्वेषामग्रेसरत्वमिति भावः, तच्चाग्रेसरत्वं नायकत्वमन्तरेणापि स्वनायकनियुक्तथाविधगृहचिन्तकसामान्यपुरुषस्येव ।

ततो नायकत्वप्रतिपत्त्यर्थमाह-'स्वामित्वं' स्वमस्यास्तीति स्वामी तद्भावः स्वामित्वं नायकत्वमित्यर्थः, तदपि च नायकत्वं पोषकत्वमन्तरेणापि भवति यथा मृगयूथाधिपतेर्मृगस्य, तत आह-भर्तृत्वं-पोषकत्वं, 'डुभृञ् धारणपोषणयो'रिति वचनात्, अत एव महत्तरकत्वं, महत्तरकत्वं कस्यचिदाज्ञाविकलस्यापि भवति यथा कस्यचिद्वणिजः स्वदासदासीवर्गं प्रति, तत आह-आज्ञया ईश्वरः आज्ञेश्वरः सेनायाः पति सेनापति आज्ञेश्वरश्चासौ सेनापतिश्च आज्ञेश्वर-सेनापति तस्य कर्म आज्ञेश्वरसेनापत्यं स्वसैन्यं प्रत्यद्भुतमाज्ञाप्राधान्यमित्यर्थं कारयन् अन्यैर्नियुक्तैः पुरुषैः पालयन् स्वयमेव, महता 'रवेणे'ति योगः 'अहय'त्ति आख्यानकप्रतिबद्धानि यदिवा अहतानि-अव्याहतानि नित्यानुबन्धानीति भावः, ये नाट्यगीते नाट्यं-नृत्यं गीतं-गानं यानि च वादितानि तन्त्रीतलतालत्रुटितानि, तन्त्री-वीणा तलो-हस्ततलस्तालः-कंशिका त्रुटितानि-शेषतूर्याणि, तथा यश्च घनमृदङ्गो-मेघसदृशध्वनिर्मुरजः पटुना पुरुषेण प्रवादितस्तत

एतेषां द्वन्द्वस्तेषां रवेण—नादेन सहकारिभूतेन दिवि भवान् दिव्यान् अतिप्रधानानिति, तथा भोगार्हा भोगाः -शब्दादयो भोगभोगाः, अथवा भोगेभ्य—औदारिककायभावेभ्योऽतिशयिनो भोगा भोगभोगास्तान् भुञ्जानः—अनुभवन् विहरति—आस्ते, अत्र व्यत्ययः प्राकृतत्वात्, 'से एएणट्ठेण'-मित्यादि, तत एतेनार्थेन गौतम ! एवमुच्यते—विजयं द्वारं विजयं द्वारमिति ।

विजयाभिधानदेवस्वामिकत्वाद्विजयो देवः स्वामित्वेनास्यास्तीति वा अभ्रादित्वादप्रत्यये विजयमिति भावः, देवस्य विजयाभिधानता च यो यः पूर्वद्वाराधिपतिरुत्पद्यते देवः स स तत्सामानिकादिभिर्देवैः विजयो विजय इत्याहूयते, तत्स्थितिप्रतिपादके कल्पपुस्तके तथाभिधानात्, "अदुत्तरं च णं गोअमा ! विजयस्स णं दारस्स सासए नामधिज्जे पन्नत्ते, जं न कयाइ नासि न कयाइ नत्थि न कयाइ न भविस्सइ जाव अवट्ठिए निच्चे विजए दारे" अथापरमपि विजयद्वारनामप्रवृत्तौ कारणं गौतम ! विजयस्य द्वारस्य विजयमिति नामधेयं शाश्वतम्—अनादिसिद्धं प्रज्ञप्तं, शेषं सुगमं, एतत्सूत्रं वृत्तावदृष्टव्याख्यानमपि जीवाभिगमसूत्रबहुादर्शेषु दृष्टत्वाल्लिखितमस्तीति

अथ राजधानीवर्णको यथा—'कहि णं भंते ! विजयस्स देवस्स विजया नामं रायहाणी पन्नत्ता ?, गोयमा ! विजयस्स दारस्स पुरत्थिमं तिरिअमसंखिज्जे दीवसमुद्दे वीईवइत्ता अन्नंमि जंबुद्दीवे दीवे बारस जोयणसहस्साइं ओगाहित्ता, एत्थ णं विजयस्स देवस्स विजया नामं रायहाणी पन्नत्ता इत्यारभ्य विजए देवे २' इत्यन्तं सूत्रं ज्ञेयं, अत्र प्रश्नसूत्रं सुगमं, निर्वचनसूत्रे विजयद्वारस्य पूर्वस्यां दिशि तिर्यगसङ्ख्येयान् द्वीपसमुद्रान् व्यतिव्रज्य—अतिक्रम्यात्रान्तरे योऽन्यो जम्बूद्वीपोऽधिकृतद्वीपतुल्याभिधानः, अनेन जम्बूद्वीपानामसङ्ख्येयत्वं सूचयति, तस्मिन् द्वादश योजनसहस्राण्यवगाह्य अत्रान्तरे विजयस्य देवस्य विजया नाम राजधानी प्रज्ञप्ता मयाऽन्यैश्च तीर्थकृद्भिरित्यादि तावद् वाच्यं—यावन्निर्गमनसूत्रे विजयो देवो २ इति, अत्र च प्रारब्धोऽपि जीवाभिगमोक्तविजयानामराजधानीवर्णकः सामस्त्येन यन्न लिखितस्तद् ग्रन्थविस्तरभयात् वक्ष्यमाणयमकाराजधान्यधिकारे एवंविधवर्णकस्य साक्षाद्विद्यमानत्वेन व्याख्यास्यमानत्वाच्चेति, अत्र प्रस्तुतसूत्रे शेषद्वाराणां सराजधानीकानां स्वरूपकथनायातिदेशमाह— एवं विजयद्वारप्रकारेण चत्वार्यपि जम्बूद्वीपस्य द्वाराणि सराजधानीकानि भणितव्यानि, ननु विजयद्वारस्य वर्णितत्वात् सूत्रे कथं चतुर्द्वारविषयकोऽतिदेशः समसूत्रि ?, उच्यते ।

अतिदेश्यातिदेशप्रतियोगिनोरत्यन्ततुल्यवर्णकत्वप्रतिपादनार्थं, ततश्च यथा विजयद्वारस्य वर्णकस्तथा वैजयन्तजयन्तापराजितद्वाराणामपि यथा चामीषां त्रयाणां तथा विजयद्वारस्यापि, यथा विजयराजधान्या वर्णकस्तथा वैजयन्ताजयन्तापराजिताराजधानीनामपि यथा च तासां तिसृणां तथा विजयाराजधान्या अपीत्यर्थ सिद्धः, अस्ति चायं न्यायः, 'एगे जिए जिआ पंच' इत्यादौ तथा दर्शनात्, अमूनि च द्वाराणि पूर्वदिक्तः प्रादक्षिण्येन नामतो ज्ञेयानि, तथाहि—पूर्वस्यां विजयं दक्षिणस्यां वैजयन्तं पश्चिमायां जयन्तं उत्तरस्यामपराजितं चेति, अत्र वैजयन्तादिद्वाराणामपि जीवाभिगमत एव प्रश्ननिर्वचनरूपा आलापका वेदितव्याः, तथाहि— कहि णं भंते ! जंबुद्दीवस्स दीवस्स वेजयंते नामं दारे पन्नत्ते ?, गोअमा ! जंबुद्दीवे दीवे मंदरस्स पव्वयस्स दाहिणेणं पणयालीसं जोअणसहस्साइं अबाहाए जंबुद्दीवदीवदाहिणपेरंते लवणसमुद्ददाहिणद्धस्स उत्तरेणं एत्थ णं

जंबुद्दीवस्स २ वेजयंते नामं दारे पन्नत्ते अट्ठजोअणाइं उड्ढं उच्चत्तेणं सच्चेव सव्वा वत्तव्वया जाव निच्चे, रायहाणी से दाहिणेणं जाव वेजयंते देवे २' इति, तथा –

'कहि णं भंते! जंबुद्दीवस्स दीवस्स जयंते नामं दारे प०गो०! जंबुद्दीवे २ मंदरस्स पव्वयस्स पच्चत्थिमेणं पणयालीसं जोअणसहस्साइं अबाहाए जंबुद्दीवपच्चत्थिमपेरंते लवणसमुद्दपच्चत्थिमद्धस्स पुरत्थिमेणं सीओआए महानईए उप्पिं एत्थ णं जंबुद्दीवस्स २ जयंते नामं दारे प०, गो० तं चेव से पमाणं, जयंते देवे, पच्चत्थिमेणं से रायहाणी जाव जयंते देवे २' इति, तथा।

''कहि णं भंते! जंबुद्दीवस्स २ अपराजिए नामं दारे पन्नत्ते ?, गो०! मंदरस्स उत्तरेणं पणयालीसं जोअणसहस्साइं अबाहाए जंबुद्दीवे दीवे उत्तरपेरंते लवणसमुद्दे उत्तरस्स दाहिणेणं एत्थ णं जंबुद्दीवे दीवे अपराइए नामं दारे पन्नत्ते तं चेव पमाणं, रायहाणी उत्तरेणं जाव अपराइए देवे २, चउण्हवि अण्णंमि जंबुद्दीवे' इति,–क्व भदन्त ! जम्बूद्वीपस्य २ वैजयन्तं नाम द्वारं प्रज्ञप्तं?, भग० –गौ० मन्दरस्य दक्षिणेन–दक्षिणस्यां दिशि पञ्चचत्वारिंशद्योजनसहस्राण्यबाधया बाधनं बाधा–आक्रमणमिति न बाधा अबाधा–दूरवर्त्तित्वेनानाक्रमणमपान्तरालमित्यर्थः, तथा कृत्वेति गम्यते, अपान्तराले मुक्त्वा इति भावः, जम्बूद्वीपद्वीपदक्षिणपर्यन्ते लवणसमुद्रदक्षिणा- र्द्धस्योत्तरेण जम्बूद्वीपस्य २ वैजयन्तं नाम्ना द्वारं प्रज्ञप्तं, अष्टौ योजनान्यूर्द्धोच्चत्वेनेत्यादिका सैव विजयद्वारसम्बन्धिन्येव सर्वा वक्तव्यता यावन्नित्यं वैजयन्तमिति नाम, क्व भदन्त ! वेजयन्तस्य देवस्य वैजयन्तानाम्नी राजधानी इत्यादि सर्वं प्राग्वत्, वैजयन्तो देवो वैजयन्तो देव इति, एवं जयन्तापराजितद्वारवक्तव्यतापि वाच्या, नवरं जयन्तद्वारस्य पश्चिमायां दिशि जयन्ता राजधानी अपराजितद्वारस्य चोत्तरस्यां दिशि अपराजिता राजधानी तिर्यगसंख्येयान् द्वीपसमुद्रान् व्यतिव्रज्येति वाच्यं। सम्प्रति विजयादिद्वाराणां परस्परमन्तरं प्रतिपिपादयिषुराह–

*मू. (९) जंबुद्दीवस्स णं भंते! दीवस्स दारस्स य दारस्स य केवइए अबाहाए अंतरे पन्नत्ते गो०! अउणासीइं जोअणसहस्साइं बावण्णं च जोअणाइं देसूणं च अद्धजोअणं दारस्स य २ अबाहाए अंतरे पन्नत्ते–*

**वृ.** 'जंबुद्दीवस्स णं', जम्बूद्वीपस्य, भदन्त ! द्वीपस्य सम्बन्धिनो द्वारस्य च द्वारस्य च कियत्किंप्रमाणं 'अबाहाए अंतरे' त्ति बाधा–परस्परं संश्लेषतः पीडनं न बाधाऽबाधा तयाऽबाधया यदन्तरं व्यवधानमित्यर्थ प्रज्ञप्तं, इहान्तरशब्दो मध्यविशेषादिष्वर्थेषु वर्त्तमानो दृष्टस्ततस्तद्व्य- वच्छेदेन व्यवधानार्थपरिग्रहार्थमबाधाग्रहणं, अत्र निर्वचनं भग० गौ०! एकोनाशीतिर्योजनस- हस्राणि द्विपञ्चाशद्योजनानि देशोनं चार्द्धयोजनं द्वारस्य च द्वारस्य चाबाधया अन्तरं प्रज्ञप्तं, तथाहि–जम्बूद्वीपपरिधि प्राग्निर्दिष्टो योजनानि तिस्रो लक्षाः षोडश सहस्राणि द्वे शते सप्तविंशत्यधिके क्रोशत्रयं अष्टाविंशं धनुःशतं त्रयोदशाङ्गुलानि एकमर्द्धाङ्गुलमिति, अस्माद् द्वारचतुष्कविस्तारोऽ- ष्टादशयोजनरूपोऽपनीयते, यत एकैकस्य द्वारस्य विस्तारो योजनानि चत्वारि प्रतिद्वारं द्वारशाखा- द्वयविस्तरश्च क्रोशद्वयं, अस्मिंश्च द्वारस्य शाखयोश्च परिमाणे चतुर्गुणे जातान्यष्टादश योजनानि, ततस्तदपनयने शेषपरि- धिसत्कस्यास्य योजनरूपस्य चतुर्भागे लब्धानि योजनानि एकोनाशीति सहस्राणि द्विपञ्चाशदधिकानि क्रोशश्चैकः, तथ परिधिसत्कस्य क्रोशत्रयस्य धनुःकरणे जातानि धनुषां षट् सहस्राणि, एषु च परिधिसत्काष्टाविंशत्यधिकधनुःशतस्य क्षेपे जातानि धनुषामेकषष्टिश-

तान्यष्टाविंशत्यधिकानि ततोऽस्य चतुर्भिर्भागे लब्धानि पंचदश शतानि द्वात्रिंशदधिकानि, यानि च परिधिसत्कत्रयोदश अङ्गुलानि तेषामपि चतुर्भिर्भागे लब्धानि त्रीण्यङ्गुलानि, शेषे चैकस्मिन्नङ्गुले यवाः अष्टौ एषु परिधिसत्कयवपञ्चक क्षेपे जातास्त्रयोदश यवाः एषां च चतुर्भिर्भागे लब्धास्त्रयो यवाः, शेषे चैकस्मिन् यवे यूकाः अष्टौ आसु परिधिसत्कैकयूकाक्षेपे जाता नव आसां चतुर्भिर्भागे लब्धे द्वे यूके, एतच्च सर्वं देशोनमेकं गव्यूतमिति जातं पूर्वलब्धगव्यूतेन सह देशोनमर्द्धयोजनमिति।

*मू. (१०) अउणासीइ सहस्सा बावन्नं चेव जोअणा हुंति।*
*ऊणं च अद्धजोअण दारंतर जंबुद्दीवस्स॥*

वृ. इममेवार्थं 'द्विर्बद्धं सुबद्ध'मिति अबद्धसूत्रतो बद्धसूत्रं लाघवरुचिसत्वानुग्राहकमिति वा गाथयाऽऽह–'अउनासी'ति, अत्र विभक्तिलोपः प्राकृतत्वात्। अथ चतुर्थप्रश्न एव आकारभावप्रत्यवतारूपे भरतवर्षस्वरूपं जिज्ञासुः पृच्छति–

*मू. (११) कहि णं भंते! जंबुद्दीवे दीवे भरहे नामं वासे पन्नत्ते? गो०! चुल्लहिमवंतस्स वासहरपव्वयस्स दाहिणेणं दाहिणलवणसमुद्दस्स उत्तरेणं पुरत्थिमलवणसमुद्दस्स पञ्चत्थिमेणं पञ्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं, एत्थ णं जंबुद्दीवे दीवे भरहे नामं वासे पन्नत्ते, खाणुबहुले कंटकबहुले विसमबहुले दुग्गबहुले पव्वयबहुले उज्झरबहुले निज्झरबहुले खड्डाबहुले दरिबहुले नईबहुले दहबहुले रुक्खबहुले गुच्छबहुले गुम्मबहुले लयाबहुले वल्लीबहुले–*

*अडवीबहुले सावयबहुले तक्करबहुले डिम्बबहुले डमरबहुले दुब्भिक्खबहुले दुक्कालबहुले पासंडबहुले किवणबहुले वणीमगबहुले ईतिबहुले मारिबहुले कुवुट्ठिबहुले अणावुट्ठिबहुले रायबहुले रोगबहुले संकिलेसबहुले अभिक्खणं अभिक्खणं संखोहबहुले पाईणपडीणायए उदीणदाहिणविच्छिण्णे उत्तरो पलिअंकसंठाणसंठिए दाहिणओ धणुपिट्ठसंठिए तिधा लवणसमुद्दं पुट्ठे गंगासिंधूहिं महाणईहिं वेअड्ढेण य पव्वएण छब्भागपविभत्ते जंबुद्दीवदीवणउयसयभागे पंचछव्वीसे जोअणसए छच्च एगूणवीसइभाए जोअणस्स विक्खंभेणं।*

*भरहस्स णं वासस्स बहुमज्झदेसभाए एत्थ णं वेअड्ढे नामं पव्वए पन्नत्ते, जे णं भरहं वासं दुहा विभयमाणे २ चिट्ठई, तं०–दाहिणड्ढभरहं च उत्तरड्ढभरहं च।*

वृ. 'कहि णं भंते'त्ति प्रच्छकापेक्षया आसन्नत्वेन प्रथमं भरतस्यैव प्रश्नसूत्रं, क्व भदन्त! जम्बूद्वीपे द्वीपे भरतं नाम्ना वर्षं प्रज्ञप्तं?, भगवानाह–गौतम! 'चुल्लहिमवंते'त्यादि, चुल्लशब्दो देश्यः क्षुल्लपर्यायस्तेन क्षुल्लो–महाहिमवदपेक्षया लघुर्यो हिमवान् वर्षधरपर्वतः क्षेत्रसीमाकारी गिरिविशेषस्तस्य दक्षिणेन दक्षिणस्यां दिशि दाक्षिणात्यलवणसमुद्रस्योत्तरस्यां पौरस्त्यलवणसमुद्रस्य पश्चिमायां पाश्चात्यलवणसमुद्रस्य पूर्वस्यां दिशि अत्रावकाशे भरतं नाम्ना वर्षं प्रज्ञप्तं, किंविशिष्टं तदित्याह–स्थाणवः–कीलका ये छिन्नावशिष्टवनस्पतीनां शुष्कावयवाः ठुंठा इति लोकप्रसिद्धाः तैर्बहुलं–प्रचुरं व्याप्तमित्यर्थः अथवा स्थाणवो बहुला यत्र तत्तथा, एवं सर्वत्र पदयोजना ज्ञेया, तथा कण्टका–बदर्यादिप्रभवाः विषमं–निम्नोन्नतं स्थानं दुर्गं–दुर्गमं स्थानं पर्वताः–क्षुद्रिरयः।

–प्रपाता–भृगवो यत्र मुमूर्षवो जना झम्पां ददति अथवा प्रपाता–रात्रिघाटयः अवझरा गिरितटादुदकस्याधःपतनानि तान्येव सदावस्थायीनि निर्झराः गर्ताः–प्रसिद्धाः दर्यो–गुहाः नद्यो द्रहाश्च प्रतीताः वृक्षाः रूक्षा वा–सहकारादयः गुच्छा–वृन्ताकीप्रभृतयः गुल्मा–नवमालिकादयः

लता:–पद्मलताद्या: वल्लय:–कूष्माण्डीप्रमुखा:, अत्र नदीद्रहवृक्षादिवनस्पतीनामशुभानुभाव-जनितानामेव बाहुल्यं बोध्यं, नतु एकान्तसुषमादिकालभावि तथाविधशुभानुभावजनितानां, तेषां प्रायः प्रज्ञापककालेऽल्पीयस्त्वात्, अटव्यो–दूरतरजननवासस्थाना भूमयः श्वापदा–हिंस्रजीवा: स्तेना:–चौरा: तदेव कुर्वन्तीति निरुक्तितस्तस्करा:–सर्वदा चौर्यकारिण: डिम्बानि–स्वदेशोत्थविप्लवा: डमराणि–परराजकृतोपद्रवा: दुर्भिक्षं–भिक्षाचराणां भिक्षादुर्लभत्वं, दुष्कालो–धान्यमहार्घतादिना दुष्ट: काल: पाखण्डं–पाखण्डिजनोत्थापितमिथ्यावाद: कृपणा: प्रतीता:।

– वनीपका–याचका इति–धान्याद्युपद्रवकारिशलभमूषिकादि मारि–मरक: कुत्सिता वृष्टि कुवृष्टि कर्षकजनानभिलषणीया वृष्टिरित्यर्थ:, अनावृष्टिवर्षणाभाव इति राजान: आधिपत्य-कर्त्तार: तद्बाहुल्यं च प्रजानां पीडाहेतुरिति रोगा: संक्लेशाश्च व्यक्ता:, अभीक्ष्णं २–पुन: पुनर्दण्डपारु-ष्यादिना संक्षोभा: चित्तानवस्थितता प्रजानामिति शेष:, इदं च सर्वं विशेषणजातं भरतस्य प्रज्ञाप-कापेक्षया मध्यमकालीनानुभावमेव व्यावर्णितं, तेनोत्तरसूत्रे एकान्तसुषमादावस्य बहुसमरमणी-यत्वा- तिस्निग्धत्वादिकमेकान्तदुष्षमादौ निर्वनस्पतिकत्वाराजत्वादिकं च वक्ष्यमाणं न विरुध्यते इति

–प्रागेव प्राचीनं, स्वार्थे ईनप्रत्यय:, दिग्विवक्षायां प्राचीनं पूर्वा इत्यर्थ:, एवं प्रतीचीनोदीचीने अपि वाच्ये, तेन पूर्वापरयोर्दिशोरायतं उदीचीदक्षिणयोर्दिशोर्विस्तीर्णं, अथवा प्राचीनप्रतीचीना-वयवयोरायतमेवमुत्तरत्रापि, अथ तदेव संस्थानतो विशिनष्टि–उत्तरत:–उत्तरस्यां दिशि पर्यङ्कस्येव संस्थितं–संस्थानं यस्य तत्तथा, दक्षिणतो–दक्षिणस्यां दिशि आरोपितज्यस्य धनुष:–कोदण्डस्य पृष्ठं–पाश्चात्यभागस्तस्येव संस्थितं–संस्थानं यस्य तत्तथा, अत एवास्य धनु:पृष्ठशरजीवाबाहानां सम्भव:, एषां च स्वरूपं स्वस्वावसरे निरूपयिष्यति, त्रिधा–पूर्वकोटिधनु:पृष्ठापरकोटिभिर्लवण-समुद्रंक्रमेण पूर्वदक्षिणापरलवणसमुद्रावयवं स्पृष्टं–धातूनामनेकार्थत्वात् प्राप्तं, ग्रामप्राप्त इत्यादिवत् कर्त्तरि क्तप्रत्यय: अयमर्थ:–पूर्वकोटया पूर्वलवणसमुद्र धनु:पृष्ठेन दक्षिणलवणसमुद्रं अपरकोटया पश्चिमलवणसमुद्रं संस्पृश्य स्थितमिति, अथेदमेव षट्खण्डविभजनद्वारा विशिनष्टि–गङ्गासिन्धुभ्यां महानदीभ्यां वैताढ्येन च पर्वतेन षट्संख्या भागा: षट्भागास्तैर्विभक्तं, अयमर्थ:–अनन्तरोदितैस्त्रिभिर्दक्षिणोत्तरयो: प्रत्येकं खण्डत्रयकरणेन भरतस्य षट् खण्डानि कृतानीति।

अथ यदि जम्बूद्वीपैकदेशभूतं भरतं तर्हि विष्कम्भत: तस्य कतितमे भागे तदित्याह– 'जंबुद्दीवे'त्यादि, जम्बूद्वीपद्वीपस्य–जम्बूद्वीपविष्कम्भस्य नवत्यधिकशततमो यो भागस्तस्मिन् इति, अथ नवत्यधिकशततमभागे कियन्ति योजनानीत्याह–'पञ्चषड्विंशत्यधिकानि योजनशतानि षट् च योजनस्यैकोनविंशतिभागान्, कोऽर्थ: ? –याद्भशैरेकोनविंशतिभागै: समुदितैर्योजनं भवति तादृशान् षट् भागान् इति, विष्कम्भेन–विस्तारेण शरापरपर्यायेणेति, अयं भाव:–जम्बूद्वीपविस्तारस्य लक्षयोजनरूपस्य नवत्यधिकशतेन भागे लब्धं योजनानि, एतावानेव च भरतविस्तार:, ननु भाजकराशिर्नवत्यधिकशतरूप: षड्भागास्तु योजनैकोनविंशति-कलारूपा इति विसदृशमिव प्रतिभाति, उच्यते, तथाहि– जम्बूद्वीपव्यासस्य योजनलक्ष मितस्य नवत्यधिकशतभक्तस्यावशिष्ट: षष्टिरूपो राशिर्भागदानासमर्थ इति भाज्यभाजकराश्योर्दश-भिरपवर्त्ते जाता भाज्यराशौ षट् भाजकराशौ इति सर्वं सुस्थं, ननु नवत्यधिकशतरूपभाजकाङ्कोत्पत्तौ किं बीजमिति ?, उच्यते, एको भागो भरतस्य द्वौ भागौ हिमवत:, पूर्वक्षेत्रतो द्विगुणत्वात्,

चत्वारो हैमवतक्षेत्रस्य, पूर्ववर्षधरतो द्विगुणत्वात्, अष्टौ महाहिमवतः, पूर्वक्षेत्रतो द्विगुणत्वात्, षोडश हरिवर्षस्य, पूर्ववर्षधरतो द्विगुण- त्वात्, द्वात्रिंशन्निषधस्य, पूर्वक्षेत्रतो द्विगुणत्वात्, सर्वे मिलिताः ६३, एते मेरोर्दक्षिणतस्तथोत्तरतोऽपि ६३ विदेहवर्षं तु ६४ भागाः, सर्वाग्रेण एतैर्भागैर्दक्षिणोत्तरतो जम्बूद्वीपयोजनलक्षं पूरितं भवति, तत एतावान् भाजकाङ्कः नवत्यधिकं शतं भागानामिति।

अथ यदुक्तं– "गंगासिंधूहिं महानईहिं वेयड्ढेण य पव्वएणं छब्भागपविभत्ते" इत्यत्र वैताढ्यस्य स्वरूपप्ररूपणाय सूत्रमाह– 'भरहस्स ण'मित्यादि, भरतस्य वर्षस्य बहुमध्यदेशभागे वैजयन्तद्वारात् त्रिकलाधिकसाष्टत्रिंशदद्विशतयोजनातिक्रमे पञ्चाशद्योजनक्षेत्रखण्डे, अत्र वैताढ्यो नाम पर्वतः प्रज्ञप्तः, यो णमिति प्राग्वत् भरतं वर्षं द्विधा विभजन्२, समांशतया चक्रवर्तिकाले च समस्वामिकतया तथाऽन्यैरपि प्रकारैर्द्वयोरपि तुल्यताद्योतनार्थमि (र्थं विभजनमि) ति।

तत्रादावासन्नत्वेन दक्षिणार्द्धभरतं कास्तीति प्रश्नयति–

*मू. (१२) कहि णं भंते ! जंबुद्दीवे दीवे दाहिणड्ढे भरहे नामं वासे पन्नत्ते ?, गो० ! वेयड्ढस्स पव्वयस्स दाहिणेणं दाहिणलवणसमुद्दस्स उत्तरेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं एत्थ णं जंबूद्दीवे दीवे दाहिणड्ढभरहे नामं वासे पन्नत्ते पाईणपडीणायए उदीणदाहिणविच्छिण्णे अद्धचंदसंठाणसंठिए तिहा लवणसमुद्दं पुट्ठे, गंगासिंधूहिं महानईहिं तिभागपविभत्ते दोन्नि अट्ठतीसे जोअणसए तिन्नि अ एगूणवीसइभागे जोयणस्स विक्खंभेणं। तस्स जीवा उत्तरेणं पाईणपडीणायया दुहा लवणसमुद्दं पुट्ठा पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठा पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठा णव जोयणसहस्साइं सत्त य अडयाले जोयणसए दुवालस य एगूणवीसइभाए जोयणस्स आयामेणं तीसे धनुपुट्ठे दाहिणेणं नव जोयणसहस्साइं सत्तछावट्ठे जोयणसए इक्कं च एगूणवीसइभागे जोयणस्स किंचिविसेसाहिअं परिक्खेवेणं पन्नत्ते।*

*दाहिणड्ढभरहस्स णं भंते ! वासस्स केरिसिए आयारभावपडोयारे पन्नत्ते ?, गो० ! बहुसमरमणिज्जे भूमिभागे पन्नत्ते, से जहानामए आलिंगपुक्खरेइ वा जाव नानाविह पञ्चवण्णेहिं मणीहिं तणेहिं उवसोभिए, तंजहा–कित्तिमेहिं चेव अकित्तिमेहिं चेव, दाहिणड्ढभरहे णं भंते ! वासे मणुयाणं केरिसए आयारभावपडोयारे पन्नत्ते ?, गोयमा ! ते णं मणुआ बहुसंघयणा बहुसंठाणा बहुउच्चत्तपज्जवा बहुआउपज्जवा बहूइं वासाइं आउं पालेंति, पालित्ता अप्पेगइया निरयगामी अप्पेगइया तिरियगामी अप्पेगइया मणुयगामी अप्पेगइया देवगामी अप्पेगइआ सिज्झंति बुज्झंति मुच्चंति परिणिव्वायंति सव्वदुक्खाणमंतं करेंति।*

**वृ.** 'कहि णं भंते !' इत्यादि, इदं च सूत्रं पूर्वसूत्रेण समगमतया विवृतप्रायं, नवरं अर्द्धचन्द्रसंस्थानसंस्थितत्वं तु दक्षिणभरतार्द्धस्य जम्बूद्वीपपट्टादावालेखदर्शनाद् व्यक्तमेव, तथा त्रिसंख्या भागास्त्रिभागास्तैः प्रविभक्तं, तत्र पौरस्त्यो भागो गङ्गया पूर्वसमुद्रं मिलन्त्या कृतः, पाश्चात्यो भागस्तु सिन्ध्वा पश्चिमसमुद्रं मिलन्त्या कृतः, मध्यमभागस्तु गङ्गासिन्धुभ्यां कृत इति, द्वे अष्टत्रिंशदधिके योजनशते त्रींश्चैकोनविंशतिभागान् योजनस्य विष्कम्भेन, किमुक्तं भवति षट्कलाधिकषड्विंशपञ्चशतयोजन भरतविस्ताराद्वैताढ्यविस्तारे ५० योजनमिते शोधितेऽवशिष्टं चत्वारि योजनशतानि षट्सप्तत्यधिकानि षट् च कलाः , एतदर्द्धे द्वे योजनानां शते अष्टत्रिंश- दधिके

तिस्रश्चापराः कलाः इत्येवंरूपं यथोक्तं मानं भवति, एतेनास्य शरप्ररूपणाकृता, शरविष्कम्भयोरभेदादिति । अथ जीवासूत्रमाह—

'तस्स जीवे'त्यादि, तस्य दक्षिणार्द्धभरतस्य जीवेव जीवा—ऋज्वी सर्वान्तिमप्रदेशपङ्क्ति, उत्तरेण—उत्तरस्यां मेरुदिशीत्यर्थः, प्राचीने पूर्वस्यां प्रतीचीने—अपरस्यां चाऽऽयता—आयामवती द्विधा लवणसमुद्रं स्पृष्टा धुमवती इदमेवार्थं द्योतयति—'पुरत्थिमिल्लाए' इति पूर्वया कोट्या—अग्रभागेन पौरस्त्यं लवणसमुद्रावयं स्पृष्टा पाश्चात्यया कोटया पाश्चात्यं लवणसमुद्रनयवं स्पृष्टा, नव योजनसहस्राणि अष्टचत्वारिंशानि—अष्टचत्वारिंशदधिकानि सप्त योजनशतानि द्वादश चैकोनविंशतिभागान् योजनस्यायामेन, यच्च समवायाङ्गसूत्रे—'दाहिणड्ढभरहस्स णं जीवा पाईणपडीणायया दुहओ लवणसमुद्दं पुट्ठा नव जोअणसहस्साइं आयामेणं' मित्युक्तं तत्सूचामात्रत्वात् सूत्रस्य शेषविवक्षा न कृता, वृत्तिकारेण तु अयमवशि- ष्टराशिरूपो विशेषो गृहीत इति, अत्र सूत्रेऽनुक्तापि जीवानयने करणभावना दर्श्यते, तथाहि--

जम्बूद्वीपव्यासाद्विवक्षितक्षेत्रेषुः शोध्यते, ततो यज्जातं तत्तेनैवेषुणा गुण्यते, ततः पुनश्चतुर्भिर्गुण्यते, इत्थं ससंस्कारो राशिर्विवक्षितक्षेत्रस्य जीवावर्ग इत्युच्यते, अस्माच्च मूले गृह्यमाणे यल्लभ्यते तज्जीवाकलामानं, तस्य चैकोनविंशत्या भागे योजनराशि शेषश्च कलाराशि, तत्र जीवादिपरिज्ञानं चेषुपरिमाणपरिज्ञानाविनाभावि, तच्च न परिपूर्णयोजनसंख्याकं किन्तु कलाभिः कृत्वा सातिरेकमिति विवक्षितक्षेत्रादेरिषुः सवर्णनार्थं कलीक्रियते, सच्च कलीकृतादेव जम्बूद्वीपव्यासात् सुखेन शोधनीय इति मण्डलक्षेत्रव्यासोऽपि १ शून्य ५ रूपः कलीकरणायैकोनविंशत्या गुण्यते जातः १९ शून्यः ५, ततो दक्षिणभरतार्धेषोः साष्टत्रिंशदद्विशतयोजनमितस्य कलीकृतस्य प्रक्षिप्तोपरितनकलात्रिकस्य ४५२५ रूपस्य शोधने जातः १८९५४७५, ततश्च दक्षिणार्द्धेषुणा ४५२५ रूपेण गुण्यते जातः, ८५७७०२४३७५, अयं चतुर्गुणः ३४३०८०९७५००, एष दक्षिणभरतार्द्धस्य जीवावर्ग, एतस्य वर्गमूलानयनेन लब्धाः कलाः १८५२२४, शेषं कलांशाः १६७३२४, छेदराशिरधः ३७०४४८, लब्धकलानां १९ भागे योजन ९७४७ कलाः १२, इयं दक्षिणभरतार्द्धजीवा, एवं वैताढ्यदिजीवास्वपि भाव्यं, यावद्दाक्षिणात्यविदेहार्द्धजीवा, एवमुत्तैरवतार्द्धजीवा यावदुत्तरार्द्धविदेहजीवापीति ।

अथ दक्षिणभरतार्द्धस्य धनुःपृष्ठं निरूपयति—'तीसे धणुपट्ठे'इत्यादि, तस्याः—अनन्तरोक्ताया जीवाया दक्षिणतो—दक्षिणस्यां दिशि लवणदिशीत्यर्थ धनुःपृष्ठं अधिकारात् दक्षिणभरतार्द्धस्येति, यद्वा प्राकृतत्वाल्लिङ्गव्यत्यये तीसे इति तस्य—दक्षिणार्द्धभरतस्येति व्याख्येयं, नव योजनसहस्राणि षट्षष्ट्यधिकानि सप्त च योजनशतानि एकं चैकोनविंशतिभागं योजनस्य किञ्चिद्विशेषाधिकं परिक्षेपेण—परिधिना प्रज्ञप्तं, अत्र करणभावना यथा-- विवक्षितेषौ विवक्षितेषुगुणे पुनः षड्गुणे विवक्षितजीवावर्गयुते च यो राशि स धुनःपृष्ठवर्ग इति व्यपदिश्यते, तस्माच्च वर्गमूले लब्धाना कलानां १९ भागे लब्धं योजनानि, अवशिष्टं कलाः, तथाहि—दक्षिणभरतार्द्धेषुकलाः ४५२५, अस्य वर्ग २०४७५३२५, अयं षड्गुणः १२२८५३७५०, अथ दक्षिणभरतार्द्धस्य जीवावर्ग ३४३०८०९७५००, अनयोर्युति ३४४३०९५१२५०, धनुःपृष्ठवर्गोऽयं, अस्य वर्गमूले लब्धं कलाः १८५५५५, शेषं कलांशाः २९३२२५, छेदकराशिरधस्तात् ३७१२१०,

कलानां १९ भाग योजन ९७६६ कला १, ये च वर्गमूलावशिष्टाः कलांशास्तद्विवक्षया च सूत्रकृता कलाया विशेषाधिकत्वमभ्यधायि, आह–एवं जीवाकरणेऽपि वर्गमूलावशिष्टकलांशानां सद्भावात् तत्राप्युक्तकलानां साधिकत्वप्रतिपादनं न्यायप्राप्तं कथं नोक्तमिति ?, उच्यते, सूत्रगतेर्वैचित्र्याद्विवक्षितत्वात्, 'विवक्षाप्रधानानि हि सूत्राणी'ति, एवं वैताढ्यादिधनुःपृष्ठेष्वपि भाव्यं, यावद्दाक्षिणात्यविदेहार्द्धधनुःपृष्ठं, एवमुत्तरत उत्तरैरावतार्द्धधनुःपृष्ठं यावदुत्तरार्द्धविदेहधनुःपृष्ठमपीति, अत्र च दक्षिणभरतार्द्धे बाहाया असम्भवः ।

अथ दक्षिणभरतार्द्धस्वरूपं पृच्छन्निदमाह– 'दाहिणद्धे'त्यादि, दक्षिणार्द्धभरतस्य भगवन् कीदृशः आकारस्य–स्वरूपस्य भावाः–पर्यायास्तेषां प्रत्यवतारः–प्रादुर्भावः प्रज्ञप्तः ?, कीदृशः प्रस्तुतक्षेत्रस्य स्वरूपविशेष इति भावः, भगवानाह–गौतम ! भरतस्य बहुसमरमणीयो भूमिभागः प्रज्ञप्तः 'से जहानामए आलिंगपुक्खरेइ वे' त्यादिको बहुसमत्ववर्णकः सर्वोऽपि ग्राह्यः, यावन्नानाविधपञ्चवर्णै र्मणिभिस्तृणैश्चोपशोभितः, तद्यथेत्युपदर्शने, किंविशिष्टैर्मणिभिस्तृणैश्च कृत्रिमैः–क्रमेण शिल्पिकर्षकादिप्रयोगनिष्पन्नैः अकृत्रिमैः क्रमाद्रत्नखानिसंभूतानुप्तसम्भूतैरुप- शोभितो दक्षिणार्द्धभरतस्य भूमिभागः, अनेनास्य कर्मभूमित्वमभाणि, अन्यथा हैमवताद्यक- र्मभूमिष्वपि इदं विशेषणमकथयिष्यदिति, चकारौ समुच्चयार्थौ एवकारावधारणार्थौ, अथवा चैवेत्यखण्डमव्ययं समुच्चयार्थं, अपिचेत्यादिवत् । ननु अनेन सूत्रेण वक्ष्यमाणेनोत्तरभरतार्द्धवर्णकसूत्रेण च सह 'खाणुबहु विसमबहुले कंटगबहुले' इत्यादिसमानान्यभरतवर्णकसूत्रं विरुध्यति, न चैते सूत्रे अरकविशेषापेक्षे सामान्यभरत- सूत्रं तु प्रज्ञापककालीनत्वस्यैवौचित्यात्, कृत्रिममणितृणानां तत्रैव सम्भवात्, प्रज्ञापककाल- श्चावसर्पिण्यां तृतीयारकप्रान्तादारभ्य वर्षशतोनदुष्षमारकं यावदिति चेत्, उच्यते, अत्र 'खाणुबहुले विसमबहुले' इत्यादिसूत्रस्य बाहुल्यापेक्षयोक्तत्वेन कश्चिद्देशविशेषे पुरुषविशेषस्य पुण्यफल- भोगार्थमुपसम्पद्यमानं भूमेर्बहुसमरमणीयत्वादिकं न विरुध्यति, भोजकवैचित्र्ये भोग्यवैचित्र्यस्य नियतत्वात्, अनेनास्यैकान्तशुभैकान्ताशुभमिश्रलक्षणकालत्रयाधारकत्वमसूचि, एकान्तशुभे हि काले सर्वे क्षेत्रभावाः शुभा एव एकान्ताशुभे हि सर्वे अशुभा एव मिश्रे तु क्वचिच्छुभाः क्वचिदशुभाः, अत एव पञ्चमारकाद् यावद्भूमिभागवर्णकं बहुसमरमणीयत्वादिकेव सूत्रकारेणाभ्यधायि षष्ठेऽरके तु एकान्ताशुभे न तथेति सर्वं सुस्थं ।

अथ तत्रैव मनुष्यस्वरूपं पृच्छति 'दाहिणद्धभरहे'त्यादि प्रश्नसूत्रं प्राग्वत्, निर्वचनसूत्रे भगवानाह–गौतम ! येषां स्वरूपं भवता जिज्ञासितं ते मनुजा बहूनि–वज्रऋषभनाराचादीनि संहननानि–वपुर्दृढीकारकारणास्थिनिचयात्मकानि येषां ते तथा, तथा बहूनि–समचतुरस्रादीनि संस्थानानि–विशिष्टावयवरचनात्मकशरीराकृतयो येषां ते तथा, बहवो–नानाविधा उच्चत्वस्य–शरीरोच्छ्रयस्य पर्यवाः -पञ्चधनुःशतसप्तहस्तमानादिका विशेषा येषां ते तथा बहवः आयुषः–पूर्वकोटिवर्षशतादिकाः पर्यवा विशेषा येषां ते तथा, बहूनि वर्षाणि आयुः पालयन्ति, पालयित्वा अपि संभावनायां एके–केचन निरयगतिगामिनः–नरकगतिगन्तारः एवमप्येकके तिर्यग्गतिगामिनः अप्येकके मनुजगतिगामिनः अप्येकके देवगतिगामिनः अप्येकके सिध्यन्ति–सकलकर्मक्षयकरणेन निष्ठितार्थीभवन्ति बुध्यन्ते–केवलालोकेन वस्तुत्वं जानन्ति मुच्यन्ते भवोपग्राहिकर्मांशेभ्य परिनिर्वान्ति–कर्मकृततापविरहाच्छीती भवन्ति, किमुक्तं भवति ? -सर्वदुःखानामन्तं कुर्वन्ति,

इदं च सर्वं स्वरूपकथनं अरकविशेषापेक्षया नानाजीवनपेक्ष्य मन्तव्यं, अन्यथा सुषमासुषमादावनुपपन्नं स्यात्। अथास्य सीमाकारी वैताढ्यगिरिं कास्तीति पृच्छति–

**मू. (१३)** *कहि णं भंते! जंबुद्दीवे २ भरहे वासे वेयड्ढे णामं पव्वए पन्नत्ते?, गो० ! उत्तरद्धभरहवासस्स दाहिणेणं दाहिणभरहवासस्स उत्तरेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं एत्थ णं जंबुद्दीवे २ भरहे वासे वेअड्ढे णामं पव्वए पन्नत्ते, पाईणपडीणायए उदीणदाहिणविच्छिण्णे दुहा लवणसमुद्दं पुट्ठे पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठे पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठे, पणवीसं जोयणाइं उद्धं उच्चत्तेणं छस्सकोसाइं जोअणाहिं उव्वेहेणं पन्नासं जोअणाइं विक्खंभेणं पन्नत्ता, तस्स बाहा पुरत्थिमपच्चत्थिमेणं चत्तारि अट्ठासीए जोयणसए सोलस य एगूणवीसइभागे जोअणस्स अद्धभागं च आयामेणं प०, तस्स जीवा उत्तरेणं पाईणपडीणायया दुहा लवणसमुद्दं पुट्ठा पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठा पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठा दस जोयणसहस्साइं सत्त य वीसे जोअणसए दुवालस य एगूणवीसइभागे जोअणस्स आयामेणं तीसे धनुपट्ठे दाहिणेणं दस जोअणसहस्साइं सत्त य तेआले जोयणसए पन्नरस य एगूणवीसभागे जोयणस्स परिक्खेवेणं रुअगसंठाणसंठिए सव्वरययामए अच्छे सण्हे लट्ठे घट्ठे मट्ठे नीरए निम्मले निप्पंके निक्कंकडच्छाए सप्पभे समिरीए पासाईए द ४।*

*उभओ पासिं दोहिं पउमवरवेइयाहिं दोहि अ वणसंडेहिं सव्वओ समंता संपरिक्खित्ते। ताओ णं पउमवरवेइयाओ अद्धजोयणं उद्धं उच्चत्तेणं पंचधणुसयाइं विक्खंभेणं पव्वयसमियाओ आयामेणं वण्णओ भाणियव्वो। ते णं वणसंडा देसूणाइं दो जोअणाइं विक्खंभेणं पउमवरवेइयासमगा आयामेणं किण्हा किण्होभासा जाव वण्णओ।*

*वेयड्ढस्स णं पव्वयस्स पुरच्छिमपच्चच्छिमेणं दो गुहाओ पन्नत्ताओ, उत्तरदाहिणाययाओ पाईणपडीणविच्छिण्णाओ पन्नासं जोअणाइं आयामेणं दुवालस जोअणाइं विक्खंभेणं अट्ठ जोयणाइं उद्धं उच्चत्तेणं वइरामयकवाडोहाडिआओ, जमलजुअलकवाडघणदुप्पवेसाओ निच्चंधयारतिमिस्साओ ववगयगहचंदसूरणक्खत्तजोइसपहाओ जाव पडिरूवाओ तंजहा–तमिसगुहा चेव खंडप्पवायगुहा चेव, तत्थ णं दो देवा महिड्ढीया जाव महाणुभागा पलिओवमट्ठिईया परिवसंति, तंजहा– कयमालए चेव नट्टमालए चेव।*

*तेसि णं वनसंडाणं बहुसमरमणिज्जाओ भूमिभागाओ वेअड्ढस्स पव्वयस्स उभओ पासिं दस दस जोअणाइं उद्धं उप्पइत्ता एत्थ णं दुवे विज्जाहरसेढीओ पन्नत्ताओ पाईणपडीणाययाओ उदीणदाहिणविच्छिण्णाओ दस दस जोअणाइं विक्खंभेणं पव्वयसमियाओ आयामेणं उभओ पासिं दोहिं पउमवरवेइयाहिं दोहिं वणसंडेहिं संपरिक्खित्ताओ, ताओ णं पउमवरवेइयाओ अद्धजोअणं उद्धं उच्चत्तेणं पञ्च धणुसयाइं विक्खंभेणं पव्वयसमियाओ आयामेणं वण्णओ नेयव्वो, वनसंडावि पउमवरवेइयासमगा आयामेणं वण्णओ।*

*विज्जाहरसेढीणं भंते! भूमीणं केरिसए आयारभावपडोयारे पन्नत्ते?, गोअमा! बहुसमरमणिज्जे भूमिभागे पन्नत्ते, से जहानामए आलिंगपुक्खरेइ वा जाव णाणाविहपंचवण्णेहिं मणीहिं तणेहिं उवसोभिए, तंजहाकित्तिमेहिं चेव अकित्तिमेहिं चेव, तत्थ णं दाहिणिल्लाए विज्जाहरसेढीए*

गगणवल्लभपामोक्खा पन्नासं विज्जाहरणगरावासा पन्नत्ता, उत्तरिल्लाए विज्जाहरसेढीए रहनेउरचक्कवालपामोक्खा सट्ठिं विज्जाहरणगरावासा पन्नत्ता, एवामेव सपुव्वावरेणं दाहिणिल्लाए उत्तरिल्लाए विज्जाहरसेढीए एगं दसुत्तरं विज्जाहरणगरावाससयं भवतीतिमक्खायं, ते विज्जाहरणगरा रिद्धित्थिमियसमिद्धा पमुइयजणजाणवया जाव पडिरूवा, तेसु णं विज्जाहरणगरेसु विज्जाहररायाणो परिवसंति महयाहिमवंतमलयमंदरमहिंदसारा रायवण्णओ भाणिअव्वो। विज्जाहरसेढीणं भंते! मणुआणं केरिसए आयारभावपडोयारे पन्नत्ते ? गोयमा ! ते णं मणुआ बहुसंघयणा बहुसंठाणा बहुउच्चत्तपज्जवा बहुआउपज्जवा जाव सव्वदुक्खाणमंतं करेंति, तासि णं विज्जाहरसेढीणं बहुसमरमणिज्जाओ भूमिभागाओ वेअद्धस्स पव्वयस्स उभओ पासिं दस दस जोअणाइं उद्धं उप्पइत्ता एत्थ णं दुवे आभिओगसेढीओ पन्नत्ताओ पाईणपडीणायायाओ उदीणदाहिणविच्छिण्णाओ दस दस जोअणाइं विक्खंभेणं पव्वयसमियाओ आयामेणं उभओ पासिं दोहिं पउमवरवेइयाहिं दोहि अ वनसंडेहिं संपरिक्खित्ताओ वण्णओ दोण्हवि पव्वयसमियाओ आयामेणं।

अभिओगसेढीणं भंते! केरिसए आयारभावपडोयारे प० गो० ! बहुसमरमणिज्जे भूमिभागे प० जाव तणेहिं उवसोभिए वण्णाइं जाव तणाणं सद्दोत्ति, तासि णं अभिओगसेढीणं तत्थ तत्थ देसे तहिं तहिं जाव वाणमंतरा देवा य देवीओ अ आसयंति सयंति जाव फलवित्तिविसेसं पच्चणुभवमाणा विहरंति, तासु णं आभिओगसेढीसु सक्कस्स देविंदस्स देवरन्नो सोमजमवरुणवेसमणकाइआणं आभिओगाणं देवाणं बहवे भवणा प०, ते णं भवणा बाहिं वट्टा अंतो चउरंसा जाव अच्छरघणसंघविकिण्णा जाव पडिरूवा, तत्थ णं सक्कस्स देविंदस्स देवरण्णो सोमजमवरुण- वेसमणकाइआ बहवे आभिओगा देवा महिड्ढीआ महज्जुईआ जाव महासुक्खा पलिओवमट्ठिइया परिवसंति।

तासि णं आभिओगसेढीणं बहुसमरमणिज्जाओ भूमिभागाओ वेयड्ढस्स पव्वयस्स उभओ पासिं पंच २ जोयणाइं उद्धं उप्पइत्ता, एत्थ णं वेयड्ढस्स पव्वयस्स सिहरतले पन्नत्ते पाईणपडिणायए उदीणदाहिणविच्छिण्णे दस जोअणाइं विक्खंभेणं पव्वयसमगे आयामेणं, से णं इक्काए पउमवरवेइयाए इक्केणं वनसंडेणं सव्वओ समंता संपरिक्खित्ते, पमाणं वण्णगो दोण्हंपि, वेयड्ढस्स णं भंते ! पव्वयस्स सिहरतलस्स करिसए आगारभावपडीआरे प०, गो० बहुसरमणिज्जे भूमिभागे प० से जहानामए आलिंगपुक्खरेइ वा जाव नानाविहपंचवण्णेहिं मणीहिं उवसोभिए जाव वावीओ पुक्खरिणीओ जाव वाणमंतरा देवा य देवीओ अ आसयंति जाव भुंजमाणा विहरंति।

जंबुद्दीवे णं भंते ! दीवे भारहे वासे वेअड्ढपव्वए कइ कूडा पं० ?, गो० ! नव कूडा पं०, तं०— सिद्धाययणकूडे १ दाहिनड्ढभरहकूडे २ खंडप्पवायगुहाकूडे ३ माणिभद्दकूडे ४ वेअड्ढकूडे ५ पुण्णभद्दकूडे ६ तिमिसगुहाकूडे ७ उत्तरड्ढभरहकूडे ८ वेसमणकूडे ९।

वृ. 'कहि णं भंते!' इत्यादि, इदं प्रायः पूर्वसूत्रेण समगमकत्वात्त कण्ठ्यं, नवरं उत्तरार्द्धभरताद्दक्षिमस्यामित्यादि दिक्स्वरूपं गुरुजनदर्शितजम्बूद्वीपपट्टादेः ज्ञेयं, तथा पञ्चविंशतियोजनान्यूर्ध्वोच्चत्वेन षट् सक्रोशानि योजनान्युद्वेधेन—भूमिप्रवेशेन, मेरुवर्जसमयक्षेत्रवर्त्तिगिरीणां निजनिजोत्सेधचतुर्थांशेन भूम्यवगाहस्योक्तत्वात्, योजनपञ्चविंशतेश्चतुर्थांशे एतावतएव लाभात्, तथा पञ्चाशद्योजनानि विष्कम्भेनेति, अत्र प्रज्ञावादस्य शरः प्रदर्श्यते, स चाष्टाशीत्यधिके द्वे शते योजनानां कलात्रयं च, अस्य च करणं—दक्षिणभरतार्द्धशर, इत्येवंरूपे वैताढ्यपृथुत्वे पञ्चाशद्

योजनरूपे प्रक्षिप्ते यथोक्तं मानं भवति, आह–दक्षिणभरतार्द्धवदस्यापि विष्कम्भ एव शरोऽस्तु, मैवं, खण्डमण्डलक्षेत्रे आरोपितज्यधनुराकृति प्रादुर्भवति, तत्र यायामपरिज्ञानाय जीवा परिक्षेपप्रकर्षपरिज्ञानाय धनुःपृष्ठं व्यासप्रकर्षपरिज्ञानाय शरः, स च धनुःपृष्ठमध्यमत एवास्य भवति, प्रस्तुतगिरेश्च केवलस्य धनुराकृतेरभावेन धनुःपृष्ठस्याप्यभावात् शरोऽपि न सम्भवति, तन दक्षिणधनुःपृष्ठेन सहैवास्य धनुःपृष्ठवत्वमिति प्राच्यशरमिश्रित एवास्य विष्कम्भः शरो भवति, अन्यथा शरव्यतिरिक्तस्थाने न्यूनाधिकत्वेन प्रकृष्टव्याससमासेरेखानुपपत्तेरित्यलं प्रसङ्गेन, इदमेव शरणं दक्षिणविदेहार्द्धं यावद् बोध्यम्, एवमुत्तरतोऽपि ऐरावतवैताढ्यतः प्रारभ्योत्तरविदेहार्द्धं यावदिति ।

अथास्य बाहे आह–'तस्स बाह'त्ति तस्य–वैताढ्यस्य बाहा–दक्षिणोत्तरायता वक्रा आकाशप्रदेशपंक्ति 'पुरत्थिमपच्चत्थिमेणं'ति समाहारात् पूर्वपश्चिमयोरेकैका अष्टाशीत्यधिकानि चत्वारि योजनशतानि षोडश चैकोनविंशतिभागान् योजनस्य एकस्यैकोनविंशतिभागस्य चार्धं–अर्धकला, योजनस्याष्टत्रिंशत्तमं भागमित्यर्थः, आयामेन–दैर्घ्येण प्रज्ञप्ता, ऋजुबाहायास्तु पर्वतमध्यवर्त्तिन्याः पूर्वापरायतायाः मानं क्षेत्रविचारादिभ्योऽवसेयं, अत्र करणं–यथा गुरुधनुःपृष्ठाल्लघुधनुःपृष्ठं विशोध्य शेषस्यार्धे कृते बाहा, यथा गुरुधनुःपृष्ठं वैताढ्यसत्कं कलारूपं २४१३२, अस्माल्लघुधनुःपृष्ठं कलारूपं १८५५५ शोध्यते जातं १८५७७, अर्द्धे कृते कलाः ९२८८, तासामेकोनविंशत्या भागे योजनानि ४८८ कलाः १६ कलार्द्धं चेति, एवं यावद्दक्षिणविदेहार्द्धबाहा, एवमुत्तरत एरावतवैताढ्यबाहा यावदुत्तरविदेहार्द्धबाहा तावदिदं करणं भावनीयं,

अथास्य जीवामाह– तस्य–वैताढ्यस्य जीवा 'उत्तरेणे'त्यादि प्राग्वत्, नवरं दश योजनसहस्राणि सप्त च विंशानि–विंशत्यधिकानि योजनशतानि द्वादश चैकोनविंशतिभागान् योजनस्यायामेनेति, पूर्वोक्तकरणक्रमेण जम्बूद्वीपव्यासः कलारूपः १९ शून्यः ५, अस्माद्वैताढ्यशरकलानां ५४७५ शोधने जातं १८९४५५२५, अस्मिन् वैताढ्यशर ५४७५ गुणे जातं १०३७२-५२४३७५, तस्मिन् पुनश्चतुर्गुणे जातं ४१४९००९७५००, एष वैताढ्य- जीवावर्ग, अस्य मूले जातं छेदराशि ४०७३८२, लब्धं कलाः २०३६९१, शेषं कलांशाः ७४०१९, लब्धकलानामेकोनविंशत्या भागे लब्धानि योजनानि १०७२० कलाः, सेषकलांशानां अर्धाभ्यधिकत्वात्, अर्धाभ्यधिके रूपं देयमिति एककलाक्षेपे जाताः कलाः द्वादशेति, अथास्य धनुःपृष्ठमाह–

'तीसे धनुपुट्ठं दाहिणेणं'मिति, गतार्थमेतत्, नवरं दश योजनसहस्राणि सप्त च त्रिचत्वारिंशानि–त्रिचत्वारिंशदधिकानि योजनशतानि पञ्चदश चैकोनविंशतिभागान् योजनस्येति, अत्र करणं यथा वैताढ्येषुः कलारूपः ५४७५, अस्य वर्ग २९९७५६२५, अयं षड्गुणः १७९८५३७५०, वैताढ्यजीवावर्गश्च ४१४९००९७५०० उभयोर्मीलने जातं ४१६६९९५१२५० एष वैताढ्यधनुःपृष्ठवर्ग, अस्य मूले छेदराशि ४०८२६४ लब्धकलाः २०४१३२ शेषकलांशाः ७७८२६ लब्धकलानामेकोनविंशत्या भागे लब्धं यथोक्तं मानं १०७४३, अथ किंविशिष्टोऽसौ वैताढ्य

'रुअगे'त्यादि, रुचकं–ग्रीवाभरणभेदः तत्संस्थानसंस्थितः सर्वात्मना रजतमयः 'अच्छे'त्यादिपदकदम्बकं प्राग्वत्, उभयोः पार्श्वयोर्दक्षिणतः उत्तरतश्च द्वाभ्यां पद्मवरवेदिकाभ्यां द्वाभ्यां च वनखण्डाभ्यां सर्वतः –समन्तात् संपरिक्षिप्तः अत्र यत्पद्मवरवेदिकाद्वयं तत्पूर्वापरतो

जगत्या रुद्धत्वाच्चिरवकाशत्वेनैकीभवनासम्भवात्, अन्यथा 'सव्वओ समंता संपरिक्खित्ते'त्ति वचनेनैकैव स्यादिति, 'ताओ न'मिति, सर्वं गतार्थं, नवरं पर्वतसमिका आयामेन, वैताढ्यसमाना आयामेनेत्यर्थः, अथैतदगतगुहाद्वयप्ररूपणायाह–

'वेयड्ढस्स ण'मित्यादि, वैताढ्यस्य पर्वतस्य 'पुरच्छिमपच्चच्छिमेणं'ति, अत्र सूत्र पूर्वस्या दिशः पूज्यत्वात् आर्षत्वाद्वा पुरच्छिमेतिशब्दस्य प्राग्निपातेऽपि पश्चिमायां पूर्वस्यामिति व्याख्येयं, अत्र ग्रन्थे ग्रन्थान्तरे च पश्चिमायां तमिस्रगुहायाः पूर्वस्यां च खण्डप्रपातगुहायाः अभिधानात्, द्वे गुहे प्रज्ञप्ते, प्राकृतशैल्या च बहुवचनं, उत्तरदक्षिणयोरायते, एतावता य एव वैताढ्यस्य विष्कम्भः स एवानयोरायाम इति भावः, प्राचीनप्रतीचीनविस्तीर्णे इत्याद्यर्थतो व्यक्तं, अत्र च उमास्वातिवाचककृतजम्बूद्वीपसमासप्रकरणे गुहाया विजयद्वारप्रमाणद्वारेतिविशेषणदर्शनात् चतुर्योजनविस्तृतद्वारा इत्यपि विशेषणं ज्ञेयं, वज्रमयकपाटाभ्यामवघाटिते, आच्छादिते इत्यर्थः, एते च द्वे अपि चक्रवर्तिकालवर्जं दक्षिणपार्श्वे उत्तरपार्श्वे च प्रत्येकं सदासम्मीलितवज्रमय-कपाटयुगले स्यातां, अत एव यमलानि–समस्थितानि युगलानि–द्वयरूपाणि घनानि–निश्छिद्राणि कपाटानि तैः दुष्प्रवेशे, तथा नित्यं अन्धकारतमिस्रे, द्वौ तुल्यार्थौ प्रकर्षपराविति प्रकृष्टान्धकारं ययोस्ते तथा, विशेषणद्वारा अत्रार्थे हेतुमाह– व्यपगतं ग्रहचन्द्रसूर्यनक्षत्राणां ज्योतिर्यतः स एतादृशः पन्था ययोस्ते तथा, अथवा व्यपगता ग्रहादीनां ज्योतिषश्च–अग्नेः प्रभा ययोस्ते तथा यावत्प्रतिरूपे, अत्र यावतकरणात् 'पासाईया' इत्यादि विशेषणत्रयं 'अच्छाओ' इत्यादीनि वा विशेषणानि यथासम्भवं ज्ञेयानि, ते गुहे नामतो दर्शयति, तद्यथा–'तमिस्र गुहा चैव खण्डप्रपाता, इमे द्वे अपि समस्वरूपे वेदितव्ये इति, 'तत्थ ण'मित्यादि, सर्वमेतद् विजयदेवसमगमकमिति व्याख्यातप्रायं, नवरं कृतमालकस्तमिस्राधिपति नृत्तमालकः खण्डप्रपाताधिपतिरिति ।

अथात्र श्रेणिप्ररूपणायाह– 'तेसि णं वनसंडाण'मित्यादि, तयोर्वैताढ्योभयपार्श्ववर्त्ति-नोर्भूमिगतयोर्वनखण्डयोर्बहुसमरमणीयाद् भूमिभागादूर्ध्वं वैताढ्यगिरेरुभयोः पार्श्वयोर्दश दश योजनान्युत्पत्य–गत्वा अत्र द्वे विद्याधरश्रेण्यौ–विद्याधराणामाश्रयभूते प्रज्ञप्ते, एका दक्षिणभागे एका चोत्तरभागे इत्यर्थः, प्रागपरायते उदगदक्षिणविस्तीर्णे, उभे अपि विष्कम्भेन दश २ योजनानि, अत एव प्रथममेखलायां वैताढ्यविष्कम्भस्त्रिंशद्योजनानि, पर्वतसमिके आयामेन, वैताढ्यवदिमे अपि पूर्वापरोदधिस्पृष्टे इत्यर्थः, तथा प्रत्येकमुभयोः पार्श्वयोः द्वाभ्यां पद्मवरवेदिकाभ्यां द्वाभ्यां च वनखण्डाभ्यां संपरिक्षिप्ते, एवमेकैकस्यां श्रेण्यां द्वे पद्मवरवेदिके द्वे च वनखण्डे इत्युभयोः श्रेण्योर्मीलने चतस्रः पद्मवरवेदिकाश्चत्वारि वनखण्डानीति ज्ञेयं, संवादी चायमर्थ श्रीमलयगिरिकृत-बृहत्क्षेत्रसमासवृत्त्या, तथा च तत्रोक्तम्–"एकैका च श्रेण उभयपार्श्ववर्तिभ्यां वैताढ्यप्रमाणा-यामाभ्यां द्वाभ्यां २ पद्मवरवेदिकाभ्यां द्वाभ्यां २ वनखण्डाभ्यां समन्ततः परिक्षिप्ते"ति, शेषं सूत्रं गतार्थमिति, अथ तयोः श्रेण्योः स्वरूपं पृच्छति– 'विज्जाहरे'त्यादि गतार्थं, नवरं अत्र बहुष्वादर्शेषु "नानामणिपंचवण्णेहिं मणीहिं" इति पाठो न दृश्यते, परं राजप्रश्नीयसूत्रवृत्त्योर्दृष्टत्वात् सङ्गतत्वाच्च 'नाणाविहपंचवण्णेहिं मणीहिं तणेहिं' इति पाठो लिखितोऽस्तीति बोध्यं ।

अथोभयश्रेण्योर्नगरसङ्ख्यामाह– 'तत्थ णं दाहिणिल्लाए' इत्यादि, तत्रतयोः श्रेण्योर्मध्ये दक्षिणस्यां विद्याधरश्रेण्यां गगनवल्लभप्रमुखाः पंचाशद्विद्याधरनगरावासाः प्रज्ञप्ताः, 'व्याख्यातो

विशेषप्रतिपत्ति'रिति तेन नगरावासा राजधानीरूपा ज्ञेयाः, स्वस्वदेशप्रतिबद्धाः, यदाह–

॥ १ ॥ "ते दसयोजणपिहुलेहिं सेढीसु जम्मुत्तरासु सजणवया ।
गिरिवरदीहासु कमा खयरपुरा पन्न सट्ठी या ॥"

इति, उत्तरस्यां विद्यधरश्रेण्यां रथनूपुरचक्रवालप्रमुखाः षष्टिर्विद्याधरनगरावासाः प्रज्ञप्ताः, दक्षिणश्रेणेः सकाशादस्या अधिकदीर्घत्वात्, ऋषभचरित्रादौ तु दक्षिणश्रेण्यां रथनुपूरचक्रवालं उत्तरश्रेण्यां गगनवल्लभमुक्तं तत्वं तु सातिशयश्रुतधरगम्यं, अनयोर्मुख्यता च श्रेण्यधिपराजधानीत्वेनेति, 'एवमेवे'त्युक्तन्यायेनैव सह पूर्वेण यदपरं तत् सपूर्वापरं–संख्यानं तेन दक्षिणस्यामुत्तरस्यां च विद्याधरश्रेण्यामेकं दशोत्तरं विद्याधरनगरावासशतं भवतीति आख्यातं मया अन्यैश्च तीर्थकरैरिति, श्रेणिद्वयगतपंचाशतषष्टिसङ्कलने यथोक्तसंख्याभवनादेषां च दशोत्तरशतसंख्यानगराणां नामानि श्रीहेमाचार्यकृतश्रीऋषभदेवचरित्रादवगन्तव्यानीति, 'ते विज्जाहरे'त्यादि, तानि विद्याधरनगराणि ऋद्धानि--भवनादिभिर्वृद्धिमुपगतानि स्तिमितानि–निर्भयत्वेन स्थिराणि समृद्धानि–धनधान्यादियुक्तानि ततः पदत्रयस्य कर्मधारयः, तथा प्रमुदिता–हृष्टाः प्रमोदवस्तूनां सद्भावाज्जना--नगरीवास्तव्यलोका जानपदाश्च–जनपदभवास्तत्रायाताः सन्तो येषु तानि तथा, यावत्करणात् सर्वोऽपि प्रथमोपाङ्गगतश्चम्पावर्णको ग्राह्यः, स च विस्तरभयान्नेह लिख्यते । अथ कियत्पर्यन्तः स ग्राह्य इत्याह–

पडिरूवा इति प्रतिरूपाणि–प्रतिविशिष्टं–असाधारणं रूपं–आकारो येषां तानि तथा तेषु णमिति प्राग्वत्, विद्याधरनगरेषु विद्याधरराजानः परिवसन्ति, अत्र समासान्तविधेरनित्यत्वान्नादन्तता, कथंभूतास्ते–महाहिमवान्–हैमवतक्षेत्रस्योत्तरतः सीमाकारी वर्षधरपर्वतः मलयः–पर्वतविशेषः सुप्रतीतो मन्दरो मेरु माहेन्द्रः–पर्वतविशेषः, शक्रो वा ते इव साराः–प्रधानाः, 'रायवण्णओ भा०'त्ति, अत्रापि सर्व प्रथमोपाङ्गगतो राजवर्णको भणितव्य इति 'विज्जाहरसेढी ण'मिति सूत्रं गतार्थं, अथात्रैव वर्त्तमाना- माभियोगश्रेणिं निरूपयति–

'तासुणं०, तयोर्विद्याधरश्रेण्योर्बहुसमरमणीयाद्भूमिभागाद् वैताढ्यस्य पर्वतस्योभयोः पार्श्वयोर्दश दश योजनान्यूर्ध्वमुत्पत्य अत्र द्वे आ–समन्तात् आभिमुख्येन युज्यन्ते - प्रेष्यकर्मणि व्यापार्यन्ते इत्याभियोग्याः–शक्रलोकपालप्रेष्यकर्मकारिणो व्यन्तरविशेषास्तेषामावा- सभूते श्रेण्यौ–आभियोग्यश्रेण्यौ प्रज्ञप्ते, शेषं गतार्थं, नवरं 'वण्णओ दोण्हवि'त्ति द्वयोरपि जात्यपेक्षया पद्मवरवेदिकावनखण्डयोर्वर्णको वाच्य इति शेषः, तथा पर्वतसमि- काश्चतस्रोऽपि पद्मवरवेदिका आयामेन--दैर्ध्येण, अत्र तत्सम्बन्धानि वनखण्डान्यपि पर्वतस- मान्यायामेनेति बोध्यं, 'आभिओगे'त्यादि, प्रागधस्तनसूत्रे जगती पद्मवरवेदिका समभूभाग- मणितृणवर्णादिकं व्यन्तरदेवदेवीक्रीडादिकं च येनैव गमेन व्यावर्णितं स एवात्र गम इति न पुनर्व्याख्यायते ।

'तासि ण'मित्यादि, तासु आभियोग्यश्रेणिषु शक्रस्यआसनविशेषस्याधिष्ठाता शक्रस्तस्य दक्षिणार्द्धलोकाधिपतेरित्यर्थः, देवेन्द्रस्य–देवानां मध्ये परमैश्वर्ययुक्तस्य देवराज्ञःदेवेषु कान्त्यादिगुणैरधिकं राजमानस्य सोमः–पूर्वदिक्पालो यमो–दक्षिणदिक्पालो वरुणः–पश्चिमदिक्पालो वैश्रमणः–उत्तरदिक्पालस्तेषां कायो–निकाय आश्रयणीयत्वेन येषां ते तथा तेषां, शक्रसम्बन्धिसोमादिदिक्पालपरिवारभूतानामित्यर्थः, आभियोग्यानां देवानां बहूनि भवनानि प्रज्ञप्तानि, तानि,

सूत्रे पुंस्त्वनिर्देशः प्राकृतत्वात्, णमिति प्राग्वत्, भवनानि बहिर्वृत्तानि—बहिर्वृत्ताकाराणि अन्तः चतुरस्राणि—समचतुरस्राणि 'वण्णओ'त्ति अत्र भवनानां वर्णको वाच्यः, स च किंपर्यन्त इत्याह— 'जाव अच्छरगणसंघविकिण्ण'त्ति, ततोऽपि कियत्पर्यन्त इत्याह—'जाव पडिरूव'त्ति, स च प्रज्ञापनास्थानाख्य द्वितीयपदोक्तः, यथा -

'अहे पुक्खरकण्णिआसंठाणसंठिया उक्किण्णंतरविउलगंभीरखायपरिहा पागारट्टालय-कवाडतोरणपडिदुवारदेसभागा जंतसयग्घिमुसलमुसुंढिपरिवारिआ अउज्झा सयाजया सयागुत्ता अडयालकोट्ठगरइआ अडयालकयवणमाला खेमा सिवा किंकरामरदंडोवरक्खिआ लाउल्लोइ-अमहिआ गोसीससरसरत्तचंदणदद्दर (दिण्ण) पंचंगुलितला उवचिअचंदणकलसा चंदनघडसुक-यतोरणपडिदुवारदेसभागा आसत्तोसत्तविउलवट्टवग्घारियमल्लदामकलावा पंचवण्णसरस-सुरहिमुक्कपुप्फपुंजोवयारकलिया कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुआभिरामा सुगंधवरगंधिआ गंधवट्टिभूया अच्छरगणसंघसंविकिण्णा दिव्वतुडियसद्दसंपणदिआ सव्वरय-णामया अच्छा सण्हा जाव अभिरूवा पडिरूव'त्ति, अत्र व्याख्या—

अधस्तनभागे पुष्करकर्णिकासंस्थानसंस्थितानि तथा उत्कीर्णमिवोत्कीर्णं अतीव व्यक्तमित्यर्थ उत्कीर्णमन्तरं यासां खातपरिखाणां ता उत्कीर्णान्तराः, किमुक्तं भवति ? —खातानां च परिखाणां च स्पष्टैवविवक्त्योन्मीलनार्थमपान्तराले महती पाली समस्तीति उत्कीर्णान्तराः, विपुला—विस्तीर्णा गम्भीरा—अलब्धमध्यभागाः खातपरिखा येषां भवनानां परितस्तानि तथा, खातपरिखाणा-मयं विशेषः परिखा उपरि विशाला अधः सङ्कुचिता खातं तूभयत्रापि सममिति, तथा प्राकारेषु—वप्रेषु प्रतिभवनं अट्टालकाः—प्रकारस्योपरिवत्याश्रियविशेषाः कपाटानि—प्रतोलीद्वारसत्कानि, एतेन प्रतोल्यः सर्वत्र सूचिताः, अन्यथा कपाटानामसम्भवात्, तोरणानि—प्रतोलीद्वारेषु प्रसिद्धानि प्रतिद्वाराणि मूलद्वारापान्तरालवर्त्तिलघुद्वाराणि एतद्रूपा देशभागा—देशविशेषा येषु तानि तथा, यन्त्राणि नानाविधानि शतघ्न्यो—महायष्ट्यो महाशिला वा या उपरिष्टात् पातिताः सत्यः पुरुषाणां शतानि घ्नन्तीति, मुसलानि—प्रतीतानि मुषण्ढयः—शस्त्रविशेषास्तैः परिवारितानि—समन्ततो वेष्टितानि, अत एवायोध्यानिपरैर्योद्धुमशक्यानि अयोध्यत्वादेव 'सदाजयानि' सदा—सर्वकालं जयो येषु तानि सदाजयानि, सर्वकालं जयवन्तीति भावः, तथा सदा—सर्वकालं गुप्तानि प्रहरणैः पुरुषैश्च योध्द मिः सर्वतो निरन्तरपरिवारिततया परेषामसहमानानां मनागपि प्रवेशासम्भवात्, तथा अष्टचत्वारिंशद्भेदभिन्नविच्छित्तिकलिताः कोष्ठकाः—अपवरका रचिताः—स्वयमेव रचनां प्राप्ता येषु तानि तथा, सुखादिदर्शनात् पाक्षिको निष्ठान्तस्य परनिपातः, तथा अष्टचत्वारिंश-द्भेदभिन्नविच्छित्तयः कृता वनमाला येषु तानि तथा, अन्ये त्वभिदधति—अडयाल इति देशीशब्दः प्रशंसावाची, ततोऽयमर्थः—

प्रशस्तकोष्ठकरचितानि प्रशस्तकृतवनमालानीति, तथा क्षेमाणि - परकृतोपद्रवरहितानि शिवानि—सदा मङ्गलोपेतानि, तथा किङ्कराः—किङ्करभूता येऽमरास्तैः दण्डैः कृत्वोपरक्षितानि, सर्वतः समन्ततोऽपरक्षितानि, तथा लाइअमिव लाइअं—छगणादिना भूमेरुपलेपनमिव 'उल्लोइआ' उल्लोइयमिव उल्लोइअं च सेटिकादिना कुड्यादिषु धवलनमिव ताभ्यां महितानीव—पूजितानीव, तथा गोशीर्षेण —चन्दनविशेषेण सरसेन—रक्तचन्दनेन च दर्दरेण—बहलेन दर्दराभिधानाद्रिजा-

तश्रीखण्डेन वा दत्ताः-न्यस्ताः पञ्चाङ्गुलयस्तला-हस्तका येषु तानि तथा, उपचिता-निवेशिता वंदनकलशा-माङ्गल्यघटा येषु तानि तथा, वन्दनघटैः-माङ्गल्यकलशैः सुकृतानि-सुष्ठु कृतानि शोभनानीत्यर्थः यानि तोरणानि तानि प्रतिद्वारदेशभागं-द्वारदेशभागे २ येषु तानि तथा, देशभागाश्च देशा एव, तथा आसक्तो भूमौ लग्न उत्सक्तश्च-उपरि लग्नो विपुलः-अतिविस्तीर्णो वृत्तः अति-निचिततया वर्तुलो वग्घारिअत्ति-प्रलम्बितो माल्यदा- मकलापः-पुष्पमालासमूहो येषु तानि तथा, पञ्चवर्णा सरसाः सुरभयो ये मुक्ताः-करप्रेरिताः पुष्पपुञ्जास्तैर्य उपचारः-पूजा भूमेस्तेन कलितानि, 'कालागरु' इत्यादि विशेषणत्रयं प्राग्वत्, अप्सरोगणानां संघः-समुदायः तेन सम्यग्-रमणीयतया विकीर्णानि-व्याप्तानि, तथा दिव्यानां त्रुटितानांआतोद्यानां ये शब्दास्तैः सम्यक्-श्रोतृमनोहारितया प्रकर्षेण-सर्वकालं नदितानि- शब्दवन्ति 'सव्वरयणामया' इत्यादि पदानि प्राग्वत्, 'तत्थ ण'मित्यादि, गतार्थमेतत् ।

अथ वैताढ्यस्य शिखरतलमाह तयोः-आभियोग्यश्रेण्योर्बहुसमरमणीयाद्भूमिभागा-द्वैताढ्यस्य पर्वतस्योभयोः पार्श्वयोः पञ्च पञ्च योजनान्यूर्द्धमुत्पत्य-गत्वा अत्रान्तरे वैताढ्यस्य पर्वतस्य शिखरतलं प्रज्ञप्तं, 'पाईणे'त्यादि प्राग्वत्, तच्च शिखरतलं एकया पद्मवरवेदिकया तत्परिवेष्टकभूतेन चैकेन वनखण्डेन सर्वतः समन्तात् संपरिक्षिप्तं,-यथा जगती मध्यभागे पद्मवरवेदिकैकैव जगतीं दिक्षु विदिक्षु वेष्टयित्वा स्थिता तथेयमपि सर्वतः शिखरतलं पर्यन्ते वेष्टयतिवा स्थिता, परमेषा आयतचतुरस्राकारशिखरतलसंस्थितत्वेनायतचतुरस्र बोद्धव्या, अत एवैकसंख्याका, तत्परतो बहिर्वर्त्ति वनखण्डमप्येकं, न तु वैताढ्यमूलगतपद्मवरवेदिकावने इव दक्षिणोत्तरविभागेन द्वयरूपे इति, श्रीमलयगिरिपादास्तु क्षेत्रविचारबृहद्वृत्तौ ''तन्मध्ये पद्मवरवेदिकोभयपार्श्वयोर्वन-खण्डा'' वित्याहुः, प्रमाणं-विष्कम्भायामविषयं, वर्णकश्च द्वयोरपि पद्मवरवेदिकावनखण्डयोः, प्राग्वद्भणि इत्यध्याहार्यं, अथ शिखरतलस्य स्वरूपं पृच्छति-

'वेअद्धस्स ण'मित्यादि, एतत्सर्वं जगतीगतपद्मवरवेदिकाया वनखण्डभूमिभागवद् व्याख्येयं, अथास्य कूटवक्तव्यता पृच्छति-

'जंबुद्दीवे ण', जम्बूद्वीपे भदन्त ! द्वीपे भरते वर्षे वैताढ्यपर्वते कति कूटानि प्रज्ञप्तानि ?, भगवानाह-गौतम नव कूटानि प्रज्ञप्तानि, तद्यथा-सिद्धानि-शाश्वतानि सिद्धानां वा-शाश्वती-नामर्हत्प्रतिमानामायतनं-स्थानं सिद्धायतनं तदाधारभूतं कूटं सिद्धाय- तनकूटं, दक्षिणार्द्धभरतनाम्नो देवस्य निवासभूतं कूटं दक्षिणार्द्धभरतकूटं, खण्डप्रपातगुहाधि- पदेवनिवासभूतं कूटं खण्डप्रपातगुहाकूटं, माणिभद्रनाम्नो देवस्य निवासभूतं कूटं माणिभद्रकूटं, वैताढ्यनाम्नो देवस्य निवासभूतं कूटं वैताढ्यकूटं, पूर्णभद्रनाम्नो देवस्य निवासभूतं पूर्णभद्रकूटं, अन्यत्र माणिभद्रकूटादनन्तरं पूर्णभद्रकूटं दृश्यते, तमिस्रगुहाधिपदेवस्य निवासभूतं कूटं तमिस्र- गुहाकूटं, उत्तरार्द्धभरतनाम्नो देवस्य निवासभूतं कूटं उत्तरार्द्धभरतकूटं, वैश्रमणलोकपालनिवासभूतं कूटं वैश्रमणकूटं, सर्वत्र मध्यपदलोपी समासः ।

अथ 'यथोद्देशं निर्देश' इति प्रथमसिद्धायतनकूटस्थानप्रश्नमाह -

**मू. (१४)** *कहि णं भंते ! जंबुद्दीवे दीवे भारहे वासे वेअद्धपव्वए सिद्धायतनकूडे नामं कूडे पन्नत्ते ?, गो० ! पुरच्छिमलवणसमुद्दस्स पच्चच्छिमेणं दाहिणद्धभरहकूडस्स पुरच्छिमेणं*

*एत्थ णं जंबुद्दीवे दीवे भारहे वसे वेअड्ढे पव्वए सिद्धायतनकूडे नामं कूडे पन्नत्ते, छ सक्कोसाइं जोअणाइं उद्धं उच्चत्तेणं मूले छ सक्कोसाइं जोअणाइं विक्खंभेणं मज्झे देसूणाइं पंच जोअणाइं विक्खंभेणं उवरि साइरेगाइं तिन्नि जोअणाइं विक्खंभेणं मूले देसूणाइं बावीसं जोअणाइं परिक्खेवेणं मज्झे देसूणाइं पन्नरस जोअणाइं परिक्खेवेणं उवरिं साइरेगाइं नव जोअणाइं परिक्खेवेणं, मूले विच्छिण्णे मज्झे संखित्ते उप्पिं तणुए गोपुच्छसंठाणसंठिए, सव्वरयणामए अच्छे सण्हे जाव पडिरूवे*

*से णं एगाए पउमवरवेइयाए एगेण य वनसंडेणं सव्वओ समंता संपरिक्खित्ते, पमाणं वण्णओ दोण्हंपि, सिद्धायतणकूडस्स णं उप्पिं बहुसमरमणिज्जे भूमिभागे पन्नत्ते, से जहानामए आलिंगपुक्खरेइ वा जाव वाणमंतरा देवा य जाव वि० । तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागे एत्थ णं महं एगे सिद्धाययने प० कोसं आयामेणं अद्धकोसं विक्खंभेणं देसूणं कोसं उद्धं उच्चत्तेणं अनेगखंभसयसन्निविट्ठे खंभुग्गयसुकयवइरवेइआतोरणवररइअसालभंजि-असुसिलिट्ठविसिट्ठलट्ठसंठिअपसत्थवेरुलि- अविमलखंभे नाणामणिरयणखचिअउज्जलबहुसमसु-विभत्तभूमिभागे ईहामिगउसभतुरगण- रमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयजा- वपउमलयभत्तिचित्ते कंचणमणिर- यणथूभियाए नानाविहपंच० वण्णओ घंटापडागपरिमंडि-अग्गसिहरे धवले मरीइकवयं विणिम्मुअंते लाउल्लोइअमहिए जाव सया ।*

*तस्स णं सिद्धायतनस्स तिदिसिं तओ दारा पन्नत्ता, ते णं दारा पंच धणुसयाइं उद्धं उच्चत्तेणं अद्धाइज्जाइं धनुसयाइं विक्खंभेणं तावइयं चेव पवेसेणं सेआवरकणगथूभिआगा दार-वण्णओ जाव वणमाला, तस्स णं सिद्धाययनस्स अंतो बहुसमरमणिज्जे भूमिभागे पन्नत्ते, से जहानामए आलिंगपुक्खरेइ वा जाव तस्स णं सिद्धाययनस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महं एगे देवच्छंदए पन्नत्ते पंचधनुसयाइं आयामविक्खंभेणं साइरेगाइं पंच धनुसयाइं उद्धं उच्चत्तेणं सव्वरयणामए ।*

*एत्थ णं जिनपडिमाणं जिणुस्सेहप्पमाणमित्ताणं सन्निक्खित्तं चिट्ठइ एवं जाव धूवकडुच्छुगा*

वृ. 'कहि णं'मित्यादि कण्ठ्यम्, नवरं दक्षिणार्द्धभरतकूटं यस्मात्पश्चिमदिग्वर्त्तीति ततः पूर्वेणेति, तद्योच्चत्वादिना क्रियत्प्रमाणमित्याह - 'छ सकोसाइं' इत्यादि, सक्रोशानि षड्योजनान्यूर्द्धोच्चत्वेन मूले सक्रोशानि षट् योजनानि विष्कम्भेन मध्ये देशोनानि पञ्च योजनानि, सपादक्रोशन्यूनानि पञ्च योजनानीत्यर्थः, विष्कम्भेन, उपरि सातिरेकाणि त्रीणि योजनानि, अर्द्धकोशाधिकानि त्रीणि योजनानीत्यर्थः, विष्कम्भेनेति, अथास्य शिखरादधोगमनेन विवक्षित-स्थाने पृथुत्वज्ञानाय करणमुच्यते—शिखरादवपत्य यावद्योजनादिकमतिक्रान्तं तॉवत्प्रमाणे योजना-दिके द्विकेन भक्ते कूटोत्सेधार्द्धयुक्ते च यज्जायते तदिष्टस्थाने विष्कम्भः, तथाहि—शिखरात् किल त्रीणि योजनानि क्रोशार्द्धाधिकान्यवतीर्णः, ततो योजनत्रयस्य क्रोशार्द्धाधिकस्य द्विकेन भागे लब्धाः षट् क्रोशाः क्रोशस्य च पादः, कूटोत्सेधश्च सक्रोशानि षड् योजनानि, अस्यार्द्धं योजनत्रयी क्रोशार्द्धाधिका, अस्मिंश्च पूर्वराशौ प्रक्षिप्ते जातानि सपादक्रोशोनानि पञ्च योजनानि, इयान् मध्यदेशे विष्कम्भः, एवमन्यत्रापि प्रदेशे भावनीयं ।

– तथा मूलादूर्ध्वगमने इष्टस्थाने विष्कम्भपरिज्ञानाय करणमिदं—मूलादतिक्रान्तयोजनादिके द्विकेन भक्ते लब्धं मूलव्यासाच्छोध्यतेऽवशिष्टमिष्टस्थाने विष्कम्भः, तथाहि—मूलात् त्रीणि योजनानि

क्रोशार्द्धाधिकानि ऊर्ध्वं गतः, अस्य द्विकेन भागे लब्धाः ६ क्रोशाः क्रोशस्य च पादः, एतावान् मूलव्यासात् शोध्यते, शेषं पञ्च योजनानि सपादक्रोशोनानि, इयान् मध्यभागे विष्कम्भः, एवमन्यत्रापि प्रदेशे भाव्यं, इमे चारोहावरोहकरणे शेषेषु वैताढ्यकूटेषु पञ्चशतिकेषु हिमवदादिकूटेषु सहस्राङ्केषु च हरिस्सहादिकूटेषु अष्टयोजनिकेषु च ऋषभकूटेष्ववतारणीये, वाचनान्तरोक्तमानापेक्षया तु ऋषभकूटेषु करणं जगतीवदिति। अस्य च पद्मवरवेदिकादिवर्णनायाह–

'से ण'मित्यादि व्यक्तं, अथ सिद्धायतनकूटस्योपरि भूभागवर्णनायाह–'सिद्धायतन' इत्यादि प्राग्वत्, अथात्र जिनगृहवर्णनायाह–'तस्स ण'मित्यादि, तस्य–बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे अत्र महदेकं सिद्धानां–शाश्वतीनामर्हत्प्रतिमानामायतनं–स्थानं चैत्यमित्यर्थः प्रज्ञप्तं क्रोशमायामेनार्द्धक्रोशं विष्कम्भेन देशोनं क्रोशमूर्द्धोच्चत्वेन, देशश्चात्र षष्ट्यधिकपञ्चशतधनूरूप इति, यत उक्तं वीरंजयसेहरेत्यादिक्षेत्रविचारस्य वृत्तौ–'ताणुवरि चेइहरा दहदेवीभवणतुल्लपरिमाणा' इत्यस्या गाथाया व्याख्याने "तेषां वैताढ्यकूटानामुपरि चैत्यगृहाणि ह्रददेवीभवनतुल्यपरिमाणानि वर्त्तन्ते, यथा श्रीगृहं क्रोशैकदीर्घं क्रोशार्द्धविस्तारं चत्वारिंशदधिकचतुर्दशशतधनुरुच्च"मिति, तथा अनेकेषु स्तम्भशतेषु संनिविष्टं, तदाधारकत्वेन स्थितमित्यर्थः, तथा स्तम्भेषु उद्गता–संस्थिता सुकृतेव सुकृता निपुणशिल्पिरचितेवेति भावः ततः पदद्वयस्य कर्मधारयः, तादृशी वज्रवेदिका–द्वारशुण्डिकोपरि वज्ररत्नमयी वेदिका तोरणं च स्तम्भोद्गतसुकृतं यत्र तत्तथा, तथा वराः–प्रधाना रतिदा–नयनमनःसुखकारिण्यः सालभंजिका येषु ते तथा सुश्लिष्टं–सम्बद्धं विशिष्टं–प्रधानं लष्टं–मनोज्ञं संस्थितं–संस्थानं येषां ते तथा ततः पदद्वयकर्मधारये तादृशाः प्रशस्ताः–प्रशंस्पदीभूता वैडूर्यविमलस्तम्भा यत्र तत्तथा, ततः पूर्वपदेन कर्मधारयः, तथा नानामणिरत्नानि खचितानि यत्र स नानामणिरत्नखचितः, निष्ठान्तस्य परनिपातः भार्यादिदर्शनात्, तादृश उज्ज्वलो–निर्मल बहुसमः–अत्यन्तसमः सुविभक्तो भूमिभागो यत्र तत्तथा।

'ईहामिगे'त्यादि प्राग्वत् व्याख्येयं, नवरं मरीचिकवचं–किरणजालपरिक्षेपं विनिर्मुञ्चत्, तथा लाइअं नाम यद्भूमेर्गोमयादिना उपलेपनं उल्लोइअं–कुड्यानां मालस्य च सेटिकादिभिः संमृष्टीकरणं लाउल्लोइअं ताभ्यामिव महितं–पूजितं लाउल्लोइअमहिअं, यथा गोमयादिनोपलिप्तं सेटिकादिना च धवलीकृतं यद्वद् गृहादि सश्रीकं भवति तथेदमपीति भावः, तथा 'जाव झया' इति अत्र यावत्करणात् वक्ष्यमाणयमिकाराजधानीप्रकरणगतसिद्धायतनवर्णकेऽतिदिष्टः सुधर्मासभागमो वाच्यो, यावत्सिद्धायतनोपरि ध्वजा उपवर्णिता भवन्ति, यद्यप्यत्र यवत्पदग्राह्ये द्वारवर्णकप्रतिमावर्णकधूपकडुच्छादिकं सर्वमन्तर्भवति तथापि स्थानाशून्यतार्थं किञ्चित् सूत्रे दर्शयति– 'तस्स णं सिद्धायतनस्स' इत्यादि, तस्य–सिद्धायतनस्य तिसृणां दिशां समाहारस्त्रिदिक् तस्मिन्, अनुस्वारः प्राकृतत्वात्, पूर्वदक्षिणोत्तरविभागेषु त्रीणि द्वाराणि प्रज्ञप्तानि, तानि द्वाराणि पञ्चधनुःशतान्यूर्ध्वोच्चत्वेन अर्धतृतीयानि धनुःशतानि विष्कम्भेन, तावन्मात्रमेव प्रवेशेन, अर्द्धतृतीयानि धनुःशतानीत्यर्थः, 'सेआ वरकणगथूभिआगा' इतिपदोपलक्षितो द्वारवर्णको मन्तव्यो विजयद्वारवद् यावद्वनमालावर्णनम् अत्रैव भूभागवर्णनायाह–

'तस्स ण' मित्यादि सुगमं, 'सिद्धायतनस्स' इत्यादि, तस्य बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे अत्र महानेको देवच्छन्दको–देवोपवेशस्थानं प्रज्ञप्तः, अत्रानुक्तापि आया-

मविष्कम्भाभ्यां देवच्छन्दकसमाना उच्चैस्त्वेन तु तदर्द्धमाना मणिपीठिका सम्भाव्यते, अन्यत्र राजप्रश्नीयादिषु देवच्छन्दकाधिकारे तथाविधमणिपीठिकाया दर्शनात् यथा सूर्याभविमाने 'तस्स णं सिद्धायतनस्स बहुमज्झदेसभाए एत्थ णं महं एगा मणिपेढिया पन्नत्ता सोलसजोअणाइं आयामविक्खंभेणं अट्ठ जोअणाइं उच्चत्तेणं'ति, तथा विजयाराजधान्यामपि 'तस्स णं सिद्धायतनस्स बहुमज्झदेसभाए, एत्थ णं महं एगा मणिपेढिआ पन्नत्ता दो जोअणाइं आयामविक्खंभेणं जोअणं बाहल्लेणं सव्वमणिमया अच्छा जाव पडिरूवा' इति, स च देवच्छन्दकः पञ्चधनुःशतान्याया-मविष्कम्भाभ्यां सातिरेकाणि साधिकानि पञ्चधनुःशतान्यूर्ध्वोच्चत्वेन सर्वात्मना रत्नमयः।

तत्र देवच्छन्दकेऽष्टशतं–अष्टोत्तरं शतं जिनप्रतिमानां जिनोत्सेधप्रमाणमात्राणां–जिनोत्सेधः–तीर्थकरशरीरोच्छ्रायः, तस्य च प्रमाणं उत्कृष्टतः पञ्चधनुःशतात्मकं जघन्यतः सप्तहस्ता-त्मकं इह च पञ्चधनुःशतात्मकं गृह्यते, तदेव मात्रा–प्रमाणं यासां तास्तथा तासां, तथा जगत्स्वा-भाव्यात्, देवच्छन्दकस्य चतुर्दिक्षु प्रत्येकं सप्तविंशतिभावेन सन्निक्षिप्तं तिष्ठति, ननु पद्मवरवेदिकादय इव शाश्वतभावधर्मा अपि सहजसिद्धा एव भवन्ति, तेन शाश्वतप्रतिमा इव शाश्वतप्रतिमाधर्मा अपि प्रतिष्ठितत्वाराध्यत्वादयः सहजसिद्धा एवेति।

किं प्रतिष्ठापनान्तरविचारेण ?, ततः शाश्वतप्रतिमासु सहजसिद्धमेवाराध्यत्वमिति न किञ्चिदनुपपन्नमिति, अत्र प्रतिमानां उत्सेधाङ्गुलमानेन पञ्चधनुःशतप्रमाणानां प्रमाणाङ्गुलमानेन पञ्चधनुःशतायामविष्कम्भे देवच्छन्दकेऽनवकाशचिन्ता न विधेयेति, अत्र प्रतिमावर्णकसूत्रं एवं–'जाव धूवकडुच्छुगा' इति सूत्रेण सूचितं जीवाभिगमाद्युक्तमवसेयं, तच्चेदम्–

तासि णं जिनपडिमाणं अयमेयारूवे वण्णावासे पन्नत्ते, तंजहा–तवणिज्जमया हत्थतल-पायतला अंकामयाइं नक्खाइं अंतोलोहियक्खपडिसेगाइं कणगामया पाया कणगामया गुप्फा कणगामईओ जंघाओ कणगामया जाणू कणगामया ऊरू कणगामईओ गायलट्ठीओ रिट्ठामए मंसू तवणिज्जमईओ नाभीओ रिट्ठामईओ रोमराईओ तवणिज्जमया चुचुआ तवणिज्जमया सिरिवच्छा कणगमईओ बाहाओ कणगामईओ गीवाओ सिलप्पवालमया उट्ठा फलिहामया दंता तवणिज्जमईओ जीहाओ तवणिज्जमया तालुआ कणगमई नासिगाओ अंतोलोहिअक्खपडिसेगाओ अंकामयाइं अच्छीणि अंतोलोहिअक्खपडिसेगाइं पुलगामईओ दिट्ठीओ रिट्ठामईओ तारगाओ रिट्ठामयाइं अच्छिपत्ताइं रिट्ठामईओ भमुहाओ कणगामया कवोला कणगामया सवणा कणगामईओ निडालपट्टिया वइरामईओ सीसघडीओ तवणिज्जमईओ केसंतकेसभूमिओ रिट्ठामया उवरिमुद्धया

तासि णं जिनपडिमाणं पिट्ठओ पत्तेयं २ छत्तधारपडिमा पन्नत्ता, ताओ णं छत्तधारपडिमाओ हिमरययकुंदिंदुप्पगासाइं सकोरेंटमल्लदामाइं धवलाइं आयवत्ताइं सलीलं ओहारेमाणीओ चिट्ठंति, तासि णं जिनपडिमाणं उभओपासिं पत्तेअं २ दो दो चामरधारपडिमाओ पन्नत्ताओ, ताओ णं चामरधारपडिमाओ चंदप्पहवइरवेरुलियणाणामणिकणगरयणखइअमहरिह तवणिज्जुज्जल-विचित्तदंडाओ चिल्लियाओ संखंककुंददगरयमयमहिअफेणपुंजसन्निकासाओ सुहुमरययदीहवाला-ओ धवलाओ चामराओ सलीलं धारेमाणीओ चिट्ठंति, तासि णं जिनपडिमाणं पुरओ दो दो नागपडिमाओ दो दो जक्खपडिमाओ दो दो भूअपडिमाओ दो दो कुंडधारपडिमाओ विणओणयाओ

पायवडियाओ पंजलिउडाओ सन्निक्खित्ताओ चिट्ठंति सव्वरयणामईओ अच्छाओ सण्हाओ लण्हाओ घट्ठाओ मट्ठाओ नीरयाओ निप्पंकाओ जाव पडिरूवाओ।

तत्थ णं जिनपडिमाणं पुरओ अट्ठसयं घंटाणं अट्ठसयं वंदनकलसाणं एवं भिंगाराणं आयंसगाणं थालाणं पाईणं सुपइट्ठगाणं मणोगुलिआणं वातकरगाणं चित्ताणं रयणकरंडगाणं हयकंठाणं जाव उसभकंठाणं पुप्फचंगेरीणं जाव लोमहत्थचंगेरीणं पुप्फपडलगाणं जाव लोमहत्थपडलगाणं'' तासां जिनप्रतिमानामयमेतद्रूपो वर्णव्यासः प्रज्ञप्तः, तद्यथा-तपनीयमयानि हस्ततलपादतलानि तथा कनकमयाः पादाः तथा कनकमया गुल्फाः अङ्कमयाः-अङ्करत्नमया अन्तर्लोहिताख्यरत्नप्रतिसेका नखाः, कनकमय्यो जङ्घाः, कनकमयानि जानूनि, कनकमया ऊरवः, कनकमय्यो गात्रयष्टयः, तपनीयमया नाभयः रिष्ठरत्नमय्यो रोमराजयः, तपनीयमयाश्चुचुकाः-स्तनाग्रभागाः, तपनीयमयाः श्रीवत्साः, तथा कनकमय्यो बाहाः, तथा कनकमय्यो ग्रीवा रिष्ठरत्नमयानि श्मश्रूणि शिलाप्रवालमया-विद्रुममया ओष्ठा स्फटिकमया दन्ताः तपनीयमय्यो जिह्वाः तपनीयमयानि तालुकानि कनकमय्यो नासिका अन्तर्लोहिताक्षरत्नप्रतिसेका अङ्कमयान्यक्षीणि अन्तर्लोहिताक्षप्रतिसेकानि, रिष्ठरत्नमय्योऽक्षिमध्यगतास्तारिकाः रिष्ठरत्नमयान्यक्षिपत्राणि-नेत्ररोमाणि रिष्ठरत्नमय्यो भ्रुवः कनकमयाः कपोलाः कनकमया श्रवणाः कनकमय्यो ललाटपट्टिकाः वज्रमय्यः शीर्षघटिकाः तपनीयमय्यः, केशान्तभूमयः केशभूमयश्च, रिष्ठरत्नमया उपरि मूर्द्धजाः-केशाः, ननु केशरहितशीर्षमुखानां भावजिनानां प्रतिरूपकत्वेन सद्भावस्थापना।

जिनानां कुतः केशकूर्चादिसम्भवः ?, उच्यते, भावजिनानामपि अवस्थितकेशादिप्रतिपादनस्य सिद्धान्तसिद्धत्वात्, यदुक्तं श्रीसमवायाङ्गेऽतिशयाधिकारे-''अवट्ठिअकेसमंसुरोमणहे'' इति, तथा औपपातिकोपाङ्गे-'अवट्ठिअसुविभत्तचित्तमंसू' इति, अवस्थितत्वं च देवमा-हात्म्यतः पूर्वोत्पन्नानां केशादीनां तथैवावस्थानं न तु सर्वथाऽभावत्वं, इत्थमेव शोभातिरेकदर्शनं पुरुषत्वप्रतिपत्तिश्च, तेन प्रस्तुते न तत्प्रतिरूपताव्याघातः, नन्वेवं सति अर्चनकेन किमालम्ब्य तेषां श्रामण्यावस्था भावनीयेति चेत् ?, उच्यते, परिकर्मितरिष्ठमणिमयतयाविधाल्पकेशादिरमणीयमुखादिस्वरूपमिति, यत्तु श्रीतपागच्छनायकश्रीदेवेन्द्रसूरिशिष्यश्रीधर्मघोषसूरिपादैर्भाष्यवृत्तौ भगवतोऽपगतकेशशीर्षमुखनिरीक्षणेन श्रामण्यावस्था सुज्ञानैवेत्यभिदधे तदवर्द्धिष्णुत्वेनाल्पत्वेन चाभावस्य विवक्षणात् श्रामण्यावस्थाया अप्रतिबन्धकत्वाच्चेति न किमप्यनुपपन्नं, तासां जिनप्रतिमानां पृष्ठत एकैका छत्रधारप्रतिमा प्रज्ञप्ता, ताश्च छत्रधारप्रतिमा हिमरजतकुन्देन्दुप्रकाशानि सकोरण्टमाल्यदामानि धवलानि आतपत्राणि-छत्राणि सलीलं धारयन्त्यस्तिष्ठन्ति, तासां जिनप्रतिमानामुभयोः पार्श्वयोः प्रत्येकं द्वे द्वे चामरधारप्रतिमे प्रज्ञप्ते, ताश्च चामरधारप्रतिमाः चन्द्रप्रभः-चन्द्रकान्तो वज्रं-हीरकमणि वैडूर्यं च-प्रतीतं तानि शेषाणि च नानामणिरत्नानि खचितानि येषु दण्डेषु ते तथा, एवंरूपा महार्हस्य-महार्घस्य तपनीयस्य सत्का उज्ज्वला विचित्रा दण्डा येषु तानि तथा'चिल्लियाओ' इत्यादि प्राग्वत्,

नवरं 'चामराओ'त्ति प्राकृतत्वात् स्त्रीत्वं चामराणि सलीलं धारयन्त्यो-वीजयन्त्यो वीजयन्त्यस्तिष्ठन्ति,

तासां जिनप्रतिमानां पुरतो द्वे द्वे नागप्रतिमे द्वे द्वे यक्षप्रतिमे द्वे द्वे भूतप्रतिमे द्वे द्वे कुण्ड-

धारप्रतिमे—आज्ञाधारप्रतिमे, विनयावनते पादपतिते प्राञ्जलिपुटे सन्निक्षिप्ते तिष्ठतः, ताश्च 'सव्वरयणामईओ' इत्यादि प्राग्वत्, तस्मिन् देवच्छन्दके जिनप्रतिमानां पुरतोऽष्टशतं घण्टानां अष्टशतं चन्दनकलशानां—माङ्गल्यघटानां अष्टशतं भृङ्गाराणामष्टशतमादर्शानामष्टशतं स्थालानामष्टशतं पात्रीणामष्टशतं सुप्रतिष्ठकानामष्टशतंमनोगुलिकानां—पीठिकाविशेषरूपाणामष्टशतं वातकरकाणामष्टशतं चित्राणां रत्नकरण्डका-नामष्टशतं हयकण्ठानामष्टशतं गजकण्ठानामष्टशतं नरकण्ठानामष्टशतं किन्नरकण्ठानामष्टशतं किंपुरुषकण्ठानामष्टशतं महोरगकण्ठानामष्टशतं गन्धर्वकण्ठानामष्टशतं वस्त्रचङ्गेरीणामष्टशतमाभरणचङ्गेरीणामष्टशतं सिद्धार्थकचङ्गेरीणामष्टशतं लोमहस्तकचङ्गेरीणां लोमहस्तकामयूरपिच्छपुञ्जनिका अष्टशतं पुष्पपटलकानामष्टशतं माल्यपटलकानां मुक्तलानि पुष्पाणि ग्रथितानि माल्यानि अष्टशतं चूर्णपटलकानामेवं गन्धवस्त्रभरणसिद्धार्थकलोमहस्तकपटलकानामपि प्रत्येकं प्रत्येकमष्टशतं द्रष्टव्यं।

अष्टशतं सिंहासनानामष्टशतं छत्राणामष्टशतं चामराणामष्टशतं तैलसमुद्गकानामष्टशतं कोष्ठसमुद्गकानामष्टशतं चोअकसमुद्गकानामष्टशतं तगरसमुद्गकानामष्टशतमेला-समुद्गकानामष्टशतं हरितालसमुद्गकानामष्टशतं हिंगुलकसमुद्गकानामष्टशतं मनःशिलासमुद्गकानामष्टशतमञ्जनसमुद्गकानां, सर्वाण्यप्येतानि तैलादीनि परमसुरभिगन्धोपेतानि द्रष्टव्यानि, अष्टशतं ध्वजानां, अत्र सङ्ग्रहणीगाथे—

॥१॥ 'वंदनकलसा भिंगारगा य आयंसगा य थाला य।
पाई सुपइट्ठा मनगुलिया वायकरगा य॥

अष्टशतं धूपकडुच्छुकानां सन्निक्षिप्तं तिष्ठति। उक्ता सिद्धायतनकूटवक्तव्यता, अथ दक्षिणार्द्धभरतकूटस्वरूपं पृच्छन्नाह—

*मू. (१५) कहि णं भंते! वेअड्ढे पव्वए दाहिणड्ढभरहकूडे नामं कूडे पन्नत्ते?, गो० खंडप्पवायकूडस्स पुरच्छिमेणं सिद्धाययनकूडस्स पच्चच्छिमेणं एत्थ णं वेअड्ढपव्वए दाहिणड्ढभरहकूडे णामं कूडे पन्नत्ते, सिद्धाययणकूडप्पमाणसरिसे जाव तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महं एगे पासायवडिंसए पण्णत्ते, कोसं उड्ढं उच्चत्तेणं अद्धकोसं विक्खंभेणं अब्भुग्गयमूसियपहसिए जाव पासाईए ४।*

*तस्स णं पासायवडंसगस्स बहुमज्झदेसभाए एत्थ णं महं एगा मणिपेढिआ पण्णत्ता, पंच धनुसयाइं आयामविक्खंभेमं अड्ढाइज्जाहिं धणुसयाइं बाहल्लेणं सव्वमणिमई, तीसे णं मणिपेढिआ उप्पिं सिंहासणं पण्णत्तं, सपरिवारं भाणियव्वं, से केणट्ठेणं भंते! एवं वुच्चइ—दाहिणड्ढभरहकूडे २?, गो०! दाहिणड्ढभरहकूडे णं दाहिणड्ढभरहे नामं देवे महिड्ढीए जाव पलिओवमट्ठिईए परिवसइ, से णं तत्थ चउण्हं सामानिअसाहस्सीणं चउण्हं अग्गमहिसीणं सपरिवाराणं तिण्हं परिसाणं सत्तण्हं अनियाणं सत्तण्हं अनियाहिवईणं सोलसण्हं अयारक्खदेवसाहस्सीणं दाहिणड्ढभरहकूडस्स दाहिणड्ढाए रायहाणीए अन्नेसिं बहूणं देवाण य देवीण य जाव विहरइ।*

*कहि णं भंते! दाहिणड्ढभरहकूडस्स देवस्स दाहिणड्ढा नामं रायहाणी पन्नत्ता?, गो०! मंदरस्स पव्वतस्स दक्खिणेणं तिरियमसंखेज्जदीवसमुद्दे वीईवइत्ता अयण्णं जंबुद्दीवे दीवे दक्खिणेणं बारस जोयणसहस्साइं ओगाहित्ता एत्थ णं दाहिणड्ढभरहकूडस्स देवस्स दाहिणड्ढभरहा नामं*

*रायहाणी भाणिअव्वा जहा विजयस्स देवस्स, एवं सव्वकूडा नेयव्वा जाव वेसमणकूडे परोप्परं पुरच्छिमपच्चत्थिमेणं, इमेसिं वण्णावासे गाहा—*

वृ. 'कहि ण'मित्यादि, अत्र सर्वापि पदयोजना सुगमा, नवरं प्रासादावतंसकः क्रोशमूर्ध्वोच्चत्वेनार्द्धक्रोशं विष्कम्भेन, अत्र सूत्रेऽनुक्तमप्यर्द्धक्रोशमायामेनेति बोध्यं, 'सेसेसु अ पासाया कोसुच्चा अद्धकोसपिहुदीहा' इत्यादिश्रीआमवतिलकसूरिकृतसिरिनिलयमितिक्षेत्र-विचारवचनात्, श्रीउमास्वातिकृते जम्बूद्वीपसमासे तु प्रासादवतंसकः क्रोशार्द्धक्रोशदैर्घ्यविस्तारः किञ्चिन्न्यूनतदुच्छ्रयः उक्तोऽस्तीति, 'अब्भुग्गयमूसिअ' इत्यादि प्राग्वत्, अथ तत्र यदस्ति तदाह—

'तस्स ण'मित्यादि सुगमं, नवरं 'सपरिवारं'ति दक्षिणार्द्धभरतकूटाधिपसामानिकादिदेव-योग्यभद्रासनसहितमिति, अथ प्रस्तुतकूटनामान्वर्थं पृच्छति—'से केणट्ठेणं'मित्यादि, सर्वं चैतत्सूत्रं विजयद्वारनामान्वर्थसूचकसूत्रवत्परिभावनीयं, नवरं दक्षिणार्द्धाया इति पदैकदेशे पदसमुदा-योपचारात् पाठान्तरानुसाराद्वा दक्षिणार्द्धभरताया राजधान्या इति, अत्र सूत्रेऽदृश्यमानमपि 'से तेणट्ठेण'मित्यादि सूत्रं स्वयं ज्ञेयं, तथा च दक्षिणार्द्धभरतकूटनामा देवः स्वामित्वेनास्यास्ती-त्यभ्रादित्वादप्रत्यये दक्षिणार्द्धभरतकूटमिति, अथास्य राजधानी कास्तीति पृच्छति—'कहि ण'मित्यादि व्यक्तं, अथापरकूटवक्तव्यतां दक्षिणार्द्धभरतकूटातिदेशेनाह— 'एवं सव्व'इत्यादि, एवं—दक्षिणार्द्धभरतकूटन्यायेन सर्वकूटानि तृतीयखण्डप्रपातगुहा- कूटादीनि—नेतव्यानि—बुद्धिपथं प्रापणीयानि यावन्नवमं वैश्रमणकूटं, 'परोप्परं'ति परस्परं 'पुरच्छिमपच्चत्थिमेणं'ति पूर्वापरेण, अयमर्थ—पूर्वं पूर्वं पूर्वस्यां उत्तरमुत्तरमपरस्यां, पूर्वापरविभाग-स्यापेक्षिकत्वात्, 'इमेसिं'इत्यादि, एषां कूटानां वर्णकव्यासे—वर्णकविस्तारे इमा—वक्ष्यमाणा गाथा, 'इमा से' इति पाठे तु से इति वचनस्य व्यत्ययात् तेषां कूटानां वर्णावासे इमा गाथे ति योजनीयं।

मू. (१६) *'मज्झे वेअड्ढस्स उ कणयमया तिन्नि होंति कूडा उ।*
*सेसा पव्वयकूडा सव्वे रयणामया होंति।*

वृ. 'मज्झे वेअड्ढस्स उ' इत्यादि, तुशब्दो विशेषे स च व्यवहितसम्बन्धः, तेन वैताढ्यस्य मध्ये तु सर्वमध्यमानि त्रीणि कूटानि कनकमयानि भवन्ति, सूत्रे स्त्रीलिङ्गनिर्देशः प्राकृतत्वात्, शेषाणि पर्वतकूटानि वैताढ्यवर्षधरमेरुप्रभृतिगिरिकूटानि 'व्याख्यातो विशेषप्रतिपत्ति'रिति हरिस्सहहरिकूटबलकूटवर्जितानि रत्नमयानि ज्ञातव्यानि, यत्त्वत्र वैताढ्यप्रकरणे सर्वपर्वतगत-कूटज्ञापनं तत्सर्वेषामेकवर्णकत्वेन लाघवार्थं, तथा वैताढ्यस्येत्यत्र जात्यपेक्षयैकवचनं तेन सर्वेषामपि वैताढ्यानां भरतैरावतमहाविदेहविजयगतानां नवसु कूटेषु सर्वमध्यमानि त्रीणि त्रीणि कूटानि कनकमयानि ज्ञातव्यानि। एतदेव वैताढ्ये व्यक्त्या दर्शयति—

मू. (१७) *जण्णामया य कूडा तन्नामा खलु हवंति ते देवा।*
*पलिओवमट्ठिईया हवंति पत्तेअपत्तेयं॥*

वृ- एनमेवार्थं सविशेषं गाथयाऽऽह- यन्नामकानि कूटानि तन्नामानः खलुर्निश्चये भवन्ति देवाः पल्योपमस्थितिका भवन्ति, प्रत्येकं २ प्रतिकूटमित्यर्थः एतेनाष्टानां कूटानां स्वामिन उक्ताः, सिद्धायतनकूटे तु सिद्धायतनस्यैव मुख्यत्वेन तत्स्वामिदेवानभिधानमिति, ननु दक्षिणा-र्द्धभरतकूटानां स्वसदृशनामकदेवाश्रयभूतत्वात् नामान्वर्थं सङ्गच्छते, यथा दक्षिणार्द्धभरत-

नामदेवस्वामिकत्वादुपचारेण दक्षिणार्द्धभरतनामा देवः स्वामित्वेनास्यास्तीति अभ्रादित्वादप्रत्यये वा दक्षिणार्द्धभरतं, एवमन्येष्वपि, परं खण्डप्रपातगुहाकूटतमिस्रगुहाकूटयोः स कथं ?, तत्स्वामिना-र्नृत्तमालकृ तमालयोर्विसदृशनामकत्वात्, न च खण्डप्रपातगुहाया उपरिवर्ति कूटं खण्डप्र-पातगुहाकूटमित्यादिरेवान्वर्थोऽस्त्विति वाच्यं, अत्र सूत्रे दक्षिणार्द्धभरतकूटवत् शेषकूटा-नामतिदेशात् बृहत्क्षेत्रसमासवृत्तौ "एवं शेषकूटान्यपि स्वस्वाधिपतयोगतः प्रवृत्तान्यवसेयानी"ति श्रीमलयगिरिसूरिभिरुक्तत्वाच्चेति चेत्, उच्यते, खण्डप्रपातगुहाधिपस्य कूटं खण्डप्रपातगुहाकूटं, तमिस्रगुहाधिपस्य कूटं तमिस्रगुहाकूटमिति स्वामिनो यौगिकनामान्तरापेक्षया अत्राप्यन्वर्थो घटत एव, यदुक्तं तैरेव तत्र- "तृतीये कूटे खण्डप्रपातगुहाधिपतिर्देव आधिपत्यं परिपालयति तेन तत् खण्डप्रपातगुहाकूटमित्युच्यते" इति न किमप्यनुपपन्नं ।

मू. (१८) *माणिभद्दकूडे १ वेअड्ढकूडे २ पुन्नभद्दकूडे ३ एए तिन्नि कूडा कणगामया सेसा छप्पि रयणमया, दोण्हं विसरिसणामया देवा कयमालए चेव नट्टमालए चेव, सेसाणं छण्हं सरिसणामया रायहाणीओ जंबुद्दीवे दीवे मंदरस्स पव्वयस्स दाहिणेणं तिरिअं असंखेज्जदीवसमुद्दे वीईवइत्ता अण्णंमि जंबुद्दीवे दीवे बारस जोअणसहस्साइं ओगाहित्ता, एत्थ णं रायहाणीओ भाणिअव्वाओ विजयरायहाणीसरिसयाओ ।*

वृ- मणिभद्द इत्यादि, द्वयोः कूटयोर्विसदृशनामक देवौ स्वामिनौ, तद्यथा-कृ तमालकश्चैव नृत्तमालकश्चैव, तमिस्रगुहाकूटस्य कृ तमालः स्वामी खण्डप्रपातगुहाकूटस्य नृत्तमालः स्वामी, शेषाणां षण्णां कूटानां सदृक्-कूटनामसदृशं नाम येषां ते सदृगनामका देवाः स्वामिनः, यथा दक्षिणार्धभरतकूटस्य दक्षिणार्द्धभरतकूटनामा देवः स्वामी, एवमन्येषामपि भावना कार्या ।

अथ तृतियादिकूटाधिपतीनां राजधान्यः क्व सन्तीति प्रश्नसूचकं सूत्रमाह-'रायहाणीओ'त्ति, अत्र निर्वचनसूत्रम्, 'जंबूद्दीवे दीवे' इत्यादि, जंबूद्वीपे द्वीपे इत्यादि सर्वं व्यक्तम्, नवरं खण्डप्रपातगुहाधिपतेर्देवस्य राजधानि खण्डप्रपातगुहाविधाना माणिभद्रस्य माणिभद्रेत्यादि, सर्वाणि चोक्तवक्ष्यमाणानि कूटानि एकैकवनखण्डपद्मवरवेदिकायुतानि मन्तव्यानि ।

मू. (१९) *से केणट्ठेणं भंते ! एवं वुच्चइ वेअड्ढे पव्वए ?, गोयमा ! वेअड्ढे णं पव्वए भरहं वासं दुहा वभयमाणे २ चिट्ठइ, तंजहा-दाहिणड्ढभरहं च उत्तरड्ढभरहं च, वेअड्ढगिरिकुमारे अ इत्थ देवे महिड्ढीए जाव पलिओवमट्ठिइए परिवसइ ।*

*से तेणट्ठेणं गोयमा ! एवं वुच्चइ-वेअड्ढे पव्वए २, अदुत्तरं च णं गोअमा ! वेयड्ढस्स पव्वयस्स सासए नामधेज्जे पन्नत्ते जं न कयाइ न आसि न कयाइ न अत्थि न कयाइ न भविस्सइ भुविं च भवइ अ भविस्सइ अ धुवे निअए सासए अक्खए अव्वए अवट्ठिए निच्चे ।*

वृ- अथ वैताढ्यनाम्नो निरुक्तं पृच्छति-'से केणट्ठेण'मित्यादि, अत्र प्रश्नसूत्रं प्राग्वत्, उत्तरसूत्रे तु वैताढ्यः पर्वतः, णमिति प्राग्वत्, भारतं वर्ष-भरतक्षेत्रं द्विधा विभजन् २ तिष्ठति, तद्यथा-दक्षिणार्द्धभरतं च उत्तरार्द्धभरतं च, तेन भरतक्षेत्रस्य द्वे अर्द्धे करोतीति वैताढ्यः पृषोदरादित्वाद्रूपसिद्धि, अथ प्रकारान्तरेण नामान्वर्थमाह-अथ च वैताढ्यगिरिकुमारोऽत्र देवो महर्द्धिको यावत्करणात् 'महज्जुईए' इत्यादिपदसङ्ग्रहः पल्योपमस्थितिकः परिवसति, तेन वैताढ्य इति नामान्वर्थो विजयद्वारवद् ज्ञेयः, सदृशनामकस्वामिकत्वात्, 'अदुत्तरं च ण'मित्यादि प्राग्वत्।

*मू. (२०) कहि णं भंते ! जंबुद्दीवे दीवे उत्तरड्ढभरहे नामं वासे पण्णत्ते ?, गोअमा ! चुल्लहिमवंतस्स वासहरपव्वयस्स दाहिणे णं वेअड्ढस्स पव्वयस्स उत्तरेणं पुरच्छिमलवणसमुद्दस्स पच्चच्छिमेणं पच्चच्छिमलवणसमुद्दस्स पुरच्छिमेणं एत्थ णं जंबुद्दीवे दीवे उत्तरड्ढभरहे नामं वासे पण्णत्ते पाईणपडीणायए उदीणदाहिणविच्छिण्णे पलिअंकसंठिए दुहा लवणसमुद्दं पुट्ठे पुरच्छिमिल्लाए कोडीए पुरच्छिमिल्लं लवणसमुद्दं पुट्ठे पच्चच्छिमिल्लाए जाव पुट्ठे गंगासिंधूहिं महानईहिं तिभागपविभत्ते दोण्णि अट्ठतीसे जोअणसए तिण्णि अ एगूणवीसइभागे जोअणस्स विक्खंभेणं, तस्स बाहा पुरच्छिमपच्चच्छिमेणं अट्ठारस बानउए जोअणसए सत्त य एगूणवीसइभागे जोअणस्स अद्धभागं च आयामेणं तस्स जीवा उत्तरेणं पाइणपडीणायया दुहा लवणसमुद्दं पुट्ठा तहेव जाव चोद्दस जोअणसहस्साइं चत्तारि अ एक्कहत्तरे जोअणसए छच्च एगूणवीसइभाए जोअणस्स किंचिविसेसूणे आयामेणं पन्नत्ता, तीसे धनुपट्ठे दाहिणेणं चोद्दस जोअणसहस्साइं पंच अट्ठावीसे जोअणसए एक्कारस य एगूणवीसइभाए जोअणस्स परिक्खेवेणं ।*

*उत्तरड्ढभरहस्स णं भंते ! वासस्स केरिसए आयारपडोयारे पन्नत्ते ?, गोअमा ! बहुसमरमणिज्जे भूमिभागे पन्नत्ते, से जहा णामए आलिंगपुक्खरेइ वा जाव कित्तिमेहिं चेव अकित्तिमेहिं चेव, उत्तरड्ढभरहे णं भंते ! वासे मणुआणं केरिसए आयारभावपडोयारे पन्नत्ते ?, गोअमा ! ते णं मणुआ बहुसंघयणा जाव अप्पेगइआ सिज्झंति जाव सव्वदुक्खाणमंतं करेंति ।*

वृ- अथोत्तरार्द्धभरतवर्षं क्वास्तीति प्रश्नसूत्रमाह-'कहि ण'मित्यादि, दक्षिणार्द्धभरतसमगमकत्वेन व्यक्तं, नवरं 'पलिअंक'त्ति पर्यङ्कवत् संस्थितं-संस्थानं यस्य तत्तथा, द्वे शते अष्टत्रिंशदधिके त्रींश्चैकोनविंशतिभागान् योजनस्य विष्कम्भेनेति, अस्य शरस्तु प्राच्यशरसहितस्वक्षेत्रविस्तारो योजनतः ५२६-६, कलास्तु १०००० ।

अथास्य बाहे आह-'तस्स बाहा' इत्यादि, तस्योत्तरार्द्धभरतस्य बाहा-पूर्वोक्तस्वरूपा पूर्वापरयोर्दिशोरेकैका अष्टादश योजनशतानि द्विनवतियोजनाधिकानि सप्त चैकोनविंशतिभागान् योजनस्य अर्द्धभागं चैकोनविंशतितमभागस्य, योजनस्याष्टत्रिंशत्तमभागामित्यर्थ, अत्र करणं यथा-गुरु धनुःपृष्ठं कलारूपं २७६०४२ अस्मात् २०४१३१ कलारूपं लघु धनुःपृष्ठं शोध्यते, जातं ७१९११, अर्द्धे कृते जातं कला ३५९५५ कलार्द्धं च, तासां योजनानि १८९२ कलाः ७ कलार्द्धं चेति, एतच्चैकैकस्मिन् पार्श्वे बाहाया आयाममानं ।

अथास्य जीवामाह- तस्य जीवा-प्रागुक्तस्वरूपा उत्तरेण-क्षुद्रहिमवद्गिरिदिशि प्राचीनप्रतीचीनायता द्विधा लणसमुद्रं स्पृष्टा तथैव-दक्षिणार्द्धभरतजीवासूत्रवदेव 'जाव'त्ति 'पच्चत्थिमिल्लं लवणसुद्दं पुट्ठे'ति पर्यन्तं सूत्रं ज्ञेयम् चतुर्दश योजनसहस्राणि चत्वारि चैकसप्तत्यधिकानि योजनशतानि षट् चैकोनविंशतिभागान् योजनस्य किञ्चिद्विशेषोनान् आयामेन प्रज्ञप्ता, अत्र करणं यथा-कलीकृतो जम्बूद्वीपव्यासः १९ शून्य ५, इषूनितः १८९ शून्य ४, इषुगुणः १८९ शून्यः ८, चतुर्गुणः ७५६ शून्य ८, एष उत्तरभरतार्द्धजीवावर्ग, अस्य वर्गमूले लब्धाः कलाः २७४९५४, शेषं कलांशाः २९७८८४ छेदः ५४९९०८ लब्धकलानां १९ भागे योजन १४४७१ उद्धरितैः शेषकलांशैर्मध्ये प्रक्षिप्तैः षष्ठी कला किञ्चिद्विशेषोना विवक्षितेति ।

अथास्य धनुःपृष्ठमाह- तस्या-उत्तरार्द्धभरतजीवाया दक्षिणपार्श्वे धनुःपृष्ठं

अर्थादुत्तरार्द्धभरतस्य चतुर्दश योजनसहस्राणि पञ्च शतान्यष्टाविंशत्यधिकानि एकादश चैकोनविंशतिभागान् योजनस्य परिक्षेपेण-परिधिना प्रज्ञप्तमिति शेषः, अत्र करणं यथा-उत्तरार्द्धभरतस्य कलीकृत इषुः १००००, अस्य वर्ग १ शून्य ८, स च षड्गुणः ६ शून्य ८, सोऽप्युत्तरार्द्धभरतजीवावर्गेण ७५६००००००० इत्येवंरूपेण मिश्रितो जातः ७६२ शून्य ८, एष उत्तरार्द्धभरतस्य जीवावर्ग, अस्य मूलेय लब्धाः कलाः २७६०४३, शेषं कलांशाः २६२१५१, छेदराशि ५५२०२६, कलानामेकोनविंशत्या भागे अत्र शेषांनामविवक्षितत्वान्नैकादश-कलानां साधिकत्वसूचा-

एषा च शरादीनां करणविधि प्रसङ्गतोऽत्र दर्शितः, अतः परमुत्तरत्र क्षुद्रहिमवदादिसूत्रेषु स न दर्शयिष्यते विस्तरभयात्, तज्जिज्ञासुना तु क्षेत्रविचारवृत्तितो ज्ञेय इति । अथोत्तरार्द्धभरतस्वरूपं पृच्छति-'उत्तरभरहस्स नं' मित्यादि व्यक्तं, अत्रैव मनुष्यस्वरूपं पृच्छति-'उत्तरड्ढभरहे' इत्यादि, इदमपि प्राग्वत्, यावदेके केचन सर्वदुःखानामन्तं कुर्वन्तीति । नन्वत्रत्यमनुष्याणामर्हदाद्यभावेन मुक्त्यङ्गभूतधर्मश्रवणाद्यभावात् कथं मुक्त्यवाप्तिसूत्रमौचित्यमञ्चति इति चेत् ?, उच्यते, चक्र वर्तिकाले अप्राकृत[illegible]किंवोत्तरार्द्धभरतवासिसाध्वा-दिभ्यो वाऽन्यदाऽपि विद्याधरश्रमणादिभ्यो वा जातिस्मरणादिना वा मुक्त्यङ्गावाप्तेर्मुक्त्यवाप्ति-सूत्रमुचितमेवेति । अथैतत्क्षेत्रवरतिऋषभकूटं कास्तीति पृच्छति-

मू. (२१) *कहि णं भंते ! जंबुद्दीवे दीवे उत्तरड्ढभरहे वासे उसभकूडे नामं पव्वए पन्नत्ते?, गोअमा ! गंगाकुंडस्स पच्चत्थिमेणं सिंधुकुंडस्स पुरच्छिमेणं चुल्लहिमवंतस्स वासहरपव्वयस्स दाहिणिल्ले नितंबे, एत्थ णं जंबुद्दीवे दीवे उत्तरड्ढभरहे वासे उसहकूडे नामं पव्वए पन्नत्ते, अट्ठ जोअणाइं उड्ढं उच्चत्तेणं, दो जोयणाइं उव्वेहेणं, मूले अट्ठ जोअणाइं विक्खंभेणं मज्झे छ जोअणाइं विक्खंभेणं उवरिं चत्तारि जोअणाइं विक्खंभेणं, मूले साइरेगाइं पणवीसं जोअणाइं परिक्खेवेणं मज्झे साइरेगाइं अट्ठारस जोअणाइं परिक्खेवेणं उवरिं साइरेगां दुवालस जोअणाइं परिक्खेवेणं।*

*पाठान्तरं-मूले बारस जोअणाइं विक्खंभेणं मज्झे अट्ठ जोअणाइं विक्खंभेणं उप्पिं चत्तारि जोअणाइं विक्खंभेणं मूले साइरेगाइं सत्ततीसं जोअणाइं परिक्खेवेणं मज्झे साइरेगाइं पणवीसं जोअणाइं परिक्खेवेणं उप्पिं साइरेगाइं बारस जोअणाइं परिक्खेवेणं, मूले विच्छिन्ने मज्झे संखित्ते उप्पिं तणुए गोपुच्छसंठाणसंठिए सव्वजंबूणयामए अच्छे सण्हे जाव पडिरूवे ।*

*से णं एगाए पउमवरवेइआए तहेव जाव भवणं कोसं आयामेणं अद्धकोसं विक्खंभेणं देसऊणं कोसं उड्ढं उच्चत्तेणं, अट्ठो तहेव, उप्पलाणि पउमाणि जाव उसभे अ एत्थ देवे महिड्ढीए जाव दाहिणेणं रायहाणी तहेव मंदरस्स पव्वयस्स जहा विजयस्स अविसेसियं ।*

वृ- 'कहिं ण'मित्यादि, क्व भदन्त ! जम्बूद्वीपे द्वी उत्तरार्द्धभरते वर्षे ऋषभकूटो नाम्ना पर्वतः प्रज्ञप्तः ?, भगवानाह-गौतम ! गङ्गाकुण्डस्य यत्र हिमवतो गङ्गा निपतति तद्गङ्गाकुण्डं तस्य पश्चिमायां, यत्र तु सिन्धुर्निपतति तत् सिन्धुकुण्डं तस्य पूर्वस्यां, क्षुल्लहिमवतो वर्षधरस्य दाक्षिणात्यनितम्बे, सामीपकसमभ्यां नितम्बासन्ने इत्यर्थ, अत्र प्रदेशे जम्बूद्वीपे द्वीपे उत्तरार्द्धभरते वर्षे ऋषभकूटो नाम्ना पर्वतः प्रज्ञप्तः, अष्टयोजनान्यूर्द्धोच्चत्वेन द्वे योजने

उद्वेधेन-भूमिप्रवेशेन, उच्चत्वचतुर्थांशस्य भूम्यवगाढत्वात्, अष्टानां चतुर्थांशे द्वयोरेव लाभात्,

मूलमध्यान्तेषु क्रमादष्ट षट् चत्वारि योजनानि विष्कम्भेन-विस्तरेण उपलक्षणत्वादायमेनापि, समवृत्तस्यायामविष्कम्भयोस्तुल्यत्वादिति, तथा मूलमध्यान्तेषु पंचविंशतिरष्टादश द्वादश च योजनानि सातिरेकाणि परिक्षेपेण-परिधिना, अथास्य पाठान्तरं-वाचनाभेदस्तद्गतपरिमाणा-न्तरमाहमूले द्वादश योजनानि विष्कम्भेन मध्येऽष्ट योजनानि विष्कम्भेन उपरि चत्वारि योजनानि विष्कम्भेन, अत्रापि विष्कम्भायामतः साधिकत्रिगुणं मूलमध्यान्तपरिधिमानं सूत्रोक्तं सुबोधं ।

अत्राह परः-एकस्य वस्तुनो विष्कम्भादिपरिमाणे द्वैरूप्यासम्भवेन प्रस्तुतग्रन्थस्य च सातिशयस्थविरप्रणीतत्वेन कथं नान्यतरनिर्णयः ?, यदेकस्यापि ऋषभकूटपर्वतस्य मूलादा-वष्टादियोजनविस्तृतत्वादि पुनस्तत्रैवास्य द्वादशादियोजनविस्तृतत्वादीति, सत्यं, जिनभट्टारकाणां सर्वेषां क्षायिकज्ञानवतामेकमेव मतं मूलतः, पश्चात्तु कालान्तरेण विस्मृत्यादिनाऽयं वाचनाभेदः, यदुक्तं श्रीमलयगिरिसूरिभिर्ज्योतिष्करण्डकवृत्ती-''इह स्कन्दिलाचार्यप्रतिपत्तौ दुष्षमानुभावतो दुर्भिक्षप्रवृत्त्या साधूनां पठनगुणनादिकं सर्वमप्यनेशत्, ततो दुर्भिक्षातिक्रमे सुभिक्षप्रवृत्तौ द्वयोः संघमेलापकोऽभवत्, तद्यथा-एको वलभ्यामेको मथुरायां, तत्र च सूत्रार्थसंघटने परस्परं वाचनाभेदो जातः, विस्मृतयोर्हि सूत्रार्थयोः स्मृत्वा २ संघटने भवत्यवश्यं वाचनाभेद'' इत्यादि, ततोऽत्रापि दुष्करोऽन्यतरनिर्णयः द्वयोः पक्षयोरुपस्थितयोरनतिशायिज्ञानिभिरनभिनिविष्टमतिभि प्रवचनाशातनाभीरुभि पुण्यपुरुषैरिति न काचिदनुपपत्ति, किञ्च-सैद्धान्तिकशिरोमणिपूज्यश्रीजिन-भद्रगणिक्षमाश्रमणप्रणीतक्षेत्रसमाससूत्रे उत्तरमतमेव दर्शितं, तथा-

॥१॥ 'सव्वेवि उसहकूडा उव्विद्धा अट्ठजोयणे हुंति ।
बारस अट्ठ य चउरो मूले मज्झुवरि विच्छिन्न ॥'

'मूले विच्छिन्नं' इत्यादि शेषवर्णकः प्राग्वत् । अथास्य पद्मवरवेदिकाद्याह-'से णं एगाए' इत्यादि, स ऋषभकूटाद्रिरेकया पद्मवरवेदिकया तथैवेति-यथा सिद्धायतनकूटवर्णकः प्रागुक्तस्तथाऽत्रापि वक्तव्य इत्यर्थः; कियत्पर्यन्त इत्याह-यावद्भवनं-ऋषभाख्यदेवस्थानं, स चायं 'एगेण य वणसंडेण सव्वओ समंता संपरिक्खित्ते, उसहकूडस्स णं उप्पिं बहुसमरमणिज्जे भूमिभागे प०, से जहाणामए आलिंगपुक्खरेइ वा जाव वाणमंतरा जाव विहरंति, तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागे महं एगे भवणे प०' इति, अत्र व्याख्या पूर्ववत्, भवनमानं साक्षादेव सूत्रे दर्शयति-क्रोशमायामेनार्द्धक्रोशं विष्कम्भेन देशोनं क्रोशं चत्वारिंशदधिकचतुर्दश धनुःशतरूपमूर्ध्वोच्चत्वेन, यद्यपि भवनमायामापेक्षया किञ्चिन्न्यूनोच्छ्रयमानं भवति प्रासादस्तु आयामद्विगुणोच्छ्राय इति श्रीज्ञाताधर्मकथाङ्गवृत्त्यादौ भवनप्रासादयोर्विशेषो दृश्यते तथाप्यत्र तयोरेकार्थकत्वं ज्ञेयं, श्रीमलयगिरिसूरिभि क्षेत्रसमासवृत्ती-

''एतेषां ऋषभकूटानामुपरि प्रत्येकमेकैकः प्रासादावतंसकः, ते च प्रासादाः प्रत्येकमेकं क्रोशमायामतोऽर्द्धक्रोशं विष्कम्भतो देशोनं क्रोशमुच्चत्वेन'' त्यत्रोक्तभवनतुल्यप्रमाणतया ऋषभकूटेषु प्रासादानामभिधानादिति, अर्थो नामान्वर्थ ऋषभकूटस्य तथैवेति यथा जीवाभिगमादौ यमकादीनां वर्तानामुक्तस्तथात्रापि औचित्येन वक्तव्यः, तदभिलापसूत्रं तु 'उप्पलाणी'त्यादिना सूचितं तदनुसारेणेदं 'से केणट्ठेणं भंते ! एवं वुच्चइ-उसहकूडपव्वए २ ?, गोअमा ! उसहकूडपव्वए खुड्डासु खुड्डियासु वावीसु पुक्खरिणीसु जाव बिलपंतीसु बहूइं उप्पलाइं पउमाइं जाव सहस्सपत्ताइं

उसहकूडप्पभाइं उसहकूडवण्णाभाइं' इति, अत्र व्याख्या-प्रश्नसूत्रं सुगमं, उत्तरसूत्रे ऋषभकूटपर्वते क्षुल्लासु क्षुल्लिकासु वापीषु पुष्करिणीषु, यावद्बिलपङ्क्तिषु बहून्युत्पलानि पद्मानि यावत् सहस्रपत्राणि ऋषभकूटप्रभाणि-ऋषभकूटाकाराणि ऋषभकूटवर्णानि तथा ऋषभकूटवर्णस्येव आभा-प्रतिभासो येषां तानि ऋषभकूटवर्णाभानि ततस्तानि तदाकारत्वात् तद्वर्णत्वात् तद्वर्णसाध्श्याच्च ऋषभकूटानि, तद्योगादेष पर्वतोऽपि ऋषभकूटः, उभयेषामपि नाम्नामनादिकालप्रवृत्तोऽयं व्यवहार इति नेतरेतराश्रयदोषप्रसङ्गः, एवमन्यत्रापि परिभावनीयं, प्रकारान्तरेणापि नामनिमित्तमाह-

'उसभे अ' इत्यादि, ऋषभश्चात्र देवो महर्द्धिकः, अत्र यावत्करणात् 'महज्जुईए जाव उसहकूडस्स उसहाए रायहाणीए अन्नेसिं च बहूणं देवाण य देवीण य आहेवच्चं जाव दिव्वाइं भोगभोगाइं भुंजमाणे विहरइ, से एएणट्ठेणं एवं वुच्चइ उसहकूडपव्वए २' इति पर्यन्तः सूत्रपाठो ज्ञेयः, अत्र व्याख्या प्राग्वत् । 'दाहिणे णं' इत्यादि, राजधानी ऋषभदेवस्य ऋषभा नाम्नी मन्दरस्य पर्वतस्य दक्षिणतस्तथैव वाच्या यथा विजयदेवस्य प्रागुक्ता, अविशेषितं-विशेषरहितं, क्रियाविशेषणमेतत्, अस्या विजयायाः राजधान्याश्च नामतोऽन्तरं न त्वस्मिन् वर्णके इति भावः।

**वक्षस्कारः- १ समाप्त**

इति सातिशयधर्मदेशनारससमुल्लसद्विस्मयमानऐदंयुगीननरधिपतिचक्रवर्त्तिसमानश्री-अकब्बरसुरत्राणपुरदत्तषाण्मासिकसर्वजन्तुजाताभयदानशत्रूञ्जयादिकरमोचनस्फुरन्मानस्फुरन्मानप्रदानप्रभृतिबहुमानसाम्प्रतविजयमानश्रीमत्तपागच्छाधिराजश्रीहीरविजयसूरि श्वरपदपद्मोपासनाप्रवणमहोपाध्यायश्रीसकलचन्द्रगणिशिष्योपाध्यायश्रीशान्तिचन्द्रगणिविरचितायां जम्बूद्वीपप्रज्ञप्तिवृत्तौ प्रमेयरत्नमञ्जूषानाम्न्यां भरतक्षेत्रस्वरूपनिरूपको नाम प्रथमो वक्षस्कारः ।

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता जम्बूद्वीप प्रज्ञप्ति उपाङ्गसूत्रे**
**प्रथम वक्षस्कारस्य शान्तिचन्द्रवाचकेन विरचिता टीका परिसमाप्ता ।**

## वक्षस्कारः- २

*मू. (२२) जंबुद्दीवे णं भंते ! दीवे भारहे वासे कतिविहे काले पन्नत्ते ?, गो० ! दुविहे काले प०, तंजहा-ओसप्पिणिकाले अ उस्सप्पिणिकाले अ । ओसप्पिणिकाले णं भंते ! कतिविहे प० ?, गो० !, छव्विहे प०, तं०-सुसमसुसमकाले १ सुसमाकाले २ सुसमदुस्समकाले ३ दुस्समसुसमाकाले ४ दुस्समाकाले ५ दुस्समदुस्समाकाले ६, उस्सप्पिणिकाले णं भंते ! कतिविहे पं० ?, गो० ! छव्विहे प०, तं०-दुस्समदुस्समाकाले १ जाव सुसमसुसमाकाले ६ ।*

*एगमेगस्स णं भंते ! मुहुत्तस्स केवइया उस्सासद्धा विआहिआ ?, गोअमा ! असंखिज्जाणं समयाणं समुदयसमिइसमागमेणं सा एगा आवलिअत्ति वुच्चइ संखिज्जाओ आवलिआओ ऊसासो संखिज्जाओ आवलिआओ नीसासो ।*

**वृ.**- अथ क्षेत्राण्यवस्थितानवस्थितकालभेदेन द्विधा जानन्नप्यत्र साक्षादवसर्पतः शुभान् भावान् वीक्ष्य पारिशेष्यात् संभाव्यमानमनवस्थितकालं हृदि निधाय पृच्छति-'जंबुद्दीवे णं भंते!' इत्यादि, जम्बूद्वीपे द्वीपे भरतवर्षे भगवन् ! कतिविधः कालः प्रज्ञप्तः ?, भगवानाह-गौतम ! द्विविधः कालः प्रज्ञप्तः, तद्यथा-अवसर्पति हीयमानारकतयाऽवसर्पयति वा-क्रमेणायुःशरीरादिभावान् हापयतीत्यवसर्पिणी स चासौ कालश्च २, प्रज्ञापकापेक्षया चास्या आदावुपन्यासः,

क्षेत्रेषु भरतस्येव, उत्सर्पति-वर्द्धते आरकापेक्षया वर्द्धयति (वा) क्रमेणायुरादीन् भावानित्युत्सर्पिणी स चासौ कालश्च २, चकारद्वयं द्वयोरपि समानारकतासमानपरिमाणतादिज्ञापनार्थं, तदेव प्रश्नयति-'अवसर्पिणीकालः कतिविधः प्रज्ञप्तः ? , गौतम ! षड्विधः प्रज्ञप्तः, तद्यथा सुष्ठु-शोभनाः समाः-वर्षाणि यस्यां सा सुषमा 'निर्दुसुवेः समसूते'' रिति षत्वं सुषमा चासौ सुषमा च सुषमसुषमा-द्वयोः समानार्थयोः प्रकृष्टार्थवाचकत्वादत्यन्तसुषमा, एकान्तसुखरूपोऽस्या एव प्रथमारक इत्यर्थः, स चासौ कालश्चेति, द्वितीयः सुषमाकालः, तृतीयः सुषमदुष्षमा, दुष्टाः समा अस्यामिति दुष्षमा, सुषमा चासौ दुष्षमा च सुषमदुष्षमा सुषमानुभावबहुलाऽल्पदुष्षमानुभावेत्यर्थः, चतुर्थो दुष्षमसुषमादुष्षमा चासौ सुषमा च दुष्षमसुषमा, दुष्षमानुभावबहुलाऽल्पसुषमानुभावेत्यर्थः, पञ्चमो दुष्षमा षष्ठो दुष्षमदुष्षमाकालः निरुक्तं तु सुषमसुषमावत्, एवमुत्सर्पिणीसूत्रमपि भाव्यं, परं षडपि काला व्यत्ययेन भाव्याः, यश्चावसर्पिण्यां षष्ठः कालो दुष्षमदुष्षमाख्यः स एवात्र प्रथमो यावत् सुषमसुषमाकालः षष्ठ इति । अथ द्विविधस्यापि कालस्य परिमाणं जिज्ञासुस्तन्मूलभूत-कालविशेषप्रश्नायोपक्रमते-'एगमेगे' इत्यादि, एकैकस्य मुहूर्तस्य भगवन् ! कियत्य उच्छ्वासाद्धा-उच्छ्वासप्रमितकालविशेषा व्याख्याताः, एकस्मिन् मुहूर्ते कियन्त उच्छ्वासा भवन्ति, उच्छ्वासशब्देनात्रोपलक्षणत्वादुच्छ्वासनिश्वासाः समुदिता गृह्यन्ते, अत्रोत्तरम्-

असङ्ख्येयानां समयप्रसिद्धपटशाटिकापाटनदृष्टान्तज्ञापनीयस्वरूपाणां परमनिकृष्टकाल-विशेषाणां समयानां समुदया-वृन्दानि तेषां याः समितयो-मीलनानि तासां समागमः-संयोग एकीभवनं तेन यत्कालमानं भवतीति गम्यते सा एका जघन्ययुक्तासङ्ख्यातकसमयप्रमाणा आवलिका इति संज्ञया प्रोच्यते जिनैरिति शेषः, यद्यप्यसांव्यवहारिकत्वेन समयावलिके उपेक्ष्य प्रश्नसूत्रे मुहूर्तो-च्छ्वासादिपृच्छा तथापि केवलिप्रज्ञाया: यावदवधिपर्यन्तं धावनादुच्छ्वासादीनां तन्निरूपणाधीननि-रूपणत्वाच्चाचार्यस्य तयोर्निरूपणं युक्तिमदिति, तन्वेतदुत्प्लवमानमण्डूकैर्गोकलिञ्जभरणं यतः पूर्वसमयसद्भावे उत्तरसमयस्यानुत्पन्नत्वनोत्तरसमयसद्भावे पूर्वसमयस्य विनष्टत्वेन किमिह समुदयसमितिसमागमः सङ्गच्छते येनासङ्ख्याततत्पिण्डात्मकता आवलिकादीनां प्रोच्यते ? अयं हि समुदयादिधर्मो विमात्रस्निग्धरूक्षपुद्गलादीनां न कालस्येति, सत्यं, यं यं कालविशेषं प्ररूपयितुकामेन प्रज्ञापकपुरुषविशेषेण यावन्तो यावन्तः समया एकज्ञानविषयीकृतास्तावन्तस्ते समुदयसमितिसमागता उपचर्यन्ते, अत एवायमौपाधिकः कालो न वास्तव इति न काचिदनुपपत्ति, सङ्ख्येया आवलिका उच्छ्वासः-अन्तर्मुखः पवनः सङ्ख्येया आवलिका निश्वासो-बहिर्मुखः पवनः, सङ्ख्येयत्वोपपत्तिश्चैवम्-षट्पञ्चाशदधिकशतद्वयेनावलिकानामेकं क्षुल्लकभवग्रहणं भवति, तानि च सप्तदश सातिरेकाणि उच्छ्वासनि-श्वासकाल इति ।

मू. (२३)　　*'हट्ठस्स अणवगल्लस्स, निरुवकिट्ठस्स जंतुणो ।*
*एगे ऊसासनीसासे, एस पाणुत्ति वुच्चई ।*

वृ- अथ यादृशैरुच्छ्वासैर्मुहूर्तमानं स्यात् तथाऽऽह-हृष्टस्य-पुष्टधातोरनवकल्पस्य-जरसाऽनभिभूतस्य निरुपक्लिष्टस्य-व्याधिना प्राक् साम्प्रतं वाऽनभिभूतस्य मनुष्यादेरेकः उच्छ्वासेन युक्तो निश्वासः उच्छ्वासनिश्वासो य इति गम्यते एष प्राण इत्युच्यते, धातुहानिजरादिभिरस्वस्थस्य जन्तोरुच्छ्वासनिश्वासस्त्वरितादिस्वरूपतया न स्वभावस्थो भवत्यतो

इत्यादिविशेषणग्रहणं ।

मू. (२४) *सत्त पाणूइं से थोवे, सत्त थोवाइं से लवे ।*
*लवाणं सत्तहत्तरीए, एस मुहुत्तेत्ति आहिए ॥*

वृ- सप्त प्राणाः सूत्रे च उत्वं क्लीबत्वं च प्राकृतत्वात्, उच्छ्वासनिश्वासा ये इति गम्यते स स्तोक इतच्यते, एवं सप्तस्तोका ये स लवः, लवानां सप्तसप्तत्या एषः-अधिकृतो यज्जिज्ञासया तव सम्प्रति प्रश्नावतार इत्यर्थः, मुहूर्त इत्याख्यातः, अथ सप्तसप्ततिलवमानतया सामान्येन निरूपितं मुहूर्तमेवोच्छ्वाससङ्ख्यया विशेषतो निरूपयितुमाह-

मू. (२५) *तिन्नि सहस्सा सत्त य सयाइं तेवत्तरिं च ऊसासा ।*
*एस मुहुत्तो भणिओ सव्वेहिं अनंतनाणीहिं ॥*

वृ- 'तिन्नि' इत्यादि, अस्या भावार्थोऽयं-सप्तभिरुच्छ्वासैः स्तोकः, ते च लवे सप्त, ततो लवः सप्तभिर्गुणितो जाता एकोनपञ्चाशत्, मुहूर्ते च सप्तसप्ततिर्लवा इति सा एकोनपञ्चाशद्गुणितेति जातं मुहूर्ते उच्छ्वासाना मानं, अत्राप्युपलक्षमत्वादुःच्छासनिश्वासानां समुदितानां मानं ज्ञेयं, सर्वैरनन्तज्ञानिभिरित्यनेन सर्वेषां जिनानामेकवाक्यताज्ञापनेन सदृशज्ञानित्वं सूचितं, न तु साम्मत्यदर्शनं कृतं, तस्य विश्वाससमूलत्वेन श्रद्धालुं प्रत्यसम्भाव्यमानत्वात्, अथ यदर्थं मुहूर्त्तादिप्रश्नस्तान् मानविशेषान् प्रज्ञापयन् द्विविधकालपरिमाणज्ञापनायोपक्रमते-

मू. (२६) *एएणं मुहुत्तप्पमाणेणं तीसं मुहुत्ता अहोरत्तो पन्नरस अहोरत्ता पक्खो दो पक्खा मासो दो मासा उऊ तिन्नि उऊ अयणे दो अयणा संवच्छरे पंचसंवच्छरिए जुगे वीसं जुगाइं वाससए दस वाससयाइं वाससहस्से सयं वाससहस्साणं वाससयसहस्से चउरासीइं वाससयसहस्साइं।*

*से एगे पुव्वंगे चउरासीई पुव्वंगसयसहस्साइं से एगे पुव्वे एवं बिगुणं बिगुणं नेअव्वं तुडिए २ अडडे २ अववे २ हूहुए २ उप्पले २ पउमे २ नलिने २ अत्थनिउरे २ अउए २ नउए २ पउए २ चूलिया २ सीसपंहेलिए २ जाव चउरासीइं सीसपहेलिअंगसयसहस्साइं सा एगा सीसपहेलिया एताव ताव गणिए एताव ताव गणिअस्स विसए तेण परं ओवमिए ।*

वृ- 'एएणं मुहुत्त'इत्यादि, एतेन-अनन्तरोदितेन मुहूर्त्तप्रमाणेन त्रिंशन्मुहूर्त्ता अहोरात्रः पञ्चदशाहोरात्राः पक्षः द्वौ पक्षौ मासः द्वौ मासौ ऋतुः त्रय ऋतवोऽयनं द्वे अयने संवत्सरः पञ्चसंवत्सरिकं युगं विंशतिर्युगानि वर्षशतं, विंशतेः पञ्चगुणितायाः शतत्वात्, दश वर्षशतानि वर्षाणां सहस्रं, शतं वर्षसहस्राणां वर्षशतसहस्रं लक्षमित्यर्थः, चतुरशीति वर्षशतसहस्राणि यानीति गम्यते तदेकं पूर्वाङ्ग, अतः परं लक्षाणां चतुरशीत्या गुणकारसंख्यास्थानानां सप्तविंशतिसंख्यानां (सद्भावः), तथाहि-चतुरशीति पूर्वाङ्गशतसहस्राणि चतुरशीत्या गुणकारसंख्यास्थानानां सप्तविंशतिसंख्यानां (सद्भाव)), तथाहि-चतुरशीति पूर्वाङ्गशतसहस्राणि यानीति गम्यते तदेकं पूर्वं, पूर्वाङ्गलक्षाणां चतुरशीत्या गुणितं पूर्वं भवतीति भावः, तद्वर्षमानं चैतत्-

॥ १ ॥ "पुव्वस्स उ परिमाणं सयरिं खलु हुंति कोडिलक्खाओ ।
छप्पन्नं च सहस्सा बोद्धव्वा वासकोडीणं ॥"

पूर्वाङ्गपूर्वन्यायेन संख्यास्थानमुत्तरोत्तरं त्रुटिताङ्गं त्रुटितमित्यादि तदङ्गतल्लक्षणभेदाभ्यां द्विगुणं २-द्विसंख्याङ्कं २ ज्ञातव्यं, अयमाशयः-सूत्रे एकत्वेन निर्दिश्यमानानि १३ संख्यास्थानानि

लाघवधप्रानसूत्रेणेत्थमाह, न चेदं सूत्रं एवं द्विगुणकारभ्रमकजनकं भाव्यं, चतुरशीतिगुणकारस्यानन्तरमेवोक्तत्वात्, अथैषा शब्दसंस्कारमात्र-त्रुटिताङ्गं त्रुटितं १ अडडाङ्गं १ अडडं २ अववाङ्गं अववं ३ हूहुकाङ्गं हूहुकं ४ उत्पलाङ्गं उत्पलं ५ पद्माङ्गं पद्मं ६ नलिनाङ्गं नलिनं ७ अर्थनिपूराङ्गं अर्थनिपूरं ८ अयुताङ्गंअयुतं ९ नयुताङ्गं नयुतं १० प्रयुताङ्गं प्रयुतं ११ चूलिकाङ्गं चूलिकं १२ शीर्षहेलिकाङ्गं यावच्चतुरीशीतिशीर्षप्रहेलिकाङ्गशतसहस्राणि यानि सा एका शीर्षप्रहेलिका १३, अस्याः स्थापना यथा ७५८२६३२५३० ७३०१०२४११५ ७९७३५६९९७५ ६९-६८९६२१८९ ६६८४८०८०१८ ३२९६ इति चतुःपञ्चाशदङ्काः अग्रे च चत्वारिंशं शून्यशतं। तदेवं शीर्षप्रहेलिकायां सर्वाण्यमूनि चतुर्नवत्यधिकशतसङ्ख्यान्यङ्कस्थानानि भवन्ति, इदं च माथुरवाचनानुगतानुयोगद्वारादिसंवादिसंख्यास्थानप्रतिपादनं ज्योतिष्करण्डप्रकीर्णकेन सह विसंवदति, परं न विचिकित्सितव्यं, वालभ्यवाचनानुगतत्वात् तस्य, भवति हि वाचनाभेदे सूत्रपाठभेद इति, तत्संवादिशीर्षप्रहेलिकाङ्कस्थापना त्वेवंरूपा ज्ञेया यथा-१८७५५१७९५५०११-२५५९५४१९००९६९९८१३४३९७७०७९७४६५४९४२६१९७७७७७४७६५७२५७३४५-७१८६८१६ इति सप्ततिरङ्का अग्रे द्वाशीत्यधिकं शून्यशतं।

तदेव ज्योतिष्करण्डोक्तशीर्षप्रहेलिकायां पञ्चाशदधिकशतद्वयसंख्यान्यङ्कस्थानानि भवन्ति, अत्र तत्त्वं केवलिनो विदन्तीति, अनेनैतावता कालमानेन केषांचिद्रत्नप्रभानारकाणां भवनपतिव्यन्तराणां सुषमदुष्षमारकसंभविनां नरतिरश्चां च यथासम्भवमायूंषि मीयन्ते, एतस्माच्च परतोऽपि परतोऽपि सर्षपचतुष्पल्यप्ररूपणागम्यः संख्येयः कालोऽस्ति, किन्त्वनतिशायिनामसंव्यवहार्यत्वान्नेहोक्तः, एतदेवाह-एतावद्-इयन्मात्रं तावदिति प्रक्रमार्थे कालगणितं, समयतः प्रभृति शीर्षप्रहेलिकापर्यन्तं संख्यास्थानमित्यर्थ, एतावान्-शीर्षप्रहेलिकाप्रमेयराशिपरिमाणो गणितस्य विषयो-गणितगोचर आयुःस्थित्यादिकालः, कुत इत्याह- ततः परं-शीर्षप्रहेलिकातः परं उपमया निर्वृत्तमौपमिकं, उपमामन्तरेण यत्कालप्रमाणमनतिशायिना ग्रहीतुं न शक्यते तदौपमिकमिति भावः, सूत्रे च तृतीया पञ्चम्यर्थे प्राकृतत्वात्। तदेव प्रष्टुमाह-

मू. (२७) से किं तं उवमिए ?, २ दुविहे पन्नत्ते, तंजहा-पलिओवमे अ सागरोवमे अ, से किं तं पलिओवमे ?, पलिओवमस्स परूवणं करिस्सामि, परमाणू दुविहे पन्नत्ते, तंजहा-सुहुमे अ वावहारिए अ, अनंताणं सुहुमपरमाणुपुग्गलाणं समुदयसमिइसमागमेणं वावहारिए परमाणू निप्फज्जइ तत्थ नो सत्थं कमइ-

वृ. 'से किं तं ओवमिए ?' इत्यादि, अथ किं तदौपमिकं ?, अत्रोत्तरं-औपमिकं द्विविधं प्रज्ञप्तं, अनेन विधेयनिर्देश-स्तेन न पौनरुक्त्याशङ्का, पल्येन वक्ष्यमाणस्वरूपेणोपमा यस्य तत्तथा, दुर्लभपारत्वात् सागरेण-समुद्रेणोपमा यस्य तत्तथा, उभयत्र चकारद्वयं तुल्यकक्षताद्योतनार्थं, तुल्यकक्षता चोभयोरप्यसंख्येयकालत्वसूचनार्थं, अथ किं तत् पल्योपमं ? आचार्यस्तु पल्योपमप्ररूपणां करिष्यामीति, अनेन च क्रियारम्भसूचकवचनेन शिष्यस्य मनःप्रसत्ति कृता भवति, अन्यथा 'परमाणू दुविहे' इत्यादिप्रक्रियाक्रमेण दूरसाध्यां पल्योपमप्ररूपणां प्रति सन्दिहानः शिष्योऽनादृतो भवेदिति, गुरोः शिष्यं प्रति वाचनादानेऽयमेव हि विधि, यतः-

॥१॥ "धम्ममइएहिं अइसुंदरेहिं कारणगुणोवणीएहिं।

पल्हयंतो ऊ गमं सीहं खोएइ आइकिंडे ॥"

परमाणुर्द्विविधः प्रज्ञप्तः, तद्यथा-सूक्ष्मश्च व्यावहारिकश्च, शस्त्राविषयत्वादिको धर्म उभयोरपीति समानकक्षताद्योतनार्थं प्रत्येकं चकारः, तत्र सूक्ष्मस्य ।

॥ १ ॥ 'कारणमेव तदन्त्यं सूक्ष्मो नित्यश्च भवति परमाणुः ।
एकरसवर्णगन्धो द्विस्पर्श कार्यलिङ्गश्च ॥'

इत्यादिलक्षणलक्षितस्यात्यन्तपरमनिकृष्टतालक्षणं स्वरूपमतिरिच्यापरं वैशेषिकं रूपं न प्रतिपादनीयमस्तीति तं संस्थाप्यापरं स्वरूपतो निरूपयति-अनन्तानां सूक्ष्मपरमाणुरूपपुद्गलानां सम्बन्धिनो ये समुदयाः-त्रिचतुरादिमेलकास्तेषां याः समतयो-बहूनि मीलनानि तासां समागमेन-संयोगेनैकीभावेनेतियावत् व्यावहारिकः परमाणुरेको निष्पद्यते, इदमुक्तं भवति-निश्चयनयो हि निर्विभागं सूक्ष्मं पुद्गलं परमाणुमिच्छति, यस्त्वेतैरनेकैर्जायते तं सांशत्वात् स्कन्धमेव व्यपदिशन्ति, व्यवहारनयस्तु तदनेकसङ्घातनिष्पन्नोऽपि यः शस्त्रच्छेदाग्निदाहादिविषयो न भवति तमद्यापि तथाविधस्थूलभावाप्रतिपत्तेः परमाणुत्वेन व्यवहरति, ततोऽसौ निश्चयतः स्कन्धोऽपि व्यवहारनयमतेन व्यावहारिकः परमाणुरुक्तः, अयंच स्कन्धत्वात् काष्ठवत् छेदादिविषयो भवतीति वादिनं प्रत्याह-

मू. (२८) *सत्थेण सुतिक्खेणवि छेत्तुं भित्तुं व जं किर न सक्का ।*
*तं परमाणुं सिद्धा वयंति आइं पमाणाणं ॥*

वृ. तत्र शस्त्रं न क्रामति-न सञ्चरति, असिक्षुरादिधारामागतोऽपि स न छिद्येत न च भिद्येतेत्यर्थः, यद्यनन्तैः परमाणुभिर्निष्पन्नाः काष्ठादयः शस्त्रच्छेदादिविषया दृष्टास्तथाप्यनन्तस्यानन्तभेदत्वात्तावन्मात्रेण निष्पन्नोऽद्यापि सूक्ष्मत्वान्न शस्त्रच्छेदादिविषयतामासादयतीति भावः, एतेनाग्निदाहकता जलार्द्रता गङ्गाप्रतिश्रोतोविहन्यमानता जलकोथादिकं सर्वमपि निरस्तं, सर्वेषामपि तेषां शस्त्रत्वाविशेषात् अत्रार्थे प्रमाणमाह-शस्त्रेण सुतीक्ष्णेनापि छेत्तुं-खड्गादिना द्विधा कर्तुं भेत्तुं-अनेकधा विदारयितुं सूच्यादिना वस्त्रादिवद्वा सच्छिद्रं कर्तुं, वा विकल्पे, यं-पुद्गलादिविशेषं किलेति निश्चये न शक्ताः, केऽपि पुरुषा इति शेषः ।

मू. (२९) *ववहारिअपरमाणूणं समुदयसमिइसमागमेणं सा एगा उस्सण्हसण्हिआइ वा सण्हसण्हिआइ वा उद्धरेणूइ वा तसरेणूइ वा रहरेणूइ वा वालग्गेइ वा लिक्खाइ वा जूआइ वा जवमज्झेइ वा उस्सेहंगुलेइ वा, अट्ठ उस्सण्हसण्हिआओ सा एगा सण्हसण्हिया अट्ठ सण्हसण्हिआओ सा एगा उद्धरेणू अट्ठ उद्धरेणूओ सा एगा तसरेणू अट्ठ तसरेणूओ सा एगा रहरेणू अट्ठ रहरेणूओ से एगे देवकुरूत्तरकुराण मणुस्साणं वालग्गे अट्ठ देवकुरूत्तरकुराण मणुस्साण वालग्गा से एगे हरिवासरम्मयवासाण मणुस्साणं वालग्गे ।*

*एवं हेमवयहेरण्णवयाण मणुस्साणं पुव्वविदेहअवरविदेहाणं मणुस्साण वालग्गा सा एगा लिक्खा अट्ठ लिक्खाओ सा एगा जूआ अट्ठ जूआओ से एगे जवमज्झे अट्ठ जवमज्झा से एगे अंगुले एतेणं अंगुलप्पमाणेणं छ अंगुलाइं पाओ बारस अंगुलाइं विहत्थी चउवीसं अंगुलाइं रयणी अडयालीसं अंगुलाइं कुच्छी छन्नउइ अंगुलाइं से एगे अक्खेइ वा दंडेइ वा धनूइ वा जुगेइ वा मुसलेइ वा नालिआइ वा, एतेणं धनुप्पमाणेणं दो धनुसहस्साइं गाउअं चत्तारि गाउआइं जोअणं, एएणं जोअणप्पमाणेणं जे पल्ले जोअणं आयामविक्खंभेणं जोयणं उड्ढं उच्चत्तेणं तं तिगुणं सविसेसं*

*परिक्खेवेणं । से णं पल्ले एगाहिअबेहियतेहिअ उक्कोसेणं सत्तरत्तपरूढाणं संमट्ठे सन्निचिए भरिए वालग्गकोडीणं ' ते णं वालग्गा नो कुत्थेज्जा नो परिविद्धंसेज्जा, नो अग्गी डहेज्जा, नो वाए हरेज्जा, नो पूइत्ताए हव्वमागच्छेज्जा, तओ णं वाससए २ एगमेगं वालग्गं अवहाय जावइएणं कालेणं से पल्ले खीणे नीरए निल्लेवे णिट्ठिए भवइ से तं पलिओवमे ।*

वृ-तं व्यावहारिकपरमाणुं सिद्धा इव सिद्धा भगवन्तोऽर्हन्त उत्पन्नकेवलज्ञाना न तु सिद्धाः सिद्धिगताः, तेषां वचनयोगासम्भवादिति, आदिं-प्रथमं प्रमाणानां-वक्ष्यमाणोत्श्लक्ष्णश्लक्ष्णिका-दीनामिति, एतेन श्रद्धालून् प्रति आगमप्रमाणमभिहितं, तर्कानुसारिणः प्रति प्रयोगः-अणुपरिमाणं कचिद्विश्रान्तं तरतमशब्दवाच्यत्वात् महत्परिमाणवत्, यत्र च विश्रान्तं स परमाणुः, विपक्षे वस्तुनः स्थूलताऽपि नोपपद्यते, न च दव्यणुकादि नार्थान्तरमिति वाच्यं, स च सिध्यन् परमनिकृष्टो निरंश एव सिध्येत्, अन्यथाऽनवस्था सर्षपसुमेर्वोस्तुल्यपरिमाणापत्तिश्च, ततः सिद्धः परमाणुः, ननु सिध्यतु सः सूक्ष्मत्वाच्च न चक्षुरादिगम्यः, परं यदनन्तैः सूक्ष्मैः परमाणुभिरेको व्यावहारिकः परमाणु-रारभ्यते स चक्षुराद्यगोचरः शस्त्रच्छेदाद्यगोचरश्चेति तन्मन्दं, उच्यते, द्विविधो हि पुद्गलपरिमाणः-सूक्ष्मो बादरश्च, तत्र सूक्ष्मपरिणामपरिणतानां पुद्गलानामनिन्द्रियकत्वमगुरुलघुपर्यायवत्वं शस्त्रच्छेदाद्यविषयत्वमित्यादयो धर्मा भवन्ति, तेन न काप्यनुपपत्तिः, श्रूयते ह्यागमे पुद्गलानामेवं सूक्ष्मत्वासूक्ष्मत्वपरिणामो यथा द्विप्रदेशिकः स्कन्धः एकस्मिन्नभःप्रदेशे माति स एव च द्वयोरपि मातीति संकोचविकाशकृतो भेदः, दृश्यते च लोकेऽपि पिञ्जिततूलपुञ्जलोहपिण्डयोः परिमाणभेदः, इत्यलं विस्तरेणेति, अथ प्रमाणान्तरलक्षणार्थमाह-

अनन्तानां व्यावहारिकपरमाणूना समुदयसमितिसमागमेन या परिमाणमात्रेति गम्यते सैका अतिशयेन श्लक्ष्णा श्लक्ष्णश्लक्ष्णा सैव श्लक्ष्णश्लक्ष्णिका उत्तरप्रमाणापेक्षया उत्-प्राबल्येन श्लक्ष्णश्लक्ष्णिका उच्छ्लक्ष्णश्लक्ष्णिका, इतिरुपदर्शने वा उत्तरापेक्षया समुच्चये,एवं श्लक्ष्ण-श्लक्ष्णिकेति वा इत्यादिष्वपि वाच्यं, एते च श्लक्ष्णश्लक्ष्णिकादयोऽङ्गुलान्ताः प्रमाणभेदा यथोत्तरमष्टगुणाः सन्तोऽपि प्रत्येकमनन्तपरमाणुकत्वं न व्यभिचरन्त्यतः निर्विशेषितमप्युक्तं-'सण्हसण्हिआइ वे'त्यादि, प्राक्तनप्रमाणापेक्षयाऽष्टगुणत्वेन स्थौल्यादूर्ध्वरेण्वपेक्षया त्वष्टभाग-प्रमाणत्वात् श्लक्ष्णश्लक्ष्णिकेत्युच्यते,सवतः परतो वा ऊर्ध्वाधस्तिर्यकचलनधर्म्मो जालप्रविष्टसूर्य-प्रभाभिव्यङ्ग्यो रेणुरूर्ध्वरेणुः त्रस्यति-पौरस्त्यादिवायुप्रेरितो गच्छति यो रेणुः स त्रसरेणुः रथगमनात् रेणुः रथरेणुः वालाग्रलिक्षादयः प्रतीताः, देवकुरूत्तरकुरुहरिवर्षरम्यकादिनिवासिमानवानां केशस्थूलताक्रमेण क्षेत्रशुभानुभावहानिर्भावनीया यावत्पूर्वविदेहापरविदेहाश्रयमनुष्याणामष्टौ वालाग्राणि एका लिक्षा, ता अष्ट यूका, अष्टौ यूका एकं यवमध्यं, अष्टौ यवमध्यानि एकमङ्गुलं।

एतेनाङ्गुलप्रमाणेनेति न तु न्यूनाधिकतया, षडङ्गुलानि पादः-पदस्य मध्यतलप्रदेशः, पादैकदेशत्वात् पादः, अथवा पादो हस्तचतुर्थांशः, द्वादशाङ्गुलानि वितस्ति सुखावबोधार्थमे-षमुपन्यासः, लाघवार्तं तु द्वौ पादौ वितस्तिरिति पर्यवसितोऽर्थः, अन्यथा पादसंज्ञाया नैरर्थक्यापत्ति, एवमग्रेऽपि चतुर्विंशतिरङ्गुलानि रत्निरिति सामयिकी परिभाषा नामकोशादौ तु 'बद्धमुष्टिर्हस्तो रत्नि'रिति, अष्टचत्वारिंशदङ्गुलानि कुक्षि, षन्नवतिरङ्गुलानि एकोऽक्ष इति वा-शकटावयवविशेषः दण्ड इति वा धनुरिति वा युगमिति वा-वोढस्कन्धकाष्ठं मुसलमिति वा नालिका इति वा-यष्टिविशेषः,

अत्र च धनुषोपयोगः, संज्ञान्तराणि तु प्रसङ्गातोऽत्र लिखितानि अन्यत्रोपयोगीनीति, एतेन धनुःप्रमाणेन द्वे धनुःसहस्रे गव्यूतं, चत्वारि गव्यूतानि योजनं, एतेन योजनप्रमाणेन यः पल्यो-धान्याश्रयविशेषः स इव सर्वत्र समत्वात्, लुप्तोपमाकः शब्द इति, योजनमायामविष्कम्भाभ्यां समवृत्तत्वात् प्रत्येकमुत्सेधाङ्गुलनिष्पन्नयोजनं योजनमूर्ध्वोच्चत्वेन, तद्योजनं त्रिगुणं सविशेषं परिरयेण, वृत्तपरिधेः किञ्चिन्न्यूनषड्भागाधिकत्रिगुणत्वात् ।

स पल्य 'एगाहिअबेहिअ'त्ति, षष्ठीबहुवचनलोपादेकाहिकद्व्याहिकत्र्याहिकाणामुत्कर्षतः सप्तरात्रप्ररूढाना-सप्तदिवसोद्गतपर्यन्तानां भृतो वालाग्रकोटीनामिति सम्बन्धः, तत्र मुण्डिते शिरस्येकेनाह्ना यावत्प्रमाणा वालाग्रकोटय उत्तिष्ठन्ति ता एकाहिक्यः, द्वाभ्यां तु यास्ता द्व्याहिक्याः, त्रिभिस्तु त्र्याहिक्यः, कथंभूत् इत्याह-'संमृष्ट' आकर्णपूरितः 'सन्निचितः' प्रचयविशेषान्निबिडीकृतः वालानामग्रकोटयः-प्रकृष्टा विभागा इत्यर्थ, यद्वा वालाग्रकोटीनामिति वालेषु-विदेहनरवालाद्यपेक्षया सूक्ष्मत्वादिलक्षणोपेततयाऽग्राणि-श्रेष्ठानि वालाग्राणि, कुरुनररोमाणि तेषां कोटयः अनेकाः-कोटाकोटिप्रमुखाः सङ्ख्याः "स्त्रिणां शतानि शतशो जनयन्ति पुत्रान्" इत्यादिवत्, तथा वालाग्रकोटीनामिति तृतीयार्थे षष्ठी यथा माषाणां भृतः कोष्ठ इति, तेन वालाग्रकोटीभिर्भृत इति सुखावबोधाऽक्षरयोजना कार्या इति, वालाग्रसङ्ख्यानयनोपायस्त्वयं-देवकुरूत्तरकुरुनरवाला-ग्रतोऽष्टगुणं हरिवर्षरम्यकनरवालाग्रमिति, यत्रैकं हरिवर्षरम्यकनरवालाग्रं तत्र कुरुनरवालाग्राण्यष्ट तिष्ठन्ति, यत्र चैकं हैमवतहैरण्यवतनवालाग्रं तत्र कुरुनरवालाग्राणि चतुःषष्टि, एवं विदेहनरवालाग्रे ५१२ लिक्षायां ४०९६ यूकायां ३२७६८ यवमध्ये २६२१४४ अङ्गुलेऽष्टतः २०९७१५२, अत्राङ्गुलमुत्सेधाङ्गुलं ग्राह्यं, आत्माङ्गुलस्यानियतत्वात् प्रमाणाङ्गुलस्यातिमात्रत्वात् ।

अत्र सर्वत्र पूर्वप्रमाणापेक्षयोत्तरोत्तरप्रमाणस्याष्टष्टगुणकारेणेयं सङ्ख्या समुत्तिष्ठति, अथायं राशिश्चतुर्विंशतिगुणो हस्तः चतुर्विंशत्यङ्गुलमानत्वादस्य, सचैवं पञ्च कोटयस्त्रिणि लक्षाणि एकत्रिं-शत्सहस्राणि षट् शतान्यष्टचत्वारिंशदधिकानि, एष राशिश्चतुर्गुणो धनुषि, चतुर्हस्तमानत्वादस्य, विंशति कोट्यस्त्रयोदश लक्षाणि षट्विंशति सहस्राणि पञ्च शतानि द्विनवत्यधिकानि, अयं द्विसहस्रगुणः क्रोशे, द्विसहस्रमानत्वादस्य,चत्वारिंशत्सहस्राणि द्वे शते पञ्चषष्ट्यधिके कोटीनां एकत्रिंशल्लक्षाणि चतुरशीति सहस्राणि, पुनरयं राशिश्चतुर्गुणो योजने, चतुःक्रोशप्रमाणत्वादस्य, एकं लक्षमेकषष्टि सहस्राण्येकषष्ट्यधिकानि कोटीनां तथा सप्तविंशतिर्लक्षाणि षटत्रिंशत्सहस्राणि, शूचीगणनयैवेदं गणितं बोध्यं । अयं शूचीराशिरनेनैव गुणितः प्रतरसमचतुरस्रयोजने, शूच्या शूचीगुणिताया एव प्रतरत्वात्, यथा पञ्चविंशति शतानि चतुर्नवत्यधिकानि कोटाकोटिकोटीनां तथा सप्त लक्षाणि त्रयस्त्रिंशत्सहस्राण्यष्ट शतानि त्रिपञ्चाशदधिकानि कोटाकोटीनां तथा पञ्चषष्टिर्लक्षाणि चत्वारिंशत्सहस्राणि पञ्च शतान्येकोनसप्तत्यधिकानि कोटीनां तथा षष्टिर्लक्षणि, अयं राशिर्भूयः पूर्वराशिना गुणितो धनरूपो रोमराशि स्यात्, तथाहि- एकचत्वारिंश-त्कोट्योऽष्टसप्ततिर्लक्षाणि चत्वारि सहस्राणि सप्त शतानि त्रिषष्ट्यधिकानि कोटाकोटिकोटाकोटीनां तथा पञ्चविंशतिर्लक्षाण्यष्टाशीति सहस्राण्येकं शतमष्टपञ्चाशदधिकं कोटाकोटिकोटीनां तथा द्विचत्वारिंशल्लक्षाणि सप्तसप्तति सहस्राण्यष्टशतानि पञ्चचत्वारिंशदधिकानि कोटाकोटीनां तथा चतुश्चत्वारिंशल्लक्षाणि पञ्चविंशति सहस्राणि षट् शतानि कोटीनामिति, अयं च राशि समचतुर-

स्रघनयोजनप्रमितपल्यगतः समवृत्तघनयोजनप्रमितपल्यगतराश्यपेक्षया कियद्भागाभ्यधिकस्ते-नाधिकभागपातनार्थं सौकुमार्याय स्थूलोपायमाह-अनन्तरोक्तराशेश्चतुर्विंशत्या २४ भागे हृते लब्धं १७४०८५३१८०२४५०६६०११५७६८९३४०००००००००० अयं चैकोनविंशत्या गुणितः समवृत्तघनयोजनपल्यगतो राशिर्भवतीति, स चाङ्कतो यथा ३३०७५२१०४२४५५५, २५४२१६९५०९१२५०००००००००० अयमर्थ-यादृशैश्चतुर्विंशत्या भागैः समचतुरस्रघन-योजनप्रमितपल्यगतो रोमराशिर्भवति तादृशैरेकोनविंशत्या भागैः समवृत्तघनयोजनप्रमितपल्यगतो राशिर्भवति, ननु चतुर्विंशत्या भागहरणमेकोनविंशत्या गुणनं च किमर्थं ?

—उच्यते, एकयोजनप्राणवृत्तक्षेत्रस्य करणरीत्यागतं योजनत्रयमेकश्च योजनषड्भागः सवर्णने च जातं एतच्च वृत्तपल्यपरिधिक्षेत्रं, अनेन सह समचतुरस्रपल्यपरिधिक्षेत्रं चतुर्योजनरूपं गुण्यते, अनयोः समच्छेदे लाघवार्थं द्वयोरपि छेदापनयने जातं १९-२४ किमुक्तं भवति-समचतुरस्रपरिधिक्षेत्रात् वृत्तपरिधिक्षेत्रं स्थूलवृत्या पञ्चभागन्यूनमिति तत्करणार्थोऽयमुपक्रम इति, स्थूलवृत्तिश्च योजनषड्भागस्य किञ्चिदधिकतया अविवक्षणात्, अथ प्रकृतं प्रस्तुमः-'ते न'मिति प्राग्वत्, तानि वालाग्राणि न कुथ्येयुः-प्रचयविशेषाच्छुषिराभावाद्वायोरसम्भवाच्च नासारतां गच्छेयुरित्यर्थः, अतो न परिविध्वंसेरन्कतिपयपरिशाटनमप्यङ्गीकृत्य न विध्वंसं गच्छेयुः अर्थवशाद्विभक्तिपरिणाम इति, तानि नाग्निर्दहेत् न वायुरपहरेदतीव निचितत्वादग्निपवनावपि तत्र न क्रमेत इत्यर्थ, तानि च न पूतितया-पूतिभावं कदाचिदागच्छेयुः, न कदाचिद्दुर्गन्धितां प्राप्नुयुरित्यर्थः, अथ केतिकर्त्तव्यता ?, तामेवाह-ततस्तेभ्यो वालागरेभ्योऽथवा 'तत' इति तथाविधपल्यभरणानन्तरं वर्षशते २ एकैकं वालाग्रमपहृत्य कालो मीयेत इति शेषः, ततश्च यावता कालेन स पल्यः क्षीणो-वालाग्रकर्षणात् क्षयमुपागतः आकृष्टधान्यकोष्ठागारवत् ।

तथा (नीरजाः)-निर्गतरजःकल्पसूक्ष्मवालाग्रोऽपकृष्टधान्यरजःकोष्ठागारवत्, निर्लेपोऽ-त्यन्तसंश्लेषात्तन्मयतागतवालाग्रलेपापहारादपनीतधान्यलेपकोष्ठागारवत्, निष्ठितोऽपनेतव्य-द्रव्यापनयनमाश्रित्य निष्ठां गतः विशिष्टप्रयत्नप्रमार्जितकोष्ठागारवत्,एकार्थिका वा एते शब्दा अत्यन्तविशुद्धिप्रतिपादनपराः, वाचनान्तरे दृश्यमानं चान्यदपि पदमुक्तानुसारतो व्याख्येयं, तदे-तत्पल्योपममिति, इदं च पल्यगतवालाग्राणां सङ्ख्येयैरेव वर्षैस्तदपहारसम्भवात् संख्येयवर्षकोटाको-टीमानं बादरपल्योपमं ज्ञेयं, न चानेनात्र वक्ष्यमाणसुषमसुषमादिकालमानदावधिकारः, परं सूक्ष्मपल्योपमस्वरूपसुखप्रतिपत्तये प्ररूपितमिति ज्ञायते, तेन पूर्वोक्तमेकैकवालाग्रमसंख्येयख-ण्डीकृत्य भृतस्योत्सेधाङ्गुलयोजनप्रमाणायामविष्कम्भावगाहस्य पल्यस्य वर्षशते २ एकैकवालाग्रापहारेण सकलवालाग्रखण्डनिर्लेपनाकालरूपमसङ्ख्येयवर्षकोटीकोटीप्रमाणं सूक्ष्मपल्योपमं, विचित्राकृतिराचार्यस्येति सूत्रकारेणानुक्तमपि स्वयं ज्ञेयं, तेनैव च प्रस्तुतोपयोगः, अन्यथाऽनुयोगद्वारादिभि सह विरोधप्रसङ्गादिति सर्वं सुस्थं ।

एवमग्रे सागरोपमेऽपि ज्ञेयं, अथ सागरोपमस्वरूपं गाथापद्येनाह-

**मू. (३०)** *एएसिं पल्लाणं कोडाकोडी हवेज्ज दसगुणिआ ।*
*तं सागरोवमस्स उ एगस्स भवे परीमाणं ॥*

**वृ.** 'एएसिं पल्लाण'मित्यादि, एतेषामनन्तरोदितानां पल्यानामिति पदैकदेशे पदसमुदायो-

पचारात् पल्योपमानां या दशगुणिता कोटाकोटिर्भवेत् तत्सागरोपमस्यैकस्य भवेत् परिमाणमिति, प्रायः सर्वं कण्ठ्यं, नवरमेतेन सागरोपमप्रमाणेन न न्यूनाधिकेनेत्यर्थः ।

**मू. (३१)** *एएणं सागरोवमप्पमाणेणं चत्तारि सागरोवमकोडाकोडीओ कालो सुसमसुसमा १ तिन्नि सागरोवमकोडाकोडीओ कालो सुसमा २ दो सागरोवमकोडाकोडीओ कालो सुसमदुस्समा ३ एगा सागरोवमकोडाकोडी बायालीसाए वाससहस्सेहिं ऊणिआ कालो दुस्समसुसमा ४ एक्कवीसं वाससहस्साइं कालो दुस्समा ५ एक्कवीसं वाससहस्साइं कालो दुस्समदुस्समा ६ ।*

*पुनरवि उस्सप्पिणीए एक्कवीसं वाससहस्साइं कालो दुस्समदुस्समा १ एवं पडिलोमं नेअव्वं जाव चत्तारि सागरोवमकोडाकोडीओ कालो सुसमसुसमा ६, दससागरोवमकोडाकोडीओ कालो ओसप्पिणी दससागरोवमकोडाकोडीओ कालो उस्सप्पिणी वीसं सागरोवमकोडाकोडीओ कालो ओसप्पिणीउस्सप्पिणी ।*

**वृ.** चतस्रः सागरोपमकोटाकोटयः कालः सुषमसुषमाप्राग्व्यावर्णितार्थ्वार्था, अयमर्थ-चतुःसागरोपमकोटाकोटीलक्षमः कालः प्रथम आरक इत्युच्यते, 'बायालीस'त्ति या च सागरोपमकोटाकोट्येका द्विचत्वारिंशत्सहस्रैर्नवोनिका असौ कालश्चतुर्थोऽरकः, सा दुष्षमासत्कैरेकविंशतिसहस्रैर्दुष्षमदुष्षमासत्कैरेकविंशतिसहस्रैश्च वर्षाणां पूरणीया, तेन पूर्णा कोटाकोट्येका भवति, अवसर्पिणीकालस्य दशसागरकोटाकोटी पूरिका भवतीत्यर्थः, एवं प्रतिलोममिति-पश्चानुपूर्व्या ज्ञेयं, अवसर्पिणीयुक्त उत्सर्पिणी अवसर्पिणीउत्सर्पिणी कालचक्रमित्यर्थः ।

उक्तं भरते कालस्वरूपं, अथ काले भरतस्वरूपं पृच्छन्नाह-तत्राप्यवसर्पिण्या वर्त्तमानत्वेनादौ सुषमसुषमायां प्रश्नः-

**मू. (३२)** *जंबुद्दीवे णं भंते दीवे भरहे वासे इमीसे उस्सप्पिणीए सुसमसुसमाए समाए उत्तकट्ठपत्ताए भरहस्स वासस्स केरिसए आयारभावपडोयार होत्था ?, गो० ! बहुसमरमणिज्जे भूमिभागे होत्था से जहानामए आलिंगपुक्खरेइ वा जाव नानामणिपंचवण्णेहिं तणेहि य मणीहि उ वसोभिए, तंजहा- किण्हेहिं जाव सुक्किल्लेहिं, एवं वण्णो गंधो फासो सद्दो अ तणाण य मणीण य भाणिअव्वो, जाव तत्थ णं बहवे मणुस्सा मणुस्सीओ अ आसयंति सयंति चिट्ठंति निसीअंति तुअट्टंति हसंति रमंति ललंति । तीसे णं समाए भरहे वासे बहवे उद्दाला कुद्दाला मुद्दाला कयमाला नट्टमाला दंतमाला नागमाला सिंगमाला संखमाला सेअमाला नामं दुमगणा पण्णत्ता, कुसविकुसविसुद्धरुक्खमूला मूलवंतो कंदमंतो जाव बीअमंतो पत्तेहि अ पुप्फेहि अ फलेहि अ उच्छण्णपडिच्छण्णा सिरीए अईव २ उवसोभेमाणा चिट्ठंति ।*

*तीसे णं समाए भरहे वासे तत्थ तत्थ बहवे भेरुतालवणाइं हेरुतालवणाइं मेरुतालवणाइं पभयालवणाइं सालवणाइं सरलवणाइं सत्तिवण्णवण्णाइं पूअफलिवणाइं खज्जूरीवणाइं णालिएरीवणाइं कुसविकुसविसुद्धरुक्खमूलाइं जाव चिट्ठंति, तीसे णं समाए भरहे वासे तत्थ तत्थ बहवे सेरिआगुम्मा णोमालिआगुम्मा कोरंटयगुम्मा बंधुजीवगगुम्मा मणोज्जगुम्मा बीअगुम्मा बाणगुम्मा कणइरगुम्मा कुज्जायगुम्मा सिंदुवारगुम्मा मोग्गरगुम्मा जूहिआगुम्मा मल्लिआगुम्मा वासंतिआगुम्मा वत्थुलगुम्मा कत्थुलगुम्मा सेवालगुम्मा अगत्थिगुम्मा मगदंतिआगुम्मा चंपकगुम्मा*

*जातीगुम्मा णवणीइआगुम्मा कुंदगुम्मा महाजाइगुम्मा रम्मा महामेहणिकुरंबभूआ दसद्धवण्णं कुसुमंकुसुमेंति जेणंभरहेवासेबहुसमरमणिज्जंभूमिभागंवायविधुअग्गसाला मुक्कपुप्फपुंजोवयारकलिअंकरेंति।*

*तीसे णं समाए भरहे वासे तत्थ तहिं तहिं बहुईओ पउमलयाओ जाव सामलयाओ निच्चं कुसुमिआओ जाव लयावण्णओ, तीसे णं समाए भरहे वासे तत्थ २ तहिं २ बहुइओ वनराइओ प० किण्हाओ जाव मनोहराओ रयमत्तगछप्पयकोरगभिंगारगोंडलगजीवंजीवनंदीमुहक-विलपिंगलक्खगकारंडवचक्कवायकलहंससारसअणेगसउणगणमिहुणविअरिआओ सद्दुण्णइयमहुरसरणाइआओ संपिंडिअ० नानाविहगुच्छ० वावीपुक्खरणीदीहिआसु असुणि० विचित्त० अब्भि० साउंत० निरोगक० सव्वोउअपुप्फफलस० पिंडिमजावपासादीओ ४।*

वृ. जम्बूद्वीपे भदन्त ! द्वीपे भरतक्षेत्रेऽस्यामवसर्पिण्यां सम्प्रति या वर्त्तमानेति शेषः, सुषमसुषमानाम्न्यां समायां कालविभागलक्षणायां अरके इत्यर्थः, किंलक्षणायामित्याह-उत्तमकाष्ठां-प्रकृष्टावस्थां प्राप्तायां, क्वचिदुत्तमड्डपत्ताए इति पाठस्तत्रोत्तमा तत्कालापेक्षयोत्कृष्टा अर्थान्-वर्णादीन् प्राप्ता उत्तमार्थप्राप्ता तस्यां, भरतस्य वर्षस्य कीदृश आकारभावप्रत्यवतारः 'होत्थ' त्ति अभवत् ?, सर्वमन्यत् प्राग्व्याख्यातार्थं, नवरमत्र मनुष्योपभोगाधिकारे शयनमुभयथापि सङ्गच्छते निद्रासहितरहितत्वभेदात्, अथ सविशेषमनुजिघृक्षुणा गुरुणाऽपृष्टमपि शिष्यायोपदेष्टव्यमिति प्रश्नपद्धतिरहितं प्रथमारकानुभावजनतभरतभूमसौभाग्यसूचकं सूत्रचतुर्दशकमाह- तस्यां समायां भरतवर्षे बहव उद्दालाः कोद्दालाः मोद्दालाः कृतमालाः नृत्तमालाः दन्तमालाः नागमालाः श्रृङ्गमालाः शङ्खमालाः श्वेतमाला नाम द्रुमगणा-द्रुमजातिविशेषसमूहाः प्रज्ञप्तास्तीर्थकरगणधरैः हे श्रमण ! हे आयुष्मन् !, ते च कथंभूता इत्याह- कुशाः-दर्भाविकुशा-बल्वजादयस्तृणविशेषास्तैर्विशुद्धं-रहितं वृक्षमूलं-तदधोभागो येषां ते तथा, इह मूलंच शाखादीनामपि आदिमो भागो लक्षणया प्रोच्यते यथा शाखामूलमित्यादि ततः सकलवृक्षसत्कमूलप्रतिपत्तये वृक्षग्रहणं, मूलमन्तः कन्दमन्त इति पदद्वयं यावत्पदसङ्ग्राह्यं च जगतीवनगततरुगणवद् व्याख्येयं, पत्रैश्च पुष्पैश्च फलैश्च अवच्छन्नप्रतिच्छन्ना इति प्राग्वत् श्रिया अतीवोपशोभमानास्तिष्ठन्ति-वर्त्तन्ते इति भावः।

'तीसे णं समाए' इत्यादि, तस्यां समायां बहूनि, सूत्रे पुंस्त्वनिर्देशः प्राकृतत्वात्, भेरुतालादयो वृक्षविशेषाः, क्वचित्प्रभवालवणा इति पाठस्तत्र प्रभवालाः-तरुविशेषाः सालः-सर्जः सरलो-देवदारु सप्तपर्ण प्रतीतस्तेषां वनानि पूगफली-क्रमुकतरु खर्जूरीनालिकेर्यौ प्रतीते तासां वनानि शेषं प्राग्वत्। 'तीसे णं' इत्यादि, तस्यां समायां बहवः सेरिकागुल्मा नवमालिकागुल्माः कोरण्टकगुल्माः बन्धुजीवकगुल्माः यत्पुष्पाणि मध्याह्ने विकसन्ति, मनोऽवद्यगुल्माः बीअकगुल्माः बाणगुल्माः करवीरगुल्माः कुब्जगुल्माः सिंदुवारगुल्माः जातिगुल्माः मुद्गरगुल्माः यूथिकागुल्माः मल्लिकागुल्माः वासंतिकगुल्माः वस्तुलगुल्माः कस्तुलगुल्माः सेवालगुल्माः अगस्त्यगुल्माः (मगदन्तिकागुल्माः) चम्पकगुल्माः जातिगुल्मा नवनीतिकागुल्माः कुन्दगुल्मा महाजातिगुल्माः, गुल्मा नाम ह्रस्वस्कन्धबहुकाण्डपत्रपुष्पफलोपेताः, एषां च केचित्प्रतीताः केचिद्देशविशेषतो-ऽवगन्तव्याः, रम्याः महामेघनिकुरम्बभूताः दशार्द्धवर्णं-पञ्चवर्णं कुसुमं-जातावेकवचनं कुसुमसमूहं कुसिमयन्ति-उत्पादयन्तीति भावः, येणमिति प्राग्वत् भरते वर्षे इति षष्ठीसप्तम्योरर्थं प्रत्यभेदाद्भरतस्य वर्षस्य बहुसमरमणीयं भूमिभागं वातविधुता-वायुकम्पिता या अग्रशालास्ताभिर्मुक्तो यः पुष्पपुञ्जः

स एवोपचारः-पूजा तेन कलितं-युक्तं कुर्वन्तीति ।

'तीसे ण'मित्यादि, सर्वमेतत् प्राग्वत्, अथात्रैव वनश्रेणिवर्णनायाह- तत्र तत्र देशे तस्य तस्य देशस्य तत्र २ प्रदेशे बह्वयो वनराजयः प्रज्ञप्ताः, इहैकानेकजातीयानां वृक्षाणां पङ्क्त्यो वनराजयः, ततः पूर्वोक्तसूत्रेभ्योऽस्य भिन्नार्थतेति न पौनरुक्त्यं, ताश्च कृष्णाः कृष्णावभासा इत्यादि विशेषणजातं प्राग्वत् यावन्मनोहारिण्यः, यावत्पदसङ्ग्रहश्चायं-'नीलाओ नीलोभासाओ हरिआओ हरिओभासाओ सीआओ सीओभासाओ निद्धाओ निद्धोभासाओ तिव्वाओ तिव्वोभासाओ किण्हाओ किण्हाओ किण्हच्छायाओ नीलाओ नीलच्छायाओ हरिआओ हरिअच्छायाओ सीआओ सीअच्छायाओ निद्धाओ निद्धच्छायाओ तिव्वाओ तिव्वच्छायाओ घणकडिअडच्छायाओ वाचनान्तरे घणकडिअकडच्छायाओ महामेहणिकुरंबभूयाओ रम्माओ' इति ।

इदं च सूत्रं प्राक् पद्मवरवेदिकावनवर्णनाधिकारे लिखितमपि यत्पुनर्लिखितं तदतिदेशदर्शितानां सूत्रे साक्षाद्दर्शितानां च वनवर्णकविशेषणपदानां विभागज्ञापनार्थमिति, सूत्रे कानिचिदेकदेशग्रहणेन कानिचित्सर्वग्रहणेन कानिचित्क्रमेण कानिचिदुत्क्रमेण साक्षाल्लिखितानि सन्ति, तेन मा भूद्वाचितॄणां व्यामोह इति सम्यक्पाठज्ञापनाय वृत्तौ पुनर्लिख्यते- 'रयमत्तछप्पय-कोरगभिंगारकोंडलगजीवंजीवगनंदीमुहकविलपिंगलक्खगकारंडवचक्कवायकलहंससारसअणेगसउणगणमिहुणविअरिआओ सद्दुण्णइअमहुरसरणादिआओ संपिंडिअत्ति-संपिंडिअदरियभमरमहुकर-पहकरपरिलिंतमत्तच्छप्पयकुसुमासवलोलमहुरगुमगुमंतगुंजंतदेसभागाओ, नानाविहगुच्छत्ति-नानाविहगुच्छगुम्ममंडवगसोहिआओ, वावीपुक्खरिणीदीहिआसु अ सुणिवेसिअरम्मजलधरयाओ विचित्तत्ति-विचित्तसुहकेउभूआओ अब्भिंतरत्ति-अब्भिंतरपुप्फफलाओ बाहिरपत्तोच्छण्णाओ पत्तेहि अ पुप्फेहि अ उच्छण्णपरिच्छण्णाओ साउत्ति-साउफलाओ निरोगकत्ति-निरोगयाओ, सव्वोउअपुप्फफलसमिद्धाओ पिंडिमत्ति-पिंडिमनीहारिमं सुगंधिं सुहसुरभिं मनहरं च महया गंधद्धणिं जाव पासादीआओ इति, व्याख्या प्राग्वत्, नवरं रतमत्ताः-सुरतोन्मादिनो ये षट्पदाद्या जीवा इत्यादि ।

एवमेव हि सूत्रकाराः पदैकांशग्रहणतः 'एवं जाव तहेव इच्चाइ वण्णओ इत्यादिपदाभिव्य-ङ्ग्यैरतिदेशैर्दर्शितविवक्षणीयवाच्याः सूत्रे लाघवं दर्शयंति, यत उक्तं निशीथभाष्ये षोडशोद्देशके-

॥१॥ "कत्थइ देसग्गहणं कत्थइ भन्नंति निरवसेसाइं ।
उक्कमकमजुत्ताइं कारणवसओ निरुत्ताइं ॥"

— अथात्र वृक्षाधिकारात् कल्पद्रुमस्वरूपमाह-

**मू. (३३)** *तीसे णं समाए भरहे वासे तत्थ तत्थ तहिं तहिं मत्तंगाणामं दुमगणा पन्नत्ता, जहा से चंदप्पभा जाव छन्नपडिच्छन्ना चिट्ठंति, एवं जाव अनिगणाणामं दुमगणा पन्नत्ता ।*

**वृ.**- 'तीसे ण'मित्यादि, तस्यां समायां भरते वर्षे तत्र तत्र देशे-तस्मिन् २ प्रदेशे मत्तं-मदस्तस्याङ्गं-कारणं मदिरारूपं येषु ते मत्ताङ्गा नाम द्रुमगणाः प्रज्ञप्ताः, कीदृशास्ते इत्याह-यथा ते चन्द्रप्रभादयो मद्यविधयो बहुप्रकाराः, सूत्रे चैकवचनं प्राकृतत्वात्, यावच्छन्नप्रति-च्छन्नास्तिष्ठन्तीति, एवं यावदनग्ना नाम द्रुमगणाः प्रज्ञप्ता इति, अत्र सर्वो यावच्छब्दाभ्यां सूचितो मत्ताङ्गादिद्रुमवर्णको जीवाभिगमोपाङ्गानुसारेण भावनीयः, स चायं 'जहा से चंदप्पभम-

णिसिलागवरसीधुवरवारुणिसुजायपत्तपुप्फफलचोअणिज्जाससारबहुदव्वजुत्तिसंभारकालसंधिआसवा महुमेरगरिट्ठाभदुद्धजातिपसन्नतल्लगसताउखज्जूरिमुद्दिआसारकाविसायणसुपक्कखोअरसवरसुरा वण्णगंधरसफरिसजुत्ता बलवीरिअपरिणामा मज्जविही बहुप्पगारा तहेव ते मत्तंगावि दुमगणा अनेगबहुविविहवीससापरिणयाए मज्जविहीए उववेया फलेहिं पुण्णा वीसंदंति कुसविकुस-विसुद्धरुक्खमूला जाव छन्नपडिच्छन्ना सिरीइ अईव उवसोभेमाणा २ चिट्ठंती'ति अत्र व्याख्या-

इदं च संकेतवाक्यं अपरेष्वपि व्याख्यास्यमानकल्पद्रुमसूत्रेषु बोध्यं, चन्द्रस्येव प्रभा-आकारो यस्याः सा चन्द्रप्रभा मणिशिलाकेव मणिशिलाका वरं च तत्सीधु च २ वरा चासौ वारुणी च वरवारुणी तथा सुजातानां-सुपरिपाकागतानां पुष्पानां फलानां चोयस्य-गन्धद्रव्यस्य यो निर्यासो-रसस्तेन साराः तथा बहूनां द्रव्याणामुपबृंहणकानां युक्तयो-मीलनानि तासां सम्भारः-प्राभूत्यं येषु ते तथा काले-स्वसयोचिते सन्धितदङ्गभूतानां द्रव्याणां सन्धानं योजनमित्यर्थः तस्माज्जायन्ते इति कालसन्धिजाः, एवंविधाश्च ते आसवाः, किमुक्तं भवति ?-पत्रादिवासकद्रव्यभेदादनेक प्रकारो ह्यासवः पत्रासवादिरनेन निर्दिष्टो भवतीति, ततः पदद्वय २ पदद्वयमीलनेन विशेषणसमासः, मधुमेरकौ मद्यविशेषौ रिष्ठाभा-रिष्ठरत्नवर्णाभा या शास्त्रान्तरे जम्बूफलकलिकेति प्रसिद्धा दुग्धजाति-आस्वादतः क्षीरसदृशी प्रसन्ना-सुराविशेषः तल्लको़ऽपि-सुराविशेषः शतायुर्नाम या शतवारं शोधितापि स्वस्वरूपं न जहाति सारशब्दस्य प्रत्येकं योजनात् खर्जूरसारनिष्पन्न आसवविशेषः खर्जूरसारः, मृद्वीका-द्राक्षा ततसारनिष्पन्न आसवो मृद्वीकासारः कपिशायनं-मद्यविशेषः सुपक्वः-परिपाकागतो यः क्षोदरसः-इक्षुरसस्तन्निष्पन्ना वरसुरा, एते सर्वेऽपि मद्यविशेषाः पूर्वकाले लोकप्रसिद्धा इदानीमपि शास्त्रान्तरो लोकतो वा यथास्वरूपं वेदितव्याः, कथंभूता एते मद्यविशेषा इत्याह-वर्णेन प्रस्तावादतिशायिना एवं गन्धेन रसेन स्पर्शेन च युक्ता-सहिता बलहेतवो वीर्यपरिमाणा येषां ते तथा बहवः प्रकारा जातिभेदेन येषां ते बहुप्रकाराः ।

तथैवेतिपदं भिन्नक्रमेण योजनात्, तथास्वरूपेणैव न त्वन्यादृशेन मद्यविधिना-मद्यप्रकारेणोपपेतास्ते मत्ताङ्गा अपि द्रुमगणा इति भावः, अन्यता दृष्टान्तयोजना न सम्यग्भवतीति, किंविशिष्टेन मद्यविधिनेत्याह-अनेको-व्यक्तिभेदाद्बहु-प्रभूतं यथा स्यात् तथा विविधो जातिभेदतो नानाविध इति भावः, स च केनापि कल्पपालादिना निष्पादितोऽपि सम्भाव्यते तत आह-विस्रसया-स्वभावेन तथाविधक्षेत्रादिसामग्रीविशेषजनितेन परिणतो न पुनरीश्वरादिना निष्पादित इति, तत पदत्रयस्य पदद्वय २ मीलनेन कर्मधारयः, सूत्रे च स्त्रीत्वनिर्देशः प्राकृतत्वात्, ते च मद्यविधिनोपपेता न तालादिवृक्षा इवाङ्कुरादिषु किन्तु फलादिषु, तथा चाह-फलेषु पूर्णा मद्यविधिभिरिति गम्यं, सप्तम्यर्थे तृतीया प्राकृतत्वात्, विष्यंदन्ति-श्रवन्ति सामर्थ्यात्तानेवान-न्तरोदितान् मद्यविधीन्, क्वचिद्विसट्टन्तीति पाठः, तत्र विकसन्तीति व्याख्येयं, किमुक्तं भवति ?-तेषां फलानि परिपाकागतमद्यविधिभि पूर्णानि स्फुटित्वा २ तान् मद्यविधीन् मुञ्चन्तीति भावः ।

अथ द्वितीयकल्पवृक्षजातिस्वरूपमाख्यातुमाह-'तीसे णं समाए तत्थ २ तहिं २ बहवे भिंगंगाणामदुमगणा पन्नत्ता समणाउसो ! जहा से वारगघडगकलसकरगककरिपायंचणिउदंकवद्ध-णिसुपइट्ठगविट्ठरपारीचसकभिंगारकरोडिसरगपत्तीथालणल्लगचवलिअअवमद दवारग-विचित्तवट्टगमणिवट्टगसुत्तिचारुपीणयाकंचणमणिरयणभत्तिचित्ता भायणविही य बहुप्पगारा तहेव

ते भिंगंगावि दुमगणा अनेगबहुविहवीससापरिणयाए भायणविहीए उववेआ फलेहिं पुण्णाविव विसट्टंती'ति तस्यां समायां तत्रेत्यादि प्राग्वत् भृतं-भरणं पूरणमित्यर्थः तत्राङ्गानि-कारणानि, न हि भरणक्रिया भरणीयं भाजनं वा विना भवतीति तत्सम्पादकत्वात् वृक्षा अपि भृताङ्गाः प्राकृतत्वाच्च भिंगंगा उच्यन्ते, यथा ते वारको-मरुदेशप्रसिद्धनामा माङ्गल्यघटः घटको-लघुर्घटः कलशो-महाघटः करकः प्रतीतः कर्करी-स एव विशेषः पादकाञ्चनिका-पादधावनयोग्या काञ्चनमयी पात्री उदङ्कः-येनोदकमुदच्य वार्द्धानी-गलंतिका, यद्यपि नामकोशे करककर्करीवार्द्धानीनां न कश्चिद्विशेषस्तथापीह संस्थानादिकृतो विशेषो लोकतोऽवसेय इति, सुप्रतिष्ठकः-पुष्पपात्रविशेषः पारी-स्नेहभाण्डं चषकः-सुरापानपात्रं भृङ्गारः-कनकालुका सरको-मदिरापात्रं पात्रीस्थाले प्रसिद्धे दकवारके-जलघटः, विचित्राणि-विविधविचित्रोपेतानि वृत्तकानि-भोजनक्षणोपयोगीनि घृतादिपात्राणि तान्येव मणिप्रधानानि वृत्तकानि मणिवृत्तकानि शुक्ति-चन्दनाद्याधारभूता शेषा विष्टरकरोडिनलकचपलितावमदचारुपीनका लोकतो विशिष्टसम्प्रदायाद्वाऽवगम्याः, काञ्चनमणिरत्नानां भक्तयो-विच्छित्तयस्ताभिश्चित्रा भाजनविधयो-भाजनप्रकारा बहुप्रकारा एकैकस्मिन् विधावबान्तरानेकभेदभावात् तथैवेति पूर्ववत् ते भृताङ्गा अपि द्रुमगणा 'अनेगे'ति पूर्ववत् भाजनविधिनोपपेताः फलैः पूर्णा इव विकसन्ति, अयमर्थः-तेषां भाजनविधयः फलानीव शोभन्ते, अथवा इवशब्दस्य भिन्नक्रमेण योजना, तेन फलैः पूर्णा भाजनविधिना वोपपन्ना दृश्यन्ते।

अथ तृतीयकल्पवृक्षस्वरूपमाह-'तीसे णं समाए तत्थ तत्थ देसे तहिं २ बहवे तुडिअंगा नाम दुमगणा पन्नत्ता समणाउसो !, जहा से आलिंगमुइंगपणवपडहदद्दरगकरडिडिंडिमभंभाहोरम्भकणियखरमुहिमुंगुंदसंखिअपिरलीवच्च कपरिवाइणिवंसवेणुघोसविवंचिमहतिकच्छभिरिगिसिगिआतलतालकंसतालसुसं पउत्ता आतोज्जविही निउणगंधव्वसमयकुसलेहिं फंदिआ तिट्ठाणकरणसुद्धा तहेव ते तुडिअंगावि दुमगणा अनेगबहुविविहीससापरिणयाए ततविततघणझुसिराए आतोज्जविहीए उववेआ फलेहिं पुण्णाविव विसट्टंति, कुसविकुसजाव चिट्ठंती'ति, यथा ते आलिङ्गो नाम यो वादकेन मुरज आलिङ्गय वाद्यते, हृदि धृत्वा वाद्यत इत्यर्थः, मृदङ्गो-लघुमर्द्दलः पणवो-भाण्डपटहो लघुपटहो वा पटहः स्पष्टः दर्द्दरिको यस्य चतुर्भिश्चरणैरवस्थानं भुवि स गोधाचर्मावनद्धो वाद्यविशेषः करटी-सुप्रसिद्धा डिण्डिमः-प्रथमप्रस्तावनासूचकः पणवविशेषः भंभा-ढक्का निस्वानानीति सम्प्रदायः, होरंभा-महाढक्का महानिस्वानानीत्यर्थ क्वणिता-काचिद्वीणा खरमुखी-काहला मुकुन्दो-मुरजविशेषो योऽतिलीनं प्रायो वाद्यते शङ्खिकालघुशङ्खरूपा तस्याः स्वरो मनाक् तीक्ष्णो भवति न तु शङ्खस्येवातिगम्भीरः पिरलीवच्चकौ तृणरूपवाद्यविशेषौ परिवादिनी-सप्ततन्त्री वीणा वंशः-प्रतीतः वेणुः-वंशविशेषः सुघोषा-वीणाविशेषः विपंचीति-तन्त्री वीणा-महती शततन्त्रिका सा कच्छपी-भारती वीणा रिगिसिगिका-घर्ष्यमाणवादित्रविशेष इति श्राद्धविधिवृत्तौ। एते कथंभूता इति ?, तलं-हस्तपुटं तालाः कांस्यतालाश्च प्रतीताः एतैः सुसंप्रयुक्ताः-सुष्ठु अतिशयेन सम्यग्-यथोक्तनीत्या प्रयुक्ताः-सम्बद्धाः, यद्यपि हस्तपुटं न कश्चित्तूर्यविशेषस्तथापि तदुत्थितशब्दप्रतिकृति शब्दो लक्ष्यते, एतादृशा आतोद्यविधयः-तूर्यप्रकाराः निपुणं यथा भवति एवं गन्धर्वसमये-नाट्यसमये कुशलास्तैः स्पन्दिता-व्यापारिता इति भावः, पुनः किंविशिष्टा त्रिषु-आदिमध्यावसानेषु स्थानेषु करणेन-क्रियया

यथोक्तवादनक्रियया शुद्धा-अवदाता न पुरस्थानव्यापारणरूपदोषलेशेनापि कलङ्किताः ते त्रुटिताङ्गा अपि द्रुमगणास्तथैव-तथाप्रकारेण न त्वन्याऽशेन ततं-वीणादिकं विततं-पटहादिकं घनं-कांस्यतालादिकं शुषिरं-वंशादिकं एतद्रूपेण सामान्यतश्चतुर्विधेन आतोद्यविधिनोपेपताः, शेषं प्राग्वत् ।

अथ चतुर्थकल्पवृक्षस्वरूपमाह- 'तीसे णं समाए तत्थ तत्थ देसे तहिं २ बहवे दीवसिहानामं दुमगणा पन्नत्ता समणाउसो !, जहा से संझाविरागसमए नवनिहिवइणो दीविआचक्कवालविंदे पभूयवट्टिपलित्तणेहे घणिउज्जलिए तिमिरमद्दए कणगनिगरकुसुमिअपालिआतगवणप्पगासे कंचनमणिरयणविमलमहरिहतवणिज्जुज्जलविचित्तदंडाहिं दीविआहिं सहसा पज्जालिउस्सप्पिअनिद्धतेअदिप्पंतविमलगहगणसमप्पहाहिं वितिमिरकरसूरपसरिउज्जोअचिल्लिआहिं जालुज्जलपहसिआभिरामाहिं सोभमाणा तहेव ते दीवसिहावि दुमगणा अनेगबहुविविहवीससापरिणयाए उज्जोअविहीए उववेआ फलेहिं पुण्णा कुसविकुस जाव चिट्ठंती'ति, तस्यां समायां दीपशिखा इव दीपशिखास्तत्कार्यकारित्वात्, अन्यथा व्याघातकालत्वेन तत्राग्नेरभावाद्दीपशिखानामप्यसम्भवात्, योदना प्राग्वत्, यथा तत्सन्ध्यारूपो उपरमसमयवर्त्तित्वेन मन्दो रागस्तत्समये-तदवसरे नवनिधिपतेश्चक्रवर्त्तिन इव हस्वा दीवा दीपिकास्तासां चक्रवालं-सर्वतः परिमण्डलरूपं वृन्दं कीदृगित्याह-प्रभूता-भूयस्यः स्थूरा वा वर्त्तयो-दशा यस्य तत्तथा पर्याप्तः-परिपूर्ण स्नेहः-तैलादिरूपो यस्य तत् तथा घनं-अत्यथमुज्वलितं अत एव तिमिरमर्द्दकं, पुनः किंविशिष्टमित्याह-कनकनिकरः-सुवर्णराशि कुसुमितं च तत्पारिजातकवनं च-पुष्पितसुरतरुविशेषवनं ततो द्वन्द्वस्तद्वत्प्रकाशः-प्रभा आकारो यस्य तत्तथा एतावता समुदायविशेषणमुक्तमिदानीं समुदायसमुदायिनोः कथंचित् भेद इति ख्यापयन् समुदायविशेषणमेव विवक्षु समुदायिविशेषणान्याह-लोकेऽपि वक्तारो भवन्ति 'यदियं जन्ययात्रा महर्द्धिकजनैराकीर्णे'ति 'कंचने'त्यादि, दीपिकाभि शोभमानमिति सम्बन्धः, कथंभूताभिर्दीपिकाभिरत आह-

काञ्चनमणिरत्नमयाः विमलाः-स्वाभाविकागन्तुकमलरहिता महार्हा-महोत्सवार्हा तपनीयंसुवर्णविशेषस्तेनोज्वला-दीप्ताः विचित्रा-विचित्रवर्णा दण्डाः यासां तास्तथा ताभिः सहसा-एककालं प्रज्वालिताश्च ता उत्सर्पिताश्च वर्त्तुलसर्पणेन तथा स्निग्धं-मनोहरं तेजो यासां तास्तथा, दीप्यमानो रजन्यां भास्वान् विमलोऽत्र धूल्याद्यपगमेन ग्रहगणो-ग्रहसमूहस्तेन समा प्रभा यासां तास्तथा ताभि, ततः पदद्वय २ मीलनेन कर्मधारयः, तथा वितिमिराः कराः यस्यासौ वितिमिरकरोनिरन्धकारकिरणः स चासौ सूरश्च तस्येव यः प्रसृत उद्योतः-प्रभासमूहस्तेन चिल्लिआहिंतिदेशीपदमेतत् दीप्यमानाभिरित्यर्थः, ज्वाला एव यदुज्वलं प्रहसितं-हासस्तेनाभिरामारमणीयास्ताभिः, अत एव शोभमानं, तथैव ते दीपशिका अपि द्रुमगणा अनेकबहुविविधविस्रसापरिणतेनोद्योतविधिनोपपेताः, यथा दीपशिखा रात्रौ गृहान्तरुदद्योतन्ते दिवा वा गृहादौ तद्वदेते द्रुमा इत्याशयः, एवं च वक्ष्यमाणज्योतिषिकाख्यद्रुमेभ्यो विशेषः कृतो भवतीति, शेषं प्राग्वत् ।

अथ पञ्चमकल्पवृक्षस्वरूपमाह- 'तीसे णं समाए तत्थ २ बहवे जोइसिआ नामं दुमगणा पन्नत्ता समणाउसो ! जहा से अइरुग्गयसरयसूरमण्डलपडंतउक्कासहस्सदिप्पंतविज्जुज्जलहुअवहणिद्धूमजलिअणिद्धंतधोअतत्ततवनिज्जकिंसुआसोअजा सुअणकुसुमविमउलिअपुंजमणिरयण-

किरणजवहिंगुलयणिगररूवाइरेगरूवा तहेव ते जोइसिआवि दुमगणा अनेगबहुविविहवीससा-परिणयाए उज्जोअविहीए उववेआ सुहलेसा मंदलेसा मंदायवलेसा कूडा इव ठाणठिआ अन्नोन्नसमोगाढाहिं लेसाहिं साए पहाए ते पएसे सव्वओ समंता ओभासेंति उज्जोअंति पभासंति कुसुम जाव चिट्ठंतीति, अत्र व्याख्या-तस्यां समायां 'तत्थे'त्यादि पूर्ववत्, ज्योतिषिका नाम द्रुमगणाः प्रज्ञप्ताइत्यन्वययोजना, नामान्वर्थस्त्वयं-ज्योतीषि-ज्योतिष्का देवास्त एव ज्योतिषिकाः, अत्र मतान्तरेण स्वार्थे इकप्रत्ययः, 'उणादयोऽव्युत्पन्नानि नामानी'त्यव्युत्पत्तिपक्षाश्रयणा-दिसुप्रत्ययान्तत्वाभावादिकारलोपाभावश्च सम्भाव्यते, जीवाभिगमवृत्तौ ज्योतिषिका इति संस्कारदर्शनात्, तत्रापि प्रधानाप्रधानयोः प्रधानस्यैव ग्रहणं, तेन अत्र ज्योतिषिकशब्देन सूर्यो गृह्यते, तत्सदृशंप्रकाशकारित्वेन वृक्षा अपि ज्योतिषिकाः, 'ज्योतिर्वह्निदिनेशयोः' इति वचनाद्वा ज्योतिशब्दः सूर्यवाचको वह्निवाचको वा, शेषं स्वार्थिकप्रत्ययादिकं तथैव, ते च किंविशिष्टा इत्याह-

यथा ते 'अचिरे'त्यादिना 'हुतवह' इत्यन्तेन सम्बन्धः, अचिरोद्‌गतं शरत्सूर्यमण्डलं, यथा वा पतदुल्कासहस्रं प्रसिद्धं, यथा वा दीप्यमाना विद्युत् यथा वा उद्‌गता ज्वाला यस्य स उज्ज्वालः, तथा निर्धूमो-धूमरहितो ज्वलितो-दीप्तो हुतवहो-दहनः, सूत्रे पदोपन्यासव्यत्ययः प्राकृतत्वात्, ततः सर्वेषामेषां द्वन्द्वः, एते च कथंभूता इत्याह-निर्ध्मातं-नितरामग्निसंयोगेन (शोधितमलं) यद्धौतं-शोधितं तप्तं च तपनीयं, ये च किंशुकाशोकजपाकुसुमानां विमुकुलितानां-विकसितानां पुञ्जा ये च मणिरत्नकिरणाः यश्च जात्यहिङ्गुलकनिकरस्तद्रूपेभ्योऽतिरेकेण-अतिशयेन यथायोगं वर्णतः प्रभया च रूपं-स्वरूपं येषां ते तथा, ततः पूर्वपदेन विशेषणसमासः, तथैव त ज्योतिषिका अपि द्रुमगणा अनेकबहुविविधविस्रसापरिणते-नोद्द्योतविधिनोपपेता यावत्तिष्ठन्तीति सण्टङ्कः, ननु यदि सूर्यमण्डलादिवत्ते प्रकाशकास्तर्हि तद्वत्ते दुर्निरीक्ष्यत्वतीव्रत्वजङ्गमत्वादिधर्मोपेता अपि भवन्तीत्याह-सुखा-सुखकारिणी लेश्या-तेजो येषां ते तथा अत एव मन्दलेश्यास्तथा मन्दातपस्य लेश्या-जनितप्रकाशस्य लेश्या येषां ते तथा, सूर्यानलाद्यातपस्य तेजो यथा दुस्सहं न तथा तेषामित्यर्थः, तथा कूटानीव-पर्वतादिशिखराणीव स्थानस्थिताः-स्थिराइति, समयक्षेत्रबहिर्वर्तिज्योतिष्का इव तेऽवभासयन्तीति भावः, तथाऽन्योऽन्यं-परस्परं समवगाढाभिर्लेश्याभि सहिता इति शेषः, किमुक्तं भवति ? -

यत्र विवक्षिता ज्योतिषिकाख्यतरुलेश्या अवगाढा तत्रान्यस्य लेश्याऽवगाढा यत्रान्यतरुलेश्या अवगाढा तत्र विवक्षिततरुलेश्या अवगाढा इति, 'साए पभाए' इत्यादि, 'पभान्ती'त्यन्तं सूत्रं विजयद्वारतोरणसम्बन्धिरत्नकरण्डकवर्णने व्याख्यातमिति, 'कुशविकुशे'त्यादि पूर्ववत्, एषां च बहुव्यापी दीपशिखावृक्षप्रकाशापेक्षया तीव्रश्च प्रकाशो भवतीति पूर्वेभ्यो विशेषः।

अथ षष्ठकल्पवृक्षस्वरूपमाह-'तीसे णं समाए तत्थ २ बहवे चित्तंगा नामं दुमगणा पन्नत्ता समणाउसो !, जहा से पेच्छाघरे विचित्ते रम्मे वरकुसुमदाममालुज्जले भासंतमुक्कपुप्फपुंजोवयारकलिए विरल्लिअविचित्तमल्लसिरसमुदयप्पगब्भे गंठिमवेढिमपूरिमसंघाइमेण मल्लेणं छेअसिप्पिविभागरइएणं सव्वओ चेव समनुबद्धे पविरललंबंतविप्पइट्ठेहिं पंचवण्णेहिं कुसुमदामेहिं सोभमाणे वणमालकयग्गए चेव दिप्पमाणे, तहेव ते चित्तंगावि दुमगणा अनेगबहुविविहवीससापरिणयाए मल्लविहीए उववेआ कुसविकुसजाव चिट्ठन्ती'ति, तस्यां समायामित्यादि प्राग्वत्, नवरं 'चित्तंगा' इति चित्रस्य अनेकप्रकारस्य विवक्षाप्राधान्यान्माल्यस्य अंगं-कारणं तत्सम्पादकत्वाद्वृक्षा अपि चित्राङ्गाः, यथा

तत्प्रेक्षागृहं विचित्रं-नानाचित्रोपेतमत एव रम्यं-रमयति द्रष्टृणां मनांसीति बाहुलकात् कर्त्तरि यप्रत्ययः, किंविशिष्ट इत्याह-वरकुसुमदाम्नां मालाः श्रेणयस्ताभिरुज्ज्वलं देदीप्यमानत्वात्, तथा भास्वान्-विकसिततया मनोहरतया च देदीप्यमानो मुक्तो यः पुष्पपुञ्जोपचारस्तेन कलितं ।

तथा विरल्लितानि 'तनूयी विस्तारे' इत्यस्य 'तनेस्तडतडतडववरल्ला' इत्यनेन विरल्लादेशे कृते क्तप्रत्यये च विरल्लितानि-विरलीकृतानि विचित्राणि यानि माल्यानि-ग्रथितपुष्पमालास्तेषां यः श्रीसमुदयः-शोभाप्रकर्षस्तेन प्रगल्भं-अतीव परिपुष्टं, तथा ग्रंथिमं-यत्सूत्रेण ग्रथितं वेष्टिमं-यत् पुष्पमुकुटमिवोपर्युपरि शिखराकृत्या मालास्थापनं पूरिमं-यद्वंशछिद्रेषु पुष्पनिवेशेन पूर्यते सङ्घातिमं-यत्पुष्पं पुष्पेण परस्परनालप्रवेशेन संयोज्यते. ततः समाहारद्वन्द्वे एवंविधेन माल्येन छेकशिल्पिना-परमदक्षिणकलवता विभागरचितेन-विभक्तिपूर्वकं कल्पितेन यद्यत्र योग्यं ग्रन्थिमादि तत्र तेन सर्वतः-सर्वासु दिक्षु समनुबद्धं, तथा प्रविरलैर्लम्बमानैः, तत्र प्रविरलत्वं मनागप्यसंहतत्वमात्रेण भवति ततो विप्रकृष्टत्वप्रतिपादनायाह-विप्रकृष्टैः-बृहदन्तरालैः पञ्चवर्णैः, ततः कर्मधारयः, कुसुमदामभि शोभोमान, वनमाला-वन्दनमाला कृताऽग्रे-अग्रभागे यस्य तत्तथा, तथाभूतं सद्दीप्यमानं, तथैव चित्राङ्गा अपि नाम द्रुमगणा अनेकबहुविधविविधविस्रसापरिणतेन माल्यविधिनोपपेताः, 'कुसविकुसविसुद्धमुला' इत्यादि प्राग्वत् ।

अथ सप्तमकल्पवृक्षस्वरूपमाह-'तीसे णं समाए तत्थ २ बहवे तहिं २ चित्तरसा नामं दुमगणा पण्णत्ता समणाउसो ! जहा से सुगंधवरकमलसालितंदुलविसिट्ठणिरुवहयदुद्धरद्धे सारयधयगुडखंडमहुमेलिए अइरसे परमण्णे होज्जा उत्तमवण्णगंधमंते अहवा रण्णो चक्कवट्टिस्स होज्ज णिउणेहिंसूवपुरिसेहिं सज्जिए चउकप्पसेअसित्ते इव ओदणे कलमसालिणिव्वत्तिए विप्पमुक्के सबप्फमिउविसयसगलसित्थे अणेगसालणगसंजुत्ते अहवा पडिपुण्णदव्युवक्खडे सुसक्खए वण्णगंधरसफरिसजुत्तथलवीरिअपरिणामे इंदिअबलपुट्ठिविवद्धणे खुप्पिवासामहणे पहाणंगुलकढिअखंडमच्छंडिघउवणीएव्व भोअगे सण्हसमिइगब्भे हवेज्ज परमेट्ठगसंजुत्ते तहेव ते चित्तरसावि दुमगणा अणेगबहुविहविविहवीससापरिणयाए भोअणविहीए उववेआ कुसविकुसजाव चिट्ठंती'ति, तस्यां समायामित्यादि योजना प्राग्वत् । नवरं चित्रो-मधुरादिभेदभिन्नत्वेनानेकप्रकार आस्वादयितृणामाश्चर्यकारी वा रसो येषां ते तथा, यथावत्परमान्नं-पायसं भवेदिति सम्बन्धः, ये सुगन्धाः-प्रवरगन्धोपेताः, समासान्तविधेरनित्यत्वादत्रेदरूपस्य समासान्तस्याभावो यथा सुरभिगन्धेन वारिणेति, वराः-प्रधाना दोषरहितक्षेत्रकाला-दिसामग्रीसम्पादितात्मलाभा इति भावः, कलमशालेः-शालिविशेषस्य तन्दुला-निस्त्वचितकणाः यत्र विशिष्टं-विशिष्टगवादिसम्बन्धि निरुपहतमिति-पाकादिभिरविनाशितं दुग्धं तै राद्धं-पक्वं, परमकलमशालिभि परमदुग्धेन च यथोचितमात्रपाकेन निष्पादितमित्यर्थः, तथा शारदघृतं गुडः खण्डं मधु वा शर्करापरपर्यायं मेलितं यत्र तत्तथा, क्तान्तस्य परनिपातः प्राकृतत्वात् सुखादिदर्शनाद्वा, अत एवातिरसमुत्तमवर्णगन्धवत्, यथा वा राज्ञश्चक्रवर्त्तिनः ओदन इव भवेदित्यन्वयः, निपुणैः सूपपुरुषैः-सूपकारैः सज्जितो-निष्पादितः चत्वारः कल्पा यत्र स चासौ सेकश्च चतुष्कल्पसेकस्तेन सिक्तः, रसवतीशास्त्रभिज्ञा हि ओदनेषु सौकुमार्योत्पादनाय सेकविषयांश्चतुरः कल्पान् विदधति, स च ओदनः किंविशिष्ट ? कलमशालिनिर्वर्त्तितः कलमशालिमय इत्यर्थः, विपको-

विशिष्टपरिपाकमागतः सबाष्पानि-बाष्पं मुञ्चन्ति मृदूनि-कोमलानि चतुष्कल्पसेकादिना परिकर्म्मितत्वात् विशदानि सर्वथा तुषादिमलापगमात् सकलानि-पूर्णानि सित्थानि यत्र स तथा, अनेकानि शालनकानि-पुष्पफलप्रभृतीनि प्रसिद्धानि तैः संयुक्तः, अथवा मोदक इव भवेदिति-

परिपूर्णानि-समस्तानि द्रव्याणि-एलाप्रभृतीनि उपस्कृतानि-नियुक्तानि यत्र स तथा, निष्ठान्तस्य परनिपातः सुखादिदर्शनात्, सुसंस्कृतो-यथोक्तमात्राग्निपरितापादिना परमसंस्कारमुपनीतः वर्णगन्धरसस्पर्शा सामर्थ्यादतिशायिनस्तैर्युक्ता बलवीर्यहेतवश्च परिणामा आयतिकाले यस्य स तथा, अतिशायिभिर्वर्णादिभिर्बलवीर्यहेतुपरिणामैश्चोपेता इति भावः, तत्र बलं-शारीरं वीर्यं-आन्तरोत्साहः, तथा इन्द्रियाणां चक्षुरादीनां बलं-स्वस्वविषयग्रहणपाटवं तस्य पुष्टि-अतिशायी पोषस्तां वर्द्धयति, नन्द्यादित्वादनः, तथा क्षुत्पिपासामथन इति व्यक्तं, तथा प्रधानः कथितो-निष्पक्वो गुडस्तादृशं वा खण्डं तादृशी वा मत्स्यण्डी-खण्डशर्करा तादृशं वा घृतं तान्युपनीतानि-योजितानि यस्मिन् स तथा, निष्ठान्तस्य परनिपातः सुखादिदर्शनात्, तथा श्लक्ष्णा-सूक्ष्मत्रिर्वस्त्रगालितत्वेन समिता-गोधूमं चूर्णं तद्‌गर्भः-तन्मूलदलनिष्पन्न इति भावः, परमेष्टकं-अत्यन्तवल्लभं तदुपयोगि द्रव्यं तेन संयुक्तः, एतद्व्यक्ति सम्प्रदायगम्या, तथैव ते चित्ररसाअपि द्रुमगणाः अनेकबहुविधविधविस्रसापरिणतेन भोजनविधिनोपपेता इत्यादि प्राग्वत् ।

अथाष्टमकल्पवृक्षस्वरूपमाह-'तीसे णं समाए तत्थ २ बहवे मणिअंगा नामं दुमगणा पन्नत्ता समणाउसो !, जहा से हारद्धहारवेढणयमउडकुंडलवामुत्तगहेमजालमणिजालकण-गजालसुत्तगउचिअकडगखुड्डयएकावलिकंठसुत्तगमगरिअउरत्थगेवि असोणिसुत्तगचूलामणि-कणगतिलगफुल्लगसिद्धत्थयकण्णवासिलसिसूरउसहचक्कतलभंगयतुडिअहत्थमालगहरिसयकेऊ रलयपालंब अंगुलिअगव लक्खदीणारमालि आकंचिमेहलकलाव पयरगपारिहेरगपाय जाल-घंटिआखिंखिणि रयणोरुजालखुड्डिअवर नेउरचलणमालि- आकणगणिगलमालिआकंचण-मणिरयणभत्तिचित्ता तहेव ते मणिअंगावि दुमगणा अनेगजावभूसणविहीए उववेआ जाव चिट्ठंती'ति तस्यां समायामित्यादि प्राग्वत्, नवरं मणिमयानि आभरणान्याधेये आधारोप- चारान्मणीनि तान्येवाङ्गानि-अवयवा येषां ते मण्यङ्गाः भूषणसम्पादका इत्यर्थः, यथा ते हारः-अष्टादशसरिकः अर्द्धहारो-नवसरिकः वेष्टनकः-कर्णाभरणविशेषः मुकुटकुण्डले व्यक्ते वामोत्तकः हेमजालं-सच्छिद्रसुवर्णालङ्कारविशेषः एवं मणिजालकनकजालके अपि, परं कनकजालकस्य हेमजालतो भेदो रूढिगम्यः, सूत्रकं-वैकक्षककृतं सुवर्णसूत्रं उचितकटकानि-योग्यवलयानि क्षुद्रकं-अङ्गुलीयकविशेषः एकावली च-विचित्रमणिककृता एकसरिका च कण्ठसूत्रं-प्रसिद्धं मकरिका-मकराकार आभरणविशेषः उरस्थं हृदयाभरणविशेषः ग्रैवेयं-ग्रीवाभरणविशेषः ।

– अत्र सामान्यविवक्षया ग्रैवेयमिति जीवाभिगमवृत्यनुसारेणोक्तं, अन्यथा हेमव्याकरणादाव- लङ्कारविवक्षायां ग्रैवेयकमिति स्यात्, एवमन्यत्रापि तत्तद्‌वृत्यनुसारेण ज्ञेयं, श्रोणिसूत्रकं-कटिसूत्रकं चूडामणिर्नाम सकलनृपरत्नसारो नरामरेन्द्रमौलिस्थायी अमङ्गला-मयप्रमुखदोषहृत् परममङ्गलभूत आभरणविशेषः कनकतिलकं-ललाटाभरणं पुष्पकंपुष्पाकृति ललाटाभरणं सिद्धार्थकं-सर्षपप्रमाणस्वर्णकणरचितसुवर्णमणिकमयं कर्णवाली-कर्णो-परितनविभागभूषणविशेषः शशिसूर्यवृषभाः स्वर्णमयचन्द्रकादिरूपा आभरणविशेषाः चक्रकं-चक्राकारः शिरोभूषणविशेषः तलभङ्गकं त्रुटिकानि च बाह्वाभरणा, अनयोर्विशेषस्तु आकारकृतः,

हस्तमालकं हर्षकं केयूरं-अङ्गदं, पूर्वस्माद्याकृतिकृतो विशेषः वलयं-कङ्कणं प्रालम्बं-झुम्बनकं अङ्गुलीयकं-मुद्रिका वलक्षं-रूढिगम्यं दीनारमालिका चन्द्रमालिका सूर्यमालिका-दीनाराद्याकृतिमणिकमालाः काञ्चीमेखला- कलापाः-स्त्रकट्याभरणविशेषाः, विशेषश्चैषां रूढिगम्यः, प्रतरकं-वृत्तप्रतल आभरणविशेषः पारिहार्यं-वलयविशेषः पादेषु जालाकृतयो घण्टिका-घर्घरिकाः किङ्किण्यः-क्षुद्रघण्टिकाः रत्नोरुजालं-रत्नमयं जङ्घायाः प्रलम्बमानं सङ्कलकं सम्भाव्यते क्षुद्रिकावराणि नूपुराणि व्यक्तानि चरणमालिका-संस्थानविशेषकृतं पादाभरणं लोके पागडां इति प्रसिद्धं, कनकनिगडः-निगडाकारः पादाभरणविशेषः सौवर्ण सम्भाव्यते, (लोके) च कडलां इति प्रसिद्धानि, एतेषां मालिका-श्रेणिः, अत्र च व्याख्यातव्यातिरिक्तं भूषणस्वरूपं लोकतो ज्ञेयं, इत्यादिका भूषणविधयो-मण्डनप्रकाराः बहुप्रकारा अवान्तरभेदात्, ते च किंविशिष्टा इत्याह-काञ्चनमणिरत्नभक्तिचित्रा इति व्यक्तं, तथैव च-तथा प्रकारेण भूषणविधिनोपपेतास्ते मण्यङ्गा इति तात्पर्यार्थ, शेषं प्राग्वत्।

अथ नवमकल्पवृक्षस्वरूपमाह-'तीसे णं समाए तत्थ २ बहवे गेहागारा णामं दुमगणा पन्नत्ता समणाउसो!, जहा से पागारट्टालयचरिअदारगोपुरपासायागसतलमंडवएगसालगविसालगतिसालगचउसालगगब्भघमोहणघरवलभीघरचित्तमालयघरभ त्तिघरवट्टतंसचउरंसणंदिआवत्तसंठिआ पंडुरतलमुंडमालहम्मियं अहवणं धवलहरअद्धमागहविब्भमसेलद्धसेलसंठिअकूडागारसुविहिअकोट्ठगअनेगघरसरणलेणआवणा विडंगजालविंदणिज्जूहअपवरगचंदसालिआरूवविभत्तिकलिआ भवणविही बहुविकप्पा तहेव ते गेहागाराविं दुमगणा अनेगबहुविहविविहवीससापरिणयाए सुहारुहणसुहोत्ताराए सुहनिक्खमणपवेसाए दद्दरसोपाणपंतिकलिआए पइरिक्कसुहविहाराए मणोणुकूलाए भवणविहीए उववेआ जाव चिट्ठंती'ति।

तस्यां समायामित्यादि प्राग्वत्, गेहाकारा नाम द्रुमगणाः प्रज्ञप्ताः, यथा ते प्राकारो-वप्रः अट्टालकः-प्राकारोपरिवर्त्याश्रयविशेषः चरिका-नगरप्राकारान्तरालेऽष्टहस्तप्रमाणो मार्ग द्वारं व्यक्तं, गोपुरं-पुरद्वारं प्रासादो-नरेन्द्राश्रयः आकाशतलं-कटाद्यच्छन्नकुट्टिमं मण्डपः-छायाद्यर्थं पटादिमय आश्रयविशेषः एकशालकद्विशालकत्रिशालकचतुःशालकादीनि भवनानि, गर्भगृहं-सर्वतोवर्त्तिगृहान्तरं अभ्यन्तरगृहमित्यर्थः, मोहनगृहं-सुरतगृहं, वलभी-छदिराधारस्तत्प्रधानं गृहं, चित्रशालगृहं-चित्रकर्मवद् गृहं मालकगृहं-द्वितीयभूमिकाद्युपरिवर्ति गृहं भक्ति-विच्छित्तिस्तत्प्रधानं गृहं वृत्तं-वर्तुलाकारं त्र्यस्रं-त्रिकोणं चतुरस्रं-चतुष्कोणं नन्द्यावर्त्तः-प्रासादविशेषस्तद्वत्संस्थितानि नन्द्यावर्त्ताकाराणि गृहाणि पश्चात् द्वन्द्वः,

पाण्डुरतलं-सुधामयतलं मुण्डमालहर्म्य-उपर्यनाच्छादितशिखरादिभागरहितं हर्म्यम्। अथवा णमिति प्राग्वत्, धवलगृहं-सौधं अर्द्धमागधविभ्रमाणि-गृहविशेषाः शैलस्थितानि-पर्वताकाराणि गृहाणि अर्द्धशैलसंस्थितानि तथैव कूटाकारेण-शिखराकृत्याऽऽढ्यानि सुविधिकोष्ठकानि-सुसूत्रणापूर्वकरचितोपरितनभागविशेषा अनेकानि गृहाणि सामान्यतः शरणानि-तृणमयानि लयनानि-पर्वतनिकुट्टितगृहाणि आपणा-हट्टाः इत्यादिका भवनविधयो-वास्तुप्रकारा बहुविकल्पा इत्यन्वयः, विटङ्कः-कपोतपाली जालवृन्दः-गवाक्षसमूहः निर्यूहो-द्वारोपरितनपार्श्वविनिर्गतदारु अपवरकः प्रतीतः चन्द्रशालिका-शिरोगृहं, एवंरूपाभिर्विभक्तिभि कलिताः, तथैव भवनविधि-

नोपपेतास्ते गेहाकारा अपि द्रुमगणास्तिष्ठन्तीति सम्बन्धः, सुखेनारोहणं-ऊर्ध्वगमनं सुखेनावतारः-अधस्तादवतरणं यस्य स तथा सुखेन निष्क्रमणं-निर्गमः प्रवेशश्च यत्र स तथा, दर्दरसोपानपङ्क्तिकलितेन, अत्र हेतौ तृतीया, तथा प्रतिरिक्ते-एकान्ते सुखो विहारः अवस्थानशयनादिरूपो यत्र स तथा मनोऽनुकूलेनेति व्यक्तं, शेषं प्राग्वत् ।

अथ दशमकल्पवृक्षस्वरूपमाह-'तीसे णं समाए तत्थ तत्थ बहवे अनिगणा णामं दुमगणा पन्नत्ता समणाउसो !, जहा से आईणगखोमतणुलकंबलदुगूलकोसेज्जकालमिगपट्टअंसुअचीणअंसुअपट्टा आभरणचित्तसण्हगकल्लाणगभिंगनीलकज्जलबहुवण्णरत्तपीअसुक्किलसक्खयमिगलोमहेमप्परक्खवरुत्तरसिंधुउसभदामिलवंगकलिंगनलिणतंतुमयभत्तिचित्ता वत्थविही बहुप्पगारा पवरपट्टणुग्गया वण्णरागकलिआ तहेव ते अनिगणावि दुमगणा अनेगबहुविहविविहवीससापरिणयाए वत्थविहीए उववेआ कुसविकुसजाव चिट्ठंती'ति वाक्ययोजना पूर्ववत्, नामार्थस्तु विचित्रवस्त्रदायित्वात् न विद्यन्ते नग्नास्तत्कालीनजना येभ्यस्तेऽनग्नाः, यच्च प्राक्तनेषु बहुषु जम्बूद्वीपप्रज्ञप्तिसूत्रादर्शेषु

आयाणा इति दृश्यते स लिपिप्रमादः सम्भाव्यते, प्रस्तुतसूत्रालापकविस्तारोपदर्शके जीवाभिगमे एतादृशस्य पाठस्यादर्शनात्, आजिनकं-चर्ममयं वस्त्र क्षौमं-सामान्यतः कार्पासिकं अतसीमयमित्यन्ये, तनुः-शरीरं सुखस्पर्शतया लाति-अनुगृह्णातीति तनुलं-तनुसुखादि कम्बलः प्रतीतः तणुअकम्बल इति पाठे तु तन्तुकः-सूक्ष्मोर्णाकम्बलः दुकूलं-गौडविषयविशिष्टं कार्पासिकं अथवा दुकूलो-वृक्षविशेषस्तस्य वल्कं गृहीत्वा उदूखले जलेन सह कुट्टयित्वा बुसीकृत्य च व्यूयते यत्तद् दुकूलं कौशेयं-त्रसरितन्तुनिष्पन्नं कालमृगपट्ट-कालमृगचर्म अंशुकचीनांशुकानि नानादेशेषु प्रसिद्धानि दुकूलविशेषरूपाणि ।

पूर्वोक्तस्यैव वल्कस्य यान्यभ्यन्तरहीरैर्निष्पाद्यन्ते सूक्ष्मान्तराणि भवन्ति तानि चीनांशुकानि वा पट्टानि-पट्टसूत्रनिष्पन्नानि आभरणैश्चित्राणि विचित्राणि आभरणविचित्राणि श्लक्ष्णानि-सूक्ष्मतन्तुनिष्पन्नानि कल्याणकानि-परमवस्त्रलक्षणोपेतानि भृङ्गः-कीटविशेषः स इव नीलं तथा कज्जलवर्णं बहुवर्णं-विचित्रवर्णं रक्तं पीतं शुक्लं संस्कृतं-परिकर्मितं यन्मृगलोम हेम च तदात्मकं कनकरसच्छुरितत्वादिधर्मयोगात् रल्लकः-कम्बलविशेषो जीणादि पश्चात् द्वन्द्वः, अपरः-पश्चिमदेशः उत्तरः-उत्तरदेशः सिन्धुः-देशविशेषः उसभत्ति-सम्प्रदायगम्यं द्रविडवंगकलिङ्गा देशविशेषाः एतेषां सम्बन्धिनस्तत्तद्देशोत्पन्नत्वेन ये ते तथा नलिनतन्तवः-सूक्ष्मतन्तवस्तन्मय्यो या भक्तयो-विच्छित्तयो विशिष्टरचनास्ताभि चित्रा इत्यादिका वस्त्रविधयो बहुप्रकारा भवेयुर्वरपत्तनंसत्प्रसिद्धं पत्तनं तस्मादुद्गता-विनिर्गता विविधैर्वर्णै-विविधै रागैर्मञ्जिष्ठारागादिभिः कलितास्तथैव तेऽनग्नका अपि द्रुमगणा अनेकबहुविधविविधविस्सापरिणतेन वस्त्रविधिनोपपेता इत्यादि ।

अत्र द्याधिकारे जीवाभिगमसूत्रादर्शे क्वचित् २ किञ्चिदधिकपदमपि दृश्यते तत्तु वृत्तावव्याख्यातं स्वयं पर्यालोच्यमानमपि च नार्थप्रदमिति न लिखितं, तेन तत् सम्प्रदायादवगन्तव्यं, तमन्तरेण सम्यक् पाठशुद्धेरपि कर्तुमशक्यत्वादिति ।

उक्तं सुषमसुषमायां कल्पद्रुमस्वरूपं, अथ तत्कालभाविमनुजस्वरूपं पृच्छन्नाह-

*मू. (३४) तीसे णं भंते ! समाए भरहे वासे मणुआणं केरिसए आयारभावपडोयारे प०?, गो० ! ते णं मणुआ सुपइट्ठिअकुम्मचारुचलणा जाव लक्खणवंजणगुणोववेआ सुजाय*

सुविभत्तसंगयंगा पासादीआ जाव पडिरूवा । तीसे णं भंते ! समाए भरहे वासे मणुईणं केरिसए आगारभाव पडोआरे प० ? गो० ! ताओ णं मणुईओ सुजायसव्वंगसुंदरीओ पहाणमहिलागुणेहिं जुत्ता अइकंतविसप्पमाणमउया सुकुमालकुम्मसंठिअविसिट्ठचलणा उज्जुमउअपीवरसुसाहयंगुलीओ अब्भुन्नयरइअतलिणतंबसुइनिद्धनक्खा रोमरहिअवट्टलट्ठसंठिअअजहण्णपसत्थ-लक्खणअकोप्पजंघजुअलाओ सुणिम्मिअसुगूढसुजण्णुमंडलसुबद्धसंधीओ कयलीखंभाइरेकसंठिअ-निव्वणसुकुमालमउअमंसलअविरलसमसंहिअसुजायवट्टपीवरनिरंतरोरू अट्ठावयवीइयपट्ठ-संठिअपसत्थविच्छिन्नपिहुलसोणी वयणायामप्पमाणदुगुणिअविसालमंसलसुबद्धजहणवर वज्जविराइअपसत्थलक्खणनिरोदरतिवलिअवलिअतणुणमज्झिमाओ उज्जुअसमसहिअज-च्चतनुकसिणनिद्धआइज्जलडहसुजायसुविभत्तकंतसोभंतरुइलरमणिज्जरोमराई ।

गंगावत्तपयाहिणावत्ततरंगभंगुररविकिरणतरुणबोहिअआकोसायंतपउमगंभीरविअडणाभा अणुब्भडपसत्थपीणकुच्छीओ सण्णयपासाओ संगयपासाओ सुजायपासाओ मिअमाइअपीण-रइअपासाओ अकरंडुअकणगरुअगनिम्मलसुजायनिरुवहयगायलट्ठीओ कंचणकलसप्पमाण-समसहिअलट्ठचुचुआमेलगजमलजुअलवट्टिअअब्भुण्णयपीणरइअपीवरपओहराओ भुअंगअनुपुव्वतणुअगोपुच्छवट्टसंहिअणमिअआइज्जललिअबाहा तंबणहाओ मंसलग्गहत्थाओ पीवरकोमलवरंगुलीआओ निद्धपाणिरेहा रविससिसंखचक्कसोत्थियसुविभत्तसुविरइअपाणिलेहाओ ।

पीणुण्णयकरकक्खवत्थिप्पएसा पडिपुण्णगलकपोला चउरंगुलसुप्पमाणकंबुवरसरिसगी-वाओ मंसलसंठिअपसत्थहणुगाओ दाडिमपुप्फप्पगासपीवरपलंबकुंचिअवराधराओ सुंदरुत्तरोट्ठाओ दहिदगरयचंदकुंदवासंतिमउलधवलअच्छिद्दविमलदसणाओ रत्तुप्पलपत्तमउ-असुकुमालतालुजीहाओ कणवीरमउलकुडिलअब्भुग्गयउज्जुतुंगणासाओ सारयणवकमलकुमुअकु-वलयविमलदलणिअरसरिसलक्खणपसत्थअजिम्हकंतणयणा पत्तलधवलायतआतंबलोअणाओ आणामिअचावरुइलकिण्हब्भराइसंगयसुजायभुमगाओ अल्लीणपमाणजुत्तसवणा सुसवणाओ पीणमट्ठगंडलेहाओ चउरंसपसत्थसमणिडालाओ कोमुईरयणिअरविमलपडिपुण्णसोमवयणा ।

छत्तुन्नयउतमंगाओ अकविलसुसिणिद्धसुगंधदीहसिरयाओ छत्त १ ज्झय २ जूअ ३ थूभ ४ दामणि ५ कमंडलु ६ कलस ७ वावि ८ सोत्थिअ ९ पडाग १० जव ११ मच्छ १२ कुम्म १३ रहवर १४ मगरज्झय १५ अंक १६ थाल १७ अंकुस १८ अट्ठावय १९ सुपइट्ठग २० मयूर २१ सिरिअभिसेअ २२ तोरण २३ मेइणि २४ उदहि २५ वरभवण २६ गिरि २७ वरआयंस २८ सलीलगय २९ उसभ ३० सीह ३१ चामर ३२ उत्तमपसत्थबत्तीसलक्खणधरीओ हंससरिसगईओ कोइलमहुरगिरसुस्सराओ कंता सव्वस्स अणुमयाओ ववगयवलिपलिअवंगदु-व्वण्णवाहिदोहग्गसोगमुक्का उच्चत्तेण य नराण थोवूणमुस्सिआओ सभावसिंगारचारुवेसा संगयगयहसियभणियअचिट्ठिअविलाससंलावणिउणजुत्तोवयारकुसला ।

सुंदरथणजहनवयणकरचलणणयणलावण्णरूवजोव्वणविलासकलिआ नंदनवन-विवरचारिणीउव्व अच्छराओ भरहवासमाणुसच्छराओ अच्छेरगपेच्छणिज्जाओ पासाईआओ जाव पडिरूवाओ, ते णं मणुआ ओहस्सरा हंसस्सरा कोंचस्सरा नंदिस्सरा नंदिघोसा सीहस्सरा सीहघोसा सुसरा सूसरनिग्घोसा छायायवोओविअंगमंगा वज्जरिसहनारायसंघयणा समचउरंसंठाणसंठिआ

*छविणिरातंका अनुलोमवाउवेगा कंकग्गहणी कवोयपरिणामा सउनिपोसपिट्ठंतरोरुपरिणया छद्धणुसहस्समूसिआ ! तेसि णं मणुआणं बे छप्पण्णा पिट्ठकरंडकसया पन्नत्ता समणाउसो !, पउमुप्पलगन्धसरिसणीससुरभिवयणा, ते णं मणुआ पगईउवसंता पगईपयणुकोहमाणमायालोभा मिउमद्दवसंपन्ना अल्लीणा भद्दगा विनीआ अप्पिच्छा असण्णिहिसंचया विडिमंतरपरिवसणा जहिच्छिअकामकामिणो ।*

वृ 'तीसे णं भंते !' इत्यादि, तस्यां समायां भदन्त ! भरतवर्षे मनुजानां प्रक्रमाद् युग्मिनां कीदृशक आकारभावप्रत्यवतारः प्रज्ञप्तः ?, भगवानाह-गौतम ! ते मनुजाः सुप्रतिष्ठिताः-सप्रतिष्ठानवतन् सङ्गतनिवेशा इत्यर्थः, कूर्मवत्कच्छपवदुन्नतत्वेन चारवश्चरणा येषां ते तथा, ननु 'मानवा मौलितो वर्ण्या, देवाश्चरणतः पुन' रिति कविसमयान्मनुजजन्मिनां युग्मिनां पादादारभ्य वर्णनं कथं युक्तिमदिति, उच्यते, यत्रैष्यपुण्यप्रदुतिकत्वेन ते देवत्वेनेवाभिमता इति न काचिद-नुपपत्तिरिति, अत्र यावच्छब्दसङ्ग्राह्यं मुद्रसिरया इत्यन्तं, जीवाभिगमादिप्रसिद्धं सूत्रं चैतत् ।

'रत्तुप्पलपत्तमउ असुकुमालकोमलतला नगनगरमगरसागरचक्कंकहरंकलक्खणंकि-अचलणा अणुपुव्वसुसाहयंगुलीया उण्णयतणुतंबणिद्धणक्खा संठिअसुसिलिट्ठगूढगुप्फा एणीकुरुविंदावत्तवट्टाणुपुव्वजंघा समुग्गनिमग्गगूढजाणू गयससणसुजायसण्णिभोरू वरवारणमत्ततुल्लविक्कमविलासिअगई पमुइअवरतुरगसीहवरवट्टिअकडी वरतुरगसुजायगुज्झदेसा आइण्णहउव्व निरुवलेवा साहयसोणंदमुसलदप्पणणिगरिअवरकणगच्छरुसरिसवरवइर-वलिअमज्झा झसविहगसुजायपीणकुच्छी झसोअरा सुइकरणा गंगावत्तपयाहिणावत्ततरंगभंगुर-रविकिरणरुणबोहिअआकोसायंतपउमगंभीरविअडणाभा उज्जुअसमसंहिअजच्चतणुकसिणणि-द्धआदेज्जलडहसूमालमउअरमणिज्जरोमराई संणयपासा संगयपासा सुंदरपासा सुजायपासा मिअमाइअपीणरइअपासा अकरंडुअकणगरुअगनिम्मलसुजायनिरुवहयदेहधारी पसत्थबत्तीसल-क्खणधरा कणगसिलायलुज्जलपसत्थसमतलउवइअविच्छिण्णिपिहुलवच्छा सिरिवच्छंकिअवच्छा जुअसण्णिभपीणरइ अपीवरपउट्ठसंठि असुसिलिट्ठविसिट्ठघणथिर- सुबद्धसंधिपुरवर-वरफलिहवट्टिअभुजा भुजगीसरविउलभोग- आयाणफलिहउच्छूढदीहबाहूरत्ततलोवइअमउ-अमंसलसुजायपसत्थलक्खणअच्छिद्दजालपाणी पीवरकोमलवरंगुलीआ आयंबतलिणसुइरुइल-निद्धनक्खा ।

चंदपाणिलेहा सूरपाणिलेहा संखपाणिलेहा चक्कपाणिलेहा दिसासोवत्थियपाणिलेहा चंदसूरसंखचक्कदिसासोवत्थिअपाणिलेहा अनेगवरलक्खणुत्तमपसत्थसुइरअपाणिलेहा वरमहिसवराहसीहसद्दुलउसहणगवरपडिपुण्णविपुलखंधा चउरंगुलसुप्पमाणकंबुवरसरिसगीवा मंसलसंठिअपसत्थसद्दूलविपुलहणुआ अवट्ठिअसुविभत्तचित्तमंसू ओअविअसिलप्पवालबिंब-फलसण्णिभाधरोट्ठा पंडुरससिसगलविमलणिम्मलसंखगोखीरफेणकुंददगरयमुणालि-आधवलदंतसेढी अखंडदंता अफुडिअदंता सुजायदंता अविरलदंता एगदंतसेढीव्व अणेगदंता हुअवहणिद्धंतधोअतत्ततवणिज्जरत्ततलतालुजीहा गरुलायतउज्जुतुंगणासा अवदालिअपोंडरी-कणयणा कोआसियधवलपत्तलच्छा आणामिअचावरुइलकिण्हब्भराइसंठिअसंगयआयाय-सुजायतणुकसिणनिद्धभुमआ अल्लीणपमाणजुत्तसवणा सुस्सवणा पीणमंसलकवोलदेसभागा

निव्वणसमलट्ठमट्ठचंदद्धसमणिडाला उडुवइपडिपुण्णसोमवयणा घननिचिअसुबद्धलक्खणुण्णयकूडागारणिभपिंडिअग्गसिरा छत्तागारुत्तमंगदेसा दाडिमपुप्फपगासतवनिज्जसरिसनिम्मलसुजायकेसंतभूमी सामलिबोंडघननिचिअच्छोडिअमिउविसयपसत्थसुहुमलक्खणसुगंधसुंदरभुअमोअगभिंगणीलकज्जलपहट्ठभमरगणणिद्धनिकुरंबनिचिअकुंचिअपयाहिणावत्तमुद्धसिरया' इति, अत्र व्याख्या-

रक्तंलोहितमुत्पलपत्रवन्मृदुकं-मार्दवगुणोपेतमकर्कशमित्यर्थः तच्चासुकुमारमपि सम्भवति यथा घृष्टमृष्टपाषाणप्रतिमा तत आह-सुकुमालेभ्योऽपि-शिरीषकुसुमादिभ्योऽपि कोमलं-सुकुमालं तलं-पादतलं येषां ते तथा, नगो-गिरि नगरमकरसागरचक्राणि स्पष्टानि अङ्कधरः-चन्द्रः अङ्कः-तस्यैव लाञ्छनं यल्लोके मृगादिव्यपदेश लभते, एवंरूपैर्लक्षणैरुक्तवस्त्वाकारपरिणताभी रेखाभिरङ्किताश्चलना येषां ते तथा, पूर्वस्या अनु लघव इति गम्यते अनुपूर्वा, किमुक्तं भवति ?-पूर्वस्याः पूर्वस्याः उत्तरोत्तरा नखं नखेन हीनाः 'नहं नहेण हीणाओ' इति सामुद्रिकशास्त्रवचनात्, अथवा आनुपूर्व्येण-परिपाट्या वर्द्धमाना हीयमाना वा इति गम्यते, सुसंहता-अविरला अङ्गुल्यः-पादाग्रावयवा येषां ते तथा, अत्रानुपूर्वेणेति विशेषणग्रहणात् पदाङ्गुलीग्रहणं, तासामेव नखं नखेन हीनत्वात्, उन्नता-मध्ये तुङ्गास्तनवः-प्रतलास्ताम्रा-रक्ताः स्निग्धाः-स्निग्धकान्तिमन्तो नखाः पादगता इति सामर्थ्यलभ्यं तद्वर्णनाधिकारात् येषां ते तथा, नक्खेत्यत्र द्वित्वं सेवादित्वात्, संस्थितौ-सम्यक् स्वप्रमाणतया स्थितौ सुश्लिष्टौ-सुघनौ सुस्थिरावित्यर्थ गूढौ-गुप्तौ मांसलत्वादनुपलक्ष्यौ गुल्फौ-घुटिकौ येषां ते तथा, एणी-हरिणी तस्या इह जङ्घा ग्राह्या, कुरुविन्दः-तृणविशेषः वर्त्त चसूत्रवलनकं एतानीव वृत्ते-वर्त्तुले आनुपूर्व्येण-क्रमेण ऊर्ध्वं स्थूले स्थूलतरे इति शेषः जङ्घे येषां ते तथा।

औपपातिकवृत्तौ तु अन्ये त्वाहुः एण्यः-स्नायवः कुरुविन्दः-कुटिलकाभिधानो रोगविशेषस्ताभिस्त्यक्ते इत्यपि व्याख्यातमस्ति, वृत्तेत्यादि तथैव, समुद्गः-समुद्गकाख्यभाजनविशेषस्तस्य तत्पिधानस्य च सन्धिस्तद्वन्निमग्ने गूढे-मांसलत्वादनुपलक्ष्ये जानुनी येषां ते तथा, क्वचित्समुग्ग णिमग्ग गूढजाणू इति पाठस्तत्र समुद्गकस्येव-पक्षिविशेषस्येव निसर्गतो गूढे-स्वभावतो मांसलत्वादनुन्नते न तु शोफादिविकारतः शेषं तथैव, गजस्य-हस्तिनः श्वसनः-शुण्डादण्डः सुजातः-सुनिष्पन्नस्तस्य सन्निभा ऊरुर्येषां ते तथा, सुजातशब्दस्य विशेषणस्य परनिपातः प्राकृतत्वात्, मत्तो वरः-प्रधानो भद्रजातीयत्वाद्वारणो-हस्ती तस्य विक्रमः-चंक्रमणं तद्वद्विलासिता-विलासः सञ्जातोऽस्या इति तारकादित्वादितप्रत्ययः विलासवती गति-गमनं येषां ते तथा, अत्रापि मत्तशब्दस्य विशेष्यात् परनिपातः प्राकृतत्वात्, प्रमुदितो रोगाद्यभावेनातिपुष्टो यौवनप्राप्त इति गम्यते एवंविधो यो वरतुरगः सिंहवरश्च तद्वद्वर्त्तिता-वृत्ता कटीर्येषां ते तथा, वरतुरगस्येव सुजातः सुगुप्तत्वेन सुनिष्पन्नो गुह्यदेशो येषां ते तथा।

— आकीर्णहय इव-जात्याश्व इव निरुपलेपाः-निरुपलेपशरीराः, जात्याश्वो हि मूत्राद्यनुपलिप्तगात्रो भवतीति, संहतसौनन्दं नाम ऊर्ध्वीकृतमुलूखलाकृतिकाष्ठं तच्च मध्ये तनु उभयोः पार्श्वयोर्बृहत् अथवा संहतं-सङ्क्षिप्तमध्यं सौनन्दं-रामायुधं मुसलविशेष एव मुसलं सामान्यतः दर्पणशब्देनेहावयवे समुदायोपचाराद्दर्पणगण्डो गृह्यते तथा निगरितं-सारीकृतं वरकनकं तस्य

त्सरु-खड्गादिमुष्टिस्तैः सदृशं तेषामिवेत्यर्थः, तथा वरवज्रस्येव-सौधर्मेन्द्रायुधस्येव क्षामो वलितो-वलयः संजाता अस्येति वलितो-वलित्रयोपेतो मध्यो-मध्यभागो येषां ते तथा, झषस्येव अनन्तरोक्तस्येवोदरं येषां ते तथा, शुचीनि-पवित्राणि निरुलेपानीति भावः, करणानि-चक्षुरादीनीन्द्रियाणि येषां ते तथा। अत्र च 'पम्हवियडणाभा' इति पदं क्वचिद्वाचनान्तरे प्रसिद्धमपि न व्याख्यातं, गङ्गाया आवर्त्तकः-पयसां भ्रमः स इव प्रदक्षिणावर्त्ता न तु वामावर्त्ता तरङ्गा इव तरङ्गाः तिस्रः वलयस्ताभिर्भङ्गुराः भुग्ना रविकिरणैः तरुणैः-अभिनवैर्बोधितं-उन्निद्रीकृतं सत् आकोशायमानं विकचीभवदित्यर्थ पद्मं तद्वद् गम्भीरा विकटा-विशाला नाभिर्येषां ते तथा, विशेषणस्य परनिपातः प्राग्वत्, अस्माच्च निर्देशादनाम्न्यपि समासान्तः, ऋजुका-अवक्रा समा न कापि दन्तुरा संहिता-सन्ततिरूपेण स्थिता न त्वपान्तरालव्यवच्छिन्ना सुजाता-सुजन्मा न तु कालादिवैगुण्यतो दुर्जन्मा, अत एव जात्या-प्रधाना तन्वी न तु स्थूरा कृष्णा न तु मर्कटवर्णा स्निग्धा-चिक्कणा आदेया-दर्शनपथमुपगता सती पुनः पुनराकांक्षणीया।

– उक्तमेव विशेषणद्वारेण समर्थयते-लडहा-सलवणिमा अत आदेया सुकुमारमद्वी-अतिकोमला रमणीया-रम्या रोमराजिर्येषां ते तथा, सम्यक् अधोऽधः क्रमेण नते पार्श्वे येषां ते तथा, सङ्गते-देहप्रमाणोचिते पार्श्वे येषां ते तथा, अत एव सुन्दरपार्श्वाः सुजातपार्श्वा इति पदद्वयं व्यक्तं, तथा मिते-परिमिते मात्रिके-मात्रोपेते एकार्थपदद्वययोगादतीव मात्रान्विते नोचितप्रमाणान्न्यूनाधिके पीने-उपचिते रतिदे पार्श्वे येषां ते तथा, अविद्यमानं-मांसलत्वेनानुपलक्ष्यमाणं करण्डकं-पृष्ठवंशास्थिकं यस्य देहस्य सोऽकरण्डुकः, अत्राल्पत्वेनाभावविवक्षणादेवं निर्देशः, अनुदरा कन्येत्यादिवत्, अथवा अकरण्डुकमिवेति व्याख्येयं, कनकस्येव रुचको-रुचिर्यस्य स निर्मलः-स्वाभाविकागन्तुकमलरहितः सुजातो-बीजाधानादारभ्य जन्मदोषरहितः निरुपद्रवो-ज्वरादिदंशाद्युपद्रवरहितः एवंविधो यो देहस्तं धारयन्तीत्येवंशीलाः।

–तथा कनकशिलातलवदुज्ज्वलं प्रशस्तं समतलं-अविषमं उपचितं-मांसलं विस्तीर्णपृथ्वा-घोऽ-पेक्षया पृथुलं दक्षिणोत्तरतो वक्षः-उरोयेषां ते तथा, श्रीवच्छो-लाञ्छनविशेषस्तेनाङ्कितं वक्षो येषां ते तथा, युगसन्निभौ-वृत्तत्वेनायतत्वेन च यूपतुल्यौ पीनौ-मांसलौ रतिदौ-पश्यतां सुभगौ पीवरप्रकोष्ठकौ-अकृशकलाचिकौ, तथा संस्थिताः-संस्थानविशेषवन्तः सुश्लिष्टाः-सुघनाः विशिष्टाः-प्रधानाः घना-निबिडाः स्थिरा-नातिश्लथाः सुबद्धाः-स्नायुभि सुष्ठु बद्धाः सन्धयः-अस्थिसन्धानानि ययोस्तौ तथा, पुरवरपरिघवत्-महानगरार्गलावद्वर्त्तितौ-वर्त्तौ भुजौ येषां ते तथा, ततः पदद्वयद्वयमीलनेन कर्मधारयः, पुनर्बाहुमेवायामतो विशिनष्टि-भुजगेश्वरो-भुजगराजस्तस्य विपुलो यो भोगः-शरीरं तथा आदीयतेद्वारस्थगनार्थं गृह्यत इत्यादनः स चासौ परिघः-अर्गला।

'उच्छूढ' त्ति स्वस्थानादवक्षिप्तो निष्काशितो द्वारपृष्ठभागे दत्त इत्यर्थः, विशेषणव्यस्तता चार्षत्वात्, ततः पूर्वपदेन कर्मधारयः, तद्वद्दीर्घौ बाहू येषा ते तथा, न चात्रानन्तरोक्तविशेषणेन पीनरुक्त्यमाशङ्कनीयं, अत्रायामतादर्शनाय प्रस्तुतविशेषणस्य विशिष्य दर्शनात्, रक्ततलौ-अरुणावधोभागौ उपचितौ-उन्नतौ औपचिकौ वा-उचितौ अवपतितौ वा-क्रमेण हीयमानोपचयौ मृदुकौ मांसलौ सुजाताविति पदत्रयं प्राग्वत्, प्रशस्तलक्षणौ अच्छिद्रजालौ-अविरलाङ्गुलिसमुदायौ पाणी-हस्तौ येषां ते तथा पीवरकोमलवरंगुलीआ इति व्यक्तं, आताम्रा-ईषद्रक्तास्तलीनाः-प्रतलाः

शुचयः-पवित्रा रुचिरा-मनोज्ञाः स्निग्धा-अरूक्षा नखा येषां ते तथा, नखशब्दे द्विर्भावस्तु प्राग्वत्, चन्द्र इव चन्द्राकारा पाणिरेखा येषां ते तथा, 'दिसासोवत्थिअ'त्ति दिक्सौवस्तिको-दिक्प्रोक्षकः दिक्प्रधानः स्वस्तिको दक्षिणावर्त्तः स्वस्तिक इत्यन्ये स पाणौ रेखा येषां ते तथा, एतदेवानन्तरोक्तविशेषणपञ्चकं तत्प्रशस्ततप्रकर्षप्रतिपादनाय आह-

'चंदसूरे'ति गतार्थं, ननु इयन्त्येव लक्षणानि तेषां शरीरस्यानीत्याह-अनेकैः-प्रभूतैर्वरैः-प्रधानैर्लक्षणैरुत्तमाः-प्रशंसास्पदीभूताः शुचयः-पवित्राः रचिताः-स्वकर्मणा निष्पादिताः पाणिरेखा येषां ते तथा, वरमहिषः-स्वप्रमाणेनाहीनो विपुलो-विस्तीर्णस्कन्धः-अंसदेशो येषां ते तथा, चतुरङ्गुलं-स्वाङ्गापेक्षया चतुरङ्गुलप्रमितं सुष्ठु-शोभनं प्रमाणं यस्याः सा तथा, कम्बूवरसदृशी-उन्नततया वलित्रययोगेन च प्रधानशङ्खसन्निभा ग्रीवा येषां ते तथा, विवेकविलासे तु प्रतिमाया एकादशाङ्गस्थानसङ्ख्यायां 'चतुःपञ्च चतुर्वह्नि' इति श्लोके ग्रीवायास्त्र्यङ्गुलं मानमिति, मांसलं-पुष्टं तथा संस्थितं-संस्थानं तेन प्रशस्तं-सङ्कुचितं कमलाकारत्वात् शार्दूलस्येव-व्याघ्रस्येव विपुलं-विस्तीर्णं हनुकं येषां ते तथा, अवस्थितानि-अवर्धिष्णूनि सुविभक्तानि-परस्परं शोभमानविभागानि न तु पुनर्मरुजातामीरस्येव व्यादानमात्रलक्ष्यवदनविवरस्य कूर्चकेशपुञ्जा इव पुञ्जीभूतानि चित्राणि-अतिरम्यतयाऽद्भुतानि श्मश्रूणि-कूर्चकेशा येषां ते तथा, श्मश्रूणामभावे षण्ढभावप्रतिपत्ति हीयमानत्वे चैन्द्रलुप्तिकत्वावार्द्धकप्रतिपत्ति वर्द्धमानत्वे चसंस्कारकजनाभावाद्गहनभूतानि तानि स्युरित्यवस्थितत्वं, 'उअविअ'त्ति परिकर्मितं यच्छिलारूपं प्रवालं आयतविद्रुमखण्डमित्यर्थः।

न तु मणिकादिरूपं, तस्यैतदुपमानानुपपत्तेः बिम्बफलं-पक्वगोल्हाफलं तयोः सन्निभो रक्तयोन्नतमध्यतया अधरोष्ठः-अधस्तनो दन्तच्छदो येषां ते तथा, पाण्डुरं यच्छशिशकलं-चन्द्रमण्डलखण्डं अकलङ्कश्चन्द्रमण्डलभाग इत्यर्थ विमलानां मध्ये निर्मलश्च यः शङ्खो गोक्षीरफेनश्च प्रतीतः कुन्दं च-कुन्दकुसुमं दकरजश्च-वाताहतजलकणः मृणालिका च-पद्मिनीमूलं तद्वद्धवला दन्तश्रेणी-दशनपङ्क्तिर्येषां ते तथा, अखण्डदन्ताः-परिपूर्णदशनाः अस्फुटितदन्ताः-अजर्जरदन्ताः अत एव सुजातदन्ताः-जन्मदोषरहितदन्ता अविरलदन्ता-निरन्तरालदन्ताः, एकाकारा दन्तश्रेणिर्येषां ते तथा त इव परस्परानुपलक्ष्यमाणदन्तविभागत्वात् अनेके-द्वात्रिंशद्दन्ता येषां ते तथा, एवं नाम तेऽविरलदन्ता यथाऽनेकदन्ता अपि सन्तः एकाकारपङ्क्तयः इव लक्ष्यन्ते इति भावः, हुतवहेन-अग्निना निर्ध्मातं-निर्दग्धं सत् धौतं-शोधितमलं तप्तं-सतापं तपनीयं-सुवर्णविशेषस्तद्वद्रक्ततलं-लोहितरूपं तालु च-काकुदं जिह्वा च-रसना येषा ते तथा, गरुडस्येव-पक्षिराजस्येवायता-दीर्घा ऋज्वी-सरला तुङ्गा-उन्नता न तु मुद्गलजातीयस्येव चिपिटा नासा-नासिका येषां ते तथा।

अवदालितरविकरैर्विकासितं यत्पुण्डरीकं-श्वेतं पद्मं तद्वन्नयने येषां ते तथा, 'कोसाइअ'त्ति विकासेः कोआसविसट्टा' वित्यनेन कोआसिते-विकसिते धवले च क्वचिद्देशे पतरले-पक्ष्मवती अक्षिणी-नेत्रे येषां ते तथा, आनामितं-ईषन्नामितमारोपितमिति भावः यच्चापं-धनुस्तद्वद्रुचिरे-संस्थानविशेषभावतो रमणीये कृष्णाभ्रराजीव संस्थिते सङ्गते-यथोक्तप्रमाणोपपन्ने आयते-दीर्घे सुजाते-सुनिष्पन्ने तनू-तनुके श्लक्ष्णपरिमितवालपंक्यात्मकत्वात् कृष्णे-कालिमोपेते स्निग्धच्छाये भ्रुवौ येषां ते तथा, आलीनौ-मस्तकभित्तौ किञ्चिल्लग्नौ न तु टप्परौ प्रमाणयुक्तौ-स्वप्रमाणोपेतौ श्रवणौ-कर्णौ येषां ते तथा अत एव सुश्रवणा इति स्पष्टं, अथवा सुष्ठु श्रवणं-शब्दोपलम्भो येषां ते

तथा। पीनौ-पुष्टौ यतो मांसलौ-उपचितौ कपोललक्षणौ देशभागौ-मुखावयवौ येषां ते तथा, सूत्रे निलाडेति प्राकृतलक्षणवशात्, प्रतिपूर्ण-पौर्णमासीय उडुपति-चन्द्रः स इव सोमं-सश्रीकं वदनं येषां ते तथा, पदव्यत्यये प्राक्तन् एव हेतुः, घनवद् अयोधनवन्निचितं-निविडं सुबद्धं-सुष्ठु स्नायुनद्धं लक्षणोन्नतं-प्रशस्तलक्षणं कूटस्य-गिरिशिखरस्याकारेण निभं-सदृशं पिण्डिकेव-पाषाणपिण्डिकेव वर्तुलत्वेन पिण्डिकायमानमग्रशिरः-उष्णीषलक्षणं येषां ते तथा, छत्राकारः-छत्रसदृश उत्तमाङ्गरूपो देशो येषां ते तथा, दाडिमपुष्पस्य प्रकाशेन-अरुणिम्ना तथा तपनीयेन च सदृशी निर्मला सुजाता केशान्ते-वालसमीपे केशभूमि-केशोत्पत्तिस्थानभूता मस्तकत्वग् येषां ते तथा, तथा शाल्मल्या-वृक्षविशेषस्य यद् बोण्डं-फलं तद्वद् घना-निचिता अतिशयेन निविडाः, छोटिता अपि युग्मिनां परिज्ञानाभावेन केशपाशाकरणात् परं छोटिता अपि तथा स्वभावेन शाल्मलीबोडाकारवद् घना निचिता एवावतिष्ठन्ते तेनैतद्विशेषणोपादानं, तथा मृदवः-अखराः विशदा-निर्मलाः प्रशस्ताः-प्रशंसास्पदीभूताः सूक्ष्मा-श्लक्ष्णाः लक्षणं विद्यते येषां ते लक्षणाः-लक्षणवन्तः अभ्रादित्वादप्रत्यः सुगन्धाः-परमगन्धोपेताः अत एव सुन्दरास्तथा भुजमोचको-रत्नविशेषः भृङ्गो-नीलकीटः, अस्य ग्रहणं तु नीलकृष्णयोरैक्यात्, नीलो-मरकतमणि कज्जलं-प्रतीतं प्रहृष्टः-पुष्टः भ्रमरगणः।

स चात्यन्तकालिमोपेतः स्यादिति, ते इव स्निग्धाः निकुरम्बभूताः सन्तो निचिता न तु विकीर्णाः सन्तः संकुञ्चिताः ईषत्कुटिलाः-कुण्डलीभूता इत्यर्थः, प्रदक्षिणावर्त्ताश्च मूर्द्धनि शिरोजा-वाला येषां ते तथआव इत्येतत्पर्यन्तमतिदेशसूत्रं, अथ मूलसूत्रमनुश्रियतेलक्षणानि-स्वस्तिकादीनि व्यञ्जनानि-मषीतिलकादीनि गुणाः-क्षान्त्यादयस्तै रुपपेताः, सुजातं पूर्ववत्, सुविभक्तअङ्गप्रत्य-ङ्गानां यथोक्तवैविक्त्यसद्भावात् सङ्गतं-प्रमाणोपपन्नं, न तु षडङ्गुलिकादिवन्न्यूनाधिकमङ्गं-देहो येषां ते तथा, प्रासादीया इति पदचतुष्कं गतार्थमिति। अथ युगलधर्मे समानेऽपि मा भूत्पंक्तिभेद इति युग्मिरूपं पृच्छति 'तीसे नं'मित्यादि, तस्यां भदन्त ! समायां भरते वर्षे मनुजीनां प्रस्तावाद् युग्मिनीनां कीदृशः आकारभावप्रत्यवतारः प्रज्ञप्तः ?, 'गौतमे'त्यादि प्राग्वत्।

ता मनुज्यः सुजातानि-यथोक्तप्रमाणोपपेतया शोभनजन्मानि सर्वाण्यङ्गानि-शिरःप्रभृतीनि यासां ताः, अत एव सुन्दर्यश्च-सुन्दराकाराः, अत्र पदद्वय २ स्य कर्मधारयः, तथा प्रधाना ये महिलागुणाः-स्त्रगुणाः प्रियंवदत्वस्वभर्तृचित्तानुवर्त्तकत्वप्रभृतयस्तैर्युक्ताः, अनेनानन्तरोक्तविशे-षणद्वयेन सामान्यतो वर्णने कृतेऽपि तासां तद्भर्तृणां च प्राचीनदानफलोद्भावनाय विशिष्य वर्णयति-अतिकान्तौ-अतिरम्यौ तत एव विशिष्टस्वप्रमाणौ-स्वशरीरानुसारिप्रमाणौ न न्यूनाधिकमात्रावित्यर्थ, अथवा विसर्पन्तावपि-सञ्चरन्तावपि मृदुलां मध्ये सुकुमालौ कूर्मसंस्थितौ-उन्नतत्वेन कच्छपसंस्थानौ विशिष्टौ-मनोज्ञौ चलनौ-पादौ यासां तास्तथा, ऋजवः-सरलाः मृदवः-कोमलाः पीवराः-अदृश्यमानस्नाय्वादिसन्धिकत्वेनोपचिताः सुसंहताः-सुश्लिष्टा निर्विचाला इत्यर्थः, अङ्गुल्यः-पादाङ्गुलयो यासां तास्तथा, अभ्युन्नता-उन्नता रतिदाः-सुखदा द्रष्टणां अथवा मृगरमणादन्यत्राप्यनुषंगलोपवादिमताश्रयणाद्रञ्जिता इव लाक्षारसेन तलिनाः-प्रतलास्ताम्रा-ईषद्रक्ताः शुचयः-पवित्रा स्निग्धाः-चिक्कना नखा यासां तास्तथा नक्खेत्यत्र द्विर्भावः प्राग्वत्।

– रोमरहितं-निर्लोमकं वृत्तं-वर्तुलं लष्टसंस्थितं-मनोज्ञसंस्थानं, क्रमेणोर्द्ध स्थूरं स्थूरतरमिति

भावः, अजघन्यानि-उत्कृष्टानि प्रशस्तानि लक्षणानि यत्र तत्तथा, एतादृशं अकोप्यं-अद्वेष्यमतिसुभगत्वेन जंघायुगलं यासां तास्तथा, सुष्ठु नितरां मिते-परिमाणोपेते सुगूढे-अनुपलक्ष्ये ये जानुमण्डले तयोः सुबद्धौ दृढस्नायुकत्वाद् सन्धी-सन्धाने यासां तास्तथा, कदलीस्तम्भादतिरेकेण-अतिशयेन संस्थितं-संस्थानं ययोस्ते निर्व्रणे-विस्फोटकादिक्षतरहिते सुकुमारमृदुके-अत्यर्थकोमले मासले-मांसपूर्णे न तु काकजंघावद्दुर्बले अविरले-परस्परासन्ने समे प्रमाणतस्तुल्ये सहिके-क्षमे सुजाते-सुनिष्पन्ने वृत्ते-वर्तुले पीवरे-सोपचये निरन्तरे-परस्परनिर्विशेषे ऊरू-सक्थिनी यासां तास्तथा, वीति-विगतेतिको घुणाद्यक्षत इति भावः एवंविधोऽष्टापदो-द्यूतफलकं, विशेषणव्यत्ययः प्राकृतत्वात्, तद्वत् प्रष्ठसंस्थिता-प्रधानसंस्थाना प्रशस्ता विस्तीर्णपृथुला-अतिविपुला श्रोणि-कटेरग्रभगो यासां तास्तथा, वदनायामप्रमाणस्य मुखदीर्घत्वस्य च द्वादशाङ्गुलप्रमाणस्य तस्माद् द्विगुणं चतुर्विंशत्यङ्गुलं विस्तीर्णं मांसलं-पुष्टं सुबद्धं-अश्लथं जघनवरं-प्रधानकटीपूर्वभागं धारयन्तीत्येवंशीलाः । अत्रापि विशेषणस्य परनिपातः प्राग्वत्, वज्रवद्विराजितं क्षामत्वेन तथा प्रशस्तलक्षणं सामुद्रिकप्रशस्तगुणोपेतं निरुदरं-विकृतोदररहितं अथवा निरुदरं-अल्पत्वेनाभावविवक्षणात् तिस्र वलयो यत्र तत्त्रिवलिकं तथा बलितं-सञ्जातबलं न च क्षामत्वेन दुर्बलमाशङ्कनीयं, तनु-कृशं नतं-नम्रंतनुनतमीषन्नम्रमित्यर्थ, ईदृशं मध्यं यासां तास्तथा, स्वार्थे कप्रत्ययः, ऋजुकानां-अवक्राणां समानां-तुल्यानां न कापि दन्तुराणां संहितानां-संततानां न त्वपान्तराले व्यवच्छिन्नानां जात्यानां-स्वभावजानां प्रधानानां वा तनूनांसूक्ष्माणां कृष्णानां-कालानां न तु मर्कटवर्णानां स्निग्धानां-सतेजस्कानां आदेयानां-दृष्टिसुभगानां 'लडह' त्ति ललितानां सुजातानां-सुनिष्पन्नानां सुविभक्तानां कान्तानां-कमनीयानां अत एव सोभमानानां रुचिररमणीयानां-अतिमनोहराणां रोम्णां राजि-आवलीर्यासां तास्तथा, गङ्गावर्त्ततिपदं प्राग्वत्, अनुद्भटौ-अनुल्बणौ प्रशस्तौ पीनौ कुक्षी यासां तास्तथा, सन्नतपार्श्वादिविशेषणानि प्राग्वत् ।

काञ्चनकलशयोरिव प्रमाणं ययोस्तौ तथा, समौ-परस्परं तुल्यौ नैको हीनो न एकोऽधिक इति भावः सहितौ-संहतौ अनयोरन्तराले मृणालसूत्रमपि न प्रवेशं लभते इति भावः, सुजातौ-जन्मदोषरहितौ लष्टचूचुकामेलकौ-मनोज्ञस्तनमुखशेखरौ यमलौ-समश्रेणीकौ युगलौ-युगलरूपौ वर्त्तितौ-वृत्तौ अभ्युन्नतौ-पत्युरभिमुखमुन्नतौ पीनं-पुष्टां रतिं पत्युर्दत्त इत पीनरतिदौ पीवरौ-पुष्टौ पयोधरौ यासां तास्तथा, भुजङ्गवदानुपूर्व्येण-क्रमेणाधोऽधोभागे इत्यर्थ तनुकौ अत एव गोपुच्छवद्वृत्तौ समौ-परस्परं तुल्यौ संहितौ-मध्यकायापेक्षयाऽविरलौ नतौ-नम्रौ स्कन्धदेशस्य नतत्वात् आदेयौ-अतिसुभगतयोपादेयौ ललितौ-मनोज्ञचेष्टाकलितौ बाहू यासां तास्तथा, ताम्रनखा इति व्यक्तं, मांसलावग्रहस्तौ-हस्ताग्रभागौ यासां तास्तथा, पीवरेति प्राग्वत्, स्निग्धपाणिरेखा इति व्यक्तं, रविशशिशङ्खचक्रस्वस्तिका एव सुविभक्ताः-सुप्रकटाः सुविरचिताः-सुनिर्मिताः पाणिरेखा यासां तास्तथा, पीना-उपचितावयवा उन्नता-अभ्युन्नताः कक्षावक्षोबस्तिप्रदेशा-भुजमूलहृदयगुह्यप्रदेशा यासां तास्तथा, परिपूर्णा गलकपोला यासां तास्तथा, चउरङ्गुलेति पूर्ववत्, मांसलेति व्यक्तं दाडिमपुष्पप्रकाशो रक्त इत्यर्थ पीवरःउपचितः ।

प्रलम्बः-ओष्ठापेक्षया ईषल्लम्बमानः कुञ्चितः-आकुञ्चितो मनाग् वलित इत्यर्थः वरः-प्रधानोऽधरः-अधस्तनदशनच्छदो यासां तास्तथा, सुन्दरोत्तरोष्ठा इति कण्ठ्यम्, दधि प्रनीतं

दगरज-उदककणश्चन्द्रः प्रतीतः कुंदं-कुन्दकुसुमं वासन्तीमुकुलं-वनस्पतिविशेषकलिका तद्वद् धवला जम्बूद्वीपप्रज्ञप्तिप्रश्नव्याकरणाद्यादर्शेष्वदृष्टोऽपि धवलशब्दो जीवाभिगमवृत्तौ दर्शनाल्लिखितोऽस्ति अच्छिद्रा-अविरला विमला-निर्मला दशना-दन्ता यासां तास्तथा, रक्तोत्पलवद्रक्तं मृदुसुकुमारं-अतिकोमलं तालु जिह्वा च यासां तास्तथा, करवीरकलिकावत् नासापुटद्वयस्य यथोक्तप्रमाणतया संवृताकारतया वाऽकुटिला-अवक्रा सती अभ्युदगता-भ्रूद्वयमध्यतो विनिर्गता अत एव ऋज्वी-सरला सती तुङ्गा-उच्चा नतु गवादिश्च इगवद्वक्रा सती तुङ्गेत्यर्थ, एवंविधा नासा यासां तास्तथा, शरदि भवं शारदं नवं कमलं-रविबोध्यं कुमुदं-चन्द्रबोध्यं कुवलयं-तदेव नीलं एषां यो दलनिकरः-पत्रसमूहस्तत्सदृशे लक्षणप्रशस्ते अजिह्मे-अमन्दे भद्रभावतया निर्विकारचपले इत्यर्थः, कान्ते नयने यासां तास्तथा, एतेन तदीयदृशामनञ्जितसुभगत्वमायतत्वं सहजचपलत्वं चाह, स्त्रीणामङ्गे हि नयनसौभाग्यमेव परमशृङ्गाराङ्गमिति पुनस्तद्विशेषणेन पत्रले-पक्ष्मवती न तु रोगविशेषादुगतरोमके क्वचिद्धवले कर्णान्तवर्त्तिनी कचित्ताम्रलोचने यासां तास्तथा।

'आणामिअ' त्ति 'अल्लीण' विशेषणे प्राग्वत्, पीना मांसलतया नतु कृपाकारा मृष्ट-शुद्धा न तु श्यामच्छायापन्ना गण्डलेखा-कपोलपाल्यो यासां तास्तथा, चतुर्षु अंशेषु-कोणेषु दक्षिणोत्तरयोः प्रत्येकमूर्द्धाधोभागरूपेषु प्रशस्तमहीनाधिकलक्षणत्वात् समम्-अविषमं ललाटं यासां तास्तथा, कौमुदी-कार्तिकीपौर्णिमा तस्या रजनिकरः-चन्द्रस्तद्वद्विमलं प्रतिपूर्णम्-अहीनं सौम्यं-अक्रूरं न तु बककान्तानाम्रिव भीषणं वदनं यासां तास्तथा, छत्रोन्नतोत्तमाङ्गा इति प्रतीतं, अकपिला-श्यामाः सुस्निग्धाः-तैलाभावादभ्यङ्गनिरपेक्षतया निसर्गचिक्कणाः सुगन्धा दीर्घा न तु पुरुषकेशा इव निकुरम्बभूताः नापि धम्मिल्लादिपरिणाममापन्नाः संयमविज्ञानाभावात् शिरोजा यासां तास्तथा।

छत्रं १ ध्वजः २ यूपः-स्तम्भविशेषः ३ स्तूपः-पीठं ४ दामिणिति-रूढिगम्यं ५ कमण्डलुः-तापसपानीयपात्रं ६ कलशः ७ वापी ८ स्वस्तिकः ९ पताका १० यवो ११ मत्स्यः १२ कूर्मः १३ रथवरः १४ मकरध्वजः-कामदेवस्ततसंसूचकं सूचनीये सूचकोपचाराल्लक्षणमिति, तच्च सर्वकालमविधवत्वादिसूचकं १५ अङ्कः-चन्द्रबिम्बान्तर्वर्त्ती श्यामावयवः, क्वचिदङ्कस्थाने शुक इति दृश्यते १६ स्थालं १७ अङ्कुशः १८ अष्टापदं-द्यूतफलकं १९ सुप्रतिष्ठकं-स्थापनकं २० मयूरः २१ श्रियोऽभिषेको-लक्ष्म्या अभिषेकः २२ तोरणं २३ मेदिनी २४ उदधि २५ वरभवनं-प्रधानगृहं २६ गिरि २७ वरादर्शो-वरदर्पणः २८ सलीलगजो-लीलावान् गजः २९ ऋषभो-गौः ३० सिंहः ३१ चामरं ३२। एतान्युत्तमानि-प्रधानानि प्रशस्तानि-सामुद्रिकशास्त्रेषु प्रशंसास्पदीभूतानि द्वात्रिंशल्लक्षणानि धरन्ति यास्तास्तथा हंसस्य सदृशी गतिर्यासां तास्तथा कोकिलाया आम्रमञ्जरीसंस्कृतत्वेन पञ्चमस्वरोद्गारमयी या मधुरा गीस्तद्वत् सुष्ठु-शोभनः स्वरो यासां तास्तथा, कान्ताः-कमनीयाः सर्वस्य तत्प्रत्यासन्नवर्त्तिनो लोकस्यानुमताः-सम्मता न कस्यापि मनागपि द्वेष्या इति भावः, वलि-शैथिल्यसमुद्भवश्चर्मविकारः पलितं-पाण्डुरः कचः व्यपगतानि वलिपलितानि याभ्यस्तास्तथा, तथा विरुद्धमङ्गं व्यङ्गं-वकारवानयवः दुर्वर्णो-दुष्टशरीरच्छदि व्याधिर्दौर्भाग्य-शोकाः प्रतीताः तैर्मुक्ताः, पश्चाद्विशेषणद्वयकर्मधारयः, उच्चत्वेन च नराणां स्वभर्तृणां स्तोकोनं यथा स्यात्तथोच्छ्रिताः किञ्चिन्न्यूनत्रिगव्यूतोच्छ्रया इत्यर्थः, न हि ऐदंयुगीनमनुष्यपत्न्य इव स्वभर्तुं समोच्चत्वा अधिकोच्चत्वा वा भवेयुः, किमुक्तं भवति ?

यथा हि सम्प्रति पुरुषस्य अन्यूनोच्चत्वया भार्यया योगो लोके उपहासपात्रं स्यात् न तथा

तेषां मनुष्याणामिति, तथा स्वभावत एव श्रृङ्गाररूपश्चारु-प्रधानो वेषो यासां तास्तथा, प्रायो निर्विकारमनस्कत्वेनाद्दष्टपूर्वकत्वेन च तासां सीमन्तोन्नयनाद्यौपाधिकश्रृङ्गाराभावात्, सङ्गतं-उचितं गतं-गमनं हंसीगमनवत् हसितं-हसनं कपोलविकाशि प्रेमसन्दर्शि च भणितं-भणनं गम्भीरं दर्पकोद्दीपि च चेष्टनं-सकाममङ्गप्रत्यङ्गोपाङ्गदर्शनादि विलासो-नेत्रचेष्टा संलापः-पत्या सह सकामं स्वहृदयप्रत्यर्पणक्षमं परस्परं सम्भाषणं तत्र निपुणाः, तथा युक्ताः-सङ्गता ये उपचारा-लोकव्यवहारास्तेषु कुशलाः, ततः पदद्वयस्य कर्मधारयः।

एवंविधविशेषणाश्च स्वपतिं प्रति द्रष्टव्या नतु परपुरुषं प्रति, तथाविधकालस्वभावात् प्रतनुकामतया परपुरुषं प्रति तासामभिलाषासम्भवात्, एवं च युग्मिपुरुषाणामपि परस्त्रं प्रति नाभिलाष इति प्रतिपत्तव्यं, नन्वेवं सति प्रथमभगवतः सुनन्दापाणिग्रहणं कथमुचितं ? मृतेऽपि पुंसि तस्याः परसम्बन्धित्वाविरोधात्, उच्यते, मा ब्रूहि निषिद्धविरुद्धाचरणस्य भगवतः श्रवणाश्रव्यमेनमपवादं, कन्यावस्थाया एव तस्या भगवता पाणिग्रहणकरणात्, यतः-

॥१॥ "पढमो अकालमच्चू तहिँ तालफलेण दारओ पहओ ।
कण्णा य कुलगरेणं सिट्ठे गहिआ उसभपत्ती ॥"

एवं तर्हि सहजातायाः सुमङ्गलायाः पाणिग्रहणं कथं ?, सत्यं, तदानीन्तनलोकाचीर्णत्वेन तदानीं तस्या अविरुद्धत्वादिति, पूर्वोक्तमेवार्थं सम्पिण्ड्याह-'सुंदरे'त्यादि व्यक्तमेव, नवरं जघनं-पूर्वकटीभागः, लावण्यं-आकारस्य स्पृहणीयता विलासः-स्त्रीणां चेष्टाविशेषः, आह च-

॥१॥ "स्थानासनगमनानां हस्तभ्रूनेत्रकर्मणां चैव ।
उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात् ॥"

नन्दनवनं-मेरोर्द्वितीयवनं तस्य विवरं-अवकाशो वृक्षरहितभूभागस्तत्र चारिण्य इवाप्सरसो-देव्यः भरतवर्षे मानुषरूपा अप्सरसः आश्चर्य-अद्भुतमिति प्रेक्षणीयाः प्रासादीया इत्यादि। सम्प्रति स्त्रीपुंससाधारण्येन तत्कालभाविमनुष्यस्वरूपं विवक्षुरिदमाह-'ते णं मणुआ' इत्यादि, ते सुषम-सुषमाभाविनो मनुष्याः ओघः-प्रवाही स्वरो येषां ते तथा, हंसस्येव मधुरः स्वरो येषां ते तथा, क्रौञ्चस्येवाप्रयासविनिर्गतोऽपि दीर्घदेशव्यापी स्वरो येषां ते तथा, नन्दी-द्वादशविध- तूर्यसमुदयस्तस्या इव शब्दान्तरतिरोधायी स्वरो येषं ते तथा, नन्द्या इव घोषः-अनुनादो येषां ते तथा, सिंहस्येव बलिष्टः स्वरो येषां ते तथा, एवं सिंहघोषाः, उक्तविशेषणानां विशेषणद्वारा हेतुमाचष्टे-सुस्वराः सुस्वरनिर्घोषाः, छायया-प्रभया द्योतितान्यङ्गानि-अवयवा यस्य तदेवंविधमङ्गं-शरीरं येषां ते तथा, मकारोऽलाक्षणिकः, वज्रऋषभनाराचं नाम सर्वोत्कृष्टाद्यं संहननं येषां ते तथा, समचतुरस्रं संस्थानं-सर्वोत्कृष्ट आकृतिविशेषस्तेन संस्थिताः छव्यां-त्वचि निरातङ्काः-नीरोगाः दद्रुकुष्ठ-किलासादित्वग्दोषरहितवपुष इत्यर्थः, अथवा छविति छविमन्तः, छविच्छविमतोरभेदोप- चाराद् दीर्घत्वेन मतुब्लोपाद्वा, यथा मरीचिरित्यत्र मलयगिरीयावश्यकवृत्तौ, उदात्तवर्णसुकुमारत्वचा युक्ता इत्यर्थः, पश्चान्निरातङ्कपदेन कर्मधारयः, अनुलोमः-अनुकूलो वायुवेगः-शरीरान्तर्वर्ती वातजवो येषां ते तथा।

कपोतस्य इव गुल्मरहितोदरमध्यप्रदेशाः, सति गुल्मे प्रतिकूलो वायुवेगो भवतीति भावः, कङ्कः-पक्षिविशेषस्तस्येव ग्रहणी-गुदाशयो नीरोगवर्चस्कतया येषां ते तथा, कपोतस्येव-पक्षिविशेषस्येव परिणामः-आहारपरिपाको येषां ते तथा, कपोतस्य हि जाठराग्नि पाषाणलवानपि

जरयतीति लौकिकश्रुति एवं तेषामप्यल्पाहारग्रहणेऽपि न जातुचिदजीर्णदोषादयः, शकुनेरिव-पक्षिण इव पुरीषोत्सर्गे निर्लेपतया पोसः-अपानदेशो येषां ते तथा, 'पुस उत्सर्गे' पुरीषमुत्सृजन्त्यनेनेति व्युत्पत्तेः, तथा पृष्ठं-शरीरपृष्ठभागः अन्तरे-पृष्ठोदरयोरन्तराले पार्श्वे इत्यर्थ ऊरू च-सक्थिनी इति द्वन्द्वः, एतानि परिणतानि-परिनिष्ठितां गतानि येषां ते तथा, क्तान्तस्य परनिपातः सुखादिदर्शनात्, ततः पदद्वयस्य २ कर्मधारयः, यथोचितपरिणामेन तानि सञ्जातानीत्यर्थः, षड्धनुःसहस्रमुच्छ्रिताः, अत्रापि मकारोऽलाक्षणिकः, उत्सेधाङ्गुलतस्त्रिगव्यूतप्रमाणकाया इत्यर्थः, यच्च युग्मिनीनां किञ्चिदूनत्रिगव्यूतप्रमाणोच्चत्वमुक्तं तदल्पतया न विवक्षितमिति भावः ।

अथ तेषां वपुषि पृष्ठकरण्डकसङ्ख्यामाह-'तेसि णं'मित्यादि, तेषां मनुष्याणां द्वे षट्पञ्चाशदधिके पृष्ठकरण्डुकशते पाठान्तरेण पृष्ठकरण्डकशते वा प्रज्ञप्ते, पृष्ठकरण्डुकानि च-पृष्ठवंशर्त्युन्नताः अस्थिखण्डाः पंशुलिता इत्यर्थः, हे श्रमणेत्यादि प्राग्वत्, पुनस्तानेव विशिनष्टि-'पउमुप्पल'इत्यादि, ते णमिति पूर्ववत्, मनुजाः पद्मं-कमलमुत्पलं-नीलोत्पलं अथवा पद्मं पद्मकाभिधो गन्धद्रव्यं उत्पलं-कुष्ठं तयोर्गन्धेन-परिमलेन सदृशः-समो यो नःश्वासस्तेन सुरभिगन्धि वदनं येषां ते तथा, प्रकृत्या-स्वभावेनोपशान्ता नतु क्रूराः प्रकृत्या प्रतनवः-अतिमन्दीभूताः क्रोधमानमायालोभा येषां ते तथा, अत एव मृदु-मनोज्ञं परिणामसुखावहमिति भावः यन्मार्दवं तेन सम्पन्नाः न तु कपटमार्दवोपेताः, आलीना-गुरुजनमाश्रिताअनुशासनेऽपि न गुरुषु द्वेषमापद्यन्ते इत्याशयः । अथवा आ-समन्तात् सर्वासु क्रियासु लीना-गुप्ता नोल्वणचेष्टाकारिण इत्यर्थः, भद्रकाः-कल्याणभागिनः, भद्रगा वा-भद्रहस्तिगतयः, विनीता-बृहत्पुरुषविनयकरणशीला अथवा विनीता इव-विजितेन्द्रिया इव, अल्पेच्छा-मणिकनकादिप्रतिबन्धरहिताः अत एव न विद्यते सन्निधि-पर्युषितखाद्यादेः संचयो-धारणं येषां ते तथा, विटपान्तरेषु-शाखान्तरेषु प्रासादाद्याकृतिषु परिवसनं-आकालमावासो येषां ते तथा, यथेप्सितान् कामान्-शब्दादीन् कामयन्ते-अर्थान् भुञ्जते इत्येवंशीला ये ते तथा इति, अत्र च जीवाभिगमादिषु युग्मिवर्णनाधिकारे आहारार्थप्रश्नोत्तरसूत्रं दृश्यते, अत्र च कालदोषेण त्रुटितं सम्भाव्यते ।

अत्रैवोत्तरत्र द्वितीय-तृतीयारकवर्णकसूत्रे आहारार्थसूत्रस्य साक्षाद् दृश्यमानत्वादिति, तेनात्र स्थानाशून्यार्थं जीवाभिगमादिभ्यो लिख्यते-

*मू. (३५) तेसि णं भंते ? मणुआणं केवइकालस्स आहारट्ठे समुप्पज्जइ ?, गोअमा ! अट्ठमभत्तस्स आहारट्ठे समुप्पज्जइ, पुढवीपुप्फफलाहारा णं ते मणुआ पन्नत्ता समणाउसो !*

*तीसे णं भंते ! पुढवीए केरिसए आसाए पन्नत्ते ?, गो० ! से जहानामए गुलेइ वा खंडेइ वा सक्कराइ वा मच्छंडिआइ वा पप्पडमोअए इ वा भिसेइ वा पुप्फुत्तराइ वा पउमुत्तराइ वा विजयाइ वा महाविजयाइ वा आकासिआइ वा आदंसिआइ वा आगासफलोवमाइ वा उग्गाइ वा अनोवमाइ वा इमेए अज्झोववणाए, भवे एआरूवे ?, नो इणमट्ठे समट्ठे, सा णं पुढवी इत्तो इट्ठतरिआ चेव जाव मणामतरिआ चेव आसाएणं पन्नत्ता ।*

*तेसि णं भंते ! पुप्फफलाणं केरिसए केरिसए आसाए पन्नत्ते ?, गोअमा ! से जहा नामए रन्नो चाउरंतचक्कवट्टिस्स कल्लाणे भोअणजाए सयसहस्सनिप्फन्ने वण्णेणुववेए जाव फासेणं उववेए आसायणिज्जे विसायणिज्जे दिप्पणिज्जे दप्पणिज्जे मयणिज्जे विम्हणिज्जे विंहणिज्जे सव्विंदिअगाय-*

*पल्हायणिज्जे, भवे एआरूवे ?, नो इणमट्ठे समट्ठे ।*

*तेसि णं पुप्फफलाणं एत्तो इट्ठतराए चेव जाव आसाए पन्नत्ते ।*

**वृ-** तेषां भदन्त ! मनुजानां 'केवइकालस्स'त्ति सप्तम्यर्थे षष्ठी कियति काले गते भूय आहारार्थ समुत्पद्यते-आहारलक्षणं प्रयोजनमुपतिष्ठते ?, भगवानाह-हे गौतम ! अष्टमभक्तस्य, अत्रापि सप्तम्यर्थे षष्ठी, अष्टमभक्तेऽतिक्रान्ते आहारार्थ समुत्पद्यते इति, यद्यपि सरसाहारि-त्वेनैतावत्कालं तेषां क्षुद्वेदनीयोदयाभावात् स्वत एवाभक्तार्थता न निर्जरार्थं तपः तथाप्यभक्तार्थत्वसाधर्म्यादष्टमभक्त इति, अष्टमभक्तं चोपवासत्रयस्य संज्ञा इति, अथैते यदाहारयन्ति तदाह- 'पुढवीपुप्फे'-त्यादि, पृथिवी-भूमिफलानि च-कल्पतरूणामाहारो येषां ते तथा, एवंविधास्ते मनुजाः प्रज्ञप्ताः हे श्रमणेत्यादि पूर्ववत् । अथानयो राहारयो मध्ये पृथिवी स्वरूपं पृच्छन्नाह- 'तीसेण'मित्यादि, तस्याः पृथिव्याः कीदृश आस्वादः प्रज्ञप्तो, यो युगलधर्मिणा- मनन्तरपूर्वसूत्रे आहारत्वेनोक्त इत्यध्याहार्यं, भगवानाह-गौतम ! तद्यथा नाम ए इत्यादि प्राग्वत्, गुडः-इक्षुरसक्वाथ इति, इतिवाशब्दौ प्राग्वत्, खण्डं-गुडविकारः शर्करा-काशादिप्रभवा मत्स्यंडिका-खण्डशर्कराः पुष्पोत्तरापद्मोत्तरे शर्करामेदावेव, अन्ये तु पर्पटमोदकादयः खाद्यविशेषा लोकतोऽवसेयाः, एषां मधुरद्रव्यविशेषाणां स्वामिना निर्दिष्टेषु नामसु एतादृशरसा पृथिवी भवेत् कदाचिदिति विकल्पारूढमतिर्गौतम आह- भवेदेतद्रूपः पृथिव्या आस्वादः ?, स्वाम्याह-गौतम ! नायमर्थः समर्थः, सा पृथिवी इतो-गुडशर्करादेरिष्टतरिका एव, स्वार्थे कप्रत्ययः, यावत्करणात्कान्त- तरिका चैव प्रियतरिका चैवेति परिग्रहः, मनआपतरिका एव आस्वादेन प्रज्ञप्ता इति,

अथ पुष्पफलानामास्वादं पृच्छन्नाह- 'तेसि णं०' तेषां-पुष्पफलानां कल्पद्रुसम्बन्धिनां कीदृशः-क आस्वादः प्रज्ञप्तो, यानि पूर्वसूत्रे युग्मिनामाहारत्वेन व्याख्यातानी गम्यं, भगवानाह-गौ० ! तद्यथा नाम राज्ञः, स च राजा लोके कतिपयदेशाधीशोऽपि स्यादत आह-चतुर्ष्वन्तेषु समुद्रत्रयहिमवत्परिच्छिन्नेषु चक्रेण वर्त्तितुं शीलमस्येति चतुरन्तचक्रवर्त्ती, 'अः समृध्यादौ वे'त्यनेन दीर्घत्वं, अनेन वासुदेवतो व्यावृत्ति कृता, तस्य कल्याणं-एकान्तसुखावहं भोजनजातं-भोजनविशेषः शतसहस्रनिष्पन्नं- वर्णेनातिशायिनेति गम्यते, अन्यथा सामान्यभोजनस्यापि वर्णमात्रवत्ता सम्भवत्येवेति किमाधिक्यवर्णनं ?, युक्तं, यावदतिशायिना स्पर्शेनोपपेतं यावत् गन्धेन रसेन चातिशायिनोपपेतं, आस्वादनीयं सामान्येन विस्वादनीयं विशेषतस्तद्रसमधिकृत्य दीपनीयं-अग्निवृद्धिकरं दीपयति जठराग्निमिति दीपनीयं, बाहुलकात्कर्त्तर्यनीयप्रत्ययः, एवं दर्पणीयमुत्साहवृद्धिहेतुत्वात्, मदनीयं- मदनीयं-मन्मथजनकत्वात् बृंहणीयं धातूपचयकारित्वात्, सर्वाणि इन्द्रियाणि गात्रं च प्रह्लादयतीति सर्वेन्द्रियगात्रप्रह्लादनीयं वैशद्यहेतुत्वात्तेषां ।

एवमुक्तो गौतम आह-भगवन् ! भवेदेतद्रूपस्तेषां पुष्पफलानामास्वादः ?, भगवानाह-गौतम ! नायमर्थः समर्थः, तेषां पुष्पफलानामितः-चक्रवर्त्तिभोजनादिष्टतरकादिरेवास्वादः, अत्र कल्याणभोजने सम्प्रदाय एवं-चक्रवर्त्तिसम्बन्धिनीनां पुंड्रेक्षुचारिणीनामनातङ्कानां गवां लक्षस्याद्धार्द्धक्रमेण पीतगोक्षीरस्य पर्यन्ते यावदेकस्याः गोः सम्बन्धि यत् क्षीरं तद्प्राद्धकलमशालिपरमान्नरूपमनेकसंस्कारकद्रव्यसम्मिश्रं कल्याणभोजनमिति प्रसिद्धं, चक्रिणं स्त्ररत्नं च विना अन्यस्य भोक्तुर्दुर्जरं महदुन्मादकं चेति ॥ अथैते उक्तस्वरूपमाहारमाहार्य क्व वसन्तीति पृच्छति-

*मू. (३६) ते णं भंते ! मणुया तमाहारमाहारेत्ता कहिं वसहिं उवेंति ?, गोअमा ! रुक्खगेहालया णं ते मणुआ पन्नत्ता समणाउसो !, तेसि णं भंते ! रुक्खाणं केरिसए आयारभावपडोआरे पन्नत्ते ? गोअमा ! कूडागारसंठिआ पेच्छाच्छत्तझयथूभतोरणगोचरवेइआचोप्फालगअट्टालगपासायहम्मिअगवक्खवालग्गपोइआवलभीघरसंठिआ अत्थण्णे इत्थ बहवे वरभवणविसिट्ठसंठाणसंठिआ दुमगणा सुहसीअलच्छाया पन्नत्ता समणाउसो !*

वृ- 'ते ण'मित्यादि, ते भदन्त ! मनुजास्तमनन्तरोदितस्वरूपमाहारमाहार्य क्व वसतीकस्मिन्नुपाश्रये उपयन्ति-उपगच्छन्ति ?, भग०-गौ० ! वृक्षरूपाणि गृहाणि आलया-आश्रया येषां ते तथा एवंविधास्ते मनुजाः प्रज्ञप्ताः, हे श्रमणेत्यादि पूर्ववत्, अथैते गेहाकारा वृक्षाः किंस्वरूपा-'तेसि णं भंते ! रुक्खाण', प्रश्नसूत्रपदयोजना सुलभा, आकारभावप्रत्यवतारः प्राग्वत्, भगवानाहगौ० ! ते वृक्षाः कूटं-शिखरं तदाकारसंस्थिताः, प्रेक्षा इति पदैकदेशे पदसमुदायोपचारात् प्रेक्षागृहंनाट्यगृहं, 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति संस्थितशब्दः सर्वत्र योज्यः, तेन प्रेक्षागृहसंस्थिता इति व्याख्येयं प्रेक्षागृहाकारेण संस्थानवन्त इत्यर्थः, एवं छत्रध्वजतोरणस्तूपगोपुरवेदिकाचोप्फालअट्टालकप्रासादहर्म्यगवाक्षवालाग्रपोतिकावलभीगृहसंस्थिताः, तत्र छत्राद्याः प्रतीताः, गोपुरं-पुरद्वारं वेदिका-उपवेशनयोग्या भूमि चोप्फालं नाम मत्तवारणं अट्टालकः-प्राग्वत् प्रासादो-देवतानां राज्ञां वा गृहं उच्छ्रयबहुलो वा प्रासादः ते चोभयेऽपि पर्यन्तशिखराः हर्म्यशिखररहितं धनवतां भवनं गवाक्षः-स्पष्टः वालाग्रपोतिका नाम जलस्योपरि प्रासादः वलभीछदिराधारस्तत्प्रधानं गृहं ।

अत्रायमाशयः-केचिद्वृक्षाः कूटसंस्थितास्तदन्ये प्रेक्षागृहसंस्थितास्तदपरे छत्रसंस्थिता, एवं सर्वत्र भाव्यं, अन्ये तु अत्र-सुषमसुषमाया भरतवर्षे बहवो वरभवनंसामान्यतो विशिष्टगृहं तस्यैव यद्विशिष्टं संस्थानं तेन संस्थिताः शुभा शीता छाया येषां ते तथा एवंविधा द्रुमगणाः प्रज्ञप्ताः, प्राग्गेहाकारकल्पद्रुमस्वरूपवर्णके उक्तेऽपि एते परमपुण्यप्रकृतिका युग्मिन एषु सौन्दर्याश्रयेष्वाश्रयेषु वसन्तीति ज्ञापनार्थं पुनस्तद्वर्णकसूत्रारम्भः सार्थक इति, ननु तदा गृहाणि न सन्ति ?, सन्त्यपि वा गृहाणि धान्यवन्न तेषामुपभोगायायान्तीत्याशङ्कमानः पृच्छति-

*मू. (३७) अत्थि णं भंते तीसे समाए भरहे वासे गेहाइ वा गेहावणाइ वा ?, गोअमा ! नो इणट्ठे समट्ठे, रुक्खगेहालया णं ते मणुआ प० स० !, अत्थि णं भंते ! तीसे समाए भरहे वासे गामाइ वा जाव संणिवेसाइ वा ? गो० ! नो इणट्ठे समट्ठे, जहिच्छिअकामगामिणो णं ते मणुआ प० ।*

*अत्थि णं भंते ! असीव वा मसीइ वा किसीइ वा वणिएत्ति वा पणिएत्ति वा वाणिज्जेइ वा? नो इणट्ठे समट्ठे, ववगयअसिमसिकिसिवणिअपणिअवाणिज्जा णं ते मणुआ पन्नत्ता समणाउसो! अत्थि णं भंते ! हिरण्णेइ वा सुवण्णेइ वा कंसेइ वा दूसेइ वा मणिमोत्तिअसंखसिलप्पवालरत्तरयणसावइज्जेइ वा ?, हंता अत्थि, नो चेव णं तेसिं मणुआणं परिभोगत्ताए हव्वमागच्छइ !*

*अत्थि णं भंते ! भरहे रायाइवा जुवरायाइ वा ईसरतलवरमाडंबिअकोडुंबिअइब्भसेट्ठिसेनावइसत्थवाहाइ वा ?, गोयमा ! नो इणट्ठे समट्ठे, ववगयइड्ढिसक्कारा णं ते मणुआ, अत्थि णं भंते ! भरहे वासे दासेइ वा पेसेइ वा सिस्सेइ वा भयगेइ वा भाइल्लएइ वा कम्मयरएइ वा ?, नो इणट्ठे समट्ठे, ववगयआभिओगा णं ते मणुआ पन्नत्ता समणाउसो ! ।*

अत्थि णं भंते ! तीसे समाए भरहे वासे मायाइ वा पियाइ वा माय० भगिणि० भज्जा० पुत्त० धूआ० सुण्हाइ वा ?, हंता अत्थि, नो चेव णं तिव्वे पेम्मबंधणे समुप्पज्जइ।

अत्थि णं भंते ! भरहे वासे अरीइ वा वेरिएइ वा घायएइ वा वहएइ वा पडिनीयए वा पच्चामित्तेइ वा ?, नो इणट्ठे समट्ठे, ववगयवेराणुसया णं ते मणुआ पन्नत्ता समणाउसो !।

अत्थि णं भंते ! भरहे वासे मित्ताइ वा वयंसाइवा नायएइ वा संघाडिएइ व सहाइ वा सुहीइ वा संगएइति वा ?, हंता अत्थि, नो चेव णं तेसिं मणुआणं तिव्वे रागबंधणे समुप्पज्जइ, अत्थि णं भंते ! भरहे वासे आवाहाइ वा वीवाहाइ वा जण्णाइ वा सद्धाइ वा थालीपागाइ वा मितपिंडनिवेदणाइ वा ?, नो इणट्ठे समट्ठे, ववगयआवाहवीवाहजण्णसुद्धथालीपाकमित-पिंडनिवेदणा णं ते मणुआ पन्नत्ता समणाउसो !।

अत्थि णं भंते ! भरहे वासे इंदमहाति वा खंद० नाग० जक्ख० भूअ० अगड० तडाग० दह० नदि० रुक्ख० पव्वय० थूभ० चेइयमहाइ वा ?, नो इणट्ठे समट्ठे, ववगयमहिमा णं ते मणुआ पं०, अत्थि णं भंते ! भरहे वासे णडपेच्छाइ वा णट्ट० जल्ल० मल्ल० मुट्ठिअ० वेलंबग० कहग० पवग० लासगपेच्छाइ वा ? नो इणट्ठे स०, ववगयकोउहल्ला णं ते मणुआ प० स० !।

अत्थि णं भंते ! भरहे वासे सगडाइ वा रहाइ वा जाणाइ वा जुग्ग० गिल्लि० थिल्लि० सीअ० संदमाणिआइ वा ? नो इणट्ठे समट्ठे, पायचारविहारा णं ते मणुआ पं० समणाउसो !, अत्थि णं भंते ! भरहे वासे गावीइ वा महिसीइ वा अयाइ वा एलगाइ वा ?, हंता अत्थि, नो चेव णं तेसिं मणुआणं परिभोगत्ताए हव्वमागच्छंति, अत्थि णं भंते ! भरहे वासे आसाइ वा हत्थि० उट्ट० गोण० गवय० अय० एलग० पसय० मिअ० वराह० रुरु० सरभ० चमर० कुरंगगोकण्णमाइआ ?, हंता अत्थि, नो चेव णं तेसिं परिभोगत्ताए हव्वमागच्छंति।

अत्थि णं भंते ! भरहे वासे सीहाइ वा वग्घाइ वा वगदीविगअच्छतरच्छसिआलविडालसुण-गकोकंतियकोलसुणगाइ वा ?, हंता अत्थि, नो चेव णं तेसिं मणुआणं आबाहं वा वाबाहं वा छविच्छेअं वा उप्पायेंति, पगइभद्दया णं ते सावयगणा पं० समणाउसो !, अत्थि णं भंते ! भरहे वासे सालीति वा वीहिगोहूमजवजवजवाइ वा कलममसूरमुग्गमासतिलकुलत्थणिप्फावआलिसंदग-अयसिकुसुंभकोवकंगुवरगरालगसणसरिसवमूलगवीआइ वा ?, हंता अत्थि, नो चेव णं तेसिं मणुआणं परिभोगत्ताए हव्वमागच्छंति।

अत्थि णं भंते ! भरहे वासे गड्डाइ वा दरीओवायपवायविसमविज्जलाइ वा ?, नो इणट्ठे समट्ठे, भरहे वासे बहुसमरमणिज्जे भूमिभागे पन्नत्ते, से जहाणामए आलिंगपुक्खरेइ वा०, अत्थि णं भंते ! भरहे वासे खाणूइ वा कंटगतणयकयवराइ वा पत्तकयवराइ या ?, नो इणट्ठे समट्ठे, ववगयखाणुकंटगतणकयवरपत्तकयवरा णं सा समा पन्नत्ता, अत्थि णं भंते ! भरहे वासे डंसाइ वा मसगाइ वा जूआइ वा लिक्खाइ वा ढिंकुणाइ या पिसुआइ वा, ?, नो इणट्ठे समट्ठे, ववगयडंसमसगजूअलिक्खढिंकुणपिसुआ उवद्दवविरहिआ णं सा समा पन्नत्ता।

अत्थि णं भंते ! भरहे अहीइ वा अयगराइ वा ?, हंता अत्थि, नो चेव णं तेसिं मणुआणं आबाहं वा जाव पगइभद्दया णं ते वालगगणा पन्नत्ता, अत्थि णं भंते ! भरहे डिंबाइ वा डमराइ वा कलहबोलखारवइरमहाजुद्धाइ वा महासंगामाइ वा महासत्थपडणाइ वा महापुरिसपडणाइ वा ?,

*गोयमा ! नो इणट्ठे समट्ठे, ववगयवेरा णुबंधा णं ते मणुआ पण्णत्ता ।*

*अत्थि णं भंते ! भरहे वासे दुब्भूआणि वा कुलरोगाइ वा गाम० मंडल० पोट्ट० सीसवेअणाइ वा कण्णोट्ठअच्छिणहदंतवेअणाइ वा कासाइ वा सासाइ वा सोसाइ वा दाहाइ वा अरिसाइ वा अजीरगाइ वा दओदराइ वा पंडुरोगाइ वा भगंदराइ वा एगाहिआइ वा बेआहिआइ वा तेआहिआइ वा चउत्थाहिआइ वा इंदग्गहाइ वा धणुग्ग० खंदग्ग० कुमारग्ग० जक्खग्ग० भूअग्ग० मच्छसूलाइ वा हिअयसूलाइ वा पोट्ट० कुच्छि० जोणिसूलाइ वा गाममारीइ वा जाव सण्णिवेसमारीइ वा पाणिक्खया जणक्खया कुलक्खया वसणब्भूअमणारिआ ?, गो० ! नो इणट्ठे समट्ठे, ववगयरोगायंका णं ते मणुआ ।*

वृ. 'अत्थि ण'मित्यादि, अस्तीत्यस्य त्यादिप्रतिरूपकाव्ययस्य वचनत्रयसदृशरूपत्वेन सन्तीति व्याख्येयं, सन्ति भदन्त ! यस्यां समायां भरतवर्षे गेहानि वा प्रतीतानि गेहेषु आयतनानि वा-उपभोगार्थमागमनानिति उत्तरसूत्रं तु प्राग्वत्, एतेन तदा मनुष्यादिप्रयोगजन्यगृहाभावस्तत एवतेषामुपभोगार्थं तत्रापतनाभावश्चोक्त इति ।

'अत्थि णं भंते ! तीसे' इत्यादि, उक्तवक्ष्यमाणेषु एषु, युग्मिसूत्रेषु प्रश्नोत्तरालापकयोर्वाक्ययोर्योजना प्राग्वत्, नवरं ग्रामा वृत्यावृताः कराणां गम्या वा यावत्करणात्नगरादिपरिग्रहः, तत्र नगराणि चतुर्गोपुरोद्भासीनि न विद्यते करो येषु तानि नकराणि वा-कररहितानि, पृषोदरादित्वात्सिद्धिः, निगमाः प्रभूतवणिग्वर्गावासाः, पांसुप्राकारनिबद्धानि क्वचिन्नद्यद्रिवेष्टितानि वा खेटानि, क्षुल्लकप्राकारवेष्टितानि जलस्थलपथयुक्तानि रत्नयोनिभूतानि वा, सिन्धुवेलावलयितानि द्रोणमुखानि, आकराः-हिरण्याकरादयः, आश्रमाः-तापसाश्रयाः, सम्बाधाः-शैलश्रृङ्गस्थायिनो निवासाः यात्रासमागतप्रभूतजननिवेशा वा, राजधान्यो यत्र नगरे पत्तने अन्यत्र वा स्वयं राजा वसति, सन्निवेशाः-यत्र सार्थकटकादेरावासा भवन्ति ?

अत्रोत्तरं-नायमर्थः समर्थः, अत्रार्थे विशेषणद्वारा हेतुमाह-यथेप्सितं-इच्छामनतिक्रम्य कामं-अत्यर्थं गामिनो-गमनशीलास्ते मनुजाः, अत्रात्यर्थकथनेन तेषां सर्वदापि स्वातन्त्र्यमुक्तं, ग्रामनगरादिव्यवस्थायां तु नियताश्रयत्वेन तेषामिच्छानिरोधः स्यात्, जीवाभिगमे तु 'जहेच्छिअकामगामिणो' इत्यस्य स्थाने 'जं नेच्छिअकामगामिणो' इति पाठः, तत्रायमर्थः-यद्-यस्मात्नेप्सितकामगामिनः न इच्छितं-इच्छाविषयीकृतं नेच्छितं, नायं नञ् किन्तु नशब्द इत्यनादेशाभावः, यथा 'नैके द्वेषस्य पर्याया' इत्यत्र, नेच्छितं-इच्छाया अविषयीकृतं कामं-स्वेच्छया गच्छन्तीत्येवंशीला नेच्छितकामगामिनस्ते मनुजा इति, यद्यपि गृहसूत्रेणैवार्थापत्त्या ग्रामाद्यभावः सूचितस्तथाप्यव्युत्पन्नविनेयजनव्युत्पत्त्यर्थमेतत्सूत्रोपन्यासः ।

'अत्थि ण'मित्यादि, अत्रासि-खड्गः यमुपजीव्य जनः सुखवृत्तिको भवति यद्वा साहचर्यलक्षणया असिशब्देन अत्र अस्युपलक्षिताः पुरुषा गृह्यन्ते, एवमग्रेतनविशेषणेष्वपि यथायोगं ज्ञेयं, मषी चदुपजीवनेन लेखककला, कृषि-कर्षणं वणिक्-पण्यावः पणितं-क्रयाणकं वाणिज्यं-सत्यानृतमर्पणग्रहणादिषु न्यूनाधिकाद्यर्पणमित्यर्थ ?, नायमर्थः समर्थः, यतस्ते व्यपगतानि असिमषीकृषिवर्णिकपणितवाणिज्यानि येभ्यस्ते तथा मनुजाः प्रज्ञप्ता इति ।

'अत्थि ण'मित्यादि, हिरण्यं-रूप्यमघटितसुवर्णं वा सुवर्णं-घटितं कांस्यं-प्रतीतं दूष्यं-

वस्त्रजाति मणि-चन्द्रकान्तादि मौक्तिकं-व्यक्तं शङ्खो-दक्षिणावर्त्तादि शिला-गन्धपेषणादिका प्रवालं-प्रतीत रक्तरत्नानि-पद्मरागादीनि स्वापतेयं-रजतसुवर्णादिद्रव्यं, ननु यदि हिरण्यं रूप्यं तदा रूप्यखानी तत्सम्भवः यदि चाघटितसुवर्णं तदा सुवर्णखानी परं घटितं सुवर्णं तथा ताम्रत्रपुसंयोगजं कांस्यं तथा तन्तुसन्तानसम्भवं दूष्यं तत्र कथं सम्भवेयुः ?, शिल्पिप्रयोगजन्यत्वात् तेषां, न च तान्यत्रातीतो-त्सर्पिणीसत्कनिधानगतानि सम्भवंतीति वाच्यं, सादिसपर्यवसितप्रयोगबन्धस्यासङ्ख्येयकाल-स्थितेरसम्भवात्, एगोरुगोत्तरकुरुसूत्रयोरेतदालापकस्याकथनप्रसङ्गात्, उच्यते, संहरणप्रवृत्त-क्रीडाप्रवृत्तदेवप्रयोगात् तानि सम्भवन्तीति सम्भाव्यते, इहोत्तरं-हन्तेति वाक्यारम्भे कोमलामन्त्रणे वा, अस्ति हिरण्यादिकमिति शेषः, नैव तेषां मनुजानां परिभोग्यतया हव्यमिति-कदाचिदा-गच्छति। 'अत्थि णं'मित्यादि, अस्ति राजा इति वा चक्रवर्त्यादि युवराजो (वा) राज्यार्ह इतियावत् ईश्वरो-भोगिकादि अणिमाद्यष्टविधैश्वर्ययुक्तो वा तलवरः-सन्तुष्टनरपतिप्रदत्तसौवर्णपट्टालङ्कृतशि-रस्कः राजादिशुल्काधिकारी माडम्बिकः-पूर्वोक्तमडम्बाधिपः कौटुम्बिकः कतिपयकुटुम्बप्रभुः इभ्यो-यद्द्रव्यनिचयान्तरितो हस्त्यपि न दृश्यते, इभो-हस्ती तत्प्रमाणं द्रव्यमर्हतीति निरुक्तादिभ्यः, श्रेष्ठी-श्रीदेवताध्यासितसौवर्णपट्टालङ्कृतशिराः पुरज्येष्ठो वणिग्विशेषः, सेनापति-यदायत्ता नृपेण चतुरङ्गसेना कृता भवति, सार्थवाहो-यो गणिमादि क्रयाणकं गृहीत्वा देशान्तरं गच्छन् सहचारिणा-मध्वसहायो भवति ?, अत्रोत्तरम्-नायमर्थः समर्थः, व्यपगता ऋद्धिर्विभवैश्वर्यं सत्कारश्च-सेव्यता-लक्षणो येभ्यस्ते तथा –

'अत्थि णं'मित्यादि, दास-आमरणं क्रयक्रीतः गृहदासीपुत्रो वा प्रेष्यः-प्रेषणार्हो जनो दूतादि शिष्य-उपाध्यायस्योपासकः शिक्षणीय इत्यर्थः, भृतको-नियतकालमवधिं कृत्वा वेतनेन कर्मकरणाय धृतः दुष्कालादौ निश्रितो वा, भागिको-द्वितीयादिभागग्राही, कर्मकरः-छगणपुञ्जाद्यपनेता, अत्राह-नायमर्थः समर्थः, यतस्ते मनुजा व्यपगतमाभियोग्यं-आभियोगिकं कर्म येभ्यस्ते तथा, अत्राभियोग्यशब्दात् कर्मणि यप्रत्यये ''व्यञ्जनात् पञ्चमान्तस्थायाः स्वरूपे वा'' इत्यनेनैकस्य यकारस्य लोप इति। 'अत्थि णं'मित्यादि, माता या प्रसूते पिता यो बीजं निषिक्तवान् भ्राता यः सहजातो भगिनी सहजाता भार्या-भोग्या जन्यः पुत्रः जन्या स्त्र दुहिता स्नुषा-पुत्रवधूः, भग०-हन्तेत्यादि, नैव चः पुनरर्थे तेषां मनुजानां तीव्रं-उत्कटं प्रेमरूपं बन्धनं समुत्पद्यते, तथाविधक्षेत्रस्वभावात् प्रतनुप्रेमबन्धास्ते युग्मिन इति, ननु चतुर्षु कुटुम्बमनुष्येषु स्नुषासम्बन्धो यथा आपेक्षिकस्तथा भ्रातृव्यभागिनेयादिसम्बन्धः कथं न सम्भवी ?, उच्यते, कुबेरदत्तकुबेरदत्तास्व-कभाववत् सोऽप्युपलक्षणाद् ग्राह्यः, परं स्फुटव्यवहारत्वेनेम एव सम्बन्धाः, 'अत्थि णं०', अरि-सामान्यतः शत्रु वैरिको-जातिनिबद्धवैरोपेतः घातको-योऽन्येन घातयति वधकः-स्वयं हन्ता व्यथको वा-चपेटादिना ताडकः प्रत्यनीकः-कार्योपघातकः प्रत्यमित्रो-यः पूर्वं मित्रं भूत्वा पश्चादमित्रो जातः अमित्रसहायो वा ?, नायमिति, यतो व्यपगतो वैरज्योऽनुशयः-पश्चात्तापो येभ्यस्ते तथा, वैरं कृत्वा हि तदुत्थफलविपाके पुमाननुशेते इति।

'अत्थि णं' मित्यादि, अत्र मित्रं-स्नेहास्पदं वयस्यः-समानवयाः गाढतरस्नेहास्पदं ज्ञातकः-स्वज्ञातीयः यद्वा ज्ञातकः संवासादिना ज्ञातः सहजपरिचित इत्यर्थः सङ्घाटिकः-सहचारी सखा-समानखादनपानो गाढतमस्नेहास्पदं सुहृदमित्रमेव सकलकालमव्यभिचारि हितोपदेशदायि च

साङ्गतिकः-सङ्गतिमात्रघटितः, हन्तेत्यादि पूर्ववत्, न चैव तेषां मनुजानां तीव्रं रागरूपं बन्धनं समुत्पद्यते । 'अत्थि णं' मित्यादि, अत्र चाह-आहूयन्ते स्वजनास्ताम्बूलदाना यत्र स आवाहो-विवाहात् पूर्वं ताम्बूलदानोत्सवः विवाहः-परिणायनं यज्ञः-प्रतिदिवसं स्वस्वेष्टदेवतापूजा श्राद्धं-पितृक्रिया स्थालीपाकः-सम्प्रदायगम्यः मृतपिण्डनिवेदनानि-मृतेभ्यः स्मशाने तृतीयनवमादिषु दिनेषु पिण्डनिवेदनानि-पिण्डसमर्पणानि ?, अत्रोत्तरं-नायमर्थः समर्थः, व्यपगतावाह-विवाहयज्ञश्राद्धस्थालीपाकमृतपिण्डनिवेदनास्ते मनुजाः ।

'अत्थि णं' मित्यादि इन्द्रः प्रतीतस्तस्य महः-प्रतिनियतदिवसभावी उत्सवः, एवमग्रेऽपि, स्कन्दः-कार्त्तिकेयः नागो-भवनपतिविशेषः यक्षभूतौ-व्यन्तरविशेषौ 'अगड' त्ति अवटः-कूपः तडागः-सरः द्रहनदीरूक्षपर्वताः प्रतीताः स्तूपः-पीठविशेषः चैत्यं च-इष्टदेवतायतनं, अत्राह-यपगतमहिमानस्ते मनुजाः प्रज्ञप्ताः । 'अत्थि णं' मित्यादि, नटा-नाटयितारः तेषां प्रेक्षा-प्रेक्षणकं कौतुकदर्शनोत्सुकजनमेलकः, एवमग्रेऽपि, नृत्यन्ति स्म नृत्ताः-कर्त्तरि क्तः प्रत्ययः नृत्तविधायिनः जल्ला-वरत्राखेलकाः मल्ला भुजयुद्धकारिणः मौष्टिका-मल्ला एव ये मुष्टिभि प्रहरन्ति विडम्बका-विदूषकाः मुखविकारादिभिर्जनानां हास्योत्पादकाः कथकाः-सरसकथाकथनेन श्रोतृरसोत्पत्तिकारकाः प्लवका-ये झम्पादिभिर्गर्त्तादिकमुल्लवन्ते गर्त्तादिलङ्घनकारिणः इत्यर्थः अथवा तरन्ति नद्यादिकं ये इति लासका-ये रासकान् ददति तेषां प्रेक्षा, उपलक्षणा दाख्यायकप्रेक्षादिग्रहः, अत्रोत्तरं-नायमर्थः समर्थः, यतो व्यपगतकुतूहलास्ते मनुजाः प्रज्ञप्ताः ।

'अत्थि णं' मित्यादि, अत्र शकटानि प्रतीतानि रथाः-क्रीडारथादयः यायन्ते-गम्यन्ते एभिरिति व्युत्पत्त्या यानानि-उक्तवक्ष्यमाणातिरिक्तानि गन्त्र्यादीनि युग्यं-पुरुषोत्क्षिप्तमाकाशयानं जम्पानमित्यर्थः 'गिल्लि' त्ति पुरुषद्वयोत्क्षिप्त डोलिका 'थिल्लि' त्ति वेसरादिद्वयविनिर्मितो यानविशेषः शिबिका-प्रतीता स्यन्दमानिका-पुरुषायामप्रमाणः शिबिकाविशेषः, अत्र प्रतिवचः नायमित्यादि, पादचारेण न तु शकटादिचारेण विहारो-विचरणं येषां ते तथा मनुजा इत्यादि ।

'अत्थि णं' मित्यादि, अत्र गोमहिष्यजाः स्पष्टाः, एडका-उरभ्री, आह-'नो चेवे' त्यादि न च तेषां मनुष्याणां परिभोग्यतया कदाचिदागच्छन्ति, नैतासां दुग्धादि तेषामुपभोग्यमितियावत्। 'अत्थि णं' मित्यादि, अत्राश्वाः हस्तिनः उष्ट्राः अतीताः गोणा-गावः गवयोवनगवः अजैडकौ स्पष्टौ प्रश्रया-द्विखुरा आटव्यपशुविशेषाः मृगवराही व्यक्तौ रुरवो-मृगविशेषाः शरभा-अष्टापदाः चमरा-अरण्यगवो यासां पुच्छकेशाश्चामरतया भवन्ति शबरा-येषामनेकशाखे श्र ङ्गे भवतः कुरङ्गगोकर्णौ मृगभेदौ श्र ङ्गवर्णादिविशेषाश्च सामर्थ्यगम्याः, अत्रोत्तरम्-हन्तेति कोमलामन्त्रणे, सन्ति, न चैव तेषां प्रथमसमाभाविनां मनुष्याणां यथासम्भवमारोहणादिकार्येषूपयुज्यन्ते ।

अथ नाखरप्रश्नसूत्रमाह-'अत्थि णं' मित्यादि, अत्र सिंहाः-केसरिणः व्याघ्राः-प्रतीताः वृका-ईहामृगाः द्वीपिनः-चित्रकाः ऋक्षा-अच्छभल्लाः तरक्षवो-मृगादनाः श्रृ गाला व्यक्ताः विडाला-मार्जाराः शुनकाः-श्वानः कोकन्तिका-लोमटका ये रात्रौ को को इत्येवं रवन्ति कोलशुनका-महाशकराः, अत्रोत्तरम्-सन्ति, परं नैव तेषां मनुजानां आबाधां वा-ईषद्बाधां व्याबाधां वा-विशेषेणाबाधां छविच्छेदं वा-चर्मकर्त्तनं उत्पादयन्ति, यतः प्रकृतिभद्रकास्ते श्वापदगणाः प्रज्ञप्ताः। 'अत्थि णं' मित्यादि, अत्र शालः-कलमादिविशेषाः व्रीहयः-सामान्यतः गोधूमयवौ प्रतीतौ यवयवा-

यवविशेषाः 'कल'त्ति कलायास्त्रीपुटाख्या वृत्तचणका वा मसूरा-मालवादिदेशप्रसिद्धा धान्यविशेषा मुद्गमाषतिलाः कुलत्थाः-चपलकतुल्याश्चिपिटा भवन्ति निष्पावा-वल्लाः 'आलिसंदग'त्ति चपलकाः अलसी-धान्यं यस्य तैलं असलीतैलमिति प्रतीतं 'कुसुंभ'त्ति लट्टाकाणाः यत्पुष्पैर्वस्त्रादिरागः समुत्पाद्यते कोद्रवाः-प्रतीताः कङ्गवः-पीततण्डुलाः 'वरग'त्ति वरट्टी धान्यविशेषः सपादलक्षादिषु प्रसिद्धः रालकः-कङ्गुविशेष एव, स चायं (विशेषः) बृहच्छिराः कङ्गुरल्पशिरा रालकः, शणं-त्वक्प्रधाननालो धान्यविशेषः सर्षपाः प्रतीताः मूलकं-शाकविशेषः तस्य बीजानि, प्राकृतत्वात् ककारलोपसन्धिभ्यां निष्पत्ति, अत्रोत्तरम्-सन्ति, न च तेषां मनुजानां परिभोग्यतया कदाचिदायान्ति कल्पद्रुमपुष्पफलाद्याहारकत्वात्तेषामिति ।

'अत्थि णं'मित्यादि, अत्र गर्त्ता-महती खड्डा दरी-मूषिकादिकृता लध्वी खड्डा अवपातः-प्रपातस्थानं यत्र चलन् जनः सप्रकाशेऽपि पतति प्रपातो-भृगुर्यत्र जनः काञ्चित् कामनां कृत्वा प्रपतति विषमं-दुरारोहावरोहस्थानं विज्जलं-स्निग्धकर्दमाविलस्थानं यत्र जनोऽतर्कित एव पतति, नायमर्थः समर्थः, न सन्तीत्यर्थः, भरतवर्षे बहुसमरमणीयो भूमिभागो यतः प्रज्ञप्तः 'से जहानामए' इत्यादि वर्णकः प्राग्वद् ज्ञेयः । 'अत्थि णं'मित्यादि, अत्र स्थाणुः-ऊर्ध्वकाष्ठं कण्टकः-स्पष्ट तृणान्येव कचवरः पत्राण्येव कचवरः, अत्राह-'नें' त्यादि, यतो व्यपगतस्थाणुयावत्पत्रकचवरा सा-सुषमसुषमा नाम्नी समा-अरकः प्रज्ञप्ता । 'अत्थि णं'मित्यादि, अत्र दंशमशकयूकालिक्षाः स्पष्टाः ढिंकुणा-मत्कुणाः यदाहुः श्रीहेमसूरयो देश्यां-''मक्कुणए ढिंकुण खंकुणा तहा ढंकणी पिहाणीए'' इति, पिशुकाः-चञ्चटाः, अत्राचार्य-व्यपगतदंशमशकयूकालिक्षा तथा ढिंकुणपिशुकोपद्रवविरहिता, पश्चात् कर्मधारयः, सा समा प्रज्ञप्ता, अत्र सूत्रे व्यपगतेत्यादिविशेषणस्य कर्मधारयं विना व्याख्यान-करणे प्रस्तुतमूलादर्शे विरहिअत्ति पदं प्रमादापतितमिति ज्ञेयं, तदर्थस्य तत्त्वतो व्यपगतपदेनैवोक्तत्वात् ।

'अत्थि णं'मित्यादि, अत्र अहयः-सामान्यतः सर्पाः अजगराः-महाकायसर्पाः शेषं पूर्ववत्, यतः प्रकृतिभद्रकास्ते व्यालगणाः-सरिसृपजातीयगणा-प्रज्ञप्ता इति । अत्र ग्रहयुद्धसूत्रं जीवाभिग-मादिषु साक्षाद् दृष्टमपि एतत्सूत्रादर्शेषु न दृष्टमिति न व्याख्यायामप्युलेखि । 'अत्थि णं'मित्यादि, अत्र डिम्बडमरौ पूर्ववत्, कलहो-वचनराटि बोलो-बहूनामार्त्तानामव्यक्ताक्षरध्वनिकः कलकलः क्षारः-परस्परं मत्सरः वैरं-परस्परमसहमानतया हिंस्यहिंसकताध्यवसायः महायुद्धानि-व्यवस्थाहीना महारणाः महासङ्ग्रामाः चक्रादिव्यूहरचनोपेततया सव्यवस्था महारमाः महाशस्त्राणि-नाग-बाणादीनि तेषां निपतनानि-हिंसाबुध्या रिपुमोचनानि, महाशस्त्रत्वं चैतेषामद्भुतविचित्र-शक्तिकत्वात्, तथाहि-नागबाणा धनुष्यारोपिता बाणाकारा मुक्ताश्च सन्तो जाज्वल्यमाना-सह्योल्कादण्डरूपास्ततः परशरीरे सङ्क्रान्ता नागमूर्त्तीभूय पाशत्वमश्नुवते, तामसबाणास्तु सकलरणोर्व्वीव्यापिमहान्धतमसरूपतया पवनबाणाश्च तथाविधपवनस्वरूपतया वह्निबाणाश्च तादृशवह्निप्रकारेण परिणताः प्रतिवैरिवाहिनीषु विघ्नोत्पादका भवन्ति, एवमन्येष्वपि स्वस्वनामानुसारेण स्वस्वजन्यकार्यमुत्पादयन्ति, उक्तं च-

॥ १ ॥ ''चित्रं श्रेणिक ! ते बाणा, भवन्ति धनुराश्रिताः ।
उल्कारूपाश्च गच्छन्तः, शरीरे नागमूर्त्तयः ॥

॥ २ ॥ क्षणं बाणाः क्षणं दण्डाः, क्षणं पाशत्वमागताः ।
आमरा ह्यस्त्रभेदास्ते, यथाचिन्तितमूर्त्तयः ॥

महापुरुषाः-छत्रपत्यादयस्तेषां पतनानि-कालधर्मनयनानि, तत एव महारुधिराणि-छत्रपत्यादिसत्करुधिराणि तेषां निपतनानि-प्रवाहरूपतया वहनानि, अत्रोत्तरम्-नेत्यादि, यतस्ते व्यपगतो वैर्यानुबन्धः-सन्तानभावेन प्रवृत्तिर्येभ्यस्ते तथा मनुजाः प्रज्ञप्ताः ।

'अत्थि णं'मित्यादि, अत्र दुष्टा-जनधान्यादीनामुपद्रवहेतुत्वाद्भूताः-सत्त्वा उन्दरशलभप्रमुखा ईतय इत्यर्थः कुलरोगग्रामरोगमण्डलरोगा यथोत्तरं बहुस्थानव्यापिनः, 'पोट्ट'त्ति देश्यत्वाद् उदरं शीर्षं-मस्तकं तद्वेदना कर्णोष्ठाक्षिनखदन्तवेदनाः कण्ठ्याः, कासश्वासौ व्यक्तौ, शोषः-क्षयरोगः दाहः-स्पष्टः अर्शो-गुदाङ्कुरः अजीर्णं-व्यक्तं दकोदरं-जलोदरं पाण्डुरोगभगन्दरौ प्रतीतौएकाहिको-यो ज्वर एकादिनाऽन्तरित आयाति, एवं द्विदिनान्तरितो व्याहिकः त्रिभिर्दिनैरन्तरितस्त्र्याहिकः चतुर्थेन दिनेनान्तरितश्चतुर्थाहिकः इन्द्रग्रहादयस्तु उन्मत्तताहेतवो व्यन्तरादिदेवकृतोपद्रवाः धनुर्ग्रहः-सम्प्रदायगम्यः यावत्करणाग्रगरमारिप्रभृतिपरिग्रहः, प्राणिक्षयो-गवादिक्षयः जनक्षयो-मनुष्यक्षयो कुलक्षयो-वंशक्षयः, एते च कथम्भूता इत्याह-व्यसनभूता-जनानामापद्भूताः अनार्या-पापात्मकाः, अत्र विभक्तिलोपमकीरागमौ प्राकृतत्वात् ।

अत्राह-नेत्यादि, व्यपगतो रोगः-चिरस्थायी कुष्ठादिरातङ्कः-आशुघाती शूलादिर्येभ्यस्ते तथा मनुजाः प्रज्ञप्ताः, हे श्रमण ! हे आयुष्मन् ! अथैषां भवस्थितिं पृच्छति ।

**मू. (३८)** *तीसे णं भंते ! समाए भारहे वासे मणुआणं केवइअं कालं ठिई पन्नत्ता ?, गोअमा ! जहण्णेणं देसूणाइं तिण्णि पलिओवमाइं उक्कोसेणं देसूणाइं तिण्णि पलिओवमाइं, तीसे णं भंते ! समाए भारहे वासे मणुआणं सरीरा केवइअं उच्चत्तेणं प० गो० जहन्नेणं तिन्नि गाउआइं उक्कोसेणं तिन्नि गाउआइं ।*

*ते णं भंते ! मणुआ किंसंघयणी प० ?, गो० ! वइरोसभणारायसंघयणी प०, तेसि णं भंते ! मणुआणं सरीरा किंसंठिआ प० ?, गो० ! समचउरंससंठाणसंठिआ, तेसि णं मणुआणं बेच्छप्पण्णा पिट्ठकरंडयसया प० सम० ! ।*

*ते णं भंते ! मणुआ कालमासे कालं किच्चा कहिं गच्छन्ति कहिं उववज्जंति ?, गो० ! छम्मासावसेसाउआ जुअलगं पसवंति, एगूणपन्नं राइंदिआइं सारक्खंति संगोवेंति २ त्ता कासित्ता छींइत्ता जंभाइत्ता अक्किट्ठा अव्वहिआ अपरिआविआ कालमासे कालं किच्चा देवलोएसु उववज्जंति, देवलोअपरिग्गहा णं ते मणुआ पन्नत्ता ।*

*तीसे णं भंते ! समाए भरहे वासे कइविहा मणुस्सा अणुसज्जित्था ?, गो० ! छव्विहा पं०, तं०-पम्हगंधा १ मिअगंधा २ अममा ३ तेअतली ४ सहा ५ सणिचारी ६ ।*

**वृ.-** प्रायः कण्ठ्यं सूत्रमेतत्, नवरं देशोनानि त्रीणि पल्योपमानि स्थितिर्युग्मिनीं प्रतीत्य मन्तव्या, देशश्चात्र पल्योपमासङ्ख्येयभागरूपो ज्ञेयो, यदुक्तं जीवाभिगमे देवकुरूत्तरकुरुस्त्रय-मधिकृत्य-"देवकुरुउत्तरकुरुअकम्मभूमगमणुस्सित्थीणं भंते ! केवइअं कालं ठिई प० ?, गो० ! देसूणाइं तिन्नि पलिओवमाइं पलिओवमस्स असंखेज्जइभागेणं ऊणगाइं, उक्कोसेणं तिन्नि पलि०"

अथावगाहनां पृच्छन्नाह-'तीसे णं' सुगमं, नवरं देशोनास्त्रयः क्रोशा अपि युग्मिनीं प्रतीत्य "उच्चत्तेणं नराण थोवोणमूसिआओ' वचनात्, यद्यपि 'छधनुसहस्समूसिआओ' इति पूर्वसूत्रणैतेषामवगाहना लभ्यते तथापि जघन्योत्कृष्टविशेषविधानार्थं पुनरवगाहनासूत्रारम्भः ।

'ते णं'मित्यादि, अत्र किं च तत्संहननं चेति कर्मधारयः, पश्चादसत्यर्थे इनत्ययः, 'गौतमे' त्यादि, वज्रर्षभनाराचसंहननास्ते मनुजा इति, 'तेसि णं' मित्यादि सुगमं, नवरं किं संस्थितं-संस्थानं येषां ते तथा, यद्यपि पूर्ववर्णकसूत्रे विशेषणद्वारा एषां संहननादिकमाख्यातं तथापि सर्वेषामपि तत्कालभाविनामेकसंहननादिमात्रताख्यापनार्थमस्य सूत्रस्य प्रश्नोत्तरपद्धत्या निर्देशेन न पौनरुक्त्यमाशङ्कनीयं, अत एवाग्रवर्त्तिनी पृष्ठकरण्डकसूत्रे 'तेसि णं ! भंते मणुआणं'मित्यत्र 'केवइआ पिट्ठकरंडकसया पन्नत्ता ?, गोअमा' इति प्रश्नसूत्रांशोऽध्याहार्य इति 'तेसि णं'मित्यादि, तेषां पृष्ठकरण्डकशतानि-पूर्वोक्तस्वरूपामि कियन्ति ?, अत्र भगवानाह-द्वे षटपञ्चाशदधिके पृष्ठकरण्डकशते प्रज्ञप्ते इत्यर्थः ।

'ते णं'मित्यादि, ते मनुजाः कालस्य-मरणस्य मासो यस्मिन् कालविशेषे अवश्यं कालधर्मः तस्मिन् कालं कृत्वा, मासस्योपलक्षणत्वात् कालदिवसे इत्याद्यपि द्रष्टव्यं, क्व गच्छन्ति-क्वोत्पद्यन्ते इति प्रश्नद्वयेऽपि 'देवलोएसु उववज्जंती'त्येकमेवोत्तरं गमनपूर्वकत्वादुत्पादस्योत्पादाभिधाने गमनं सामर्थ्यादवगतमेवेत्याशयादिति, अथवा गतिर्देशान्तरप्राप्तिरपि भवतीति क्व गच्छन्तीत्येतदेव पर्यायेणाचष्टे-'उत्पद्यन्ते' उत्पत्तिधर्माणो भवन्ति, अत एवोत्तरसूत्रे 'उववज्जंती'त्येवोक्तं, स्वाम्याह-'गौतमे'ति षण्मासावशेषायुषः कृतपरभवायुर्बन्धा इति गम्यं, युगलकं प्रसुवत इति, एतेषामायुस्त्रिभागादौ परभवायुर्बन्धाभावमाह, तद्वैकोनपञ्चाशतं रात्रिंदिवान्यहोरात्राणि यावत्, संरक्षन्ति-उचितोपचारकरणतः पालयन्ति-संगोपयन्ति अनाभोगेन हस्तस्खलनकष्टेभ्यः, संरक्ष्य सङ्गोप्य च कासित्वा-कासं विधाय क्षुत्वा-क्षुतं विधाय जृम्भयित्वा-जृम्भां विधाय अक्लिष्टाः-स्वशरीरोत्थक्लेशवर्जिताः अव्यथिताः-परेणानापादितदुःखा अपुरितापिताः-स्वतः परतो वाऽनुपजालकायमनः परितापाः ।

एतेन तेषां सुखमरणमाह, कालमासे कालं कृत्वा देवलोकेषु-ईशानान्तसुरलोकेषूत्पद्यन्ते, स्वसमहीनायुष्कसुरेष्वेव तदुत्पत्तिसम्भवात्, अत्र कालमास इति कथनेन तत्कालभाविमनुजाना-मकालमरणाभावमाह, अपर्याप्तकान्तर्मुहूर्त्तकालानन्तरमनपवर्त्तनीयायुष्कत्वात्, अत्राह कश्चित्-ननु सर्वथा वर्त्तमानभवायुःकर्मपुद्गलपरिशाटकालस्यैव मरणकालत्वात् कथमकालमरणमुपपद्यते, यदभावो वर्त्तमानसमायां निरूप्यते इति चेत्, सत्यं, द्विधा ह्यायुर्नरतिरश्चां-अपवर्त्तनीयमनपवर्त्तनीयं च, तत्राद्यं बहुकालवेद्यं सत्तथाऽध्यवसायपोगजनितश्लथबन्धनबद्धतयोदीर्णसर्वप्रदेशाग्रम-पवर्त्तनाकरणवशादल्पीयः कालेन रज्जुदहनन्यायेन क्लिन्नवासोन्यायेन मुष्टिजलन्यायेन वा युगप-द्वेद्यते, इतरत्तु गाढबन्धनबद्धतयाऽनपवर्त्तनायोग्यं क्रमेण वेद्यते, तेन बहुषु वर्त्तमनारकोचितमन-पवर्त्तनीयमायुः क्रमेणानुभवत्सु सत्सु यदैकस्य कस्यचिदायुः परिवर्त्तते तदा तस्य लोकैरकाल-मरणमिति व्यपदिश्यते, 'पढमो अकालमच्चू' इत्यादिवत्, तेनान्यदा अकालमणस्यापि सम्भवात्त-तदानीं तन्निषेध इति न दोष इति ।

अथ कथं ते देवलोकेषूत्पद्यन्ते इत्याह-यतो देवलोको-भवनपत्याद्याश्रयरूपस्तस्य तथाविधकालस्वभावात् तद्योग्यायुर्बन्धेन परिग्रहः-अङ्गीकारो येषां ते तथा देवलोकगामिन इत्यर्थः, एषां चैकोनपञ्चाशद्दिनावधि परिपालनेन केचिदेवमवस्थामाहुः-समोत्तानशया लिहन्ति दिवसान् स्वाङ्गुष्ठमार्यास्ततः, कौ रिङ्खन्ति पदैस्ततः कलगिरो यान्ति स्खलद्भिस्ततः ।

स्थेयोभिश्च ततः कलागणभृतस्तारुण्यभोगोद्गताः सप्ताहेन ततो भवन्ति सुदृग्दानेऽपि योग्यास्ततः अत्र व्याख्या-आर्या सप्त दिवसान्-जन्मदिवसादिकान् यावत् उत्तानशयाः सन्तः स्वाङ्गुष्ठं लिहन्ति, ततो द्वितीयसप्तके पृथिव्यां रिङ्गन्ति, ततस्तृतीयसप्तके कलगिरो-व्यक्तवाचो भवन्ति, ततश्चतुर्थसप्तके स्खलद्भिः पदैर्यान्ति, ततः पञ्चमसप्तके स्थेयोभिः-स्थिरैः पदैर्यान्ति, ततः षष्ठसप्तके कलागणभृतो भवन्ति, ततः सप्तमसप्तके तारुण्यभोगोद्गताः भवन्ति केचिच्च सुदृग्दानेऽपि-सम्यक्त्वग्रहणेऽपि योग्या भवन्तीति क्रमः, इदं चावस्थाकालमानं सुषमा-सुषमायामादौ ज्ञेयं, ततः परं किञ्चिदधिकमपि सम्भाव्यते इति, अत्र प्रस्तावाद् कश्चिदाह-अथ तदाऽग्निसंस्कारादेरप्रादुर्भूतत्वेन मृतकशरीराणां का गतिरिति ?, उच्यते, भारण्डप्रभृति-पक्षिणस्तानि तथाजगत्स्वाभाव्यात् नीडकाष्ठमिवोत्पाट्य मध्येसमुद्रं क्षिपन्ति, यदुक्तं -

॥ १ ॥ पुराहि मृतमिथुन शरीराणि महाखगाः
नीडकाष्ठ मिवोत्पाट्य, सद्यश्चिक्षिपुरंबुधौ

"किञ्चात्र श्लोके अम्बुधावित्युपलक्षणं तेन यथायोगं गङ्गाप्रभृतिनदीष्वपि ते तानि क्षिपन्तीति ज्ञेयं, ननु चोत्कृष्टतोऽपि धनुःपृथक्त्वमानशरीरैस्तैरुत्कृष्टप्रमाणानि तानि कथं सुवहानीत्यत्रापि समाधीयते-युग्मिशरीराणामम्बुधिक्षेपस्य महाखगकृतत्वेन बहुषु स्थानेषु प्रतिपादनादवसीयते यत् 'पक्खी धणुह पुहत्तमित्यत्र सूत्रे जात्यपेक्षया एकवचननिर्देशस्तेन क्वचिद् बहुवचनं व्याख्येयं, तथा च सति पक्षिशरीरमानस्य यथासम्भवमरकापेक्षया बहुबहुतरबहुतमधनुः-पृथक्त्वरूपस्यापि सम्भवात् तत्कालवर्त्तियुग्मिनरहस्त्यादिशरीरापेक्षया बहुधनुःपृथक्त्वपरिमाण-शरीरैस्तैर्न किञ्चिदपि तानि दुर्वहानीति न काप्यनुपपत्तिरिति सम्भाव्यते, तत्त्वं बहुश्रुतगम्यं, एवं च सूत्रे एखवचननिर्देशेऽपि बहुवचनेन व्याख्यानं श्रीमलयगिरिपादैरपि श्रीबृहत्संग्रहणिवृत्तौ देवानामाहारोच्छ्वासान्तरकालमानाधिकारे-

॥ १ ॥ "दस वाससहस्साइं समयाई जाव सागरं ऊणं ।
दिवसमुहुत्तपुहुत्ता आहारुस्सास सेसाणं ॥

इत्यस्या गाथाया अर्थकथनावसरे कृतमस्तीति सर्वं सुस्थमिति । अथ तदा मनुजानाम-कत्वमुत नानात्वमिति प्रश्नयन्नाह-'तीसे णं'मित्यादि, तस्यां समायां भगवन्! भरते वर्षे कतिविधाः-जातिभेदेन कतिप्रकारा कतिप्रकारा मनुष्या अनुषक्तवन्तः-कालात्कालान्तरमनुवृत्तवन्तः, सन्ततिभावेन भवन्ति स्मेत्यर्थ, भगवानाह-गौतम ! षड्विधाः, तद्यथा-

पद्मगन्धाः १ मृगगन्धाः २ अममा ३ स्तेजस्तलिनः ४ सहाः ५ शनैश्चारिणः ६, इमे जातिवाचकाः शब्दाः संज्ञाशब्दत्वेन रूढाः, यथा पूर्वमेकाकाराऽपि मनुष्यजातिस्तृतीयारकप्रान्ते श्रीऋषभदेवेन उग्रभोगराजन्यक्षत्रियभेदैश्चतुर्द्धा कृता तथाऽत्राप्येवं षड्विधा सा स्वभावत एवास्तीति यद्यपि श्री अभयदेवसूरिपादैः पञ्चमाङ्गषष्ठशतकसप्तमोद्देशके पद्मसमगन्धयः मृगमदगन्धयः ममीकाररहितास्तेजश्च तलं च रूपं येषामस्तीति तेजस्तलिनः सहिष्णवः-समर्था शनैः-मन्दमुत्सुकत्वाभावाच्चरन्तीत्येवंशीला इत्यन्वर्थता व्याख्यातास्ति, तथापि तथाविधसम्प्रदा-याभावात् साधारणव्यञ्जकाभावेन तेनैषां जातिप्रकाराणां दुर्बोधत्वाज्जीवाभिगमवृत्तौ सामान्यतो जातिवाचकतया व्याख्यानदर्शनाच्च न विशेषतो व्यक्ति कृतेति । गतः प्रथमारकः ॥

**मू. (३९)** *तीसे णं समाए चउहिं सागरोवमकोडाकोडीहिं काले वीइक्कंते अनंतेहिं वण्णपज्जवेहिं अनंतेहिं गंधपज्जवेहिं अनंतेहिं रसपज्जवेहिं अनंतेहिं फासपज्जवेहिं अनंतेहिं संघयणपज्जवेहिं अनंतेहिं संठाणपज्जवेहिं अणंतेहिं उच्चत्तपज्जवेहिं अनंतेहिं आउपज्जवेहिं अनंतेहिं गुरुलहुपज्जवेहिं अनंतेहिं अगुरुलहुपज्जवेहिं अनंतेहं उट्ठाणकम्मबलवीरिअपुरिसक्कारपरक्कम-पज्जवेहिं अनंतगुणपरिहाणीए परिहायमाणे एत्थ णं सुसमा नामं समाकाले पडिवज्जिंसु समणाउसो!*

*जंबूद्दीवे णं भंते ! दीवे इमीसे ओसप्पिणीए सुसमाए समाए उत्तमकट्ठपत्ताए भरहस्स वासस्स केरिसए आयारभावपडोयारे होत्था ?, गोअमा ! बहुसमरमणिज्जे भूमिभागे होत्था, से जहानामए आलिंगपुक्खरेइ वा तं चेव जं सुसमसुसमाए पुव्वण्णिअं, नवरं णाणत्तं चउधनुसहस्स-मूसिआ एगे अट्ठावीसे पिट्ठकरंडुकसए छट्ठभत्तस्स आहारट्ठे, चउसट्ठिं राइंदिआइं सारक्खंति, दो पलिओवमाइं आऊ सेसं तं चेव ।*

*तीसे णं समाए चउव्विहा मणुस्सा अणुसज्जित्था, तंजहा-एका १ पउरजंघा २ कुसुमा ३ सुसमणा ४ ।*

**वृ.** तस्यां सुषमसुषमानाम्न्यां चतसृषु सागरोपमकोटाकोटीषु काले व्यतिक्रान्ते सति, सूत्रे च तृतीयानिर्देश आर्षत्वात्, अथवा चतसृभिः सागरोपमकोटाकोटीभि काले मिते गणिते वा इति मितादिशब्दाध्याहारेण योजना कार्या, अत्र च पक्षे करणे तृतीया ज्ञेया, अत्रान्तरे सुषमा नाम्ना समा-कालः प्रतिपन्नवान्-लगति स्मेति वाक्यान्तरसूत्रयोजना, सुषमा चोत्सर्पिण्यामपि भवेदित्याह-'अनंतगुणपरिहाण्या परिहीयमाणा हानिमुपगच्छन् २' सूत्रे च द्विर्वचनमनुसमयं हानिरिति हानेः पौनःपुन्यज्ञापनार्थं, अथ कालस्य नित्यद्रव्यत्वेन न हानिरुपपद्यते, अन्यथाऽहोरात्रं सर्वदा त्रिंशन्मुहूर्तात्मकमेव तत् न स्यादित्यत आह-'अनन्तैर्वर्णपर्यवै'रित्यादि, वर्णा-श्वेतपीतरक्तनीलकृष्णभेदात् पञ्च, कपिशादयस्तु तत्संयोगजास्ततः श्वेतादेरन्यतरस्य वर्णस्य पर्यवा-बुद्धिकृता निर्विभागा भागाः एकगुणश्वेतत्वादयः सकलजीवराशेरनन्तगुणाधिकास्तैरऽनन्ता ये गुणा-अनन्तरोक्तस्वरूपा भागास्तेषां परिहाणि-अपचयस्तया प्रकारभूतया इत्यर्थः, हीयमानः २ सुषमा कालविशेष इति योज्यं, एवमग्रेऽपि योजना कार्या, अथ यथैषामनन्तत्वमनुसमयमनन्त-गुणहानिश्च तथा दर्श्यते-

'तीसे णं०' इति प्रागुक्तबलात् प्रथमसमये कल्पद्रुमपुष्पफलादिगतो यः श्वेतो वर्ण स उत्कृष्टः, तस्य केवलिप्रज्ञया छिद्यमाना यदि निर्विभागा भागाः क्रियन्ते तर्हि अनन्ता भवन्ति, तेषां मध्यादनन्तभागात्मक एको राशि प्रथमारकद्वितीयसमये त्रुट्यति, एवं तृतीयादिसमयेष्वपि वाच्यं यावत्प्रथमारकान्त्यसमयः, एषाव रीतिरवसर्पिणीचरमसमयं यावज्ज्ञेया, अत एव अनन्तगुणपरिहाण्येत्यत्र अनन्तगुणानां परिहाणिरिति षष्ठीतत्पुरुष एव विधेयो न तु अनन्तगुणा चासौ परिहाणिश्चेति कर्मधारयः, गुणशब्दश्च भागपर्यायवचनोऽनुयोगद्वारवृत्तिकृता एकगुणकालकपर्यवविचारे सुस्पष्टमाख्यातोऽस्ति, एवं सति श्वेतवर्णस्यासन्न एव सर्वथोच्छेदः, तथा च सति श्वेतवस्तुनोऽश्वेतत्वप्रसङ्गः, एतच्च जातिपुष्पादिषु प्रत्यक्षविरुद्धं ?, उच्यते, आगमेऽनन्तकस्यानन्तभेदत्वात् हीयमानभागानामतनन्तकमल्पं ततो मौलराशेर्भागानन्तकं बृहत्तरमवगन्तव्यं, यदि नाम सिध्यत्स्वपि भव्येषु लोकेषु न तेषामनन्तकालेनापि निर्लेपना

आगमेऽभिहिता किं पुनः सर्वजीवेभ्योऽनन्तगुणामुत्कृष्टवर्णगतभागानां ?

न च ते सङ्ख्याता एव सिध्यन्ति, इमे तु प्रतिसमयमनन्ता हीयन्ते इति महद्दृष्टान्तवैषम्यमिति वाच्यं, यतस्तत्र यथा सिध्यतां भव्यानां संख्यातता तथा सिद्धिकालोऽनन्त एवमत्रापि यथा प्रतिसमयमनन्तानामेषां हीयमानता तथा हानिकालोऽवसर्पिणीप्रमाण एव ततः परमुत्सर्पिणीप्रथमसमयादी तेनैव क्रमेण वर्द्धन्ते इति सर्वं सम्यक्, एवं पीतादिषु वर्णेषु गन्धरसस्पर्शेषु च यथासम्भवमागमाविरोधेन भावनीयं, तथा अनन्तैः संहननपर्यवैरिति-संहननानि-अस्थिनिचयरचनाविशेषरूपाणि वज्रऋषभनाराचऋषभनाराचनाराचार्द्धनाराचकीलिकासेवार्त्तभेदात् षट्, प्रस्तुते चारके आद्यमेव ग्राह्यं ऋषभनाराचादीनामभावात्, अन्यत्र यथासम्भवं तानि ग्राह्याणि, तत्पर्यवा अपि तथैव हापनीयाः, संहननेनैव शरीरे दार्ढ्यमुपजायते, तच्च सर्वोत्कृष्टं सुषमसुषमाद्यसमये, ततः परमनन्तैरनन्तैः पर्यवैः समये २ हीयत इति ।

तथा संस्थानानि-आकृतिरूपाणि समचतुरस्रन्यग्रोधसादिकुब्जकवामनहुण्डभेदात् षोढा, तच्च तत्र प्रथमे समये सर्वोत्कृष्टं ततः परं तथैव हीयत इति, यथोच्चत्वं शरीरोत्सेधरूपं तत्र प्रथमे समये त्रिगव्यूतप्रमाणमुत्कृष्टं, ततः परं तत्प्रमाणतारतम्यरूपाः पर्यवाः अनन्ताः समये २ हीयन्ते, ननु उच्चत्वं हि शरीरस्य स्वावगाढमूलक्षेत्रादुपरितनोपरितननभःप्रदेशावगाहित्वं, तत्पर्यवाश्च एकद्वित्रिप्रतरावगाहित्वादयोऽसङ्ख्यातप्रतरावगाहत्वान्ता असङ्ख्याता एव, अवगाहनाक्षेत्रस्यासङ्ख्यातप्रदेशात्मकत्वात्, तर्हि कथमेषामनन्तत्वं ?, कथं चैतेऽनन्तभागपरिहाण्या हीयन्ते इति चेद्, उच्यते, प्रथमारके यत् प्रथमसमयोत्पन्नानामुत्कृष्टं शरीरोच्चत्वं भवति ततो द्वितीयादिसमयोत्पन्नानां यावतामेकनभःप्रतरावगाहित्वलक्षणपर्यवाणां हानिस्तावत् पुद्गलानन्तकं हीयमानं द्रष्टव्यं, आधारहानावाधेयहानेरावश्यकत्वादिति, तेनोच्चत्वपर्यवाणामप्यनन्तत्वं सिद्धं, नभःप्रतरावगाहस्य पुद्गलोपचयसाध्यत्वात्, तथा आयुः-जीवितं तदपि तत्र प्रथमे समये त्रिपल्योपमप्रमाणमुत्कृष्टं तदनन्तरं तत्पर्यवा अपि अनन्ताः प्रतिसमयं हीयन्ते, ननु पर्यवा एकसमयोना द्विसमयोना यावदसङ्ख्यातसमयोनोत्कृष्टा स्थितिरिति स्थितिस्थानतारतम्यरूपा असङ्ख्याता एव, आयुःस्थितेरसङ्ख्यातसमयात्मकत्वात्, तर्हि कथं सूत्रेऽनन्तैरायुःपर्यवैरित्युक्तं?

उच्यते, प्रतिसमयं हीयमानस्थितिस्थानकारणीभूतानि अनन्तानि आयुःकर्मदलिकानि परिहीयन्ते, ततः कारणहानौ कार्यहानेरावश्यकत्वात् ।

तानि च भवस्थितिकारणत्वादायुःपर्यवा एव अतस्ते अनन्ता इति, तथा अनन्तैर्गुरुलघुपर्यवैरिति, गुरुलघुद्रव्याणि-बादरस्कन्धद्रव्याणि औदारिकवैक्रियाहारकतैजसरूपाणि तत्पर्यवाः, तत्र प्रकृते वैक्रियाहारकोरनुपयोगस्तेन औदारिकशरीरमाश्रित्योत्कृष्टवर्णादयस्तत्राद्यसमये बोध्याः, ततः परं तथैव हीयन्ते तैजसमाश्रित्य कपोतपरिणामकजाठराग्निरुत्कृष्टस्तत्रादिसमये तदनन्तरं मन्दमन्दतरादिवीर्यकत्वरूप इति, तथा अनन्तैरगुरुलघुपर्यवैरिति, अगुरुलघुद्रव्याणि सूक्ष्मद्रव्याणि, प्रस्तुते च पौद्गलिकानि मन्तव्यानि, अन्यथाऽपौद्गलिकानां धर्मास्तिकायादीनामपि पर्यवहानिप्रसङ्गः, तानि च कार्मणमनोभाषादिद्रव्याणि तेषां पर्यवैरनन्तैः, तत्र कार्मणस्य सातवेदनीयशुभनिर्माणसुस्वरसौभाग्याऽऽदेयादिरूपस्य बहुस्थित्यनुभागप्रदेशकत्वेन मनोद्रव्यस्य बहुग्रह-

णासन्दिग्धग्रहणग्रहितिग्रहणबहुधारणादिमत्तया भाषाद्रव्यस्योदात्तत्वगम्भीरोपनीतरागत्वप्रतिनादविधायितादिरूपतया च तत्रादिसमये उत्कृष्टता, ततः परं क्रमेणानन्ताः पर्यवा हीयन्ते, अनन्तैरुत्थानादिपर्यवैः, तत्रोत्थानं-ऊर्ध्व भवनं कर्म-उत्क्षेपणावक्षेपणादि गमनादि वा बलं-शारीरः प्राणः वीर्य-जीवोत्साहः पुरुषाकारः-पौरुषाभिमानः पराक्रमश्च-स एव साधिताभिमतप्रयोजनः, अथवा पुरुषकारः-पुरुषक्रिया सा च प्रायः स्त्रिक्रियातः प्रकर्षवती भवतीति तत्त्व भावत्वादिति विशेषेणतद्ग्रहणं, पराक्रमस्तु-शत्रुविनाशनं, एते प्राक्तनसमये उत्कृष्टास्ततः परं परिपाट्या तथैव हीयन्ते, तथा।

॥ १ ॥　"संघयणं संठाणं उच्चत्तं आउअं च मणुआणं।
अणुसमयं परिहायइ ओसप्पिणीकालदोसेणं।

॥ २ ॥　कोहमयमायलोभा ओसन्नं वड्ढए अ मणुआणं।
कूडतुलकुडमाणा तेणऽणुमाणेण सव्वंपि ॥

॥ ३ ॥　विसमा अज्ज ! तुलाओ विसमाणि अ जनवएसु माणाणि।
विसमा रायकुलाइं तेण उ विसमाइं वासाइं ॥

॥ ४ ॥　विसमेसु अ वासेसुं हुंति असाराइं ओसहिबलाइं।
ओसहिदुब्बलेण य आउं परिहायइ नराणं ॥

इति तण्डुलवैचारिके अवसर्पिणीकालदोषेण हानिरुक्ता सा बाहुल्येन दुःषमामाश्रित्य शेषारकेषु तु यथासम्भवं ज्ञेयेति, ननु नित्यद्रव्यस्यापि कालस्य कथं हानिरिति परकृतासम्भवाशङ्कानिवारणार्थं वर्णादिपर्यवाणां हानिरुक्ता, ते च पुद्गलधर्मास्तर्हि अन्यधर्मैर्हीयमानैर्विवक्षितः कालः कथं हीयते इति महदसङ्गतं, तथा सति वृद्धाया वयोहानौ युवत्या अपि वयोहानिप्रसङ्ग इतिचेत्, न, कालस्यकार्यवस्तुमात्रेकारणत्वाङ्गीकारात्कार्यगता धर्माकारणेउपचर्यन्तेकारणत्वसम्बन्धादिति।

अथ प्रस्तुतारकस्य स्वरूपप्रश्नायाह-'जंबुद्दीवे णं भंते !' इत्यादि प्रायः सूत्रं गतार्थमेव, नवरं केवलं नानात्वं-भेदः, स चायं-चतुर्धनुःसहस्रोच्छ्रिताः क्रोशद्वयोच्चास्ते मनुजा इति योगः, मकारोऽलाक्षणिकः, अष्टाविंशत्यधिकं पृष्ठकरण्डकशतं प्रथमारोक्तपृष्ठकरण्डुकानामर्धमितियावत् तेषां मनुजानामिति योगः, षष्ठभक्तेऽतिक्रान्ते आहारार्थः समुत्पद्यते इति योगः, सूत्रे सप्तम्यर्थे षष्ठी सूत्रत्वात्, चतुःषष्टिं रात्रिन्दिवानि यावत् संरक्षन्ति, अपत्यानि ते मनुजा इति योगः, तत्र सप्तावस्थाक्रमः पूर्वोक्त एव, नवरं एकैकस्या अवस्थायाः कालमानं नव दिनानि अष्टौ घटयश्चतुस्त्रिंशत् पलानि सप्तदश चाक्षराणि किञ्चिदधिकानीति, चतुःषष्टेः सप्तभिर्भागे एतावत एव लाभात्, यच्च पूर्वेभ्योऽधिकोऽपत्यसंरक्षणकालस्तत्कालस्य हीयमानत्वेनोत्थानादीनां हीयमानत्वाद् भूयसाऽनेहसा व्यक्तताभवनादिति, एवमग्रेऽपि ज्ञेयं, द्वे पल्योपमे आयुस्तेषां मनुजानामिति योगः, एवमन्यत्रापि यथासम्भवमध्याहारेण सूत्राक्षरयोजना कार्या, अन्यत् सर्वं सुषमसुषमोक्तमेवेति, अत्रापि यथोक्तमायुःशरीरोच्चत्वादिकं सुषमायामादौ ज्ञेयं, ततः परं क्रमेण हीयमानमिति। अथात्र भगवान् स्वयमेवापृष्टो नपि मनुष्यभेदानाह-

'तीसे णं' मित्यादि, अत्रान्वययोजना प्राग्वत्, एकाः १ प्रचुरजङ्घाः २ कुसुमाः ३ सुशमनाः ४ एतेऽपि प्राग्वज्जातिशब्दा ज्ञेयाः, अन्वर्थता चैवं-एकाः-श्रेष्ठाः, संज्ञाशब्दत्वाच्च सर्वादित्वं, प्रचुरजङ्घाः-पुष्टजङ्घाः नतु काकजङ्घा इति भावः, कुसुमसदृशत्वात् सौकुमार्यादिगुणयोगेन कुसुमाः,

पुंस्यपि कुसुमशब्दः, सुष्ठु-अतिशयेन शमनं-शान्तभावो येषां ते तथा, प्रतनुकषायत्वात्, अत्र पूर्वोक्तषट्प्रकारमनुष्याणामभावादेतेऽन्ये जातिभेदाः । गतो द्वितीयारक इति ।

**मू. (४०)** *तीसे णं समाए तिहिं सागरोवमकोडाकोडीहिं काले वीइक्कंते अनंतेहिं वण्णपज्जवेहिं जाव अनंतगुणपरिहाणीए परिहायमाणी २ एत्थ णं सुसमदुस्समाणामं समा पडिवज्जिसु समणाउसो !, सा णं समा तिहा विभज्जइ-पढमे तिभाए १ मज्झिमे तिभाए २ पच्छिमे तिभा ३ जंबुद्दीवे णं भंते ! दीवे, इमीसे ओसप्पिणीए सुसमदुस्समाए समाए पढममज्झिमेसु तिभाएसु भरहस्स वासस्स केरिसए आयारभावपडोआरे पुच्छा, गोअमा ! बहुसमरमणिज्जे भूमिभागे होत्था, सो चेव गमो नेअव्वो णाणत्तं दो धणुसहस्साइं उद्धं उच्चत्तेणं, तेसिं च मणुआणं चउसट्ठिपिट्ठकरंडुगा चउत्थभत्तस्स आहारत्थे समुप्पज्जइ ठिई पलिओवमं एगूणासीइं राइंदिआइं सारक्खंति संगोवेंति, जाव देवलोगपरिग्गहिआ णं ते मणुआ पन्नत्ता समणाउसो !*

*तीसे णं भंते ! समाए पच्छिमे तिभाए भरहस्स वासस्स केरिसए आयारभावपडोयारे होत्था ?, गोअमा ! बहुसमरमणिज्जे भूमिभागे होत्था से जहा नामए आलिंगपुक्खरे इ वा जाव मणीहिं उवसोभिए, तंजहा-कित्तिमेहिं चेव अकित्तिमेहिं चेव, तीसे णं भंते ! समाए पच्छिमे तिभागे भरहे वासे मणुआणं केरिसए आयारभावपडोआरे होत्था ?*

*गोअमा ! तेसिं मणुआणं छव्विहे संघयणे छव्विहे संठाणे बहूणि धनुसयाणि उद्धं उच्चत्तेणं जहन्नेणं संखिज्जाणि वासाणि उक्कोसेणं असंखिज्जाणि वासाणि आउअं पालंति पालित्ता अप्पेगइया निरयगामी धनुसयाणि उद्धं उच्चत्तेणं जहन्नेणं संखिज्जाणि वासाणि उक्कोसेणं असंखिज्जाणि वासाणि आउअं पालंति पालित्ता अप्पेगइया निरयगामी अप्पेगइया तिरिअगामी अप्पेगइया मणुस्सगामी अप्पेगइया देवगामी अप्पेगइया सिज्झंति जाव सव्वदुक्खाणमंतं करेंति ।*

**वृ.-** व्याख्या प्राग्वत्, नवरं परिहायमाणी इत्यत्र स्त्रीलिङ्गनिर्देशः समाविशेषणार्थस्तेन समा काले इति पदद्वयं पृथक् मन्तव्यं, अयमेवाशयः सूत्रकृता 'सा णं समे'त्युत्तरसूत्रे प्रादुश्चक्रे इति, अथास्या एव विभागप्रदर्शनार्थमाह-'सा ण'मित्यादि, सा सुषमदुःषमा नाम्नी समा-तृतीयारकलक्षणा त्रिधा विभज्यते-विभागीक्रियते, तद्यथा-प्रथमस्तृतीयो भागः प्रथमस्त्रीभागः मयूरव्यंसकादित्वात् पूरणप्रत्ययलोपः, एवमग्रेऽपि, अयं भावः-द्वयोः सागरोपमकोटाकोट्योस्त्रिभिर्भागे यदागतं तदेकैकस्य भागस्य प्रमाणं, तच्चेदं-षट्षष्टि कोटिलक्षाणां षट्षष्टि कोटिसहस्राणां षट्कं कोटिशतानां षट्षष्टि कोटीनां षट्षष्टिर्लक्षाणां षट्षष्टि सहस्राणां षट्कं शतानां षट्षष्टिश्च सागरोपमाणां द्वौ च सागरोपमत्रिभागौ, । अथाद्यभागयोः स्वरूपप्रश्नायाह- 'जंबुद्दीवे ण'मित्यादि, सर्वं गतार्थं, नानात्वमित्ययं विशेषः-द्वे धनुःसहस्रे ऊर्ध्वोच्चत्वेन क्रोशोच्चा इत्यर्थः, तेषां च मनुष्याणां चतुःषष्टि पृष्ठकरण्डुकानि, अष्टाविंशत्यधिकशतस्यार्द्धीकरणे एतावत एव लाभात्, चतुर्थभक्तेऽतिक्रान्ते आहारार्थ- समुत्पद्यते, एकदिनान्तरित आहार इत्यर्थः, स्थिति पल्योपमं, एकोनाशीतिं रात्रिन्दिवानि संरक्षन्ति सङ्गोपयन्ति, अपत्ययुगलकमित्यर्थः, तत्रावस्थाक्रमस्तथैव, नवरमेकैकस्या अवस्थायाः कालमानं एकादश दिनानि सप्तदश घटयः अष्टौ पलानि चतुस्त्रिंशच्चाक्षराणि किञ्चिदधिकानीति, एकोनाशीतेः सप्तभिर्भागे एतावत एव लाभात्, अस्यां च भिन्नजातिमनुष्याणामनुपज्ञना नास्ति, तदा तेषामसंभवादिति संभाव्यते, तत्त्वं तु तत्त्वविदज्ञेयं, चतु-

'उग्गा भोगा रायन्न खत्तिआ संगहो भवे चउहा' इत्युक्तं तदरकान्त्यभागभावित्वेन नेहाधिक्रियते, नन्वस्याः समायास्त्रेधा विभजनं किमर्थं ?, उच्यते, यथा प्रथमारकादौ त्रिपल्योपमायुषस्त्रिगव्यूतोच्छ्रयास्त्रिदिनान्तरितभोजना एकोनपञ्चाशद्दिनानि कृतापत्यसंरक्षणास्ततः क्रमेण कालपरिहाण्या द्वितीयारकादौ द्विपल्योपमायुषो द्विगव्यूतोच्छ्रया द्विदिनान्तरितभोजनाश्चतुःषष्टिदिनानि कृतापत्यसंरक्षणास्ततोऽपि तथैव परिहाण्या तृतीयारकादौ एकपल्योपमायुषः एकगव्युतोच्छ्रया एकदिनान्तरितभोजना अशीतिदिनानि कृतापत्यसंरक्षणास्तदनन्तरमपि त्रिधाविभक्ततृतीयारकप्रथमत्रिभागद्वयं यावत्, तथैव नियतपरिहाण्या हीयमाना युग्मिमनुजा अभूवन्, अन्तिमत्रिभागे तु सा परिहाणिरनियता जातेति सूचनार्थं त्रिभागकरणं सार्थकमिति सम्भाव्यते, अन्यथा वा यथाऽऽगमसम्प्रदायं त्रिभागकरणेहेतुरवगन्तव्य इति। अथ तृतीयारकस्वरूपप्रश्नायाह- 'तीसे णं०', यदेव दक्षिणार्द्धभरतस्वरूपप्रतिपादनाधिकारे व्याख्यातं तदत्र सूत्रे निरवशेषं ग्राह्यं-नवरमत्र कृष्यादिकर्माणि प्रवृत्तानीति कृत्रिमैस्तृणैः कृत्रिमैर्मणिभिरित्युक्तं, अथात्रैव मनुजानां स्वरूपं पृच्छन्नाह-'तीसे ण'मित्यादि।व्याख्या प्राग्वत्।

अथ यथास्मिन् जगदव्यवस्थाऽभूत् तदाह-

मू. (४१) *तीसे णं समाए पच्छिमे तिभाए पलिओवमट्ठभागावसेसे एत्थ णं इमे पन्नरस कुलगरा समुप्पज्जित्था, तंजहा-*

*सुमई १ पडिस्सुई २ सीमंकरे ३ सीमंधरे ४ खेमंकरे ५ खेमंधरे ६ विमलवाहने ७ चक्खुमं ८ जसमं ९ अभिचंदे १० चंदामे ११ पसेणई १२ मरुदेवे १३ नामी १४ उसभे १५ ति।*

वृ- तस्याः समायाः पाश्चात्ये त्रिभेगा-तृतीये त्रिभागे पल्योपमाष्टमभागावशेषे एतस्मिन् समये इमे-वक्ष्यमाणाः पञ्चदश कुलकरा-विशिष्टबुद्धयो लोकव्यवस्थाकारिणः कुलकरणशीलाः पुरुषविशेषाः समुदपद्यन्ते-समुत्पन्नवन्तः, अत्राह कश्चित्-आवश्यकनिर्युक्त्यादिषु सप्तानां कुलकराणामभिधानादिह पञ्चदशानां तेषामभिधानं कथं यदिवा नामैतत्, पुण्यपुरुषाणामधिकाधिकवंश्यपुरुषवर्णनस्य न्याय्यत्वात्, परं पल्योपमाष्टभागावशिष्टतावचनं कालस्य सुतरां बाधते अनुपपत्तेः, तथाहि-पल्योपमं किलासत्कल्पनया चत्वारिंशद्भागं परिकल्प्यते, तस्याष्टमो भागश्चत्वारिंशद्भागाः पञ्च, तत्राप्याद्यस्य विमलवाहनस्यायुः पल्योपमदशभागस्तत- श्चत्वारश्चत्वारिंशद्भागास्तदायुषि गताः।शेष एकः पल्योपमस्य चत्वारिंशत्तमः सङ्ख्येयो भागोऽवतिष्ठते, स चक्षुष्मदादीनामसंख्येयपूर्वैर्नाभेः सङ्ख्येयपूर्वै श्रीऋषभस्वामिनश्चतुरशीत्या पूर्वलक्षैः शेषैश्चैकोननवत्या पक्षैः परिपूर्यते, तेन पूर्वेषां समुत्यादिकुलकराणां महत्तमायुषां कावकाशः ? आद्यस्य सुमतेस्तावत्पल्यदशमांश आयुः, ततो द्वादश वंश्यान् यावत् पूर्वदर्शितन्यायेनैकस्मिंश्चत्वारिंशत्तमेऽवशिष्टभागेऽसङ्ख्येयानि पूर्वाणि तानि च यथोत्तरं हीनहीनानि नाभेस्तु सङ्ख्येयानि पूर्वाणीत्यादि, इत्थं चाविरुद्धमिव प्रतिभाति, यत्तु आवश्यकवृत्ती-

॥ १ ॥ "पलिओवमदसमंसो पढमस्साउं तओ असंखिज्जा।
ते अनुपुव्वी हीणा पुव्वा नाभिस्स संखिज्जा ॥"

इति गाथाव्याख्याने मतान्तरेण नाभेरसङ्ख्येयपूर्वायुष्कत्वमुक्तं, तत्तु कुलकरसमानायुष्कत्वेन कुलकरपत्नीनां मरुदेव्या अप्यसंख्यपूर्वायुष्कतापत्तौ मुक्त्यनुपपत्तिरिति तत्रैव दूषितमस्तीति

न कोऽपि परस्परं विरोधः, यच्चावश्यकादिषु विमलवाहनस्य पल्यदशमांशायुष्कत्वं तद्वाचनाभेदादवगन्तव्यं, यच्च ग्रन्थान्तरे नामपाठभेदः सोऽपि तथैवेत्यत्र सर्वविदः प्रमाणमित्यलं विस्तरेण, अथ प्रस्तुतमुपक्रम्यते- 'तद्यथे'ति तान् नामतो दर्शयति,

सुमति १ प्रतिश्रुति २ सीमङ्करः ३ सीमन्धरः ४ क्षेमङ्करः ५ क्षेमन्धरः ६ विमलवाहनः ७ चक्षुष्मान् ८ यशस्वी ९ अभिचन्द्रः १० चन्द्राभः ११ प्रसेनजित् १२ मरुदेवः १३ नाभिः १४ ऋषभ १५ इति, यत्पुनः पद्मानन्दे चतुर्दशानां कुलकरत्वमभिहितमस्य तु पञ्चदशस्य ऋषभस्यापि तद्भरतक्षेत्रप्रकरणे भरतभर्तुर्भरतनाम्नोऽपि महाराजस्य प्ररूपणाप्रक्रमितव्याऽस्तीति ज्ञापनार्थमिति। अथैते कुलकरत्वं कथं कृतवन्त इत्याह-

**मू. (४२)** *तत्थ णं सुमई १ पडिस्सुइ २ सीमंकर ३ सीमंधर ४ खेमंकरा ५ णं एतेसिं पंचण्हं कुलगराणं हक्कारे नामं दण्डनीई होत्था, ते णं मणुआ हक्कारेणं दंडेणं हया समाणा लज्जिआ विलज्जिआ वेड्ढा भीआ तुसिणीआ विणओणया चिट्ठंति, तत्थ णं खेमंधर ६ विमलवाहण ७ चक्खुमं ८ जसमं ९ अभिचंदाणं १०। एतेसि णं पंचण्हं कुलगराणं मक्कारे नामं दंडनीई होत्था, ते णं मणुआ मक्कारेणं दंडें हया समाणा जाव चिट्ठंति, तत्थ णं चंदाभ ११ पसेणइ १२ मरुदेव १३ नाभि १४ उसभाणं १५ एतेसि णं पंचण्हं कुलगराणं धिक्कारे नामं दंडनीइ होत्था, ते णं मणुआ धिक्कारेणं दंडेणं हया समाणा जाव चिट्ठंति।*

**वृ.**- 'तत्थ ण'मित्यादि, तेषु पञ्चदशसु कुलकरेषु मध्ये सुमतिप्रतिश्रुतिसीमंकरसीमन्धरक्षेमङ्कराणामेतेषां पञ्चानां कुलकराणां हा इत्यधिक्षेपार्थकः शब्दस्तस्य करणं हाकारो नाम दण्डः-अपराधिनामनुशासनं तत्र नीति-न्यायोऽभवत्, अत्रायं सम्प्रदायः-पुरा तृतीयारान्ते कालदोषेण व्रतप्रधानामिव यतीनां कल्पद्रुमाणां मन्दायमानेषु स्वदेहावयवेष्विव तेषु मिथुनानां जायमाने ममत्वेऽन्यस्वीकृतं तमन्यस्मिन् गृह्णात परस्परं जायमाने विवादे सदृशजनकृतपराभवमसहिष्णवः आत्माधिकं सुमतिं स्वामितया ते चक्रुः, स च तेषां तान् विभज्य स्थविरो गोत्रिणां द्रव्यमिव ददौ, यो यः स्थितिमतिचक्राम तच्छासनाय जातिस्मृत्या नीतिज्ञत्वेन हाकारदण्डनीतिं चकार, तां च प्रतिश्रुत्यादयश्चत्वारोऽनुचक्रुरिति, तया च ते कीदृशा अभवन्नित्याह-

'ते ण'मित्यादि, ते मनुजा णमिति प्राग्वत्, हाकारेण दण्डेन हताः सन्तो लज्जिताः व्रीडिता व्यर्द्धाः-लज्जाप्रकर्षवन्त इत्यर्थः, एते त्रयोऽपि पर्यायशब्दा लज्जाप्रकृष्टतावचनायोक्ताः भीता-व्यक्तं तूष्णीका-मौनभाजो विनयावनता न तूलुण्ठा इव निस्त्रपा निर्भया जल्पाका अहंयवश्च तिष्ठन्ति, ते अनेनैव दण्डेन हतस्वमिवात्मानं मन्यमानाः पुनरपराधस्थाने न प्रवर्तन्त इत्याशयः, अत्र चादृष्टपूर्वशासनानां तेषां दण्डादिघातेभ्योऽप्यतिशायि मर्मविच्छासनमिदमिति हता इति वचनं, अथोत्तरकालवर्तिकुलकरकाले किं सैव दण्डनीतिरन्या वेत्याशङ्कायां समाधत्ते-

'तत्थ ण'मित्यादि, तत्र क्षेमन्धरविमलवाहनचक्षुष्मद्यशस्व्यभिचन्द्राणामेतेषां पञ्चानां कुलकराणां मा इत्यस्य निषेधार्थस्य करणं-अभिधानं माकारो नाम दण्डनीतिरभवत्, शेषं पूर्ववत्, आवश्यकादौ तु विमलवाहनचक्षुष्मतोः कुलकरयोर्या हाकाररूपा दण्डनीति यच्चाभिचन्द्रप्रसेनजितोरन्तराले चन्द्राभस्याकथनमित्याद्यन्तरं तद्वाचनान्तरेणेति, अयमर्थः-क्रमेणातिसंस्तवादिना जीर्णभीतिकत्वेन हाकारमतिक्रामत्सु अंकुशमिवगम्भीरवेदिषु गजेषु युग्मिषु क्षेमन्धरः कुलकुञ्जरो

'दुश्चिकित्से हि चिकित्सान्तरं कार्य'मिति द्वितीयां माकाररूपा दण्डनीतिं चकार, तां च विमलवाहनादयश्चत्वारोऽनुचक्रुः । अत्र सम्प्रदायविदः-महत्यपराधपदे माकाररूपां इतरत्र तु पूर्वैव, ऋषभचरित्रे सप्तकुलकराधिकारे यशस्विवारके दण्डनीतिमाश्रित्य-

॥ १ ॥ "आगस्यल्पे नीतिमाद्यां, द्वितीयां मध्यमे पुनः ।
महीयसि द्वे अपि (ते), स प्रायुङ्क्त महामति ॥" इत्याहुः

अथ तृतीयकुलकरपञ्चकव्यवस्थामाह-'तत्थ णं०', इदं सूत्रं गतार्थं, नवरं धिगित्यधिक्षेपार्थ एव तस्य करणं-उच्चारणं धिक्कारः, सम्प्रदायस्त्वयं-पूर्वनीति अतिक्रमत्सु तेषु त्रपामयदि इव कामुकेषु चन्द्राभनामा धिक्कारदण्डनीतिं विदधे, तां च प्रसेनजिदादयश्चत्वारोऽ- नुकृतवन्तः, महत्यपराधे धिक्कारो मध्यमजघन्ययोस्तु माकारहाकाराविति, अन्यास्तु परिभाषणाद्या भरतकाले।

॥ १ ॥ 'परिभासमा उ पढमा मंडलिबंधिम होइ बीआ य ।
चारगछविछेआई भरहस्स चउव्विहा नीई ॥'

इति वचनात्, ऋषभकाले इत्यन्ये, अथ पञ्चदशे कुलकरे कुलकरत्वमात्रं चतुर्दशसाधारणमित्यसाधारणपुण्यप्रकृत्युदयजन्यत्रिजगज्जनपूजनीयतां प्रचिकटयिषुर्यथाऽस्मादेव लोके विशिष्टधर्माधर्मसंज्ञाव्यवहाराः प्रावर्त्तन्त इत्याह-

**मू. (४३)** *नाभिस्स णं कुलगरस्स मरुदेवाए भारिआए कुच्छिंसि एत्थ णं उसहे नामं अरहा कोसलिए पढमराया पढमजिने पढमकेवली पढमतित्थकरे पढमधम्मवरचक्कवट्टी समुप्पज्जित्थे, तए णं उसभे अरहा कोसलिए वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसइ वसइत्ता तेवट्ठिं पुव्वसयसहस्साइं महारायवासमज्झे वसइ, तेवट्ठिं पुव्वसयसहस्साइं महारायवासमज्झे वसमाणे लेहाइआओ गणिअप्पहाणाओ सउणरुअपज्जवसाणाओ बावत्तरिं कलाओ चोसट्ठिं महिलागुणे सिप्पसयं च कम्माणं तिन्निवि पयाहिआए उवदिसइत्ति, उवदिसित्ता पुत्तसयं रज्जसए अभिसंचइ, अभिसिंचित्ता तेसीइं पुव्वसयसहस्साइं महारायवासमज्झे वसइ ।*

*वसित्ता जे से गिम्हाणं पढमे मासे पढमे पक्खे चित्तबहुले तस्स णं चित्तबहुलस्स नवमीपक्खेणं दिवसस्स पच्छिमे भागे चइत्ता हिरण्णं चइत्ता सुवण्णं चइत्ता कोसं कोट्ठागारं बलं चइत्ता वाहणं चउत्ता पुरं चइत्ता अंतेउरं चइत्ता विउलधणकणगरयणमणिमोत्तिअसंखसिलप्पवालरत्तरयणसंतसारसावइज्जं विच्छड्डयित्ता विगोवइत्ता दायं दाइआणं परिभाएतत्ता सुदंसणाए सीआए सदेवमणुआसुराए परिसाए समणुगम्ममाणमग्गे संखिदचक्किअनंगलिअमुहमंगलिअपूसमाणवद्धमाणगआइक्खगलंखमंखघंटिअगणेहिं ताहिं इट्ठाहिं कंताहिं पियाहिं मणुण्णाहिं मणामाहिं उरलाहिं कल्लाणाहिं सिवाहिं धन्नाहिं मंगल्लाहिं सस्सिरिआहिं हिययगमणिज्जाहिं हिययपल्हायणिज्जाइं कण्णमणनिव्वुईकराहिं अपुणरुत्ताहिं अट्ठसइआहिं वग्गूहिं अनवरयं अभिनंदंता य अभिथुणंता य एवं वयासी जय जय नंदा ! जय जय भद्दा ! धम्मेणं अभीए परीसहोवसग्गाणं खंतिखमे भयभेरवाणं धम्मे ते अविग्घं भवउत्तिकट्टु अभिनंदंति अ अभिथुणंति अ ।*

*तए णं उसभे अरहा कोसलिए नयनमालासहस्सेहिं पिच्छिज्जमाणे २ एवं जाव निग्गच्छइ जहा उववाइए जाव आउलबोलबहुलं नभं करंते विणीआए रायहाणीए मज्झंमज्झेणं निग्गच्छइ सिअसंमज्जिअसित्तसुइकपुप्फोवयारकलिअं सिद्धत्थवणविउलरायमग्गं करेमाणे हयगयरहपकरेण*

*पाइक्कचडकरेण य मंदं २ उद्धतरेणुयं करेमाणे २ । जेणेव सिद्धत्थवणे उज्जाणे जेणेव असोगवरपायवे तेणेव उवागच्छति २ असोगवरपायवस्स अहे सीअं ठावेइ २ ता सीआओ पच्चोरुहइ २ ता सयमेवाभरणालंकारं ओमुअइ २ ता सयमेव चउहिं अट्ठाहिं लोअं करेइ २ ता छट्ठेणं भत्तेणं अपाणएणं आसाढाहिं नक्खत्तेणं जोगमुवागएणं उग्गाणं भोगाणं राइन्नाणं खत्तिआणं चउहिं सहस्सेहिं सद्धिं एगं देवदूसमादाय मुंडे भवित्ता अगाराओ अनगारियं पव्वइए ।*

वृ- 'नाभिस्स ण'मित्यादि, नाभेः कुलकरस्य मरुदेव्या नाम्न्या भार्यायाः कुक्षौ एतस्मिन् समये 'उसह' त्ति ऋषभः सधमभारोद्वहनाद्धषभ इव ऋषभः, वृषभो वेति संस्कारः तत्र वृषभ इव वृषभ इति वा, वृषेण भातीति वा वृषभः, एवं च सर्वेऽप्यर्हन्त ऋषभा वृषभा वा इत्युच्यन्ते तेन ऊर्वोर्वृषभलाञ्छनत्वेन मातुश्चतुर्दशस्वप्नेषु प्रथमं वृषभदर्शनेन च ऋषभो वृषभो वेति नाम्ना, कोशलायां-अयोध्यायां भवः कौशलिकः 'भाविनि भूतवदुपचार' इति न्यायादेतद्विशेषणं, अयोध्यास्थापनाया ऋषभदेवराज्यस्थापनासमये कृतत्वात्, तद्वयक्तिस्तु भरतक्षेत्रनामान्वर्थकथनावसरे 'धनवईमतिनिम्माया' एतत्सूत्रव्याख्यायां दर्शयिष्यते, अर्हन्तश्च पार्श्वनाथादय इव केचिदनङ्गीकृतराजधर्मका अपि स्युरित्यसौ केन क्रमेणार्हन्नभूदित्याह-

प्रथमो राजा, इहावसर्पिण्यां नाभिकुलकरादिष्टयुग्मिमनुजैः शक्रेण च प्रथममभिषिक्तत्वात्, प्रथमजिनः प्रथमो रागादीनां जेता, यद्वा प्रथमो मनःपर्यवज्ञानी राज्यत्यागादनन्तरं व्रज्यतो भावतश्च साधुपदवर्त्तित्वे, अत्रावसर्पिण्यामस्यैव भगवतः प्रथमस्तदुभवनात्, जिनत्वं चावधिमनःपर्यवकेवलज्ञानिनां स्थानाङ्गे सुप्रसिद्धं, अवधिजिनत्वे तु व्याख्यायमानेऽक्रमबद्धं सूत्रमिति, केवलिजिनत्वे चोत्तरग्रन्थेन सह पौनरुक्त्यमिति व्याख्यानासङ्गति श्रोतृणां प्रतिभासेत, प्रथमकेवली-आद्यसर्वज्ञः, केवलित्वे च तीर्थकृन्नामोदयतीत्याह-प्रथमतीर्थकरः-आद्यश्चतुर्वर्णसङ्घस्थापकः, उदिततीर्थकृन्नामा च कीदृशः स्यादिति-प्रथमो धर्मवरो-धर्मप्रधानश्चक्रवर्ती, यथा चक्रवर्ती सर्वत्राप्रतिहतवीर्येण चक्रेण वर्त्तते तथाऽयमपीति भावः, समुदपद्यत-समुत्पन्नवानित्यर्थ, अथ यथा भगवान् वयः प्रतिपन्नवान् तथाऽऽह-

'तए ण'मित्यादि, ततो जन्मकल्याणकानन्तरमित्यर्थ ऋषभोऽर्हन् कौशलिकः विंशतिं पूर्वशतसहस्राणि-पूर्वलक्षाणि भावप्रधानत्वान्निर्देशस्य कुमारत्वेन-अकृताभिषेकराजसुतत्वेन वासः-अवस्थानं तन्मध्ये वसति, 'कुमारवासमज्झावसइ' इति पाठे तु कुमारवासमध्यावसति आश्रयतीत्यर्थ, उषित्वा च त्रिषष्टिपूर्वलक्षाणि अत्रापि भावप्रधानो निर्देश इति महाराजत्वेन-साम्राज्येन वासः-अवस्थानं तन्मध्ये वसति, तत्र वसंश्च कथं प्रजा उपचक्रे इत्याह-

'तेवट्ठिं' इत्यादि, त्रिषष्टिं पूर्वलक्षाणि यावत् महाराजवासमध्ये वसन् लिपिविधानादिका गणितं-अङ्कविधा धर्मकर्मव्यवस्थितौ बहूपकारित्वात् प्रधाना यासु ताः शकुनरुतं-पक्षिभाषितं पर्यवसाने-प्रान्ते यासां तास्तथा, द्वासप्ततिकलाः, कलनानि कला विज्ञानानीत्यर्थस्ताः कलनीयभेदात् द्वासप्तति अर्थात्, प्रायः पुरुषोपयोगिनीः ।

'चतुःषष्टिं महिलागुणान्-स्त्रीगुणान्, कर्म्मणां-जीवनोपायानां मध्ये शिल्पशतं च विज्ञानशतं च कुम्भकारशिल्पादिकं त्रीण्यप्येतानि वस्तूनि प्रजाहिताय-लोकोपकारायोपदिशति, अपिशब्द एकोपदेशकपुरुषतासूचनार्थः, वर्त्तमाननिर्देशश्चात्र सर्वेषामाद्यतीर्थङ्कराणामयमेवोपदेशविधिरिति

ज्ञापनार्थं, यद्यपि कृषिवाणिज्यादयो बहवो जीवनोपायास्तथापि ते पश्चात्काले प्रादुर्बभूवुः भगवता तु सिल्पशतमेवोपदिष्टं अत एवाचार्योपदेशजं शिल्पमनाचार्योपदेशजं तु कर्म्मेति शिल्पकर्म्मणोर्विशेषमामनन्तीति, श्रीहेमसूरिकृतादिदेवचरित्रे तु-

॥ १ ॥ 'तृणहारकाष्ठहारकृषिवाणिज्यकान्यपि ।
कर्माण्यासूत्रयामास, लोकानां जीविताकृते ॥'

इत्युक्तमस्ति तदाशयेन तु कर्म्मणामित्यत्र द्वितीयार्थे षष्ठी ज्ञेया, तथा च कर्माणि जघन्यमध्यमोत्कृष्टभेदतस्त्रीण्यप्युपदिशतीत्यपि व्याख्येयं, शिल्पशतं च पृथगेवोपदिशतीति ज्ञेयमिति, अथात्र सूत्रे सङ्क्षेपतः प्रोक्ता विस्तरतस्तु श्रीराजप्रश्नीयादिसूत्रादर्शेषु दृश्यमाना द्वासप्ततिकलास्तत्पाठोपदर्शनपूर्वकं विव्रियन्ते, यथा-

"लेहं १ गणिअं २ रूवं ३ नट्टं ४ गीअं ५ वाइअं ६ सरगयं ७ पोक्खरगयं ८ समतालं ९ जूअं १० जनवायं ११ पासयं १२ अट्ठावयं १३ पोरकव्वं १४ दगमट्टिअं १५ अन्नविहिं १६ पानविहिं १७ वत्थविहिं १८ विलेवणविहिं १९ सयणविहिं २० अज्जं २१ पहेलिअं २२ मागहिअं २३ गाहं २४ गीअं २५ सिलोगं २६ हिरण्णजुत्तिं २७ सुवण्णजुत्तिं २८ चुण्णजुत्तिं २९ आभरणविहिं ३० तरुणीपरिकम्मं ३१ इत्थिलक्खणं ३२ पुरिसल० ३३ हयल० ३४ गयल० ३५ गोणलक्खणं ३६ कुक्कुडलक्खणं ३७ छत्तलक्खणं ३८ दंडलक्खणं ३९ असिलक्खणं ४० मणिलक्खणं ४१ कागणिलक्खणं ४२ वत्थुविज्जं ४३ खंधावारमाणं ४४ नगरमाणं ४५ चारं ४६ पडिचारं ४७ वूहं ४८ पडिवूहं ४९ चक्कवूहं ५० गरुडवूहं ५१ सगडवूहं ५२ जुद्धं ५३ नियुद्धं ५३ जुद्धातियुद्धं ५५ दिट्ठिजुद्धं ५६ मुट्ठिजुद्धं ५७ बाहुजुद्धं ५८ लयाजुद्धं ५५ इसत्थं ६० छरुप्पवायं ६१ धनुव्वेयं ६२ हिरण्णपागं ६३ सुवण्णपागं ६४ सुत्तखेड्डं ६५ वत्थखेड्डं ६६ नालिआखेड्डं ६७ पत्तच्छेज्जं ६८ कडच्छेज्जं ६९ सज्जीवं ७० निज्जीवं ७१ सउणरुअ ७२ मिति ।

अत्र लेहमित्यादीनि द्वासप्ततिपदानि राजप्रश्नीयानुसारेण द्वितीयान्तानि प्रतिभासन्ते इत्यत्रापि व्याख्यायां तथैव दर्शयिष्यन्ते, समवायाङ्गानुसारेण वा विभक्तिव्यत्ययेन प्रथमान्ततया स्वयं योजनीयानीति, तत्र लेखनं लेखः-अक्षरविन्यासस्तद्विषया कला-विज्ञानं लेख एवोच्यते, तं भगवानुपदिशतीति प्रकृते योजनीयं, एवं सर्वत्र योजना कार्या, स च लेखो द्विधा-लिपिविषयभेदात्, तत्र लिपिरष्टादशस्थानोक्ता, अथवा लाटादिदेशभेदतस्तथाविधविचित्रोपाधिभेदतो वाऽनेकविधेति, तथापि पत्रवल्कलकाष्ठदन्तलोहताम्ररजतादयोऽक्षराणामाधारास्तथा लेखनोत्किरणस्यूतव्यूतच्छिन्नभिन्नदग्धसङ्क्रान्तितोऽक्षराणि भवन्तीति, विषयापेक्षयाऽप्यनेकधा स्वामिभृत्यपितृपुत्रगुरुशिष्यभार्यापतिशत्रुमित्रादीनां लेखविषयाणामनेकत्वात्तथाविधप्रयोजनभेदाच्च, अक्षरदोषाश्चैते-

॥ १ ॥ 'अतिकार्श्यमतिस्थौल्यं, वैषम्यं पङ्क्तिवक्रता ।
अतुल्यानां च साम्यमविभागोऽवयवेषु च ॥'

तथा गणितं-सङ्ख्यानं सङ्कलिताद्यनेकभेदं पाटीप्रसिद्धं २ रूपं-लेप्यशिलासुवर्णमणिवस्त्रचित्रादिषु रूपनिर्माणं ३ नाट्यं-साभिनयनिरभिनयभेदभिन्नं ताण्डवं ४ गीतं-गन्धर्वकलां गानविज्ञानमित्यर्थः ५ वादितं-वाद्यं ततविततादिभेदभिन्नं ६ स्वरगतं गीतमूलभूतानां षड्जऋषभादिस्वराणां

ज्ञानं ७ पुष्करगतं पुष्करं-मृदङ्गमङ्गयादिभेदभिन्नं तद्विषयकं विज्ञानं, वाद्यान्तर्गतत्वेऽप्यस्य यत्पृथक्कथनं तत्परमसङ्गीताङ्गत्वख्यापनार्थं ८ समतालं-गीतादिमानकालस्तालः स समोऽन्यूनाधिकमात्रिकत्वेन यस्माद् ज्ञायते तत् समतालं विज्ञानं, कचित्तालमानमिति पाठः ९ द्यूतं सामान्यतः प्रतीतं १० जनवादं द्यूतविशेषं ११ पाशकं-प्रतीतं १२ अष्टापदं-शारिफलकद्यूतं त्विषयककलां १३ पुरःकाव्यमिति पुरतः पुरस्य काव्यं शीघ्रकवित्वमित्यर्थः १४ 'दगमट्टिअ'मिति दकसंयुक्तमृत्तिका विवेचकद्रव्यप्रयोगपूर्विका तद्विवेचनकलाप्युपचाराद्दकमृत्तिका तां १५ अन्नविधि-सूपकारकलां १६ पानविधि-दकमृत्तिकाकलया प्रसादितस्य सहजनिर्मलस्य तत्तत्संस्कारकरणं, अथवा जलपानविधिं जलपानविषये गुणदोषविज्ञानमित्यर्थः, १७ वस्त्रविधिं-वस्त्रस्य परिधानीयादिरूपस्य नवकोणदैविकादिभागयथास्थाननिवेशादिविज्ञानं, वानादिविधिस्तु अनन्तविज्ञानान्तर्गत इति नेह गृह्यते १८ विलेपनविधिं-यक्षकर्दमादिपरिज्ञानं १९ शयनविधिं-शयनं शय्या-पल्यङ्कादिस्तद्विधिं, स चैवं-

॥ १ ॥ ''कर्माङ्गुलं यवाष्टकमुदरासक्तं तुषैः परित्यक्तम् ।
अङ्गुलशतं नृपाणां महती शय्या जयायकृता ॥
॥ २ ॥ नवति सैव षड्ना द्वादशहीना त्रिषट्कहीना च ।
नृपपुत्रमन्त्रिबलपतिपुरोधसां स्युर्यथासङ्ख्यम् ॥
॥ ३ ॥ अर्द्धमतोऽष्टांशोनं विष्कम्भो विशुद्धकर्मणा प्रोक्तः ।
आयामस्त्र्यंशस्त्रिशंसमः पादोच्छ्रायः सकुप्यशिराः ॥

इत्यादिकं विज्ञानं, अथवा शयनं-स्वप्नं तद्विषयको विधिस्तं, यथा 'पूर्वस्यां शिरः कुर्या'-दित्यादिकं विधिं २० आर्या-सप्तचतुःकलगणादिव्यवस्थानिबद्धां मात्राच्छन्दोरूपां २१ प्रहेलिकां-गूढाशयपद्यं २२ मागधिकां-छन्दोविशेषं, लक्षणं चेदं-

॥ १ ॥ विसमेसु दुन्नि टगणा समेसु पो टो तओ दुसुवि जत्थ ।
लहुओ कगणो लहुओ कगणो तं मुणह मागहिअं ॥ ति-२२

द्वित्रिचतुःपञ्चषड्मात्रिका गणाः कचटतपसंज्ञाः २३, गाथां-संस्कृतेतरभाषानिबद्धा-मार्यामिव २४ गीतिकां पूर्वार्द्धसदृशाऽपरार्द्धलक्षणामार्यामिव २५ श्लोकं-अनुष्टुपविशेषं २६ हिरण्ययुक्तिं हिरण्यस्य-रूप्यस्य युक्तिं-यथोचितस्थाने योजनं २७ एवं सुवर्णयुक्तिं २८ चूर्णयुक्तिं-कोष्ठादिसुरभिद्रव्येषु चूर्णीकृतेषु तत्तदुचितद्रव्यमेलनं २९ आभरणविधिं व्यक्तं ३० तरुणीपरिकर्म-युवतीनामङ्गसत्क्रियां वर्णादिवृद्धिरूपां ३१ स्त्रलक्षणपुरुषलक्षणे सामुद्रिकप्रसिद्धे ३२-३३, हयलक्षणं-'दीर्घग्रीवाक्षिकूट' इत्यादिकमश्वलक्षणविज्ञानं ३४ गजलक्षणं ।

॥ १ ॥ 'पञ्चोन्नति- सप्त मृगस्य दैर्घ्यमष्टौ च हस्ताः परिणाहमानम् ।
एकद्विवृद्धावथमन्दभद्रौ, सङ्कीर्णनागोऽनियतप्रमाणः ॥'

इत्यादिकं ज्ञानं ३५ 'गोणलक्खणं' ति गोजातीयलक्षणं 'सास्राविलरूक्षाक्ष्यो मूषिकनयनाश्च न शुभदा गावः' इत्यादिकं ३६ कुर्कुटलक्षणं-'कुर्कुटजलनुरुहाङ्गुलिस्ताम्रवक्रनखचूलिकः सितः' इत्यादिकं ३७ छत्रलक्षणं यता चक्रिणां छत्ररत्नस्य ३८ दण्डलक्षणं-

॥ १ ॥ यष्ट्यातपत्राङ्कुशवेत्रचापवितानकुन्तध्वजचामराणाम् ।
व्यापीत १ तनत्री २ मधु ३ कृष्णा ४ वर्णा, वर्णक्रमेणैव ताय दण्डाः ॥

॥ २ ॥मन्त्रि १ भृ २ धन ३ कुल ४ क्षयावहा रोग ५ मृत्यु ६ जननाश्च पर्वभिः ।
इच्छाभिद्धि(?)कायैर्वर्धितैः क्रमाद्, क्रमशान्तविरतैः समैः फलम् ॥
॥ ३ ॥यात्राप्रसिद्धि १ द्विषतां विनाशी २, लाभाः ३ प्रभूता वसुधाऽऽगमश्च ४ ।
वृद्धि ५ पशूनामभिवाञ्छितासि ६-स्त्रयादिष्वयुग्मेषु तदीश्वराणाम् ॥
॥ १ ॥ 'अङ्गुलशतार्द्धमुत्तम ऊनः स्यात्पञ्चविंशतिं खड्गः ।
अङ्गुलमानाद्-ज्ञेयो व्रणोऽशुभो विषमपर्वस्थः ॥

अत्र व्याख्या-अङ्गुलशतार्द्धमुत्तमः खड्गः पञ्चविंशत्यङ्गुलानि ऊनः, अनयोः प्रमाणयोर्मध्यस्थितः पञ्चाशदङ्गुलादूनः पञ्चविंशतेरधिको मध्यमः, अङ्गुलमानाद्-अङ्गुलप्र- माणाद् यो व्रणो विषमपर्वस्थः-विषमपर्वाङ्गले स्थितः प्रथमतृतीयपञ्चमसप्तमादिष्वङ्गुलेषु स्थितः सः अशुभः, अर्थादेव समाङ्गुलेषु द्वितीयचतुर्थषष्ठाष्टमादिषु यः स्थितः स शुभः, मिश्रेषु समविषमाङ्गुलेषु मध्यम इत्यादि ४०, मणिलक्षणं रत्नपरीक्षाग्रन्थोक्तकाकपदमक्षिकापदकेश- राहित्यसशर्करता- स्वस्ववर्णोचितफलदायित्वादिमणिगुणदोषविज्ञानं ४१ काकणी-चक्रिणो रत्नविशेषस्तस्य लक्षणं- विषहरममानोन्मानादियोगप्रवर्तकत्वादि ४१ वास्तुनो-गृहभूमेर्विद्या वातुशास्त्रप्रसिद्धं गुणदोषविज्ञानं ४२ स्कन्धवारस्य मानं-

॥ १ ॥ ''एकेभैकरथास्त्रयश्वाः, पत्ति पञ्चपदातिका ।
सेना सेनामुखं गुल्मो, वाहिनी पृतना चमूः ॥

अनीकिनी च पत्तेः स्यादिमाधैस्त्रगुणैः क्रमात् । दशाकिन्योऽक्षौहिणी' त्यादि ४४ नगरमानं द्वादशयोजनायामनवयोजनव्यासादिपरिज्ञानं, उपलक्षणाच्च कलशादिनिरीक्षणपूर्वकसूत्रन्यास- यथास्थानवर्णादिव्यवस्थापरिज्ञानं ४५ चारो-ज्योतिश्चारस्तद्विज्ञानं ४६ प्रतिचारः-प्रतिकूलश्चारो ग्रहाणां वक्रगमनादिस्तत्परिज्ञानं अथवा प्रतिचरणं प्रतिचारो-रोगिणः प्रतीकारकरणं तद्ज्ञानं ४७ व्यूहं-युयुत्सूनां सैन्यरचनां यथा चक्रव्यूहे चक्रावृती तुम्बारकप्रध्यादिषु राजन्यकस्थापनेति ४८, प्रतिव्यूहं-तत्प्रतिद्वन्द्विनां तद्भङ्गोपायवृत्तानां व्यूहं ४९ सामान्यतो व्यूहान्तर्गतत्वेऽपि प्रधानत्वेन त्रीन् व्यूहविशेषनाह-चक्रव्यूहं-चक्राकृतिसैन्यरचनामित्यर्थः ५०, गरुडव्यूहं- गरुडाकृतिसैन्यरचनामित्यर्थः ५१ एवं शकटव्यूहं ५२ । युद्धं कुर्कुटानामवि मुण्डामुण्डि श्रृङ्गि- णामिव श्रृङ्गाश्रृङ्गि युयुत्सया योधयोर्वल्गनं ५३ नियुद्धं मल्लयुद्धं ५४, युद्धातियुद्धं- खड्गादिप्रक्षेपपूर्वकं महायुद्धं यत्र प्रतिद्वन्द्विहतानां पुरुषाणां पातः स्यात् ५५ दृष्टियुद्धं-योध- प्रतियोधयोश्चक्षुषोर्निर्निमेषावस्थानं ५६ मुष्टियुद्धं-योधयोः परस्परं मुष्ट्या हननं ५७ बाहुयुद्धं योधप्रतियोधयोः अन्योऽन्यं प्रसारितबाह्वोरेव निनंसया वल्गनं ५८ लतायुद्धं योधयोः यथा लता वृक्षमारोहन्ती आमूलमाशिरस्तं वेवेष्टि तथा यत्र योधः प्रतियोधश(री) रं गाढं निपीड्य भूमौ पतति तल्लतायुद्धं ५९ 'इसत्थं'ति प्राकृतशैल्या इषुशास्त्र नागबाणादिदिव्यास्त्रादिसूचकं शास्त्र ६० 'छरुप्पवायं'ति त्सरु खड्गमुष्टिस्तदवयववयोगात् त्सरुशब्देनात्र खड्ग उच्यते, तस्य प्रवादो यत्र शास्त्र तत्त्सरुप्रवादं, खड्गशिक्षाशास्त्रमित्यर्थः, प्रश्नव्याकरणे तु त्सरुप्रगतमिति पाठः ६१, धनुर्वेदं-धनुःशास्त्र ६२, हिरण्यपाकसुवर्णपाकौ-रजतसिद्धिकनकसिद्धी ६३, ६४। 'सुत्तखेड्डं'ति सूत्रखेलं-सूत्रक्रीडा, अत्र खेलशब्दस्य खेड्ड इत्यादेशः ६५, एवं वस्त्रखेड्डमपि

६६, एतत्कलाद्वयं लोकतः प्रत्येतव्यं, 'नालिआखेड्डं'ति नालिकाखेलं द्यूतविशेषं मा भूदिष्टदायविपरीतपाशकनिपातनमिति नालिकया यत्र पाशकः पात्यते, द्यूतग्रहणे सत्यपि अभिनिवेशनिबन्धनत्वेन नालिकाखेलं, अप्राधान्यज्ञापनार्थं भेदेन ग्रहः ६७, पत्रच्छेद्यं अष्टोत्तरशतपत्राणां मध्ये विवक्षितसङ्ख्याकपत्रच्छेदने हस्तलाघवं ६८, कटच्छेद्यं कटवत् क्रमच्छेद्यं वस्तु यत्र विज्ञाने तत्तथा, इदं च व्युतपटोद्वेष्टनादौ भोजनक्रियादौ चोपयोगि ६९, 'सज्जीवं'ति सज्जीवकरणं मृतधात्वादीनां सहजस्वरूपापादनं ७०, 'निज्जीवं'ति निर्जीवकरणं हेमादिधातुमारणं, रसेन्द्रस्य मूर्च्छाप्रापणं वा ७१, शकुनरुतं, अत्र शकुनपदं रुतपदं चोपलक्षणं, तेन वसन्तराजाद्युक्तसर्वशकुनसंग्रहः गतिचेष्टादिग्बलादिपरिग्रहश्च ७२, इति द्वासप्तति पुरुषकलाः ।

चतुःषष्टिः स्त्रीकलाश्चेमाः-नृत्य १ औचित्य २ चित्र ३ वादित्र ४ मन्त्र ५ तन्त्र ६ ज्ञान ७ विज्ञान ८ दम्भ ९ जलस्तम्भ १० गीतमान ११ तालमान १२ मेघवृष्टि ११ कलाकृष्टि १४ आरामरोपण १५ आकारगोपन १६ धर्मविचार १७ शकुनसार १८ क्रियाकल्प १९ संस्कृतजल्प २० प्रासादनीति २१ धर्मरीति २२ वर्णिकावृद्धि २३ स्वर्णसिद्धि २४ सुरभितैलकरण २५ लीलासंचरण २६ हयगजपरीक्षण २७ पुरुषस्त्रलक्षण २८ हेमरत्नभेद २९ अष्टादशलिपिपरिच्छेद ३० तत्कालबुद्धि ३१ वास्तुसिद्धि ३२ कामविक्रिया ३३ वैद्यकक्रिया ३४ कुम्भभ्रम ३५ सारिश्रम ३६ अञ्जनयोग ३७ चूर्णयोग ३८ हस्तलाघव ३९ वचनपाटव ४० भोज्यविधि ४१ वाणिज्यविधि ४१ मुखमण्डन ४२ शालिखण्डन ४४ कथाकथन ४५ पुष्पग्रन्थन ४६ वक्रोक्ति ४७ काव्यशक्ति ४८ स्फारविधिवेष ४९ सर्वभाषाविशेष ५० अभिदानज्ञान ५१ भूषणपरिधान ५२ भृत्योपचार ५३ गृहाचार ५४ व्याकरण ५५ परनिकारण ५६ रन्धन ५७ केशबन्धन ५८ वीणानाद ५९ वितण्डावाद ६० अङ्कविचार ६१ लोकव्यवहार ६२ अन्त्याक्षरिता ६३ प्रश्नप्रहेलिका ६४ इति।

अत्रोपलणादुक्तातिरिक्ताः स्त्रीपुरुषकला ग्रन्थान्तरे लोके च प्रसिद्धा ज्ञेयाः, अत्र च यत्पुरुषकलासु स्त्रीकलानां स्त्रीकलासु च पुरुषकलानां साङ्कर्यं तदुभयोपयोगितत्वात्, ननु तर्हि 'चोसट्ठि महिलागुणे इति ग्रन्थविरोधः, उच्यते, न ह्ययं ग्रन्थः स्त्रीमात्रगुणख्यापनपरः, किन्तु स्त्रीस्वरूपप्रतिपादकः, तेन केचित्पुरुषगुणत्वेऽपि न विरोधः, कलाद्वयोस्योक्तसङ्ख्याकत्वं तु प्रायो बहूपयोगित्वात्, इत्यलं विस्तरेण । शिल्पशतं चेदम्-कुम्भकृल्लोहकृच्चित्रकृत्तन्तुवायनापितलक्षणानि पञ्च मूलशिल्पानि तानि च प्रत्येकं विंशतिभेदानीति, तथा चार्षम्-

॥ १ ॥ "पंचेव य सिप्पाइं घड लोह चित्तनंतकासवए ।
इक्किक्कस्स य इत्तो वीसं २ भवे भेआ ॥" इति ॥

तन्वत्रैतेषा पञ्चमूलशिल्पानां उत्पत्तौ किं निमित्तमिति ?, उच्यते, युग्मिनामामौषध्याहारे मन्दाग्नितयाऽपच्यमाने हुतभुजि प्रक्षिप्यमाने तु समकालमेव दह्यमाने युगलिनैर्विज्ञप्तेन हस्तिस्कन्धारूढेन भगवता प्रथमं घटशिल्पमुपदर्शितं, क्षत्रियाः शस्त्रपाणय एव दुष्टेभ्यः प्रजां रक्षेयुरिति लोहशिल्पं, चित्राङ्गेषु कल्पद्रुमेषु हीयमानेषु चित्रकृतशिल्पं, वस्त्रकल्पमेषु हीयमानेषु तन्तुवायशिल्पं, बहुले युग्मिधर्मे पूर्वमर्द्धिष्णु रोमनखं (अथ वर्धिष्णु)मा मनुजांस्तुदत्विति नापितशिल्पमिति, ऋषभचरित्रे तु गृहादिनिमित्तवर्द्धक्ययस्कारयुग्मरूपं द्वितीयं शिल्पमुक्तं, शेषं तथैवेति, ननु भोग्यसत्कर्माण एवार्हन्तो भगवन्तः समुत्पन्नव्याधिप्रतीकारकल्पं स्त्र्यादिपरिग्रहं

कुर्वत नेतरे ततः किमसौ निरवद्यैकरुचिर्भगवान् सावद्या० कलाद्युपदर्शने प्रववृते ?

उच्यते, समानुभावतो वृत्तिहीनेषु दीनेषु मनुजेषु दुःस्थतां विभाव्य सञ्जातकरुणैकरसत्वात्, समुत्पन्नविवक्षितरसो हि नान्यरससापेक्षो भवति, वीर इव द्विजस्य चीवरदाने, अथैवं तर्हि कथमधिकलिप्सोस्तस्य सति सकलेऽशुके शकलदानं ?, सत्यं, भगवतश्चतुर्ज्ञानधरत्वेन तस्य तावन्मात्रस्यैव लाभस्यावधारणेनाथिकयोगस्य क्षेमानिर्वाहकत्वदर्शनात्, कथमन्यथा भगवदंसस्थलस्रस्ततच्छकलग्रहणेऽपि तदुत्थरिक्थार्द्धविभाजकस्तुन्नवायः समजायत ?, किञ्च-कलाद्युपायेन प्राप्तसुखवृत्तिकस्य चौर्यादिव्यसनासक्तिरपि न स्यात्, ननु भवतु नामोक्तहेतोर्जगद्भर्त्तु कलाद्युपदर्शकत्वं परं राजधर्मप्रवर्त्तकत्वं कथमुचितं ?, उच्यते, शिष्टानुग्रहाय दुष्टनिग्रहाय धर्मस्थितिसंग्रहाय च, ते राज्यस्थितिश्रिया सम्यक् प्रवर्त्तमानाः क्रमेण परेषां महापुरुषमार्गोपदर्शकतया चौर्यादिव्यसननिवर्त्तनतो नारकातिथेयीनिवारकतया ऐहिकामुष्मिकसुखसाधकतया च प्रशस्ता एवेति, महापुरुषप्रवृत्तिरपि सर्वत्र परार्थत्वव्यामा बहुगुणाल्पदोषकार्यकारणविचारणापूर्विकैवेति, युगादौ जगद्व्यवस्था प्रथमेनैव पार्थिवेन विधेयेति जीतमपीति, स्थानाङ्गपञ्चपञ्चमाध्ययनेऽपि-

"धम्मं णं चरमाणस्स पंच निस्साठाणा प० छक्काया १ गणो २ राया ३ गाहावई ४ सरीर ५' मित्याद्यालापकवृत्तौ राज्ञो निश्रामाश्रित्य राजा-नरपतिस्तस्य धर्मसहायकत्वं दुष्टेभ्यः साधुरक्षणादित्युक्तमस्तीति परमकरुणापरीतचेतसः परमधर्मप्रवर्त्तकस्य ज्ञानत्रययुतस्य भगवतो राजधर्मप्रवर्त्तकत्वे न काप्यनौचिती चेतसि चिन्तनीया, युक्त्युपपन्नत्वात्, तद्विस्तरस्तु जिनभवनपंचाशकसूत्रवृत्त्योर्यतनाद्वारे व्यक्त्या दर्शितोऽस्तीति तत एवावसेयो, इति, एतेन 'राज्यं हि नरकान्तं स्याद्, यदि राजा न धार्मिकः' इत्युक्तिरपि दृढबद्धमूला न कम्पत इति, किञ्च-

अत्र तृतीयारकप्रान्ते राज्यस्थित्युत्पादे धर्म्मस्थित्युत्पादः पञ्चमारकप्रान्ते च ।

॥ १ ॥ 'सुअसूरिसंघधम्मो पुव्वण्हे छिज्जिही अगणि सायं ।
निवविमलवाहणे सुहुममंतिनयधम्म मज्झण्हे ॥

इति वचनात्, धर्म्मस्थितिविच्छेदे राज्यस्थितिविच्छेद इत्यपि राज्यस्थितेर्धर्म्मस्थितिहेतुत्वाभिव्यञ्जकत्वमेवेति सर्वं सुस्थमित्यलं विस्तरेणेति । तदनु भगवान् किं चक्रे इत्याह-'उवदिसित्ता पुत्तसय'मित्यादि, उपदिश्य कलादिकं पुत्रशतं-भरतबाहुबलिप्रमुखं कोसलातक्षशिलादिराज्यशते अभिषिञ्चति-स्थापयति, अत्र शङ्खादिप्रभञ्जनावसानानि भरताष्टनवतिभ्रातृनामानि अन्तर्वाच्यादिषु सुप्रसिद्धानीति न लिखितानि, देशनामानि तु बहून्यप्रतीतानीति ।

अथ भगवतो दीक्षा कल्याणकमाह-'अभिसंचित्ता' इत्यादि, अभिषिच्य त्र्यशीतं पूर्वलक्षाणि महान् रागो-लौल्यं यत्र स चासौ वासश्च महारागवासो-गृहवासस्तन्मध्ये वसति गृहिपर्याये तिष्ठतीत्यर्थः, यद्यपि प्रागुक्तव्याधिप्रतीकारन्यायेनैव तीर्थकृतां गृहवासे प्रवर्त्तनं तथापि सामान्यतः स यथोक्त एवेति न दोषः, यद्वा महान् अरागः-अलौल्यं यत्र स चासौ वासश्चेति योजनीयं, यतो भगवदपेक्षया स एवंविध एवेति, एतेन 'तेवट्ठिं पुव्वसयसहस्साइं महारायवासमज्झे वसइ' त्ति पूर्वग्रन्थविरोधो नेति, उषित्वा, 'जे से' त्ति यः सः 'गिम्हाणं' ति आर्षे ग्रीष्मशब्दः स्त्रीलिङ्गो बहुवचनान्तश्च ततो ग्रीष्मस्येत्यर्थः, प्रथमो मासः, यथा ग्रीष्माणां-अवयवे समुदायोपचाराद्

ग्रीष्मकालमासानां मध्ये प्रथमो मासः प्रथमः पक्षश्चैत्रबहुल:-चैत्रान्धकारपक्षस्तस्य नवम्यास्तिथेः पक्षो-ग्रहो यस्य, तिथिमेलपातादिषु तथा दर्शनात्, तिथिपाते तत्कृत्यस्याष्टम्यामेव क्रियमाणत्वात्, स नवमपक्षः-अष्टमीदिवसस्तत्र, अनेन व्याख्यानेन 'चित्तबहुलट्ठमीए' इत्याद्यागमविरोधो न, वाचनान्तरेण नवमीपक्षो-नवमीदिवसः दिवसस्याष्टमीदिवसस्य मध्यंदिनादुत्तरकाले यद्यपि दिवसशब्दस्याहोरात्रवाचकत्वमन्यत्र प्रसिद्धं तथाऽप्यत्र प्रस्तावाद्दिवसो गतो रजनिरजनि इत्यादिवत् सूर्यचारविशिष्टकालविशेषग्रहणं, अन्यथा दिवसपाश्चात्यभागस्यानुपपत्तेः, त्यक्त्वा हिरण्यं-अघटितं सुवर्णं रजतं वा सुवर्णं-घटितं हेम हेम वा कोशं-भाण्डागारं कोष्ठागारं-धान्याश्रयगृहं, बलं-चतुरङ्गं वाहनं-वेसरादि पुरान्तःपुरे व्यक्ते विपुलं धनं-गवादि कनकं च-सुवर्णं (रमन्ते ग्राहका) येभ्यः सल्लक्षणेभ्यस्तानि रत्नानि मणयश्च प्राग्वत्, मौक्तिकानि-शुक्त्याकाशादिप्रभवानि, शङ्खाश्च-दक्षिणावर्त्ताः सिला-राजपट्टादिरूपाः, प्रवालानि-विद्रुमाणि रक्तरत्नानि-पद्मरागाः, पृथग्ग्रहणमे, प्राधान्यख्यापनार्थं, उक्तस्वरूपं यत्सत्सारं-सारातिसारं स्वापतेयं-द्रव्यं तत् त्यक्त्वा-ममत्वत्यागेन विच्छर्द्य-पुनर्ममत्वाकरणेन, कुतो ममत्वत्याग इत्याह-विगोप्य जुगुप्सनीयमेतत् अस्थिरत्वादिति कथनेन, कथं च निश्चात्याजनमित्याह-

'दायिकानां' गोत्रिकाणां 'दायं' धनविभागं 'परिभाज्य' विभागशो दत्वा, तदा च निर्नाथपान्थादियाचकानामभावाद् गोत्रिकग्रहणं, तेऽपि च भगवत्प्रेरिता निर्ममास्सन्तः शेषामात्रं जगृहुः, इदमेव हि जगद्गुरोजीतं यदिच्छावधि दानं दीयते, तेषां च इयतैव इच्छापूर्त्ति, ननु यदीच्छावधिकं प्रभोर्दानं तर्हि ऐदंयुगीनो जन एकाकि सकलं संवत्सरदेयं वा एक एव जिघृक्षेत्, इच्छाया अपरिमितत्वात्, सत्यं, प्रभुप्रभावेनैतादृशेच्छाया असम्भवात्, सुदर्शनानाम्यां शिबिकायामारूढमिति गम्यं ?

किंविशिष्टं भगवन्तं 'सदेवमनुजासुरया' स्वर्गभूपातालवासिजनसहितया 'पर्षदा' समुदायेन समनुगम्यमानं, ईदृशं च प्रभुं अग्रे-अग्रभागे शांखिकादयोऽभिनन्दयन्तोऽभिष्टुवन्तश्च एवं-वक्ष्यमाणमवादिषुरित्यन्वयः, तत्र शांखिकाः-चन्दनगर्भशङ्खहस्ता माङ्गल्यकारिणः शङ्खध्मा वा, चाक्रिकाः-चक्रभ्रामकाः, लाङ्गलिकाःगलकावलम्बितसुवर्णादिमयहलधारिणो भट्टविशेषाः मुखमङ्गलिकाः-चाटुकारिणः पुष्यमाणवा-मागधाः वर्धमानकाः-स्कन्धारोपितनराः आख्यायकाः-शुभाशुभकथकाः लंखा-वंशाग्रखेलकाः मङ्खाः-चित्रफलकहस्ताः भिक्षाका-गौरीपुत्रा इति रूढा घाण्टिकाः-घण्टावादकास्तेषां गणाः, सूत्रे च आर्षत्वात् प्रथमार्थे तृतीया, यथाश्रुतव्याख्याने च शाङ्खिकादिगणैः परिवृतमिति पदं कुलमहत्तरा इति पदं चान्वययोजनार्थमध्याहार्यं स्यात्, साध्याहारव्याख्यातोऽनध्याहारव्याख्यायां लाघवमिति ।

पञ्चमाङ्गे जमालिचरित्रे निष्क्रमणमहवर्णने शाङ्खिकादीनां प्रथमान्ततया निर्देश एतस्यैवाशयस्य सूचकः, यदि च 'प्रायः सूत्राणि सोपस्काराणि भवन्ती'ति न्यायोऽनुस्रियते तदा साध्याहारव्याख्यानेऽप्यदोषः, ताभि-विवक्षिताभिरित्यर्थः, वाग्भिरभिननदयन्त्राभिष्टुवन्तश्चेति योजना, विवक्षितत्वमेवाह-इष्यन्ते मेतीष्टास्ताभिः, प्रयोजनवशादिष्टमपि किञ्चित्स्वरूपतः कान्तं स्यादकान्तं चेत्यत आह-'कान्ताभिः' कमनीयशब्दाभि 'प्रियाभिः' प्रियार्थाभिः मनसा ज्ञायन्ते सुन्दरतया यास्ता मनोज्ञा भावतः सुन्दरा इत्यर्थः ताभि मनसा अम्यन्ते-गम्यन्ते पुनः पुनः या

सुन्दरत्वातिशयात्ता मनोऽमास्ताभि उदाराभिः शब्दतोऽर्थतश्च 'कल्याणाभिः' कल्याणाप्तिसूचकाभिः 'शिवाभिः' निरुपद्रवाभिः शब्दार्थदूषणोज्झिताभिरित्यर्थः 'धन्याभिः' धनलम्भिकाभिः 'मङ्गल्याभिः' मङ्गले-अनर्थप्रतिघाते साध्वीभिः सश्रीकाभिः-अनुप्रासाद्यलङ्कारोपेतत्वात् सशोभाभिः 'हृदयगमनीयाभि' अर्थप्राकट्यचातुरीसचिवत्वात् सुबोधाभिः, 'हृदयप्रह्लादनीयाभिः' हृदयगतकोपशोकादिग्रन्थिविद्रावणीभिः, उभयत्र कर्त्तर्यनट् प्रत्ययः, कर्णमनोनिर्वृतिकरीभिः अपुनरुक्ताभिरिति च स्पष्टं, अर्थशतानि यासु सन्ति ता अर्थशतिकास्ताभि अथवा अर्थानां-इष्टकार्याणां शतानि याभ्यस्ता अर्थशतास्ता एवार्थशतिकाः, स्वार्थे इक् प्रत्ययः।

अनवरतं-विश्रामाभावात् 'अभिनन्दयन्तश्च' जय जीवेत्यादिभणनतः समृद्धिमन्तं भगवन्तमाचक्षाणाः अभिष्टुवन्तश्च भगवन्तमेवेति, 'जय जये'ति भक्तिसम्भ्रमे द्विर्वचनं, नन्दति-समृद्धो भवतीति नन्दः तस्यामन्त्रणमिदं, इह च दीर्घत्वं प्राकृतत्वात्, अथवा जय त्वं जगन्नन्द ! जगत्समृद्धिकर ? जय जय भद्र ? प्राग्वत्, नवरं भद्रः-कल्याणवान् कल्याणकारी वा, धर्म्मेण-करणभूतेन न त्वभिमानलज्जादिना अभीतो भवपरीसहपसर्गेभ्यः, पराकृतत्वात् पञ्चम्यर्थे षष्ठी, परीषहोपसर्गाणां जेता भवेत्यर्थः, तथा क्षान्त्या न त्वसामथ्यादिना क्षम-सोढा भव, 'भयं' आकस्मिकं 'भैरवं' सिंहादिसमुत्थं तयोः, प्राकृतत्वात्पदव्यत्यये भैरवभयानां वा-भयङ्करभयानां क्षान्ता भव इत्यर्थः, नानावक्तृणां नानाविधवाग्भङ्गीति न पूर्वविशेषणान्तः पातेन पौनरुक्त्यं, धर्मे-प्रस्तुते चारित्रधर्म्मे अविघ्नं-विघ्नाभावस्ते-तव भवतु इतिकृत्वा धातूनामनेकार्थत्वाद्युञ्जार्य पुनः पुनरभिनन्दयन्ति चाभिष्टुवन्ति चेति, अथ येन प्रकारेण निर्गच्छति तमेवाह-

'तए णं' मित्यादि 'ततः' तदनन्तरं ऋषभोऽर्हन् कौशलिको नयनमालासहस्रैः शरेणिस्थितभगवद्दिदृक्षामात्रया व्यापृतनागरनेत्रवृन्दैः प्रेक्ष्यमाणः २-पुनः पुनरवलोक्यमानः, आभीक्ष्णये द्विर्वचनं सर्वं, एवं सर्वत्र तावद्वक्तव्यं यावन्निर्गच्छति-'यथौपपतिके' एवं यथा प्रथमोपाङ्गे चम्पातो भंभासारसुतस्य निर्गम उक्तस्तथाऽत्र वाच्यो, वाचनान्तरेण यावदाकुलबोलबहुलं नभः कुर्वन्निति पर्यन्ते इति, तत्र च यो विशेषस्तमाह-विनीता राजधान्या मध्यंमध्येन-मध्यभागेन इत्यर्थ निर्गच्छति, 'सुखं सुखेने' त्यादिवन्मध्यंमध्येनेति निपातः, औपपातिकगमश्चायं-

'हिययमालासहस्सेहिं अभिनंदिज्जमाणे २ मनोरहमालासहस्सेहिं विच्छिप्पमाणे २ वयणमालासहस्सेहिं अभिथुव्वमाणे २ कंतिरूवसोहग्गगुणेहिं पत्थिज्जमाणे २ अंगुलिमालासहस्सेहिं दाइज्जमाणे २ दाहिणहत्थेणं बहूणं नरनारीसहस्साणं अंजलिमालासहस्साइं पडिच्छमाणे २ मंजुमंजुणा घोसेण पडिबुज्झेमाणे २ भवनपंतिसहस्साइं समइच्छमाणे २ तंतीतालतुडिअगीअवाइअरवेणं महुरेण य मनहरेणं जयसद्दुग्घोसविसएणं मंजुमंजुणा घोसेणं पडिबुज्झेमाणे २ कंदर- गिरिविवर कुहरगिरिवरपासाउद्धघण भवणदेवकुलसिंघाडगतिग चउक्कचच्चरआरामुज्जाण काणाण सहापवापएसदेसभागे पडिंसुआसयसंकुलं करेंते हयहेसिअहत्थिगुल- गुलाइअरहघणघणाइय-सद्दमीसिएणं महया कलकलरवेणं जनस्स महुरेण पूरयंतो सुगंधवरकुसुमचण्ण- उव्विद्ध-वासरेणुकविलं नभं करेंते, कालागुरुकुंदुरुक्कतुरुक्कधूवनिवहेण जीवलोगमिव वासयंते समंतओ खुभिअचक्कवालं पउरजणबालवुद्धपमुइअतुरिअपहाविअविउल'त्ति, आउलपदमारभ्य निर्गच्छति

पदपर्यन्तं तु सूत्रे साक्षादेवनास्ति, अत्र व्याख्या-

हृदयमालासहस्रैः-जनमनःसमूहैरभिनन्द्यमानः २-समृद्धिमुपनीयमानो २ जय जीव नन्देत्याद्याशीर्दानेन, मनोरथमालासहस्रैः-एतस्यैवाज्ञापरा भवाम इत्यादिजनविकल्पैर्विशेषेण स्पृश्यमानः २ इत्यर्थः वदनमालासहस्रैर्वचनमालासहस्रैर्वा अभिष्टूयमानं २ कान्त्यादगुणैर्हेतुभिः प्रार्थ्यमानो २ भर्तृतया स्वामितया वा स्त्रीपुरुषजनैरभिलष्यमाणः २ अंगुलिमालासहस्रैर्दर्श्यमानः २ दक्षिणहस्तेन बहूनां नरनारीसहस्राणां अञ्जलिमालाः-संयुतकरमुद्राविशेषवृन्दानि प्रतीच्छन् २-गृह्णन् २, किमुक्तं भवति ? -त्रैलोक्यनाथेनापि प्रभुणा पौराणामस्माकमञ्जलिरूपा भक्तिर्मनस्यवतारितेति दक्षिणहस्तदर्शनं तथा महाप्रमोदाय भवतीति कुर्वन्, मञ्जुमञ्जुना-अतिकोमलेन घोषेण-स्वरेण प्रतिपृच्छन् २-प्रश्नयन् २ प्रणमतां स्वरूपादिवार्ता, भवनानां-विनीतानगरीगृहाणां पङ्क्तया-समश्रेणिस्थित्या सहस्राणि न तु पुष्पावकीर्णस्थित्या, समतिक्रामन् २, तन्त्रयातलताला: प्रसिद्धाः, त्रुटितानि-शेषवाद्यानि तेषां वादितं-वादनं, प्राकृतत्वात्पदव्यत्ययः गीतं च तयो रवेण यद्वा तन्त्र्यादीनां त्रुटितान्तानां गीते-गीतमध्ये यद्वादितं-वादनं तेन यो रवः-शब्दस्तेन मधुरेण-मनोहरेण तथा जयशब्दस्य उद्घोषः-उद्घोषणं विशदः-स्पष्टतया प्रतिभासमानं यत्र तेन मञ्जुमञ्जुना घोषेण पौरजनरवेण च प्रतिबुध्यमानः २-सावधानीभवन् २ कन्दराणि-दर्यं गिरीणां 'विवरकुहराणि' गुहाः पर्वतान्तराणि च गिरिवराः-प्रधानपर्वताः प्रासादाः-सप्तभूमिकादयः ऊर्ध्वघनभवनानि-उच्चाविरलगेहानि देवकुलानि-प्रतीतानि शृङ्गाटकं-त्रिकोणस्थानं त्रिकं-यत्र रथ्यात्रयं मिलति चतुष्कं-यत्र रथ्याचतुष्टयं चत्वरं-बहुमार्गाः ।

आरामाः-पुष्पजातिप्रधानवनखण्डाः उद्यानानि-पुष्पादिमद्वृक्षयुक्तानि काननानि-नगरासन्नानि सभा-आस्थायिकाः प्रपा-जलदानस्थानं एतेषां ये प्रदेशदेशरूपा भागास्तान्, तत्र प्रदेशा-लघुतरा भागा देशास्तु लघवः प्रतिश्रुतः-प्रतिशब्दास्तेषां शतसहस्राणि-लक्षास्तैः सङ्कुलान् कुर्वन्, अत्र बहुवचनार्थे एकवचनं प्राकृतत्वात्, हयानां हेषितेन-हेषारवरूपेण हस्तिनां गुलगुलायितरूपेण, रथानां घनघनायितेन-घनघनायितरूपेण शब्देन मिश्रितेन जनस्य महता कलकलरवेण आनन्दशब्दत्वान्मधुरेण-अक्रूरेण पूरयन् २, अत्र नभ इति उत्तरग्रन्थवर्तिना पदेन योगः, सुगन्धानां वरकुसुमानां चूर्णानां च उद्वेधः-ऊर्ध्वगतो वासरेणुः-वासकं रजस्तेन कपिलं नभः कुर्वन् कालागुरु-कृष्णागुरु कुंदुरुक्कः-चीडाभिधं द्रव्यं तुरुष्कं-सिल्हकं धूपश्च-दशाङ्गादिर्गन्धद्रव्यसंयोगजः एषां निवहेन जीवलोकं वासयन्निव, अत्रोत्प्रेक्षा तु जीवलोकवासनस्यावास्तवत्वेन, सर्वतः क्षुभितानि-साश्चर्यतया ससम्भ्रमाणि चक्रवालानि-जनमण्डलानि यत्र निर्गमे तद्यथा भवतीत्येवं निर्गच्छतीति, प्रचुरजनाश्च अथवा पौरजनाश्च बालवृद्धाश्च ये प्रमुदितास्त्वरितप्रधाविताश्च-शीघ्रं गच्छन्तस्तेषां व्याकुलाकुलानां-अतिव्याकुलानां यो बोलः-शब्दः स बहुलो यत्र तत्तथा, एवंभूतं नभः कुर्वन्, विशेषणानां व्यस्ततया निपातः प्राकृतत्वादिति, निर्गत्य च यत्रागच्छति तदाह-

'आसि' इत्यादि, आसिक्तं-ईषत् सिक्तं गन्धोदकादिना प्रमार्जितं कचवरशोधनेन सिक्तं-तेनैव विशेषतोऽत एव शुचिकं-पवित्रं पुष्पैर्य उपचारः-पूजा तेन कलितंयुक्तं, इदं च विशेषणं प्रमार्जितासिक्तसिक्तशुचिकमित्येवं दृश्यं, प्रमार्जिताद्यनन्तरभावित्वाच्छुचिकत्वस्य, एवंविधं

सिद्धार्थवनाभिमुखं गमनारम्भं कुर्वन्, तथा अश्वानां 'वइकरे'ति देशीशब्दोऽयं समूहवाची तेन हयादिसेनयेत्यर्थः, तथा पदातीनां चदकरेण वृन्देन च मन्दं २-यथा भवति तथा, क्रियाविशेषणं, यथा हयादिसेना पाश्चात्या समेति तथा २ बहुतरबहुतमकमित्यर्थः, उद्धतरेणुकं-ऊर्ध्वगतरजस्कं कुर्वन्, यत्रैव सिद्धार्थवनमुद्यानं यत्रैवाशोकवरपादपस्तत्रैवोपागच्छतीति ।

–उपागत्य यत्करोति तदाह-उपागत्याशोकवरपादपस्याधः शिबिकां स्थापयति, स्थापयित्वा च शिबिकायाः प्रत्यवरोहति, अवतरतीत्यर्थः, प्रत्यवरुह्य च स्वयमेवाभरणालङ्कारान्, तत्राभरणानि-मुकुटानीति अलङ्कारान्-वस्त्रदीन्, सूत्रे एकवचनं प्राकृतत्वात्, आभरणानि च अलङ्काराश्चेति समाहारद्वन्द्वकरणाद्वा, अवमुञ्चति-त्यजति, कुलमहत्तरिकाया हंसलक्षणपटे अवमुच्य च स्वयमेव चतसृभिः 'अट्ठाहिं'ति मुष्टिभिः करणभूताभिर्लुञ्चनीयकेशानां पञ्चमभागलुञ्चिकाभिरित्यर्थः, लोचं करोति, अपराङ्गालङ्कारादिमोचनपूर्वकमेव शिरोऽलङ्कारादिमोचनं विधिक्रमायेति पर्यन्ते मस्तकालङ्कारकेशमोचनं, तीर्थकृतां पञ्चमुष्टिलोचसम्भवेऽपि अस्य भगवतश्चतुर्मुष्टिकलोचगोचरः श्रीहेमाचार्यकृतऋषभचरित्राद्यभिप्रायोऽयं-

'प्रथममेकया मुष्ट्या श्मश्रुकूर्चयोर्लोचे तिसृभिश्च शिरोलोचे कृते एकां मुष्टिमवशिष्यमाणां पवनान्दोलितां कनकावदातयोः प्रभुस्कन्धयोरुपरि लुठन्तीं मरकतोपमानमाबिभ्रती परमरमणीयां वीक्ष्य प्रमोदमानेन शक्रेण भगवन्! मय्यनुग्रहं विधाय ध्रियतामियमित्थमेवेति विज्ञप्ते भगवतापि सा तथैव रक्षितेति, 'न ह्येकान्तभक्तानां याचनामनुग्रहीतारः खण्डयन्ती'ति, अत एवेदानीमपि श्रीऋषभमूर्त्तौ स्कन्धोपरि वल्लरिका क्रियन्ते इति, लुञ्चिताश्च केशाः शक्रेण हंसलक्षणपटे क्षीरोदधौ क्षिप्ता इति, षष्ठेन-भक्तेन उपवासद्वयरूपेण अपानकेनचतुर्विधाहारेण ।

'आषाढाभि'रित्यत्र 'ते लुग्वे' त्यनेन उत्तरपदलोपे उत्तराषाढाभिर्वचनवैषम्यमार्षत्वात्, नक्षत्रेण योगमुपागतेनार्थाच्चन्द्रेणेति गम्यं, उग्राणां-अनेनैव प्रभुणा आरक्षकत्वेन नियुक्तानां भोगानां-गुरुत्वेन व्यवहृतानां राजन्यानां-वयस्यतया व्यवस्थापितानां क्षत्रियाणां-शेषप्रकृतितया विकल्पितानां चतुर्भिः पुरुषसहस्रैः सार्द्धं, एते च बन्धुभिः सुहृद्भिर्भरतेन च निषिद्धा अपि कृतज्ञत्वेन स्वाम्युपकारं स्मरन्तः स्वामिविरहभीरवो वान्तान्न इव राज्यसुखे विमुखा यत्स्वामिनाऽनुष्ठेयं तदस्माभिरपीति कृतनिश्चयाः स्वामिनमनुगच्छन्ति स्म, एकं देवदूष्यं शक्रेण वामस्कन्धे जीतमित्यर्पितं उपादाय, न तु रजोहरणादिकं लिङ्गं कल्पातीतत्वाज्जिनेन्द्राणां, मुण्डो द्रव्यतः शिरः कूर्चलोचनेन भावतः कोपाद्यपासनेन भूत्वा अगाराद्-गृहवासान्निष्क्रम्येति गम्यं, अनगारितां-अगारी-गृही असंयतस्तत्प्रतिषेधादनगारी-संयतस्तद्भावस्तत्ता तां साधुतामित्यर्थः प्रव्रजितः-प्रगतः प्राप्त इतियावत्, अथवा विभक्तिपरिणामादनगारितया-निर्ग्रन्थतया प्रव्रजितः-प्रव्रज्यां प्रतिपन्नः ।

अथ प्रभोश्चीवरधारित्वकालमाह-

**मू. (४४)** *उसभे णं अरहा कोसलिए संवच्छरं साहिअं चीवरधारी होत्था, तेण परं अचेलए। जप्पभिइं च णं उसभे अरहा कोसलिए मुंडे भवित्ता अगाराओ अनगारियं पव्वइए तप्पभिइं च णं उसभे अरहा कोसलिए निच्चं वोसट्ठकाए चिअत्तदेहे जे केइ उवसग्गा उप्पज्जंति तं०-*

*दिव्वा वा जाव पडिलोमा वा अनुलोमा वा, तत्थ पडिलोमा वेत्तेण वा जाव कसेण वा काए आउट्टेज्जा अनुलोमा वं देज्ज वा जाव पज्जुवासेज्ज वा ते सव्वे सम्मं सहइ जाव अहिआसेइ,*

तए णं से भगवं समणे जाए ईरिआसमिए जाव पारिट्ठावणिआसमिए मनसमिए जाव कायसमिए मणगुत्ते जाव गुत्तबंभयारी अकोहे जाव अलोहे संते पसंते उवसंते परिनिव्वुडे छिन्नसोए निरुवलेवे संखमिव निरंजणे जच्चकणगं व जायरूवे आदरिसपडिभागे इव पागडभावे कुम्मो इव गुत्तिंदिए पुक्खरपत्तमिव निरुवलेवे गगनमिव निरालंबणे अनिले इव निरालए चंदो इव सोमदंसणे सूरो इव तेअंसी विहग इव अपडिबद्धगामी सागरोइव गंभीरे मंदरोइव अकंपे पुढवीविव सव्वफासविसहे जीवो विव अप्पडिहयगइत्ति । नत्थि णं तस्स भगवंतस्स कत्थइ पडिबंधे ।

से पडिबंधे चउव्विहे भवति, तंजहा- दव्वओ खित्तओ कालओ भावओ, दव्वओ इह खलु माया मे पिया मे भाया मे भगिनी मे जाव संगंथसंथुआ [illegible] उवगरणं मे, अहवा समासओ सच्चित्ते वा अचित्ते वा मीसए वा दव्वजाए सेवं तस्स न भवइ, खित्तओ गामे वा नगरे वा अरण्णे वा खेत्ते वा खले वा गेहे वा अंगणे वा एवं तस्स न भवइ, कालओ थोवे वा लवे वा मुहुत्ते वा अहोरत्ते वा पक्खे वा मासे वा उऊए वा अयने वा संवच्छरे वा अन्नयरे वा दीहकालपडिबंधे एवं तस्स न भवइ, भावओ कोहे वा जाव लोहे वा भए वा हासे वा एवं तस्स न भवइ, से णं भगवं वासावासवज्जं हेमंतगिम्हासु गामे एगराइए नगरे पंचराइए ववगयहाससोगअरइभयपरित्तासे निम्ममे निरहंकारे लहुभूए अगंथे वासीतच्छणे अदुट्ठे चंदणाणुलेवणे अरत्ते लेट्ठुंमि कंचणंमि अ समे इह लोए अपडिबद्धे जीवियमरणे निरवकंखे संसारपारगामी कम्मसंगनिग्घायणट्ठाए अब्भुट्ठिए विहरइ ।

तस्स णं भगवंतस्स एतेणं विहारेणं विहरमाणस्स एगे वाससहस्से विइक्कंते समाणे पुरिमतालस्स नगरस्स बहिआ सगडमुहंसि उज्जाणंसि निग्गोहवरपायवस्स अहे झाणंतरिआए वट्टमाणस्स फग्गुणबहुलस्स इक्कारसीए पुव्वण्हकालसमयंसि अट्ठमेणं भत्तेणं अपाणएणं उत्तरासाढाणक्खत्तेणं जोगमुवागएणं अनुत्तरेणं नाणेणं जाव चरित्तेणं अनुत्तरेणं तवेणं बलेणं वीरिएणं आलएणं विहारेणं भावणाए खंतीए गुत्तीए मुत्तीए तुट्ठीए अज्जवेणं मद्दवेणं लाघवेणं सुचरिअसोवचिअफलनिव्वाणमग्गेणं अप्पाणं भावेमाणस्स अनंते अनुत्तरे निव्वाघाए निरावरणे कसिणे पडिपुण्णे केवलवरनाणदंसणे समुप्पण्णे जिने जाए केवली सवन्नू सव्वदरिसी सणेरइअतिरिअनरामरस्स लोगस्स पज्जवे जाणइ पासइ, तंजहा- आगइं गइं ठिइं उववायं भुत्तं कडं पडिसेविअं आवीकम्मं रहोकम्मं तं तं कालं मनवयकाये जोगे एवमादी जीवाणवि सव्वभावे अजीवाणवि सव्वभावे मोक्खमग्गस्स विसुद्धतराए भावे जाणमाणे पासमाणे एस खलु मोक्खमग्गे मम अन्नेसिं च जीवाणं हियसुहणिस्सेसकरे सव्वदुक्खविमोक्खणे परमसुहसमाणणे भविस्सइ । तते णं से भगवं समणाणं निग्गंथाण य निग्गंथीण य पंच महव्वयाइं सभावणगाइं छच्च जीवणिकाए धम्मं देसमाणे विहरति, तंजहा- पंच महव्वयाइं सभावणगाइं भाणिअव्वाइंति ।

उसभस्स णं अरहओ कोसलिअस्स चउरासी गणा गणहरा होत्था, उसभस्स णं अरहओ कोसलिअस्स उसभसेनपामोक्खाओ चुलसीइं समणसाहस्सीओ उक्कोसिआ समणसंपया होत्था, उसभस्स णं बंभीसुंदरीपामोक्खाओ तिन्नि अज्जिआसयसाहस्सीओ उक्कोसिआ अज्जिआसंपया होत्था, उसभस्स णं० सेज्जंसपामोक्खाओ तिन्नि समणोवासगसयसाहस्सीओ पंच य साहस्सीओ

*उक्कोसिआ समणोवासगसंपया होत्था, उसभस्स णं० सुभद्दापामोक्खाओ पंच समणोवासिआस-यसाहस्सीओ चउपन्नं च सहस्सा उक्कोसिआ समणोवासिआसंपया होत्था*

*उसभस्स णं अरहओ कोसलिअस्स अजिणाणं जिणसंकासाणं सव्वक्खरसन्निवाईणं जिणो विव अवितहं वागरमाणाणं चत्तारि चउद्दसपुव्वीसहस्सा अद्धट्ठमा य सया उक्कोसिआ चउदसपुव्वीसंपया होत्था, उसभस्स णं० नव ओहिनाणिसहस्सा उक्कोसिआ०, उसभस्स णं० वीसं जिनसहस्सा वीसं वेउव्विअसहस्सा छच्च सया उक्कोसिआ० बारस विउलमइसहस्सा छच्च सया पन्नासा बारस वाईसहस्सा छच्च सया पन्नासा, उसभस्स णं० गइकल्लाणाणं ठिइकल्लाणाणं आगमेसिभद्दाणं बावीसं अनुत्तरोववाईआणं सहस्सा नव य सया, उसभस्स णं० वीसं समणसहस्सा सिद्धा, चत्तालीसं अज्जिआसहस्सा सिद्धा सट्ठिं अंतेवासीसहस्सा सिद्धा।*

*अरहओ णं उसभस्स बहवे अंतेवासी अनगारा भगवंतो अप्पेगइआ मासपरिआया जहा उववाइए सव्वओ अनगारवण्णओ जाव उड्ढंजाणू अहोसिरा झाणकोट्ठोवगया संजमेणं तवसा अप्पाणं भावेमाणा विहरंति, अरहओ णं उसभस्स दुविहा अंतकरभूमी होत्था, तंजहा-*

*जुगंतकरभूमी अ परिआयंतकरभूमी य, जुगंतकरभूमी जाव असंखेज्जाइं पुरिसजुगाइं, परिआयंतकरभूमी अंतोमुहुत्तपरिआए अंतमकासी।*

वृ- 'उसभे ण'मित्यादि, ऋषभोऽर्हन् कौशलिकः साधिकं समासमित्यर्थः, संवत्सरं-वर्षं यावद् वस्त्रधारी अभवत्ततः परमचेलकः, अत्र ये केचन लिपिप्रमादादादर्शेष्विदमाधिकमित्याहुस्तैरा-वश्यकचूर्णिगतश्रीऋषभदेवदेवदूष्याधिकारेऽयमेवालापको द्रष्टव्यः, श्रामण्यानन्तरंकथंप्रभु प्रवृत्तोइत्याह-

'जप्पभिइं च ण'मित्यादि, यतःप्रभृति ऋषभोऽर्हन् कौशलिकः प्रव्रजितस्ततःप्रभृति नित्यं व्युत्सृष्टकायः परिकर्मवर्जनात् त्यक्तदेहः परीषहादिसहनात् ये केचिदुपसर्गा उत्पद्यन्ते, तद्यथा-दिव्या-देवकृता वाशब्दः समुच्चये यावत्करणात् 'माणुसा वा तिरिक्खजोणिआ वा' इति पदग्रहः, प्रतिलोमाः-प्रतिकूलतया वेद्यमाना अनुलोमाः-अनुकूलतया वेद्यमानाः, वाशब्दः पूर्ववत्, तत्र प्रतिलोमा वेत्रेण-जलवंशेन यावच्छब्दात् 'तयाए वा छियाए वा लयाए वा' इति, तत्र त्वचया-सनादिकया छिवया-श्लक्ष्णया लोहकुश्या लतया-कम्बया कषेण-चर्मदण्डेन, वाशब्दः प्राग्वत्, कश्चिद्दुष्टात्मा काये 'विवक्षातः कारकाणी'त्याधारविवक्षायां सप्तमी आकुट्टयेत् ताडयेदित्यर्थः, अनुलोमास्तु 'वंदेज्ज वा' यावत्करणात् 'पूएज्ज वा सक्कारेज्ज वा जाव चेइयं' इति, वन्देत वा स्तुतिकरणेन पूजयेद्वा पुष्पादिभिः सत्कुर्याद्व वस्त्रादिभिः सन्मानयेद्वा अभ्युत्थानादिभिः कल्याणं भद्रकारित्वात् मङ्गलं अनर्थप्रतिघातित्वात् देवतां-इष्टदेवतामिव चैत्यंइष्टदेवताप्रतिमामिव पर्युपासीत वा-सेवेतेति, तान् प्रतिलोमानुलोमभेदभिन्नान् उपसर्गान् सम्यक् सहते भयाभावेन, यावत्करणात् 'खमइ तितिक्खइ'त्ति क्षमते क्रोधाभावेन तितिक्षे दैन्यानवलम्बनेन अध्यासयति अविचलकायतयेति। अथ भगवतः श्रमणावस्थां वर्णयन्नाह-

'तए णं से' इत्यादि, ततः स भगवान् श्रमणो-मुनिर्जातः, किंलक्षण इत्याह-ईर्यायां-गमनागमनादौ समितः-सम्यक् प्रवृत्तः उपयुक्त इत्यर्थः,अग्रेतनपदं तु साक्षादेवास्ति, भाषायांनिरवद्यभाषणे समितः एषणायां-पिण्डविशुद्धौ आधाकर्मादिदोषरहितभिक्षाग्रहणे समितः भाण्डमात्रस्य-उपकरणमात्रस्योपादाने-ग्रहणे निक्षेपणायां च-मोचने समितः प्रत्युपेक्षणादिकसुन्दर-

चेष्टया सहित इत्यर्थः, सूत्रे व्यस्ततया पदनिर्देश आर्षत्वात्, अथवा आदानेन सह भाण्डमात्रस्य निक्षेपणेति समासयोजना, उच्चारः-पुरीषं प्रश्रवणं-मूत्रं खेलः-कफः सिंघानो-नासिकामलः जल्लः-शरीरमलः एषां परि-सर्वैः प्रकारैः स्थापनं-अपुनर्ग्रहणतया न्यासः परित्याग इत्यर्थः तत्र भवा पारिष्ठापनिकी, तत्र सुन्दर चेष्टा क्रिया इत्यर्थः, तस्यां समितः-उपयुक्तः, "प्रत्यये ङीर्नवा" इति प्राकृतसूत्रेण स्वलक्षणो ङीप्रत्ययो विकल्पनीयः।

यथा 'ईरियावहिआए विराहणाए' इत्यत्र, एतासान्त्यसमितिद्वयं भगवतो भाण्डसिञ्चाना-द्यसम्भवेऽपि नामाखण्डनार्थमुक्तमिति वादरैषिकथा प्रति नाति, सूक्ष्मैषिकथा तु यथा वस्त्रैषणाया असम्भवेऽपि सर्वथा एषणासमितेर्भगवतोऽसम्भवो न, आहारादौ तस्या उपयोगात्, तथाऽ-न्यभाण्डासम्भवेऽपि देवदूष्यसम्बन्धिनी चतुर्थसमितिर्भवत्येव, दृश्यते च श्रीवीरस्य द्विजदाने देवदूष्यादाननिक्षेपौ, एवं श्लेष्माद्यभावेऽपि नीहारप्रवृत्तौ पञ्चमीसमितिरपीत्यलं प्रसङ्गेन, तथा मनःसमितः-कुशलमनोयोगप्रवर्तकः वचःसमितः-कुशलवाग्योगप्रवर्तकः, भाषासमित इत्युक्तेऽपि यद्वचःसमित इत्युक्तं तद् द्वितीयसमितावत्यादरनिरूपणार्थं करणत्रयशुद्धिसूत्रे सङ्ख्यापूरणार्थं च, कायसमितः-प्रशस्तकायव्यापारवान्, मनोगुप्तः-अकुशलमनोयोगरोधकः यावत्पदात् 'वयगुत्ते कायगुत्ते गुत्ते गुत्तिंदिए'त्ति वाग्गुप्तः-अकुशलवागयोगनिरोधकः कायगुप्तः-अकुशलकाययोग-निरोधकः, एवं च सत्प्रवृत्तिरूपाः समितयोऽसत्प्रवृत्तिनिरोधरूपास्तु गुप्तय इति, अत एव गुप्तः सर्वथा संवृतत्वात्, गुप्तेन्द्रियः शब्दादिष्विन्द्रियार्थेष्वरक्तद्विष्टतया प्रवर्त्तनात्, तथा गुप्तिभिर्वसत्यादिभिर्यत्नपूर्वकं रक्षितं गुप्तं ब्रह्म-मैथुनविरतिरूपं चरतीत्येवंशीलः, तथा अक्रोधः यावत्करणात् 'अमाणे अमाए' इति पदद्वयं ग्राह्यं, व्यक्तं च, अलोभः, अत्र सर्वत्र स्वल्पार्थे नञ् ग्राह्यः, तेन स्वल्पक्रोधादिभिरित्यर्थः, अन्यथा सूक्ष्मसम्परायगुणस्थानकावधि लोभोदयस्योपशान्त-मोहावधि च चतुर्णामपि क्रोधादीनां सत्तायाः सम्भवे तदभावासम्भवात्, कुत एवंविध इत्याह-शान्तो-भवभ्रमणतः प्रस्वान्तः-प्रकृष्टचित्तः उपसर्गाद्यापातेऽपि धीरचित्तत्वात् उपशान्त इति व्यक्तं अत एव परिनिर्वृतः सकलसन्तापवर्जितत्वत्, छिन्नश्रोताः-छिन्नसंसारप्रवाहः छिन्नशोको वा निरुपलेपो-द्रव्यभावमलरहितः, अथ सोपमानैश्चतुर्दशविशेषणैर्भगवन्तं विशिनष्टि-

'शङ्खमिवे'त्यत्र प्राकृतशैल्या क्लीबभावस्तेन शङ्ख इव निर्गतमञ्जनमिवाञ्जनं-कर्म जीवमालिन्यहेतुत्वात् यस्मात् स तथा, जात्यकनकमिव-षोडशवर्णककाञ्चनमिव जातं रूपं-स्वरूपं रागादिकुद्रव्यविरहाद्यस्य स तथा, आदर्शे-दर्पणे प्रतिभागः-प्रतिबिम्बः स इव प्रकटभावः, अयमर्थः-आदर्शे प्रतिबिम्बितस्य वस्तुनो यथा यथावदुपलभ्यमानस्वभावा नयनमुखादिधर्मा उपलभ्यन्ते तथा स्वामिन्यपि यथास्थितो मनःपरिणाम उपलभ्यते, न तु शठवद्दर्शितावहित्थ इति, कूर्मवद् गुप्तेन्द्रियः, कच्छपो हि कन्धरापादलक्षणावयवपञ्चकेन गुप्तो भवति एवमयमपीन्द्रियपञ्चकेन, पूर्वोक्तं गुप्तेन्द्रियत्वं दृष्टान्तद्वारा सुबोधमिति न पौनरुक्त्यं, पुष्करपत्रमिव निरुपलेपः, पङ्कजलकल्पस्वजनविषयस्नेहरहित इत्यर्थः, गगनमिव निरालम्बनः-कुलग्रामनगरादिनिश्रारहितः अनिल इव-वायुरिव निरालयोवसतिप्रतिबन्धवन्ध्यः, यथोचितं सततविहारित्वात्, अयमत्राशयः-यथा वायुः सर्वत्र संचरिष्णुत्वेनानियतवासी तथा प्रभुरपीति, चन्द्र इव सौम्यदर्शनः-अरौद्रमूर्त्तिः, सूर इव तेजस्वी परतीर्थिकतेजोऽपहारित्वात्, विहगः-पक्षी स इवाप्रतिबद्धतया गच्छतीत्येवंशीलः

स तथा, किमुक्तं भवति ? स्थलचरजलचरौ स्थलजलनिश्रितगमनौ न तथा विहगः स्वावयवभूतपक्षसापेक्षगामित्वात्, तेन विहगवदयं प्रभुरनेकेष्वनार्यदेशेषु कर्मक्षयसाहायककारिषु परानपेक्षः स्वशक्त्या विहरतीति, सागर इव गम्भीरः-परैरलब्धमध्यो निरुपमज्ञानवत्त्वेऽपि रहःकृतपरदुश्चरितानामपरिस्रवित्वात् हर्षशोकादिकारणसद्भावेऽपि तद्विकारादर्शनाद्वा, मन्दर इव अकम्पः, स्वप्रतिज्ञातेषु तपःसंयमेषु दृढाशयत्वेन प्रवर्त्तनात्, पृथ्वीव सर्वान् स्पर्शाननुकूलेतरान् विषहते यः स तथा, जीव इवाप्रतिहतगति-अस्खलितगति, यथा हि जीवस्य कटकुट्यादिभिर्न गति प्रतिहन्यते तथा केनापि परपाखण्डिना आर्यानार्यदेशेषु सञ्चरतः प्रभोरपि, अथ मा भवन्तु दुर्द्धर्षस्य प्रभोः परे गतिविघातकाः परं स्वप्रतिबन्धेनापि गतिर्विहन्यते इत्याह-

'नत्थि ण' मित्यादि नास्ति तस्य भगवतः कुत्रचित् प्रतिबन्धः-अयं ममास्याहमित्याशयबन्धरूपः, अयमेव हि संसारशब्दव्यपदेश्यः, यदूचे-

॥ १ ॥ "अयं ममेति संसारो, नाहं न मम निर्वृति ।<br>
चतुर्भिरक्षरैर्बन्धः, पञ्चभिः परमं पदम् ॥"

स च द्रव्यतः-द्रव्यं प्रतीत्य , एवं क्षेत्रत इत्याद्यपि, तत्र द्रव्यत इति व्याख्येयपदपरामर्शार्थं तेन न पौनरुक्त्यं, इह लोके खलुर्वाक्यालङ्कारे माता मम पिता ममेत्यादि यावत्करणात् 'भज्जा मे पुत्ता मे धूआ मे नत्ता मे सुण्हा मे सहिसयण' त्ति भार्यापुत्रौ प्रसिद्धौ धूआ-पुत्री नत्ता-पुत्रपुत्रः स्नुषा-पुत्रभार्या सखा-मित्रं स्वजनः-पितृव्यादि सग्रन्थः-स्वजनस्यापि स्वजनः पितृव्यपुत्रशालादि संस्तुतो-भूयोदर्शनेन परिचितः, एषां च जीवपर्यायत्वाद् द्रव्यत्वं, कथञ्चित् पर्यायपर्यायिणोरभेदोपचारात्, हिरण्यं मे सुवर्णं मे, यावच्छब्दात् ।

'कंसं मे दूसं मे धनं मे' इत्यादि प्रकरणं उपकरणं-उक्तव्यतिरिक्तं, अयं च यावत्पदसंग्रहोऽदृष्टमूलकत्वेन मयैव सिद्धान्तशैल्या प्राकृतीकृत्य स्थानाशून्यतार्थं लिखितोऽस्ति तेन सैद्धान्तिकैरेतन्मूलपाठगवेषणायामुद्यमः कार्य, प्रकारान्तरेण द्रव्यप्रतिबन्धमाह-अथवेति-प्रकारान्तरे, उक्तरीत्या प्रतिव्यक्ति कथनस्याशक्यत्वेन सङ्क्षेपत उच्यते इति शेषः, सचित्तेद्विपदादौ अचित्ते-हिरण्यादौ मिश्रे हिरण्यालङ्कृतद्विपदादौ, द्रव्यजाते-द्रव्यप्रकारे वा समुच्चये स-प्रतिबन्धस्तस्य प्रभोरेवमिति-ममेदमित्याशयबन्धेन न भवति । 'खित्तओ' इत्यादि, नवरं क्षेत्रं-धान्यजन्मभूमि खलं-धान्यमेलन- पचनादिस्थंडिलं एवं-उक्तरीत्या आशयबन्धस्तस्य प्रभोर्न भवति, 'कालओ' इत्यादि, कालतः स्तोके-सप्तप्राणमाने लवे-सप्तस्तोकमाने मुहूर्ते - सप्तसप्ततिलवमाने अहोरात्रे -त्रिंशन्मुहूर्त्तमाने पक्षे-पञ्चदशाहोरात्रमाने मासे - पक्षद्वयमाने ऋतौ-मासद्वयमाने अयने-ऋतुत्रयमाने संवत्सरे-अयनद्वयमाने अन्यतरस्मिन् वा दीर्घकाले-वर्षशतादौ प्रतिबन्धः एवं-उक्तप्रकारेण तस्य न भवति, अयमृतुरनुकूलो ममायं च प्रतिकूलो ममेति मतिर्न तस्य, यथा श्रीमतां शीतर्त्तुरनुकूल- तया प्रतिबन्धं विधत्ते निर्द्धनानां तु उष्णर्त्तुः

'भावओ' इत्यादि, कण्ठ्यमेतत्, नवरं कदाग्रहवशात् क्रोधादी न् न त्यजामीति धीर्न तस्येत्यर्थः, एतच्च सूत्रमुपलक्षणभूतं तेनानुक्तानां सर्वेषामपि पापस्थानानां ग्रहः, अथ कथं भगवान् विहरति स्मेत्याह- स भगवान् वर्षासु-प्रावट्काले वासः -अवस्थानं तद्वर्ज्जः, तेन विनेत्यर्थः, हेमन्ताः-शीतकालमासाः गीष्मा-उष्णकालमासास्तेषु ग्रामे-अल्पीयसि सन्निवेशे एका

रात्रिर्वासमानतया यस्य स एकरात्रिकः एकदिनवासीत्यर्थः, नगरे—गरीयसि सन्निवेश पञ्च रात्रयो वासमानतया यस्य स तथा, पञ्चदिनवासीति भावः, यथा दिनशब्दोऽहोरात्रवाची तथा रात्रिशब्दोऽप्यहोरात्रवाचीति, ननु तर्हि दिनशब्द एव कथं नोपात्तः ?, निशाविहारस्या संयमहेतुत्वेन चतुर्ज्ञानिनोऽपि तीर्थकरा अवगृहीतायां वसतावव वासतेय्यां वसन्तीति वृद्धाम्नायः।

'व्यपगतहास्यशोकरतिभयपरित्रासः' तत्रारति—मनसोऽनौत्सुक्यमुद्वेगफलकं रति-तदभावः परित्रासः—आकस्मिकं भयं शेषं व्यक्तं, निर्गतो ममेतिशब्दो यस्मात् स तथा, किमुक्तं भवति ?—प्रभोर्ममेताभिलापेनाभिलाप्यं नास्तीति, षष्ठ्येकवचनान्तस्यास्मच्छब्द- स्यानु-करणशब्दत्वान्ममेत्यस्य साधुता, निरहंकारः—अहमितिकरणमहङ्कारः स निर्गतो यस्मात्स तथा, लघुभूत ऊर्ध्वगतिकत्वात्, अत एवाग्रन्थो—बाह्याभ्यन्तरपरिग्रहरहितः, वास्या—सूत्रधार-शस्त्रविशेषेण यत्तक्षणं -त्वच उत्खननं तत्राद्विष्टः—अद्वेषवान्, चन्दनानुलेपनेऽरक्तः—अरागवान्, लेष्टौ—दृषदि काञ्चने च समः, उपेक्षणीयत्वेनोभयत्र साम्यमात्, इहलोके वर्त्तमानभवे मनुष्यलोके परलोके—देवभवादौ तत्राप्रतिबद्धः तत्रत्यसुखनिष्पिपासित्वात् जीवितमरणयोर्निर वकांक्षः—इन्द्रनरेन्द्रादिपूजाप्राप्ती जीविते दुर्विषहपरीषहाप्ती च मरणे निस्पृहः, संसारपारगामीति व्यक्तं, कर्मणां सङ्गः—अनादिकालीनो जीवप्रदेशैः सह सम्बन्धस्तस्य निर्घातनं—विश्लेषणं तदर्थम-भ्युत्थित—उद्यतो विहरति। अथ ज्ञानकल्याणकवर्णनामाह—

'तस्स णं०-, 'तस्य' भगवतः 'एतेन' अनन्तरोक्तेन विहारेण विहरत एकस्मिन् वर्षसहस्र व्यतिक्रान्ते सति पुरिमतालस्य नगरस्य बहि शकटमुखे उद्याने न्यग्रोधवरपादपस्याधो 'ध्यानान्तरिके'ति अन्तरस्य -विच्छेदस्य करणमन्तरिका अथवा अन्तरमेवान्तर्यं, स्त्रत्वविवक्षायां ङीप्रत्यये आन्तरी आन्तर्येवान्तरिका ध्यानस्यान्तरिकाध्यानान्तरिका—

आरब्धध्यानस्य समाप्तिरपूर्वस्यानारम्भणमित्यर्थः अतस्तस्यां वर्त्तमानस्य कोऽर्थः? —पृथक्त्ववितर्कं सविचारं १ एकत्ववितर्कमविचारं २ सूक्ष्मक्रियमप्रतिपाति ३ व्युच्छिन्नक्रिय-मनिवर्त्ति ४ इति चतुश्चरणात्मकस्य शुक्लध्यानस्य चरणद्वये ध्याते चरमचरणद्वयमप्रतिपन्नस्येति, योगनिरोधरूपध्यानस्य चतुर्दशगुणस्थानवर्त्तिनि केवलिन्येव सम्भवात्, फाल्गुनबहुलस्यैकादश्यां पूर्वाह्णकालरूपो यः समयः—अवसरस्तस्मिन् अष्टमेन भक्तेन—आगमभाषयोपवासत्रयलक्षणेना-पानकेन--जलवर्जितेनोत्तराषाढानक्षत्रे चन्द्रेण सहेति गम्यं योगमुपागते सति, अथवा आर्षत्वात् सप्तम्यर्थे तृतीया, अनुत्तरेणेति—क्षपकश्रेणिप्रतिपन्नत्वेन केवलासन्नत्वेन परमविशुद्धिपदप्राप्तत्वेन न विद्यते उत्तरं -प्रधानमग्रवर्ति वा छाद्मस्थिकज्ञानं यस्मात्तत्तथा।

तेन ज्ञानेन—तत्वावबोधरूपेण, एवं सावच्छब्दात् दर्शनेन क्षायिकभावापन्नेन सम्यक्त्वेन चारित्रेण—विरतिपरिनामरूपेण क्षायिकभावापन्नेनैव 'तपसे'ति व्यक्तं 'बलेन' संहननोत्थप्राणेन 'वीर्येण' मानसोत्साहेन 'आलयेन' निर्दोषवसत्या 'विहारेण' गोचरचर्यादिहिण्डनलक्षणेन 'भाव-नया' महाव्रतसम्बन्धिन्या मनोगुप्त्यादिरूपया पदार्थानमनित्यत्वादिचिन्तनरूपया वा 'क्षान्त्या' क्रोधनिग्रहेण 'गुप्तया' प्राग्व्याख्यातस्वरूपया 'मुक्त्या' निर्लोभतया 'तुष्टया' इच्छानिवृत्या 'आर्जवेन' मायानिग्रहेण 'मार्दवेन' माननिग्रहेण 'लाघवेन' क्रियासु दक्षभावेन, भावे क्तप्रत्ययविधानात्, सोपचितं -सोपचयं पुष्टमितियावत् एतादृशेन प्रस्तावान्निर्वाणमार्गसम्बन्धिनैव सुचरितेन—

सदाचरणेन फलं–प्रक्रमान्मुक्तिलक्षणं यस्मात् एवंविधो यो निर्वाणमार्गः –असाधारणरत्नत्रयरूपस्तेनात्मानं भावयतः केवलवरज्ञानदर्शनं समुत्पन्नमित्यन्वयः, तत्रानन्तमविनाशित्वात् अनुत्तरं सर्वोत्तमत्वात् निव्याघातं कटकुड्यादिभिरप्रतिहतत्वात् निरावरणं क्षायिकत्वात् कृत्स्नं सकलार्थग्राहकत्वात् प्रतिपूर्णं सकलस्वांशकलितत्वात् पूर्णचन्द्रवत् केवलं–असहायं 'नट्ठंमि उ छाउमत्थिए नाणे' इति वचनात्, परं–प्रधानं ज्ञानं च दर्शनं चेति समाहारद्वन्द्वे एकवद्भावः ततः पूर्वपदाभ्यां कर्मधारयः, तत्र सामान्यविशे,षयात्मके ज्ञेयवस्तुनि ज्ञानं विशेषावबोधरूपं दर्शनं सामान्यावबोधरूपमिति।

अत्रायमाशयः–दूरादेव तालतमालादिकं तरुनिकरं विशिष्टव्यक्तिरूपतयाऽनवधारितमवलोकयतः पुरुषस्य सामान्येन वृक्षमात्रप्रतीतिजनकं यदपरिस्फुटं किमपि रूपं चकास्ति तद्दर्शनं 'निर्विशेषं विशेषाणां ग्रहो दर्शन'मिति वचनात्, यत्पुनस्तस्यैव प्रत्यासीदतस्तालतमालादिव्यक्तिरूपतयाऽवधारितं तमेव तरुसमूहमुपश्यतो विशिष्टव्यक्तिप्रतीतिजनकं परिस्फुटं रूपमाभाति तज्ज्ञानं, ननु भवतु नाम इत्थमनुभवसिद्धे ज्ञाने छद्मस्थानां विशेषग्राहकता दर्शने च सामान्यग्राहकता, परं केवलिनो ज्ञानक्षणे सामान्यांशाग्रहणाद्दर्शनेन च विशेषांशग्रहणाभावाद् द्वयोरपि सर्वार्थविषयत्वं विरुध्यते, उच्यते, ज्ञानक्षणे हि केवलिनां ज्ञाने यावद्विशेषान् गृह्णति सति सामान्यं प्रतिभातमेव, अशेषविशेषराशिरूपत्वात् सामान्यस्य, दर्शनक्षणे च दर्शने सामान्यं गृह्णति सति यावदविशेषाः प्रतिभाता एव, विशेषानालिङ्गितस्य सामान्यस्याभावात्, अत एव 'निर्विशेषं विशेषाणां ग्रहो दर्शन' मित्युक्तमनन्तरोक्तग्रन्थे, कोऽर्थः ? –ज्ञाने प्रधानभावेन विशेषा गौणभावेन सामान्यं दर्शने प्रधानभावेन सामान्यं गौणभावेन विशेषा इति विशेषः।

समुत्पन्नं–सम्यक् क्षायिकत्वेनावरणदेशस्याप्यभावात् उत्पन्नं, प्रादुर्भूतमित्यर्थः, उत्पन्नकेवलस्य यद्भगवतः स्वरूपं तत्प्रकटयति–'जिणे जाए'इत्यादि, जिनो–रागादिजेता, केवलं–श्रुतज्ञा- नाद्यसहायकं ज्ञानमस्यास्तीति केवली, अत एव सर्वज्ञो–विशेषांशपुरस्कारेण सर्वज्ञाता सर्वदर्शी– सामान्यांशपुरस्कारेण सर्वज्ञाता, नन्वर्हतां केवलज्ञानकेवलदर्शनावरणयोः क्षीणमोहान्त्यसमय एव क्षीणत्वेन युगपदुत्पत्तिकत्वेनोपयोगस्वभावात् क्रमप्रवृत्तौ च सिद्धायां 'सव्वन्नू सव्वदरिसी' इति सूत्रं यथा ज्ञानप्राधान्यसूचकमुपन्यस्तं तथा सव्वदरिसी सव्वन्नू इत्येवं दर्शनप्राधान्यसूचकं किं न ?, तुल्यन्यायत्वात्, नैवं, 'सव्वाओ लद्धीओ सागारोवउत्तस्स उववज्जंति, नो अनागारोवउत्तस्स' इत्यागमादुत्पत्तिक्रमेण सर्वदा जिनानां प्रथमे समये ज्ञानं ततो द्वितीये दर्शनं भवतीति ज्ञापनार्थत्वादित्युपन्यासस्येति, छद्मस्थानां तु प्रथमे समये दर्शनं द्वितीये ज्ञानमिति।

उक्तविशेषणद्वयमेव विशिनष्टि–सनैरयिकतिर्यग्नरामरस्य पञ्चास्तिकायात्मकक्षेत्रखण्डस्य उपलक्षणाद् लोकस्य अलोकस्यापि–नभःप्रदेशमात्रात्मकक्षेत्रविशेषस्य पर्यायान्–क्रमभाविस्वरूपविशेषान् जानाति केवलज्ञानेन पश्यति केवलदर्शनेन, पर्यायानियुक्ते द्वयमपि ग्राह्यं, नहि पर्याया द्रव्यवियुता भवेयुर्द्रव्यं वा पर्यायवियुतं, तेनाधेयमाधारमाक्षिपतीति, अन्यथा आधेयत्वस्यैवानुपपत्तेः, यथाऽऽकाशस्य, न हि आकाशं काप्यवतिष्ठते तस्याधारमात्ररूपस्यैव सिद्धान्ते भणनात्, अथवा सामान्यत उक्तं पर्यायाणां ज्ञानं व्यक्त्या निरूपयन्नाह–तद्यथा–

'आगतिं' यतः स्थानादागच्छन्ति विवक्षितं स्थानं जीवाः 'गतिं' यत्र मृत्वोत्पद्यन्ते 'स्थितिं'

कायस्थितिमवस्थितिरूपां 'च्यवनं' केवलोकाद्देवानां मनुष्यतिर्यक्ष्ववतरणं 'उपपातं' देवनारकजन्मस्थानं भुक्तं–अशनादि कृतं–चौर्यादि प्रतिसेवितं मैथुनादि आविः कर्म्म–प्रकटकार्यं रहःकर्म प्रच्छन्नकृतं, 'तं तं काल'ति प्राकृतत्वात् सप्तम्यर्थे द्वितीया तस्मिन् २ काले, वीप्सायां द्विर्वचनं, मनोवचःकायान् योगान्–करणत्रयव्यापारान् एवमादीन्, जीवानामपि सर्वभावान्, जीवधर्मानित्यर्थः, अजीवानामपि सर्वभावान्–रूपादिधर्मान् मोक्षमार्गस्य–रत्नत्रयरूपस्य विशुद्धतरकान्–प्रकर्षकोटिप्राप्तान् कर्मक्षयहेतून् भावान्–ज्ञानाचारादीन् जानन् पश्यन् विचरतीति गम्यं, कथं च जानन् पश्यन् विचरतीत्याह–एषः–अनन्तरं वक्ष्यमाणो धर्म खलु अवधारणे मोक्षमार्गः, सिद्धिसाधकत्वेन मम–देशकस्यान्येषां च- श्रोतृणां हितं कल्याणं पथ्यभोजनवदित्यर्थः सुखं–अनुकूलवेद्यं पिपासोः शीतलजलपानवत् निश्रेयसं मोक्षस्तत्करः–उक्तानां हितादीनां कारक इति, सर्वदुःखविमोक्षण इति व्यक्तं, परमसुखं– आत्यन्तिकसुखं समापयतीति व्युत्पत्तिवशात् परमसुखसमाननः निश्रेयसेत्यत्र यकारलोपः प्राकृतत्वात्, भविष्यतीति, अथ उत्पन्नकेवलज्ञानो भगवान् यथा धर्मं प्रादुश्चकार तथा आह–

'तते ण'मित्यादि, ततः स भगवान् श्रमणानां निर्ग्रन्थानां निर्ग्रन्थीनां च पञ्च महाव्रतानि–सर्वप्राणातिपातविरमणादीनि सभावनाकानि–ईर्यासमित्यादिस्वभावनोपेतानि षट् च जीवनिकायान्–पृथिव्यादित्रसान्तान् इत्येवंरूपं धर्मं उपदिशन् विहरतीति सम्बन्धः, पञ्च धर्मे प्रकान्तव्ये षड्जीवनिकायकथनमुपक्रान्तं तज्जीवपरिज्ञानमन्तरेण व्रतपालनासम्भव इति ज्ञापनार्थं, नन्वयं नियमः प्रथमव्रते सम्भवेत् मृषावादविरममादीनां तु भाषाविभागादिज्ञानाधीनत्वात् न सम्भवेदिति, उच्यते, शेषव्रतानामपि प्राणातिपातविरमणव्रतस्य रक्षकत्वेन नियुक्तत्वात्, महावनस्य वृत्तिवृक्षवत् । तथाहि–मृषाभाषामभाषमाणो ह्यभ्याख्यानादिविरतो न कुलवध्वादीन् अदत्तम् अनाददानो धनस्वामिनं सचित्तजलफलादिकं च मैथुनविरतो नवलक्षपञ्चेन्द्रियादीन् परिग्रहविरतः शुक्ति-कस्तूरीमृगादींश्च नातिपातयेदिति, अथैतदेव किञ्चिद्व्यक्त्या विवृणोति, पृथिवीकायिकान् जीवान् उपदिशन् विहरतीति सम्बन्धः, कालवार्थकत्वेन सूत्रप्रवृत्तेर्देशग्रहणात् पूर्णोऽप्यालापको वाच्यः, स चायं–'आउकाइए तेउ० वाउ० वणस्सइ० तस०'ति व्यक्तं ।

तथा पञ्च महाव्रतानि सभावनाकानि 'भावनागमेन' श्रीआचाराङ्गद्वितीयश्रुतस्कन्धगतभावनाख्याध्ययनगतपाठेन भणितव्यानि, अत्र च सूत्रे यदुद्देशे प्रथमं'पंच महव्वयाइं' इत्याद्युक्तं निर्देशे तु व्यत्ययेन 'तं०–पुढविकाइए' इत्यादि, तत्कथमिति नाशङ्कनीयं, यतः पश्चादुद्दिष्टानामपि षड्जीवनिकायानां प्रस्तुतोपाङ्गे स्वल्पवक्तव्यतया प्रथमं प्ररूपणाया युक्त्युपपन्नत्वात्, सूचीकटाहन्यायोऽत्रानुसरणीयो, 'विचित्रा सूत्राणां कृतिराचार्यस्य' इति न्यायेन वा स्वत एवेति ज्ञेयं, ननु गृहिधर्मसंविग्नपाक्षिकधर्मावपि भगवता देशनीयौ मोक्षाङ्गत्वात्, यदुक्तम्–

॥ १ ॥ 'सावज्जजोगपरिवज्जणाउसव्वुत्तमो जईधम्मो ।
बीओ सावगधम्मो तइओ संविग्गपक्खपहो ॥ इति,

तत्कथमत्र तौ नोक्तौ ?, उच्यते, सर्वसावद्यवर्जकत्वेन देशनायां यतिधर्मस्य प्रथमं देशनीयत्वादत्यासन्नमोक्षपथत्वात् श्रमणसङ्घस्य प्रथमं व्यवस्थापनीयत्वाच्च प्राधान्यख्यापनार्थं प्रथममुपन्यासः, ततो 'व्याख्यातो विशेषार्थप्रतिपत्ति'रितिन्यायादेतत्तुच्छभूतौ तावपि ध भगवता

प्ररूपिताविति ज्ञेयं, भगवत्प्ररूपनामन्तरेणान्येषां तत्तद्ग्रन्थेषु तयोः प्ररूपणानुपपत्तेरित्यलं प्रसङ्गेनेति। अथावन्ध्यशक्तिकवचनगुणप्रतिबुद्धस्य प्रभुपरिकरभूतस्य संघस्य सङ्ख्यामाह--

'उसभस्स ण'मित्यादि, सुगमं, नवरं 'जस्स जावइआ गणहरा तस्स तावइआ गणा'।

इति वचनाद् गणाः सूत्र साक्षादनिर्दिष्टा अपि तावन्त एव बोध्याः, कचिज्जीर्णप्रस्तुतसूत्रादर्शे 'चउरासीतिं गणा गणहरा होत्था' इत्यपि पाठो दृश्यते, तत्र तु चतुरशीतिपदस्योभयत्र योजनेन व्याख्या सुबोधैवेति, गणमेकवाचनाचारयतिसमुदायस्तं धरन्तीति गणधराः, वाचनादिभिर्ज्ञाना-दिसम्पदां सम्पादकत्वेन गणाधारभूता इति भावः, 'होत्था' इति अभवन्, 'उसभस्स ण'मित्यादि, ऋषभसेनप्रमुखानि चतुरशीति श्रमणसहस्राणि एषा उत्कर्ष—उत्कृष्टभागस्तत्र भवा उत्कर्षिकी 'प्रत्यये ङीर्वा' इत्यनेन ङीविकल्पे रूपसिद्धि, ऋषभस्य श्रमणसम्पदभवत्, अत्र वाक्यान्तरत्वेन श्रमणशब्दस्य न पौनरुक्त्यं, एव सर्वत्र योज्यं, 'उसहस्स ण'मित्यादि, प्रायः कण्ठ्यानि, नवरं चतुर्दशपूर्विसूत्रे 'अजिनानां' छद्मस्थानां 'सव्वक्खरसन्निवाईणं'ति सर्वेषामक्षराणां—अकारादीनां सन्निपाता—द्व्यादिसंयोगा अनन्तत्वादनन्ता अपि ज्ञेयतया विद्यन्ते येषां ते तथा।

जिनतुल्यत्वे हेतुमाह—'जिणो विव अवितह'मित्यादि, जिन इवावितथं—यथार्थं व्यागृणतां—व्याकुर्वाणानां, केवलिश्रुतकेवलिनोः प्रज्ञापनायां तुल्यत्वात्, चत्वारि सहस्राणि अर्द्धाष्टमानि च शतानि एषा औत्कर्षिकी चतुर्दशपूर्विसम्पदभवत्, 'विउव्विअ'त्ति वैक्रियलब्धिमन्तः, शेषं स्पष्टं, विपुलमतयो—मनःपर्यवज्ञानविशेषवन्तः द्वादश विपुलमतिसहस्राणि अधिकारात्तेषामेव षट् शतानि पञ्चाशच्चेत्येवं सर्वत्र योज्यं, वादिनो—वादिलब्धिमन्तः परप्रवादुकनिग्रहसमर्था, 'उसभस्स ण'मित्यादि, गती—देवगतिरूपायां कल्याणं येषां प्रायः सातोदयत्वात्तेषां, तथा स्थिती—देवायूरूपायां कल्याणं येषां ते तथा, अप्रवीचारसुखस्वामिकत्वात्, आगमिष्यद्भद्रं येषां ते आगामिभवे सेत्स्यमान-त्वात् सेत्स्यमानत्वात् ते तथा तेषा 'अनुत्तरोपपातिकानां' पञ्चानुत्तरलवसत्तमदेवविशेषाणां द्वाविंशति सहस्राणि नव च शतानि, 'उसभस्स ण'मित्यादि, सुगमं, नवरं श्रणार्यिकासङ्ख्याद्वयमीलने अन्तेवासिसङ्ख्या सम्पद्यते। अथ भगवतः श्रमणवर्णकसूत्रमाह--

'अरहंताणं०, अर्हतः ऋषभस्य बहवोऽन्ते- वासिनः—शिष्यास्ते च गृहिणोऽपि स्युरित्य-नगाराः भगवन्तः पूज्या अपि समुच्चये एकका—एके अन्ये केचिदपीत्यर्थः मासं यावत् पर्यायः—चारित्रपालनं येषां ते तथा, यथौपपातिके सर्वोऽनगार- वर्णकस्तथाऽत्रापि वाच्यः, कियद्यावदित्याह—ऊर्ध्वं जानुनी येषां ते ऊर्ध्वजानवः शुद्धपृथिव्यासन- वर्जनादौपग्रहिकनिषद्याया अभावाच्चोत्कटुकासना इत्यर्थः, अधःशिरसो—अधोमुखाः नोर्द्धं तिर्यग्वा विक्षिप्तदृष्टयः ध्यानरूपो यः कोष्ठः—कुसूलस्तमुपागताः—तत्र प्रविष्टाः, यथाहि—कोष्ठके धान्यं प्रक्षिप्तं न विप्रसृतं भवति एवं तेऽनगारा विषयेष्वविप्रसृतेन्द्रियाः स्युरिति, संयमेन संवररूपेण तपसा—अनशनादिना, चः समुच्चयार्थो गम्यः, संयमतपोग्रहणं चानयोः प्रधानमोक्षाङ्गत्वख्यापनार्थं, प्रधानत्वं च संयमस्य नवकर्मानुपादानहेतुत्वेन तपसश्च पुराणकर्म्मनिर्ज्जरणहेतुत्वेन, भवति चाभिनवकर्मानुपादानात् पुराणकर्म्मक्षपणाच्च सकलकर्म्मक्षयलक्षणो मोक्ष इति, आत्मानं भावयन्तो— वासयन्तो विहरन्ति, तिष्ठन्तीत्यर्थः, अत्र यावत्पदसंग्राह्यः 'अप्पेगइया दोमासपरिआया' इत्यादिकः, अथ ऋषभस्वामिनः केवलोत्पत्त्यनन्तरं भव्यानां कियता कालेन सिद्धिगमनं प्रवृत्तं कियन्तं कालं यावदनुवृत्तं चेत्याह—

'अरहओ ण'मित्यादि, ऋषभस्य द्विविधा अन्तं भवस्य कुर्वन्तीति अन्तकराः- मुक्तिगामिनस्तेषां भूमि–कालः कालस्य ह्याधारत्वेन कारणत्वाद् भूमित्वेन व्यपदेशः, तद्यथा–युगानि–पञ्चवर्षमानानि कालविशेषाः लोकप्रसिद्धानि वा कृतयुगादीनि तानि च क्रमवर्त्तीनीति तत्साधर्म्याद्ये क्रमवर्त्तिनो गुरुशिष्यप्रशिष्यादिरूपाः पुरुषास्तेऽपि साध्यवसानलक्षणयाऽभेदप्रतिपत्त्या युगान्–पट्टपद्धतिपुरुषा इत्यर्थः तैः प्रमिता अन्तकरभूमिर्युगान्तकरभूमिरिति, पर्यायः–तीर्थकृतः केवलित्वकालस्तदपेक्षयाऽन्तकरभूमि, कोऽर्थः ? ऋषभस्य इयति केवलपर्यायकालेऽतिक्रान्ते मुक्तिगमनं प्रवृत्तमिति, तत्र युगान्तकर- भूमिर्यावदसङ्ख्यातानि पुरुषाः–पट्टाधिरूढास्ते युगानि–पूर्वोक्तयुक्त्या पुरुषाः पुरुषयुगानि, समर्थपदत्वात् समासः, नैरन्तर्ये द्वितीया,

ऋषभात् प्रभृति श्रीअजितदेवतीर्थं यावत् श्रीऋषभ- देववंशजानां नृपाणां चतुर्दशलक्षप्रमितानां क्रमेण प्रथमतः सिद्धिगमनं तत एकस्य सर्वार्थसिद्धप्रस्तटगमनमित्याद्यनेकरीत्या अजितजिनपितरं मर्यादीकृत्य नन्दीसूत्रवृत्तिचूर्णिसि- द्धदंडिकादिषु सर्वार्थसिद्धप्रस्तटगमनव्यवहितः सिद्धिगम उक्तः स कोशलापङ्पतीन् प्रतीत्यायमात्वयोऽयं पुण्डरीकगणधरादीन् प्रतीत्येति विशेषः । तथा पर्यायान्तकरभूमिरेषा अन्तर्मुहूर्त यावत्केवलज्ञानस्य पर्यायो यस्य स तथा, एवंविधे ऋषभे सति अन्तं–भवान्तमकार्षीद्–अकरोत् नार्वाक् कश्चिदपीति, यतो मरुदेवा प्रथमः सिद्धः, सा तु भगवत्केवलोत्पत्त्यनन्तरमन्तमुहूर्तेनैव सिद्धेति ।

अथ जन्मकल्याणकादिनक्षत्राण्याह–

मू. (४५) *उसभे णं अरहा पंचउत्तरासाढे अभीइछट्ठे होत्था, तंजहा–उत्तरासाढाहिं चुए चइत्ता गब्भं वक्कंते उत्तरासाढाहिं जाए उत्तरासाढाहिं रायाभिसेअं पत्ते उत्तरासाढाहिं मुंडे भवित्ता अगाराओ अनगारियं पव्वइए उत्तरासाढाहिं अणंते जाव समुप्पन्ने, अभीइणा परिनिव्वुए ।*

वृ. 'उसभे ण'मित्यादि, ऋषभोऽर्हन् पञ्चसु–च्यवनजन्मराज्याभिषेकदीक्षाज्ञानलक्षणेषु वस्तुषु उत्तराषाढानक्षत्रं चन्द्रेण भुज्यमानं यस्य स तथा अभिजिन्नक्षत्रं षष्ठे–निर्वाणलक्षणे वस्तुनि यस्य यद्वा अभिजिन्नक्षत्रे षष्ठं निर्वाणलक्षणं वस्तु यस्य स तथा, उक्तमेवार्थं भावयति, तद्यथा–उत्तराषाढाभिर्युते चन्द्रे इति शेषः, सूत्रे बहुवचनं प्राकृतशैल्या, एवमग्रेऽपि च्युतः–सर्वार्थसिद्धनाम्नो महाविमानान्निर्गत इत्यर्थः, च्युत्वा गर्भं व्युत्क्रान्तः मरुदेवायाः कुक्षाववतीर्णवानित्यर्थः १, जातो–गर्भवासान्निष्क्रान्तः २, राज्याभिषेकं प्राप्तः ३, मुण्डो भूत्वा– अगारं मुक्त्वा अनगारितां–साधुतां प्रव्रजितः प्राप्त इत्यर्थः, पञ्चमी चात्र ल्यब्लोपजन्या ४, अनन्तं यावत् केवलज्ञानं समुत्पन्नं ५, यावत्पद संग्रहः पूर्ववत्, अभीचिना युते चन्द्रे परिनिर्वृतः– सिद्धिं गतः ६ ।

ननु अस्मादेव विभागसूत्रबलादादिदेवस्य षट्कल्याणकी समापद्यमाना दुर्निवारेति चेत्, न, तदेव हि कल्याणकं यत्रासनप्रकम्पप्रयुक्तावधयः सकलसुरासुरेन्द्रा जीतमिति विधित्सवो युगपत् ससम्भ्रमा उपतिष्ठन्ते, न ह्ययं षष्ठकल्याणकत्वेन भवता निरूप्यमानो राज्याभिषेकस्ताद्दशस्तेन वीरस्य गर्भापहार इव नायं कल्याणकं, अनन्तरोक्तलक्षणायोगात्, न च तर्हि निरर्थकमस्य कल्याणकाधिकारे पठनमिति वाच्यं, प्रथमतीर्थेशराज्याभिषेकस्य जीतमिति शक्रेण क्रियमाणस्य देवकार्यत्वलक्षणसाधर्म्येण समाननक्षत्रजाततया च प्रसङ्गेन तत्पठनस्यापि सार्थकत्वात्, तेन सामननक्षत्रजातत्वे सत्यपि कल्याणकत्वाभावेनानियतवक्तव्यतया क्वचिद्राज्याभिषे-

कस्याकथनेऽपि न दोषः ।

अत एव दसाश्रुतस्कन्धाष्टमाध्ययने पर्युषणाकल्पे श्रीभद्रबाहुस्वामिपादाः 'ते णं कालेणं तेणं समएणं उसभे अरहा कोसलिए चउउत्तरासाढे अभीइपंचमे होत्था,' इति पञ्चकल्याणकनक्षत्रप्रतिपादकमेव सूत्रं बबन्धिरे, न तु राज्याभिषेकनक्षत्राभिधायकमपीति, न च प्रस्तुतव्याख्यानस्यनागमिकत्वं भावनीयं, आचाराङ्गभावनाध्ययने श्रीवीरकल्याणकसूत्रस्यैवमेव व्याख्यातत्वात् ।

अथ भगवतः शरीरसम्पदं शरीरप्रमाणं च वर्णयन्नाह–

मू. (४६) *उसभे णं अरहा कोसलि वज्जरिसहनारायसंघयणे समचउरससंठाणसंठिए पंच धनुसयाइं उद्धं उच्चत्तेणं होत्था । उसभे णं अरहा वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसित्ता तेवट्ठिं पुव्वसयसहस्साइं महारज्जवासमज्झे वसित्ता तेसीइं पुव्वसयसहस्साइं अगारवासमज्झे वसित्ता मुंडे भवित्ता अगाराओ अनगारियं पव्वइए, उसभे णं अरहा एगं वाससहस्सं छउमत्थपरिआयं पाउणित्ता एगं पुव्वसयसहस्सं वाससहस्सूणं केवलिपरिआयं पाउणित्ता एगं पुव्वसयसहस्सं बहुपडिपुन्नं सामण्णपरिआयं पाउणित्ता चउरासीइं पुव्वसयसहस्साइं सव्वाउअं पालइत्ता जे से हेमंताणं तच्चे मासे पंचमे पक्खे माहबहुले ।*

*तस्स णं माहबहुलस्स तेरसीपक्खेणं दसहिं अनगारसहस्सेहिं सद्धिं संपरिवुडे अट्ठावयसेलसिहरंसि चोद्दसमेणं भत्तेणं अपाणएणं संपलिअंकणिसण्णे पुव्वण्हकालसमयंसि अभीइणा नक्खत्तेणं जोगमुवागएणं सुसमदूसमाए समाए एगूणणवउइहिं पक्खेहिं सेसेहिं कालगए वीइक्कंते जाव सव्वदुक्खप्पहीणे ।*

*जं समयं च णं उसभे अरहा कोसलिए कालगए वीइक्कंते समुज्जाए छिन्नजाइजरामरणबंधणे सिद्धे बुद्धे जाव सव्वदुक्खप्पहीणे तं समयं च णं सक्कस्स देविंदस्स देवरन्नो आसणे चलिए, तए णं से सक्के देविंदे देवराया आसणं चलिअं पासइ पासित्ता ओहिं पउंजइ २ त्ता भयवं तित्थयरं ओहिणा आभोएइ २ त्ता एवं वयासी–*

*परिनिव्वुए खलु जंबुद्दीवे दीवे भरहे वासे उसहे अरहा कोसलिए, तं जीअमेअं तीअपच्चुप्पण्णमणागयाणं सक्काणं देविंदाणं देवराईणं तित्थगरां परिनिव्वाणमहिमं करेत्तए, तं गच्छामि णं अहंपि भगवतो तित्थगरस्स परिनिव्वाणमहिमं करेमित्तिकट्टु वंदइ नमंसइ २ त्ता चउरासीईए सामानिअसाहस्सीहिं तायत्तीसाए तायत्तीसएहिं चउहिं लोगपालेहिं जाव चउहिं चउरासीईहिं आयरक्खदेवसाहस्सीहिं अन्नेहि अ बहूहिं सोहम्मकप्पवासीहिं वेमाणिएहिं देवेहिं देवीहि अ सद्धिं संपरिवुडे ताए उक्किट्ठाए जाव तिरिअमसंखेज्जाणं दीवसमुद्दाणं मज्झंमज्झेणं जेणेव अट्ठावयपव्वए जेणेव भगवओ तित्थगरस्स सरीरए तेणेव उवागच्छइ उवागच्छित्ता विमणे निराणंदे अंसुपुण्णणयणे तित्थयरसरीरयं तिक्खुत्तो आयाहिणं पयाहिणं करेइ २ त्ता नच्चासण्णे नाइदूरे सुस्सूसमाणे जाव पज्जुवासइ ।*

*तेणं कालेणं तेणं समएणं ईसाणे देविंदे देवराया उत्तरड्ढलोगाहिवई अट्ठावीसविमाणसयसहस्साहिवई सूलपाणी वसहवाहणे सुरिंदे अयरंबरवत्थधरे जाव विउलाइं भोगभोगाइं भुंजमाणे विहरइ, तए णं तस्स ईसाणस्स देविंदस्स देवरन्नो आसनं चलइ, तए णं से ईसाणे जाव देवराया आसणं चलिअं पासइ २ त्ता ओहिं पउंजइ २ त्ता भगवं तित्थगरं ओहिणा आभोएइ २ त्ता जहा*

सक्के निअगपरिवारेणं भाणेअव्वो जाव पज्जुवासइ, एवं सव्वे देविंदा जाव अच्चुए णिअगपरिवारेणं आणेअव्वा, एवं जाव भवणवासीणं इंदा वाणमंतराणं सोलस जोइसिआणं दोन्नि निअगपरिवारा नेअव्वा। तए णं सक्के देविंदे देवराया बहवे भवणवइवाणमंतरजोइसवेमाणिए देवे एवं वयासी–खिप्पामेव भो देवा० ! नंदनवणाओ सरसाइं गोसीसवरचंदणकट्ठाइं साहरइ २ त्ता तओ चिइगाओ रएह–एगं भगवओ तित्थगरस्स एगं गणधराणं एगं अवसेसाणं अनगाराणं।

तए णं ते भवणवइजाववेमणिआ देवा नंदनवणाओ सरसाइं गोसीसवरचंदणकट्ठाइं साहरंति २ त्ता तओ चइगाओ रएंति, एगं भगवओ तित्थगरस्स एगं गणहराणं एगं अवसेसाणं अनगाराणं, तए णं से सक्के देविंदे देवराया आभिओगे देवे सद्दावेइ २ त्ता एवं वयासी–खिप्पामेव भो देवाणुप्पिया ! खीरोदगसमुद्दाओ खीरोदगं साहरह, तए णं ते आभिओगा देवा खीरोदगसमुद्दाओ खीरोदगं साहरंति। तए णं से सक्के देविंदे देवराया तित्थगरसरीरगं खीरोदगेणं ण्हाणेति २ त्ता सरसेणं गोसीस- वरचंदनेणं अणुलिंपइ २ त्ता हंसलक्खणं पडसाडयं णिअंसेइ २ त्ता सव्वालंकारविभूसिअं करेति, तए णं ते भवणवइ जाव वेमाणिआ गणहरसरीरगाइं अनगारसरीरगाइंपि खीरोदगेणं ण्हावंति २ त्ता सरसेणं गोसीसवरचंदमेणं अणुलिंपंति २ त्ता अहताइं दिव्वाइं देवदूसजुअलाइं निअंसंति २ त्ता सव्वालंकारविभूसिआइं करेंति।

तए णं से सक्के देविंदे देवराया ते बहवे भवणवइ जाव वेमाणिए देवे एवं वयासी–खिप्पामेव भो देवाणुप्पिआ ! ईहामिगउसभतुरयजाववणलयभत्तिचित्ताओ तओ सिबियाओ विउव्वह, एगं भगवओ तित्थगरस्स एगं गणहराणं एगं अवसेसाणं अणगाराणं, तए णं ते बहवे भवणवइ जाव वेमाणिआ तओ सिबिआओ विउव्वंति, एगं भगवओ तित्थगरस्स एगं गणहराणं एगं अवसेसाणं अनगाराणं। तए णं से सक्के देविंदे देवराया विमणे निराणंदे अंसुपुण्णणयणे भगवओ तित्थगरस्स विणट्ठजम्मजरामरणस्स सरीरगं सीअं आरुहेति २ चिइगाए ठवेइ, तए णं ते बहवे भवणवइ अंसुपुण्णणयणे भगवओ तित्थगरस्स विणट्ठजम्मजरामरणस्स सरीरगं सीअं आरुहेति २ चिइगाए ठवेइ, तए णं ते बहवे भवणवइ जाव वेमाणिआ देवा गणहराणं अनगाराण य विणट्ठजम्मजराम- रणाणं सरीरगाइं सीअं आरुहेंति २ त्ता चिइगाए ठवेंति, तए णं से सक्के देविंदे देवराया अग्गिकुमारे देवे सद्दावेइ २ त्ता एवं वयासी–खिप्पामेव भो देवाणुप्पिया ! तित्थगरचिइगाए जाव अनगारचिइगाए अगनिकायं विउव्वह २ त्ता एअमाणत्तिअं पच्चप्पिणह।

तए णं ते अग्गिकुमारा देवा विमणा निराणंदा अंसुपुण्णणयणा तित्थगरचिइगाए जाव अनगारचिइगाए अ अगनिकायं विउव्वंति, तए णं से सक्के देविंदे देवराया वाउकुमारे देवे सद्दावेइ २ त्ता एवं वयासी–खिप्पामेव भो देवाणुप्पिया ! तित्थगरचिइगाए जाव अनगारचिइगाए अ वाउकायं विउव्वह २ त्ता अगनिकायं उज्जालेह तित्थगरसरीरगं गणहरसरीरगाइं अनगा- रसरीरगाइं च झामेह। तए णं ते वाउकुमारा देवा विमणा निराणंदा अंसुपुण्णणयणा तित्थगरचिइगाए जाव विउव्वंति अगनिकायं उज्जालेंति तित्थगरसरीरगं जाव अनगारसरीरगाणि अ झामेंति, तए णं से सक्के देविंदे देवराया ते बहवे भवणवइ जाव वेमाणिए देवे एवं वयासी–खिप्पामेव भो देवाणुप्पिया तित्थगरचिइगाए जाव अनगारचिइगाए अगुरुतुरुक्कधयमधुं च कुंभग्गसो अ भारग्गसो अ साहरह।

तए णं ते भवणवइ जाव तित्थगर जाव भारग्गसो अ साहरंति, तए णं से सक्के देविंदे

देवराया मेहकुमारे देवे सद्दावेइ २ त्ता एवं वयासी–खिप्पामेव भो देवाणुप्पिआ ! तित्थगरचिइगं जाव अनगारचिइगं च खीरोदगेणं निव्वावेह, तए णं ते मेहकुमारा देवा तित्थगरचिइगं जाव निव्वावेंति । तए णं से सक्के देविंदे देवराया भगवओ तित्थगरस्स उवरिल्लं दाहिणं सकहं गेण्हइ ईसाणे देविंदे देवराया उवरिल्लं वामं सकहं गेण्हइ, चमरे असुरिंदे असुरराया हिट्ठिल्लं दाहिणं सकहं गेण्हइ बली वइरोअणिंदे वइरोअणराया हिट्ठिल्लं वामं सकहं गेण्हइ, अवसेसा भवणवइ जाव वेमाणिआ देवा जहारिहं अवसेसाइं अंगमंगाइं, केई जिणभत्तीए केई जीअमेअंतिकट्टु केइ धम्मोतिकट्टु गेण्हंति ।

तए णं से सक्के देविंदे देवराया बहवे भवणवइ जाव वेमाणिए देवे जहारिहं एवं वयासी–खिप्पामेव भो देवाणुप्पिआ ! सव्वरयनामए महइमहालए तओ चेइअथूभे करेह, एगं भगवओ तित्थगरस्स चिइगाए एगं गणहरचिइगाए एगं अवसेसाणं अणगाराणं चिइगाए, तए णं ते बहवे जाव करेंति । तए णं ते बहवे भवणवइ जाव वेमाणिआ देवा तित्थगरस्स परिनिव्वाणमहिमं करेंति २ त्ता जेणेव नंदीसरवरे दीवे तेणेव उवागच्छन्ति ।

तए णं से सक्के देविंदे देवराया पुरच्छिमिल्ले अंजनगपव्वए अट्ठाहिअं महामहिमं करेति, तए णं सक्कस्स देविंदस्स० चत्तारि लोगपाला चउसु दहिमुहगपव्वएसु अट्ठाहियं महामहिमं करेंति, ईसाणे देविंदे देवराया उत्तरिल्ले अंजनगे अट्ठाहिअं तस्स लोगपाला चउसु दहिमुहगेसु अट्ठाहिअं चमरो अ दाहिणिल्ले अंजनगे तस्स लोगपाला दहिमुहगपव्वएसु बली पच्चत्थिमिल्ले अंजनगे तस्स लोगपाला दहिमुहगेसु ।

तए णं ते बहवे भवणवइवाणमंतर जाव अट्ठाहिआओ महामहिमाओ करेंति करित्ता तेणेव साइं २ विमाणाइं जेणेव साइं २ भवणाइं जेणेव साओ २ सभाओ सुहम्माओ जेणेव सगा २ माणवगा चेइअखंभा तेणेव उवागच्छंति २ त्ता वइरामएसु गोलवट्टसमग्गएसु जिनसकहाओ पक्खिवंति २ अग्गेहिं वरेहिं मल्लेहि अ गंधेहि अ अच्चेंति २ विउलाइं भोगभोगाइं भुंजमाणा विहरंति ।

वृ. 'उसभे ण'मित्यादि कण्ठ्यं, अथ ऋषभस्य कौमारे राज्ये गृहित्वे च यावान् कालः प्रागुक्तस्तं संग्रहरूपतयाऽभिधातुमाह–'उसभे ण'मित्यादि, व्यक्तं । अथ छाद्मस्थ्यादिपर्याया-भिधानपुरस्सरं निर्वाणकल्याणकमाह–'उसभे ण'मित्यादि, ऋषभोऽर्हन् एकं वर्षसहस्रं छद्मस्थपर्यायं प्राप्य पूरयित्वेत्यर्थः एकं पूर्वलक्षं वर्षसहस्रोनं केवलिपर्यायं प्राप्य एकं पूर्वलक्षं बहुप्रतिपूर्णं देशेनापि न न्यूनमितियावत् श्रामण्यपर्यायं प्राप्य चतुरशीतिं पूर्वलक्षाणि सर्वायुः पालयित्वा–उपभुज्य हैमन्तानां–शीतकालमासानां मध्ये यस्तृतीयो मासः पञ्चमः पक्षो माघबहुलो - माघमासकृष्णपक्षः तस्य माघबहुलस्य त्रयोदशीपक्षे–त्रयोदशीदिने विभक्तिव्यत्ययः प्राकृतत्वात् दशभिरनगारसहस्रैः सार्द्धं संपरिवृतः अष्टापदशैलशिखरे चतुर्दशेन भक्तेन–उपवासषट्केनापानकेन–पानीयाहार-रहितेन संपर्यङ्कनिषण्णः–सम्यक् पर्यङ्केन–पद्मा-सनेन निषण्णः–उपविष्टः, न तूर्ध्वंदमादिरितिभावः, पूर्वाह्णकालसमये अभिजिन्नक्षत्रेण योगमुपाग-तेनार्थाच्चन्द्रेण सुषमदुष्षमायां एकोननवत्यां पक्षेषु शेषेषु, अत्रापि विभक्तिव्यत्ययः पूर्ववत् प्राकृत-त्वात्, सप्तम्यर्थे तृतीया, कालं गतो –मरणधर्मं प्राप्तः व्यतिक्रान्तः संसारात् यावच्छब्दात् 'समुज्जाए

छिन्नजाइजरामरणबंधणे सिद्धे बुद्धे मुत्ते अंतगडे परिनिव्वुडे' इति संग्रहः, तत्र सम्यग्- अपुनरावृत्त्या ऊर्ध्वं -लोकाग्रलक्षणं स्थानं यातः-प्राप्तो न पुनः सुगतादिवदवतारी, यतस्तद्वचः-

॥ १ ॥ "ज्ञानिनो धर्मतीर्थस्य, कर्त्तारः परमं पदम् ।
गत्वाऽऽगच्छन्ति भूयोऽपि, भवं तीर्थनिकारतः ॥" इति ।

छिन्नं जात्यादीनां बन्धनं-बन्धनहेतुभूतं कर्म्म येन स तथा सिद्धो-निष्ठितार्थ बुद्धो-ज्ञातत्वः मुक्तो भवोपग्राहिकर्मांशेभ्यः अन्तकृत्सर्वदुःखानां परिनिर्वृतः-समन्ताच्छीतीभूतः कर्मकृत-सकलसन्तापविरहात् सर्वाणि शारीरादीनि दुःखानि प्रहीणानि यस्य स तथा ।

अथ भगवति निर्वृते यद्देवकृत्यं तदाह- 'जं समयं च ण'मित्यादि, यस्मिन् समये सप्तम्यर्थे द्वितीया एवं तच्छब्दवाक्येऽपि, अवधिना ज्ञानेनाभोगयति-उपयुनक्ति, शेषं सुगमं, उपयुज्य एवमवादीत्, किमित्याह- 'परिनिव्वुए' इत्यादि, परिनिर्वृतः खलुरिति वाक्यालङ्कारे जम्बूद्वीपे द्वीपे भरते वर्षे ऋषभोऽर्हन् कौशलिकस्तत् -तस्माद्धेतोः जीतं -कल्पः आचारः एतद्-वक्ष्यमाणं वर्त्तते अतीतप्रत्युत्पन्नानागतानां-अतीतवर्त्तमानानागतानां 'शक्राणां' आसनविशेषाधिष्ठातॄणां देवानां मध्ये 'इन्द्राणां परमैश्वर्ययुक्तानां देवानां देवेषु (वा) राज्ञांकान्त्यादिगुणैरधिकं राजमानानां तीर्थकराणां परिनिर्वाणमहिमां कर्तुं तद्गच्छामि णमिति प्राग्वत् अहमपि भगवतस्तीर्थकरस्य परिनिर्वाणमहिमां करोमीतिकृत्वा भगवन्तं निर्वृतं वन्दते-स्तुतिं करोति नमस्यति प्रणमति, यद्य जीवरहितमपि तीर्थकरशरीरमिन्द्रवन्द्यं तदिन्द्रस्य सम्यग्दृष्टित्वेन नामस्थापनाद्रव्यभावार्हता वन्दनीयत्वेन श्रद्धानादिति तत्वं, वंदित्वा नमस्यित्वा च किं चक्रे इत्याह--

'चउरासीई' इत्यादि, चतुरशीत्या सामानिकानां प्रभुत्वमन्तरेण वपुर्विभवद्युतिस्थित्यादिभि शक्रतुल्यानां सहस्रैः-त्रयस्त्रिंशता त्रायस्त्रिंशकैः-गुरुस्थानीयैर्देवैः चतुर्भिर्लोकपालैः-सोमयम-वरुण-कुबेरसंज्ञैः यावत्पदात् 'अट्ठहिं अग्गमहिसीहिं सपरिवाराहिं तिहिं परिसाहिं सत्तहिं अनीएहिं'ति, अत्र व्याख्या- अग्रमहिष्योऽष्टौ पद्मा १ शिवा २ शची ३ अञ्जू ४ अमला ५ अप्सर ६ नवमिका ७ रोहिणी ९, एताभिः षोडशसहस्रैः २ देवीपरिवारयुताभिः तिसृभिः पर्षद्भिः-बाह्यमध्याभ्यन्तररूपाभिः सप्तभिरनीकैर्हय १ गज २ रथ ३ सुभट ४ वृषभ ५ गन्धर्व ६ नाट्य ७ रूपैः सप्तभिः अनीकाधिपतिभि चतसृभिश्चतुरशीतिभिश्चतुर्दिशं प्रत्येकं चतुरशीतिसहस्राङ्गर-क्षकसद्भावात् षट्त्रिंशत्सहस्राधिकलक्षत्रयप्रमितैरङ्गरक्षकदेवसहस्रैः अन्यैश्च बहुभिः सौधर्मकल्प-वासिभिर्देवैर्देवीभिश्च सार्द्धं संपरिवृतः तया -देवजनप्रसिद्धया उत्कृष्टया-प्रशस्तविहायोग-तिधूत्कृष्टतमत्वात्, यावत्पदात् 'तुरिआए चवलाए चंडाए जयणाए जाव वीईवयमाणे २'त्ति ।

अत्र व्याख्या -त्वरितया मानसौत्सुक्यात् चपलया कायतः चण्डया क्रोधाविष्टयेव श्रमा-संवेदनात् जवनया परमोत्कृष्टवेगवत्त्वात्, अत्र च समयप्रसिद्धाश्चण्डादिगतयो न ग्राह्याः, तासां प्रतिक्रमं संख्यातयोजनप्रमाणक्षेत्रातिक्रमणात्, तेनैतानि पदानि देवगतिविशेषणतया योज्यानि, देवास्तु तताभवस्वभावादचिन्त्यसामर्थ्यतोऽत्यन्तशीघ्रा एव चलन्तीति, अन्यथा जिनजन्मादिषु महिमानिमित्तं तत्रैव दिवसे झटित्येवात्यन्तदूरे कल्पादिभ्यः सुराः कथमागच्छेयुरिति ?, उद्धूतया उद्धूतस्य दिगन्तव्यापिनो रजस इव या गति सा तया, अत एव निरन्तरं शीघ्रत्वयोगाच्छीघ्रया दिव्यया देवोचितया देवगत्या व्यतिव्रजन् , सम्भ्रमे द्विर्वचनं, तिर्यगसङ्ख्येयानां द्वीपसमुद्राणां

मध्यंमध्येन—मध्यभागेन यत्रैवाष्टापदः पर्वतः यत्रैव भगवतस्तीर्थकरस्य शरीरकं तत्रैवोपागच्छति, अत्र सर्वत्रातीतनिर्देशे कर्त्तव्ये वर्त्तमाननिर्देशस्त्रिकालभाविष्वपि तीर्थकरेष्वेतन्न्यायप्रदर्शनार्थ इति, न हि निर्हेतुका ग्रन्थकाराणां प्रवृत्तिरिति, उपागत्य च तत्र यत्करोति तदाह—'उवागच्छित्ता'इत्यादि, उपागत्य विमनाः—शोकाकुलमनाः अश्रुपूर्णनयनस्तीर्थकरशरीरकं त्रिकृत्वः आदक्षिणप्रदक्षिणं करोतीति प्राग्वत्, नात्यासन्ने नातिदूरे शुश्रूषन्निव तस्मिन्नप्यवसरे भक्त्याविष्टतया भगवद्वचनश्रवणेच्छाया अनिवृत्तेः, यावत्पदात् 'णमंसमाणे अभिमुहे विणएणं पंजलिउडे पज्जुवासइ' त्ति परिग्रहः, अत्र व्याख्या—

नमस्यन् पञ्चाङ्गप्रनामादिना अभि—भगवन्तं लक्षीकृत्य मुखं यस्य स तथा विनयेन—आन्तरबहुमाने प्राञ्जलिकृत इति प्राग्वत् पर्युपास्ते—सेवते इति, अथ द्वितीयेन्द्रवक्तव्यतामाह—

'ते णं कालेण'मित्यादि, सर्वं स्पष्टं, नवरं अरजांसि—निर्मलानि यान्यम्बरवस्त्राणि—स्वच्छता आकाशकल्पानि वसनानि तानि धरतीति यावत्करणात् 'आलइअमालमउडे नवहेमचारुचित्तचंचल कुंडलविलिहिज्जमाणगल्ले महिद्धीए जाव महासुक्खे भासुरबोंदीपलंबवणमालधरे ईसान कप्पे ईसाणवडेंसए विमाणे सुहम्माए सभाए ईसाणंसि सिंहासणंसि से णं अट्ठावीसाए विमाणावाससय साहस्सीणं असीईए सामानिअसाहस्सीणं तायत्तीसाए तायत्तीसगाणं चउण्हं लोगपालाणं अट्ठण्हं अग्गमहिसीणं सपरिवाराणं तिण्हं परिसाणं जाव चउण्हं असीईणं आयरक्खदेवसाहस्सीणं अन्नेसिं च ईसाणकप्पवासीणं देवाणं देवीण य आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे महयाहयनट्टगीअवाइअतंतीतलतालतुडिअघणमुइंगपडुपडहवाइअरवेणं' इति संग्रहः, सर्वं स्पष्टं, नवरं आलगितौ—यथास्थानं स्थापितौ मालामुकुटौ येन स तथा, नवाभ्यामिव हेममयाभ्यां चारुभ्यां चित्रकृद्भ्यां चञ्चलाभ्यां—इतस्ततश्चलद्भ्यां कुण्डलाभ्यां विलिख्यमानौ गल्लौ यस्य स तथेति ।

'ताए ण'मित्यादि, यथा शक्रः सौधर्मेन्द्रो निजकपरिवारेण सह तथा भणितव्य ईशानेन्द्रः यावत्पर्युपास्ते इत्यन्तं वाच्य इत्यर्थः, 'एवं सव्वे' इत्यादि, एवं—शक्रन्यायेन सर्वे देवेन्द्रा वैमानिकाः अत एव यावदच्युत इत्युत्तरसूत्रं संवदति, निजकपरिवारेण—आत्मीयात्मीयसामानिकादिपरिवारेण सहानेतव्या—भगवच्छरीरान्तिकं प्रापणया ग्रन्थवाचकेनेत्यर्थः, ग्रन्थापेक्षया वेदं सूत्रं योजनीयं, एवं वैमानिकप्रकारेण यावद् भवनवासिनां—दक्षिणोत्तरभवनपतीनामिन्द्रा विंशतिरित्यर्थः, अत्र यावच्छब्दो न गर्भगतसंग्रहसूचकः सङ्ग्राह्यपदाभावात्, किन्तु सजातीयभवनपतिसूचकः, वानमन्तराणां—व्यन्तराणां षोडशेन्द्राः—कालादयः—ननु स्थनाङ्गादिषु द्वात्रिंशत्व्यन्तरेन्द्रा अभिहिताः, इह तु कथं षोडश ?, उच्यते, मूलभेदभूतास्तु षोडश महर्द्धिकाः कालादय उपात्ताः तदवान्तरभेदभूतास्तु षोडश अणपन्नीप्रादयोऽल्पर्द्धिकत्वात् नह विवक्षिताः, अस्ति हि एषाऽपि सूत्रकृत्प्रवृत्तिर्विचित्रा यदन्यत्र प्रसिद्धा अपि भावाः कुतश्चिदाशयविशेषात् स्वसूत्रे सूत्रकारो न निबध्नाति, यथा प्रति- वासुदेवा अन्यत्रावश्यकनिर्युक्त्यादिषु उत्तमपुरुषत्वेन प्रसिद्धा अपि चतुर्थाङ्गे चतुष्पञ्चाशत्तमसम- वाये नोक्ताः "भरहेरवएसु णं वासेसु एगमेगाए ओसप्पिणीए चउवण्णं चउवण्णं (महापुरिसा) उप्पज्जिसु वा ३ तं०—चउवीसं तित्थयरा बारस चक्कवट्टी नव बलदेवा नव वासुदेवा" इति, परमुपलक्षणात् तेऽपि ग्राह्याः । ज्योतिष्काणां द्वौ चन्द्रौ सूर्यौ,

जात्याश्रयणात्, व्यक्त्या तु तेऽसङ्ख्याताः, निजकपरिवाराः--सहवर्तिस्वपरिकराः नेतव्याः। ततः शक्रः किं करोतीत्याह-

'तए णं०, ततः शक्रो देवेन्द्रो देवराजः तान् बहून् भवनपत्यादीन् देवान् एवमवादीत्-क्षिप्रमेव-निर्विलम्बमेव भो देवानां प्रिया!-देवान्-स्वामिनोऽ- नुकूलाचरणेन अनुप्रीणन्ति इति देवानुप्रियाः नन्दनवनात् सरसानि स्निग्धानि नतु रूक्षाणि गोशीर्षं गोशीर्षनाम्ना वरचन्दनं तस्य काष्ठानि संहरत-प्रापयत संहृत्य च तिस्रश्चितीः कारयत-एकां भगवतस्तीर्थकरस्य एकां गणधराणां एकामवशेषानामनगारानामिति। 'तए णं०, अत्रायं आवश्यकवृत्त्याद्युक्तश्चितारचनविग्विभागः-नन्दनव- नानीतचन्दनदा- रुभिर्भगवतः प्राच्यां वृत्तां चितां गणधरानामपाच्यां त्र्यस्रां शेषसाधूनां प्रतीच्यां चतुरस्रां सुराश्चक्रुरिति, नन्वावश्यकादाविक्ष्वाकूणां द्वितीया चितोक्ता इह तु गणधराणां कथमिति उच्यते, अत्र प्रधानतया गणधरानामुपादानेऽप्युपलक्षणाद् गणधरप्रभृतीनामिक्ष्वाकूणां द्वितीया चिता ज्ञेयेति न काऽप्याशङ्का, तत्श्चितारचनानन्तरं शक्रः किं करोतीत्याह-ततः क्षीरोदकसंहरणानन्तरं स शक्रः किं करोतीति दर्शयति-

'तए णं'मित्यादि, ततः शक्रस्तीर्थकरशरीरकं क्षीरोदकेन स्नपयति स्नपयित्वा गोशीर्षवरचन्दनेनानुलिम्पति अनुलिप्य हंसलक्षणो हंसविशदत्वात् शाटको-वस्त्रमात्रं स च पृथुलः पट्ट इत्यभिधीयते तं हंसनामकं पटशाटकं निवासयति, परिधापयतीत्यर्थः, परिधाप्य च सर्वालङ्कारविभूषितं करोति, 'तए णं'मित्यादि, ततस्ते भवनपत्यादयो देवा गणधरानामनगाराणां च शरीराणि तथैव चक्रु, अहतानि-अखण्डितानि दिव्यानिवर्याणि देवदूष्ययुगलानि निवासयन्ति, शेषं व्यक्तं

'तए णं'मित्यादि, ततः शक्रो भवनपत्यादीनेवमवादीत्-क्षिप्रमेव भो देवानुप्रिया! ईहामृगादिभक्तिचित्रास्तिस्रः शिबिका विकुर्व्वत, विकुर्व्व इति सौत्रो धातुस्तस्माद्रूपसिद्धि, शेषं स्पष्टं, 'तए णं'मित्यादि, ततः शक्रो भगवच्छरीरं शिबिकायामारोहयति महद्धर्या च चितिकास्थाने नीत्वा चितिकायां स्थापयति शेषं स्पष्टं, 'तए णं'मित्यादि, ततः स शक्रोऽग्निकुमारान् देवान् शब्दयति-आमन्त्रयति शब्दापयित्वा एवमवादीत्-भो अग्निकुमारा! देवास्तीर्थकरचितिकायां गणधरचितिकायामनगारचितिकायां चाग्निकायं विकुर्वत विकुर्वित्वा एतामाज्ञप्तिकां-आज्ञां प्रत्यर्पयत, शेषं व्यक्तं। 'तए णं अग्गिकुमार देवा' इत्यादि, व्याख्यातप्रायमेव,

'तए णं से सक्के' इत्यादि, एतत्सूत्रद्वयमपि व्यक्तं, उज्ज्वालयत-दीपयत तीर्थकरशरीरकं यावदनगारशरीरकाणि च ध्मापयत-स्ववर्णत्याजनेन वर्णान्तरमापादयत, अग्निसंस्कृतानि कुरुतेति, 'तए णं०, ततः स शक्रो भवनपत्यादिदेवानेवमवादीत्-भो देवानुप्रियास्तीर्थकरचितिकायां यावदनगार- चितिकायां च अगुरुं तुरुष्कं-सिल्हकं घृतं मधु च एतानि द्रव्याणि कुम्भाग्रशः-अनेककुम्भ- परिमाणानि भाराग्रशः-अनेकविंशतितुलापरिमाणानि अथवा पुरुषोत्क्षेपणीयो भारः सोऽग्रं-परिमाणं येषां ते भाराग्राः ते बहुशो भाराग्रशः संहरतेति प्राग्वत्, अथ मांसादिषु ध्मापितेषु अस्थिष्ववशिष्टेषु शक्रः किं चक्रे इत्याह-

'तए णं'मित्यादि, स्पष्टं, नवरं क्षीरोदकेन-क्षीरसमुद्रानीतजलेन निर्वापयत, विध्यापयतेत्यर्थः, अथास्थिवक्तव्यतामाह-'तए णं'मित्यादि, ततश्चितिकानिर्वापणादनु भगवतस्तीर्थकरस्योपरितनं दक्षिणं सक्थि दाढामित्यर्थः शक्रो गृह्णाति ऊर्ध्वलोकवासित्वात् दक्षिणलोकार्द्धा-

धिपत्वाद्य, ईशानेन्द्रः उपरितनं वामं, ऊर्ध्वलोकवासित्वात् उत्तरलोकार्द्धाधिपतित्वाच्च, चमरश्चासुरेन्द्रोऽसुरराजोऽधस्तनं दक्षिणं सक्थि गृह्णाति. अधोलोकवासित्वात् दक्षिणश्रेणिपतित्वाच्च, बलि दाक्षिणत्यासुरेभ्यः सकाशाद् वि इति विशिष्टं रोचनं–दीपनं दीप्तिरितियावत् येषामस्ति ते वैरोचनाः, स्वार्थेऽण्, औदीच्यासुराः, दाक्षिणात्येभ्यः औत्तराहानामधिकपुण्यप्रकृतिकत्वात्, तेषामिन्द्रः, एवं वैरोचनराजोऽपि अधस्तनं वामं सक्थि गृह्णाति, अधोलोकवासित्वात् उत्तरश्रेण्याधिपत्वाद्य, अवशेषा भवनपतयो यावत्करणात् व्यन्तरा ज्योतिष्काश्च ग्राह्याः, वैमानिका देवा यथार्हं यथामहर्द्धिकं अवशेषाणि अङ्गानि–भुजाद्यस्थीनि उपाङ्गानि–अङ्गसमीपवर्त्तीनि अङ्गुल्याद्यस्थीनि गृह्णन्तीति योगः, अयं भावः–सनत्कुमाराद्यष्टाविंशतिरिन्द्रा अवशिष्टनष्टाविंशतिदन्तान् अन्येऽवशिष्टा इन्द्रा अङ्गोपाङ्गास्थीनीति, ननु देवानां तद्ग्रहणे क आशय इत्याह–

केचिज्जिनभक्त्या जिने निर्वृते जिनसक्थि जिनवदाराध्यमिति, केचिज्जीतमिति पुरातनैरिदमाचीर्णमित्यस्माभिरपीदे कर्त्तव्यमिति, केचिद्धर्म–पुण्यमितिकृत्वा, अत्र ग्रन्थान्तरप्रसिद्धोऽयमपि हेतुः–

॥१॥ 'पुअंति अ पइदिअहं अह कोइ पराभवं जइ करेज्जा।
तो पक्खालिअ ताओ सलिलेण करेंति नियरक्खं ॥'

सौधर्मेन्द्रेशानेन्द्रयोः परस्परं सवैरयोस्तच्छटादानेन वैरोपशमोऽपि इत्यादिको ज्ञेयः, तथा 'व्याख्यातो विशेषार्थप्रतिपत्ति' अतो विद्याधरनरास्थितामस्म शेषामिव गृह्णन्ति, सर्वोपद्रवविद्रावणमितिकृत्वा, आस्तां त्रिजगदाराध्यानां तीर्थकृतां, योगभृच्चक्रवर्त्तिनामपि देवाः सक्थिग्रहणं कुर्वन्तीति ॥ अथ तत्र विद्याधरादिभिरहंपूर्विकया भस्मनि गृहीते अखातायामेव गर्त्तायां जातायां मा भूत्तत्र पामरजनकृताशातनाप्रसङ्ग सातत्येन तीर्थप्रवृत्तिश्च भूयादिति स्तूपविधिमाह–

'तए णं'मित्यादि, सर्वं स्पष्टं, नवरं सर्वात्मना रत्नमयान्–अन्तर्बहिरपि रत्नखचितान् महातिमहतः–अतिविस्तीर्णान्, आलप्रत्ययः स्वार्थिकः प्राकृतप्रभवः, त्रीन् चैत्यस्तूपान् चैत्याः–चित्ताल्हादकाः स्तूपाश्चैत्यस्तूपास्तान् कुरुत चितात्रयक्षितिष्वित्यर्थः, आज्ञाकरणसूत्रे ततस्ते बहवो भवनपत्यादयो देवास्तथैव कुर्वन्ति, ननु यथाऽऽज्ञाकरणसूत्रे यावत्करणेन सूत्रकृतो लाघवसूचा तथा पूर्वसूत्रेऽपि कथं न लाघवचिन्ता कृता ?, उच्यते, विचित्रत्वात् सूत्रप्रवृत्तेरिति।

'तए णं'मित्यादि, ततस्ते बहवो भवनपत्यादयो देवास्तेषु स्तूपेषु यथोचितं तीर्थकरस्य परिनिर्वाणमहिमां कुर्वन्ति, कृत्वा च यत्रैवाकाशखण्ड नन्दीश्वरवरो द्वीपत्रैवोपागच्छन्ति, ततः स शक्रः पौरस्त्ये अञ्जनकपर्वते अष्टाह्निकां–अष्टानामह्ना–दिवसानां समाहारोऽष्टाहं तदस्ति यस्यां महिमायां सा अष्टाह्निका तां महामहिमां करोति, ततः शक्रस्य चत्वारो लोकपालाः सोमयमवरुणवैश्रमणनामानस्तत्पार्श्ववर्त्तिषु चतुर्षु दधिमुखपर्वतेषु अष्टाह्निकां महामहिमां कुर्वन्ति, नन्वत्र नन्दीश्वरादिशब्दाना कोऽन्वर्थ इति ?, उच्यते, नन्दा–पर्वतपुष्करिणीप्रमुखपदार्थसार्थसमुद्भूतात्यद्भुतसमृद्धया ईश्वरः–स्फातिमान्नन्दीश्वरः स एव मनुष्यद्वीपापेक्षया बहुतरसिद्धायतनादिसद्भावेन वरो नन्दीश्वरवरः, तथा अञ्जनरत्नमयत्वादञ्जनास्ततः स्वार्थे कप्रत्ययः यद्वा कृष्णवर्णत्वेनाञ्जनतुल्या इत्यञ्जनकाः, उपमाने कप्रत्ययः, तथा दधिवदुज्ज्वलवर्णं मुखं–शिखरं रजतमयत्वाद् येषां ते तथा, बहुव्रीहौ कप्रत्ययः, अथेशानेन्द्रस्य नन्दीश्वरावतारवक्तव्यतामाह–

ईशानस्तु ईशानो देवेन्द्र औत्तराहेऽञ्जनके अष्टाह्निकां तस्य लोकपाला औत्तराहाञ्जन-कपरिवारकेषु चतुर्षु दधिमुखकेषु अष्टाह्निकां, चमरश्च दाक्षिणात्येऽञ्जनके तस्य लोकपाला दधिमुखपर्वतेषु बलीचन्द्रः पाश्चात्येऽञ्जनके तस्य लोकपाला दधिमुखकेषु ततस्ते बहवो भवनपत्या-दयो देवा अष्टाह्निकाः महामहिमा—महोत्सवभूताः कुर्वन्तीति, बहुवचनं चात्राष्टाह्निकानां सौधर्मेन्द्रा-दिभिः पृथक् २ क्रियमाणत्वात्, 'करित्ता'इत्यादि अथाष्टाह्निका महामहिमाः कृत्वा यत्रैव लोकदेशे स्वानि २—स्वसम्बन्धीनि २ विमानानि यत्रैव स्वानि २ भवनानि—निवासप्रासादाः यत्रैव स्वाः २ सभाः—सुधर्मा यत्रैव स्वकाः २—स्वसम्बन्धिनो २ माणवकनामानश्चैत्यस्तम्भाश्चैत्यशब्दार्थ प्राग्वत् तत्रैवोपागच्छन्ति उपागत्य च वज्रमयेषु गोलकेषु समुद्गकेषु—वृत्तभाजनविशेषेषु जिनसक्थीनि प्रक्षिपन्तीति, सक्थिपदमुपलक्षणपरं तेन दशनाद्यपि यथार्हं प्रक्षिपन्तीति ।

अत्र ज्ञाताधर्मकथाङ्गोक्तमल्लिनाथनिर्वाणमहिमाधिकारगतसूत्रवृत्त्यनुसारेण माणव-कस्तम्भाद्वृत्तसमुद्गकानवतार्य सिंहासने निवेश्य तन्मध्यवर्त्तीनि जिनसक्थीन्यपूपुजन्, वृषभजि-नसक्थि च तत्र प्राक्षिपन्निति ज्ञेयं, प्रक्षिप्य च अग्र्यैः—प्रत्यग्रैर्वरैर्माल्यैश्च गन्धैश्चार्चयन्ति, अर्चयित्वा च विपुलान्—भोगोचितान् भोगान् भुञ्जाना विहरन्ति—आसत इति, अत्राह परः—ननु चारित्रा-दिगुणविकलस्य भगवच्छरीरस्य पूजनादिकं पूर्वमपि ममान्तर्व्रणमिव बाधते, तदनु इदं जिनसक्थ्यादिपूजनं 'क्षते क्षार इव' सुतरां बाधते, मैवं वादीः ।

नामस्थापनाद्रव्यजिनानां भावजिनस्येव वन्दनीयत्वात्, तद भगवच्छरीरस्य च द्रव्यजिन-रूपत्वात्, सक्थ्यादीनां च तदवयवत्वाद् भावजिनादभेदेन वन्दनीयत्वमेव, अन्यथा गर्भतयोत्पन्नमा-त्रस्य भगवतः 'समणे भगवं महावीरे' इत्याद्यभिलापेन सूत्रकृतां सूत्ररचना शक्राणां शक्रस्तवप्रयो-गादिकं च नोचितीमञ्चेदिति, अत एव जिनसक्थ्याद्याशातनाभीरवो हि देवास्तत्र कामासेवनादौ न प्रवर्त्तन्ते, इति गतस्तृतीयारकः । अथ चतुर्थारकस्वरूपं निरूप्यते—

**मू. (४७)** *तीसे णं समाए दोहिं सागरोवमकोडाकोडीहिं काले वीइक्कंते अनंतेहिं वण्णपज्जवेहिं तहेव जाव अनंतेहिं उट्ठाणकम्म जाव परिहायमाणे २ एत्थ णं दूसमसुसमानामं समा काले पडिवज्जिंसु समणाउसो !*

*तीसे णं भंते ! समाए भरहस्स वासस्स केरिसए आगारभावपडोआरे प० गो० बहुसमरमणिज्जे भूमिभागे प०, से जहानामए आलिंगपुक्खरेइ वा जाव मणीहिं उवसोभिए, तंजहा—कत्तिमेहिं चेव अकत्तिमेहिं चेव, तीसे णं भंते ! समाए भरहे मणुआणं केरिसए आयार-भावपडोयारे पं० ?, गो० ! तेसिं मणुआणं छव्विहे संघयणे छव्विहे संठाणे बहूइं धणूइं उद्धं उच्चत्तेणं जहन्नेणं अंतोमुहुत्तं उक्कोसेणं पुव्वकोडीआउअं पालेंति २ त्ता अप्पेगइआ निरयगामी जाव देवगामी अप्पेगइया सिज्झंति बुज्झंति जाव सव्वदुक्खाणमंतं करेंति ।*

*तीसे णं समाए तओ वंसा समुप्पज्जित्था, तंजहा—अरहंतवंसे चक्कवट्टिवंसे दसारवंसे, तीसे णं समाए तेवीसं तित्थयरा इक्कारस चक्कवट्टी नव बलदेवा नव वासुदेवा समुप्पज्जित्था ।*

**वृ.** 'तीसे णं' मित्यादि, तस्यां अनन्तरवर्णितायां समायां द्वाभ्यां सागरकोटाकोटीभ्यां—द्वे सागरोपमकोटाकोटी इत्येवं प्रकारेण काले व्यतिक्रान्ते अनन्तैर्वर्णपर्यवैस्तथैव द्वितीयारकप्रति-पत्तिक्रमवदज्ञेयं यावदनन्तैरुत्थानबलवीर्यपुरुषकारपराक्रमैरनन्तगुणपरिहाण्या हीयमानो

हीयमानोऽत्रान्तरे दुष्षमसुषमा नाम्ना समा—कालः प्रत्यपद्यत हे श्रमण ! हे आयुष्मन् !, अथ पूर्वारकवद्भरतस्वरूपं प्रष्टुमाह—'तीसे ण'मित्यादि, अथ तत्र मनुष्यस्वरूपप्रश्नमाह—

'तीसे णं'मित्यादि, इदं च सूत्रद्वयमपि प्रायः पूर्वसूत्रसदृशगमकत्वात् सुगमं, नवरं जघन्येनान्तर्मुहूर्तमायुस्तत्कालीनमनुष्या उत्कृष्टं पूर्वकोटिमायुः पालयन्ति, पालयित्वा च पञ्चस्वपि गतिष्वतिथीभवन्ति, अथ पूर्वसमासी विशेषमाह—

'तीसे णं'मित्यादि, तस्यां समायां त्रयो वंशा इव वंशाः—प्रवाहाः आवलिका इत्येकार्थाः न तु सन्तानरूपाः परम्पराः, परस्परं पितृपुत्रपौत्रप्रपौत्रादिव्यवहाराभावात्, समुदपद्यन्त, तद्यथा—अर्हद्वंशः चक्रवर्तिवंशः दशार्हाणां—बलदेववासुदेवानां वंशः, यदत्र दशारशब्देन द्वयोः कथनं तदुत्तरसूत्रबलादेव, अन्यथा दशार्हशब्देन वासुदेवा एव प्रतिपाद्या भवन्ति, 'अट्ठयं च दसाराण'मिति वचनात्, यत्तु प्रतिवासुदेववंशो नोक्तस्तत्र प्रायोऽङ्गानुयायीन्युपाङ्गानीति स्थानाङ्गे वंशत्रयस्यैव प्ररूपणात्, येन हेतुना तत्रैवं निर्देशस्तत्रायं वृद्धाम्नायः—प्रतिवासुदेवानां वासुदेववध्यत्वेन पुरुषोत्तमत्वाविवक्षणात्, एनमेवार्थं व्यनक्तितस्यां समायां त्रयोविंशतिस्तीर्थकराः एकादश चक्रवर्त्तिनः ऋषभभरतयोस्तृतीयारके भवनात् नव बलदेवा नव वासुदेवाः ज्येष्ठबन्धुत्वात् प्रथमं बलदेवग्रहणं उपलक्षणात् प्रतिवासुदेववंशोऽपि ग्राह्यः, गतश्चतुर्थोऽरकः, अथ पञ्चमः—

मू. (४८) *तीसे णं समाए एक्काए सागरोवमकोडाकोडीए बायालीसाए वाससहस्सेहिं ऊणिआए काले वीइक्कंते अनंतेहिं वण्णपज्जवेहिं तहेव जाव परिहाणीए परिहायमाणे २ एत्थ णं दूसमानामं समा काले पडिवज्जिस्सइ समणाउसो !, तीसे णं भंते ! समाए भरहस्स वासस्स केरिसए आगारभावपडोआरे भविस्सइ ?, गोअमा ! बहुसमरमणिज्जे भूमिभागे भविस्सइ से जहानामए आलिंगपुक्खरेइ वा मुइंगपुक्खरेइ वा जाव नानामणिपंचवण्णेहिं कत्तिमेहिं चेव अकत्तिमेहिं चेव, तीसे णं भंते ! समाए भरहस्स वासस्स मणुआणं केरिसए आयारभावपडोयारे पन्नत्ते ?, गो० ! तेसिं मणुआणं छव्विहे संघयणे छव्विहे संठाणे बहुइओ रयणीओ उद्धं उच्चत्तेणं जहन्नेणं अंतोमुहुत्तं उक्कोसेणं साइरेगं वाससयं आउअं पालेंति २ त्ता अप्पेगइआ निरयगामी जाव सव्वदुक्खाणमंतं करेंति, तसे णं समाए पच्छिमे तिभागे गणधम्मे पासंडधम्मे रायधम्मे जायतेए धम्मचरणे अ वोच्छिज्जिस्सइ ।*

वृ. 'तीसे णं'मित्यादि, तस्या समायां एकया सागरोपमकोटाकोटया द्विचत्वारिंशद्वर्षसहस्रैरूनितया—ऊनीभूतया, अनयैव प्रत्येकमेकविंशतिसहस्रवर्षप्रमाणयोः पञ्चमषष्ठारकयोः पूरणात्, काले व्यतिक्रान्तेऽनन्तैर्वर्णादिपर्यवैस्तथैव यावत् परिहाण्या परिहीयमाणा २, अत्र समये दुष्षमानाम्ना समा—कालः प्रतिपत्स्यते, वक्तुरपेक्षया भविष्यत्कालप्रयोगः, अथात्र भरतस्य स्वरूपं पृच्छन्नाह— 'तीसे णं भंते ! समाए भरह'इत्यादि, सर्वं प्राग्व्याख्यातार्थं, नवरं भविष्यतीति प्रयोगः पृच्छकापेक्षया, अत्र भूमेर्बहुसमरमणीयत्वादिकं चतुर्थारकतो हीयमानं २ नितरां हीनं ज्ञातव्यं, ननु 'खाणुबहुले कण्टकबहुले विसमबहुले' इत्यादिनाऽधस्तनसूत्रेण लोकप्रसिद्धेन च विरुध्यते, मैवं अविचारितचतुरं चिन्तयेः, यतोऽत्र बहुलशब्देन स्थाण्वादिबाहुल्यं चिन्तितं, न च षष्ठारक इवैकान्तिकत्वं, तेन च क्वचिद् गङ्गातटादौ आरामादौ वैताढ्यगिरिनिकुञ्जादौ वा बहुसमरमणीय- त्वादिकमुपलभ्यत एवेति न विरोधः, अथ तत्र मनुजस्वरूपं प्रष्टुकाम आह

'तीसे णं'मित्यादि, पूर्वं व्याख्यातार्थमेतत्, नवरं बहवयो रत्नयो—हस्ताः समहस्तोच्छ्र्यत्वात् तेषां यद्यपि नामकोशे बद्धमुष्टिको हस्तो रत्निरक्तस्तथापि समयपरिभाषया पूर्ण इति, ते मनुजा जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षेण सातिरेकं त्रिंशदधिकं वर्षशतमायुः पालयन्ति, अप्येकका नैरयिक-गतिगामिनः यावत् सर्वदुःखानामन्तं कुर्वन्ति, अत्र चान्तक्रिया चतुर्थारकजातपुरुषजातमपेक्ष्य तस्यैव पञ्चमसमायां सिद्ध्यमानत्वाज्जम्बूस्वामिन इव, न च संहरणं प्रतीत्येदं भावनीयम्, तथा च सति प्रथमषष्ठारकादावपि एतत्सूत्रपाठ उपलभ्येत एवेति, आह—अत्र पालयन्ति अन्तं कुर्वन्ति इत्यादौ भविष्यत्कालप्रयोगे कथं वर्त्तमाननिर्देशः ?, उच्यते, सर्वास्वप्यवसर्पिणीषु पञ्चमसमासु इदमेव स्वरूपमिति नित्यप्रवृत्तवर्त्तमानकाले वर्त्तमानप्रयोगः, यथा द्वे सागरोपमे शक्रो राज्यं कुरुते इत्यादौ, तर्हि दुःषमासमा कालः प्रतिपत्स्यते इत्यादिप्रयोगः कथमिति चेत्, उच्यते, प्रज्ञापकपुरुषापेक्षयैतत्प्रयोगस्यापि साधुत्वात्, पुनरपि तस्यां किं किं वृत्तमित्याह—

'तीसे णं'मित्यादि, तस्या दुष्षमानाम्न्याः समायाः पश्चिमे त्रिभागे वर्षसहस्रसप्तकप्रमाणेऽ-तिक्रामति सति न तु अवशिष्टे तथा सति एकविंशतिसहस्रवर्षप्रमाणश्रीवीरतीर्थस्या- व्युच्छित्ति-कालस्यापूर्त्तेः गणः –समुदायो निजज्ञातिरितियावत् तस्य धर्म—स्वस्वप्रवर्त्तितो व्यवहारो विवाहा—दिकः पाखण्डाः –शाक्यादयस्तेषां धर्म प्रतीत एव राजधर्मो—निग्रहानुग्रहादि जाततेजाः— अग्निः, स हि नातिस्निग्धे सुषमसुषमादौ नातिरूक्षे दुष्षमदुष्षमादौ चोत्पद्यत इति, चकारादग्निहेतुको व्यवहारो रन्धनादिरपि, चरणधर्म—चारित्रधर्म्मः, चशब्दाद् गच्छव्यवहारश्च, अत्र धर्मपदव्यत्ययः प्राकृतत्वात्, व्युच्छेत्स्यति –विच्छेदं प्राप्स्यसि, सम्यक्त्वधर्मस्तु केषाञ्चित्सम्भवत्यपि, बिलवासिनां हि अतिक्लिष्टत्वेन चारित्राभावः, अत एवाह प्रज्ञप्त्यां—'ओसण्णं धम्मसन्नपब्भट्ठा' इति, ओसन्नमिति प्रायोग्रहणात् कश्चित्सम्यक्त्वं प्राप्यतेऽपीति भावः, गतः पञ्चम आरः ।

मू. (४९) *तीसे णं समाए एकवीसाए वाससहस्सेहिं काले विइक्कंते अनंतेहिं वण्णपज्जवेहिं गंध० रस० फासपज्जवेहिं जाव परिहायमाणे २ एत्थ णं दूसमदूसमानामं समाकाले पडिवज्जिस्सइ समणाउसो !, तीसे णं भंते ! समाए उत्तमकट्ठपत्ताए भरहस्स वासस्स केरिसए आयारभावपडोआरे भविस्सइ ?, गोअमा ! काले कविस्सई हाहाभूए भंभाभूए कोलाहलभूए समानुभावेण य खरफ-रुसधूलिमइला दुव्विसहा वाउला भयंकरा य वाया संवट्टगा य वाइंति ।*

*इह अभिक्खणं २ धूमाहिंति अ दिसा समंता रउस्सला रेणुकलुसतमपडलणिरालोआ समयलुक्खयाए णं अहिअं चंदा सीअं मोच्छिहिंति अहिअं सूरिआ तविस्संति, अदुत्तरं च णं गोअमा ! अभिक्खणं अरसमेहा विरसमेहा खारमेहा खत्तमेहा अग्गिमेहा विज्जुमेहा विसमेहा अजवणिज्जोदगा वाहिरोगवेदणोदीरणपरिनामसलिला अमणुण्णपाणिअगा चंडानिलपहततिक्खधाराणिवातपउरं वासं वासिहिंति । जेणं भरहे वासे गामागरनगरखेडकब्बडमडंबदोणमुहपट्टणासमगयं जनवयं चउप्पयगवेलए खहयरे पक्खिसंघे गामारण्णप्पयारनिरए तसे अ पाणे बहुप्पयारे रुक्खगुच्छगुम्म- लयवल्लिपवालंकुरमादीए तणवणस्सइकाइए ओसहीओ अ विद्धंसेहिंति पव्वयगिरिडोंग- रुत्थलभट्ठिमादीए अ वेअड्ढगिरिवज्जे विरावेहिंति, सलिलबिलविसमगत्त-णिण्णुण्णयाणि अ गंगासिंधुवज्जाइं समीकरेहिंति ।*

*तीसे णं भंते ! समाए भरहस्स वासस्स भूमीए केरिसए आगारभावपडोआरे भविस्सइ*

गोयमा ! भूमी भविस्सइ इंगालभूआ मुम्मुरभूआ छारिअभूआ तत्तकवेल्लभूआ तत्तसमजोइभूआ धूलिबहुला रेणुबहुला पंकबहुला पणयबहुला चलणिबहुला बहूणं धरणिगोअराणं सत्ताणं दुन्निक्कमा यावि भविस्सई।

तीसे णं भंते ! समाए भरहे वासे मणुआणं केरिसए आयारभावपडोआरे भविस्सइ ?, गोयमा ! मणुआ भविस्संति दुरूवा दुवण्णा दुगंधा दुरसा दुफासा अनिट्ठा अकंता अप्पिआ, असुभा अमणुन्ना अमनामा हीनस्सरा दीनस्सरा अनिट्ठस्सरा अकंतस्सरा अपिअस्सरा अमणामस्सरा अमणुण्णस्सरा अनादेज्जवयणपच्चायाता निल्लज्जा कूडकवडकलहबंधवेरनिरया मज्जायातिक्कमप्पहाणा अकज्जणिच्चुज्जुया गुरुनिओगविनयरहिआ य विकलरूवा परूढणहकेसमंसुरोमा काला खरफरुससमावण्णा फुट्टसिरा कविलपलिअकेसा बहुण्हारुणिसंपिणद्धदुद्दंसणिज्जरूवा संकुडिअवलीतरंगपरिवेढिअंगमंगा जरापरिणयव्व थेरगणरा पविरलपरिसडिअदंतसेढी उब्भडघडमुहा विसमणयणवंकणासा वंकवली विगयभेसणमुहा दद्दुविकिटिभसिब्भफुडिअफरुसच्छवी चित्तलंगमंगा कच्छूखसराभिभूआ खरतिक्खणक्खकंडूइअविकयतणू टोलगतिविसमसंधिबंधणा उक्कुडुअट्ठिअविभत्तदुब्बलकुसंघयणकुप्पमाणकुसंठिआ कुरूवा कुट्ठाणासणकुसेज्जकुभोइणो असुइणो अणेगवाहिपीलिअंगमंगा खलंतविब्भलगई निरुच्छाहा सत्तपरिवज्जिला विगयचेट्ठा नट्ठतेआ अभिक्खणं सीउण्हखरफरुसवायविज्झडिअमलिणपंसुरओगुंडिअंगमंगा बहुकोहमानमायालोभा बहुमोहा असुभदुक्खभागी ओसण्णं धम्मसण्णसम्मत्तपरिभट्ठा उक्कोसेणं रयणिप्पमाणमेत्ता सोलसवीसइवासपरमाउसो बहुपुत्तणत्तुपरियालपणयबहुला गंगासिंधूओ महानईओ वेअड्ढं च पव्वयं वीसाए बावत्तरिं णिगोअबीअं बीअमेत्ता बिलवासिणो मणुआ भविस्संति।

ते णं भंते ! मणुआ किमाहारिस्संति ?, गोअमा ! तेणं कालेणं तेणं समएणं गंगासिंधूओ महानईओ रहपहमित्तवित्थराओ अक्खसोअप्पमाणमेत्तं जलं वोज्झिहिंति, सेविअ णं जले बहुमच्छकच्छमाइण्णे, नो चेव णं आउबहुले भविस्सइ, तए णं ते मणुआ सूरुग्गमणमुहुत्तंसि अ सूरत्थमणमुहुत्तंसि अ बिलेहिंतो निद्धाइस्संति बिले० त्ता मच्छकच्छभे थलाइं गाहेहिंति मच्छकच्छभे थलाइं गाहेत्ता सीआतवतत्तेहिं मच्छकच्छभेहिं इक्कवीसं वाससहस्साइं वित्तिं कप्पेमाणा विहरिस्संति

ते णं भंते ! मणुआ निस्सीला निव्वया निग्गुणा निम्मेरा णिप्पच्चक्खाणपोसहोववासा ओसण्णं मंसाहारा मच्छाहारा खुड्डाहारा कुणिमाहारा कालमासे कालं किच्चा कहिं गच्छिहिंति कहिं उववज्जिहिंति ?, गो० ! ओसण्णं नरगतिरिक्खजोणिएसुं उववज्जिहिंति।

तीसे णं भंते ! समाए सीहा वग्घा विगा दीविआ अच्छा तरस्सा परस्सरा सरभसियालबिरालसुणगा कोलसुणगा ससगा चित्तगा चिल्ललगा ओसण्णं मंसाहारा मच्छाहारा खोद्दाहारा कुणिमाहारा कालमासे कालं किच्चा कहिं गच्छिहिंति कहिं उववज्जिहिंति ?, गो० ! ओसण्णं नरगतिरिक्खजोणिएसुं० उववज्जिहिंति, ते णं भंते ! ढंका कंका पीलगा मग्गुगा सिही ओसण्णं मंसाहारा जाव कहिं गच्छिहिंति कहिं उववज्जिहिंति ?, नरगतिरिक्खजोणिएसुं जाव उववज्जिहिंति।

**वृ.** अथ षष्ठारक उपक्रम्यते-'तीसे णं'मित्यादि, तस्यां समायां एकविंशत्या वर्षसहस्रप्रमिते काले व्यतिक्रान्ते अनन्तैर्वर्णपर्यवैरेवं गन्धस्पर्शपर्यवैर्यावत् परिहीयमाणः २, दुष्षमादुष्षमा नाम्ना समा कालः प्रतिपत्स्यते हे श्रमण ! हे आयुष्मन् !, अथ तत्र भरतस्वरूपप्रश्नायाह -

'तीसे णं'मित्यादि, तस्यां समायामुत्तमकाष्ठाप्राप्तायां उत्तमावस्थागतायामित्यर्थः परमकष्टप्राप्तायां वा, भरतस्य कीदृश -कः आकारभावस्य—आकृतिलक्षणपर्यायस्य प्रत्यवतारः—अवतरणं आकारभावप्रत्यवतारः प्रज्ञप्तः ?, भगवानाह—गौतमेत्यामन्त्र्य वक्ष्यमाणविशिष्टः कालो भविष्यति, कीदृश इत्याह—'हाहाभूताः' हाहा इत्येतस्य शब्दस्य दुःखार्त्तलोकेन करणं हाहोच्यते तद्भूतः—प्राप्तो यः कालः स हाहाभूतः, भम्भा इत्यस्य दुःखार्त्तगवादिभि करणं भम्भोच्यते तद्भूतो यः स भम्भाभूतः, द्वावप्यनुकरणशब्दाविमौ, भम्भा वा भेरी सा चान्तः शून्या ततो भम्भेव यः कालो जनक्षयात्तच्छून्यः स भम्भाभूत इत्युच्यते, कोलाहल ईहार्त्तशकुनसमूहध्वनि तं भूतः—प्राप्तः, कोलाहलभूतः समानुभावेन—कालविशेषसामर्थ्येनच, चकारोऽत्र वाच्यान्तरदर्शनार्थः, णमित्यलङ्कारे, खरपरुषाः—अत्यन्तकठोरा धूल्या च मलिना ये वातास्ते तथा दुर्विषहाः—दुस्सहाः व्याकुला असमञ्जसा इत्यर्थः भयङ्कराः, चः विशेषणसमुच्चयसूचकः, वास्यन्तीत्यनेन सम्बन्धः, संवर्त्तकाश्च—तृणकाष्ठादीनामपहारका वातविशेषाश्च तेऽपि वास्यन्तीति, इहास्मिन् काले अभीक्ष्णं—पुनः पुनर्धूमायिष्यन्ते च—धूममुद्वमिष्यन्ति दिशः, किम्भूतास्ता इत्याह—समन्तात्—सर्वतो रजस्वला रजोयुक्ताः, अत एव रेणुना—रजसा कलुषा मलिनास्तथा तमःपटलेन—अन्धकारवृन्देन निरालोका—निरस्तप्रकाशा निरस्तदृष्टिप्रसरा वा, ततः पदद्वयकर्मधारयः, समयरूक्षतया च कालरूक्षतया चेत्यर्थः, अधिकं अहितं वा अपथ्यं चन्द्राः शीतं हिमं मोक्ष्यन्ति—म्रक्ष्यन्ति तथैव सूर्यास्तप्स्यन्ति, तापं मोक्ष्यन्तीत्यर्थः, कालरौक्ष्येण शरीररौक्ष्यं तस्माच्चाधिकशीतोष्णापरामव इति ।

अथ पुनस्तत्स्वरूपं भगवान् स्वयमेवाह—'अदुत्तर'मित्यादि, अथापरं च हे गौतम ! अभीक्ष्णं—पुनः पुनः अरसा—मनोज्ञरसवर्जितजला ये मेघास्ते तथा विरसा—विरुद्धरसा ये मेघास्ते तथा, एतदेवाभिव्यज्यते—क्षारमेघाः—सर्जादिक्षारसमानजलोपेतमेघाः खात्रमेघाः—करीषसमानरसजलोपेतमेघाः 'खट्टमेहे' ति क्वचिद् दृश्यते तत्राम्लजला मेघाः अग्निमेघा अग्निवद्दाहकारिजला इत्यर्थः विद्युत्प्रधाना एव जलवर्जिता इत्यर्थः विद्युन्निपातवन्तो वा विद्युन्निपातकार्यकारिजलनिपातवन्तो वा मेघाः विषमेघाः- जनमरणहेतुजलाः अत्र असनिमेहा इत्यपि पदं क्वचिद् दृश्यते तत्रायमर्थ—करकादिनिपातवन्तः पर्वतादिदारणसमर्थजलत्वेन वा वज्रमेघाः अयापनीयं—न यापनाप्रयोजकमुदकं येषां ते तथा, असमाधानकारिजला इत्यर्थः, कचिद् -'अपिबणिज्जोदगा' इति तत्रापातव्यजला इत्यर्थः एतदेव व्यनक्ति—'व्याधिरोगवेदनोदीरणापरिनामसलिलाः' व्याधयः—स्थिराः कुष्ठादयो रोगाः—सद्योघातिनः शूलादयस्तदुत्थाया वेदनाया उदीरणा—अप्राप्तसमये उदयप्रापणं सैव परिनामः—परिपाको यस्य सलिलस्य तत्तथा, तदेवंविधं सलिलं येषां ते तथा, अत एवामनोज्ञपानीयकाः चण्डानिलेन प्रहतानां—आच्छोटितानां तीक्ष्णानां—वेगतीनां धाराणां निपातः स प्रचुरो यत्र वर्षे स तथा तं, वर्षं वर्षिष्यन्ति करिष्यन्तीत्यर्थः,

ग्रन्थान्तरे तु एते क्षारमेघादयो वर्षशतोनैकविंशति- वर्षसहस्रप्रमाणदुष्षमाकालातिक्रमे वर्षिष्यन्तीति, अथ तेन वर्षणेनारसमेघादयः किं करिष्यन्तीत्याह— येन वर्षणेन करणभूतेन पूर्वोक्तविशेषणा मेघा विध्वंसयिष्य- न्तीति सम्बन्धः, भरतवर्षे ग्रामाद्या आश्रमान्ताः प्राग्व्याख्यातास्तत्र गतं जनपदं—मनुष्यलोकं तथा चतुष्पदा महिष्यादयो गोशब्देन गोजातीया एलका उरभ्रास्तान् तथा खचरान्— वैताढ्यवासिनो विद्याधरान् तथा पक्षिसंघान् तथा

ग्रामारण्ययोर्यं प्रचारस्तत्र निरतान् आसक्तान् त्रसांश्च प्राणान्-द्वीन्द्रियादीन् बहुप्रकारान् तथा वृक्षान्-आम्रादीन् गुच्छान् वृन्ताकीप्रभृतीन् गुल्मान्-नवमालिकादीन् लता-अशोकलताद्याः वल्लीः-वालुङ्कयादिकाः प्रवालान्-पल्लवान् अङ्कुरान्-शाल्यादिबीजसूचीः इत्यादीन् तृणवनस्पतिकायिकान्-बादरवनस्पतिकायिकान्, सूक्ष्मवनस्पतिकायिकानां तैरुपघातासम्भवात्, तथा औषधीश्च-शाल्यादिकाः घोऽप्युच्चये, 'पव्वए' यद्यपि पर्वतादयोऽन्यत्रैकार्थतया रूढास्तथाऽपीह विशेषो दृश्यः, तथाहि-पर्वतननाद्-उत्सर्वविस्तारणात् पर्वता-क्रीडापर्वताः उज्जयन्तवैभारादयः गृणन्ति-शब्दायन्ते जनं निवासभूतत्वेनेति गिरयः गोपालगिरिचित्रकूटप्रभृतयः डुङ्गानि-शिलावृन्दानि चोरवृन्दानि वा सन्त्येषु इत्यस्त्यर्थे प्रत्ययः डुङ्गराः-शिलोच्चयमात्ररूपाः उन्नतानि-स्थलानि धूल्युच्छ्रयरूपाणि 'भट्ठि'त्ति भ्राष्ट्राः पांस्वादिवर्जिता भूमयः तत एतेषा द्वन्द्वस्ते आदिर्येषां ते तथा तान्, आदिशब्दात् प्रासादशिखरादिपरिग्रहः, मकारोऽलाक्षणिकः, चशब्दो मेघानां क्रियान्तरद्योतकः, विद्रावयिष्यन्तीति क्रियायोगः।

अत्रार्थेऽपवादमाह वैताढ्यगिरिवर्जान् पर्वतादीनित्यर्थः, शाश्वतत्वेन तस्याविध्वंसात्, उपलक्षणाद् ऋषभकूटं शाश्वतप्रायश्रीशत्रुञ्जयगिरिप्रभृतींश्च वर्जयित्वा, तथा सलिलबिलानि-भूनिर्झराः विषमगर्ताश्च दुष्पूरश्वभ्राणि, क्वचिद्दुर्गपदमपि दृश्यते, तत्र दुर्गाणि च-खातवलय-प्राकारादि दुर्गमाणि निम्नानि च तान्युन्नतानि च निम्नोन्नतानि-उच्चावचानीत्यर्थः, पश्चाद् द्वन्द्वः, तानि च कर्मभूतानि शाश्वतनदीत्वाद् गङ्गासिन्धुवर्जानि समीकरिष्यन्ति।

अथ तत्र भरतभूमिस्वरूपप्रश्नमाह 'तीसे णं'मित्यादि, तस्यां भदन्त! समायां भरतस्य भूमेः कीदृशक आकारभावप्रत्यवतारः भविष्यति?, भगवानाह-गौतम! भूमी भविष्यति, अङ्गारभूता ज्वालारहितवह्निपिण्डरूपा मुर्मुरभूता विरलाग्निकणरूपा क्षारिकभूता-भस्मरूपा तप्तकवेल्लुकभूता वह्निप्रतप्तकवेल्लुकरूपा 'तत्तसमज्योतिर्भूता' तप्तेन भावे क्तप्रत्ययविधानात् तापेन समा तुल्या ज्योतिषा वह्निना भूता-जाता या सा तथा, पदव्यत्यय एवं समासश्च प्राकृतत्वात्, धूलिबहुलेत्यादौ धूलिः पांशुः रेणुः-वालुका पङ्कः-कर्दमः पनकः-प्रतल-कर्दमः चलनप्रमाणकर्दमश्चलनीत्युच्यते, अत एव बहूनां धरणिगोचराणां सत्त्वानां दुःखेन नितरां क्रमः-क्रमणं यस्यां सा दुर्निष्क्रमा, दुरतिक्रमणीयेत्यर्थः, अपिशब्देन दुर्निषदादिपरिग्रहः, अत्र बहूनामित्यादितः प्रारभ्य भिन्नवाक्यत्वेनोत्तरसूत्रवर्तिना भविष्यतिपदेन न पौनरुक्त्यं।

अथ तत्र मनुष्यस्वरूपं पृच्छति-'तीसे णं'मित्यादि, प्रश्नसूत्रं प्राग्वत्, निर्वचनसूत्रे गौतम मनुजा भविष्यन्ति, कीदृशा इत्याह-दूरूपा-दुःस्वभावाः दुर्वर्णा कुत्सितवर्णा, एवं दुर्गन्धाः दूरसाः-रोहिण्यादिवत् कुत्सितरसोपेताः दुःस्पर्शा-कर्कशादिकुत्सितस्पर्शाः अनिष्टा-अनिच्छा-विषयाः, अनिष्टमपि किञ्चित्कमनीयं स्यादित्यत आह-अकान्ताः-अकमनीयाः, अकान्तमपि किञ्चित्कारणवशात् प्रीतये स्यादतोऽप्रिया-अप्रीतिहेतवः, अप्रियत्वं च तेषां कुत इत्याह-अशुभा-अशोभनभावरूपत्वात्, अशुभत्वं च विशेषत आह-न मनसा अन्तःसंवेदनेन शुभतया ज्ञायन्ते इत्यमनोज्ञाः, अमनोज्ञतयानुभूतमपि स्मृतिदशायां दशाविशेषेण किञ्चिन्मनोज्ञं स्यादत आह 'अमनोऽमाः' न मनसा अम्यन्ते-गम्यन्ते पुनः स्मृत्या इत्यमनोमाः एकार्थिका वा एते शब्दा अनिष्टताप्रकर्षवाचका इति, मूर्त्या अनिष्टादिविशेषणोपेता अपि केचिद् हुम्बा इव सुस्वराः

स्युरित्याह–हीनो–ग्लानस्येव स्वरो येषां ते तथा, दीनो दुःखितस्येव स्वरो येषां ते तथा, अनिष्टादिशब्दा उक्तार्था एवात्र स्वरेण योजनीयाः

'अनादेयवचनप्रत्याजाताः' अनादेयं असुभगत्वाद् अग्राह्यं वचनं–वचः प्रत्याजातं च–जन्म येषां ते तथा, निर्लज्जाः व्यक्तं, कूटं–भ्रान्तिजनकद्रव्यं कपटं–परवञ्चनाय वेषान्तरकरणं कलहः–प्रतीतः वधो–हस्तादिभिस्ताडनं बन्धो रज्जुभि संयमनं वैरं–प्रतीतं तेषु निरताः, मर्यादातिक्रमे प्रधाना–मुख्याः, अकार्ये नित्योद्यताः, गुरूणां–मात्रादिकानां नियोगः आज्ञा तत्रयो विनयः ओमित्यादिरूपस्तेन रहिताः, चः पूर्ववत्, विकलं–असम्पूर्णं काणचतुरङ्गुलिकादिस्वभावत्वाद्रूपं येषां ते तथा, प्ररूढा गर्तासुकराणामिवाजन्मसंस्काराभावात् वृद्धिं गता नखाः केशा श्मश्रूणि रोमाणि च येषां ते तथा, कालाः कृतान्तसदृशाः क्रूरप्रकृतित्वात् कृष्णा वा खरपरुषाः स्पर्शतोऽतीव कठोराः श्यामवर्णा– नीलीकुण्डे निक्षिप्तोत्क्षिप्ता इव, ततः कर्मधारयः, क्वचिद् ध्यामवर्णा इत्यपि पदं दृश्यते, तत्रानुज्ज्वलवर्णा इत्यर्थः, स्फुटितशिरसः–स्फुटितानीव स्फुटितानि राजिमत्त्वात् शिरांसि–मस्तकानि येषां ते तथा, कपिलाः केचन पलिताश्च शुक्लाः केचन केशाः येषां ते तथा, बहुस्नायुभिः–स्नायुजालाभिः संपिनद्धं–एव दुःखेन दर्शनीयं रूपं येषां ते तथा । सङ्कुटितं–सङ्कुचितं वल्यो–निर्मांसत्वग्विकारास्ता एव तदनुरूपाकारत्वात् तरङ्गा वीचयस्तैः परिवेष्टितानि अङ्गानि अवयवा यत्र तदेवंविधमङ्गं–शरीरं येषां ते तथा, के इवेत्याह–जरापरिणता इव, स्थविरनरा इवेत्यर्थः,

स्थविराश्चान्यथापि व्यपदिश्यन्ते इति जरापरिणतग्रहणं, प्रविरला सान्तरालत्वेन परिशटिता च दन्तानां केषाञ्चित्पतितत्वेन दन्तश्रेणिर्येषां ते तथा, उद्भटं–विकरालं घटकमुखमिव मुखं तुच्छदशनच्छदत्वाद्येषां ते तथा, क्वचित्तु उब्भडघाडामुहा इति पाठः, तत्र उद्भटे–स्पष्टे घाटामुखे–कृकाटिकावदने येषां ते तथा, विषमे नयने येषां ते तथा, वक्रा नासा येषां ते तथा, ततः पदद्वयस्य कर्मधारयः, वक्रं पाठान्तरेण व्यङ्गं सलाञ्छनं वलिभिर्विकृतं च–बीभत्सं भीषणं–भयजनकं मुखं येषां ते तथा, दद्रुकिटिभसिध्मानि–क्षुद्रकुष्ठविशेषास्तत्प्रधाना स्फुटिता परुषा च वि–शरीरत्वग्येषां ते तथा, अत एव चित्रलाङ्गाः–कर्बुरावयवशरीराः कच्छूः–पामा तया कसरैश्च खसरैरभिभूता–व्याप्ता ये ते तथा ।

अत एव खरतीक्ष्णनखानां–कठिनतीव्रनखानां कण्डूयितेन–खर्जूकरणेन विकृता–कृतव्रणा तनुः शरीरं येषां ते तथा, टोलाकृतयः–अप्रशस्ताकाराः, क्वचित् टोलागइत्ति पाठस्तत्र टोलगतयः–उष्ट्रादिसमप्रचाराः, तथा विषमाणि दीर्घह्रस्वभावेन सन्धिरूपाणि बन्धनानि येषां ते विषमसन्धिबन्धनाः, तथा उत्कटुकानि–यथास्थानमनिविष्टानि अस्थिकानि–कीकसानि विभक्तानीव च–दृश्यमानान्तराणीव येषां ते तथा, अत्र विशेषणपदव्यत्ययः प्राग्वत्, अथवा उत्कटुकस्थितास्तथास्वभावत्वात् विभक्ताश्च–भोजनविशेषरहिता ये ते तथा, 'दुर्बला' बलहीनाः 'कुसंहनना' सेवार्त्तसंहननाः 'कुप्रमाणाः' प्रमाणहीनाः 'कुसंस्थिताः' दुःसंस्थानास्तत एषां टोलाकृत्यादिपदानां कर्मधारयः, अत एव 'कुरूपाः' कुमूर्तयः तथा कुस्थानासनाः–कुत्सिताश्रयोपवेशनाः कुशय्याः–कुत्सितशयनाः कुभोजिनो दुर्भोजनास्ततः एभि पदैः कर्मधारयः, अशुचयः स्नानब्रह्मचर्यादिवर्जिताः अश्रुतयो वा–शास्त्रवर्जिताः अनेकव्याधिपरिपीडिताङ्गाः

स्खलन्ती विह्वला च या--अर्द्धवितर्दा गतिर्येषां ते तथा, निरुत्साहाः सत्वपरिवर्जिताः विकृतचेष्टा नष्टतेजसः स्पष्टानि, अभीक्ष्णं शीतोष्णखरपरुषवातैर्विज्झडिअं-मिश्रितं व्याप्तमित्यर्थः, मलिनं पांसुरूपेण रजसा न तु पौष्परजसाऽवगुण्ठितानि-उद्धूलितान्यङ्गानि अवयवा तस्य एतादृशमङ्गं येषां ते तथा, बहुक्रोधमानमायालोभाः बहुमोहाः न विद्यते शुभं -अनुकूलवेद्यं कर्म येषां ते तथा, अत एव दुःखभागिनः, ततः कर्मधारयः, अथवा दुःखानुबन्धिदुःखभागिनः ।

'ओसण्णं'ति बाहुल्येन धर्मसंज्ञा धर्मश्रद्धा सम्यक्त्वं च ताभ्यां परिभ्रष्टाः, बाहुल्यग्रहणेन यथा सम्यग्दृष्टित्वमेषां कदाचित् सम्भवति तथाऽधस्तनग्रन्थे व्याख्यातं, उत्कर्षेण रत्नेः--हस्तस्य यच्चतुर्विंशत्यङ्गुलक्षणं प्रमाणं तेन मात्रा-परिमाणं येषां ते तथा, इह कदाचित्षोडश वर्षाणि कदाचिच्च विंशतिर्वर्षाणि परममायुर्येषां ते तथा, श्रीवीरचरित्रे तु 'षोडश स्त्रीणां वर्षाणि विंशति पुंसां परमायु'रिति, बहूनां पुत्राणां नप्तॄणां -पौत्राणां यः परिवारस्तस्य प्रणयः -स्नेहः स बहुलो येषां ते तथा, अनेनाल्पायुष्केऽपि बह्वपत्यता तेषामुक्ता, अल्पेनापि कालेन यौवनसद्भावादिति, ननु तदानीं गृहाद्यभावेन क्व ते वसन्तीत्याह--गङ्गासिन्धू महानद्यौ वैताढ्यं च पर्वतं निश्रां कृत्वा 'बावत्तरिं'ति द्वासप्तति स्थानविशेषाश्रिता निगोदाः--कुटुम्बानि, द्विसप्ततिसङ्ख्या चैवं-वैताढ्या-दर्वाग् गङ्गायास्तटद्वये नवनवबिलसम्भवादष्टादश, एवं सिन्ध्वा अपि अष्टदश, एषु च दक्षिणार्द्ध-भरतमनुजा वसन्ति, वैताढ्यात् परतो गङ्गातटद्वयेऽष्टादश, एवं तत्रापि सिन्धुतटद्वये अष्टादश, एषु चोत्तरार्द्धभरतवासिनो मनुजा वसन्ति, बीजमिव बीजं भविष्यतां जनसमूहानां हेतुत्वात् बीजस्येव मात्रा--परिमाणं येषां ते तथा, स्वल्पाः स्वरूपत इत्यर्थः, बिलवासिनो मनुजा भविष्यन्तीति पुनः सूत्रं निगमनवाक्यत्वेन न पुनरुक्तमवसातव्यं, अथ तेषामाहारस्वरूपं पृच्छन्नाह-

'ते णं भंते ! मणुआ' इत्यादि, ते भगवन् ! मनुजाः किमाहरिष्यन्ति ? -किं भोक्ष्यन्ते, भगवानाह-गौतम ! तस्मिन्, काले-एकान्तदुष्षमालक्षणे तस्मिन् समये-षष्ठारकप्रान्त्यरूपे गङ्गासिन्धू महानद्यौ रथपथः-शकटचक्रद्वयप्रमितो मार्गस्तेन मात्रा-परिमाणं यस्य स तादृशो विस्तरः-प्रवाहव्यासो ययोस्ते तथा, अक्षं-चक्रनाभिक्षेप्यकाष्ठं तत्र स्रोतो-धुरः प्रवेशरन्ध्रं तदेव प्रमाणं तेन मात्रा--अवगाहना यस्य तत्तथाविधं जलं वक्ष्यतः, इयत्प्रमाणे न गम्भीरं जलं धरिष्यत इत्यर्थः, ननु क्षुल्लहिमवतोऽरकव्यवस्थाराहित्येन तद्गतपद्मद्रहनिर्गतयोरनयोः प्रवाहस्य नैयत्येनोक्तरूपौ (प्रवाहौ) कथं सङ्गच्छेते ?, उच्यते, गङ्गाप्रपातकुण्डनिर्गमादनन्तरं क्रमेण कालानुभावजनितभरतभूमिगततापवशादपरजलशोषे समुद्रप्रवेशे तयोरुक्तमात्रावशेषजल-वाहित्वमिति न काप्यनुपपत्तिरिति, तदपि च जलं बहुमत्स्यकच्छपाकीर्णं न चैव अब्बहुलं-बह्वप्कायं सजातीयापराप्कायपिण्डबहुलमित्यर्थः, ततस्ते मनुजाः सूर्योद्गमनमुहूर्ते सूरास्तमयनमुहूर्ते च, यकारलोपोऽत्र प्राकृतत्वात्, चकारौ परस्परं समुच्चयार्थौ, बिलेभ्यो निर्द्धाविष्यन्ति-शीघ्रया गत्या निर्गमिष्यन्ति, मुहूर्तान्तरतोऽतितापातिशीतयोरसहनीयत्वात्, बिलेभ्यो निर्द्धाव्य मत्स्यकच्छपान् स्थलानि-तटभूमीः णिगन्तत्वाद् द्विकर्मकत्वं ग्राहयिष्यन्ति-प्रापयिष्यन्ति, ग्राहयित्वा च शीतात-पतप्तैः रात्रौ शीतेन दिवा आतपेन तप्तैः-रसशोषं प्रापितैराहारयोग्यतां प्रापितैरित्यर्थः, अतिसरसानां तज्जठराग्निनाऽपरिपाच्यमानत्वाद् मत्स्यकच्छपैरेकविंशतिं वर्षसहस्राणि यावद्वृत्तिं-आजीविकां कल्पयन्तो -विदधाना विहरिष्यन्ति । अथ तेषां गतिस्वरूपं पृच्छन्नाह

'ते णं० ते मनुजा भगवन्! निरशीला गताचाराः निर्व्रता–महाव्रताणुव्रतविकलाः निर्गुणा–उत्तरगुणविकलाः निर्मर्यादाः–अविद्यमानकुलादिमर्यादाः निष्प्रत्याख्यानपौषधोपवासा–असत्पौरुष्यादिनियमा अविद्यमानाष्टम्यादिपर्व्वोपवासाश्चेत्यर्थः, 'ओसण्णं' प्रायो मांसाहाराः, तथा 'क्षौद्राहाराः' मधुभोजिनः क्षीणं वा–तुच्छावशिष्टतुच्छधान्यादिकं आहारो येषां ते तथा, इदं विशेषणं सूपपन्नमेव, पूर्वविशेषणे प्रायोग्रहणात्, कथुचिदादर्शेषु अत्र मद्याहारा इति दृश्यते, स लिपिप्रमाद एव सम्भाव्यते, पञ्चमाङ्गे सप्तमशते षष्ठोद्देशे दुष्षमदुष्षमावर्णनेऽदृश्यमानत्वात्, अथवा यथासम्प्रदायमेतत्पदं व्याख्येयं, कुणपः–शवस्तद्रसोऽपि वसादि कुणपस्तदाहाराः, 'कालमासे' प्राग्वत्, निर्वचनसूत्रमपि प्राग्वत्, नवरं 'ओसण्ण'मिति ग्रहणात् कश्चित् क्षुद्राहारवान् देवलोकगाम्यपि अक्लिष्टाध्यवसायात्, अथ ये तदानीं क्षीणावशेषाश्च–तुष्पदास्तेषां का गतिरिति पृच्छति– 'तीसे णं'मित्यादि, तस्यां भगवन्! समायां चतुष्पदाः–सिंहादयः प्राग्व्याख्यातार्था श्वापदाः प्रायो मांसाहारादिविशेषण- विशिष्टाः क्व गमिष्यन्ति क्व उत्पत्स्यन्ते ?, भगवानाह–गौतम ! प्रायः नरकतिर्यग्योनिकेषु उत्पत्स्यन्ते, प्रायोग्रहणात् कश्चिदमांसादी देवयोनावपि, नवरं चिल्ललगा– नाखरविशेषा इति, अथ तदानीं तत्पक्षिगतिं प्रश्नयति–'ते णं'मित्यादि, कण्ठ्यं, नवरं ते णमिति क्षीणावसिष्टा ये पक्षिण इति यच्छब्दबलाद् ग्राह्यं, ढङ्काः–काकविशेषाः कङ्काः–दीर्घपादाः पिलका–रूढिगम्याः मद्गुका–जलवायसाः शिखिनो-मयूरा इति, गतः षष्ठारकः, तेन चावसर्प्पण्यपि गता।

साम्प्रतं प्रागुद्दिष्टामुत्सर्प्पिणीं निरूपयितुकामस्तत्प्रतिपादनकालप्रतिपादनपूर्वकं तत्प्रथमारकस्वरूपमाह–

**मू. (५०)** *तीसे णं समाए इक्कवीसाए वाससहस्सेहिं काले वीइक्कंते आगमिस्साए उस्सप्पिणीए सावणबहुलपडिवए बालवकरणंसि अभीइनक्खत्ते चोद्दसपढमसमये अनंतेहिं वण्णपज्जवेहिं जाव अनंतगुणपरिवद्धीए परिवुड्ढेमाणे २ एत्थ णं दूसमदुसमाणामं समा काले पडिवज्जिस्सइ समणाउसो ! तीसे णं भंते ! समाए भरहस्स वासस्स केरिसए आगारभावपडोआरे भविस्सइ ?, गोअमा काले भविस्सइ हाहाभूए भंभाभूए एवं सो चेव दूसमदूसमावेढओ नेअव्वो, तीसे णं समाए एक्कवीसाए वाससहस्सेहिं काले विइक्कंते अनंतेहिं वण्णपज्जवेहिं जाव अनंतगुणपरिवुद्धीए परिवद्धेमाणे २ एत्थ णं दूसमानामं समा काले पडिवज्जिस्सइ समणाउसो ! ।*

**वृ.** 'तीसे णं'मित्यादि, तस्यां समायामवसर्प्पिणीदुष्षमदुष्षमानाम्यां एकविंशत्या वर्षसहस्रैः प्रमिते काले व्यतिक्रान्ते आगमिष्यन्त्यामुत्सर्प्पिण्यां श्रावणमासस्य बहुलप्रतिपदि–कृष्णप्रतिपदि पूर्वावसर्प्पिण्याः आषाढपूर्णिमापर्यन्तसमये पर्यवसानत्वात् बालवनाम्निकरणे कृष्णप्रतिपत्तिथ्यादिमार्धेऽस्यैव सद्भावात्, अभीचिनक्षत्रे चन्द्रेण योगमुपागते, चतुर्दशानां कालविशेषाणां प्रथमसमये–प्रारम्भक्षणेऽनन्तैर्वर्णपर्यवैर्यावदनन्तगुणपरिवृद्ध्या परिवर्द्धमानः अत्रान्तरे दुष्षमदुष्षमानाम्नी समा कालः प्रतिपत्स्यते हे श्रमण ! हे आयुष्मन् ! इति, वर्णादीनां वृद्धिश्च येनैव क्रमेण पूर्वमवसर्पिण्यरकेषु हानिरुक्ता तथैवात्र वाच्या, चतुर्दशकालविशेषा पुनः निश्वासउच्छ्वासाद्या गण्यन्ते । समयस्य निर्विभागकालत्वेनाद्यन्तव्यवहाराभावादावलिकायाश्चाव्यवहारार्थत्वेनोपेक्षा, तत्र निश्वासः उच्छ्वासो वा १ प्राणः २, स्तोकः ३, लवः ४, मुहूर्त ५,

अहोरात्रं ६, पक्षः ७, मासः ८, ऋतुः ९, अयनं १०, संवत्सरः ११, युगं १२, करणं १३, नक्षत्रं १४, इति, एतेषां चतुर्दशानां कालविशेषाणां प्रथमः समयः स एवोत्सर्पिणीप्रथमारकप्रथमसमयः, अवसर्पिणीसत्कानामेषां द्वितीयाषाढापौर्णमासीचरमसमय एव पर्यवसानात्, इदमुक्तं भवति ? –

अवसर्पिण्यादौ महाकाले प्रथमतः प्रवर्त्तमाने सर्वेऽपि तदवान्तरभूताः कालविशेषाः प्रथमत एव युगपत्प्रवर्त्तन्ते ततः स्वस्वप्रमाणसमाप्तौ समाप्नुवन्ति, तथैव पुनः प्रवर्त्तन्ते पुनः परिसमाप्नुवन्ति यावन्महालपरिसमाप्तिरिति, यद्यपि ग्रन्थान्तरे ऋतोरापाढादित्वेन कथना-दुत्सर्पिण्याश्च श्रावणादित्वेन अस्य प्रथमसमयो न सङ्गच्छते ऋत्वर्द्धस्य गतत्वात् तथापि प्रावृट्श्राव-णादिर्वर्षारात्रोऽश्वयुजादि शरन्मार्गशीर्षादिर्हेमन्तो माघादिर्वसन्तश्चैत्रादिर्ग्रीष्मो ज्येष्ठादिरित्या-दिभगवतीवृत्तिवचनात् श्रावणादित्वपक्षाश्रयणेन समाधेयमिति न दोषः, किञ्चेदं सूत्रं गम्भीरं ग्रन्थान्तरे च व्यक्त्यानुपलभ्यमानभावार्थकं तेनान्यथाप्यागमाविरोधेन मध्यस्थैः बहुश्रुतैः परिभावनीयमिति । अथाद्यकालस्वरूपं पृच्छति–'तीसे णं'मित्यादि, सर्वं सुगमं, नवरं दुष्षमदुष्षमायाः अवस- र्पिणीषष्ठारकस्य वेष्टको–वर्णको नेतव्यः–प्रापणीयस्तत्समानत्वा-दस्याः । गतः उत्सर्पिण्यां प्रथम आरः, अथ द्वितीयारकस्वरूपं वर्णयति–'तीसे ण'मित्यादि, सर्वं सुगमं, नवरं उत्सर्पिणीद्वितीयारक इत्यर्थः, अथावसर्पिणीदुष्षमातोऽस्या विशेषमाह-

**मू. (५१)** *तेणं कालेणं तेणं समएणं पुक्खलसंवट्टए नामं महामेहे पाउब्भविस्सइ भरहप्प-माणमित्ते आयामेणं तदाणुरूवं च णं विक्खंभबाहल्लेणं, तए णं से पुक्खलसंवट्टए महामेहे खिप्पामेव पतणतणाइस्सइ खिप्पामेव पतणतणाइत्ता खिप्पामेव पविज्जुआइस्सइ खिप्पामेव पविज्जुआइत्ता महामेहे खिप्पामेव जुगमुसलमुट्ठिप्पमाणमित्ताहिं धाराहिं ओघमेघं सत्तरत्तं वासं वासिस्सइ, जेणं भरहस्स वासस्स भूमिभागं इंगालभूअं मुम्मुरभूअं छारिअभूअं तत्तकवेल्लुगभूअं तत्तसमजोइभूअं निव्वाविस्सतित्ति ।*

*तंसि च णं पुक्खलसंवट्टगंसि महामेहंसि सत्तरत्तं निवतितंसि समाणंसि एत्थ णं खीरमेहे नामं महामेहे पाउब्भविस्सइ भरहप्पमाणमेत्ते आयामेणं तदणुरूवं च णं विक्खंभबाहल्लेणं, तए णं से खीरमेहे नामं महामेहे खिप्पामेव पतणतणाइस्सइ जाव खिप्पामेव जुगमुसलमुट्ठि जाव सत्तरत्तं वासं वासिस्सइ, जेणं भरहवासस्स भूमीए वण्णं गंधं रसं फासं च जणइस्सइ, तंसि च णं खीरमेहंसि सत्तरत्तं निवतितंसि समाणंसि इत्थ णं घयमेहे नामं महामेहे पाउब्भविस्सइ, भरहप्पमाणमेत्ते आयामेणं, तदनुरूवं च णं विक्खंभबाहल्लेणं ।*

*तए णं से घयमेहे महामेहे खिप्पामेव पतणतणाइस्सइ जाव वासं वासिस्सइ, जेणं भरहस्स वासस्स भूमीए सिणेहभावं जणइस्सइ, तंसि च णं घयमेहंसि सत्तरत्तं निवतितंसि समाणंसि एत्थ णं अमयमेहे नामं महामेहे पाउब्भविस्सइ भरहप्पमाणमित्तं आयामेणं जाव वासं वासिस्सइ*

*जे णं भरहे वासे रुक्खगुच्छगुम्मलयवल्लितणपव्वगहरितगओसहिपवालंकुरमाईए तणवण-स्सइकाइए जणइस्सइ, तंसि च णं अमयमेहंसि सत्तरत्तं निवतितंसि समाणंसि एत्थ णं रसमेहे नामं महामेहे पाउब्भविस्सइ भरहप्पमाणमित्ते आयामेणं जाव वासं वासिस्सइ ।*

*जेणं तेसिं बहूणं रुक्खगुच्छगुम्मलयवल्लितणपव्वगहरितओसहिपवालंकुरमादीणं तित्त कडुअकसायअंबिलमहुरे पंचविहे रसविसेसे जणइस्सइ, तए णं भरहे वासे भविस्सइ परूढरुक्ख-*

*गुच्छगुम्मलयवल्लितणपव्वगयगहरिअओसहिए, उवचियतयपत्तपवालंकुरपुप्फफलसमुइए सुहोवभोगे आवि भविस्सइ।*

**वृ.** 'ते णं' मित्यादि, तस्मिन् काले–उत्सर्पिण्या द्वितीयारकलक्षणे तस्मिन् समये– तस्यैव प्रथमसमये, पुष्कलं–सर्वं अशुभानुभावरूपं भरतभूरौक्ष्यदाहादिकं प्रशस्तस्वोदकेन संवर्त्तयति–नाशयतीति पुष्कलसंवर्त्तकः स च पर्जन्यप्रभृतिमेघत्रयापेक्षया महान् मेघो दशवर्षसहस्रावधि एकेन वर्षणेन भूमेर्भावुकत्वात् महामेघः प्रादुर्भविष्यति- प्रकटीभविष्यति, भरतक्षेत्रप्रमाणेन साधिकैकसप्ततिचतुः शताधिकचतुर्दशयोजन सहस्ररूपेण मात्रा–प्रमाणं यस्य स तथा, केन ? –आयामेन–दीर्घभावेन, अयं भावः–पूर्वसमुद्रादारभ्य पश्चिमसमुद्रं यावत् तस्य वार्दलकं व्याप्तं भविष्यतीत्यर्थः, तदनुरूपश्च– भरतक्षेत्रस्यानुरूपः–सदृशः, सूत्रे च लिङ्गव्यत्ययः प्राकृतत्वात्, क्रियाविशेषणं वा, –विष्कम्भबाहल्येन, अत्र समाहारद्वन्द्ववशादेकवद्भावः, कोऽर्थः?

यावान् व्यासो भरतक्षेत्रस्य इषुस्थाने पञ्चशतयोजनानि षड्विंशतिर्योजनानि षट् च कला योजनैकविंशतिभागरूपाः तदतिरिक्तस्थाने तु अनियततया तथाऽस्यापि विष्कम्भः, बाहल्यं तु यावता जलभारेण यावदवगाढभरतक्षेत्रतप्तभूमिमार्द्रीकृत्य तापः उपशाम्यते तावज्जलदलनिष्पन्न-मेव ग्राह्यमिति, अथ स प्रादुर्भूतः सन् यत्करिष्यति तदाह– 'तए णं' मित्यादि, ततश्च स–पुष्कल-संवर्त्तकमेघः क्षिप्रमेव– उद्गमनकाल एव 'पतणतणाइस्सई' ति अनुकरणवचनमेतत् प्रकर्षेण स्तनितं करिष्यति, गर्जिष्यतीत्यर्थः, तथा च कृत्वा क्षिप्रमेव युगं–रथावयवविशेषः मुसलं–प्रतीतं मुष्टिः पिण्डिताङ्गुलिकः पाणि एषां यत्प्रमाणमायामबाहल्यादिभिस्तेन मात्रा यासां ताभिः, इयता प्रमाणेन दीर्घाभि–स्थूलाभिरित्यर्थः धाराभि ओघेन–सामान्येन सर्वत्र निर्विशेषेण मेघो यत्र तं तथाविधं सप्तरात्रं–सप्ताहोरात्रान् वर्षं वर्षिष्यति करिष्यतीत्यर्थः।

'जे णं' मिति पूर्ववत् भरतस्य वर्षस्य–क्षेत्रस्य भूमिभागं अङ्गारभूतं मुर्मुरभूतं क्षारिकभूतं तप्तमज्योतिर्भूतं वाक्यान्तरप्रारम्भार्थ, पुष्कलसंवर्त्तके महामेघे सप्तरात्रं यावन्निपतिते सति निर्भरं वृष्टे सति अत्रान्तरे क्षीरमेघो नामतो महामेघः प्रादुर्भविष्यति, शेषं 'भरते' त्यादि प्राग्वत्, अथ स प्रादुर्भवन् किं करिष्यतीत्याह– 'तए णं' मित्यादि, अत्र वासिस्सइत्ति पर्यन्तं प्राग्वत, यो मेघो भरतस्य भूम्या वर्णं गन्धं रसं स्पर्शं च जनयिष्यति, अत्र वर्णादयः शुभा एव ग्राह्याः, येभ्यो लोकोऽनुकूलं वेदयते, अशुभ- वर्णादयः प्राक्कालानुभावजनिता वर्तन्त एवेति, ननु यदि शुभवर्णादीन् जनयति तदा तरुपत्रादिषु नीलो वर्णो जम्बुफलादिषु कृष्णः मरिचादिषु कटुको रसः कारवेल्लादिषु तिक्तः चणकादिषु रूक्षः स्पर्शः सुवर्णादिषु गुरु क्रकचादिषु खरः इत्यादयोऽशुभवर्णादयः कथं सम्भवेयुरिति ? उच्यते, अशुभपरिनामा अप्येतेऽनुकूलवेद्यया शुभा एव, यथा मरिचादिगतः कटुकरसादि प्रतिकूलवेद्यतया शुभोऽप्यशुभ एव, यथा कुष्ठादिगतः श्वेतवर्णादिरिति, अथ तृतीयमेघवक्त- व्यतामाह–

'तंसि' इत्यादि, तस्मिन् क्षीरमेघे सप्तरात्रं निपतिते सति अत्रान्तरे घृतवत् स्निग्धो मेघो घृतमेघो नाम्ना महामेघः प्रादुर्भविष्यतीत्यादि सर्वं प्राग्वत्, अथ स प्रादुर्भूतः किं करिष्यतीत्याह– 'तए णं' मित्यादि, सर्वं प्राग्वत्, नवरं यो घृतमेघो भरतभूमेः स्नेहभावं–स्निग्धतां जनयिष्यतीति, अथ चतुर्थमेघवक्तव्यतामाह– 'तंसि' इत्यादि, तस्मिंश्च घृतमेघे सप्तरात्रं निपतिते सति अत्र-

—प्रस्तावे ऽमृतमेघो यथार्थनामा महामेघः प्रादुर्भविष्यति यावद्वर्षिष्यति इति पर्यन्तं पूर्ववत्, यो मेघो भरते वर्षे वृक्षा गुच्छा गुल्मा लता वल्लयः तृणानि प्रतीतानि पर्वगा इक्ष्वादयः हरितानि—दूर्वादीनि औषध्यः शाल्यादयः प्रवालाः—पल्लवाः अङ्कुराः—शाल्यादिवीजसूचयः इत्यादीन् तृणवनस्पति-कायिकान्—वादरवनस्पतिकायिकान् जनयिष्यतीति ।

अथ पञ्चममेघस्वरूपवक्तव्यतामाह—'तंसि च णं'मित्यादि, व्यक्तं, परं रसजनको मेघो रसमेघः, यो रसमेघस्तेषाममृतमेघोत्पन्नानां बहूनां वृक्षाद्यङ्कुरान्तानां वनस्पतीनां तिक्तो निम्बादिगतः कटुको मरिचादिगतः कषायो बिभीतकामलकादिगतः अम्बोऽम्लिकाद्याश्रितः मधुरः शर्कराद्या-श्रितः, एतान् पञ्चविधान् रसविशेषान् जनयिष्यति, लवणरसस्य मधुरादिसंसर्गजत्वाद् तदभेदेन विवक्षणात्, सम्भाव्यते च तत्र माधुर्यादिसंसर्गं सर्वरसानां लवणप्रक्षेप एव स्वादुत्वोत्पत्तेः तेन न पृथग्निर्देशः, एषां च पञ्चानां मेघानां क्रमेणेदं प्रयोजनं सूत्र उक्तमपि स्पष्टीकरणाय पुनर्लिख्यते—आद्यस्य भरतभूमेर्दाहोपशमः द्वितीयस्य तस्या एव शुभवर्णगन्धादिजनकत्वं तृतीयस्य तस्या एव स्निग्धताजनकत्वं न चात्र क्षीरमेघेनैव शुभवर्णगन्धरसस्पर्शसम्पत्तौ भूमिस्निग्धतास-म्पत्तिरिति वाच्यं, स्निग्धताधिक्यसम्पादकत्वात् तस्य, नहि यादृशी घृते स्निग्धता तादृशी क्षीरे दृश्यत इत्यनुभव एवात्र साक्षी, चतुर्थस्य तस्यां वनस्पतिजनकत्वं, पञ्चमस्य वनस्पतिषु स्वस्वयोग्य-रसविशेषजनकत्वं, यद्यप्यमृतमेघतो वनस्पतिसम्भवे वर्णादिसम्पत्तौ तत्सहचारित्वात् रसस्यापि सम्पत्तिस्तस्मादेव युक्तिमती तथापि स्वस्वयोग्यरसविशेषान् सम्पादयितुं रसमेघ एव प्रभुरिति, तदा च यादृशं भरतं भावि तथा चाह—

'तए णं भरहे वासे' इत्यादि, ततः उक्तस्वरूपपञ्चमेघवर्षणानन्तरं णमिति पूर्ववत् भारतं वर्षं भविष्यति, कीदृशमित्याह प्ररूढा उद्गता वृक्षा गुच्छा गुल्मा लता वल्लयस्तृणानि पर्वजा हरितानि औषधयश्च यत्र तत्तथा, अत्र समासे कप्रत्ययः, एतेन वनस्पतिसत्ताऽभिहिता, उप-चितानि—पुष्टिमुपगतानि त्वक्पत्रप्रवालपल्लवांकुरपुष्पफलानि समुदितानि—सम्यक् प्रकारेण उदयं प्राप्तानि यत्र तत्तथा क्तान्तस्य परनिपातः प्राकृतत्वात्, एतेन वनस्पतिषु पुष्पफलानां रीतिर्दर्शिता, अत एव सुखोपभोग्यं—सुखेनासेवनीयं भविष्यति, अत्र वाक्यान्तरयोजनार्थमुपात्तस्य भविष्य-तिपदस्य न पौनरुक्त्यं । अथ तत्कालीना मनुजास्तादृशं भरतं दृष्ट्वा यत्

करिष्यंति तदाह—

**मू. (५२)** *तए णं ते मणुआ भरहं वासं परूढरुक्खगुच्छगुम्मलयवल्लितणपव्वयहरिअ-ओसहीयं उवचिअतयपत्तपवालपल्लवंकुरपुप्फफलसमुइअं सुहोवभोगं जायं २ चावि पासिहिंति पासित्ता बिलेहिंतो निद्धाइस्संति निद्धाइत्ता हट्ठतुट्ठा अन्नमन्नं सद्दाविस्संति २ त्ता एवं वदिस्संति—जाते णं देवाणुप्पिआ! भरहे वासे परूढरुक्खगुच्छगुम्मलयवल्लितणपव्वयहरिअजाव सुहोवभोगे, तं जे णं देवाणुप्पिआ ! अम्हं केइ अज्जप्पभिइ असुभं कुणिमं आहारं आहारिस्सइ से णं अनेगाहिं छायाहिं वज्जणिज्जेतिकट्टु संठिइं ठवेस्संति २ त्ता भरहे वासे सुहंसुहेणं अभिरममाणा २ विहरिस्संति।*

**वृ.** 'तए णं'मित्यादि, ततस्ते मनुजा भरतवर्षं यावत्सुखोपभोग्यं चापि द्रक्ष्यन्ति, दृष्ट्वा विलेभ्यो निर्द्धाविष्यन्ति—निर्गमिष्यन्ति, निर्द्धाव्य हृष्टाः—आनन्दितास्तुष्टाः—सन्तोषमुपगताः पश्चात् कर्मधारयः अन्योऽन्यं शब्दयिष्यन्ति, शब्दयित्वा च एवं वदिष्यन्तीति, अथ ते किं वदिष्यन्तीत्याह—

'जाते णं'मित्यादि, जातं भो देवानुप्रिया ! भरतं वर्षं प्ररूढवृक्षं यावत् सुखोपभोग्यं तस्माद् ये देवानुप्रिया ! अस्माकं–अस्मज्जातीयानां कश्चिदद्यप्रभृति अशुभं कुणिमं–मांसमाहारमाहारयिष्यति स पुरुषोऽनेकाभिश्छायाभि, इत्थंभावे तृतीया, सह भोजनादिपङ्क्तिनिषण्णानां याश्छायाः शरीरसम्बन्धिन्यस्ताभिर्वर्जनीयः, अयमर्थः–भास्तां तेषामस्पृश्यानां शरीरस्पर्शः तच्छरीरच्छायास्पर्शोऽपि वर्ज्जनीयः, क्वचिद्वर्ज इति सूत्रपाठे तु वर्ज्यो वर्जनीय इत्यर्थः, इतिकृत्वा संस्थितिं–मर्यादां स्थापयिष्यन्ति, स्थापयित्वा च भरते वर्षे सुखंसुखेनाभिरममाणाः २–सुखेन क्रीडन्तो २ विहरिष्यन्ति प्रवर्तिष्यन्त इति ।

**मू. (५३)** *तीसे णं भंते ! समाए भरहस्स वासस्स केरिसए आयारभावपडोआरे भविस्सइ ? गो० ! बहुसमरमणिज्जे भूमिभागे भविस्सइ जाव कित्तिमेहिं चेव अकित्तिमेहिं चेव, तीसे णं भंते ! समाए मणुआणं केरिसए आयारभो भविस्सइ ?, गो० ! तेसि णं मणुआणं छव्विहे संघयणे छव्विहे संठाणे बहूईओ रयणीओ उद्धं उच्चत्तेणं जहन्नेणं अंतोमुहत्तं उक्कोसेणं साइरेगं वाससयं आउसं पालेहिंति २ त्ता अप्पेगइआ निरयगामी जाव अप्पेगइआ देवगामी, न सिज्झंति ।*

*तीसे णं समाए एक्कवीसाए वाससहस्सेहिं काले वीइक्कंते अणंतेहिं वण्णपज्जवेहिं जाव परिवड्ढेमाणे २ एत्थ णं दुसमसूसमानामं समा काले पडिवज्जिस्सइ समणाउसो !, तीसे णं भंते ! समाए भरहस्स वासस्स केरिसए आयारभावपडोआरे भविस्सइ ?, गोअमा ! बहुसमरमणिज्जे जाव अकित्तिमेहिं चेव । तेसि णं भंते ! मणुआणं केरिसए आयारभाव भविस्सइ ? गो० ! तेसि णं मणुआणं छव्विहे संघयणे छव्विहे संठाणे बहूइं धणूइं उद्धं उच्चत्तेणं जहं अंतोमुहुत्तं पुव्वकोडीआउअं पालिहिंति २ त्ता अप्पेग निरयगामी जाव अंतं करेहिंति ।*

*तीसे णं समाए तओ वंसा समुप्पज्जिस्संति, तं–तित्थगरवंसे चक्कवट्टिवंसे दसारवंसे, तीसे णं समाए तेवीसं तित्थगरा एक्कारस चक्कवट्टी नव बलदेवा नव वासुदेवा समुप्पज्जिस्संति, तीसे णं समाए सागरोवमकोडाकोडीए बायालीसाए वाससहस्सेहिं ऊणिआए काले वीइक्कंते अनंतेहिं वण्णपज्जवेहिं जाव अनंतगुणपरिवुद्धीए परिवुड्ढेमाणे २ एत्थ णं सुसमदूसमाणामं समा काले पडिवज्जिस्सइ समणाउसो !, सा णं समा तिहा विभजिस्सइ, पढमे तिभागे मज्झिमे तिभागे पच्छिमेतिभागे । तीसे णं भंते ! समाए पढमे तिभाए भरहस्स वासस्स केरिसए आयारभावपडोआरे भविस्सइ गोअमा ! बहुसमरमणिज्जे जाव भविस्सइ, मणुआणं जा चेव ओसप्पिणीए पच्छिमे तिभागे वत्त- व्वया सा भाणिअव्वा, कुलगरवज्जा उसभसामिवज्जा, अण्णे पढंति–तीसे णं समाए पढमे तिभाए इमे पन्नरस कुलगरा समुप्पज्जिस्संति तंजहा–*

*सुमई जाव उसभे, सेसं तं चेव, दंडनीईओ पडिलोमाओ नेअव्वाओ, तीसे णं समाए पढमे तिभाए रायधम्मे जाव धम्मचरणे अ वोच्छिज्जिस्सइ, तीसे णं समाए मज्झिमपच्छिमेसु तिभागेसु जाव पढममज्झिमेसु वत्तव्वया ओसप्पिणीए सा भाणिअव्वा, सुसमा तहेव सुसमासुसमावि तहेव जाव छव्विहा मणुस्सा अणुसज्जिस्संति जाव सण्णिचारी ।*

**वृ.** अथ भरतभूमिस्वरूपं पृच्छति–'तीसे णं'मित्यादि सर्वं पूर्ववत्, ननु कृत्रिमभण्यादिकरणं तदानीं तन्मनुजानामसम्भवि शिल्पोपदेशकाचार्याभावाद्, उच्यते, द्वितीयारे पुरादिनिवेशराजनीतिव्यवस्थादिकृज्जातिस्मारकादिपुरुषविशेषद्वारा वा क्षेत्राधिष्ठायकदेवप्रयोगेण वा कालानुभावजनित-

नैपुण्येन वा तस्य सुसम्भवत्वात्, कथमन्यथाऽत्रैव ग्रन्थे प्रस्तुतारकमाश्रित्य पुष्करसंवर्त्तकादिपञ्चमहामेघवृष्ट्यनन्तरं वृक्षादिभिरौषध्यादिभिश्च भासुरायां सञ्जातायां भरतभूम्यां तत्कालीनमनुजा बिलेभ्यो निर्गत्य मांसादिभक्षणनियममर्यादां विधास्यन्ति तत्रोक्तं च तत्रोक्तमिति उक्तरीत्यर्थाभिधायकं प्रागुक्तं सूत्रं सङ्गच्छत इति ।

अथ मनुजस्वरूपमाह– 'तीसे णं'मित्यादि, सर्वं अवसर्प्पिणीदुष्षमारकमनुजस्वरूपवद् भावनीयं, नवरं न सिद्ध्यन्ति–सकलकर्मक्षयलक्षणां सिद्धिं न प्राप्नुवन्ति, चरणधर्मप्रवृत्त्यभावात्, अत्र भविष्यन्निर्देशे प्राप्ते वर्त्तमानानिर्देशः पूर्वयुक्तितः समाधेयः । इत्युत्सर्प्पिण्यां द्वितीयारकः ।

'तीसे णं समाए एक्कवीसाए वास' इत्यादि, तस्यां समायां दुष्षमानाम्न्यां एकविंशत्या वर्षसहस्रैः काले व्यतिक्रान्ते अनन्तैर्वर्णपर्यवैर्यावत्परिवर्द्धमानः २ अत्रावसरे दुष्षमसुषमानाम्ना समा काल उत्सर्प्पिणीतृतीयारकः प्रतिपत्स्यते हे श्रमणेत्यादि प्राग्वत्, 'तीसे णं'मित्यादि, सर्वं प्राग्वत्, अवसर्प्पिणीचतुर्थारकसदृशत्वमुत्सर्प्पिणीतृतीयारकस्येति तत्सादृश्यं प्रकटयन्नाह–

'तीसे नं'मित्यादि, प्रायः प्राग्व्याख्यातार्थं तीर्थङ्करास्त्रयोविंशति पद्मनाभादयः चतुर्विंशतितमस्य भद्रकृन्नाम्नश्चतुर्थारके उत्पत्स्यमानत्वात्, एकादश चक्रवर्त्तिनो भरतादयो वीरचरित्रे तु दीर्घदन्तादयः द्वादश्यारिष्ठनाम्नश्चतुर्थारके एव भावित्वात्, नव बलदेवा जयन्तादयः, नव वासुदेवा नन्द्यादयः, यत्तु तिलकादयः प्रतिविष्णवो नेहोक्तास्तत्र पूर्वोक्त एव हेतुरवसातव्यः, समुत्पत्स्यन्ते गतस्तृतीयारक उत्सर्पिण्यामथ चतुर्थ–

'तीसे नं'मित्यादि, तस्या समायां सागरोपमकोटाकोट्या द्विचत्वारिंशता वर्षसहस्रैरूनितया काले व्यतिक्रान्ते अनन्तैर्वर्णपर्यवैर्यावद्वर्द्धमानोऽत्र प्रस्तावे सुषमदुष्षमानाम्ना समा कालः उत्सर्प्पिणीचतुर्थारकलक्षणः प्रतिपत्स्यते, 'सा णं'मित्यादि 'सा' समा त्रिधा विभक्ष्यति–विभागं प्राप्स्यति, प्रथमस्त्रिभागः मध्यमस्त्रिभागः पश्चिमस्त्रिभागश्चेति, तत्राद्यत्रिभागस्वरूपमाह– 'तीसे नं'मित्यादि, तस्यां समायां भदन्त ! प्रथमे त्रिभागे भरतस्य वर्षस्य कीदृशक आकारभावप्रत्यवतारो भविष्यति ? , गौतम ! बहुसमरमणीयो यावद्भविष्यति, यावत्करणात् पूर्णोऽपि भूमिवर्णकगमो ग्राह्यः, मनुजप्रश्नमपि मनसिकृत्य भगवान् स्वयमेवाह–

'मणुआणं'मित्यादि, मनुजानां तत्कालीनानां या अवसर्प्पिण्यास्तृतीयारकस्य पश्चिमत्रिभागे वक्तव्यता सा अत्रापि भणितव्या, अत्रैवापवादसूत्रमाह–कीदृशी च सा वक्तव्यतेत्याह–कुलकरान् वर्जयतीति कुलकरवर्ज्जा, वृजैप् वर्जने' इत्यस्याचि प्रत्यये रूपसिद्धिः, एवं ऋषभस्वामिवर्ज्जाः, अवसर्प्पिण्या कुलकरसम्पाद्यानां दण्डनीत्यादीनामिव ऋषभस्वामिसम्पाद्यानां चान्नपाकादिप्रक्रियाशिल्पकलोपदर्शनादीनामिवोत्सर्प्पिण्यामपि द्वितीयारकभाविकुलकरप्रवर्त्तितानां तेषां तदानीमनुवर्त्तिष्यमाणत्वेन तत्प्रतिपादकपुरुषकथनप्रयोजनाभावात् यथा अवसर्पिणीतृतीयारकतृतीयभागे कुलकराणां स्वरूपं ऋषभस्वामिस्वरूपं च प्राक् प्ररूपितं तथा नात्र वक्तव्यमिति भावः, अथवा ऋषभस्वामिवर्ज्जेत्यत्र ऋषभस्वामिअभिलापवर्जेति तात्पर्यं, तेन ऋषभस्वाम्यभिलापं वर्ज्जयित्वा भद्रकृत्तीर्थकृतोऽभिलापः कार्य इत्यागतं, उत्सर्प्पिणीचरमतीर्थकरस्यप्रायोऽवसर्पिणीप्रथमतीर्थकृत्समानशीलत्वात्, अन्यथोत्सर्प्पिणीचतुर्विंशतितमतीर्थकृतः क्व सम्भवः स्यादिति संशयादयोऽपि स्यात्, कलाद्युपदर्शनस्य तु अयदिव निषेधप्राप्ते तद्विषयकोऽभिलाप एव नास्तीति, अत्र कुलकरविषयकं वाचनाभेदमाह–

'अन्ने पठंति' त्ति, अन्ये आचार्या पठन्ति–तस्याः समायाः प्रथमे त्रिभागे इमे–वक्ष्यमाणाः पञ्चदश कुलकराः समुत्पत्स्यन्ते, तद्यथा–सुमतिर्यावत् ऋषभः, क्वचित्संमुई इति पाठस्तत्र सम्मति, उकारस्तु 'स्वराणां स्वरा' इत्यनेन सूत्रेण प्राकृतशैलीप्रभवः, यद्वा संमुचिरिति, यावच्छब्दात्पूर्वोक्ताः प्रतिश्रुतिप्रमुखा एव ग्राह्याः, वाचनान्तरानुसारेण यत्कुलकरसम्भवो निरूपितस्तद्व्यतिरिक्तं शेषं पञ्च २ पुरुषपर्वसम्पाद्यमाननव२दंडनीत्यादिकं तदेव पूर्वोक्तमेवावसेयं, अत्रैव दण्डनीति-क्रमविशेषस्वरूपमाह–दण्डनीतयः कुलकरसम्पाद्या हाकारादयः प्रतिलोमाः–पश्चानुपूर्व्या जाता नेतव्याः–प्रापणीयाः बुद्धिपथमिति शेषः।

प्रथमपञ्चकस्य धिक्कारादयः उत्कृष्टमध्यमजघन्यापराधिनां यथार्हं तिस्रः द्वितीयपञ्चकस्य कालानुभावेनोत्कृष्टापराधविधुराणां मध्यमजघन्यापराधयोर्माकारहाकाररूपे द्वे तृतीयपञ्चकस्य पूर्वपराधद्वयविधुराणां जघन्येऽपराधे हाकारलक्षणा प्रथमेति, अत्र दण्डनीतय इत्युपलक्षणं तेन शरीरायुष्कप्रमाणादिकमपि यथासम्भवं प्रतिलोमतया ज्ञेयमिति, वाचनान्तरसूत्रस्यायं भावः–अत्र व्यवच्छिन्ने राजधर्मे कालानुभावेन प्रतनु २ कषायाः शास्तारो नोग्रस्तेजस्कं दण्डं करिष्यन्ति नापि शासनीयास्तदुचितमपराधं करिष्यन्ति ततोऽरिष्ठनामकचक्रवर्तिसन्तानीयाः पञ्चदश कुलकराः भविष्यन्ति शेषाश्च तत्कृतमर्यादापालकाः क्रमेण च सर्वेऽप्यहमिन्द्रनरत्वं प्रपत्स्यन्ते, अत्र च ऋषभनामा कुलकरो न तु ऋषभस्वामिनामा तीर्थकृत्, तत्स्थानीयस्य भद्रकृत-स्तीर्थकृतः प्रस्तुतारकस्यैकोननवती पक्षेष्वतिक्रान्तेषु उत्पत्स्यमानत्वेनागमेऽभिहितत्वादिति, किञ्च स्थानाङ्गसप्तमे स्थानके सप्त कुलकरा उक्तास्तत्र सुमतिनामाऽपि नोक्तं, दशमे तु सीमङ्करादयो दशोक्तास्तत्र सुमतिनामोक्तं, परं प्रान्ते न, समवायाङ्गे तु सप्त तथैव, दश तु विमलवाहनादयः सुमतिपर्यन्ता उक्ताः, स्थानाङ्गनवमस्थानके च सुमतिपुत्रत्वेन पद्मनाभोत्पत्तिरुक्ता तथा प्रस्तुतग्रन्थे द्वितीयारके कुलकरा मूलत एवं नोक्ताश्चतुर्थारके तु मतान्तरेण सुमत्यादयः पञ्चदशोक्तास्तेन कुलकरानाश्रित्य भिन्न २ नामताव्यस्तनामतान्यूनाधिकनामतारूपसूत्रपाठदर्शनेन व्यामोहो न कार्यो, वाचनाभेदजनितत्वात्, तस्य, भवति हि वाचनाभेदे पाठभेदस्तत्त्वं तु केवलिगम्यमिति।

अथात्रैव त्रिभागे किं किं व्युच्छेदं यास्यतीति दर्शयन्नाह–'तीसे णं' मित्यादि, तस्यां समायां प्रथमे त्रिभागे राजधर्मो यावद्धर्म्मचरणं च व्युच्छेत्स्यति, यावत्करणात् गणधर्म्मः पाखण्ड धर्म्मोऽग्निधर्मश्चेति, अथ शेषद्विभागवक्तव्यतामाह–

'तीसे णं' मित्यादि, तस्याः समाया मध्यमपश्चिमयोस्त्रिभागयोर्या, प्रथममध्यमयोरित्यत्र यथासम्भवनमर्थयोजनाया औचित्येन मध्यमप्रथमयोरित्यवसेयं, अन्यथा शुद्धप्रतिलोम्याभावा-दर्थानुपपत्तिः स्यादिति, अवसर्पिण्यां वक्तव्यता सा भणितव्या, गतश्चतुर्थारक इति, अथ पञ्चमष-ष्ठावतिदेशेनाह - 'सुसमा' इत्यादि, सुषमा–पञ्चमसमालक्षणः कालस्तथैव–अवसर्पिणीद्विती-यारकवदिति, सुषमसुषमा–षष्ठारकः सोऽपि तथैव–अवसर्पिणीप्रथमारकसदृश इत्यर्थः, कियत्प-र्यन्तमत्र ज्ञेयमित्याह–यावत्षड्विधा मनुष्या अनुसक्ष्यन्ति–संतत्या अनुवर्तिष्यन्ति यावच्छनै-श्चारिणः यावत्पदात् पद्मगन्धादयः पूर्वोक्ता एव ग्राह्याः। गतौ पञ्चमषष्ठौ, तद्गमने चोत्सर्पिणी गता, तस्यां च गतायामवसर्पिण्युत्सर्पिणीरूपं कालचक्रमपि गतम्।

वक्षस्कारः–२ समाप्तः

इति सातिशयधर्मदेशनरससमुल्लासविस्मयमानऐदंयुगीननराधिपति चक्रवर्त्तिसमान-श्रीअकब्बरसुरत्राणप्रदत्तषाण्मासिकसर्वजन्तुजाभतायदानशत्रुञ्जयादिकरमोचनस्फुरन्मा-नप्रदानप्रभुतिबहुमानयुगप्रधानोपमानसाम्प्रतिविजयमानश्रीमत्तपागच्छाधिराजश्रीहीरविज यूरीश्वरपदपद्मोपासनाप्रवणमहोपाध्यायश्रीसकलचन्द्रगणिशिष्योपाध्यायश्रीशान्तिचन्द्रगणि-विरचितायां जम्बूद्वीपप्रज्ञप्तिवृत्तौ प्रमेयरत्नमञ्जूषानाम्न्यां भरतक्षेत्रस्वरूपवर्णनप्रस्तावनागता-वसर्पिण्युत्सर्पिणीद्वयरूपकालचक्रवर्णनो नाम द्वितीयो वक्षस्कारः

**मुनि दीपरत्न सागरेण संशोधिता सम्पादिता जम्बूद्वीपप्रज्ञप्ति उपाङ्गसूत्रे**
**द्वितीय वक्षस्कारस्य शान्तिचन्द्रवाचकेन विरचिता टीका परिसमाप्ता।**

## वक्षस्कारः-३

वृ. अथ वर्ण्यमानस्यैतद्वर्षस्य नाम्नः प्रवृत्तिनिमित्तं पिपृच्छिषुराह-

*मू. (५४) से केणट्ठेणं भंते! एवं वुच्चइ-भरहे वासे २?, गोअमा! भरहे णं वासे वेअद्धस्स पव्वयस्स दाहिणेणं चोद्दसुत्तरं जोअणसयं एगस्स य एगूणवीसइभाए जोअणस्स अबाहाए लवणसमुद्दस्स उत्तरेणं चोद्दसुत्तरं जोअणसयं एक्कारस य एगूणवीसइभाए जोअणस्स अबाहाए गंगाए महानईए पच्चत्थिमेणं सिंधूए महानईए पुरत्थिमेणं दाहिणद्धभरहमज्झिल्लतिभागस्स बहुमज्झदेसभाए एत्थ णं विनीआनामं रायणी पन्नता। पाईणपडीणायया उदीणदाहिणविच्छिन्ना दुवालसजोअणायामा नवजोअणविच्छिन्ना धनवइमतिनिम्माया चामीयरपागारा नानामणिपञ्च-वण्णकविसीसगपरिमंडिआभिरामा अलका-पुरीसंकाशा पमुइयपक्कीलिआ पच्चक्खं देवलोगभूआ रिद्धित्थिमिअसमिद्धा पमुइअजणजानवया जाव पडिरूवा।*

वृ. अथ-सम्पूर्णभरतक्षेत्रस्वरूपकथनानन्तरं केनार्थेन भगवन्! एवमुच्यते-भरतं वर्ष २?, द्विर्वचनं प्राग्वत्, भगवानाह-गौतम! भरते वर्षे वैताढ्यस्य पर्वतस्य दक्षिणेन चतुर्दशाधिकं योजनशतमेकादश चैकोनविंशतिभागान् योजनस्याबाधया-अपान्तरालं कृत्वा तथा लवण-समुद्रस्योत्तरेण, दक्षिणलवणसमुद्रस्योत्तरेणेत्यर्थः, पूर्वापरसमद्रयोर्गङ्गासिन्धुभ्यां व्यवहितत्वान्न तद्विवक्षा, गङ्गाया महानद्याः पश्चिमायां सिन्ध्वा महानद्याः पूर्वस्यां दक्षिणार्द्धभरतस्य मध्यमतृतीय-भागस्य बहुमध्यदेशभगे।

अत्र-एतादृशे क्षेत्रे विनीता-अयोध्यानाम्नी राजधानी-राजनिवासनगरी प्रज्ञप्ता मयाऽन्यैश्च तीर्थकृद्भिरिति, साधिकचतुर्दशाधिकयोजनशताङ्कोत्पत्तौ त्वियमुत्पत्ति-भरतक्षेत्रं ५०० योजनानि २६ योजनानि षट् ६ कला योजनैकोनविंशतिभागरूपा विस्तृतं, अस्मात् ५० योजनानि वैताढ्यगिरिव्यासः शोध्यते, जातं ४७६ $^{6}/_{19}$ कलाः, दक्षिणोत्तरभरतार्द्धयोर्विजनयै-तस्यार्द्धे २३८ कलाः, इयतो दक्षिणार्द्धभरतव्यासात् 'उदीणदाहिणविच्छिन्ना' इत्यादिवक्ष्यमाण-वचना- द्विनीताया विस्ताररूपाणि नव योजनानि शोध्यन्ते, जातं २२९ $^{3}/_{19}$ कलाः, अस्य च मध्यभागेन नगरीत्यर्द्धकरणे ११४ योजनानि अवशिष्टस्यैकस्य योजनस्यैकोनविंशतिभागेषु कलात्रयक्षेपे जाताः २२ तदर्द्ध ११ कला इति, तामेव विशेषणैर्विशिनष्टि-'पाईणपडीणायया' इत्यादि पूर्वापर-योर्दिशोरायता, उत्तरदक्षिणयोर्विस्तीर्णा, द्वादशयोजनायामा नवयोजनविस्तीर्णा धनपतिमत्या- उत्तरदिकपालबुद्ध्या निर्माता-निर्मितेत्यर्थः, निपुणशिल्पिविरचितस्यातिसुन्द-

त्वात्, यथा च धनपतिना निर्मिता तद् ग्रन्थान्तरानुसारेण किञ्चिद् व्यक्तिपूर्वकमुपदर्श्यते।

॥१॥ "श्रीविभो राज्यसमये, शक्रादेशान्नवां पुरीम्।
धनदः स्थापयामास, रत्नचामीकरोत्करैः॥
॥२॥ द्वादशयोजनायामा, नवयोजनविस्तृता।
अष्टद्वारमहाशाला, साऽभवत्तोरणोज्ज्वला॥
॥३॥ धनुषां द्वादशशतान्युच्चैस्त्वेऽष्टशतं तले।
व्यायामे शतमेकं स, व्यधाद्वप्रं सखातिकं॥
॥४॥ सौवर्णस्य च तस्यार्द्ध, कपिशीर्षावलिर्बभौ।
मणिजाऽमरशैलस्थनक्षत्रालिरिवोद्गता॥
॥५॥ चतुरस्राश्च त्र्यस्राश्च, वृत्ताश्च स्वस्तिकास्तथा।
मन्दाराः सर्वतोभद्रा, एकभूमा द्विभूमिकाः॥
॥६॥ त्रिभूमाद्याः सप्तभूमं, यावत्सामान्यभूभुजाम्।
प्रासादाः कोटिशस्तत्राभूवन् रत्नसुवर्णजाः॥
॥७॥ दिश्यैशान्यां सप्तभूमं, चतुरस्रं हिरण्मयम्।
सवप्रखातिकं चक्रे, प्रासाद नाभिभूपतेः॥
॥८॥ दिश्यैन्द्रयां सर्वतोभद्रं, सप्तभूमं महोन्नतम्।
वर्तुलं भरतेशस्य, प्रासादं नदोऽकरोत्॥
॥९॥ आग्नेय्यां भरतस्यैव, सौधं बाहुबलेरभूत्।
शेषाणां च कुमाराणामन्तरा ह्यभवन् तयोः॥
॥१०॥ तस्यान्तरादिदेवस्य चैकविंशतिभूमिकम्।
त्रैलोक्यविभ्रमं नाम, प्रासादं रत्नराजिभिः॥
॥११॥ सवप्रखातिकं रम्यं, सुवर्णकलशावृतम्।
चञ्चद्ध्वजपटव्याजान्न त्यन्तं निर्ममे हरि॥
॥१२॥ अष्टोत्तरसहस्रेण, मणिजालैसौ बभौ।
तावत्सङ्ख्यमुखैर्भूरि, ब्रुवाणमिव तद्यशः॥
॥१३॥ कल्पद्रुमैर्वृताः सर्वेऽभूवन् सैभहर्यौकसः।
सप्राकारा बृहद्वासःपताकामालभारिणः॥
॥१४॥ सुधर्मसदृशी चारु, रत्नमय्यभवत्पुरी।
युगादिदेवप्रासादात्, सभा सर्वप्रभाभिधा॥
॥१५॥ चतुर्दिक्षु विराजन्ते, मणितोरणमालिकाः।
पञ्चवर्णप्रभांकूरपूरडम्बरिताम्बराः॥
॥१६॥ अष्टोत्तरसहस्रेण, मणिबिम्बैर्विभूषितम्।
गव्यूतिद्वयमुत्तुङ्गं, मणिरत्नहिरण्मयम्॥

॥१७॥ नानाभूमिगवाक्षाढ्यं, विचित्रमणिवेदिकम् ।
प्रासादं जगदीशस्य, व्यधाच्छ्रीदः पुरान्तरा ॥
॥१८॥ सामन्तमण्डलीकानां, नन्द्यावर्त्तादयः शुभाः ।
प्रासादा निर्मितास्तत्र, विचित्रा विश्वकर्मणा ॥
॥१९॥ अष्टोत्तरसहस्र तु, जिनानां भवनान्यमुः ।
उच्चैर्ध्वजाग्रसंक्षुब्धतीक्ष्णांशुतुरगाण्यथ ॥
॥२०॥ चतुष्पथप्रतिबद्धा, चतुरशीतिरुच्चकैः ।
प्रासादाश्चार्हतां रम्या, हिरण्यकलशैर्बभुः ॥
॥२१॥ सौधानि हिरण्यरत्नमयान्युच्चैः सुमेरुवत् ।
कौबेर्य्यां सपताकानि, चक्रे स व्यवहारिनाम् ॥
॥२२॥ दक्षिणस्यां क्षत्रियाणां, सौधानि विविधानि च ।
अभूवन् सास्त्रगाराणि, तेजास्यर्वाणिवासैनाम् ॥
॥२३॥ तद्वप्रान्तश्चतुर्दिक्षु, पौराणां सौधकोटयः ।
व्यराजन्त सुसधानसमानविशदश्रियः ॥
॥२४॥ सामान्यकारुकाणां च, बहिः प्राकारतोऽभवत् ।
कोटिसङ्ख्याश्चतुर्दिक्षु, गृहाः सर्वधनाश्रयाः ॥
॥२५॥ अपाच्यां च प्रतीच्यां च, कारुकाणां बभुर्गृहाः ।
एकभूमिमुखास्त्रयस्त्रिंशभूमिं यावदुच्छ्रिताः ॥
॥२६॥ अहोरात्रेण निर्माय, तां पुरीं धनदोऽकिरत् ।
हिरण्यरत्नधान्यानि, वासांस्याभरणानि च ॥
॥२७॥ सरांसि वापीकूपादीन्, दीर्घिका देवतालयान् ।
अन्यच्च सर्वं तत्राहोरात्रेण धनदोऽकरोत् ॥
॥२८॥ विपिनानि चतुर्दिक्षु, सिद्धार्थश्रीनिवासके ।
पुष्पाकारं नन्दनं चाभवन् भूयांसि चान्यतः ॥
॥२९॥ प्रत्येकं हेमचैत्यानि, जिनाना तत्र रेजिरे ।
पवनाहतपुष्पालिपूजितानि द्रुमैरपि ॥
॥३०॥ प्राच्यामष्टापदोऽपाच्यां महाशैलो महोन्नतः ।
प्रतीच्यां सुरशैलस्, कौबेर्य्यामुदयाचलः ॥
॥३१॥ तत्रैवमभवन् शैलाः, कल्पवृक्षालिमालिताः ।
मणिरत्नाकराः प्रोच्चैर्जिनावासपवित्रिताः ॥
॥३२॥ शक्राज्ञया रत्नमयीमयोध्यापरनामतः ।
विनीतां सुरराजस्य, पुरीमिव स निर्ममे ॥
॥३३॥ यत्रास्त्यजना देवे, गुरौ धर्मे च सादराः ।
स्थैर्यादिभिर्गुणैर्युक्ताः, सत्यशौचदयान्विताः ॥

॥ ३४ ॥ कलाकलापकुशलाः, सत्सङ्गतिरताः सदा ।
विशदाः शान्तसद्भावा, अहमिन्द्रा महोदयाः ॥ युग्मम् ।
॥ ३५ ॥ तत्पुर्यामृषभः स्वामी, सुरासुरनरार्चितः ।
जगत्सृष्टिकरो राज्यं, पाति विश्वस्य रञ्जनात् ॥
॥ ३६ ॥ अन्वयोध्यमिह क्षेत्रपुराण्यासन् समन्ततः ।
विश्वसृट्शिल्पिवृन्दघटितानि तदुक्तिभिः ॥

इति, सङ्क्षेपेण त्वेतत्स्वरूपं सूत्रकारोऽप्याह– 'चामीअरपागारे'त्यादि, चामीकरप्राकारा नानामणिकपिशीर्षपरिमण्डिता अभिरामा अलकापुरी–लौकिकशास्त्र धनदपुरी तत्संकाशा–तत्सन्निभा प्रमुदितजनयोगादग्रगर्यपि 'तात्स्थ्यात् तद्व्यपदेश' इति न्यायात् प्रमुदिता तथा प्रक्रीडिताः–क्रीडितुमारब्धवन्तः क्रीडावन्त इत्यर्थः तादृशा ये जनास्तद्योगान्नगर्यपि प्रक्रीडिता, पश्चाद्विशेषणसमासः, प्रत्यक्षं–प्रत्यक्षप्रमाणेन तस्यानुमानाद्याधिकेन विशेषप्रकाशकत्वात् तज्जन्य-ज्ञानस्य सकलप्रतिपत्तॄणां विप्रतिपत्त्यविषयत्वात्, देवलोकभूता–स्वर्गलोकसमाना, 'ऋद्धस्तिमि-तसमृद्धे'त्यादिविशेषणानि प्राग्वत्, इति परिसमाप्तौ, नवरं प्रमुदितजनजानपदेति विशेषणं प्रमुदितप्रक्रीडितेति विशेषणस्य हेतुतयोपन्यस्तत्वेन न पौनरुक्त्यमाशङ्कनीयं ।

नन्वेवं प्रस्तुतक्षेत्रस्य नामप्रवृत्तिः कथं जातेत्याह–

मू. (५५) *तत्थ णं विनीआए रायहाणीए भरहे नामं राया चाउरंतचक्कवट्टी समुप्पज्जित्था, महया हिमवंतमहंतमलयमंदर जाव रज्जं पसासेमाणे विहरइ । बिइओ गमो रायवण्णगस्स इमो, तत्थ असंखेज्जकालवासंतरेण उप्पज्जए जसंसी उत्तमे अभिजाए सत्तवीरिअपरक्कमगुण पसत्थवण्ण-सरसारसंघयणतणुगबुद्धिधारणमेहासंठाणसीलप्पगई पहाणगारवच्छायागइए अनेगवय-णप्पहाणे तेअआउबलवीरिअजुत्ते अज्झुसिरघणनिचिअलोहसंकलणारायवइरउसह-संघयणदेह-धारी । झस १ जुग २ भिंगार ३ वद्धमाणग ४ भद्दनाणग ५ संख ६ छत्त ७ वीअणि ८ पडाग ९ चक्क १० नंगल ११ मुसल १२ रह १३ सोत्थिअ १४ अंकुस १५ चंदा १६ इच्च १७ अग्गि १८ जूय १९ सागर २० इंदज्झय २१ पुहवि २२ पउम २३ कुंजर २४ सीहासण २५ दंड २६ कुम्म २७ गिरिवर २८ तुरगवर २९ वरमउड ३० कुंडल ३१ नंदावत्त ३२ धनु ३३ कोंत ३४ गागर ३५ भवणविमाण ३६–अनेगलक्खणपसत्थसुविभत्तचित्तकरचरणदेसभागे उद्धामुहलोमजाल-सुकुमालणिद्धमउआवत्तपसत्थलोमविरइअसिरिवच्छच्छन्नविउलवच्छे देसखेत्तसुविभत्त-देहधारी तरुणरविरस्सिबोहिअवरकमलविबुद्धगब्भवण्णए हयपोसणकोससण्णिभपस-त्थपिट्ठंतणिरुवलेवे पउमुप्पलकुंदजाइजूहियवरचंपगनागपुप्फसारंगतुल्लगंधी ।*

*छत्तीसाअहिअपसत्थपत्थिवगुणेहिं जुत्ते अव्वोच्छिन्नातपत्ते पागडमयजोणी विसुद्धणिअ-गकुलगयणपुण्णचंदे चंदे इव सोमयाए नयनमणनिव्वुईकरे अक्खोभे सागरो व थिमिए धनवइव्व भोगसमुदयसद्दव्वयाए समरे अपराइए परमविक्कमगुणे अमरवइसमाणसरिसरूवे मणुअवई भरहचक्कवट्टी भरहं भुंजइ पण्णट्ठसत्तू ।*

वृ. 'तत्थ ण'मित्यादि, तत्र विनीतायां राजधान्यां भरतो नाम राजा, स च सामन्तादिरपि स्यादत आह–चक्रवर्ती स च वासुदेवोऽपि स्यादतश्चत्वारोऽन्ताः–पूर्वापरदक्षिणसमुद्रास्त्रयः चतुर्थो हिमवान् इत्येवंस्वरूपास्ते वश्यतयाऽस्य सन्तीति चातुरन्तः पश्चाच्चक्रवर्तिपदेन कर्मधारयः

तत्सम्बन्धिनो ये केसराः–सिंहस्कन्धकेशाः चामरवालाः–चमरपुच्छकेशाः, एषां चोक्तगिरिद्वय-सत्कानामतिसुन्दरत्वेनोपादानं, अर्द्धचन्द्राश्च–खण्डचन्द्रप्रतिबिम्बानि चित्ररूपाणि एतादृशानि चिह्नानि यत्र तत्तथा, यस्य धनुषि सिंहकेसराः बध्यन्ते स महान् शूर इति शौर्यातिशयख्यापनार्थं, चमरवालबन्धनं अर्द्धचन्द्रप्रतिबिम्बरूपं च शोभातिशयार्थमिति, कालादिवर्णा याः 'ण्हारुणि'त्ति स्नायवः शरीरान्तर्वर्प्रास्तामि सम्पिनद्धा–बद्धा जीवा–प्रत्यञ्चा यस्य तत्तथा, जीवितान्तकरणं शत्रूणामिति गम्यं, ईदृशधनुर्मुक्तो बाणोऽवश्यं रिपुजयीत्यर्थः, चलजीवमिति विशेषणं त्वेतद्वर्णकवृत्तौ षष्ठाङ्गे श्रीअभयदेवसूरिभिर्न व्याख्यातमिति न व्याख्यायते, यदि च भूयस्सु जम्बूद्वीपप्रज्ञप्तिसूत्रादर्शेषु दृश्यमानत्वाद् व्याख्यातं विलोक्यते तदा टण्कारकरणक्षणे चला–चञ्चला जीवा यस्य तत्तथा, पुनः किंकृत्वेत्याह–

'उसुं च'त्ति इषुं च गृहीत्वा, तमेव विशिनष्टि–वरवज्रमय्यौ कोटयौ–उभयप्रान्तौ यस्य स तथा, बहुव्रीहिलक्षणः कप्रत्ययः, वरवज्रवत् सारं–अभेद्यत्वेनाभङ्गुरं तुण्डं–मुखविभागो भल्लीरूपो यस्य स तथा तं, काञ्चनबद्धा मणयः–चन्द्रकान्ताद्या कनकबद्धानि रत्नानि–कर्केतनादीनि प्रदेश-विशेषे यस्य स धौत इत धौतो निर्मलत्वात् इष्टो–धानुष्कानामभिमतः सुकृतो–निपुणशिल्पिना निर्मितः पुंखः–पृष्ठभागो यस्य स तथा तं, अनेकैर्मणिरत्नैर्विविधं–नानाप्रकारं सुविरचितं नामचिन्हं–निजनामवर्णपङ्क्तिरूपं यत्र स तथा तं, पुनरपि किं कृत्वेत्याह–

वैशाखं-[illegible] स्थित्वा–कृत्वा, वैशाखस्थानकं चैवं–

॥१॥ 'पादौ सविस्तरौ कार्यौ, समहस्तप्रमाणतः ।
वैशाखस्थानके वत्स !, कूटलक्ष्यस्य वेधने ॥'

इति, भूयोऽपि किं कृत्वेत्याह–इषुमुदारं–उद्भटं आयतं–प्रयत्नवद् यथा भवत्येवं कर्णं यावदायतं–आकृष्टं कृत्वा इमानि वचनान्यभाणीदिति, अन्वययोजनं तु पूर्वमेव कृतं, कानि तानि वचनानीत्याह–

मू. (६३) *हंदि सुणंत भवंतो बाहिरओ खलु सरस्स जे देवा ।*
*नागासुरा सुवण्णा तेसिं खु नमो पणिवयामि ॥*

वृ. हंदि इति सत्ये, तेन यथाशयं वदामीत्यर्थः, अथवा हंदीति सम्बोधने, शृण्वन्तु भवन्तुः, शरस्य–मत्प्रयुक्तस्य बहिस्तात्–त्वग्भागे ये देवा अधिष्ठायकास्त्वग्दार्ढ्यकारिणस्ते इत्यर्थः, खलु वाक्यालङ्कारे, ते के इत्याह–नागा असुराः सुपर्णा–गरुडकुमाराः तेभ्यः खुः–निश्चये नमोऽस्तु विभक्तिपरिनामात् तान् प्रणिपतामि–नमस्करोमि, नम इत्यनेन गतार्थत्वेऽपि प्रणिपतामीति पूर्ववचनं भक्त्यतिशयख्यापनार्थं, अनेन शरप्रयोगाय साहाय्यकर्तृणां बहिर्भागवासिनां देवानां सम्बोधनमुक्तं, अथाभ्यन्तरभागवर्तिदेवानां सम्बोधनायाह–

मू. (६४) *हंदि सुणंतु भवंतो अब्भिंतरओ सरस्स जे देवा ।*
*नागासुरा सुवण्णा सव्वे मे ते विसयवासी ॥*

वृ. हन्दीति प्राग्वत्, नवरं अभ्यन्तरतो गर्भभागे शरस्य येऽधिष्ठायकास्तद्दार्ढ्यादिकारिण इत्यर्थः, तेऽत्र सम्बोध्या इत्यर्थः, सर्वे ते देवा मम विषयवासिनो–मम देशवासिन इत्यर्थः, सूत्रे चैकवचनं प्राकृतत्वात्, इदं च वचनं सर्वे एते देवा मदाज्ञावशंवदत्वेन मदिष्टस्य शरप्रयोगस्य

साहायकं करिष्यन्तीत्याशयेनेति, यथाऽत्रादिचरित्रादौ शरस्य पुंखमुखरूपं देवाधिष्ठातव्यं स्थानद्वयमधिकमुक्तमस्ति ततयोः शरे प्राधान्यख्यापनार्थं, ननु यद्येते देवा आज्ञावशंवदास्तर्हि नमस्कार्यत्वमनुपपन्नं स्थानद्वयमधिकमुक्तमस्ति ततयोः शरे प्राधान्यख्यापनार्थं, ननु यद्येते देवा आज्ञावशंवदास्तर्हि नमस्कार्यत्वमनुपपन्नं, उच्यते, क्षत्रियाणां शस्त्रस्य नमस्कार्यत्वे व्यवहारदर्शनात् चक्ररत्नस्येव, तेन तदधिष्ठातनामपि स्वाभिमतकृत्यसाधकत्वेन नमस्कार्यत्वं नानुपपन्नमिति, इतिकृत्वा--निवेद्य इषुं निसृजति--मुञ्चति।

*मू. (६५)इतिकट्टु उसुं निसिरइत्ति– 'परिगरणिगरिअमज्झो वाउद्धुअसोभमाणकोसेज्जो चित्तेण सोभए धणुवरेण इंदोव्व पच्चक्खं ॥*

वृ. अथ भरतस्यैतत्प्रस्ताववर्णनाय पद्यद्वयमाह–'परिगर'त्ति परिकरेण–मल्लकच्छबन्धेन युद्धोचितवस्त्रबन्धविशेषेणेत्यर्थः, निगडितं–सुबद्धं मध्यं यस्य स तथा, वातेन–प्रस्तावात् समुद्रवातेनोद्धूतं -उक्षिप्तं शोभमानं कौशेयं–वस्त्रविशेषो यस्य स तथा, चित्रेण धनुर्वरेण शोभते स भरत इत्यध्याहारः, इन्द्र इव प्रत्यक्षं–साक्षात्प्रागुक्तस्वरूपं महाचापं।

*मू. (६६) तं चंचलायमाणं पंचमिचंदोवमं महाचावं।*
*छज्जइ वामे हत्थे नरवइणो तंमि विजयंमि ॥*

वृ. चञ्चलायमानं–सौदामिनीयमानं कान्तिझात्कारेणेत्यर्थः, आरोपितगुणत्वेन पञ्चमी-चन्द्रोपमं 'छज्जइ'त्ति राजते 'राजेरग्घछज्जसहरीररेहा' इति प्राकृतसूत्रेण रूपसिद्धिः, वामहस्ते नरपतेरिति, तस्मिन् विजये–मागधतीर्थेशसाधने इति ।

*मू. (६७) तए णं से सरे भरहेणं रन्ना निसट्ठे समाणे खिप्पामेव दुवालस जोअणाइं गंता मागहतित्थाधिपतिस्स देवस्स भवणंसि निवइए, तए णं से मागहतित्थाहिवई देवे भवणंसि सरं निवइअं पासइ२ त्ता आसुरुत्ते रुट्ठे चंडिक्किए कुविए मिसिमिसेमाणे तिवलिअं भिउडिं निडाले साहरइ २ त्ता एवं वयासी– केस णं भो एस अपत्थिअपत्थए दुरंतपंतलक्खणे हीनपुण्णचाउद्दसे हिरिसिरिपरिवज्जिए जे णं मम इमाए एआणुरूवाए दिव्वाए देविड्ढीए दिव्वाए देवजुईए दिव्वेणं दिव्वाणुभावेणं लद्धाए पत्ताए अभिसमण्णागयाए उप्पिं अप्पुस्सुए भवणंसि सरं निसिरइत्तिकट्टु सीहासणाओ अब्भुट्ठेइ २ त्ता जेणेव से नामाहयंके सरे लद्धाए पत्ताए अभिसमन्नागयाए उप्पिं अप्पुस्सुए भवणंसि सरं णिसिरइत्तिकट्टु सीहासणाओ अब्भुट्ठेइ २ त्ता जेणेव से नामाहयंके सरे तेणेव उवागच्छइ २ त्ता तं नामाहयंकं सरं गेण्हइ नामंकं अणुप्पवाएइ नामंकं अणुप्पवाएमाणस्स इमे एआरूवे अब्भत्थिए चिंतिए पत्थिए मनोगए संकप्पे समुप्पज्जित्था–उप्पन्ने खलु भो!।*

*जंबुद्दीवे दीवे भरहे वासे भरहे नामं राया चाउरंतचक्कवट्टी तं जीअमेअं तीअपच्चुप्पण्णमणागयाणं मागहतित्थकुमाराणं देवाणं राईणमुवत्थाणीअं करेत्तए, तं गच्छामि णं अहंपि भरहस्स रन्नो उवत्थाणीअं करेमित्तिकट्टु एवं संपेहेइ संपेहेत्ता हारं मउडं कुंडलाणि अ कडगाणि अ तुडिआणि अ वत्थाणि अ आभरणाणि अ सरं च नामाहयंकं मागहतित्थोदगं च गेण्हइ गिण्हित्ता ताए उक्किट्ठाए तुरिआए चवलाए जयणाए सीहाए सिग्घाए उद्धुआए दिव्वाए देवगईए वीईवयमाणे २ जेणेव भरहे राया तेणेव उवागच्छइ २ त्त अंतलिक्खपडिवण्णे सखिंखिणीआइं पंचवण्णाइं वत्थाइं पवर परिहिए करयलपरिग्गहिअं दसणहं सिर जाव अंजलिं कट्टु भरहं रायं जएणं विजएणं*

*वद्धावेइ २ त्ता एवं वयासी– अभिजिए णं देवाणुप्पिएहिं केवलकप्पे भरहे वासे पुरच्छिमेणं मागहतित्थमेराए तं अहन्नं देवा० विसयवासी अहन्नं देवा० आणत्तीकिंकरे अहन्नं देवा० पुरच्छिमिल्ले अंतवाले तं पडिच्छंतु णं देवा० ममं इमेआरूवे पीइदाणंतिकट्टु हारं मउडं कुंडलाणि अ कडगाणि अ जाव मागहतित्थोदगं च उवणेइ, तए णं से भरहे मागहतित्थकुमारस्स इमेयारूवं पीइदाणं पडिच्छइ २ त्ता मागहतित्थकु०सक्कारेइ सम्माणेइ २ त्ता पडिविसज्जेइ*

*तए णं से भरहे राया रहं परावत्तेइ २ त्ता मागहतित्थेणं लवणसमुद्दाओ पच्चुत्तरइ २ त्ता जेणेव विजयखंधावारणिवेसे जेणेव बाहिरिआ उवट्ठाणसाला तेणेव उवागच्छइ २ त्ता तुरए निगिण्हइ २ त्ता रहं ठवेइ २ रहाओ पच्चोरुहति २ त्ता जेणेव मज्जणघरे तेणेव उवागच्छति २ मज्जणघरं अनुपविसइ २ त्ता जाव ससिव्व पिअदंसणे नरवई मज्जणघराओ पडिनिक्खमइ २ त्ता जेणेव भोअणमंडवे तेणेव उवागच्छइ २ त्ता भोअणमंडवंसि सुहासणवरगए अट्ठमभत्तं पारेइ २ त्ता भोअणमंडवाओ पडिनिक्खमइ २ त्ता जेणेव बाहिरिआ उवट्ठाणसाला जेणेव सीहासणे तेणेव उवागच्छइ २ त्ता सीहासणवरगए पुरत्थाभिमुहे निसीअइ २ त्ता अट्ठारस सेणिप्पसेणीओ सद्दावेइ २ त्ता एवं वयासी–*

*खिप्पामेव भो ! देवाणुप्पिया उस्सुक्कं उक्करं जाव मागहतित्थकुमारस्स देवस्स अट्ठाहिअं महामहिमं करेह २ त्ता मम एअमाणत्तिअं पच्चप्पिणह, तए णं ताओ अट्ठारस सेणिप्पसेणीओ भरहेणं रण्णा एवं वुत्ताओ समाणीओ हट्ठ जाव करेंति २ त्ता एअमाणत्तिअं पच्चप्पिणंति ।*

*तए णं से दिव्वे चक्करयणे वइरामयतुंबे लोहिअक्खामयारए जंबूणयणेमीए नानामणि खुरप्पथालपरिगए मणिमुत्ताजालभूसिए सणंदिघोसे सखिंखिणीए दिव्वे तरुणरविमंडलणिभे नानामणिरयणघंटिआजालपरिक्खित्ते सव्वोउअसुरभिकुसुमआसत्तमल्लदामे ।*

*अंतलिक्खपडिवण्णे जक्खसहस्ससंपरिवुडे दिव्वतुडिअसद्दसण्णिणादेणं पूरेंते चेव अंबरतलं नामेण य सुदंसणे नरवइस्स पढमे चक्करयणे मागहतित्थकुमारस्स देवस्स अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए आउहघरसालाओ पडिनिक्खमइ २ त्ता दाहिणपच्चत्थिमं दिसिं वरदामतित्थाभिमुहे पयाए यावि होत्था ।*

वृ. 'तए णं'इत्यादि, ततः स शरो भरतेन राज्ञा निसृष्टः सन् क्षिप्रमेव द्वादश योजनानि गत्वा मागधतीर्थाधिपतेर्देवस्य भवने निपतितः, ततः किं वृत्तमित्याह–'तए णं'मित्यादि, ततः स मागधपतिर्देवो भवने अर्थात् स्वकीये शरं निपतितं पश्यति दृष्टा च आशु–शीघ्रं रुष्टः–क्रोधोदयाद्विमूढः, 'रुप लुप च विमोहने' इति वचनात्, स्फुरितकोपलिङ्गो वा, रुष्टः–उदितक्रोधः चाण्डिक्यितः–सञ्जातचाण्डिक्यः, प्रकटितरौद्ररूप इत्यर्थः, कुपितः–प्रवृद्धकोपोदयः, 'मिसिमिसेमाणे'त्ति क्रोधाग्निना दीप्यमान इव, एकार्थिका वैते शब्दाः कोपप्रकर्षप्रतिपादनार्थमुक्ताः, त्रिवलिकां–तिस्रः वलयः–प्रकोपोत्थललाटरेखारूपा यस्यां सा तथा तां भृकुटिं–कोपविकृतभ्रूरूपां संहरति–निवेशयति, संहत्य च एवमवादीत्, किमवादीदित्याह–

'केस णं'मित्यादि, केसत्ति–कः अज्ञातकुलशीलत्वादनिर्दिष्टनामकः सकारः प्राकृतशैलीभवः 'मणसा वयसा कायसा' इत्यादिवत् णमिति प्राग्वत् भो इति सम्बोधने देवानां एषः–बाणप्रयोक्ता अप्रार्थितं–केनाप्यमनोरथगोचरीकृतं प्रस्तावात् मरणं तस्य प्रार्थको–अभिलाषी,

अयमर्थ–यो मया सह युयुत्सुः स मुमूर्षुरेवेति, दुरन्तानि–दुष्टावसानानि प्रान्त–तुच्छानि लक्षणानि यस्य स तथा, हीनायां पुण्यचतुर्दश्यां जातो हीनपुण्यचातुर्दशः, तत्र चतुर्दशी किल तिथिर्जन्माश्रिता पुण्या पवित्रा शुभा इतियावत् भवति, सा च पूर्णाऽत्यन्तभाग्यवतो जन्मनि भवति अत आक्रोशता इत्थमुक्तं, क्वचिद् 'भिन्नपुण्णचाउद्दसे'त्ति, तत्र भिन्नापरतिथिसङ्क्रमेन भेदं प्राप्ता पुण्यचतुर्दशी तस्यां जात इति, ह्रिया–लज्जया श्रिया–शोभया च परिवर्जितः यो णमिति पूर्ववत् मम आस्याः–प्रत्यक्षानुभूयमानायाः एतद्रूपायाः एतदेव न समयान्तरे भङ्गुरत्वादि रूपान्तरभाक् रूपं–स्वरूपं यस्याः सा तथा तस्या दिव्यायाः–स्वर्गसम्भवा याः प्रधानाया वा देवानामृद्धि–श्रीर्भवनरत्नादिसम्पत् तस्याः । एवं सर्वत्र, नवरं द्युति–दीप्ति शरीराभरणादिसम्पत् तस्याः युतिर्वा–इष्टपरिवारादिसंयोग-लक्षणा तस्याः दिव्येन–प्रधानेन देवानुभावेन–भाग्यमहिम्नाऽथवा दिव्येन–देवसम्बन्धि-नाऽनुभावेन–अचिन्त्यवैक्रियादिकरणमहिम्ना सह 'पिता पुत्रेण सहागत' इत्यादिवत्, लब्ध्या–जन्मान्तरार्जितायाः प्राप्ताया–इदानीमुपस्थितायाः अभिसमन्वागतायाः–भोग्यतां गतायाः उपरि आत्मना उत्सुको–मनसौत्कण्ठुलः परसम्पत्यभिलाषी पदव्यत्ययादुत्सुकात्मा वा भवने निसृजति, इतिकृत्वा सिंहासनादभ्युत्तिष्ठतीति ।

उत्थानानन्तरं यत्कर्त्तव्यं तदाह–'जेणेव से ना'इत्यादि, यत्रैव स नामरूपोऽहतः–अखण्डितः अङ्कः–चिन्हं यत्र स तथा नामाङ्क इत्यर्थः, एवंविधः शरस्तत्रैवोपागच्छति, तं नामाहताङ्कं शरं गृह्णाति नामकं अनुप्रवाचयति–वर्णानुपूर्वीक्रमेण पठति, नामकमनुप्रवाचयतोऽयं–वक्ष्यमाण एतद्रूपो–वक्ष्यमाणस्वरूपः आत्मन्यधि अध्यात्म तत्र भव आध्यात्मिकः आत्मविषय इत्यर्थः, सङ्कल्पश्च द्विधा–ध्यानात्मकः चिन्तात्मकश्च, तत्र आद्यः स्थिराध्यवसायलक्षणस्तथाविध-दृढ-संहनना-दिगुणोपेतानां द्वितीयश्चलाध्यवसायलक्षणस्तदितरेषामिति, तयोर्मध्येऽयं चिन्तितः–चिन्तारूपश्चेतसोऽनवस्थितत्वात्, स चानभिलाषात्मकोऽपि स्यादित्यत आह–प्रार्थितः–प्रार्थनाविषयः ।

अयं मम मनोरथः फलेग्रहिर्भूयादित्यभिलाषात्मक इत्यर्थः, मनोगतो–मनस्येव यो गतो न बहिर्वचनेन प्रकाशित इति, सङ्कल्पः समुदपद्यत, तमेवाह–उत्पन्नः खलुः–निश्चये भो इत्यामन्त्रणे विचाराभिमुख्यकरणाय स्वात्मन एव, तेनेह मागधकुमारेति योज्यं, जम्बूद्वीपे द्वीपे भरते वर्षे भरतो नाम राजा चातुरन्तचक्रवर्त्ती तत्–तस्माज्जीतमेतत् अतीतप्रत्युत्पन्नानागतानां 'मागधतीर्थ-कुमाराणा'मिति मागधतीर्थस्याधिपति कुमारो मागधतीर्थकुमाः मध्यपदलोपेन समासः, कुमारपद-वाच्यत्वं चास्य नागकुमारजातीयत्वात्, तन्नामकानां देवानां राज्ञां–नरदेवानां उपस्थानिकं–प्राभृतं कर्त्तुं तद् गच्छामि णमिति प्राग्वत् अहमपि भरतस्य राज्ञ उपस्थानिकं करोमि, इतिकृत्वा–इति मनसिकृत्य एवं-वक्ष्यमाणं निजर्द्धिसारं संप्रेक्षते–पर्यालोचयति, ततः किं करोतीत्याह–

'संपेहेत्ता'इत्यादि, सम्प्रेक्ष्य च हारादीनि प्रतीतानि चकारः सर्वत्र समुच्चये शरं च भरतस्य प्रत्यर्पणाय नामाहतं नामाङ्कताङ्कमिति निर्देशे कर्त्तव्ये लाघवार्थमित्थमुपन्यासः यद्वा नाम आहतं–लक्षणया लिखितं यत्र स तथा तं मागधतीर्थोदकं च राज्याभिषेकोपयोगि एतानि गृहणातीति सम्बन्धः, तदनन्तरं किं विदधे इत्याह– 'गिण्हित्ता ताए उक्किट्ठाए'इत्यादि, गृहीत्वा च तया दिव्यया देवगत्या गत्यालापकव्याख्या प्राग्वत् नवरं सिंहया–सिंहगतिसमानया अतिमहता बलेनारब्धत्वात्,

यच्च पूर्वं ऋषभदेवनिर्वाण-कल्याणाधिकारे गत्यालापककथनं यावत्पदेन अत्र च तत्कथनंविस्तरेण तद्विचित्रत्वात् सूत्रकारप्रवृत्तेरिति मन्तव्यं, यत्रैव भरतो राजा तत्रैवोपागच्छति उपागत्य चान्तरिक्षप्रतिपन्नो–नभोगतो देवानामभूमिचारित्वात् सकिंकिणीकानि–क्षुद्रघण्टिकाभि सह गतानि पञ्चवर्णानि च वस्त्राणि प्रवरं विधिपूर्वकं यथा स्यात् तथा परिहितः–परिहितवान्, यथा पञ्चवर्णानि वस्त्राणि परिहितवान् तथा किंकिणीरपीत्यर्थः, किमुक्तं भवति ? –

किंकिणीग्रहणेन तस्य नटादियोग्यवेषधारित्वदर्शनेन भृशं तस्य भरते भक्ति प्रकटिता, अथवा किंकिणीसमुत्थशब्देन सर्वजनसमक्षं सेवकोऽस्मि न तु छन्नमिति ज्ञापनार्थं तत्सहित उपागतः, अथवा सकिंकिणीकानि–बद्धकिंकिणीकानि, तद्बन्धश्च शोभातिशयार्थं, करतलपरिगृहीतं दशनखं शिरसावर्त्तं मस्तकेऽञ्जलिं कृत्वा भरतं राजानं जयेन विजयेन वर्द्धयति, वर्द्धयित्वा चैवमवादीत्, अत्र प्राग्वद् व्याख्यानमिति । किमवादीदित्याह–

'अभिजिए णं'मित्यादि, अभिजितं–आज्ञावशंवदीकृतं देवानुप्रियैः–वन्द्यपादैः केवलकल्पं–सम्पूर्णत्वात् विषयवासी–देशवासी अत एवाहं देवानुप्रियाणामाज्ञाप्तिकिङ्करः–आज्ञाकारी सेवकः, अहं देवानुप्रियाणां पौरस्त्यः–पूर्वदिकसम्बन्धी अन्तं–त्वदादेश्यदेश सम्बन्धिनं पालयति–रक्षयति उपद्रवादिभ्य इत्यन्तपालः पूर्वदिग्देशलोकानां देवादिकृतसमस्तोपद्र- वनिवारक इत्यर्थः, 'अहन्नं देवाणुप्पिआणं' इत्यादिपदानां भिन्नभिन्नप्रकारेण योजनीयत्वादत्र न पौनरुक्त्यं, तत्प्रतीच्छन्तु–गृह्णन्तु देवानुप्रिया ! मम इदम्–अग्रत उपनीतं एतद्रूपं प्रत्यक्षानु- भूयमानस्वरूपं प्रीतिदानं–सन्तोषदानं प्राभृतरूपमित्यर्थः, इतिकृत्वा–विज्ञप्य हारादिकमुपनयति–प्राभृतीकरोतीति, 'तए णं'मित्यादि, ततः स भरतो राजा मागधतीर्थकुमारनाम्नो देवस्य इदमेतद्रूपं प्रीतिदानं तत्प्रीत्युत्पादनार्थमलुब्धतया प्रतीच्छति–गृह्णाति, प्रतीष्य च मागधतीर्थकुमां देवं सत्कारयति वस्त्रादिना सन्मानयति तदुचितप्रतिपत्त्या सत्कार्य सन्मान्य च प्रतिविसर्जयति–स्वस्थानगमनायानुमन्यते ।

ततः स भरतो राजा रथं परावर्त्तयति–भरतवर्षाभिमुखं करोति, परावर्त्य च मागधतीर्थेन लवणसमुद्रात् प्रत्यवतरति प्रत्यवतीर्य च यत्रैव विजयस्कन्धावारनिवेशो यत्रैव च–बाह्या उपस्थानशाला तत्रैवोपागच्छति उपागत्य च तुरगान् निगृह्णाति निगृह्य च रथं स्थापयति स्थापयित्वा च रथात् प्रतयवरोहति प्रत्यवरुह्य च यत्रैव मज्जनगृहं तत्रैवोपागच्छति उपागत्य च मज्जनगृहमनुप्रविशति अनुप्रविश्य 'जाव'त्ति यावत्करणात् संपूर्ण स्नानालापको वाच्यः 'ससिव्व पिअदंसणे' इति विशेषणं यावत्, स च प्राग्वत्, नरपतिर्मज्जनगृहात् प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च यत्रैव भोजनमण्डपस्तत्रैवो- पागच्छति उपागत्य च भोजनमण्डपे सुखासनवरगतः सप्तष्टमभक्तं पारयति पारयित्वा च भोजन- मण्डपात् प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च यत्रैव बाह्योपस्थानशाला यत्रैव च सिंहासनं तत्रैवोपा- गच्छति उपागत्य च यावत्सिंहासनवरगतः पूर्वाभिमुखो निषीदति निषद्य च अष्टादश श्रेणिप्रश्रेणीः शब्दयति शब्दयित्वा चैवमवादीदिति, अत्र सूत्रे यावच्छब्दो लिपिप्रमादापतित एव दृश्यते, संग्राहकपदाभावात्, अन्यत्र तदगमादावदृश्यमानत्वा- च्चेति, 'खिप्पामेवे'ति, सर्वं प्राग्वत्, यथा राजाज्ञां पौरा विदधुस्तथा चाह–

'तए णं'मित्यादि, व्यक्तं, ततो मागधतीर्थकुमारदेवविजयाष्टाह्निकामहामहिमानन्तरं

चक्ररत्नं कीदृशं [illegible] 'तए णं'मित्यादि, ततस्तद्दिव्यं चक्ररत्नं वज्रमयं तुम्बं–अरकनिवेशस्थानं यत्र तत्तथा, लोहिताक्षररत्नमया अरका यत्र तत्तथा, जाम्बूनदं–पीतसुवर्णं तन्मयी नेमि–धारा यत्र तत्तथा, नानामणिमयं अन्तः क्षुरआकारत्वात् क्षुरप्ररूपं स्थालं–अन्तः परिधिरूपं तेन परिगतं यत्तत्तथा, मणिमुक्ताजालाभ्यां भूषितं, नन्दि–भम्भामृदङ्गादिर्द्वादशविधसूर्यसमुदायस्तस्य घोषस्तेन सहगतं यत्तत्तथा, सकिङ्किणीकं–क्षुद्रघण्टिकाभिः सहितं, दिव्यमिति विशेषणस्य प्रागुक्तत्वेऽपि प्रशस्ततातिशयख्यानार्थं पुनर्वचनं, तरुणरविमण्डलनिभं नानामणिरत्नघण्टिकाजालेन परिक्षिप्तं–सर्वतो व्याप्तं ।

'सव्वोउअ' इत्यादि विशेषणचतुष्टयं प्राग्वत् नाम्ना च सुदर्शनं नरपतेः–चक्रिणः प्रथमं–प्रधानं सर्वरत्नेषु तस्य मुख्यत्वाद्वैरिविजये सर्वत्रामोघशक्तिकत्वाच्च चक्ररत्नं, प्रथमशब्दस्य 'पढमे चंदयोगे' इत्यादौ प्रधानार्थकत्वेन प्रयोगदर्शनान्नेदमसङ्गतिभाग् व्याख्यानमिति, मागधतीर्थकुमारस्य देवस्य अष्टाह्निकायां महामहिमायां निवृत्तायां सत्यां आयुधगृहशालातः प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च दक्षिणपश्चिमां दिशं–नैर्ऋतीं विदिशं प्रतीति शेषः, वरदामतीर्थाभिमुखं प्रयातं–चलितं चाप्यभवत्, अयं भावः–शुद्धपूर्वास्थितस्य शुद्धदक्षिणवर्तिवरदामतीर्थं व्रजतः आग्नेय्या विदिशागमने–प्रतीचिदिशागमने वक्रः पन्थाः तेनैवमुक्तं, यच्च ऋषभचरित्रे–

॥ १ ॥ "दक्षिणस्यां वरदामतीर्थं प्रति ययौ ततः ।
चक्रं तच्चक्रवर्ती च, धातुं प्रादिरिवान्वगाद् ॥"

इत्युक्तं तन्मूलजिगमिषितदिग्विवक्षणात्, यच्चात्र चक्ररत्नस्य पूर्वतः दक्षिणदिशि गमनं तत्सृष्टिक्रमेण दिग्विजयसाधनार्थम् ।

*मू. (६८) तए णं से भरहे राया तं दिव्वं चक्करयणं दाहिणपच्चत्थिमं दिसिं वरदामतित्थाभिमुहं पयातं चावि पासइ २ त्ता हट्ठतुट्ठ० कोडुंबिअपुरिसे सद्दावेइ २ त्ता एवं वयासी–खिप्पामेव भो देवाणुप्पिआ ! हयगयरहपवर चाउरंगिणिं सेन्नं सण्णाहेह आभिसेक्कं हत्थिरयणं पडिकप्पेहत्तिकट्टु मज्जणघरं अनुपविसइ २ त्ता तेणेव कमेणं जाव धवलमहामेहनिग्गए जाव सेअवरचामराहिं उद्धुव्वमाणीहिं २ माइअवरफलयपवरपरिगरखेडयवरवम्मकवयमाढीसहस्सकलिए -*

*उक्कडवरमउडतिरीडपडागझयवेजयंतिचामरचलंतछत्तंधयार कलिए असिखेवणिखग्गचावणारायकणयकप्पणिसूललउडभिंडिमालधणुहतोणसरपहरणेहि अ कालणीलरुहिरपीअसुक्किलअणेगचिंधसयसण्णिविट्ठे अप्फोडिअसीहणायछेलिअहयहेसि अहत्थिगुलुगुलाइअअनेगरहसयसहस्सघणघणेंतणीहम्ममाणसद्दसहिएण जमगसमगभभाहोरंभकिणितखरमुहिमुगंदसंखि अपरिलिवच्चगपरिवाइणिवंसवेणुवीपंचिमहतिकच्छभिरिगिसिगिअकलतालकंसालकरथाणुत्थिदेण । महता सद्दसण्णिणादेण सयलमवि जीवलोगं पूरयंते बलवाहणसमुदएणं एवं जक्खसह- स्सपरिवुडे वेसमणे चेव धनवई अमरपतिसण्णिमाइ इड्ढीए पहिअकित्ती गामागरनगरखेडकब्बड तहेव सेसं जाव विजयखंधावारणिवेसं करेइ २ त्ता वड्ढइरयणं सद्दावेइ २ त्ता एवंवयासी–खिप्पामेव भो देव० ! मम आवसहं पोसहसालं च करेहि, ममेअमाणत्तिअं पच्चप्पिणाहि।*

वृ. 'तए णं'मित्यादि, ततः स भरतो राजा तद्दिव्यं चक्ररत्नं दक्षिणपश्चिमां दिशं प्रति वरदामतीर्थाभिमुखं प्रयातं चापि पश्यति, दृष्ट्वा च हट्ठतुट्ठत्ति आलापकादिपदैकदेशग्रहणात्

सम्पूर्णालापको ग्राह्यः, स चायं-'हट्ठतुट्ठचित्तमाणंदिए' इत्यादिकः प्रागुक्त एव, कौटुम्बिकपुरुषान् शब्दयति शब्दयित्वा चैवमवादीत्, 'खिप्पामेव' त्ति प्राग्व्याख्यातार्थ, अत्र लाघवार्थमतिदेशवाक्येनाह- तेनैव क्रमेण--पूर्वोक्तस्नानाधिकार- सूत्रपरिपाट्या तावद् वाच्यं यावद् 'धवलमहामेहनिग्गए' इत्यादि निगमनसूत्रं, तदनु यावच्छेतव- चामरैरुद्धूयमानैरित्यन्तं राजकुञ्जराधिरोहणसूत्रं वाच्यमिति, अथ यथाभूतो भरतो वरदामतीर्थं प्राप्तो यथा च तत्र स्कन्धावारनिवेशमकरोत्तथाऽऽह, अत्र च सूत्रे वाक्यद्वयं, तत्र चादिवाक्ये तहेव सेसमित्यतिदेशपदेन सूचिते ग्रन्थे 'जेणेव वरदामतित्थे तेणेव उवागच्छइ' इत्यनेनान्वययोजना कार्या, सा चैवम्-स भरतो यत्रैव वरदामतीर्थं तत्रैवोपागच्छतीति, द्वितीयवाक्ये च विजयस्कन्धा- वारनिवेशं करेइ इत्यनेनेति,

किंलक्षण इत्याह- 'पाइय' त्ति हस्तपाशितं वरफलकं--प्रधानखेटकं यैस्ते तथा प्रवरः परिकरः-प्रगाढगात्रि- काबन्धः खेटकं च येषां ते तथा, फलकं दारुमयं खेटकं च वंशशलाकादिमयमिति न पौनरुक्त्यं, वरवर्म्मकवचमाढ्यः-सन्नाहविशेषा येषा ते तथा, एषां च विशेषस्तत्कलाकुशलेभ्यो वेदितव्यः, यथा वर्म्म लोहकुतूहलिकामयं इत्यादि तेषां सहस्र-वृन्दवृन्दैः कलितो यः स तथा, राज्ञां हि प्रयाणसमये सुद्धाङ्गनां सह सञ्चरणस्यावश्यकत्वात्, उत्कटवराणि- उन्नतप्रवराणि मुकुटानि प्रतीतानि किरीटानि-तान्येव शिखरत्रयोपेतानि पताका-लघुपटरूपा ध्वजा-बृहत्पटरूपा वैजयन्त्यः-पार्श्वतो लघुपताकिकाद्वययुक्ताः पताका एव, चामराणि चलन्ति छत्राणि तेषां सम्बन्धि यदन्धकारं-छायारूपं तेन कलितः, अत्रान्धकारशब्दान्तसमासपदाग्रे आर्षत्वात् तृतीयैकवचनलोपो द्रष्टव्यः कलित इति च पृथगेव तेन वक्ष्यमाणानन्तरसूत्रे कलितशब्दो योजनीयोऽन्यथा ततस्थचकारस्य नैरर्थ्यक्यापत्तेः, यद्वा अत्र समस्तोऽपि कलितशब्दश्चकारकरणवलादेव तत्रापि योजनीय इति, प्रस्तुतविशेषणस्यायं भावार्थः-

चलतश्चक्रिणो मुकुटादिका ततसैन्यस्य च छत्रव्यतिरिक्ता सामग्री तथा अस्ति यथाऽध्वनि मनागपि आतपक्लेशो नास्तीति, अत्र भरतसैन्यसम्बद्धा छाया भरतस्य विशेषणत्वेन सम्बद्ध्यते, सैन्यकृतो जयः स्वामिन्येवेति व्यवहारदर्शनात्, पुनर्भरतमेव विशिनष्टि-असयः-खड्गविशेषाः क्षिप्यन्ते सीसकगुटिका आभिरिति क्षेपिण्यो-हथनालिरिति लोकप्रसिद्धा खडगाः सामान्यतः चापाः--कोदण्डाः नाराचाः-सर्वलोहबाणाः कणका-बाणविशेषाः कल्पन्यः-कृपाण्यः शूलानि- प्रतीतानि लकुटाः-प्रतीताः भिन्दिपाला-हस्तक्षेप्याः महाफला दीर्घा आयुधविशेषाः धनूंषि- वंशमयबाणासनानि किरातजनग्राह्याणि तूणाः-तूणीराः शराः-सामान्यतो बाणाः इत्यादिभि प्रहरणैः, अत्र चकारेण पूर्वविशेषणस्थः समस्तोऽसमस्तो वा कलितशब्दो योज्यः, तेन तैः संयुक्त इति, दिग्विजयोद्यतानां राज्ञां हि शस्त्राणि सेनासहवर्त्तीनि भवन्तीति ज्ञापितं, कथमुक्त- प्रहरणैः कलित 'काले'त्यादि, अत्र रुधिरशब्दो रक्तार्थ तेन कालनीलरक्तपीतशुक्लानि जातितः पञ्चवर्णानि व्यक्तितस्तु तदवान्तरभेदादनेकरूपाणि यानि चिह्नशतानि तानि सन्निविष्टानि येषु तद्यथा स्यात्तथेति क्रियाविशेषणतया बोध्यं, कोऽर्थः ? -राज्ञां हि शस्त्राध्यक्षास्तत्तआतीत्तदेशीय- शस्त्राणां निर्विलम्बं परिज्ञानाय शस्त्रकोशेषु उक्तरूपाणि चिह्नानि निवेशयन्ति शस्त्रेषु च तत्तद्वर्णमयान् केशान् कर्वन्तीत्यर्थः, अथ तूर्यसामग्रीकथनद्वारा भरतमेव विशिनष्टि-आस्फोटितं-करास्फोटरूपं सिंह-नादः-सिंहस्येव शब्दकरणं 'छेलिअ' त्ति सेंटितं हर्षोत्कर्षेण सीत्कारकरणं

हयहेषितं—तुरङ्गमशब्दः हस्तिगुलुगुलायितं—गजगर्जितं अनेकानि यानि रथशतसहस्राणि येषां।

'घणवणेंत'त्ति अनुकरणशब्दस्तया निहन्यमानानामश्वानां च तोत्रादिजशब्दास्तैः सहितेन तथा यमकसमकं—युगपत् भम्भा—ढक्का होरम्भा—महाढक्का इत्यादि तूर्यपदव्याख्या प्रागुक्तत्रुटिताङ्गकल्पद्रुमाधिकारतो ज्ञेया नवरं कलो—मधुरस्तालो—घनवाद्यविशेषः कंसताला—प्रसिद्धा करध्मानं—परस्परं हस्तताडनं एतेभ्य उत्थितः—उत्पन्नो यस्तेन महताशब्दसन्निनादेन सकलमपि जीवलोकं—ब्रह्माण्डं पूरयन्, बलं—चतुरङ्गसैन्यं वाहनं—शिबिकादि एतयोः क्रमेण समुदयो—वृद्धिर्यस्य स तथा, णमिति वाक्यालङ्कारे, अथवा बलवाहनयोः समुदयेन युक्त इति गम्यं, एवमुक्तेन प्रकारेण भरतचक्रिविशेषणत्वेनेत्यर्थः, मागधतीर्थप्रकरणोक्तानि यक्षसहस्रासम्परिवृत इत्यादीनि विशेषणानि ग्राह्याणि, तत्र सूत्रे साक्षाल्लिखितानीति, अथ प्रथमवाक्ये अत्र लिखितानि 'तहेवसेस'-मित्यतिदेशपदेन सूचितानि च विशेषणानि वाचयितॄणां सौकुमार्यायैकीकृत्य लिख्यन्ते, यथा—

'जक्खसहस्ससंपरिवुडे वेसमणे चेव धनवई सण्णिभाए इड्ढीए पहिअकित्ती गामागरनगरखेडकब्बडमडंबदोणमुहपट्टणासमसंवाहसहस्समंडिअं थिमिअमेइणीअं वसुहं अभिजिणमाणे २ अग्गाइं वराइं रयणाइं पडिच्छमाणे २ तं दिव्वं चक्करयणं अनुगच्छमाणे २ जोअणंतरिआहिं वसहीहिं वसमाणे २ जेणेव वरदामतित्थे तेणेव उवागच्छइ' त्ति व्याख्या च प्राग्वत्, अथ द्वितीयवाक्येऽपि अत्रोक्तविशेषणसहितो यावत्पदसूचितो ग्रन्थो लिख्यते यथा—'उवागच्छित्ता वरदामतित्थस्स अदूरसामंते दुवालसजोअणायामं नवजोअणविच्छिन्नं वरणगरसरिच्छं विजयखंधावारणिवेसं करेइ' त्ति प्राग्वत्, अथ ततः किं चक्रे इत्याह—'करित्ता' इत्यादि, सर्वमुक्तार्थं

अथ राजाऽऽज्ञप्त्यनन्तरं कीदृग् वर्द्धकिरत्नं कीदृशं च वैनयिकमाचचारेत्याह—

मू. (६१) *तए णं से आसमदोणमुहगामपट्टणपुरवरखंधावारगिहावणविभागकुसले एगासीतिपदेसु सव्वेसु चेव वत्थूसु णेगगुणजाणए पंडिए विहिण्णू पणयालीसाए देवयाणं वत्थुपरिच्छाए नेमिपासेसु भत्तसालासु कोट्टणिसु अ वासघरेसु अ विभागकुसले छेज्जे वेज्झे अ दानकम्मे पहाणबुद्धी जलयाणं भूमियाण य भायणे जलथलगुहासु जंतेसु परिहासु अ कालनाणे तहेव सद्दे वत्थुप्पएसे पहाणे गब्भिणिकण्णरुक्खवल्लिवेढिअगुणदोसविआणए गुणड्ढे सोलसपासायकरणकुसले चउसट्ठिविकप्पवित्थियमई नंदावत्ते य वद्धमाणे सोत्थिअरुअग तह सव्वओभद्दसण्णिवेसे अ बहुविसेसे उद्दंडिअदेवकोट्ठदारुगिरिखायवाहणविभागकुसले।*

वृ. 'तए णं'मित्यादि, ततस्तद्वर्द्धकिरत्नमहं किं करवाणि आदिशन्तु देवानुप्रिया इतिकर्त्तव्यमित्युदित्वोपतिष्ठते, राजानमिति शेषः, राज्ञ आसन्नमायातीत्यर्थः, इत्यन्वययोजनमग्रेतन-पदैः सह कार्यं, कीदृशं तद्वर्द्धकिरत्नमित्याह—आश्रमादयः प्राग्व्याख्यातार्था नवरं स्कन्धावारगृहा-पणाः प्रतीताः एतेषां विभागे—विभजने उचितस्थाने तदवयवनिवेशने कुशलम्, अथवा—

॥१॥ 'पुरभवनग्रामाणां ये कोणास्तेषु निवसतां दोषाः।
श्वपचादयोऽन्त्यजातास्तेष्वेव विवृद्धिमायान्ति॥'

इत्यादियोग्यायोग्यस्थानविभागज्ञं एकाशीतिः पदानि—विभागाः प्रतिदैवतं विभक्तव्यवास्तुक्षेत्रखण्डानीतियावत् तानि यत्र तानि तथा एवंविधेषु वास्तुषु—गृहभूमिषु सर्वेषु चैव—चतुःषष्टिपदशतपदरूपेषु वास्तुषु, चैवशब्दः समुच्चये, स च वास्त्वन्तरपरिग्रहार्थं, अनेकेषां गुणानामु-

पलक्षणाद् दोषाणां च ज्ञायकं, पण्डा जाता अस्येति तारकादित्वादिते पण्डितं—सातिशयबुद्धिमत्, अथ यदि वास्तुन्येकाशीत्यादि विभागास्तावन्तो विभागानां विभाजकास्तावत्यो देवता भविष्यन्तीत्याशङ्कयाह—विधिज्ञं—पञ्चचत्वारिंशतो देवतानां उचितस्थाननिवेशनार्चनादि-विधिज्ञमित्यर्थः । पञ्चचत्वारिंशतोऽपि देवानामेकाशीत्यादिपदवास्तुन्यासस्तथा तच्छिल्पिशास्त्र-नुसारेण दर्श्यते, एतत्संवादनाय सूत्रधारमण्डनकृतवास्तुसारोक्तिरपि लिख्यते,

॥ १ ॥ "चतुःषष्ट्या पदैर्वास्तु, पुरे राजगृहेऽर्चयेत् ।
एकाशीत्या गृहे भागः, शतं प्रासादमण्डपे ॥
॥ २ ॥ ईशः १ पर्जन्यो २ जये ३ न्द्रौ ४, सूर्यः ५ सत्यो ६ भृशो ७ नभः ८ ।
अग्नि ९ पूषा १० थ वितथो ११, गृहक्षत १२ यमौ १३ ततः ॥
॥ ३ ॥ गन्धर्वो १४ भृङ्गराज १५ श्च, मृगः १६ पितृगण १७ स्तथा ।
दौवारिकोऽथ १८ सुग्रीव १९ पुष्पदन्तौ २० जलाधिपः २१ ॥
॥ ४ ॥ असुरः २२ शोष २३ यक्ष्माणौ २४, रोगो २५ऽहि २६ र्मुख्य २७ एव च ।
भल्लाट २८ सोम २९ गिरय ३० स्तथा बाह्येऽदिति ३१ र्दिति ३२ ॥
॥ ५ ॥ आपो ३३ ऽपवत्सा ३४ वीशेऽन्तः, सावित्रः ३५ सविता ३६ ऽग्निगौ ।
इन्द्र ३७ इन्द्रजयो ३८ ऽन्यस्मिन्, वायौ रुद्र ३९ श्च रुद्रराट् ४० ॥
॥ ६ ॥ मध्ये ब्रह्मा ४१ ऽस्य चत्वारो, देवाः प्राच्यादिदिग्गताः ।
अर्यमाख्यो ४२ विवस्वां ४३ श्च, मैत्रः ४४ पृथ्वीधरः ४५ क्रमात् ॥
॥ ७ ॥ ईशकोणादितो बाह्ये, चरकी १ च विदारिका २ ।
पूतना ३ पापा ४ राक्षस्यो, हेतुकाद्याश्च निष्पदाः ॥
॥ ८ ॥ चतुःषष्टिपदैर्वास्तु, मध्ये ब्रह्मा चतुष्पदः ।
अर्यमाद्याश्चतुर्भागा, द्विद्व्यंशा मध्यकोणगाः ॥
॥ ९ ॥ बहिः कोणेष्वर्द्धभागाः, शेषा एकपदाः सुराः ।
एकाशीतिपदे ब्रह्मा, नवार्याद्यास्तु षट्पदाः ॥
॥ १० ॥ द्विपदा मध्यकोणेऽष्टौ, बाह्ये द्वात्रिंशदेकशः ।
शते ब्रह्माष्टसङ्ख्यांशो, बाह्यकोणेषु सार्द्धगौ ॥
॥ ११ ॥ अर्यमाद्यास्तु वस्वंशाः, शेषाः स्यु पूर्ववास्तुवत् ।
हेमरत्नाक्षताद्यैस्तु, वास्तुक्षेत्राकृतिं लिखेत् ॥
॥ १२ ॥ अभ्यर्च्य पुष्पगन्धाद्यैर्बलिदध्याज्यमोदनम् ।
दद्यात् सुरेभ्यः सोङ्कारैर्नमोऽन्तैर्नामभि पृथक् ॥
॥ १३ ॥ वास्त्वारंभे प्रवेशे वा, श्रेयसे वास्तुपूजनम् ।
अकृते स्वामिनाशः स्यात्, तस्मात्पूज्यो हितार्थिभिः ॥
—अत्र च वराहमिहिरोक्त एकाशीतिपदस्य स्थापनाविधिरयं—
॥ १४ ॥ "एकाशीतिविभागे दश २ पूर्वोत्तरायता रेखाः ।
अंतस्त्रयोदश सुरा द्वात्रिंशद्बाह्यकोष्ठस्थाः ॥" इति ।

अथ प्रकृतं प्रस्तूयते—'वत्थुपरिच्छाए'त्ति, अत्र चशब्दोऽध्याहार्यस्तेन वास्तुपरीक्षायां च विधिज्ञमिति योज्यं।

॥ १ ॥ "गृहमध्ये हस्तमितं खात्वा परिपूरितं पुनः श्वभ्रम्।
यद्यूनमनिष्टं तत् समे समं धन्यमधिकं चेत् ॥"

इत्यादि, अथवा वास्तूनां परिच्छदे—आच्छादनं—कटकम्बादिभिरावरणं तत्र विधिज्ञं यथार्हकटम्बादिविनियोजनात्, तथा नेमिपार्श्वेषु—सम्प्रदायगम्येषु भक्तशालासु—रसवतीशालासु कोट्टनीषु—कोट्टं—दुर्गं स्थायिराजसत्कं नयन्ति—प्रापयन्ति यायिराज्ञामिति व्युत्पत्त्या कोट्टन्यः—याः कोट्टग्रहणाय प्रतिकोट्टभित्तय उत्थाप्यन्ते तासु, चशब्दः समुच्चये, तथा वासगृहेषु—शयनगृहेषु विभागकुशलं—यथौचित्येन विभाजकं, चः समुच्चये, तथा छेद्यं—छेदनार्हं काष्ठादि वेध्यं—वेधनार्हं तदेव चः समुच्चये दानकर्म—अङ्कनार्थं गिरिकरक्तसूत्रेण रेखादानं तत्र प्रधानबुद्धिः, तथा जलगानां—जलगतानां भूमिकानां जलोत्तरणार्थकपद्याकरणाय भाजनं—यथौचित्येन विभाजकं, चः समुच्चये, उन्मग्नानिमग्नानद्याद्युत्तरे तस्यैतादृशसामर्थ्यस्य सुप्रतीतत्वात्, जलस्थलयोः सम्बन्धिनीषु गुहास्विव गुहासु सुरङ्गास्वित्यर्थः तथा यन्त्रेषु—घटीयन्त्रादिषु परिखासु—प्रतीतासु, चः पूर्ववत् कालज्ञाने—चिकीर्षितवास्तुप्रशस्ताप्रशस्तलक्षणपरिज्ञाने।

॥ १ ॥ "वैशाखे श्रावणे मार्गे, फाल्गुने क्रियते गृहम्।
शेषमासेषु न पुनः, पौषो वाराहसम्मतः ॥"

इत्यादिके, तथैवेति वाच्यान्तरसंग्रहे शब्दे—शब्दशास्त्रे सर्वकलाव्युत्पत्तेरेतन्मूलकत्वात् वास्तुप्रदेशे—गृहक्षेत्रैकदेशे।

॥ १ ॥ "ऐशान्यां देवगृहं महानसं चापि कार्यमाग्नेय्याम्।
नैर्ऋत्यां भाण्डोपस्करोऽर्थ धान्यानि मारुत्याम् ॥"

इत्यादिगृहावयवविभागे शास्त्रोक्तविधिविधाने प्रधानं—मुख्यं गर्भिण्यो—जातगर्भा दोहदकिता वल्ल्यः फलाभिमुखवल्ल्य इत्यर्थः कन्या इव कन्याः—अफला अथवा दूरफला वा वल्ल्यः वृक्षाश्च वास्तुक्षेत्रप्ररूढा वल्लिवेष्टितानि—भावे क्तप्रत्ययविधानात् वल्लिवेष्टनानि—वास्तुक्षेत्रो-द्गतवृक्षेष्वारोहणानि एतेषां ये गुणदोषास्तेषां विज्ञायकं— विशेषज्ञं, ते चेमे—"गर्भिणी-वल्लिर्वास्तुप्ररूढा आसन्नफलदा, कन्या च सा तत्रैव नासन्नफला, वृक्षाश्च प्लक्षवटाश्वत्थोदुम्बराः प्रशस्ताः आसन्नाः कण्टकिनो रिपुभयदा"इत्यादि, प्रशस्तद्रुमकाष्ठं वा गृहादि प्रशस्तं वल्लिवेष्टितानि प्रशस्तवल्लिसम्बन्धीनि प्रशस्तानि गृहमहीषु न त्वप्रशस्तवल्लिसम्बधीनि, एनमेवार्थमाह वराहः—

॥ १ ॥ "शस्त्रौषधिद्रुमलतामधुरा सुगन्धा, स्निग्धा समा न शुषिरा च मही नृपानाम्
अप्यध्वनि श्रमविनोदमुपागतानां, धत्ते श्रियं किमुत शाश्वतमन्दिरेषु ॥"

पुनस्तदेव विशेषयन्नाह—गुणाढ्यः—प्रज्ञाधारणाबुद्धिहस्तलाघवादिगुणवान् षोडश प्रासादाः—सान्तनस्वस्तिकादयो भूपतिगृहाणि तेषां करणे कुशलः, चतुःषष्टिविकल्पाः गृहाणां वास्तुप्रसिद्धाः तत्र विस्तृता—अमूढा मतिर्यस्य स तथा, विकल्पानां चतुःषष्टिरेवं—प्रमोदविजयादीनि षोडश गृहाणि पूर्वद्वाराणि स्वस्तनादीनि षोडश दक्षिणद्वाराणि धनदादीनि षोडश उत्तरद्वाराणि दुर्भगादीनि षोडश पश्चिमद्वाराणि सर्वमीलने चतुःषष्टिरिति, नन्द्यावर्त्ते—गृहविशेषे एकमग्रेत-

नविशेषणेष्वपि, चः समुच्चये, वर्द्धमाने स्वस्तिके रुचके तथा सर्वतोभद्रसन्निवेशे च बहुर्विशेषः –प्रकारो ज्ञेयतया कर्त्तव्यतया च यस्य तत् तथा, सूत्रे च कश्चित् सप्तमीलोपः प्राकृतत्वात्, नन्द्यावर्तादिगृहविशेषस्त्वयं वराहोक्तः–

॥ १ ॥ "नन्द्यावर्त्तमलिन्दैः शालाकुड्यात् प्रदक्षिणान्तगतैः ।
द्वारं पश्चिममस्मिन् विहाय शेषाणि कार्याणि ॥

॥ २ ॥ द्वारालिंदोऽन्तगतः प्रदक्षिणोऽन्यः शुभस्ततश्चान्यः ।
तद्वच्च वर्द्धमाने द्वारं तु न दक्षिणं कार्यम् ॥

॥ ३ ॥ अपरान्तगतोऽलिन्दः प्रागन्तगतौ तदुत्थितौ चान्यौ ।
तदवधिविधृतश्चान्यः प्राग्द्वारं स्वस्तिकं शुभदम् ॥

॥ ४ ॥ अप्रतिषिद्धालिन्दं समन्ततो वास्तु सर्वतोभद्रम् ।
नृपविबुधसमूहानां कार्यं द्वारैश्चतुर्भिरपि ॥

पुनस्तदेव विशिनष्टि–ऊर्ध्वं दण्डे भव उद्दण्डिकः, भवार्थे इकः, अर्थात् ध्वजः, देवाः–इन्द्रादिप्रतिमाः कोष्ठः–उपरितनगृहं धान्यकोष्ठो वा दारूणि–वास्तूचितकाष्ठानि गिरयो–दुर्गादिकरणार्थं जनावासयोग्याः पर्वताः खातानि–पुष्करिण्यादिकानि वाहनानि–शिबिकादीनि एतेषां विभागे कुशलं, ध्वजविभागस्त्वेवं–

॥ १ ॥ "दण्डः प्रकाशे प्रासादे, प्रासादकरसङ्ख्यया ।
सान्धकारे पुनः कार्यो, मध्यप्रासादमानतः ॥

मू. (७०) *इअ तस्स बहुगुणड्ढे थवईरयणे नरिंदचंदस्स ।*
*तवसंजमनिव्विट्ठे किं करवाणीतुवट्ठाई ।*

वृ. शेषं तत्तदग्रन्थेभ्योऽवसेयं, इत्युक्तप्रकारेण बहुगुणाढ्यं तस्य नरेन्द्रचन्द्रस्यः भरतचक्रिणः स्थपतिरत्नं–वर्द्धकिरत्नं तपःसंयमाभ्यां करणभूताभ्यां निर्विष्टं–लब्धमिति निर्विष्टं–लब्धमिति, किं करवाणीत्यादि तु प्राग्योजितमेव, अथोपस्थितः सन् वर्द्धकिर्यकरोत्तदाह–

मू. (७१) *सो देवकम्मविहिणा खंधावारं नरिंदवयणेणं ।*
*आवसहभवणकलिअं करेइ सव्वं मुहुत्तेणं ॥*

वृ. 'सो देव'इत्यादि, स–वर्द्धकि देवकर्मविधिना–देवकृत्यप्रकारेण चिन्तितमात्रकार्यकरणरूपेणेत्यर्थः– स्कन्धावारं नरेन्द्रवचनेन आवासा–राज्ञां गृहाणि भवनानीतरेषां तैः कलितं करोति सर्वं मुहूर्त्तेन निर्विलम्बमित्यर्थः ।

मू. (७२) *करेत्ता पवरपोसहधरं करेइ २ ता जेणेव भरहे राया जाव एयमाणत्तिअं खिप्पामेव पच्चप्पिणइ, सेसं तहेव जाव मज्जणधराओ पडिनिक्खमइ २ त्ता जेणेव बाहिरिआ उवट्ठाणसाला जेणेव चाउग्घंटे आसरहे तेणेव उवागच्छइ ।*

वृ. कृत्वा च प्रवरपौषधगृहं करोति, कृत्वा च भरो राजा यावत्पदात् 'तेणेव उवागच्छइ २ त्ता' इति ग्राह्यम्, एतामाज्ञप्तिकां क्षिप्रमेव प्रत्यर्पयति, 'सेसं तहेवे'त्यादि सर्वं प्राग्वत् ।

मू. (७३) *(उवागच्छित्ता) तते णं तं धरणितलगमणलहुं ततो बहुलक्खणपसत्थं हिमवंतकंदरंतरणिवायसंवद्धिअचित्ततिणिसदलिअं जंबूणयसुकयकूबरं कणयदंडियारं*

पुलयवरिंदणीलसासगपवालफलिहवररयणलेट्ठुमणिविद्दुमविभूसिअं अडयालीसाररइयतवणिअपट्टसंगहिअजुत्ततुंबं पघसिअपसिअनिम्मिअनवपट्टपरिणिट्ठिअं विसिट्ठलट्ठणवलोहबद्धकम्मं हरिपहरणरयणसरिसचक्कं ककेयणइंदणीलसासगसुसमाहिअबद्धजालकडगं पसत्थविच्छिन्नसमधुरं पुरवरं च गुत्तं सुकिरणतवणिज्जजुत्तकलिअं कंकटयणिजुत्तकप्पणं पहरणाणुजायं खेडगकणगधणुमंडलग्गवरसत्तिकोंततोमरसरसयबत्तीसतोणपरिमंडिअं। कणगरयणचित्तंजुत्तं हलीमुहबलागगयदंतचंदमोत्तिअतणसोल्लिअकुंदकुडयवरसिंदुवारकंदलवरफेणणिगरहारकासप्पगासधवलेहिं अमरमणपवणजइणचवलसिग्घगामीहिं चउहिं चामराकणगविभूसिअंगेहिं तुरगेहिं सच्छत्तं सज्झयं सघंटं सपडागं सुकयसंधिकम्मं सुसमाहिअसमरकणगगंभीरतुल्लघोसं वरकुप्परं सुचक्कं वरनेमीमंडलं वरधारातोंडं वरवइरबद्धतुंबं वरकंचणभूसिअं वरायरिअणिम्मिअं वरतुरगसंपउत्तं वरसारहिसुसंपग्गहिअं वरपुरिसे वरमहारहं दुरूढे आरूढे पवररयणपरिमंडिअं कणयखिंखिणीजालसोभिअं अउज्झं सोआमणिकणगतविअपंकयजासुअणजलणजलिअसुअतोंडरागं।

गुंजद्धबंधुजीवगरत्तहिंगुलगणिगरसिंदूररुइलकुंकुमपारेवयचलणणयणकोइलदसणावरणरइतातिरेगरत्तासोगकणगकेसुअगयतालु सुरिंदगोवगसमप्पभप्पगासं बिंबफलसिलप्पवालउट्ठितसूरसरिसं सव्वोउअसुरहिकुसुमआसत्तमल्लदामं ऊसिअसेअज्झयं महामेहरसिअगंभीरनिद्धघोसं सत्तुहिअयकंपणं पभाए अ सस्सिरीअं नामेणं पुहविविजयलंभंति विस्सुतं लोविस्सुतजसोऽहयं चाउरघंटं आसरहं पोसहिए नरवई दुरूढे।

तए णं से भरहे राया चाउग्घंटं आसरहं दुरूढे समाणे सेसं तहेव दाहिणाभिमुहे वरदामतित्थेणं लवणसमुद्दं ओगाहइ जाव से रहवरस्स कुप्परा उल्ला जाव पीइदाणं से, नवरिं चूडामणिं च दिव्वं उरत्थगेविज्जगं सोणिअसुत्तगं कडगाणि अ तुडिआणि अ जाव दाहिणिल्ले अंतवाले जाव अट्ठाहिअं महामहिमं करेति २ त्ता एअमाणत्तिअं पच्चप्पिणंति।

तए णं से दिव्वे चक्करयणे वरदामतित्थकुमारस्स देवस्स अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए आउहघरसालाओ पडिनिक्खमइ २ त्ता अंतलिक्खपडिवण्णे जाव पूरंते चेव अंबरतलं उत्तरपच्चत्थिमं दिसिं पभासतित्थाभिमुहे पयाते यावि होत्था।

तए णं से भरहे राया तं दिव्वं चक्करयणं जाव उत्तरपच्चत्थिमं दिसिं तहेव जाव पच्चत्थिमदिसाभिमुहे पभासतित्थेणं लवणसमुद्दं ओगाहेइ २ त्ता जाव से रहवरस्स कुप्परा उल्ला जाव पीइदानं से नवरं मालं मउडिं मुत्ताजालं हेमजालं कडगाणि अ तुडिआणि अ आभरणाणि अ सरं च नामाहयंकं पभासतित्थोदगं च गिण्हइ २ त्ता जाव पच्चत्थिमेणं पभासतित्थमेराए अहन्नं देवाणुप्पिआणं विसयवासी जाव पच्चत्थिमिल्ले अंतवाले। सेसं तहेव जाव अट्ठाहिआ निव्वत्ता।

वृ. ('उवागच्छित्ता) तते ण'मित्यादि, उपागत्य च णमिति प्राग्वत् तं प्रसिद्धं वरपुरुषो–भरतचक्री वरमहारथं आरूढ इति सम्बन्धः, कीदृशमित्याह–धरणितलगमने लघुं–शीघ्रं शीघ्रगामिनमित्यर्थः, कीदृशो वरपुरुष इत्याह–ततः–सर्वत्र जयसम्भावनाजनितप्रमोदरसपुलकिततया विस्तीर्णप्रफुल्लहृदय इत्यर्थः, अथ पुना रथं विशिनष्टि–बहुलक्षणप्रशस्तं हिमवतः–क्षुद्रहिमवद्गिरेः

निर्वातानि–वातरहितानि यानि कन्दरान्तराणि–दरीमध्यानि तत्र संवर्द्धिताश्चित्रा–विविधास्तिनिशा–रथद्रुमास्त एव दलिकानि–दारूणि यस्य तं, सूत्रे च पदव्यत्ययः आर्षत्वात्।

जाम्बूनदसुवर्णमयं सुकृतं–सुघटितं कूवरं–युगन्धरं यत्र तं, कनकदण्डिकाः–कनकमयलघुदण्डरूपाः अरा यत्र तं, पुलकानि वरेन्द्रनीलानि सासकानि रत्नविशेषाः प्रवालानि स्फटिकवररत्नानि च प्रतीतानि लेष्टवो–विजातिरत्नानि मणयः–चन्द्रकान्ताद्याः विद्रुमः–प्रवालविशेषः अनयोश्च वर्णादितारतम्यकृतो विशेषो बोध्यः तैर्विभूषितं, रचिताः प्रतिदिशं द्वादश २ सद्भावात् अष्टाचत्वारिंशदरा यत्र ते तथा, विशेषणस्य परनिपातः प्राकृतत्वात्।

तपनीयपट्टे–रक्तस्वर्णमयपट्टकैर्लोके महलू इति प्रसिद्धैः संगृहीते–दृढीकृते तथा युक्ते–उचिते नातिमहती इत्यर्थः ततः पदत्रयस्य कर्मधारयः एतादृशे तुम्बे यस्य स तथा तं, प्रघर्षिताः–प्रकर्षेण घृष्टाः प्रसिताः–प्रकर्षेण बद्धाः ईदृशा निर्मिता–निवेशिताः नवाः–अजीर्णा पट्टाः–पट्टिका यत्र तत्तथाविधं यत्पृष्ठं–चक्रपरिधिरूपं यल्लोके पूंठी इति प्रसिद्धं तत्परिनिष्ठितं–सुनिष्पन्नं कार्यनिर्वाहकत्वेन यस्य स तं, अत्र पदव्यत्ययः प्राकृतत्वात्, विशिष्टलष्टे–अतिमनोज्ञे नवे–सद्यस्के लोहवर्ध्रे–अयश्चर्मरज्जुके तयोः कर्म–कार्यं यत्र स तं, अयमर्थः–

तत्र रथे येऽवयवास्ते लोहवर्धाभ्यां बद्धा इति, हरि–वासुदेवस्तस्य प्रहरणरत्नं–चक्रं 'चक्कमुसलजोही'ति वचनात् तत्सदृशे चक्रे यस्य स तं, कर्केतनेन्द्रनीलशस्करूपरत्नत्रयमयं सुष्ठु–सम्यग् आहितं–निवेशितं कृतसुन्दरसंस्थानमित्यर्थः ईदृशं बद्धं जालकटकं–जालकसमूहो यत्र स तथा तं, अयं भावः–रथगुप्तौ जालकपदवाच्या सच्छिद्ररचनाविशिष्टा अवयवविशेषा बहवस्तत्र शोभां जनयन्तीति, तथा प्रशस्ता विस्तीर्णा समा–अवक्रा धूर्यत्र स तं, पुरमिव गुप्तं समन्ततः कृतवरूथं, रथे हि प्रायः सर्वतो लोहादिमयी आवृतिर्भवति, पुरवद्दृष्टान्तकथनेनायमर्थः–

यथा पुरं गोपुरभागपरित्यागेन समन्ततो वप्रगुप्तं भवति तथाऽयमप्यारोहस्थानसारथिस्थाने विहाय गुप्त इति, सुकिरणं–शोभमानकान्तिकं यत्तपनीयं–रक्तं सुवर्णं तन्मयं योक्त्रं तेन कलितं, योक्त्रेण हि वोढृस्कन्धे युगं बद्ध्यत इति, अत्र च एतत्सूत्रादर्शेषु 'तवणिज्जजालकलि'मिति पाठोऽशुद्ध एव सम्भाव्यते, आवश्यकचूर्णी अस्यैव पाठस्य दर्शनात्, कंकटकाः–सन्नाहास्तेषां नियुक्ता–स्थापिता कल्पना–रचना यत्र स तथा तं, यथाशोभं तत्र सन्नाहाः स्थापिताः सन्तीति भावः, तथा प्रहरणैरनुयातं–भृतमित्यर्थः, एतदेव व्यक्तित आह–खेटकानि प्रतीतानि कणका–बाणविशेषाः धनूंषि मण्डलाग्राः–तरवारयः वरशक्तयः–त्रिशूलानि कुन्ता–भल्लाः तोमराश्च–बाणविशेषाः शराणां शतानि येषु तादृशा ये द्वात्रिंशत्तूणा–भस्त्रकास्तैः परिमण्डितं–समन्ततः शोभितं कनकरत्नचित्रं। तथा युक्तं तुरगैरित्यनेन सम्बद्ध्यते, किंविशिष्टैरित्याह–

हलीमुखं रूढिगम्यमिति बलाको–बकः गजदन्तचन्द्रौ प्रतीतौ मौक्तिकं–मुक्ताफलं तणसोल्लिअत्ति–मल्लिकापुष्पं कुन्दं– श्वेतः पुष्पविशेषः कुटजपुष्पाणि–वरसिन्दुवाराणि निर्गुण्डीपुष्पाणि कन्दलानि–कन्दलवृक्षविशेष- पुष्पाणि वरफेननिकरो हारो–मुक्ताकलापः काशाः–तृणविशेषास्तेषां प्रकाशः–औज्ज्वल्यं तद्वद्धवलैः अमरा–देवा मनांसि–चित्तानि पवनो–वायुस्तान् वेगेन जयतीति अमरमनःपवन- जयिनः, अत एव च–चलशीघ्रं–अतिशीघ्रं गामिनो–गमनशीलाः, ततः पदद्वयकर्मधारयः, तैश्चतुर्भिः–चतुःसङ्ख्याकैः तथा चामरैः कनकैश्च

भूषितमङ्गं येषां ते तथा तैः, चामरस्य स्त्रीत्वं आर्षत्वात्।

अथ पुना रथं विशिनष्टि–सच्छत्रं सध्वजं सघण्टं सपताकमिति प्राग्वत्, सुकृतं–सुष्ठु निर्मित सन्धिकर्म्म–सन्धियोजनं यत्र स तं, सुसमाहितः–सम्यगयथोचितस्थाननिवेशितो यः समरकणकः–संग्रामवाद्यविशेषस्तस्य वीराणां वीररसोत्पादकत्वेन तुल्यो गम्भीरो घोषः–चीत्काररूपो ध्वनिर्यस्य स तं, पदव्यत्ययः प्राकृतत्वात्, वरे कूर्परे पिञ्जनके इति प्रसिद्धे यस्य स तं, सुचक्रं वरनेमीमण्डलं–प्रधानचक्रधारावृतं वरे–शोभमाने धूर्तुंडे–धूर्व्याकूबरं यस्य स तं, वरवज्रैर्बद्धे तुंबे यस्य स तं, वरकाञ्चनभूषितं, वराचार्य–प्रधानशिल्पी तेन निर्मितं वरतुरगैः सम्प्रयुक्तं वरसारथिना सुष्ठु संप्रगृहीतं स्वायत्तीकृतमिति, इह च चक्रादीनां पुनर्वचनं रथावयवेषु प्रधानताख्यापनार्थं। 'वरपुरिसे'इत्यादि तु पूर्वं योजितं, 'दुरूढे आरूढे' इत्यत्र समानार्थकं पदद्वयोपादानं सुखारूढताज्ञापनार्थं, अथवा दुरूढे इत्यस्य सौत्रशब्दस्य विवरणरूपोऽयमारूढशब्द इति, अथार्थान्तरारम्भार्थं पुनरुक्तिर्न दोषायेति उक्तमेवार्थं नामप्रकटनाय रथस्यारोहकालप्रकटनाय चाह–'पवररयणपरिमंडिअ'मित्यादि, प्रवररत्नपरिमण्डितं कनककिङ्किणीजालशोभितं, अयोध्य-मनभिभवनीयमित्यर्थः, सौदामिनी–विद्युत्, तप्तं यत्कनकं तद्धानलोत्तीर्णं रक्तवर्णं भवतीति तप्तशब्देन विशेषितं पङ्कजं–कमलं तच्च सामान्यतो रक्तं वर्ण्यते 'जासुअण' त्ति जपाकुसुमं ज्वलित-ज्वलनो–दीप्ताग्नि अत्र पदविपर्यासः प्राकृतशैलीभवः शुकस्य तुण्डं–मुखं एतेषामिव रागो–रक्तता यस्य स तं।

गुञ्जार्द्ध–रक्तिकारागभागः बन्धुजीवकं–द्विप्रहरविकाशिपुष्पं रक्तः–संमर्दितो हिंगुलकनिकरः सिन्दूरं–प्रतीतं रुचिरं कुङ्कुमं–जात्यघुसृणं पारापतचलनः प्रतीतः कोकिलनयने पदव्यत्ययः आर्षत्वात् दशनावरणं–अधरोष्ठं तच्च सामुद्रिकेऽत्यरुणं व्यावर्ण्यते इति रतिदो–मनोहरोऽतिरक्तः–अधिकारुणोऽशोकतरु ईदृशं च कनकं किंशुकं पलाशपुष्पं तथा गजतालु सुरेन्द्रगोपको–वर्षासु रक्तवर्ण क्षुद्रजन्तुविशेष एभि समा–सदृशा प्रभा–छविर्यस्य तथा एवंविधः प्रकाशः–तजःप्रसरो यस्य स तं, बिम्बफलं–गोल्हकं 'सिलप्पवालं'ति अत्र अश्लीलशब्द इव श्रियं लातीति कपिडादित्वाल्लत्वे श्लीलं एवंविधं यत्प्रवालं श्लीलप्रवालं–परिकर्म्मितविद्रुमः शिलाप्रवालं वा विद्रुमः उत्तिष्ठत्सूरः–उद्गच्छत्सूर्यस्तेषां सदृशं सर्वर्त्तुकानि–षड्ऋतुभवानि सुरभीणि कुसुमानि–अग्रथितपुष्पाणि माल्यदामानि च–ग्रथितपुष्पाणि यत्र स तं, उच्छ्रितः–ऊर्ध्वीकृतः श्वेतध्वजो यत्र स तं, महामेघस्य यद्रसितं–गर्जितं तद्वद् गम्भीरः स्निग्धो घोषो यस्य स तं, शत्रुहृदयकम्पनं, प्रभाते च–अष्टमतपःपारणकदिनमुखे चतुर्घण्टमश्वरथं पौषधिकः–आसन्नपारितपौषधव्रतो नरपतिरारूढ इति सम्बन्धः, सश्रीकं नाम्ना पृथ्वीविजयलाभमिति विश्रुतं, अत्रारूढः पुरुषो भूविजयं लभते इति सान्वर्थनामकमित्यर्थः, कीदृशो नरपतिरित्याह–लोकविश्रुतयशाः, अहतं–कदिदप्यवयवेऽखण्डितं सर्वत्रास्खलितप्रचारं वा रथमित्यर्थः। रथारोहानन्तरं भरतः किं चक्रे इत्याह–

'तए ण'मित्यादि, ततः स भरतो राजा चतुर्घण्टमश्वरथमारूढः सन् शेषं तथैवेति, कियत्पर्यन्तमित्याह– 'जाव दाहिणाभिमुहे' इत्यादि, शेषं सूत्रं मागधतीर्थगमानुसारेण ज्ञेयं, अयोक्तं यावद्दक्षिणाभिमुखो वरदामतीर्थेन वरदामनाम्नाऽवतरणमार्गेण लवणसमुद्रमवगाहते,

'सेसं तहेव'त्ति वचनात् 'अमम्थयरहपन्तरजोहकलिआए सद्धिं संपरिवुडे महया भडचगरपहगरवंदपरिखित्ते चक्करयणदेसिअमग्गो अणेगरायवरसहस्सणुआयमग्गे महया उक्किट्ठसीहणायबोलकलकलरवेणं पक्खुभिअमहासमुद्दरवभूअंपिव करेमाणे २' इत्यन्तं सूत्रं ध्येयं, कियद्दूरं लवणसमुद्रमवगाहते इत्याह–

यावत्तस्य रथवरस्य कूर्परावार्द्रौ भवतः, अत्र यावच्छब्दो न संग्राह्यपदसंग्राहकः किन्तु जलावगाहप्रमाणसूचनार्थ, "जाव पीइदाणंति, अत्रापि मागधदेवसाधनाधिकारोक्तं सूत्रं तावद्वक्तव्यं यावत्प्रीतिदान, 'से तस्य तीर्थाधिपसुरस्य प्रीतिदानशब्देनोपचारात् प्रीतिदानार्थकविवक्षितचूडामण्यादि वस्तूच्यते, अत्र तु 'जाव दाहिणिल्ले अंतवाले'इति सूत्रस्याग्रतो न्यासान्यथानुपपत्या तस्य ग्रहणं ज्ञेयं, न तु दानं, तस्य 'जाव अट्ठाहिअं महामहिमं करेंति'त्ति सूत्रस्थयावच्छब्देन गृहीतत्वात्, तेनायमर्थः– प्रीतिदाननिमित्तकचूडामण्यादिवस्तुग्रहणप्रतिपादकसूत्रं यावद्वक्तव्यमिति, तत्रायं पिण्डार्थ–तुरगनिग्रहणरथस्थापनधनुःपरामर्शशरमोक्षकोपोत्पादकोपापनोदनिजर्द्धिसारसंप्रेक्ष- णप्रीतिदानसूत्राणि मागधतीर्थसूत्राधिकारवद् ज्ञेयानीति, नवरमयं विशेषः प्रीतिदाने चूडामणिं च दिव्यं–मनोहरं सर्वविषापहारी शिरोभूषणविशेषं उरस्थः–वक्षोभूषणविशेषं ग्रैवेयकं–ग्रीवाभरणं श्रोणिसूत्रकं–कटिमेखलां कटकानि–च त्रुटिकानि च, कियद्दूरं वक्तव्यमित्याह–यावद्दाक्षिणात्यो ऽहमन्तपाल इति, प्रीतिवाक्यप्राभृतोपढौकनभरतकृततत्स्वीकरणदेवसन्मानविसर्जनरथपरावृत्तिस्कन्धावारप्रत्यागमनमज्जनगृहगमनस्नानभोजनश्रेणिप्रश्रेणि- शब्दनादिप्रतिपादकसूत्रं वक्तव्यम्, किमन्तमित्याह–अष्टादश श्रेणिप्रश्रेणयोऽष्टाहिकां महामहिमां प्रकुर्वन्ति, एतामाज्ञप्तिकां प्रत्यर्प्पयन्तीति ।

अथ प्रभासतीर्थाधिपसाधनायोपक्रमते–'तए ण'मित्यादि, सर्वं प्राग्वत्, नवरं उत्तरपश्चिमां–वायवीं दिशं शुद्धदक्षिणवर्त्तिनो वरदामतीर्थतः शुद्धपश्चिमावर्त्तिनि प्रभासे गमनाय इत्यमेव पथः सरलत्वात्, अन्यथा वरदामतः पश्चिमागमने अनुवारिधिवेलं गमनेन प्रभासतीर्थप्राप्तिर्दूरेण स्यादिति, प्रभासनामतीर्थं यत्र सिन्धुनदी समुद्रं प्रविशति, अथ तादृक् चक्रर्तनं दृष्ट्वा यत्र पश्चके तदाह– 'तए ण' मित्यादि, सर्वं पूर्ववत्, परं प्रीतिदाने विशेषः, तमेव च सूत्रे दर्शयति– 'नवरि'त्ति नवरं मालां–रत्नमालां मौलिं–मुकुटं मुक्ता–जालं–दिव्यमौक्तिकराशिं हेमजालं–कनकराशिमिति । 'सेसं तहेव'त्ति शेषं–उक्तातिरिक्तं प्रीतिदानोपढौकनस्वीकरण–सुरसन्मानविसर्जनादि तथैव–मागधसुराधिकार इव वक्तव्यं, आवश्यकचूर्णौ तु वरदामप्रभाससुरयोः प्रीतिदानं व्यत्यासेनोक्तमिति । अथ सिन्धुदेवीसाधनाधिकारमाह–

**मू. (७४)** *तए णं से दिव्वे चक्करयणे पभासतित्थकुमारस्स देवस्स अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए आउहघरसालाओ पडिनिक्खमइ २ त्ता जाव पूरेंते चेव अंबरतलं सिंधूए महानईए दाहिणिल्लेणं कूलेणं पुरच्छिमं दिसिं सिंधुदेवीभवणाभिमुहे पयाते आवि होत्था ।*

*तए णं से भरहे राया तं दिव्वं चक्करयणं सिंधूए महानईए दाहिणिल्लेणं कूलेणं पुरत्थिमं दिसिं सिंधुदेवीभवणाभिमुहं पयातं पासइ २ त्ता हट्ठतुट्ठचित्त तहेव जाव जेणेव सिंधूए देवीए भवणं तेणेव उवागच्छइ २ त्ता सिंधूए देवीए भवणस्स अदूरसामंते दुवालसजोअनामं नवजोयणविच्छिन्नं वरणगरसारिच्छं विजयखंधावारणिवेसं करेइ जाव सिंधुए देवीए भवणस्स अदूरसामंते*

*दुवालसजोअणायामं नवजोयणविच्छिन्नं वरणगरसारिच्छं विजयखंधावारणिवेसं करेइ जाव सिंधुदेवीए अट्ठमभत्तं पगिण्हइ २ त्ता पोसहसालाए पोसहिए बंभयारी जाव दब्भसंथारोवगए अट्ठमभत्तिए सिंधुदेविं मनसि करेमाणे चिट्ठइ।*

*तए णं तस्स भरहस्स रन्नो अट्ठमभत्तंसि परिणममाणंसि सिंधूए देवीए आसणं चलइ, तए णं सा सिंधुदेवी आसणं चलिअं पासइ २ त्ता ओहिं पउंजइ२ त्ता भरहं रायं ओहिणा आभोएइ २ त्ता इमे एआरूवे अब्भत्थिए चिंतिए पत्थिए मनोगए संकप्पे समुप्पज्जित्था–उप्पन्ने खलु भो जंबुद्दीवे दीवे भरहे नामं राया चाउरंतचक्कवट्टी, तं जीअमेअं तीअपच्चुप्पण्णमणागयाणं सिंधूणं देवीणं भरहाणं राईणं उवत्थाणिअं करेत्तए, तं गच्छामि णं अहंपि भरहस्स रन्नो उवत्थाणिअं करेमित्ति कट्टु कुंभट्ठसहस्सं रयणचित्तं नानामणिकणगरयणभत्तिचित्ताणि अ दुवे कणगभद्दासणाणि य कडगाणि अ तुडिआणि अ जाव आभरणाणि अ गेण्हइ २ त्ता ताए उक्किट्ठाए जाव एवं वयासी–*

*अभिजिए णं देवाणुप्पिएहिं केवलकप्पे भरहे वासे अहन्नं देवाणुप्पिआणं विसयवासिमी अहन्नं देवाणुप्पिआणं आणत्तिकिंकरी तं पडिच्छंतु णं देवाणुप्पिआ! मम इमं इमं एआरूवं पीइदाणंतिकट्टु कुंभट्ठसहस्सं रयणचित्तं नानामणिकणगकडगाणि अ जाव सो चेव गमो जाव पडिविसज्जेइ। तए णं से भरहे राया पोसहसालाओ पडिनिक्खमइ २ त्ता जेणेव मज्जणघरे तेणेव उवा० २ त्ता ण्हाए कयबलिकम्मे जाव जेणेव भोअणमंडवे तेणेव उवा०२ त्ता भोअणमंडवंसि सुहासणवरगए अट्ठमभत्तं परियादियइ २ त्ता जाव सीहासनवरगए पुरत्थाभिमुहे निसीअइ २ त्ता अट्ठारस सेणिप्पसेणीओ सद्दावेइ २ त्ता जाव अट्ठाहिआए महामहिमाए तमाणत्तिअं पच्चप्पिणंति*

**वृ.** 'तए णं'मित्यादि, व्यक्तार्थं, नवरं पूर्वां दिशमित्यत्र पश्चिमदिग्वर्त्ति प्रभासतीर्थत आगच्छन् वैताढ्यगिरिकुमारदेवसिसाधविषया तद्वासकूटाभिमुखं यियासुः प्रथमतः अनुपूर्वमेव याति, एतच्च दिग्विभागज्ञानं जम्बूद्वीपपट्टादावालेख्यदर्शनाद् गुरुजनसंदर्शितात् सुबोधं, सिन्धुदेवीगृहाभिमुखं च चक्ररत्नं प्रयातं, ननु सिन्धुदीवभवनं अत्रैव सूत्रे उत्तरभरतार्द्धमध्यमखण्डे सिन्धुकुण्डे सिन्धद्वीपे वक्ष्यते तत्कथमत्र तत्सम्भवः ?, उच्यते, महर्द्धिकदेवीनां मूलस्थानादन्यत्रापि भवनादिसम्भवो नानुपपन्नो यथा सौधर्मेन्द्राद्यग्रमहिषीणा सौधर्मादिदेवलोके विमानसद्भावेऽपि नन्दीश्वरे कुण्डले वा राजधान्यः, यथा वाऽस्या एव देव्या असङ्ख्येयतमे द्वीपे राजधानी सिन्ध्वावर्त्तन-कूटे च प्रासादावतंसक इति, एवं सिन्धुद्वीपे सिन्दुदेवीभवनसद्भावेऽपि अत एव ब्रह्मचारी 'जाव दब्भसंथारोवगए' इत्यादि यावद्दर्भसंस्तारकोपगतःष अत्र यावत्करणात् अम्मुक्तमणिसुवर्ण इत्यादि सर्वं पूर्वोक्तं ग्राह्यं, अष्टमभक्तिकः कृताष्टमतपाः सिन्धुदेवी मनसि कुर्वन्–ध्यायंस्तिष्ठति

'तए ण'मित्यादि, ततस्तस्य भरतस्य राज्ञोऽष्टमभक्ते परिणमति–परिपूर्णप्राये जायमाने सिन्ध्वा देव्या आसनं चलति, ततः सा सिन्धुदेवी आसनं चलितं पश्यति दृष्ट्वा अवधिं प्रयुनक्ति प्रयुज्य च भरतं राजानं अवधिना आभोगयति–उपयुङ्क्ते आभोग्य च स्थितायास्तस्या इत्याध्याहार्यं अयमेतद्रूपः आध्यात्मिकश्चिन्तितः प्रार्थितो मनोगतः संकल्पः समुदपद्यत इत्यमेदान्वयसङ्गति स्यात् अन्यथा भिन्नकर्तृकयोः क्रिययोः क्त्वाप्रत्ययप्रयोगानुपपत्ति स्यात्, भिन्नकर्तृकता चैवं–सिन्धुदेवी आभोगयित्री सङ्कल्पश्च समुत्पादकः, इयं च सिन्धुदेवी आसनकम्पनाद्दत्तोपयोगा

सती स्मृतजातीया स्वत एवानुकूलाशया संजज्ञे, तेन न शरप्रमोक्षणाद्यत्र वक्तव्यं, एवं च कर्मचक्रिणां वैताढ्यसुरादीनां साधनेऽपि जिनचक्रिणां तु सर्वत्र दिग्विजययात्रायां शरप्रमोक्षणादिकमन्तरेणैव प्रवृत्ति यतस्तत्र तेषां तथैव साध्यसिद्धिरिति, स च कः सङ्कल्प इत्याह—

'उप्पन्ने'ति उत्पन्नः खलु:—निश्चये जम्बूद्वीपनाम्नि द्वीपे भरतनामनि वर्षे—क्षेत्रे भरतो नाम राजा चतुरन्तचक्रवर्त्ती तज्जीतमेतत्—आचार एषः अतीतवर्त्तमानानागतानां सिन्धुनाम्नीनां देवीनां भरतानां राज्ञां, अत्र बहुवचनं कालत्रयवर्त्तिनां चक्रयर्द्धचक्रिणां परिग्रहार्थं, उपस्थानिकं—प्राभृतं कर्तुं वर्त्तते इति, तद् गच्छामि णमिति प्राग्वत्, अहमपि भरतस्य राज्ञ उपस्थानिकं करोमीति, चिन्तितं हि कार्यं कृतमेव फलदं भवतीत्याह— 'इतिकट्टु' इत्यादि, इतिकृत्वा—चिन्तयित्वा कुम्भाना-मष्टोत्तरं सहस्र रत्नचित्रं नानामणिकनकरत्नानां भक्ति—विविधरचना तया चित्रे च द्वे कनकभद्रासने ऋषभचरित्रे तु रत्नभद्रासने उक्ते कटकानि च त्रुटिकानि च यावदाभरणानि च गृह्णाति, गृहीत्वा च तयोत्कृष्टयेत्यादि यावदेवमवादीदिति, अत्र यावत्पदसंग्रहो व्यक्तः, किमवादीदित्याह— 'अभिजिए णं'मितयादि, अभिजितं देवानुप्रियैः—श्रीमद्भिः केवलकल्पं—परिपूर्णं भरतं वर्षं तेनाहं देवानुप्रियाणां विषयवासिनी—देशवास्तव्या अहं देवानुप्रियानामाज्ञप्तिकिङ्करी—आज्ञासेविका तत् प्रतीच्छन्तु—गृह्णन्तु देवानुप्रियाः ! ममेदमेतद्रूपं प्रीतिदानमिति, अत्र णं सर्वत्र प्राग्वत्, इतिकृत्वा कुम्भाष्टाधिकसहस्रं रत्नचित्रं नानामणिकनकरत्नभक्तिचित्रे द्वे द्वेकनकभद्रासने कटकानि च यावत् स एव मागधसुरगमोऽत्रानुसर्त्तव्यः तावद्यावत्प्रतिविसर्जयति ।

तत उत्तरविधिमाह—'तए णं मि'त्यादि, सर्वं प्राग्वत्, नवरं तावद् वक्तव्यं यावत्ताः श्रेणिप्रश्रेणयोऽष्टाहिकाया महामहिमायास्तामाज्ञप्तिकां प्रत्यर्पयन्ति यथाऽष्टाहिकोत्सवः कृत इति । अथ वैताढ्यसुरसाधनमाह—

**मू. (७५)** *तए णं से दिव्वे चक्करयणे सिंधूए देवीए अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए आउहघरसालाओ तहेव जाव उत्तरपुरच्छिमं दिसिं वेअद्धपव्वयाभिमुहे पयाए आवी होत्था । तए णं से भरहे राया जाव जेणेव वेअद्धपव्वए जेणेव वेअद्धस्स पव्वयस्स दाहिणिल्ले नितंबे तेणेव उवागच्छइ २ त्ता वेअद्धस्स पव्वयस्स दाहिणिल्ले नितंबे दुवालसजोअणायामं नवजोअणविच्छिन्नं वरणगरसरिच्छं विजयखंधावारनिवेसं करेइ २ त्ता जाव वेअद्धगिरिकुमारस्स देवस्स अट्ठमभत्तं पगिण्हइ २ त्ता पोसहसालाए जाव अट्ठमभत्तिए वेअद्धगिरिकुमारं देवं मनसि करेमाणे २ चिट्ठइ ।*

*तए णं तस्स भरहस्स रन्नो अट्ठमभत्तंसि परिणममाणंसि वेअद्धगिरिकुमारस्स देवस्स आसणं चलइ, एवं सिंधुगमो नेअव्वो, पाइदाणं आभिसेक्कं रयणालंकारं कडगाणि अ तुडिआणि अ वत्थाणि अ आभरणाणि अ गेण्हइ २ त्ता ताए उक्किट्ठाए जाव अट्ठाहिअं जाव पच्चप्पिणंति ।*

*तए णं से दिव्वे चक्करयणे अट्ठाहियाए महामहिमाए निव्वत्ताए समाणीए जाव पच्चत्थिमं दिसिं तिमिसगुहाभिमुहे पयाए आवि होत्था, तए णं से भरहे राया तं दिव्वं चक्करयणं जाव पच्चत्थिमं दिसिं तिमिसगुहाभिमुहं पयातं पासइ २ त्ता हट्ठतुट्ठचित्त जाव तिमिसगुहाए अदूरसामंते दुवालसजोअणायामं नवजोअणविच्छिन्नं जाव कयमालस्स देवस्स अट्ठमभत्तं पगिण्हइ २ त्ता पोसहसालाए पोसहिए बंभयारी जाव कयमालगं देवं मणसि करेमाणे २ चिट्ठइ ।*

*तए णं तस्स भरहस्स रन्नो अट्ठमभत्तंसि परिणममाणंसि कयमालस्स देवस्स आसणं चलइ तहेव जाव वेअद्धगिरिकुमारस्स नवरं पीइदानं इत्थीरयणस्स तिलगचोद्दसं भंडालंकारं कडगाणि अ जाव आभरणाणि अ गेण्हइ २ त्ता ताए उक्किट्ठाए जाव सक्कारेइ सम्माणेइ २ त्ता पडिविसज्जेइ जाव भोअणमंडवे, तहेव महामहिमा कयमालस्स पच्चप्पिणंति।*

वृ. 'तए ण'मित्यादि, प्राग्व्याख्यातार्थं, नवरं उत्तरपूर्वां दिशमिति–ईशानकोणं चक्ररत्नं वैताढ्यपर्वताभिमुखं प्रयातं चाप्यभवत्, अयमर्थ–सिन्धुदेवीभवनतो वैताढ्यसुरसाधनार्थं वैताढ्यसुरावासभूतं वैताढ्यकूटं गच्छतः ईशानदिश्येव ऋजुः पन्थाः, 'तए ण'मित्यादि, उक्तप्रायं सर्वं नवरं वैताढ्यपर्वतस्य दाक्षिणात्ये–दक्षिणार्द्धभरतपार्श्ववर्त्तिनि नितम्बे इति, ततस्तस्य भरतस्य राज्ञोऽष्टमभक्ते परिणमति वैताढ्यगिरौ कुमार इव क्रीडाकारित्वात् वैताढ्यगिरिकुमारस्तस्य देवस्यासनं चलति, एवं सिन्धुदेव्याः गमः–सदृशपाठो नेतव्यः–स्मृतिपथं प्रापणीयः, परं सिन्धुदेवी-स्थाने वैताढ्यगिरिकुमारस्तस्य देवस्यासनं चलति, एवं सिन्धुदेव्याः गमः–सदृशपाठो नेतव्यः–स्मृतिपथं प्रापणीयः, परं सिन्धुदेवीस्थाने वैताढ्यगिरिकुमारदेव इति वाच्यं, यच्च सिन्धुदेव्या अतिदेशकथनं तद्व्याख्याधारणमन्तरेणैवायमपि साध्य इति साधर्म्यख्यापनार्थमिति, प्रीतिदानं आभिषेक्यं–अभिषेकयोग्यं राजपरिधेयमित्यर्थः, रत्नालङ्कारं–मुकुटमिति आवश्यकचूर्णौ तथैव दर्शनात्, शेषं तथैव यावच्छब्दाभ्यां ग्राह्यं, तत्र प्रथमो यावच्छब्दः उक्तातिरिक्तविशेषणसहितां गतिं प्रीतिवाक्यं प्राभृतोपनयनग्रहणे सुरसन्मानविसर्जने स्नाभोजने श्रेणिप्रश्रेण्यामन्त्रणं सूचयति, द्वितीयस्तु अष्टाहिकादेशदानकरणे इति।

अथ तमिस्रगुहाधिपकृतमालसुरसाधनार्थमुपक्रमते–'तए ण'मित्यादि, ततस्तद्दिव्यं चक्ररत्नं अष्टाहिकायां महामहिमायां निवृत्तायां सत्यां अर्थाद्वैताढ्यगिरिकुमारस्य देवस्य यावत् पश्चिमादिशं तमिस्रागुहाभिमुखं प्रयातं चाप्यभवत्, वैताढ्यगिरिकुमारसाधनस्थानस्य तमिस्रयाः पश्चिमा-वर्त्तित्वात्। 'तए ण०, सर्वं प्राग्वत्, प्रीतिदानेऽत्र विशेषः, स चायं–स्त्रीरत्नस्य कृते तिलकं-ललाटाभरणं रत्नमयं चतुर्दशं यत्र तत्तिलकचतुर्दशं ईदृशं भाण्डालङ्कारं–प्राकृतत्वादलङ्कारशब्दस्य परनिपाते अलङ्कारभाण्डं आभरणकरण्डकमित्यर्थः, चतुर्दशाभरणानि चैवम्–

॥ १ ॥ "हार १ द्धहार २ इग ३ कणय ४ रयण ५ मुत्तावली ६ उ केऊरे ७।
कडए ८ तुडिए ९ मुद्दा १० कुंडल ११ उरसुत्त १२ चूलमणि १३ तिलयं १४॥" ति

कटकानि च, अत्र कटकादीनि स्त्रीपुरुषसाधारणानीति न पौनरुक्त्यमित्यादि तावद् वक्तव्यं यावद् भोजनमण्डपे भोजनं, तथैव–मागधसुरस्येव महामहिमा अष्टाहिका कृतमालस्य प्रत्यर्प्पयन्त्याज्ञां श्रेणिप्रश्रेणय इति।

**मू. (७६)** *तए णं से भरहे राया कयमालस्स अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए सुसेणं सेनावइं सद्दावेइ २ त्ता एवं वयासी–गच्छाहि णं भो देवाणुप्पिआ! सिंधूए महानईए पच्चत्थिमिल्लं निक्खुडं ससिंधुसागरगिरिमेरागं समविसमनिक्खुडाणि अ ओअवेहि ओअवेत्ता अग्गाइं वराइं रयणाइं पडिच्छाहि अग्गाइं० पडिच्छित्ता ममेअमाणत्तिअं पच्चप्पिणाहि।*

*तते णं से सेनावई बलस्स नेआ भरहे वासंमि विस्सअजसे महाबलपरक्कमे महप्पा ओअंसी तेअलक्खणजुत्ते मिलक्खुभासाविसारए चित्तचारुभासी भरहे वासंमि निक्खुडाणं निण्णाण य*

तत इति क्रियाक्रमसूचकं वचनं तं प्रसिद्धगुणं नाम्ना कमलामेकं अश्वरत्नं सेनापति क्रमेण–सन्नाहादिपरिधानविधिना समभिरूढ–आरूढः, किंविशिष्टमित्याह–अशीत्यङ्गुलानि उच्छ्रितं, अंगुलं चात्र मानविशेषः, नवनवत्यंगुलानि–एकोनशतांगुलप्रमाण परिणाहो–मध्यपरिधिर्यस्य तत्तथा, अष्टोत्तरशतांगुलान आयतं–दीर्घं, सर्वत्र मकारोऽलाक्षणिकः, तुरगाणां तुङ्गत्वं खुरतः प्रारभ्य कर्णावधि परिणाहः पृष्ठपार्श्वोदरान्तरावधि आयामो मुखाद्यापुच्छमूलं, यदाह

॥१॥ ''मुखादापेचकं दैर्घ्यं, पृष्ठपार्श्वोदरान्तरात् ।
आनाह उच्छ्रयः पादाद्, विज्ञेयो यावदासनम् ॥ १ ॥''

तत्रोच्चत्वसङ्ख्यामेलनाय साक्षादेव सूत्रकृदाह–'बत्तीस'मित्यादि, द्वात्रिंशदंगुलोच्छ्रितशिरस्कं चतुरंगुलप्रमाणकर्णकं, ह्रस्वकर्णत्वस्य जात्यतुरगलक्षणत्वात्, अनेन कर्णयोरुच्चत्वेनास्य स्थिरयौवनत्वमभिहितं शंकुकर्णत्वात्, हयानां यौवनपाते वनितास्तनयोरिव अनयोः पातः स्यात्, दीर्घत्वं चार्षत्वात्, अत्र योजनायाः क्रमप्राधान्येन पूर्वं कर्णविशेषणं ज्ञेयं पश्चाच्छिरसः, अश्वश्रवसो मूर्ध्न उच्चतरत्वात्, विंशत्यङ्गुलप्रमाणा बाहा–शिरोभागाधोवर्त्ती जानुनोरुपरिवर्त्ती प्राक्चरणभागो यस्य तत्तथा, चतुरंगुलप्रमाणं जानु–बहुजंघसंधिरूपोऽवयवो यस्य तत्तथा, तथा षोडशांगुलप्रमाणा जंघाजान्वधोवर्त्ती खुरावधिरवयवो यस्य तत्तथा, चतुरंगुलोच्छ्रिताः खुराः–पादतलरूपा अवयवा यस्य तत्तथा, एषामवयवा- नामुच्चत्वमीलने सर्वसङ्ख्या पूर्वोक्ता अशीत्यंगुलरूपा, मकारः सर्वत्रालाक्षणिकः, यत्तु श्रेष्ठाश्वमा- नमाश्रित्य लौकिकपारासरग्रन्थे ।

॥१॥ 'जघन्यमध्यश्रेष्ठानामश्वानामायतिर्भवेत् ।
अंगुलानां शतं हीनं, विंशत्या दशभिस्त्रिभिः ॥
॥२॥ परिणाहोऽङ्गुलानि स्यात्, सप्तति सासप्ततिः ।
एकाशीति समासेन, त्रिविधं स्याद् यथाक्रमम् ॥
॥३॥ तथा षष्टिश्चतुःषष्टिरष्टषष्टि समुच्छ्रयः ।
द्विपञ्चसप्तकयुता, विंशति स्यान्मुखायति ॥

इत्यत्र सप्तनवत्यंगुलान्यायतिः एकाशीत्यंगुलानि परिणाहः अष्टषष्ट्यंगुलानि समुच्छ्रयः सप्तविंशत्यंगुलानि मुखायतिरित्युक्तमस्ति तदपरश्रेष्ठहयानाश्रित्य न तु हयरत्नमाश्रित्य, दृष्टश्चायं विशेषः पुरुषोत्सेधे सामुद्रिके उत्तमपुरुषाणामष्टोत्तरशतांगुलान्युत्सेधः उत्तमोत्तमानां तु विंशत्युत्तरशतांगुलानि, अनेनास्य प्रमाणोपेतत्वं सूचितं, सम्प्रत्यवयवेषु लक्षणोपेतत्वं सूचयति–मुक्तोलीनाम अध उपरि च सङ्कीर्णा मध्ये त्वीषद्विशाला कोष्ठिका तद्वत् संवृत्तं–सम्यग्वर्तुलं वलितं–वलनस्वभावं न तु स्तब्धं मध्यं यस्य तत्तथा परिणाहस्य मध्यपरिधिरूपस्यात्रैव चिन्त्यमानत्वादुचितेयमुपमा, ईषदंगुलं यावत् प्रणतं–नन्तुमारब्धं अतिप्रणतस्योपवेष्टुर्दुखावहत्वात् पृष्ठं–पर्याणस्थानं यस्य तत्तथा आरोहकसुखावहपृष्ठकमित्यर्थः, सम्यग्–अधोऽधः क्रमेण नतं पृष्ठं यस्य तत्तथा, सङ्गतं–देहप्रमाणोचितं पृष्ठं यस्य तत्तथा, सुजातं–जन्मदोषरहितं पृष्ठं यस्य तत्तथा, प्रशस्तं–शालिहोत्रलक्षणानुसारि पृष्ठं यस्य तत्तथा, किं बहुना ? विशिष्टपृष्ठं–प्रधानपृष्ठमितियावत्, उक्तं पृष्ठे पर्याणस्थानवर्णनं, अथ तत्रैवावशिष्टभागं विशिनष्टि–एणी–हरिणी तस्या जानुवदुन्नतं उभयपार्श्वयोर्विस्तृतं च चरमभागे स्तब्धंसुद्धं पृष्ठं यस्य तत्तथा, वेत्रो–जलवंशः लता–कम्बा

कशा–चर्म्मदण्डस्तेषां निपातैस्तथा अंकेल्लणप्रहारैः– तर्जनकविशेषाघातैश्च परिवर्जितं अशववारमनोऽनुकूलचारित्वात् अङ्गं यस्य तत्तथा, तपनीयमयाः स्थासका–दर्पणाकारा अश्वालङ्कारविशेषा यत्र तदेवंविधं अहिलाणं–मुखसंयमनविशेषो यस्य तत्तथा, वरकनकमयानि सुष्ठु–शोभनानि पुष्पाणि स्थासकाश्च तैर्विचित्रा रत्नमयी रज्जु पार्श्वयोः– पृष्ठोदरान्तवर्त्यवयवविशेषयोर्यस्य तत्तथा, वध्यन्ते हि पट्टिकाः पर्याणदृढीकरणार्थमश्वानामुभयोः पार्श्वयोरिति, काञ्चनयुतमणिमयानि केवलकनकमयानि च प्रतरकाणि–पत्रिकाभिधानभूषणानि अन्तरान्तरा येषु तानि तथाभूतानि नानाविधानि घण्टिकाजालानि मौक्तिकजालकानि च तैः परिमण्डितेन पृष्ठेन शोभमानेन शोभमानं कर्केतनादिरत्नमयं मुखमण्डनार्थं रचितं आविद्धमाणिक्यं–प्रोतमाणिक्यं सूत्रकं–हयमुखभूषणविशेषस्तेन विभूषितं कनकमयपद्मेन सुष्ठु कृतं तिलकं यस्य तत्तथा, देवमत्या–स्वर्गिचातुर्येण विविधप्रकारेण कल्पितं–सज्जितं सुरवरेन्द्र- वाहनम्–उच्चैःश्रवा हयस्तस्य योग्या–मण्डलीकरणाभ्यासस्तस्या 'व्रज गतौ' वित्यस्याचप्रत्यये व्रजं–प्रापकं ।

ये गत्यर्थास्ते प्राप्त्यर्था इति वचनात् अयं भावः–यादृशं खुरलीश्रमपुच्चैःश्रवाः करोति तादृशमयमपि, अत्र षष्ठ्यर्थे द्वितीया प्राकृतत्वात्, तथा सुरूपं–सुन्दरं प्रवन्ति–इतस्ततो दोलायमानानि सहजचञ्चलाङ्गत्वाद् गलपालमौलिकर्णद्वयमूलविनिवेशितत्वेन पञ्चसङ्ख्याकानि यानि चारूणि चामराणि तेषां मेलक–एकस्मिन् मूर्द्धनि सङ्गमस्तं धरद्–वहत्, चामरा इत्यत्र स्त्रीनिर्देशः समयसिद्ध एव, गौडमतेन वा चामरा इत्याबन्तः शब्दः, अत्रापीडशब्दे व्याख्यायमाने मूर्द्धालंकार एवोक्तो भवति, न तु कर्णाद्यलङ्कारः, दृश्यन्ते च लोके एकं चामरं मूर्द्धालङ्कारभूतं चामरद्वयं च कर्णालङ्कारभूतं एकं च भालालङ्कारभूतं एकं च कंठालङ्कारभूतमिति, तेन यथोक्तव्याख्यानमेव सुन्दरं, अथ देवमतिविकल्पितादिविशेषणविशिष्ट उच्चैःश्रवानाम शक्रहयोऽपि स्यादित्याह–अनभ्रवाहं–अनभ्रचारी अभ्रवाहः अश्वः उच्चैःश्रवास्तदन्यं 'अदब्भवाह'मिति पाठे तु अदभ्रं–भूरि वहतीति अदभ्रवाहस्तत्, अभेले–दोषादिना असंकुचिते नयने यस्य तत्तथा ।

अत एव कोकासिते–विकसिते बहले–दृढे अनश्रुपातित्वात् पत्रले–पक्ष्मवती न तु ऐन्द्रलुप्तिकरोगवशाद्रोमरहिते अक्षिणी यस्य तत्तथा, सदावरणे–शोभार्थं दंशमशकादिरक्षार्थं वा प्रच्छादनपटे नवकनकानि–नव्यस्वर्णानि यस्य तत्तथा स्वर्णतन्तुव्यूतप्रच्छादनपटमित्यर्थः, तप्तपनीयं तद्वदरुणे तालुजिह्वे यत्र तदेवंविधमास्यं यस्य तत्तथा, ततः पूर्वविशेषणेन कर्मधारयः, श्रीकाया–लक्ष्म्या अभिषेकः–अभिषेचनं नाम शारीरलक्षणं घोणायां–नासिकायां यस्य तत्तथा, क्वचित्पाठान्तरे तु सिरिसातिसेअघोणमिति दृश्यते, तत्र शिरीषं–शिरीषपुष्पं तद्वदतिश्वेता घोणा यस्येति, तथा पुष्करपत्रमिव–कमलदलमिव सलिलस्य बिन्दवो यत्र तदेवंविधं, कोऽर्थः ?–यथा पुष्करपत्रं जलान्तरस्थं वाताहतजलबिन्दुयुतं भवति तथेदमपि सलिलं–पानीयं लावण्यमित्यर्थः तस्य बिन्दवः–छटास्तैर्युतं, बिन्दुग्रहणेनात्र प्रत्यङ्गं लावण्यं सूचितं, लोकेऽपि प्रसिद्धमेतत् मुखेऽस्य पानीयमिति, अचंचलं–स्वामिकार्यकरणे स्थिरं, साधुवाहित्वात्, चञ्चलशरीरं जातिस्वभावात्

अथ यदि चञ्चलाङ्गस्तदाऽमेध्यवस्तुष्वपि स्वाङ्गप्रवर्त्तको भविष्यतीत्याह–चोक्षः–कृतस्नानश्चरको–धाटिभिक्षाचरः परिव्राजको–मस्करी ततश्चरकसहितः परिव्राजकश्चरकपरिव्राजकः, प्रथमा द्वितीयार्थे, तेन चरपरिव्राजकमिव प्राकृतशैल्या अकारप्रश्लेषादभिलीयमानं २–

अशुचिसंसर्गशङ्कया आत्मानं संवृण्वन्तं २, आभीक्ष्ण्ये चात्र द्विर्वचनं, एवमग्रेऽपि भाव्यं, अथास्य क्रियाविशेषैर्जात्यत्वं लक्षयति–खुरप्रधानश्चरणाः खुरचरणास्तेषां चच्चपुटाः आधतविशेषा-स्तैर्धरणितलमभिघ्नदभिघ्नद्, ननु भूतलविलिखनं सामान्यः पुंस इवाश्वस्यापलक्षणमिति, न, एतस्य लक्षणत्वेन शालिहोत्रे प्रतिपादनाद्, यतः ''खुरैः खनेद्यः पृथिवीमश्वो लोकोत्तरः स्मृत'' इति, अश्ववारप्रयोगनर्त्तितो हि हयोऽग्रपादावुदस्यति, तत्रास्य शक्तिं विशेषणद्वारेण दर्शयति – द्वावपि च चरणौ यमकसमकं–युगपत् मुखाद्विनिर्गमविव–निस्सारयदिव, कोऽर्थः ? –

इदमग्रपादादूर्ध्वं नयत्तथा मुखान्तिकं प्रापयति यथा जन उत्प्रेक्षते–इमौ मुखाद्विनिर्गमयति, पुनः क्रियान्तरदर्शनेनैतद्विशिनष्टि–शीघ्रतया–लाघवविशेषेण मृणालं–पद्मनालं तस्य तन्तुः–सूत्राकारोऽवयवविशेषः स च उदकं च ते अपि निश्राय–अवलंब्य आस्तामन्यद् दुर्गादिकं प्रक्रामत्, सञ्चरत्, अयमर्थयथा अन्येषां सञ्चरिष्णूनां मृणालतंतूदके पादावष्टम्भके न भवतः तथा नास्येति, सूत्रे चैकवचनमार्षत्वात्, तथा जति–मातृपक्षः कुलं–पितृपक्षः रूपं–सदाकारसंस्थानं तेषां प्रत्ययो–विश्वासो येभ्यस्ते च ते प्रशस्ताः प्रदक्षिणावहत्वात् शुभस्थानस्थितत्वाच्च ये द्वादशाव-र्तास्ते यत्र तत्तथा, बहुव्रीहिलक्षणः कप्रत्ययः, विशुद्धानि–दोषामिश्रितानि लक्षणानि अश्वशास्त्र-प्रसिद्धानि यस्य तत्तथा, ततः पदद्वयस्य कर्मधारयः, द्वादशावर्त्ताश्च इमे वराहोक्ताः–

॥ १ ॥ ये प्रपाणगलकर्णसंस्थिताः, पृष्ठमध्यनयनोपरिस्थिताः ।
ओष्ठसक्थिभुजकुक्षिपार्श्वगास्ते ललाटसहिताः सुशोभनाः ॥

अत्र वृत्तिलेशः–प्रपाणं–उत्तरोष्ठतलं गलः–कण्ठः यत्र स्थित आवर्त्तो देवमणिनामा हयानां महालक्षणतया प्रसिद्धः कर्णौ–प्रतीतौ एतेषु स्थानेषु संस्थिताः तथा पृष्ठं–पर्याणस्थानं मध्यं प्रतीतं नयने अपि तथैव तदुपरि स्थिताः, तथा ओष्ठौ प्रतीतौ सक्थिनी–पाश्चात्यपादयोर्जानूपरिभागः भुजौ–प्राकपादयोर्जानूपरिभागः कुक्षि–अत्र वामो दक्षिणकुक्ष्यावर्त्तस्य जात्यपेक्षया द्वादशैव स्थानानि, स्थानभेदानुसारेण स्थानिभेदा अपि द्वादशैवेति, तथा सुकुलप्रसूतं–हयशास्त्रत्वेऽपि जात्यपेक्षया द्वादशैव स्थानानि, स्थानभेदानुसारेण स्थानिभेदा अपि द्वादशैवेति, तथा सुकुलप्रसूतं–हयशास्त्रोक्तक्षत्रियाश्वपितुकं मेधावि–स्वामिपदसंज्ञादिप्राप्तार्थधारकं भद्रकं–अदुष्टं विनीतं–स्वामीष्टकारित्वात् अणुकतनुकानां–अतिसूक्ष्माणां सुकुमालानां लोम्नां स्निग्धा छविर्यत्र तत्तथा, सुष्ठु यातं–गमनं यस्य तत्तथा, अमरमनःपवनगरुडाः प्रतीताः तान् वेगाधिक्येन जयतीति अमरमनःपवनगरुडजयित, अत एव चपलशीघ्रगामि च–अतिशीघ्रगतिकं पश्चात्पदद्वयकर्मधारयः क्षान्त्या–क्रोधाभावेन न त्वसामर्थ्येन या क्षमा तया ऋषिमिव–अनगारमिव ।

क्षमाप्रधानत्वात्तस्य, न चरणैर्लत्तादायकं न च मुखेन दशकं न च पुच्छाघातकरणिति, सुशिष्यमिव प्रत्यक्षताविनीतं, अत्र ताकारः प्राकृतशैलीभवस्तेन प्रत्यक्षविनीतं, उदकं हुतवहः–अग्नि पाषाणः पांसू–रेणुः कर्दमः सशर्करं–सलघूपलखण्डं स्थानं सवालुकं–अत्र स्वार्थे इकप्रत्ययः बहुलसिकताकणं स्थानं तटं–नदीतटं कटको–गिरिनितम्बः विषमप्राग्भारौ प्राग्वद् गिरिदर्यः प्रतीतास्तासु लंघनं–अतिक्रमणं प्रेरणं–आरूढस्य पुंसोऽभिमुखदर्शनमुखदर्शनधावनादिना संज्ञाक-रणपूर्वकं प्रवर्त्तनं निस्तारणा–तत्पारप्रापणा तत्र समर्थं, न चण्डैः–उग्रैः सुभटैः रणे पातितं दण्डवत् पततीत्येवंशीलं दण्डपाति अतर्कितमेव प्रतिपक्षस्कन्धावारे पतनशीलं, अनेनास्योत्प-तनस्वभावोऽपि सूचितः, मार्गादिखेदमेदस्यपि नाश्रु पातयतीत्येवंशीलमनश्रुपाति, तथा

अकालतालु—अश्यामतालुकं, पूर्वं रक्ततालुत्वे वर्णितेऽपि यत्पुनरकालतालु इति विशेषणं तत्तालुनः श्यामत्वमतितरामपलक्षणमिति तन्निषेधख्यापनार्थं, चः समुच्चये, काले—अराजकानां राजनिर्णयार्थके अधिवासनादिके समये हेषते—शब्दायतीत्येवंशीलं कालहेषि, जिता निद्रा—आलस्यं येन तत्, कार्येष्वप्रमादित्वात्, यथाश्रुतार्थे व्याख्यायमाने स्वयशा- स्त्रविरोधः—तथाहि—

॥१॥ "सदैव निद्रावशगा, निद्राच्छेदस्य सम्भवः ।
जायते सङ्गरे प्राप्ते, कर्करस्य च भक्षणे ॥" इति ।

यद्वा जितनिद्रत्वं समरावसरप्राप्तत्वादश्वरत्नत्वेनाल्पनिद्राकत्वाच्च, तथा गवेषकं—मूत्रपुरीषोत्सर्गादौ उचितानुचितस्थानान्वेषकं, जितपरीषहं—शीतातपाद्यातुरत्वेऽपि अखिन्नं, जात्यां प्रधाना जाति—मातृपक्षस्तत्र भवं जात्यजातीयं निर्दोषमातृकमित्यर्थः, निर्दोषपितृकत्वं तु प्रागुक्तं, ईदृग्गुणयुक्तो हि समये स्वामिने न द्रुह्यति मातृमुखावगतस्वकाणत्वव्यतिकर-प्रकुपितधिल्लितस्वामिद्रोहककिशोरवत्, मल्लि—विचकिलकुसुमं तद्वच्छुभ्रः अश्लेष्मलत्वे-नाविलमपूतिगन्धि च घ्राणं—प्रोथो यस्य तत्तथा, ईकारः प्राकृतशैलीभवः, ततः पूर्वपदेन कर्मधारयः, शुकपत्रवत्—शुकपिच्छवत् सुष्ठु वर्णो यस्य तत्तथा, कोमलं च कायेन, ततः पदद्वयस्य कर्मधार-यसमासः, मनोऽभिरामं 'कमलामेलं नामे ण'मित्यादि प्राग्वद् व्याख्येयमिति ।

ततः स किं कृतवानित्याह—'कुवलय'इत्यादि, तदसिरत्नं नरपतेर्हस्ताद् गृहीत्वा स सेनानी-र्यत्रैवापातकिरातास्तत्रैवोपागच्छति, उपागत्य चापातकिरातैः सार्द्धं सम्प्रलग्नश्चाप्ययोद्धुमिति शेषः, तच्छब्दवाक्यं यच्छब्दवाक्यमपेक्षत इत्याह्रियते यदिति, यत् किंविशिष्टमित्याह—कुवलयदलश्यामलं नीलोत्पलदलसदृशमित्यर्थः, चः समुच्चये, रजनिकरमण्डलं—चन्द्रबिम्बं तस्य निभं—सदृशं परिभ्राम्यमाणं यद्वर्तुलिततेजस्कत्वेन नीलोत्पलदलसदृशमित्यर्थः, चः समुच्चये, रजनिकरमण्डलं—चन्द्रबिम्बं तस्य निभं—सदृशं परिभ्राम्यमाणं यद्वर्तुलिततेजस्कत्वेन चन्द्रमण्ड-लाकारं दृश्यते इत्यर्थः, अथवा रजनिकरमण्डलनिभं मुखे इति शेषः, शत्रुजनविनाशनं, कनक-रत्नमयो दण्डो—हस्तग्रहणयोग्यो मुष्टिर्यस्य तत्तथा, नवमालिकानामकं यत्पुष्पं तद्वत् सुरभिगन्धो यस्य तत्तथा, नानामणिमय्यो लता—वल्लयाकारचित्राणि तासां भक्तयो—विविधरचनास्ता-भिश्चित्रं—आश्चर्यकृत्, चः विशेषणसमुच्चये, प्रधौता—शाणोत्तारेण निष्किट्टीकृता अत एव 'मिसिमि-सेंते'त्ति दीप्यमाना तीक्ष्णा धारा यस्य तत्तथा, दिव्यं खड्गरत्नं—खड्गजातिप्रधानं लोकेऽनुपमानं अनन्यसदृशत्वात्, तच्च पुनर्बहुगुणमस्तीति शेषः, कीदृशं ?

वंशा—वेणवः रूक्षा—वृक्षाः शृङ्गाणि महिषादीनां अस्थीनि प्रतीतानि दन्ता हस्त्यादीनां कालायसं—लोहं विपुललोहदण्डकश्च—वरवज्रं हीरकजातीयं तेषां भेदकं, अत्र वज्रकथनेन दुर्भेद्यानामपि भेदकत्वं कथि, किं बहुना ?—यावत्सर्वत्राप्रतिहतं, दुर्भेदेऽपि वस्तुनि अमोघशक्ति-कमित्यर्थः, किं पुनर्जङ्गमानां—चराणां पशुमनुष्यादीनां देहेषु, अत्र यावच्छब्दो न संग्राहकः किन्तु भेदकशक्तिप्रकर्षोक्तयेऽवधिवचनः, अथ तस्य मानमाह—

मू. (८२) *पन्नासंगुलदीहो सोलस से अंगुलाइं विच्छिण्णो ।*
*अद्धंगुलसोणीको जेट्ठपमाणो असी भणिओ ॥*

वृ. पञ्चाशदङ्गुलानि दीर्घो यः षोडशांगुलानि विस्तीर्ण अर्द्धांगुलप्रमाणा श्रोणि—बाहल्यं

पिण्डो यस्य स तथा, ज्येष्ठं—उत्कृष्टं प्रमाणं स्य स तथा, एवंविधः सोऽसिर्मणितः, यदन्यत्रा-सेर्द्वात्रिंशदंगुलप्रमाणत्वं श्रूयते तन्मध्यममानापेक्षया, यदाह वराहः—"अंगुलशतार्द्धमुत्तम ऊनः स्यात्पञ्चविंशति खङ्गः।

*मू. (८३) असिरयणं नरवइस्स हत्थाओ तं गहिऊण जेणेव आवाडचिलाया तेणेव उवागच्छइ २ त्ता आवाडचिलाएहिं सद्धिं संपलग्गे आवि होत्था॥ तए णं से सुसेणे सेनावइ ते आवाडचिलाए हयमहियअपवरवीरघाइअजावदिसोदिसिं पडिसेहेइ।*

वृ. एतयोः सङ्क्ययोर्मध्ये मध्यम इति, उत्तरवाक्ययोजना तु प्राक् कृता, अथ सैन्येशायोधनादनन्तरं किं जातमित्याह— 'तए णं'मित्यादि, ततः आयोधनादनन्तरं स सुषेणः सेनापतिस्तानापातकिरातान् हतमथितेत्यादिविशेषणविशिष्टान् यावत्करणात् विहडिअचिंधद्धयपडागे किच्छप्पाणोवगए इति ग्राह्यं, दिशो दिशि प्रतिषेधयति। अथ ते किं कुर्वन्तीत्याह—

*मू. (८४) तए णं ते आवाडचिलाया सुसेणसेनावइणा हयमहिआ जाव पडिसेहिया समाणा भीआ तत्था वहिआ उव्विग्गा संजायभया अत्थामा अबला अवीरिआ अपुरिसक्कारक्कमा अधारणिज्जमितिकट्टु अनेगाइं जोअणाइं अवक्कमंति २ त्ता एगयओ मिलायंति २ त्ता जेणेव सिंधू महानई तेणेव उवागच्छंति २ त्ता वालुआसंथारए संथरेंति २ त्ता वालुआसंथारए दुरूहंति २ त्ता अट्ठमभत्ताइं पगिण्हंति २ त्ता वालुआसंथारोवगया उत्ताणगा अवसणा अट्ठमभत्तिआ जे तेसिं कुलदेवया मेहमुहानामं नागकुमारा देवा ते मणसी करेमाणा २ चिट्ठंति।*

*तए णं तेसिमावाडचिलायाणं अट्ठमभत्तंसि परिणमाणंसि मेहमुहाणं नागकुमाराणं देवाणं आसणाइं चलंति, तए णं ते मेहमुहा नागकुमारा देवा आसणाइं चलिआइं पासंति २ त्ता ओहिं पउंजंति २ त्ता आवाडचिलाए ओहिणा आभोएंति २ त्ता अण्णमण्णं सद्दावेंति २ त्ता एवं वयासी—*

*एवं खलु देवाणुप्पिआ! जंबुद्दीवे दीवे उत्तरद्धभरहे वासे आवाडचिलाया सिंधूए महानईए वालुआसंथारोवगया उत्ताणगा अवसणा अट्ठमभत्तिआ अम्हे कुलदेवए मेहमुहे नागकुमारे देवे मणसी करेमाणा २ चिट्ठंति। तं सेअं खलु देवाणुप्पिआ! अम्हं आवाडचिलायाणं अंतिए पाउब्भवित्तएत्तिकट्टु अन्न- मन्नस्स अंतिए एअमट्ठं पडिसुणेंति पडिसुणेत्ता ताए उक्किट्ठाए तुरिआए जाव वीतिवयमाणा २ जेणेव जंबुद्दीवे दीवे उत्तरद्धभरहे वासे जेणेव सिंधू महानई जेणेव आवाडचिलाया तेणेव उवागच्छंति २ त्ता अंतलिक्खपडिवण्णा सखिंखिणिआइं पंचवण्णाइं वत्थाइं पवर परिहिआ ते आवाडचिलाए एवं वयासी—*

*हं भो आवाडचिलाया! जण्णं तुब्भे देवाणुप्पिआ! वालुआसंथारोवगया उत्ताणगा अवसणा अट्ठमभत्तिआ अम्हे कुलदेवए मेहमुहे नागकुमारे देवे मनसी करेमाणा २ चिट्ठह तए णं अम्हे मेहमुहा नागकुमारा देवा तुब्भं कुलदेवया तुम्हं अंतिअण्णं पाउब्भूआ, तं वदह णं देवाणुप्पिआ किं करेमो के व भे मणसाइए?, तए णं ते आवाडचिलाया मेहमुहाणं नागकुमाराणं देवाणं अंतिए एअमट्ठं सोच्चा निसम्म हट्ठतुट्ठ चित्तमाणंदिआ जाव निअया उट्ठाए उट्ठेन्ति २ त्ता जेणेव मेहमुहा नागकुमारा देवा तेणेव उवागच्छंति २ त्ता करयलपरिग्गहियं जाव मत्थए अंजलिं कट्टु मेहमुहे नागकुमारे देवे जएणं विजएणं वद्धावेंति २ त्ता एवं वयासी—*

*एस णं देवाणुप्पिए! केइ अपत्थिअपत्थए दुरंतपंतलक्खणे जाव हिरिसिरिपरिवज्जिए जे*

*णं अम्हं विसयस्स उवरिं विरिएमं हव्वमागच्छइ, तं तहा णं घत्तेह देवाणुप्पिआ ! जहा णं एस अम्हं विसयस्स उवरिं विरिएणं नो हव्वमागच्छइ, तए णं ते मेहमुहा नागकुमारा देवा ते आवाडचिलाए एवं वयासी–*

*एस णं भो देवा० ! भरहे नामं राया चाउरंतचक्कवट्टी महिद्धीए जाव महासोक्खे, नो खलु एस सक्को केणइ देवेण वा दानवेण वा किन्नरेण वा किंपुरिसेण वा महोरगेण वा गंधव्वेण वा सत्थप्पओगेण वा अग्गिप्पओगेण वा मंतप्पओगेण वा उद्दवित्तए पडिसेहित्तए वा, तहाविअ णं तुब्भं पिअट्ठयाए भरहस्स रन्नो उवसग्गं करेमोत्तिकट्टु तेसिं आवाडचिलायाणं अंतिआओ अवक्कमंति २ ता वेउव्विअसमुग्घाएणं सम्मोहणंति २ त्ता मेहाणीअं विउव्वंति २ त्ता जेणेव भरहस्स रन्नो विजयक्खंधावारणिवेसे तेणेव उवागच्छंति २ त्ता उप्पिं विजयक्खंधा- वारणिवेसस्स खिप्पमावे पतणुतणायंति खिप्पामेव पविज्जुयायन्ति २ त्ता खिप्पामेव जुगमुसलमुट्ठिप- माणमेत्ताहिं धाराहिं ओघमेघं सत्तरत्तं वासं वासिउं पवत्ता यावि होत्था ।*

वृ. 'तए णं'मित्यादि, ततस्ते आपातकिराताः सुषेणसेनापतिना हतमथिता यावत्प्रतिषेधिताः सन्तो भीता–भयाकुलाः त्रस्ता–नष्टाः व्यथिताः–प्रहारार्दिताः उद्विग्नाः–अथ पुनर्नानेन सार्द्धं युद्धयामहे इत्यपुनःकरणाशयवन्तः, ईदृशाः कुत इत्याह–सञ्जातभयाः–सम्यक् प्राप्तभयाः अस्थामानः– शक्तिविकलाः अबलाः–शारीरशक्तिविकलाः पुरुषकारः–पुरुषाभिमानः स एव निष्पादित स्वप्रयोजनः पराक्र मस्ताभ्यां रहिताः आधरणीयं–धारयितमुशक्यं परबलमितिकृत्वा अनेकानि योजनान्यपक्र मन्ति–अपसरन्ति पलायन्ते इत्यर्थः, ततः किं कुर्वन्तीत्याह–'अपक्रम्यते आपातकिराता एकतः–एकस्मिन् स्थाने मेलयन्ति मेलापकं कुर्वन्तीत्यर्थः, मेलयित्वा च यत्रैव सिन्धुर्महानदी तत्रैवोपागच्छन्ति, उपागत्य च वालुकासंस्तारकान् संस्तृणान्ति–सिकता- कणमयान् संस्तारान् कुर्वन्ति, संस्तीर्य च वालुकासंस्तारकानारोहन्ति, आरुह्य चाष्टमभक्तं प्रगृह्णन्ति, वालुकासंस्तारोपगता उत्तानकाः–ऊर्ध्वमुखशायिनः अवसना–निर्वस्त्राः, एवं च घरमातापनाकष्टमनुभवन्त इत्युक्तं, अष्टमभक्तिका–दिनत्रयमनाहारिणः, ये तेषां कुलदेवताः–कुलवत्सला देवा मेघमुखा नागकुमारा देवास्तान् मनसि कुर्वन्तः २ तिष्ठन्तीति ।

अथ ते देवाः किमकुर्वन्नित्याह–'तए णं'मित्यादि, ततः–चेतसि चिन्तानन्तरं तेषामापातकिरातानां अष्टमभक्ते परिणमति सति परिपूर्णप्राये इत्यर्थः, मेघमुखानां नागकुमाराणां देवानामासनानि चलन्ति, ततस्ते मेघमुखा नागकुमारा देवा आसनानि चलितानि पश्यन्ति, दृष्ट्वा चावधिं प्रयुञ्जन्ति, प्रयुज्य चावधिना आपातकिरातानाभोगयन्ति, आभोग्य चान्योऽन्यं शब्दयन्ति, शब्दयित्वा चैवमवादिषुः, किमवादिषुरित्याह– एवं–इत्यमस्ति खलुः–निश्चये हे देवानुप्रियाः ! किं तदित्याह–जम्बूद्वीपे द्वीपे उत्तरार्द्धभरते वर्षे आपातकिराताः सिन्ध्वां महानद्यां वालुकासंस्तारकान् उपगताः–प्राप्ताः सन्तः उत्तानका अवसना अष्टमभक्तिका अस्मान् कुलदेवतान् मेघमुखनामकान् नागकुमारान् देवान् मनसि कुर्वाणाः २ तिष्ठन्तीति, ततः श्रेयः खलु भो देवानुप्रिया

अस्माकमापातकिरातनामन्तिके प्रादुर्भवितुं–समीपे प्रकटीभवितुमितिकृत्वा–पर्यालोच्यान्योऽन्यस्यान्तिके एतमर्थअनन्तरोक्तमभिधेयं प्रतिश्रृ ण्वन्ति–अभ्युपगच्छन्ति, परस्परं साक्षीकृत्य प्रतिज्ञातं कार्यं कर्त्तव्यमवश्यमिति दृढीभवन्तीत्यर्थः, प्रतिश्रवणानन्तरं ते यच्चक्रुस्तदाह–'पडि-

सुणेत्ता' इत्यादि, प्रतिश्रुत्य च ते देवास्तयोत्कृष्टया त्वरितया गत्या यावद् व्यतिव्रजन्तो २ यत्रैव जम्बूद्वीपो द्वीपो यत्रैव चोत्तरभरार्द्धं वर्षं यत्रैव च सिन्धुर्महानदी यत्रैव चापातकिराता-स्तत्रैवोपागच्छन्ति उपागत्य चान्तरिक्षप्रतिपन्नाः सकिंकिणीकानि पञ्चवर्णानि वस्त्राणि प्रवराणि परिहितास्तानापातकिरातानेवमवादिषुः, किमवादिषुरित्याह- हं भो ! इति सम्बोधने आपातकिराताः यत् णं वाक्यालङ्कारे सर्वत्र यूयं देवा० ! वालुकासंस्तारकोपगत यावदष्टमभक्तिका अस्मान् कुलदेवता मेघमुखान् नागकुमारान् देवान् मनसि कुर्वाणा २ तिष्ठत. ततो वयं मेघमुखा नागकुमारा देवा युष्माकं कुलदेवताः सन्तो युष्माकमन्तिकं प्रादुर्भूताः तद्वदत देवानुप्रियाः ! किं कुर्म-किं कार्यं विदध्मः किं आचेष्टामहे-कां चेष्टां कुर्मः-कस्मिन् व्यापारे प्रवर्त्तामहे किं वा भे-भवतां मनःस्वादितं-मनोऽभीष्टमिति कुलदैवतप्रश्नानन्तरं ते यदचेष्टन्त तदाह-

'तए णं'मित्यादि, ततस्ते आपातकिराता मेघमुखानां नागकुमाराणां देवानामन्तिके एतमर्थं श्रुत्वा निशम्य च 'हट्टतुट्ठे'त्यादि प्राग्वत् उत्थानं उत्था-ऊर्ध्वं भवनं तया उत्तिष्ठन्ति-ऊर्ध्वीभवन्ति इत्यर्थः, उत्थाय च यत्रैव मेघमुखा नागकुमारा देवास्तत्रैवोपागच्छन्ति, उपागत्य च 'करयले'त्यादि प्राग्वत, मेघमुखान् नागकुमारान् देवान् जयेन विजयेन वर्द्धयन्ति, वर्धयित्वा चैवमादिषुरिति, यदवादिषुस्तदाह-'एस णं'मित्यादि, देवानुप्रिया ! एष कश्चिदप्रार्थितप्रार्थकादिविशेषणविशिष्टो अस्मद्देशोपर्यागच्छति, तेन तथा प्रकारेण णमिति-एनं धत्तेह-प्रक्षिपत यथा पुनर्नायातीति पिण्डार्थः, अथ यन्मेघमुखा ऊचुस्तदाह- 'तए णं'मित्यादि, व्यक्तं, किमवोचुस्ते इत्याह-

'एस णं'मित्यादि, हे देवानुप्रिया ! एष भरतो नाम राजा चतुरंतचक्रवर्ती महर्द्धिको महाद्युतिको यावन्महासौख्यः नो खलु एष भरतः शक्यः केनचिद्देवेन वा-वैमानिकेन दानवेन वा-भवनवासिना किन्नरेणेत्यादि पदचतुष्कं व्यन्तरविशेषवाचकं तेन वा शस्त्रप्रयोगेण वा अग्निप्रयोगेण वा मन्त्रप्रयोगेण वा, त्रयाणामप्युत्तरोत्तरबलाधिकता ज्ञेया, शस्त्रभ्योऽग्निस्तस्मान्म-न्त्रो बलाधिक इति, उपद्रवयितुं वा-उपद्रवं कर्तुं प्रतिषेधयितुं वा-युष्मद्देशाक्रमणरूपपापकर्मतो निवर्तयितुमिति, सर्वत्र वाशब्दः समुच्चयार्थः, तथापि-इत्थं दुस्साधे कार्ये सत्यपि युष्माकं प्रियार्थतायै-प्रीत्यर्थं भरतस्य राज्ञ उपसर्गं कुर्म इतिकृत्वा तेषामापातकिरातानमन्तिकाद-पक्रामन्ति-यान्ति निस्सरन्तीत्यर्थ इति प्रतिज्ञातवन्तः, ततः किं कृतवन्त इत्याह-

'अवक्कमित्ता वेउव्विअसमुग्घाएणं'मित्यादि, अपक्रम्य च-व्रजित्वा वैक्रियसमुदघातेन-उत्तरवैक्रियार्थकप्रयत्नविशेषेण समवघ्नन्ति-आत्मप्रदेशान् विक्षिपन्ति शरीराद् बहिर्विकिर-न्तीत्यर्थः समवहत्य च तैरात्मप्रदेशैर्गृहीतैः पुदगलैर्मेघानीकं-अभ्रपटलकं विकुर्वन्ति विकुर्व्य च यत्रैव भरतस्य विजयस्कन्धावारनिवेशस्तत्रैवोपगच्छन्ति उपागत्य च विजयस्कन्धावारनिवेश-स्योपरि क्षिप्रमेवेत्यादि सर्वं पुष्कलसंवर्त्तकमेघाधिकार इव वाच्यं यावद्वर्षितुं प्रवृत्ताश्चाप्यभवंस्ते देवा इति।

इति व्यतिकरे यद्भरताधिपः करोति तदाह-

मू. (८५) *तए णं से भरहे राया उप्पिं विजयक्खंधावारस्स जुगमुसलमुट्ठिप्पमाणमेत्ताहिं धाराहिं ओघमेघं सत्तरत्तं वासं वासमाणं पासइ २ ता चम्मरयणं परामुसइ, तए णं तं सिरिवच्छ-सरिसरूवं वेढो भाणिअव्वो जाव दुवालसजोअणाइं तिरिअं पवित्थरइ तत्थ साहिआइं ।*

*तए णं से भरहे राया सखंधावारबले चम्मरयणं दुरूहइ २ ता दिव्वं छत्तरयणं परामुसइ, तए णं नवनउइसहस्सकंचणसलागपरिमंडिअं महरिहं अउज्झं णिव्वणसुपसत्थविसिट्ठलट्ठकंचण-*

*सुपुट्ठदंडं मिउरायवट्टलट्ठअरविंदकण्णिअसमाणरूवं वत्थिपएसे अ पंजरविराइअं विविहभत्तिचित्तं मणिमुत्तपवालत्ततवणिअपंचवण्णिअधोअरयणरूवरइयं रयणमरीईसमोप्पणाकप्पकारं-मणुरंजिएल्लियं रायलच्छिचिंधं अज्जुणसुवण्णपंडुरपच्चत्थुअपट्ठदेसभागं तहेव तवणिज्जपट्टधम्मंतपरिगयं अहिअसस्सिरीअं सारयरयणिअरविमलपडिपुण्णचंदमंडलसमाणरूवं नरिंदवामप्पमाणपगइवित्थडं कुमुदसंडधवलं रण्णो संचारिमं विमाणं सूरातववायवुट्ठिदोसाण य खयकरं तवगुणेहिं लद्धं–*

**वृ.** 'तए ण'मित्यादि, ततो–दिव्यवर्षानन्तरं स भरतो राजा स्वसैन्ये उक्तप्रकारेण सप्तरात्रिप्रमाणकालेन वर्षं वर्षन्तं–मेघवृष्टिं जायमानां पश्यति दृष्ट्वा च चर्मरत्नं परामृशति, अत्रावसागतं चर्मरत्नवर्णकसूत्रमतिदिशन्नाह–'तए ण'मित्यादि, सर्वं पूर्ववत्, 'तए ण'मित्यादि कण्ठ्यं, अथेदं छत्ररत्नं कीदृशमिति जिज्ञासूनां तत्स्वरूपप्रकटनायाह–'तए ण'मित्यादि, तत इति प्रस्तावनावाक्योपन्यासे, छत्ररत्नं महीपतेः–भरतस्य शरत्पिततलस्य पूर्णचन्द्र इव पूर्णचन्द्रो वर्त्तते इति योगः, किंविशिष्टं ? –नवनवतिसहस्रप्रमाणाभिः काञ्चनमयशलाकाभि परिमण्डितं महार्घं–बहुमूल्यं अथवा महान्–चक्रवर्त्ती तस्य अर्हं–योग्यं अयोध्यं–अयोधनीयं अस्मिन् दृष्टे न हि प्रतिभटानां शस्त्रमुत्तिष्ठते इति भावः, निर्व्रणः–छिद्रग्रन्थ्यादिदोषरहितः सुप्रशस्तो–लक्षणोपेतत्वात् विशिष्टलष्टः–अतिमनोज्ञः अथवा विशिष्टः–अतिभारतया एकदण्डेन दुर्वहत्वात् प्रतिदण्डसहितः ईदृशश्च यो लष्टः काञ्चनमयः सुपुष्टोऽतिभारसहत्वात् दण्डो यत्र तत्तथा, मृदु–सुकुमालं घृष्टमृष्टत्वात् राजतं–रूप्यसम्बन्धि वृत्तं लष्टं यदरविन्दं तस्य कर्णिका–बीजकोशस्तेन समानं श्वेतत्वाद्वृत्तत्वाच्च रूपं–आकारो यस्य तत्तथा, बस्तिप्रदेशो नाम छत्रमध्यभागवर्त्ती दण्डप्रक्षेपस्थानरूपस्तत्र, चः समुच्चये, पञ्जरेण–पञ्जराकारेण विराजितं, विविधाभिर्भक्तिभि–विच्छित्तिभी रचनाप्रकारैश्चित्रं–चित्रकर्म यत्र तत्तथा, एतदेव विशिष्याह– मणयः–प्राग्व्यावर्णितस्वरूपाः मुक्ताप्रवाले प्रतीते तप्तं–मूषोत्तीर्णं यत्तपनीयं–रक्तसुवर्णं पञ्चवर्णिकानि, सूत्रे मत्वर्थीय इकप्रत्ययः, धौतानि–शाणोत्तारेण दीप्तिमन्ति कृतानि रत्नानि प्रागव्यावर्णितस्वरूपाणि तैः रचितानि रूपाणि–पूर्णकलशादिमङ्गल्यवस्तूनामाकारा यत्र तत्तथा, पदव्यत्ययः प्राकृतत्वात्, तथा रत्नानां मरीचिसमर्पणा–समारचना तस्यां कल्पकरा–विधिकारिणः परिकर्मकारिण इत्यर्थः

तदैरनुसम्प्रदायक्रमं रञ्जितं, यथोचितस्थानं रङ्गदानात्, मकारोऽलाक्षणिकः स्वार्थे इल्लेकौ प्रत्ययौ प्राकृतशैलीभवौ, राजलक्ष्मीचिन्हं अर्जुनाभिधानं यत्पाण्डुरस्वर्णं तेन प्रत्यवस्तृतः-आच्छादितः पृष्ठदेशभागो यस्य तत्तथा, पदव्यत्ययः प्राकृतत्वात्, तथैवेति विशेषणान्त-रप्रारम्भे ध्मायमानं तत्कालध्मातमित्यर्थः यत्तपनीयं तस्य पट्टस्तेन परिगतं–परिवेष्टितं, चतुर्ष्वपि प्रान्तेषु रक्तसुवर्णपट्टा योजिताः सन्तीति, पदव्यत्ययः पूर्ववत्, अत एवाधिकसश्रीकं शारदः–शरत्कालसत्को रजनिकरः–चन्द्रस्तद्वद्विमलं–निर्मलं प्रतिपूर्णचन्द्रमण्डलसमानरूपं ततो विशेषण-समासः, नरेन्द्रः–प्रस्तावाद् भरतस्तस्य व्यायामः–तिर्यक्प्रसारितोभयबाहुप्रमाणो मानविशेषस्तेन प्रमाणेन प्रकृत्या–स्वभावेन विस्तृतं, यत्तु चक्रिपरामृष्टं साधिकद्वादशयोजनानि विस्तृणाति तदस्य कारणिको विस्तार इति सूचितं, कुमुदानि–चन्द्रविकाशीनि तेषां खण्डं–वनं तद्वद्धवलं राज्ञो–भरतस्य सञ्चरणशीलं जङ्गमं विमानं आश्रयिणां सुखावहत्वात्, सूरातपवातवृष्टयः प्रतीतास्तासां ये दोषास्तेषां क्षयकरं यद्वा सूरातपवातवृष्टीनां दोषाणां च–विषादिजन्यानां क्षयकरं,

एतच्छत्रच्छायसमाश्रितानां हि विषादिदोषा अपि न प्रभवन्तीति विशेषः, तपोगुणैः–पूर्वजन्माचीर्णतपोगुणमहिम्ना लब्धं भरतेन।

**मू. (८६)** *अहयं बहुगुणदानं उऊण विवरीअसुहकयच्छायं।*
*छत्तरयणं पहाणं सुदुल्लहं अप्पपुण्णाणं॥*

**वृ.** अथ गाथाबन्धेन विशेषणान्याह विचित्रत्वात्सूत्रकारप्रवृत्तेः, अहतं–न केनापि योधंमन्येन रणे खण्डितमित्यर्थः, बहूनां गुणानां–एश्वर्यादीनां दानं यस्य तत्तथा, ऋतूनां–हेमन्तादीनां विपरीता अथवा आर्षत्वात् षष्ठ्यर्थे पञ्चमीव्याख्यानेन ऋतुभ्यो विपरीता उष्णर्त्तौ शीता शीतर्त्तौ उष्णा अत एव कृतसुखा छाया यस्य, सूत्र क्तान्तस्य परनिपातो 'जातिकालसुखादेर्नवा' इत्यनेन विकल्पविधानात्, छत्रेषु रत्नं–उत्कृष्टं प्रधानं छत्रगुणोपेतत्वात्, सुदुर्लभमल्पपुण्यानामिति।

**मू. (८७)** *पमाणराईण तवगुणाण फलेगदेसभागं विमाणवासेवि दुल्लहतरं वग्घारिअमल्लदामकलावं सारयधवलब्भरययणिगरप्पगासं दिव्वं छत्तरयणं महिवइस्स धरणिअलपुण्णइंदो। तए णं से दिव्वे छत्तरयणे भरहेणं रण्णा परामुट्ठे समाणे खिप्पामेव दुवालस जोअणाइं पवित्थरइ साहिआइं तिरिअं।*

**वृ.** प्रमाणराज्ञां–स्वस्वकालोचितशरीरप्रमाणोपेतराज्ञां अष्टसहस्रलक्षणलक्षितत्वात् प्रमाणीभूतराज्ञां वा -षट्खण्डधिपत्वेन सर्वराजसम्मतत्वात्, एतेन वासुदेवादिव्युदासस्तेषां त्रिखण्डभोक्तृत्वात्, चक्रवर्तिना राज्ञा तपोगुणानां–पूर्वभवविशिष्टतपसां फलानां एकदेशभागरूपं, सूत्रे क्लीबलिङ्गनिर्देशः प्राकृतत्वात्, कोऽर्थ? -- चक्राधिपपूर्वार्जिततपसां फलं–सर्वस्वं नवनिधान चतुर्दशरत्नादिषु विभक्तं, तेन तदेकदेशभूतमिदं छत्ररत्नं विमानवासेऽपि -देवत्वेऽपि दुर्लभतरं, तत्र चक्रवर्तित्वस्यासम्भवात्, 'वग्घारिअ'त्ति प्रलम्बितो लम्बतयाऽवलम्बितो माल्यदाम्नां–पुष्पमालानां कलापः–समूहो यत्र तत्तथा, समन्ततः पुष्पमालावेष्टितमिति भावः, शारदानि–शरत्कालभावीनि धवलान्यभ्राणि–वार्दलानि शारदश्च रजनिकरः–चन्द्रः तद्वत्प्रकाशो–भास्वरत्वजनित उद्द्योतो यस्य तत्तथा, दिव्यं–सहस्रदेवाधिष्ठितं शेषपदयोजना प्राक् कृतैवास्ति, अथ प्रकृतम्–

'तए णं' मित्यादि, ततस्तद्दिव्यं छत्ररत्नं भरतेन राजा परामृष्टं–स्पृष्टं सत्क्षिप्रमेव चर्म्मरत्नवत् द्वादशयोजनानि साधिकानि तिर्यक् प्रविस्तृणाति, साधिकत्वं चात्र परिपूर्णचर्मरत्नपिधायकत्वेन, अन्यथा किरातकृतवृष्ट्युपद्रवः स्वसैन्यस्य दुर्वारः स्यादिति॥

अथ छत्ररत्नप्रविस्तरणानन्तरं यच्चक्रे तदाह–

**मू. (८८)** *तए णं से भरहे राया छत्तरयणं खंधावारस्सुवरिं ठवेइ २ त्ता मणिरयणं परामुसइ वेढो जाव छत्तरयणस्स वत्थिभागंसि ठवेइ, तस्स य अनतिवरं चारुरूवं सिलणिहिअत्थमंतमेत्तसालिज वगोहूमसुग्गमासतिलकुलत्थसट्ठिगनिप्फावचणगकोद्दवकोत्थुंभरिकंगुवरगरालगअनेगधण्णावरणहारिअगअल्लगमूलगहलिद्दलाउअतउसतुंबकालिंगकविट्ठअंबअंबिलिअसव्वणिप्फायए सुकुसले गाहावइरयणेत्ति सव्वजणवीसुअगुणे।*

*तए णं से गाहावइरयणे भरहस्स रन्नो तद्दिवसप्पइण्णणिप्फाइअपूइआणं सव्वधन्नाणं अनेगाइं कुंभसहस्साइं उवट्ठवेति, तए णं से भरहे राया चम्मरयणसमारूढे छत्तरयणसमोच्छन्ने*

*मणिरयणकउज्जोए समुग्गयभूएणं सुहंसुहेणं सत्तरत्तं परिवसइ—*

**वृ.** 'तए ण'मित्यादि, ततः स भरतः छत्ररत्नं स्कन्धावारस्योपरि स्थापयति स्थापयित्वा च मणिरत्नं परामृशति, 'वेढो जाव'त्ति अत्र मणिरत्नस्य वेष्टको—वर्णको यावदिति सम्पूर्णो वक्तव्यः पूर्वोक्तः, स च 'तोतं चउरंगुलप्पमाण'मित्यादिकः, परामृश्य च चर्मरत्नछत्ररत्नसम्पुट-मिलननिरुद्धसूर्यचन्द्राद्यालोके सैन्येऽहर्निशमुद्योतार्थं छत्ररत्नस्य वस्तिभागे मणिरत्नं स्थापयति, ननु एवं सति सकलसैन्यावरोधः समजनित, तथा च तत्र कतं भोजनादिविधिरित्याशङ्कमानं प्रत्याह— तस्य भरतस्य राज्ञः चो वाच्यान्तरद्योतनार्थ गृहपतिरत्नं—कौटुम्बिकरत्नमस्तीति गम्यते, किंविशिष्टं ? – इति—अमुना प्रकारेण सर्वजनेषु विश्रुता गुणा यस्य तत्तथा, इतीति किं ?—न विद्यते अतिवरं—अतिप्रधानं वस्तु अपरं यस्मात्तत्तथा, चारुरूपमिति व्यक्तं, तथा शिला इव शिला अतिस्थिरत्वेन चर्मरत्नं तत्र निहितमात्राणां—उप्तमात्राणां न तु लौकिकप्रसिद्धभूमिखेटनप्रभृतिकर्मसापेक्षाणां 'अत्थमंत'त्ति अर्थवतां—प्रयोजनवतां भक्षणाद्यर्हाणामित्यर्थः शाल्यादीनां निष्पादकं, यद्वा शिलानिहितानां प्रात इति गम्यं शाल्यादीनां अत्थमंतमेत्तत्तिअस्तमयति मित्रे—सूर्ये सायमित्यर्थ निष्पादकं, संवादी चायमप्यर्थः, यदुक्तं ऋषभचरित्रे—

॥१॥ "चर्मरत्ने च सुक्षेत्र, इवोप्तानि दिवामुखे।
सायं धान्यन्यजायन्ति, गृहिरत्नप्रभावतः ॥"इत्यादि,

उभयत्र व्याख्याने पदानां व्यत्ययेन निर्देशः प्राकृतत्वात्, तत्र शालयः—कलमाद्याः यवा—हयप्रियाः गोदूम मुद्गा माषास्तिलाः कुलत्थाः प्रतीताः षष्टिकाः षड्‌भ्यहोरात्रैः परिपच्यमानस्तन्दुलः निष्पाद्या—वल्लाः चणकाः कोद्रवाः प्रतीताः 'कोत्थुंभरि'त्ति कुस्तुम्भर्यो—धान्यककणाः कङ्गवो—बृहच्छिरस्काः 'वरग'त्ति वरट्टाः रालका—अल्पशिरस्काः उपलक्षणात् मसूरादयोऽन्येऽपि धान्यभेदा ग्राह्याः, अनेकानि धान्या इति—धान्यापत्राणि वरणो –वनस्पतिविशेषस्तत्पत्राणि एतत्प्रभृतीनि यानि हरितकानि पत्रशाकानि मेघनादवास्तुलकादीनि, पूर्वं च कुस्तुबरीशब्देन धान्यभेदः संगृहीतः इदानीं तत्पत्राणां भक्ष्यत्वेन पत्रशाखेषु संग्रह इति न पौनरुक्त्यं, 'अल्लगमूलगहलिद्द'त्ति आर्द्रकहरिद्रे प्रतीते, एते च सूरणकन्दाद्युपलक्षणभूते, मूलकं—हस्तिदन्तकं, इदं च गृञ्जनादि-मूलकोपलक्षणं, एतेन कन्दमूलशाके कथिते, अथ फलशाकान्याह—अलाबुतुम्बं त्रपुषं— चिर्भटजातीयं तुम्बकलिङ्गकपित्थाम्लिकाः प्रतीताः, इदमपि फल-शाकोपलक्षणं तेन जीवन्त्या-दिपरिग्रहः आलुवुतुम्बयोर्लम्बत्ववृत्तत्वकृतो भेदः, स च तज्जातीयबी- जकृत इति जनप्रसिद्धि, सर्वशब्देन चोक्तातिरिक्तशाकादीनां ग्रहः, ननु यदि गृहपतिरत्न- मचिरक्रियया मन्त्रसंक्रियया धान्यादिकं निष्पादयति तर्हि किं चर्म्मरत्ने ब्रीजवपनेन ?, तन्निर- पेक्षतयैव तत् निष्पादयतु, तस्य दिव्यशक्तिकत्वात्, उच्यते, इतरकारणकलापसंघटनपूर्वकत्वेनैव कारणस्य कार्यजनकत्वनियमात्, अन्यथा सूर्यपाकरसवतीकारा नलादयः सूर्यविद्यामहिम्ना रसवतीं परिपचन्तोऽपि तन्दुलसूपशाकवेषवारादिसमाग्रीनापेक्षेरन्निति, अत एव सुकुशलं— अतिनिपुणं निजकार्यविधावतिनिपुणं शेषं प्राग्योजितं, अथोक्तगुणयोगि गृहपतिरत्नं यदवसरोचितं चकार तदाह—

'तए ण'मित्यादि, ततः चर्म्मरत्नच्छत्ररत्नसम्पुटसंघटनानन्तरं तद् गृहपतिरत्नं भरतस्य राज्ञः स एव दिवसस्तद्दिवसः—उपस्थानदिवसस्तस्मिन् प्रकीर्णकानां—उप्तानां निष्पादितानां

परिपाकदश प्रापितानां पूतानां–निर्बुसीकृतानां सर्वधान्यानामनेकानि 'कुम्भसहस्राणि' कुम्भानां राशिरूपमानविशेषाणां सहस्राणि उपस्थापयति–उपढौकयति प्राभृतीकरोतीत्यर्थः, कुम्भमानं त्वेवमनुयोगद्वारसूत्रोक्तं–''दो असईओ पसई दो पसईओ सेइआ चत्तारि सेइआओ कुडओ चत्तारि कुडया पत्थो चत्तारि आढयं चत्तारि आढया दोणो सट्ठिं आढयाइं जहण्णे कुंभे असीति आढयाइं मज्झिमए कुंभे आढयसयं उक्कोसए कुंभे' त्ति, अत्र व्याख्या अत्राशतिः–अवाङ्मुखहस्ततलरूपा मुष्टिरित्यर्थः तत्प्रमाणं धान्यमप्यशतिरेवोच्यते, तद्वप्रसृति–नावाकारतया व्यवस्थापिता प्राञ्जलकरतलरूपोच्यते, द्वे प्रसृती सेतिका–मगधदेशप्रसिद्धो मानविशेषो, न तु इह प्रसिद्धा, तस्याः प्रस्थचतुर्गुणत्वात्, चतस्रः सेतिकाः कुडवः–पल्लिकासमानो माप्यविशेषः, चत्वारः कुडवाः प्रस्थो मागधमानसमानं माप्यं, चत्वारः प्रस्थाः आढकः–सेतिकाप्रमाणः चत्वार आढका द्रोणः–चतुःसेतिकाप्रमाणः षष्ट्या आढकैः पञ्चदशभिर्द्रोणैरित्यर्थ जघन्यः अशीत्या आढकैर्विंशत्या द्रोणैरित्यर्थ मध्यमः कुम्भः तथा आढकानां शतेन पञ्चविंशत्या द्रोणैरित्यर्थ उत्कृष्टः कुम्भ इति, अत्र च 'सव्वधन्नाणं' ति सूत्रमुपलक्षणपरं तेनान्यदपि यत्सैन्यस्य भोजनोपयोगि तत् सर्वमुपनयति, एवं सति तत्र भरतः कथं कियत्कालं च स्थितवानित्याह–

'तए णं' मित्यादि, ततो–गृहपतिरत्नकृतधान्योपस्थापनानन्तरं स भरतः चर्मरत्नारूढश्छत्ररत्नेन समवच्छन्नः–आच्छादितो मणिरत्नकृतोद्योतः समुद्गकसम्पुटं भूत इव–प्राप्त इव सुखंसुखेनेत्यर्थ सप्तरात्रं–सप्त दिनानि यावत्परिवसति, एतदेव व्यक्तिकुर्वन्नाह– न से–तस्य भताधिपस्य राज्ञः क्षुद्–बुभुक्षा अपिशब्दः पद्यबन्धत्वेन पादपूरणार्थं एवकारार्थे वा न व्यलीकं–वैलक्ष्यं दैन्यमित्यर्थः, नैव भयं विद्यते दुःखं, इयमेव गाथा श्रीवर्द्धमानसूरिकृत ऋषभचरित्रे तु एवं–

**मू. (८९)** *'नवि से खुहा ण विलिअं णेव भयं णेव विज्जए दुक्खं।*
*भरहाहिवस्स रन्नो खंधावारस्सवि तहेव ॥'*

**वृ.** 'नवि से खुहा नवि तिसा नेव भयं' शेषं प्राग्वत्, 'खंधे'त्यादि, स्कन्धावारस्यापि तथैव, यथा भरतस्य न क्षुदादि तथा सैन्यस्यापि नेत्यर्थ ॥ ततः किं जातमित्याह–

**मू. (९०)** *तए णं तस्स भरहस्स रन्नो सत्तरत्तंसि परिणममाणंसि इमेआरूवे अब्भत्थिए चिंतिए पत्थिए मनोगए संकप्पे समुप्पज्जित्था–केस णं भो ! अपत्थिअपत्थए दुरंतपंतलक्खणे जाव परिवज्जिए जे णं ममं इमाए एआणुरूवाए जाव अभिसमण्णगयाए उप्पिं विजयखंधावारस्स जुगमुसलमुट्ठि जाव वासं वासइ। तए णं तस्स भरहस्स रण्ण इमेआरूवं अब्भत्थिअं चिंतियं पत्थिअं मनोगयं संकप्पं समुप्पन्नं जाणित्ता सोलस देवसहस्सा सण्णज्झिउं पवत्ता याविहोत्था, तए णं ते देवा सन्नद्धबद्धवम्मि- अकवया जाव गहिआउहप्पहरणा जेणेव ते मेहमुहा नागकुमारा देवा तेणेव उवागच्छंति २ त्ता मेहमुहे नागकुमारे देवे एवं वयासी–*

*हं भो ! मेहमुहा नागकुमारा ! देवा अप्पत्थिअपत्थगा जाव परिवज्जिआ किण्णं तुब्भि न याणह भरहं रायं चाउरंतचक्कवट्टिं महिड्ढिअं जाव उद्दवित्तए वा पडिसेहित्तए वा तहावि णं तुब्भे भरहस्स रन्नो विजयखंधावारस्स उप्पिं जुगमुसलमुट्ठिप्पमाणमित्ताहिं धाराहिं ओघमेघं सत्तरत्तं वासं वासह, तं एवमवि गते इत्तो खिप्पामेव अवक्कमह अहव णं अज्ज पासह चित्तं जीवलोगं।*

*तए णं ते मेहमुहा जागकुमारा देवा तेहिं देवेहिं एवं वुत्ता समाणा भीआ तत्था वहिआ*

*उव्विग्गा संजायभया मेघानीकं पडिसाहरंति २ त्ता जेणेव आवाड चिलाया तेणेव उवागच्छंति २ त्ता आवाडचिलाए एवं वयासी—एस णं देवाणुप्पिआ! भरहे राया महिड्ढीए जाव नो खलु एस सक्का केणइ देवेण वा जाव अग्गिप्पओगेण वा जाव उवद्दवित्तए वा पडिसेहित्तए वा तहावि अ णं ते अम्हेहिं देवाणुप्पिआ! तुम्हं पिअट्ठयाए भरहस्स रन्नो उवसग्गे कए, तं गच्छह तं तुम्हे देवानुप्पिआ! ण्हाया कयबलिकम्मा कयकोउअमंगलपायच्छित्ता उल्लपडसाडगा ओचूलगणिअच्छा अग्गाइं वराइं रयणाइं गहाय पंजलिउडा पायवडिआ भरहं रायाणं सरणं उवेह, पणिवइअवच्छला खलु उत्तमपुरिसा नत्थि मे भरहस्स रन्नो अंतिआओ भयमितिकट्टु, एवं वदित्ता जामेव दिसिं पाउब्भूआ तामेव दिसिं पडिगया।*

*तए णं ते आवाडचिलाया मेहमुहेहिं नागकुमारेहिं देवेहिं एवं वुत्ता समाणा उट्ठाए उट्ठेति २ त्ता ण्हाया कयबलिकम्मा कयकोउअमंगलपायच्छित्ता उल्लपडसाडगा ओचूलगणिअच्छा अग्गाइं वराइं रयणाइं गहाय जेणेव भरहे राया तेणेव उवागच्छंति २ त्ता करयलपरिग्गहिअं जाव मत्थए अंजलिं कट्टु भरहं रायं जएणं विजएणं वद्धाविंति २ त्ता अग्गाइं वराइं रयणाइं उवणेंति २ त्ता एवं वयासी—*

**वृ.** 'तए णं तस्स भरहस्स रन्नो सत्तरत्त'मित्यादि, ततः समुदकभूततयाऽवस्थानानन्तरं तस्य भरतस्य राज्ञः सप्तरात्रे परिणमति सति अयमेतद्रूपो यावत्सङ्कल्पः समुदपद्यत, तमेव प्रादुर्भावयन्नाह—'केस णं'मित्यादि, कः एष भोः सैनिकाः अप्रार्थितप्रार्थकादिविशेषणविशिष्टो यो मम अस्यामेतद्रूपायां यावद्दिव्यायां देवानामिव ऋद्धिर्देवस्य वा—राज्ञ ऋद्धिर्देवर्द्धिस्तस्यां सत्यां एवं दिव्यायां देवद्युतौ दिव्येन देवानुभावेन देवानुभागेन वा देवानामिव योऽनुभागोऽनुभावो वा—प्रभावस्तेन सह लब्धायां—प्राप्तायामभिसमन्वागतायां सत्यां उपरि स्कन्धावारस्य 'जुगमुसलमुट्ठि जाव'त्ति युगमुसलमुष्टिप्रमाणमात्राभिर्धाराभिर्वर्षं वर्षति—वृष्टिं करोति, अत्र किरातगृह्याणामेव केषाञ्चिदयमुपद्रवोपक्रम इति सामान्यतो ज्ञानेऽपि 'मानधनानां प्रभूणां गर्वगर्भिता गिरस्त्वंकाररेकारबहुला एव भवेयु'रिति क एष इत्यादिक आक्रोशस्तत्र एकवचननिर्देशः यथा उपस्थितेष्वपि बहुषु वैरिषु स को वर्त्तते यो मामुपतिष्ठते इत्यादौ, इति भूपतिभावं परिभाव्य यक्षा यच्चक्रुस्तदाह—

'तए णं'मित्यादि, ततश्च—उक्तचिन्तासमुत्पत्त्यनन्तरं भरतस्येममेतादृशं यावत्सङ्कल्पं समुत्पन्नं ज्ञात्वा चतुर्दशरत्नाधिष्ठायकदेवसहस्राणि चतुर्दश द्वे सहस्रे श्वाङ्गाधिष्ठातृदेवभूते इत्येवं षोडशदेवसहस्राः यद्यपि स्त्रीरत्नस्य वैताढ्यसाधने सम्पत्स्यमानत्वेन रत्नानां त्रयोदशसहस्रा एव सम्भवेयुस्तथापि सामान्यत एतद्वचनमिति, सन्नद्धुं प्रवृत्ताश्चाप्यभवन्—युद्धायोद्यता अभूवन्नित्यर्थः, कथमित्याह—'तए णं'मित्यादि, अनुवादसूत्रत्वात्प्राग्वत्, किमवोचुस्ते भरतस्य सन्निहिता देवा इत्याह—हं भो! मेघमुखा इत्यादि प्राग्वद्, किमिति प्रश्ने न जानीथेत्यत्र काकुपाठे नव्याख्येयं, तेन न जानीथ किं यूयं?, अपि तु जानीथ, भरतं राजानं चतुरन्तचक्रवर्त्तिनं यदेष न कैश्चिदपि देवदानवादिभि शस्त्रप्रयोगादिभिरुपद्रवयितुं वा प्रतिषेधयितुं वा शक्यते इति, अज्ञानपूर्विका हि प्रवृत्तिर्महतेऽनर्थाय प्रवर्त्तकस्य च बाढं बालिशभावोद्भावनाय च भवेदिति भापयन्तस्ते यथा उत्तरवाक्यमाहुस्तथाऽऽह—तथा—जगत्यजय्यं जानन्तोऽपीत्यर्थं यूयं भरतस्य राज्ञो विजयस्कन्धावारस्योपरि यावद्वर्षं वर्षत तत—तस्मादेवमविमृष्टकारितायां सत्यामपि गते—अतीते

कार्ये किं बहु अधिक्षिपामः ? तस्य क्रियान्तरापादनेन संस्कारानर्हत्वात्, इतः क्षिप्रमेवापक्रामत- मत्कुणा इवापयात, अथवेति विकल्पान्तरे यदि नापक्रामत तर्हि अद्य-साम्प्रतमेव पश्यत चित्रं जीवलोकं-वर्त्तमानभवादन्यं भवं पृथिवीकायिकादिकं, अपमृत्युं प्राप्नुतेत्यर्थः, क्रियादेशेऽत्र पञ्चमीप्रयोगः, ननु निरुपक्रमायुषां देवानामपमृत्योरसम्भवात् सबाधमिदं वचनं, उच्यते, सूत्राणां विचित्रत्वेन भयसूत्रत्वेन विचक्षणाम्न दोषः । 'तए णं'मित्यादि, सर्वं प्राग्वत्, नवरं मेघानीकं प्रतिसंहरन्ति- घनघटामपहरन्ति, वृष्ट्युपरमे च ततः सम्पुटाच्चक्रिसैन्यं निर्गच्छदुपलभ्य लौकिकैरुक्तं ब्रह्मणा सृष्टमिदमण्डकं तत इयं जगतः प्रसूतिरित्येवं सर्वत्र प्रवादोऽभूत्ततोऽपि च ब्रह्माण्डपुराणं नाम शास्त्रमभूदिति प्रसङ्गादोध्यमिति,

**अथ यदुक्तमेवं वयासिति** तत्र किमवादिषुरित्याह- 'तए नं'-मित्यादि, हे देवानुप्रिया ! **एष भरतो राजा महर्द्धिको यावद्रो** खलु एष शक्यते **देवादिभिरस्त्रप्रयोगादिभिर्वाप्रतिषेधयितुं तथापि अस्माभिर्देवानुप्रिया ! युष्माकं** प्रीत्यर्थं भरतस्य राज्ञ उपसर्गः **कृतः**, तद्गच्छत देवानुप्रिया! यूयं स्नानादिविशेषणाः आर्द्रा-सद्यःस्नानव- शाञ्जलक्लिन्नौ पटशाटकौ-उत्तरीयपरिधाने येषां ते तथा, एतेन सेवाविधावविलम्बः सूचितः, अवचूलकं-अधोमुखाञ्चलं मुलाञ्चलं यथा भवत्येवं निवस्तं येषां ते तथा, एतेन परिहितवस्त्रबन्ध- नकालावध्यपि न विलम्बो विधेय इति सूचितं, अथवाऽनेनाबद्धकच्छत्वं सूचितं, तदुपदर्शनेन स्वदैन्यं दर्शितमिति, बद्धकच्छत्वदर्शने हि उत्कटत्वसम्भावनाया जनप्रसिद्धत्वात्, अग्रयाणि वराणि रत्नानि गृहीत्वा प्राञ्जलिकृताः-कृतप्राञ्ज- लयः पादपतिताः-चरणन्यस्तमौलयो भरतं राजानं शरणमुपेत-यात प्रणिपतितवत्सलाः- प्रणम्रजनहितकारिणः खलु उत्तमपुरुषाः, नास्ति भे-भवतां भरतस्य राज्ञोऽन्तिकादयमिति कृत्वा इति उदित्वेत्यर्थ यस्या दिशः प्रादुर्भूतास्तामेव दिशं प्रति गता इति ।

अथ भग्नेच्छा म्लेच्छा यच्चक्रुस्तदाह- 'तए णं'मित्यादि, सर्वं गतार्थं, नवरं रत्नान्युपनयन्ति- प्राभृतीकुर्वन्तीत्यर्थः, अथ यदुक्तं 'एवं वयासि'त्ति तत्र किमवादिषुरित्याह-

**मू. (११)** *वसुहर गुणहर जयहर, हिरिसिरिधीकित्तिधारकनरिंद ।*
*लक्खणसहस्सधारक रायमिदं ने चिरं धारे ॥*

**वृ. 'वसुहर' इत्यादि, हे वसुधर !**-द्रव्यधर षट्खण्डवर्त्तिद्रव्यपते इतियावत्, अथवा तेजोधर गुणधर-गुणवान् जयधर-रिपुभिरधर्षणीय ! **हीः-लज्जा श्रीः-लक्ष्मीधृतिः**-सन्तोषः **कीर्त्ति-वर्णवादः एतेषा धारक नरेन्द्रलक्षणसहस्राणां-अनेकलक्षणानां धारक नो**-अस्माकं राज्यमिदं चिरं धारय-पालय इत्यर्थः, अस्मद्देशाधिपतिर्भव चिरकालं यावदिति प्रथमगाथार्थः।

**मू. (१२)** *हयवइ गयवइ नरवइ नवनिहिवइ भरहवासपढमवई ।*
*बत्तीसजणवयसहस्सराय सामी चिरं जीव ॥*

वृ. 'हयवइ गयवई' इत्यादि, हे हयपते ! गजपते ! हे नरपते ! नवनिधिपते ! हे भरत- वर्षप्रथमपते ! द्वात्रिंशज्जनपदसहस्राणां-देशसहस्राणां ये राजानस्तेषां स्वामिन् ! चिरं जीव २ इति द्वितीयगाथार्थः ।

मू. (१३) *पढमणरीसर ईसर हिअईसर महिलिआसहस्साणं ।*
*देवसयसाहसीसर चोद्दसरयणीसर जसंसी ॥*

वृ. 'पढमणरीसर ईसर' इत्यादि, हे प्रथमनरेश्वर ! हे ऐश्वर्यधर ! हे महिलिकासहस्राणां–चतुःषष्टिस्त्रसहस्राणां हृदयेश्वर–प्राणवल्लभ देवशतसहस्राणां– रत्नाधिष्ठातृमागधतीर्थाधि- पादिदेवलक्षाणामीश्वर ! चतुर्दशरत्नेश्वर ! यशस्विन् इति तृतीयगाथार्थः ।

मू. (९४) *सागरगिरिमेरागं उत्तरवाईणमभिजिअं तुमए ।*
*ता अम्हे देवाणुप्पिअस्स विसए परिवसामो ॥*

वृ. तथा 'सागर' इत्यादि, सागरः–पूर्वापरदक्षिणाख्यः समुद्रः गिरि–क्षुद्रहिमाचलस्तयोर्मर्यादा–अवधिर्यत्र तत्तथा, उक्तदिकत्रये समुद्रावधिकमुत्तरतो हिमाचलावधिकं, उत्तरापाचीनं–उत्तरार्द्धदक्षिणार्द्धभरतं परिपूर्णभरतमित्यर्थः, त्वयाऽभिजितं, यदत्र भरतस्य हिमवद्गिरिपर्यन्तता व्याख्याता तदवश्यं साधयिष्यमाणत्वेन 'भाविनि भूतवदुपचार' इति न्यायात्, अन्यथा नवनिधिपते चतुर्दशरत्नेश्वर इत्यादिविशेषणानामप्यनुपपत्ति, नवनिधीनां तथा सम्पूर्णचतुर्दशरत्नानामग्रेव सम्पत्स्यमानत्वात्, ता–तस्माद् वयं देवानुप्रियस्य विषये परिवसामः, युष्माकं प्रजारूपाः स्म इत्यर्थः, इति चतुर्थगाथार्थः ।

मू. (९५) *अहो णं देवाणुप्पिआणं इद्धी एवं चेव जाव अभिसमण्णागए, तं दिट्ठा णं देवाणुप्पिआणं इद्धी एवं चेव जाव अभिसमण्णागए, तं खामेमु णं देवाणुप्पिआ ! खमंतु णं देवाणुप्पिआ ! खंतुमरहंतु णं देवाणुप्पिआ ! णाइ भुज्जो २ एवंकरणयाएत्तिकट्टु पंजलिउडा पायवडिआ भरहं रायं सरणं उविंति । तए णं से भरहे राया तेसिं आवाडचिलायाणं अग्गाइं वराइं रयणाइं पडिच्छंति २ ता ते आवाडचिलाए एवं वयासी–गच्छह णं भो तुब्भे ममं बाहुच्छायापरिग्गहिया निब्भया निरुव्विग्गा सुहंसुहेणं परिवसह, नत्थि मे कत्तोवि भयमत्थित्तिकट्टु सक्कारेइ सम्माणेइ सक्कारेत्ता सम्माणेत्ता पडिविसज्जेइ ।*

*तए णं से भरहे राया सुसेणं सेनावइं सद्दावेइ २ त्ता एवं वयासी–गच्छाहि णं भो देवाण० ! दोच्चंपि सिंधूए महानईए पच्चत्थिमं णिक्खुडं ससिंधुसागरगिरिमेरागं समविसमणिक्खुडाणि अ ओअवेहि २ त्ता अग्गाइं वराइं रयणाइं पडिच्छाहि २ त्ता मम एअमाणत्तिअं खिप्पामेव पच्चप्पिणाहि जहा दाहिणिल्लस्स ओयवणं तहा सव्वं भाणिअव्वं जाव पच्चणुभवमाणा विहरंति ।*

वृ. तथा अहो इति आश्चर्ये देवानुप्रियाणां ऋद्धिर्द्युतिर्यशो बलं वीर्यं पुरुषकारः पराक्रमः एतेषां व्याख्यानं प्राग्वत्, ऋद्ध्यादीन्याश्चर्यकारीणि कुत इत्याह–दिव्या–सर्वोत्कृष्टा देवस्येव द्युति, एवं दिव्यो देवानुभावो देवानुभागो वा लब्धः–प्राप्तः अभिसमन्वागतो देवपादैरित्यध्याहार्यं, परतः श्रुतेऽपि गुणातिशये आश्चर्योत्पत्ति स्यात् दृष्टे तु सुतरामित्याशयेनाह–तद् दृष्टा देवानुप्रियाणां ऋद्धिः–सम्पत्, चक्षुप्रत्यक्षेणानुभूतेत्यर्थः, दृष्टिमित्यादि वाच्यं, यावदभिसमन्वागत इति पदं, यावत्पदसंग्रहस्तु 'इड्ढी जसे बले वीरिए' इत्यादिकोऽनन्तरोक्त एव, तत्क्षमयामो देवानुप्रिया वयं, सानुशयाशयत्वात् स्वबालचेष्टितं क्षमन्तां देवानुप्रियाः !, क्षन्तुमर्हन्ति–क्षमा कर्तुं योग्या भवन्ति देवानुप्रियाः महाशयत्वात्, अत्र प्राकृतत्वाद्वर्त्तमानार्थे पञ्चमी, 'नाइ'त्ति नैव आइं इति निपातोऽवधारणे भूय एवंकरणतायै सम्पत्स्यामह इति शेषः, अत्र ताकारः प्राकृतशैलीभवः, इति कृत्वा प्राञ्जलिकृताः पादपतिता भरतं राजानं शरणमुपयान्ति, अथ प्रसादाभिमुखभरतकृत्यमाह– 'तए णं से भरहे राया तेसिं आवाडचिलायाण०, ततः स भरतो राजा तेषामापात-

किरातानामग्र्याणि वराणि रत्नानि प्रतीच्छति—गृह्णाति प्रतीच्छ्य च तानापातकिरातानेव-मवादीत्—गच्छत भो ! देवानुप्रियाः यूयं स्वस्थानमिति शेषः, मम बाहुच्छायया परिगृहीताः—स्वीकृताः मया शिरसि दत्तहस्ताः निर्भया निरुद्विग्नाः—उद्वेगरहिताः सुखंसुखेन परिवसत, अत्र 'छायायां होकान्तौ वा' इत्यनेन सूत्रेण वैकल्पिकविधित्वान्न हकारत्वं, नास्ति मे—भवतां कुतोऽपि भयमिति कृत्वा सत्कारयति सन्मानयति सत्कृत्य सन्मान्य च प्रतिविसर्जयति—स्वस्थानगमन-यादिदिशति । अथ किरातसाधनानन्तरकालं नरेन्द्रः किं चक्रे इत्याह—

'तए णं से भरहे राया सुसेण' इत्यादि, ततः—किरातसाधनानन्तरं भरतः सुषेणं सेनापतिं शब्दयति, शब्दयित्वा च एवमवादीत्—गच्छ भो देवानुप्रिय ! द्वितीयं अपि समुच्चये पूर्वंचितनिष्कुटापेक्षया सिन्ध्वा महानद्याः पश्चिमं—पश्चिमभागवर्ति निष्कुटं—प्राग्व्यावर्णितस्वरूपं सिन्धुः नदी सागरः—पश्चिमाब्धि उत्तरतः क्षुल्लहिमवद्गिरिर्दक्षिणतो वैताढ्यगिरिश्च तैर्मर्यादा य्य तत्तथा, एतैः कृतविभागमित्यर्थः, शेषं प्राग्वत्, लाघवार्थमतिदेशसूत्रमाह—'जहा दाहिणिल्ल'-इत्यादि, यथा दाक्षिणात्यस्य सिन्धुनिष्कुटस्य ओअवणं—साधनं तथा सर्वं भणितव्यं, तावद्वक्तव्यं यावत्सेनानीर्भरतयिसृष्टः पञ्चविधान् कामभोगान् प्रत्यनुभवन् विहरति ।

अथ तदनन्तरं किं जातमित्याह—

*मू. (९६) तए णं दिव्वे चक्करयणे अन्नया कयाइ आउहघरसालाओ पडिनिक्खमइ २ ता अंतलिक्खपडिवण्णे जाव उत्तरपुरच्छिमं दिसिं चुल्लहिमवंतपव्वयाभिमुहे पयाते आवि होत्था, तए णं से भरहे राया तं दिव्वं चक्करयणं जाव चुल्लहिमवंतवासहरपव्वयस्स अदूरसामंते दुवालसजो-अणायामं जाव चुल्लहिमवंतगिरिकुमारस्स देवस्स अट्ठमभत्तं पगिण्हइ ।*

*तहेव जहा मागहतित्थस्स जाव समुद्दरवभूअंपिव करेमाणे २ उत्तरदिसाभिमुहे जेणेव चुल्लहिमवंतवासहरपव्वए तेणेव उवागच्छइ २ ता चुल्लहिमवंतवासहरपव्वयं तिक्खुत्तो रहसिरेणं फुसइ फुसित्ता तुरए निगिण्हइ निगिण्हित्ता तहेव जाव आयतकण्णायतं च काऊण उसुमुदारं इमाणि वयणाणि तत्थ भाणीअ से नरवई जाव सव्वे मे ते विसयवासित्तिकट्टु उद्धं वेहासं उसुं निसिरइ परिगरणिगरिअमज्झे जाव तए णं से सरे भरहेणं रण्णा उद्धं वेहासं निसट्ठे समाणे खिप्पामेव बावत्तरिं जोअणाइं गंता चुल्लहिमवंतगिरिकुमारस्स देवस्स मेराए निवइए ।*

*तए णं से चुल्लहिमवंतगिरिकुमारे देवे मेराए सरं निवइअं पासइ २ ता आसुरुत्ते रुट्ठे जाव पीइदानं सव्वोसहिं च मालं गोसीसचंदनं कडगाणि जाव दहोदगं च गेण्हइ २ ता ताए उक्किट्ठाए जाव उत्तरेणं चुल्लहिमवंतगिरिमेराए अहण्णं देवाणुप्पिआणं विसयवासी जाव अहण्णं देवाणुप्पिआणं उत्तरिल्ले अंतवाले जाव पडिविसज्जेइ ।*

वृ. 'तए णं दिव्वे चक्करयणे' इत्यादि, ततः—औत्तराहसिंधुनिष्कुटसाधनानन्तरं तद्दिव्यं चक्ररत्नं अन्यदा कदाचित् आयुधगृहशालातः प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च अंतरिक्षप्रतिपन्नं यावत्पदात् 'जक्खसहस्ससंपरिवुडे दिव्वतुडिअसद्दसण्णिणादेणं पूरन्ते चेव अंबरतल' मिति, उत्तरपूर्वस्यां दिशि—ईशाने कोणे क्षुद्रहिमवत्पर्वताभिमुखं प्रयातं चाप्यभवत्, ततः—शिबिरनिवेशात् क्षुद्रहिमवद्गिरिमध्यं यियासोः उत्तरपूर्वायां चलनमेव ऋजुमार्गं, ततो नरेन्दुर्यत्कृतवांस्तदाह—'तए णं से भरहे राया तं दिव्वं चक्करयण' मित्यादि, ततः स भरतस्तद्दिव्यं चक्ररत्नं अभिक्षुद्रहिमवद्गिरि

प्रयातं दृष्ट्वा कौटुम्बिकपुरुषाज्ञापनं हस्तिरत्नप्रतिकल्पनं सेनासन्नाहनं स्नानविधानं हस्तिरत्नारोहणं मार्गागतपुरनगरदेशाधिपवशीकरणं तत्प्राभृतस्वीकरणं चक्ररत्नानुगमनं योजनान्तरितवसतिवसनं च करोतीत्यादिपिण्डार्थः प्रथमयावत्पदग्राह्यः, अत्र यावत्पदसंग्राह्यसूत्रलिखने बहुविस्तरः स्यादिति तदुपेक्षा, ततः क्षुल्लहिमवद्गिरिसमीपे द्वादशयोजनायामं अत्र यावच्छब्दान्नवयोजनविस्तीर्णादिविशेषणविशिष्टं स्कन्धावारं निवेशयति, वर्द्धकिरत्नं शब्दयति पौषधशाला विधापयति पौषधं च करोतीत्यादि ज्ञेयं, क्षुद्रहिमवद्गिरिकुमारस्य देवस्य साधनायेति शेषः, कियत्पर्यन्त इत्याह—यावत्समुद्ररवभूतमिव कुर्वाणः कुर्वाण इति, अत्र।

'तहेव'त्ति पदवाच्यमष्टमभक्तप्रतिजागरणं तत्समापनं कौटुम्बिकाज्ञापनं सेनासन्नाहनं अश्वरथप्रतिकल्पनं स्नानविधानं अश्वरथारोहणं चक्ररत्नमार्गानुगमनं च करोतीत्यादि ज्ञेयं, सैन्यसमुत्थकलकलरवेण समुद्ररवभूतमिव पृथिवीमण्डलं कुर्वन् २ उत्तरदिगभिमुखो यत्रैव च क्षुद्रहिमवद्वर्षधरपर्वतः तत्रैवोपागच्छति उपागत्य च क्षुल्लहिमवद्वर्षधरपर्वतं त्रिकृत्वः—त्रीन् वारान् रथशिरसा—रथाग्रभागेन काकमुखेनेत्यर्थः स्पृशति, अतिवेगप्रवृत्तस्य वेगिवस्तुनः पुरस्थप्रतिबन्धकभित्त्यादिसंघटने त्रिस्ताडनेन वेगपाददर्शनादत्र त्रिरित्युक्तं, स्पृष्ट्वा च तुरगान् निगृह्णाति—वेगप्रवृत्तान् वाजिनो रक्षति, तदनु वृत्तं यत्तदाह—'निगिण्हित्ता' इत्यादि, तुरगांश्चतुरोऽपि निगृह्य च तथैव मागधतीर्थाधिकारवद्वक्तव्यं, कियद्दूरं यावदित्याह—यावदायतकर्णायतं च कृत्वा इषुमुदारमिति, अत्र 'तहेव'त्ति वचनात् रथस्थापनं धनुर्ग्रहणं शरग्रहणं च वक्तव्यं, ततस्तं शरं तथाविधं कृत्वा तत्र इमानि वचनान्यभाणीत् स नरपतिरत्रयावत्पदेन 'हंदि सुणंतु भवंतो' इत्यादि गाथाद्वयं वाच्यं सर्वे मे ते विसयवासीतिपर्यन्तं इति कृत्वा—इत्युच्चार्य ऊर्ध्वं—उपरि, एतच्च शुभपर्यायं स्यात् यथोर्ध्वलोकः शुभलोक इत्यादि अत उक्तं विहायसि—आकाशे क्षुद्रहिमवद्गिरिकुमारस्य तत्रावाससम्भवात् इषुं निसृजति।

'परिगरनिगरअमज्झो जाव'त्ति अत्रावसरे बाणमोक्षप्रकरणाधीतं 'परिगरनिगरिअमज्झो' इत्यादिपदोपलक्षितं यावच्छब्देन परिपूर्णं गाथाद्वयं वाच्यमिति। ततः किं जातमित्याह—'तए णं से' इत्यादि, तत— स शरो भरतेन राज्ञा ऊर्ध्वं विहायसि निसृष्टः सन् क्षिप्रमेव द्विसप्ततिं योजनानि यावद् गत्वा क्षुद्रहिमवद्गिरिकुमारस्य देवस्य मर्यादायामुचितस्थाने निपतति।

'तए ण'मित्यादि, ततः स क्षुद्रहिमवद्गिरिकुमारो देवो निजमर्यादायां शरं निपतितं पश्यति, दृष्ट्वा च आसुरुत्तो रुष्ट इत्यादिविशेषणविशिष्टो यावत्करणात् भृकुटिं करोति अधिक्षिपति शरं गृह्णाति नाम च वाचयतीत्यादि ग्राह्यं, प्रीतिदानं सर्वौषधीः—फलपाकान्तवनस्पतिविशेषान् राज्याभिषेकादिकार्योपयोगिनः मालां—कल्पद्रुमपुष्पमालां गोशीर्षचन्दनं च—हिमवत्कुञ्जभवं कटकानि यावत्पदात् त्रुटितानि वस्त्राणि आभरणानि शरं च नामाङ्कमिति ग्राह्यं, द्रहोदकं च—पद्मद्रहोदकं गृह्णाति, गृहीत्वा च तयोत्कृष्टयाऽत्र यावत्पदात् देवगत्या व्यतिव्रजति—भरतान्तिकमुपसर्पति विज्ञपयति चेति ज्ञेयं, उत्तरस्यां क्षुद्रहिमवतो गिरेर्मर्यादायां अहं देवानुप्रियाणां विषयवासी यावत्पदात् अहं देवाणुप्पिआणं आणत्तीकिंकरे इति ग्राह्यं, अहं देवानुप्रियाणां औत्तराहो लोकपालः, अत्र यावत्पदात् प्रीतिदानमुपनयति तद् भरतः प्रतीच्छति, देवं सत्कारयति सन्मानयतीति ग्राह्यं, तथा कृत्वा च प्रतिविसर्जयति, अथाधिकोत्साहदष्टमभक्तं तपस्तीरयित्वा कृतपारणक एवावधिप्राप्तदिग्विजयाङ्क

कर्तुकामः श्रीऋषभभूः ऋषभकूटगमनायोपक्रमते—

**मू. (९७)** *तए णं से भरहे राया तुरए निगिण्हइ २ त्ता रहं परावत्तेइ २ त्ता जेणेव उसहकूडे तेणेव उवागच्छइ २ त्ता उसहकूडं पव्वयं तिक्खुत्तो रहसिरेणं फुसइ २ त्ता तुरए निगिण्हइ २ त्ता रहं ठवेइ २ त्ता छत्तलं दुवालसंसिअं अट्ठकण्णिअं अहिगरणिसंठिअं सोवण्णिअं कागणिरयणं परामुसइ २ त्ता उसभकूडस्स पव्वयस्स पुरत्थिमिल्लंसि कडगंसि नामगं आउडेइ—*

**वृ.** 'तए णं'मित्यादि, ततो—हिमवत्साधनानन्तरं स भरतो राजा तुरगान् निगृह्णाति—दक्षिणपार्श्वस्थहयावाकर्षति वामपार्श्वस्थहयौ पुरस्करोति, निगृह्य च रथं परावर्त्तयति परावर्त्त्य यत्रैवर्षभकूटं तत्रैवोपागच्छति उपागत्य च ऋषभकूटं पर्वतं त्रिकृत्वो रथशीर्षेण स्पृशति, स्पृष्ट्वा च रथं स्थापयति स्थापयित्वा च षट्तलं द्वादशाधिकं अष्टकर्णिकं अधिकरणिसंस्थितं सौवर्णिकं—स्वर्णमयमष्टसुवर्णमयत्वात् काकणीरत्नं परामृशति, एतेषां पदानां व्याख्यानं प्राग्वत्, परामृश्य च ऋषभकूटस्य पर्वतस्य पौरस्त्ये कटके नामैव नामकं स्वार्थे कप्रत्ययः 'आउडेइ'त्ति आजुडति सम्बद्धं करोति लिखतीत्यर्थः, कथं लिखतीत्याह—

**मू. (९८)** *ओसप्पिणी इमीसे तइआए समाइ पच्छिमे भाए।*
*अहमंसि चक्कवट्टी भरहो इअ नामधिज्जेणं।*

**वृ.** 'ओसप्पिणि'इत्यादि, अवसर्प्पिण्याः, अत्र षष्ठीलोपः प्राकृतत्वात्, अस्या तृतीयायाः समायाः—तृतीयारकस्य पश्चिमभागे तृतीये भागे इत्यर्थः, अहमस्मि चक्रवर्ती भरत इति नामधेयेन।

**मू. (९९)** *अहमंसि पढमराया अहयं भरहाहिवो नरवरिंदो।*
*नत्थि महं पडिसत्तू जिअं मए भारहं वासं॥*

**वृ.** अहमस्मि प्रथमराजा—प्रधानराजा, प्रथमशब्दस्य प्रधानपर्यायत्वाद्यथा 'पढमे चंदजोगे' इत्यादौ, एतद्व्याख्यानेन ऋषभे प्रथमराजत्वं नागमेन सह विरुध्यते, अहं —भरत- क्षेत्राधिपः नरवराः—सामन्तादयस्तेषामिन्द्रः नास्ति मम प्रतिशत्रु—प्रतिपक्षः जितं मया भारतं वर्षमिति।

**मू. (१००)** *इतिकट्टु नामगं आउडेइ नामगं आउडित्ता रहं परावत्तेइ २ त्ता जेणेव विजयखंधावारणिवेसे जेणेव बाहिरिआ उवट्ठाणसाला तेणेव उवागच्छइ २ त्ता जाव चुल्लहिमवंतगिरिकुमारस्स देवस्स अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए आउहघरसालाओ पडिनिक्खमइ २ त्ता जाव दाहिणिं दिसिं वेअद्धपव्वयाभिमुहे पयाते आवि होत्था।*

**वृ.** कृत्वा नामकं 'आउडेइ'त्ति लिखति, अस्य सूत्रस्य निगमार्थकत्वान्न पौनरुक्त्यं, अथ कृतकृत्यो यद् व्यवस्यति तदाह—'नामगं आउडित्ता'इत्यादि, नामकं लिखित्वा रथं परावर्त्तयति परावर्त्य च यत्रैव विजयस्कन्धावारनिवेशो यत्रैव च बाह्योपस्थानशाला तत्रैवोपागच्छति उपागत्य च अत्र यावत्पदात् तुरगान्निगृह्णाति रथं स्थापयति ततः प्रत्यवरोहति मज्जनगृहं प्रविशति स्नाति ततः प्रतिनिष्क्रामति भुङ्क्ते बाह्योपस्थानशालायां सिंहासने उपविशति श्रेणीप्रश्रेणीः शब्दापयति क्षुल्लहिमवद्गिरिकुमारदेवस्याष्टाहिकाकरणं सन्दिशति ताश्च कुर्वन्ति आज्ञां च प्रत्यर्पयन्तीति ग्राह्यं, ततस्तद्दिव्यं चक्ररत्नं क्षुल्लहिमवद्गिरिकुमारस्य देवस्याष्टाहिकायां महामहिमायां निवृत्तायां सत्यामायुधगृहशालातः प्रयातं चाप्यभवत्।

**मू. (१०१)** *तए णं से भरहे राया तं दिव्वं चक्करयणं जाव वेअद्धस्स पव्वयस्स उत्तरिल्ले*

*नितंबे तेणेव उवागच्छइ २ ता वेअद्धस्स पव्वयस्स उत्तरिल्ले नितंबे दुवालसजोयणायामं जाव पोसहसालं अणुपविसइ जाव नमिविनमीणं विज्जाहरराईणं अट्ठमभत्तं पगिण्हइ २ त्ता पोसहसालाए जाव नमिविनमिविज्जाहररायाणो मणसी करेमाणे २ चिट्ठइ, तए णं तस्स भरहस्स रण्णो अट्ठमभत्तंसि परिणममाणंसि णमिविणमीविज्जाहररायाणो दिव्वाए मईए चोइअमई अन्नमन्नस्स अंतिअं पाउब्भवंति २ त्ता एवं वयासी– उप्पन्ने खलु भो देवाणुप्पिआ ! जंबुद्दीवे दीवे भरहे वासे भरहे राया चाउरंतचक्कवट्टी तं जीअमेअं तीअपच्चुप्पन्नमणागयाणं विज्जाहरराईणं चक्कवट्टीणं उवत्थाणिअं करेत्तए, तं गच्छामो णं देवाणुप्पिआ ! अम्हेवि भरहस्स रण्णो उवत्थाणिअं करेमो इति कट्टु विनमी नाऊणं चक्कवट्टिं दिव्वाए मईए चोइअमई माणुम्माणप्पमाणजुत्तं तेअस्सिं रूवलक्खणजुत्तं ठिअजुव्वणकेसवट्ठिअणहं सव्वरोगणासणिं बलकरिं इच्छिअ सीउण्हफासजुत्तं–*

**वृ.** 'तए णं'मित्यादि, ततः स भरतो राजा तद्दिव्यं चक्ररत्नं यावदुत्तरपूर्वस्यां दिशि वैताढ्यपर्वताभिमुखं प्रयातं पश्यति, दृष्ट्वा च प्रमोदादि तावद् वक्तव्यं यावद् भरतो यत्रैव वैताढ्यस्य पर्वतस्योत्तर-पार्श्ववर्ती नितम्बः–कटकस्तत्रैवोपागच्छति, उपागत्य च वैताढ्यस्य पर्वतस्योत्तरभागवर्त्तिनि नितम्बे द्वादशयोजनायामं यावत्पदकरणात् नवयोजनविस्तीर्णमित्यादिकं स्कन्धावारनिवेशादि वाच्यं, पौषधशालामनुप्रविशति भरतः, अत्र यावत्पदात् पौषधविशेषणानि सर्वाणि वाच्यानि, नमिविनम्योः–श्रीऋषभस्वामिमहासामन्तकच्छमहाकच्छसुतयोर्विद्याधरराज्ञोः साधनायाष्टमभक्तं प्रगृह्णाति प्रगृह्य च पौषधशालायां यावच्छब्दात् पौषधिकादिविशेषणविशिष्टो नमिविनमिविद्याधर-राजानौ मनसि कुर्वाणो मनसि कुर्वाणस्तिष्ठति, एते खगा अनुकम्प्याः एतेषामुपरि बाणमोक्षणेन प्राणदर्शनं न क्षत्रियधर्म इति सिन्ध्वादिसुरीणामिवानयोर्मनसि करणमात्ररूपे साधनोपाये प्रवृत्तः, तेन न द्वादशवार्षिकयुद्धमप्यत्राभिहितं, यत्तु आदिनाथचरित्रे शरमोचनादि चूर्णिकृता तु युद्धमात्रं द्वादशवर्षावधि अन्ने भणंतीत्युक्त्वा उक्तं तन्मतान्तरमवसेयमिति, अत्रान्तरे यज्जातं तदाह–

'तए णं'मित्यादि, तस्य भरतस्याष्टमभक्ते परिणमति सति नमिविनमी विद्याधरराजानौ दिव्यया दिव्यानुभावजनितत्वात् मत्या–ज्ञानेन चोदितमती–प्रेरितमतिकौ अवधिज्ञानाना-भावेऽपि यत्तयोर्भरतमनोविषयकज्ञानं तत्सौधर्मेशानदेवीनां मनःप्रविचारिदेवानां कामानुषक्त-मनोज्ञानमिव दिव्यानुभावादवगन्तव्यं, अन्यथा तासामपि स्वविमानचूलिकाध्वजादिमात्र-विषयकावधिमतीनां तद्रिंरंसाज्ञानासम्भवेन सुरतानुकूलचेष्टोन्मुखत्वं न सम्भवेदिति, एतादृशावन्योऽन्यस्यान्तिकं प्रादुर्भवतः, प्रादुर्भूय च एवमवादिषातां, किमवादिषातामित्याह–

'उप्पन्ने खलु' इत्यादि, उत्पन्नः खलुः–अवधारणे भो देवानुप्रिया ! जम्बूद्वीपे द्वीपे भरतवर्षे भरतनामा राजा चतुरन्तचक्रवर्त्ती तस्माज्जीतमेतत्–कल्प एषोऽतीतवर्त्तमानानागतानां विद्याधर-राज्ञां चक्रवर्त्तिनामुपस्थानिकं–प्राभृतं कर्त्तुं,

तद् गच्छामो देवानुप्रिया ! वयमपि भरतस्य राज्ञ उपस्थानिकं कुर्म्म 'इति कट्टु' इत्यादि इति कृत्वा–इति अन्योऽन्यं भणित्वा विनमिरुत्तरश्रेण्यधिपति सुभद्रां नाम्ना स्त्रीरत्नं नमिश्च दक्षिणश्रेण्याधिपती रत्नानि कटकानि त्रुटिकानि च गृह्णातीत्यन्वयः, अथ कीदृशः सन् विनमि किं कृत्वा सुभद्रां कन्यारत्नं गृह्णातीत्याह–दिव्यया मत्या चोदितमति सन् चक्रवर्त्तिनं ज्ञात्वा, अत्रानन्तरोक्तसूत्रतश्चक्रवर्त्तित्वे लब्धेऽपि यत् नाऊण चक्कवट्टिमित्याद्युक्तं तत् सुभद्रा

स्त्रीरत्नमस्यैवोपयोगीति योग्यताख्यापनार्थं, किंलक्षणां सुभद्रामित्याह—'मानोन्मानप्रमाणयुक्तां, तत्र मानं—जलद्रोणप्रमाणता उन्मानं—तुलारोपितस्यार्द्धभारप्रमाणता यश्च स्वमुखानि नव समुच्छ्रितः स प्रमाणोपेतः स्यात्, अयमर्थः ।

जलपूर्णायां पुरुषप्रमाणादीषदतिरिक्तायां महत्यां कुण्डिकायां प्रवेशितो यः पुरुषः सारपुद्गलोपचितो जलस्य द्रोणं त्रिद्वयसौवर्णिकगणनापेक्षया द्वात्रिंशत्सेरप्रमाणं निष्काशयति जलद्रोणोनां वा तां पूरयति स मानोपेतः, तथा सुरपुद्गलोपचितत्वादेव यस्तुलायामारोपितः सन्नर्द्धभारं पलसहस्रात्मकं तुलयति स उन्मानोपेतः, तथा यद्यस्यात्मीयमङ्गुलं तेनाङ्गुलेन द्वादशांगुलानि मुखं प्रमाणतः, अनेन द्वादशमुखप्रमाणेन नव मुखानि पुरुषः प्रमाणयुक्तः स्यात्, प्रत्येकं द्वादशांगुलैर्नवभिर्मुखैरष्टोत्तरशतमङ्गुलानां सम्पद्यते, ततश्चैतावदुच्छ्रयः पुरुषः प्रमाणयुक्तः स्यात्, एवं सुभद्राऽपि मानोन्मानप्रमाणयुक्ता, तथा तेजस्विनीं व्यक्तं रूपं—सुन्दराकारो लक्षणानि च—छत्रादीनि तैर्युक्तां, स्थितमविनाशित्वाद्यौवनं यस्याः सा तथा, केशवदवस्थिता—अवर्द्धिष्णवो नखा यस्याः सा तथा, ततः पदद्वयकर्मधारये तां, अयं भावः—

भुजमूलादिरोमाण्यजहद्रोमस्वभावान्येव तस्याः स्युरिति, अन्यथा तत्केशपाशस्य प्रलम्बतया व्याख्यानं उत्तरसूत्रे करिष्यमाणं नोपपद्येत, सर्वरोगनाशनीं, तदीयस्पर्शमहिम्ना सर्वे रोगा नश्यन्तीति, तथा बलकरीं सम्भोगतो बलवृद्धिकरीं नापरपुरन्ध्रीणामिवास्याः परिभोगे परिभोक्तुर्बलक्षय इति भावः, ननु यदि श्रूयते समये हस्तस्पृष्टाश्वग्लानिदर्शनेन स्त्रीरत्नस्य स्वकामुकपुरुषविभीषिकोत्पादनं तर्हि कथमेतदुपपद्यते ?, उच्यते, चक्रवर्त्तिनमेवापेक्ष्यैतद्विशेषणद्वयस्य व्याख्यानात्, यत्तु सत्यपि स्त्रीरत्ने ब्रह्मदत्तचक्रभृतो दाहानुपशमः तत्र समाधानधस्तनग्रन्थे दण्डवर्णनव्याख्यातोऽवसेयं, ईप्सितात्तुविपरीतत्वेनेच्छागोचरीकृता ये शीतोष्णस्पर्शास्तैर्युक्तां उष्णर्तौ शीतस्पर्शां शीतर्तौ उष्णस्पर्शां मध्यमर्त्तौ मध्यमस्पर्शामिति भावः, त्रिषु स्थानेषु—मध्योदरत्वलक्षणेषु तनुकां—कृशां तनुमध्या—तनूदरी तन्वङ्गीतिकविप्रसिद्धेः, ननु सामुद्रिकेऽन्यान्यपि दन्तत्वगादीनि तनूनि कथितानि तथा च सति कथं तनूनां त्रिसङ्ख्याङ्कता युज्यते इति ? उच्यते, —

विचित्रत्वात् कविरुचेस्त्रिकसङ्ख्याविशिष्टानुप्रासभासुरं ग्रन्थं निबध्नता ग्रन्थकारेण स्त्रीपुंससाधारणानि यानि त्रिकरूपाणि लक्षणानि समुद्धृत्यानुप्रासाभङ्गार्थं त्रिकरूपत्वेन निबद्धानि तेन नेहापरग्रन्थविरोधः, अत एव दन्तत्वगादीनि तनून्यपि तस्या अत्र न विवक्षितानीति, एवमुत्तरत्रापि भाव्यं, त्रिषु—क्षान्ताधरयोनिलक्षणेषु स्थानेषु ताम्रां—रक्तां, दृगन्तरक्तत्वं हि स्त्रीणां दक्चुम्बने पुरुषस्यातीव मनोहरं भवतीति, त्रयो वलयो—मध्यवतिरेखारूपा यस्याः सा तथा तां, अत्र द्वितीयैकवचनलोपः प्राकृतत्वात्, त्रिवलीकत्वं स्त्रीणामतिप्रशस्यं पुंसां तु तथाविधं न, यदाह—

॥ १ ॥ "शस्त्रान्तं स्त्रीभोगिनमाचार्यं बहुसुतं यथासङ्ख्यम् ।
एकद्वित्रिचतुर्भिर्वलिभिर्विद्यान् नृपं त्ववलिम् ॥"

**मू. (१०२)** *तिसु तणुअं तिसु तंबं तिवलीगतिउण्णयं तिगंभीरं ।*
*तिसु कालं तिसु सेअं तिआयतं तिसु अ विच्छिण्णं ॥*

**वृ.** तथा त्रिषु—स्तनजघनयोनिलक्षणेषु उन्नतां त्रिषु—नाभिसत्वस्वररूपेषु गम्भीरां त्रिषु—रोमराजीचूचुककनीनिकारूपेष्ववयवेषु कृष्णां त्रिषुदन्तस्मितचक्षुर्लक्षणेषु श्वेतां त्रिषु—

वेणीबाहुलतालोचनेषु आयतां-प्रलम्बां त्रिषु-श्रोणिचक्रजघनस्थलीनितम्बबिम्बेषु विस्तीर्णां।

*मू. (१०३) समसरीरं भरहे वासंमि सव्वमहिलप्पहाणं सुंदरथणजघणवरकरचलणणयणसिरसिजदसणजणहिअयरमणमणयणाणि य कडगाणि य तुडिआणि अ गेण्हइ २ ता ताए उक्किट्ठाए तुरिआए जाव उद्धूआए विज्जाहरगईए जेणेव भरहे राया तेणेव उवागच्छंति २ ता अंतलिक्खपडिवण्णा सखिंखिणीयाइं जाव जएणं विजेणं वद्धावेंति २ ता एवं वयासी-*

*अभिजिए णं देवाणुप्पिआ! जाव अम्हे देवाणुप्पिआणं आणत्तिकिंकरा इतिकट्टु तं पडिच्छंतु णं देवाणुप्पिआ! अम्हं इणं जाव विनमी इत्थीरयणं नमी रयणाणि समप्पेइ। तए णं से भरहे राया जाव पडिविसज्जेइ २ ता पोसहसालाओ पडिनिक्खमइ २ ता मज्जणघरं अनुपविसइ २ ता भोअणमंडवे जाव नमिविनमीणं विज्जाहरराईणं अट्ठाहिअमहामहिमा।*

*तए णं से दिव्वे चक्करयणे आउहघरसालाओ पडिनिक्खमइ जाव उत्तरपुरत्थिमं दिसिं गंगादेवीभवणाभिमुहे पयाए आवि होत्था, सच्चेव सव्वा सिंधुवत्तव्वया जाव नवरं कुंभट्ठसहस्सं रयणचित्तं नानामणिकणगरयणभत्तिचित्ताणि अ दुवे कणगसीहासणाइं सेसं तं चेव जाव महिमत्ति*

वृ. समशरीरां समचतुरस्रसंस्थानत्वात्, भरते वर्षे सर्वमहिलाप्रधानां, सुन्दरं स्तनजघनवरकरचलननयनं यस्याः सा तथा तां, शिरसिजाः-केशाः दशनाः-दन्तास्तैर्जनहृदयरमणी-द्रष्टलोकचित्तक्रीडाहेतुकं अत एव मनोहरी पश्चात् पदद्वयस्य कर्मधारयः, 'सिङ्गारागारे'त्यत्र यावत्पदात् सिङ्गारागारचारुवेसं संगयगयहसिअभणिअचिट्ठिअविलाससललिअसंलावनिउण इति संग्रहः, श्रृङ्गारस्य-प्रथमरसस्यागारं-गृहमिव चारुर्वेषो यस्याः सा तथा तां सङ्गता-उचिता गतहसितभणितचेष्टितविलासा यस्याः सा तथा, तत्र गतं-गमनं हसितं-स्मितं भणितं-वाणी चेष्टितं च-अपुरुषचेष्टा विलासो-नेत्रचेष्टा तथा सह ललितेन-प्रसन्नतया ये संलापाः-परस्परभाषणलक्षणास्तेषु निपुणा या सा तथा, तथा युक्ताः-सङ्गताः ये उपचारा-लोकव्यवहारास्तेषु कुशला या सा तथा, ततः पदत्रयकर्मधारयः तां-

-अमरवधूनां सुरूपं-सौन्दर्यं रूपेणानुहरन्तीं-अनुकुर्वतीं भद्रे-कल्याणकारिणी यौवने वर्त्तमानां, शेषं तु प्राग्योजितार्थं, 'गिण्हित्ता' इत्यादि, गृहीत्वा तयोत्कृष्टया त्वरितया यावदुद्धूतया विद्याधरगत्या यत्रैव भरतो राजा तत्रैवोपागच्छतः, उपागत्य चान्तरिक्षप्रतिपन्नौ सकिंकिणीकानि यावत्पदात् पञ्चवर्णानि वस्त्राणि प्रवरपरिहितौ इत्यादि जयेन विजयेन वर्द्धयतः वर्द्धयित्वा चैवमवादिषातां-अभिजितं देवानुप्रियैः यावत्शब्दात् सर्वं मागधगमवद्वाच्यं, नवरमुत्तरेणं चुल्लहिमवंतमेराए इति 'अम्हे' णं देवाणुप्पिआणं विसयवासिणो' त्ति आवां देवानुप्रियाणां स्त्रीरत्नं नमिश्च रत्नानि समर्पयति। अथ भरतो यदकार्षीत्तदाह-'तए णं०, ततः स भरतो राजा यावच्छब्दात् प्रीति-दानग्रहणसत्कारणादि ग्राह्यं, प्रतिविसर्जयति प्रतिविसृज्य च पौषधशालातः प्रतिनिष्क्रामति प्रतिनिष्क्राम्य च मज्जनगृहमनुप्रविशति अनुप्रविश्य च स्नानविधि पूर्णोऽत्र वाच्यः ततो भोजनमण्डपे पारणं वाच्यं, यावच्छब्दादत्र श्रेणिप्रश्रेणिशब्दनं अष्टाहिककरणाज्ञापनमिति, ततस्तौ नमिविनम्योर्विद्याधरराज्ञोरष्टाहिकां महामहिमां कुर्वन्तीति शेषः, आज्ञां च प्रत्यर्पयन्तीति प्रसङ्गाद् बोध्यमिति, अथ दिग्विजयपरमाङ्गभूतस्य चक्ररत्नस्य को व्यतिकर ?

'तए णं' मित्यादि, ततो-नमिविनमिखचरेन्द्रसाधनानन्तरं तद्दिव्यं चक्ररत्नमायुधगृहशा-

सातः प्रतिनिष्क्रामतीत्यादिकं प्राग्वत्, नवरमुत्तरपौरस्त्यां दिशम्–ईशानदिशं, वैताढ्यतो गङ्गादेवी-भवनाभिमुखं गच्छतः ईशानकोणगमनस्य ऋजुमार्गत्वात्, अत्र निर्णेतुकामेन जम्बूद्वीपालेख्यं द्रष्टव्यं, गङ्गादेवीभवनाभिमुखं प्रयातं चाप्यभवत्, सैव सर्वा सिन्धुदेवीवक्तव्यता गङ्गाभिलापेन ज्ञेया यावत्प्रीतिदानमिति गम्यं, नवरं तत्रायं विशेषः–रत्नविचित्रं कुम्भाष्टाधिकसहस्रं, नानामणिकनकरत्नमयी, भक्ति–विच्छित्तिस्तया विचित्रे च द्वे कनकसिंहासने, शेषं प्राभृतग्रहण-सन्मानदानादिकं तथैव, यावदष्टाहिका महिमेति, यच्च ऋषभकूटतः प्रत्यावृत्तो न गङ्गां साधयामास तद्वैताढ्यवर्तिविद्याधराणामनात्मसात्करणेन परिपूर्णोत्तरखण्डस्यासाधितत्वात् कथं गङ्गानिष्कुट-साधनायोपक्रमते इत्यवसेयं, यच्चास्य गङ्गादेवीभवने भोगेन वर्षसहस्रातिवाहनं श्रूयते तत्प्रस्तुतसूत्रे चूर्णौ चानुक्तमपि ऋषभचरित्रादवसेयम् । अथाग्रतो दिग्यात्रामाह–

**मू. (१०४)** *तए णं से दिव्वे चक्करयणे गंगाए अट्ठाहियाए महामहिमाए निव्वत्ताए समाणीए आउहघरसालाओ पडिनिक्खमइ २ त्ता जाव गंगाए महानईए पच्चत्थिमिल्लेणं कूलेणं दाहिणदिसि खंडप्पवायगुहाभिमुहे पयाए आवि होत्था, तते णं से भरहे राया जाव जेणेव खंडप्पवायगुहा तेणेव उवागच्छइ २ त्ता सच्चा कयमालकवत्तव्वया नेअव्वा नवरि नट्टमालगे देवे पीतिदानं से आलंकारिअभंडं कडगाणि अ सेसं सव्वं तहेव जाव अट्ठाहिआ महाम० ।*

*तए णं से भरहे राया नट्टमालगस्स देवस्स अट्ठाहिआए म० निव्वत्ताए समाणीए सुसेणं सेनावइं सद्दावेइ २ त्ता जाव सिंधुगमो नेअव्वो, जाव गंगाए महानईए पुरत्थिमिल्लं निक्खुडं सगंगासागरगिरिमेरागं समविसमनिक्खुडाणि अ ओअवेइ २ त्ता अग्गाणि वराणि रयणाणि पडिच्छइ २ त्ता जेणेव गंगा महानई तेणेव उवागच्छइ २ त्ता दोच्चंपि सक्खंधावारबले गंगामहानई विमलजलपतुंगवीइं नावाभूएणं चम्मरयणेणं उत्तरइ २ त्ता जेणेव भरहस्स रन्नो विजयखंधावारणि-वेसे जेणेव बाहिरिआ उवट्ठाणसाला तेणेव उवागच्छइ २ त्ता आभिसेक्काओ हत्थिरयणाओ पच्चोरुहइ २ त्ता अग्गाइं वराइं रयणाइं गहाय जेणेव भरहे राया तेणेव उवागच्छइ २ त्ता करयलपरिग्गहिअं जाव अंजलिं कट्टु भरहं रायं जएणं विजएणं वद्धावेइ २ त्ता अग्गाइं वराइं रयणाइं उवणेइ ।*

*तए णं से भरहे राया सुसेणस्स सेनावइस्स अग्गाइं वराइं रयणाइं पडिच्छइ २ त्ता सुसेणं सेनावइं सक्कारेइ सम्माणेइ २ त्ता पडिविसज्जेइ, तए णं से सुसेणे सेनावई भरहस्स रन्नो सेसंपि तहेव जाव विहरइ, तए णं से भरहे राया अन्नया कयाइ सुसेणं सेनावइरयणं सद्दावेइ २ त्ता एवं वयासी–गच्छण्णं भो देवाणुप्पिआ ! खंडगप्पवायगुहाए उत्तरिल्लस्स दुवारस्स कवाडे विहाडेहि २ त्ता जहा तिमिसगुहाए तहा भाणिअव्वं जाव पिअं भे भवउ सेसं तहेव जाव भरहो उत्तरिल्लेणं दुवारेणं अईइ, ससिव्व मेहंधयारनिवहं तहेव पविसंतो मंडलाइं आलिहइ, तीसे णं खंडगप्पवायगुहाए बहुमज्झदेसभाए जाव उम्मग्गणिमग्गजलाओ णामं दुवे महानईओ तहेव नवरं पच्चत्थिमिल्लाओ कडगाओ पवूढाओ समाणीओ पुरत्थिमेणं गंगं महानइं समप्पेंति, सेसं तहेव णवरिं पच्चत्थिमिल्लेणं कूलेणं गंगाए संकमवत्तव्वया तहेवत्ति ।*

*तए णं खंडगप्पवायगुहाए दाहिणिल्लस्स दुवारस्स कवाडा सयमेव महया २ कोंचारवं करेमाणा २ सरसरस्सगाइं ठाणाइं पच्चोसक्कित्था, तए णं से भरहे राया चक्करयणदेसियमग्गे जाव खंडगप्पवायगुहाओ दक्खिणिल्लेणं दारेणं णीणेइ ससिव्व मेहंधयारनिवहाओ ।*

वृ. 'तए णं'मित्यादि, ततो–गङ्गादेवीसाधनानन्तरं तद्दिव्यं चक्ररत्नं गङ्गाया देव्या अष्टाहिकायां महिमायां निवृत्तायां सत्यामायुधगृहशालातः प्रतिनिष्क्रामति यावत्पदादन्तरिक्षप्रतिपन्नपदादिपरिग्रहः गङ्गाया महानद्याः पश्चिमे कूले दक्षिणदिशि खण्डप्रपातगुहाभिमुखं प्रयातं चाप्यभवत्, ततः स भरतो राजा चक्ररत्नं पश्यतीत्यादिकं तावद्वक्तव्यं यावत्खण्डप्रपातगुहायामागच्छतीति पिण्डार्थः, सर्वा कृतमालवक्तव्यता–तमिस्रगुहाधिपसुरवक्तव्यता नेतव्या–ज्ञातव्येत्यर्थः, नवरं नाट्यमालको नृत्तमालको वा देवो गुहाधिपः प्रीतिदानं 'से' तस्य आलङ्कारिकभाण्डं–आभरणभृतभाजनं कटकानि च शेषं–उक्तविशेषातिरिक्तं सर्वं तथैव–सत्कारसन्मानादिकं कृतमालदेवतावद्वक्तव्यं यावदष्टाहिका, अथ दाक्षिणात्यगङ्गानिष्कुटसाधनाधिकारमाह–

'तए णं'मित्यादि, ततः–खण्डप्रपातगुहापतिसाधनानन्तरं स भरतो राजा नाट्यमालकस्य देवस्याष्टाहिकायां पूर्णायां सुषेणं सेनापतिं शब्दयति, शब्दयित्वा च 'जाव सिन्धुगमो'त्ति यावत्परिपूर्णः 'एवं वयासी–गच्छाहि णं भो देवाणुप्पिआ ! सिन्धुए'इत्यादिकः सिन्धुगमः–सिन्धुनदीनिष्कुटसाधनपाठो गङ्गाभिलापेन नेतव्यः यावद् गङ्गाया महानद्याः पौरस्त्यं निष्कुटं–गङ्गायाः पश्चिमतो वहन्त्या सागरेण पूर्वतः परिक्षेपकारिणा गरिभ्यां दक्षिणतो वैताढ्येन उत्तरतो लघुहिमवता कृता या मर्यादा–व्यवस्था तया सह वर्त्तते यत्तत्तथा, अन्यत्सर्वं प्राग्वत् सूत्रतो व्याख्यातश्च गङ्गागमने परिभावनीयं, अथ नाट्यमालदेवस्य वशीकरणप्रयोजनमाह–

'तए णं' मित्यादि, ततो–गङ्गानिष्कुटसाधनानन्तरं स भरतः सुषेणं सेनापतिरत्नं शब्दयति शब्दयित्वा चैवमवादीदित्यादिकं अत्र गुहाकपाटोद्घाटनाज्ञापनादिकं एकोनपञ्चाशन्मण्डलालेखनान्तं सर्वं तमिस्रगुहायामिव ज्ञेयं, अत्र यो विशेषस्तन्निरूपणार्थमाह– 'तीसे णं' मित्यादि, तस्याः–खण्डप्रपतगुहायाः बहुमध्यदेशभागे यावत्पदात् 'एत्थ णं'मिति पदमात्रमवसेयं, उन्मग्नजलानिमग्नजले नाम्ना द्वे महानद्यौ स्तः, तथैव–तमिस्रगुहागतोन्मग्नानिमग्नानदीगमेन ज्ञातव्ये, नवरं खण्डप्रपातगुहायाः पाश्चात्यकटकात् प्रव्यूढे सत्यौ पूर्वेण गङ्गां महानदीं समाप्नुतः– प्रविशतः, शेषं विस्तारायामोद्वेधान्तरादिकं तथैव–तमिस्रागतनदीद्वयप्रकारेणावसेयं, नवरं गङ्गायाः पाश्चात्यकूले संक्रमवक्तव्यतासेतुकरणाज्ञादानतद्विधानोत्तरणादिकं ज्ञेयं, तथैव–प्राग्वद् ज्ञेयमिति, अथैतस्मिन्नवसरे दक्षिणतो यज्जातं तदाह–

'तए णं'मित्यादि, प्राग्व्याख्यातार्थं, अथोद्घाटितयोर्गुहादक्षिणद्वारकपाटयोः प्रयोजनमाह– 'तए णं'मित्यादि, ततःकपाटोद्घाटनानन्तरं स भरतो राजा चक्ररत्नदेशितमार्गं यावत्करणात् 'अनेगरायवरसहस्साणुआयमग्गे महया उक्किट्ठसीहणायबोलकलकलरवेणं पक्खुभिअमहासमुद्दरवभूअंपिव करेमाणे' इति पदानां परिग्रहः, खण्डप्रपातगुहातो दक्षिणद्वारेण निरेति शशीव मेघान्धकारनिवहात्, प्राग्व्याख्यातं, ननु चक्रिणां तमिस्रया प्रवेशः खण्डप्रपातया निर्गमः किंकारणिकः ?, खण्डप्रपातया प्रवेशस्तमिस्रया निर्गमोऽस्तु, प्रवेशनिर्गमरूपस्य कार्यस्योभयत्र तुल्यत्वात्, उच्यते, तमिस्रया प्रवेशे खण्डप्रपाता निर्गमे च सृष्टि, तया च क्रियमाणस्य तस्य प्रशस्तोदर्कत्वात्, अन्यच्च खण्डप्रपातया प्रवेशे आसन्नोपस्थीयमान ऋषभकूटे चतुर्दिक्पर्यन्तसाधनमन्तरेण नामन्यासोऽपि न स्यादिति ।। अथ दक्षिणभरतार्द्धागतो भरतो यच्चक्रे तदाह–

मू. (१०५) *तए णं से भरहे राया गंगाए महानईए पच्चत्थिमिल्ले कूले दुवालसजोअणायामं*

*नवजोअणविच्छिण्णं जाव विजयक्खंधावारणिवेसं करेइ, अवसिट्ठं तं चेव जाव निहिरयणाणं अट्ठमभत्तं पगिण्हइ, तए णं से भरहे राया पोसहसालाए जाव निहिरयणे मनसि करेमाणे करेमाणे चिट्ठइत्ति, तस्स य अपरिमिअरत्तरयणा धुअमक्खयमव्वया सदेवा लोकोपचयंकरा उवगया नव निहिओ लोगविस्सुअजसा, तंजहा–*

**वृ.** 'तए ण'मित्यादि, ततो–गुहानिर्गमानन्तरं स भरतो राजा गङ्गाया महानद्याः पश्चिमे कूले द्वादशयोजनायामं नवयोजनविस्तीर्णं यावत्पदात् 'वरणगरसरिच्छं' इति ग्राह्यं, विजयस्कन्धावारनिवेशं करोति, अवशिष्टं–वर्द्धकिरत्नशब्दाज्ञापनामष्टमभक्तं प्रगृह्णाति, ततः स भरतो राजा पौषधशालायां यावत्पदात् 'पोसहिं' इत्यादिकं 'एगे अबीए' इत्यन्तं पदकदम्बकं ग्राह्यं, निधिरत्नानि मनसि कुर्वन् २ तिष्ठति, इत्थमनुतिष्ठतस्तस्य किं जातमित्याह–'तस्स य'इत्यादि, तस्य–भरतस्य चशब्दोऽर्थान्तरारम्भे नव निधयः उपागताःउपस्थिता इत्यन्वयः, किंभूताः ? – अपरिमितानि रक्तानि उपलक्षणादनेकवर्णानि रत्नानि येषु ते तथा, इदं च विशेषणं तन्मतापेक्षया बोध्यं यन्मते निधिष्वनन्तरमेव वक्ष्यमाणाः पदार्था साक्षादेवोत्पद्यन्ते इति, अयमर्थः–

एकेषां मते नवसु निधिषु कल्पपुस्तकानि शाश्वतानि सन्ति, तेषु च विश्वस्थितिराख्यायते, कथांचित्तु मते कल्पपुस्तकप्रतिपाद्याः अर्थाः साक्षादेव तत्रोत्पद्यन्ते इति, एनयोरपरमतापेक्षया अपरिमिए इत्यादि विशेषणमिति, तथा ध्रुवास्तथाविधपुस्तकवैशिष्टयरूपस्वरूपस्यापरिहाणेः अक्षयाः अवयविद्रव्यस्यापरिहाणे– अव्ययास्तदारम्भकप्रदेशापरिहाणेः, अत्र प्रदेशापरिहाणियुक्ति समयसवादिनी पद्मवरवेदिकाव्याख्यासमये निरूपितेति ततोऽवसेया, अत्र पदद्वये मकारोऽलाक्षणिकः, ततः पदत्रयकर्मधारयः, सदेवा अधिष्ठायकदेवकृतसान्निध्या इति भावः लोकोपचयङ्कराः, अत्र नवा खित्कृदन्ते 'रात्रे' रिति सूत्रे योगविभागेन व्याख्याने तीर्थकरादिशब्दवत् साधुत्वं ज्ञेयं

यद्वा 'देवंनागसुवण्णकिंनरगणस्सब्भूअभावच्चिए' इत्यादिवदार्षत्वादनुस्वारे लोकोपचयकराः–वृत्तिकल्पककल्पपुस्तकप्रतिपादनेन लोकानां पुष्टिकारकाः लोकविख्यातयशस्का इति, अथ नामतस्तानुपदर्शयति–

**मू. (१०६)** *"नेसप्पे १ पंडुअए २ पिंगलए ३ सव्वरयण ४ महपउमे ५ ।*
*काले ६ अ महाकाले ७ मानवगे महानिही ८ संखे ९ ॥*

**वृ.** तद्यथेत्युपदर्शने नैसर्प्पस्य देवविशेषस्यायं नैसर्प्पः, एवमग्रेऽपि भाव्यं, अथ यत्र निधौ यदाख्यायते तदाह–

**मू. (१०७)** *नेसप्पंमि निवेसा गामागरनगरपट्टणाणं च ।*
*दोणमुहमडंबाणं खंधावारावणगिहाणं ।*

**वृ.** 'नेसप्प'मित्यादि, नैसर्प्पनामनि निधौ निवेशाः–स्थापनानि स्थापनविषयो ग्रामादीनां गृहपर्यन्तानां व्याख्यायन्ते, तत्र ग्रामो–वृत्यावृतः आकरो–यत्र लवणाद्युत्पद्यते नगरं–राजधानी पत्तनं–रत्नयोनिर्द्रोणमुखं–जलस्थलनिर्गमप्रवेशं मडम्बं–अर्द्धतृतीयगव्यूतान्तर्ग्रामरहितं स्कन्धावारः–कटकं आपणो हट्टः, गृहं–भवनं उपलक्षणात् खेटकर्बटादिग्रहः ।

**मू. (१०८)** *गणिअस्स य उप्पत्ती माणुम्माणस्स जं पमाणं च ।*
*धण्णस्स य बीआण य उप्पत्ती पंडुए भणिआ ।*

वृ. अथ द्वितीयनिधानवक्तव्यतामाह–'गणिअस्स'इत्यादि, गणितस्य–सङ्ख्याप्रधानतया व्यवहर्त्तव्यस्य दीनारादेः नालिकेरादेर्वा चशब्दात् परिच्छेद्यधनस्य मौक्तिकादेरुत्पत्तिप्रकारः तथा मानं–सेतिकादि तद्विषयं यत्तदपि मानमेव धान्यादि मेयमिति भावः, तथा उन्मानं–तुलाकर्षादि तद्विषयं यत्तदप्युन्मानं खण्डगुडादि धरिमजातीयं धनमित्यर्थः, ततः समाहारद्वन्द्वस्तस्य च यत्प्रमाणं लिङ्गविपरिणामेन तत्पाण्डुके भणितमिति सम्बन्धः, धान्यस्य–शाल्यादेर्बीजाना च–वापयोग्य-धान्यानामुत्पत्तिः पाण्डुके निधौ भणिता ।

मू. (१०९) *सव्वा आभरणविही पुरिसाणं जा य होइ महिलाणं ।*
*आसाण य हत्थीण य पिंगलगणिहिंमि सा भणिआ ॥*

वृ. अथ तृतीयनिधिस्वरूपं निरूप्यते–'सव्वा आभरण'इत्यादि, सर्व आभरणविधिर्यः पुरुषाणां यश्च महिलानां तथाऽश्वानां हस्तिनां च स यथौचित्येन पिङ्गलकनिधौ भणितः लिङ्गवि-परिणामः प्राकृतशैलीभवः ।

मू. (११०) *रयणाइं सव्वरयणे चउदसवि वराइं चक्कवट्टिस्स ।*
*उप्पज्जंते एगिंदिआइं पंचिंदिआइं च ॥*

वृ. अथ चतुर्थनिधिः–'रयणाइं'इत्यादि, रत्नानि चतुर्दशापि वराणि चक्रवर्तिनश्चक्रादीनि सप्तैकेन्द्रियाणि सेनापत्यादीनि च सप्त पञ्चेन्द्रियाणि सर्वरत्नाख्ये महानिधावुत्पद्यन्ते, तदुत्पत्ति तत्र व्यावर्ण्यत इत्यर्थः, अन्ये त्वेवमाहुः–उत्पद्यन्ते एतत्प्रभावात् स्फातिमद्भवन्तीत्यर्थः ।

मू. (१११) *वत्थाण य उप्पत्ती निप्फत्ती चेव सव्वभत्तीणं ।*
*रंगाण य धोव्वाण य सव्वाएसा महापउमे ॥*

वृ. अथ पञ्चमो निधिः–'वत्थाण य'इत्यादि, सर्वेषां वस्त्राणां च या उत्पत्तिस्तथा सर्वविभक्तीनां– वस्त्रगतसर्वरचनानां रङ्गानां च–मञ्जिष्ठाकृमिरागकुसुम्भादीनां 'धोव्वाण य'त्ति सर्वेषां प्रक्षालन- विधीनां च या निष्पत्ति सर्वा एषा महापद्मनिधौ ।

मू. (११२) *काले कालण्णाणं सव्वपुराणं च तिसुवि वंसेसु ।*
*सिप्पसयं कम्माणि अ तिन्नि पयाए हिअकराणि ॥*

वृ. अथ षष्ठो निधिः–'काले कालण्णाण'मित्यादि, कालनामनि निधौ कालज्ञानं–सकल-ज्योतिशास्त्रनुबन्धि ज्ञानं तथा जगति त्रयो वंशाः वंशः प्रवाहः आवलिका इत्येकार्था, तद्यथा–तीर्थकरवंशश्चक्रवर्त्तिवंशो बलदेववासुदेववंशश्च तेषु त्रिष्वपि वंशेषु यद्भाव्यं यच्च पुराणमतीतमुपलक्षणमेतद्वर्त्तमानं शुभाशुभं तत्सर्वमत्रास्ति, इतो महानिधितो ज्ञायत इत्यर्थः, शिल्पशतं–विज्ञानशतं घटलोहचित्रवस्त्रनापितशिल्पानां पञ्चानामपि प्रत्येकं विंशतिभेदत्वात् कर्माणि च–कृषिवाणिज्यादीनि जघन्यमध्यमोत्कृष्टभिन्नानि त्रीण्येतानि प्रजायाहितकराणि निर्वाहा-भ्युदयहेतुत्वात् एतत्सर्वमत्राभिधीयते ।

मू. (११३) *लोहस्स य उप्पत्ती होई महाकालि आगराणं च ।*
*रुप्पस्स सुवण्णस्स य मणिमुत्तसिलप्पवालाणं ॥*

वृ. अथ सप्तमो निधिः–'लोहस्स य'इत्यादि, लोहस्य च नानाविधस्योत्पत्तिर्भवति महाकाले निधौ, तत्र तदुत्पत्तिराख्यायते इत्यर्थः, तथा रूप्यस्य सुवर्णस्य च मणीनां–चन्द्रकान्तादीनां

मुक्तानां–मुक्ताफलानां शिलानां–स्फाटिकादीनां प्रवालानां च सम्बन्धिनां आकराणामुत्पत्तिर्भवति, महाकाले निधाविति योगः ।

मू. (११४) *जोहाण य उप्पत्ती आवराणं य पहरणाणं य ।*
*सव्वा य जुद्धणीई माणवगे दंडनीई अ ॥*

वृ. अथाष्टमः–'जोहाण य' इत्यादि, योधानां–शूरपुरुषाणां चशब्दात्, कातराणामुत्पत्तिरभिधीयते, यथा योधत्वं कातरत्वं च जायते तथाऽत्राभिधीयते इत्यर्थः, तथा आवरणानां च–खेटकानां सन्नाहानां वा प्रहरणानां–अस्यादीनां च सर्वा च युद्धनीति–व्यूहरचनादिलक्षणा सर्वापि च दण्डेनोपलक्षिता नीतिर्दण्डनीति–समामादिश्चतुर्विधा माणवकनाम्नि निधावभिधीयते, ततः प्रवर्त्तत इति भावः ।

मू. (११५) *नट्टविही नाडगविही कव्वस्स य चउव्विहस्स उप्पत्ती ।*
*संखे महानिहिंमी तुडिअंगाणं च सव्वेसिं ॥*

वृ. अथ नवमः–'नट्टविही णाडगविही' इत्यादि, सर्वोऽपि नृत्यविधि–नाट्यकरणप्रकारः सर्वोऽपि च नाटकविधि–अभिनेयप्रबन्धप्रपञ्चनप्रकारः तथा चतुर्विधस्य काव्यस्य ग्रन्थस्य–धर्म्मा १ र्थस्काम ३ मोक्ष ४ लक्षणपुरुषार्थनिबद्धस्याथवा संस्कृत १–प्राकृता २ पभ्रंश ३ संकीर्ण ४ भाषानिबद्धस्य गद्य १ पद्य २ गेय ३ चौर्ण ४ पदबद्धस्य वा उत्पत्ति–निष्पत्तिस्तद्विधि, तत्राद्यं काव्यचतुष्कं प्रतीतं, द्वितीयचतुष्के संस्कृतप्राकृते सुबोधे अपभ्रंशः–तत्तद्देशेषु शुद्धं भाषितं सङ्कीर्णभाषा–शौरसेन्यादि, तृतीयचतुष्के गद्यं–अच्छन्दोबद्धं शस्त्रपरिज्ञाध्ययनवत् पद्यं–छन्दोबद्धं विमुक्त्यध्ययनवत् गेयं–गन्धर्व्या रीत्या बद्धं गानयोग्यं चौर्णं–बाहुलकविधिबहुलं गमपाठबहुलं निपातबहुलं निपाताव्ययबहुलं ब्रह्मचर्याध्ययनपदवत्, अत्र चेतरयोर्गद्यपद्यान्तर्भावेऽपि पृथगुपादानं तद्गानधर्माधेयधर्मविशिष्टतया विशेषणविवक्षणार्थं, संखे महानिधौ, तथा त्रुटिताङ्गानां च–तूर्याङ्गाणां सर्वेषां वा तथातथावाद्यभेदभिन्नानामुत्पत्ति शङ्खे महानिधाविति ।

मू. (११६) *चक्कट्ठपइट्ठाणा अट्ठुस्सेहा य नव य विक्खंभा ।*
*बारसदीहा मंजूससंठिआ जण्हवीइ मुहे ॥*

वृ. अथ नवानामपि निधीनां साधारणं स्वरूपमाह–'चक्कट्ठ' इत्यादि, प्रत्येकमष्टसु चक्रेषु प्रतिष्ठानं–अवस्थानं येषां ते तथा, यत्र ग... गच्छन्ति तत्र तत्राष्टचक्रप्रतिष्ठिता एव वहन्ति, प्राकृतत्वादष्टशब्दस्य परनिपातः, अष्टौ योजनानि उत्सेधः–उच्चैस्त्वं येषां ते तथा, नव च योजनानीति गम्यते विष्कम्भेन–विस्तारेण नवयोजनविस्तारा इत्यर्थः, द्वादशयोजनदीर्घा मंजूषावत्संस्थिताः, जाह्नव्या–गङ्गाया मुखे यत्र समुद्रं गङ्गा प्रविशति तत्र सन्तीत्यर्थः ।

॥ १ ॥ 'इत्युचुस्ते वयं गङ्गामुखमागधवासिनः ।
आगतास्त्वां महाभाग !, त्वद्भाग्येन वशीकृताः ॥

इति त्रिषष्टीयचरित्रोक्तेः, चक्र्युत्पत्तिकाले च भरतविजयानन्तरं चक्रिणा सह पातालमार्गेण भाग्यवत्पुरुषाणां हि पदाधःस्थितयो निधय इति चक्रिपुरमनुयान्ति ।

मू. (११७) *वेरुलिअमणिकवाडा कणगमया विविहरयणपडिपुण्णा ।*

*ससिसूरचक्कलक्खण अणुसमवयणोववत्ती या ॥*

**वृ.** तथा वैडूर्यमणिमयानि कपाटानि येषां ते तथा, मयटप्रत्ययस्य वृत्त्या उक्तार्थता, कनकमयाः–सौवर्णा विविधरत्नप्रतिपूर्णा शशिसूरचक्राकाराणि लक्षणानि–चिह्नानि येषां ते तथा, प्रथमाबहुवचनलोपः प्राकृतत्वात्, अनुरूपा समा–अविषमा वदनोपपत्ति–द्वारघटना येषांते तथा।

**मू. (११८)** *पलिओवमट्ठिईआ निहिसरिणामा य तत्थ खलु देवा ।*
*जेसिं ते आवासा अक्केज्जा आहिवच्चा य ॥*

**वृ.** पल्योपमस्थितिका निधिसदृग्नामानः खलु, तत्र च निधिषु ते देवा येषां देवाना त एव निधयः आवासाः–आश्रयाः, किंभूताः–अक्रेया–अक्रयणीयाः, किमर्थमित्याह–आधिपत्याय–आधिपत्यनिमित्तं, कोऽर्थः ? –तेषामाधिपत्यार्थी कश्चित्क्रयेण–मूल्यदानादिरूपेण तान् न लभते इति, किन्तु पूर्वसुचरितमहिम्नैवेत्यर्थः ।

**मू. (११९)** *एए नव निहिरयणा पभूयधणरयणसंचयसमिद्धा ।*
*जे वसमुपगच्छंति भरहाविवचक्कवट्टीणं ॥*

**वृ.** एते नव निधयः प्रभूतधनरत्नसंचयसमृद्धाः ये भरताधिपानां–षट्खण्डभरतक्षेत्राधिपानां चक्रवर्त्तिनां वशमुपगच्छन्ति–वश्यतां यान्ति, एतेन वासुदेवानां चक्रवर्त्तित्वेऽप्येतद्विशेषणव्युदासः, निधिप्रकरणे चात्र स्थानाङ्गप्रवचनसारोद्धारादिवृत्तिगतानि बहूनि पाठान्तराणि ग्रन्थविस्तरभयादुपेक्ष्यैतत्सूत्रादर्शदृष्ट एव पाठो व्याख्यातः । अथ सिद्धनिधानो भरतो यच्चक्रे तदाह–

**मू. (१२०)** *तए णं से भरहे राया अट्ठमभत्तंसि परिणममाणंसि पोसहसालाओ पडिनिक्खमइ, एवं मज्जणघरपवेसो जाव सेणिपसेणिसद्दावणया जाव निहिरयणाणं अट्ठाहिअं महामहिमं करेइ, तए णं से भरहे राया निहिरयणाणं अट्ठाहिआए महामहिमाए निव्वत्ताए समाणीए सुसेणं सेनावइरयणं सद्दावेइ २ ता एवं वयासी–गच्छण्णं भो देवाणुप्पिआ ! गंगामहानईए पुरत्थिमिल्लं निक्खुडं दुच्चंपि सगंगासागर गिरिमेरागं समविसमणिक्खुडाणि अ ओअवेहि २ ता एअमाणत्तिअं पच्चप्पिणाहित्ति । तए णं से सुसेणे तं चेव पुव्ववण्णिअं भाणिअव्वं जाव ओअवित्ता तमाणत्तिअं पच्चप्पिणइ पडिविसज्जेइ जाव भोगभोगाइं भुंजमाणे विहरइ ।*

*तए णं से दिव्वे चक्करयणे अन्नया कयाइ आउहघरसालाओ पडिणिक्खमइ २ त्ता अंतलिक्खपडिवण्णे जक्खसहस्ससंपरिवुडे दिव्वतुडिअ जाव आपूरेंते चेव विजयक्खंधावारणिवेसं मज्झंमज्झेणं णिग्गच्छइ दाहिणपच्चत्थिमं दिसिं विणीअं रायहाणिं अभिमुहे पयाए आवि होत्था। तए णं से भरहे राया जाव पासइ २ त्ता हट्ठतुट्ठ जाव कोडुंबिअपुरिसे सद्दावेइ २ त्ता एवं वयासी–खिप्पामेव भो देवाणुप्पिआ ! आभिसेक्कं जाव पच्चप्पिणंति ।*

**वृ.** 'तए णं'मित्यादि व्यक्तं, अथ षट्खण्डदत्तदृष्टिर्भरतो यथोत्सहते तथाऽऽह–'तए णं'मित्यादि, इदमपि प्रायो व्यक्तं, नवरं गङ्गाया महानद्याः पौरस्त्यं निष्कुटमित्युक्ते उदीचीनमपि स्यादिति द्वितीयमित्युक्तं, अवशिष्टे न अस्यैव प्राप्तावसरत्वात्, गङ्गायाः पश्चिमतो वहन्त्याः सागराभ्यां–प्राच्यापाच्याभ्यां गिरिणा–वैताढ्येनोत्तरवर्त्तिना कृता या मर्यादा-क्षेत्रविभागस्तया सह वर्तते यत्तत्तथा, अथ सुषेणो यच्चक्रे तदाह– ततः–स्वाम्याज्ञानन्तरं सुषेणस्तं निष्कुटं साधयतीत्यादि, तदेव पूर्ववर्णितं–दाक्षिणात्यसिन्धुनिष्कुटवर्णितं भणितव्यम्, –यावन्निष्कुटं

साधयित्वा तामाज्ञप्तिकां प्रत्यर्पयति, प्रतिविसृष्टो यावद् भोगभोगान् भुञ्जानो विहरति।

अथ साधिताखण्डषट्खण्डे भरते सति यक्षक्रमुपचक्रमे तदाह– 'तए णं' मित्यादि, ततो–गङ्गादक्षिणनिष्कुटविजयानन्तरं तद् दिव्यं चक्ररत्नं अन्यदा कदाचिदायुधगृहात् प्रतिनिष्क्रामति, विशेषणैकदेशा अत्राशेषविशेषणस्मारणार्थं तेनान्तरिक्षप्रतिपन्नं यक्षसहस्रसंपरिवृत्तं दिव्यत्रुटितसन्निनादेनाऽऽपूरयदिवाम्बरतलं विजयस्कन्धावारनिवेशं मध्यंमध्येन–विजयस्कन्धावारस्य मध्यभागेन निर्गच्छति, दक्षिणपश्चिमां दिशि–नैऋतीं विदिशं प्रति विनीतां राजधानीं लक्षीकृत्याभिमुखं प्रयातं चाप्यभवत्, अयं भावः–खण्डप्रपातगुहासन्नस्कन्धावारनिवेशाद् विनीतां जिगमिषोर्नैऋत्यभिमुखगमनं लाघवायेति भावः, अथाभिविनीतं प्रस्थिते चक्रे भरतः किं चक्रे इत्याह–

'तए णं'मित्यादि, ततः–चक्रप्रस्थानादनन्तरं स भरतो राजा तद्दिव्यं चक्ररत्नमित्यादि यावत्पश्यति दृष्ट्वा च हृष्टतुष्टादिविशेषणः कौटुम्बिकपुरुषान् शब्दयति शब्दयित्वा चैवमवादीत्–क्षिप्रमेव भो देवानुप्रिया! आभिषेक्यं यावत्करणात् हस्तिरत्नं प्रतिकल्पयत सेना सन्नाहयत ते च सर्वं कुर्वन्ति आज्ञां च प्रत्यर्पयन्ति ।। अथोक्तमेवार्थं दिग्विजयकालाद्यधिकार्थविवक्षया विस्तरवाचनया चाह–

*मू. (१२१) तए णं से भरहे राया अज्जिअरज्जो निज्जिअसत्तू उप्पन्नसमत्तरयणे चक्करयणप्पहाणे नवनिहिवई समिद्धकोसे बत्तीसरायवरसहस्साणुआयमग्गे सट्ठीए वरिससहस्सेहिं केवलकप्पं भरहं वासं ओयवेइ ओअवेत्ता कोडुंबियपुरिसे सद्दावेइ २ त्ता एवं वयासी–खिप्पामेव भोदेवाणुप्पिआ! आभिसेक्कं हत्थिरयणं हयगयरह तहेव अंजणगिरिकूडसन्निभं गयवइं नरवई दुरूढे।*

*तए णं तस्स भरहस्स रन्नो आभिसेक्कं हत्थिरयणं दुरूढस्स समाणस्स इमे अट्ठट्ठमंगलगा पुरओ अहाणुपुव्वीए संपट्ठिआ, तंजहा–सोत्थिअसिरिवच्छजाव दप्पणे, तयनंतरं च णं पुण्णकलसभिंगार दिव्वा य छत्तपडागा जाव संपट्ठिआ, तयनंतरं च वेरुलिअभिसंतविमलदंडं जाव अहाणुपुव्वीए संपट्ठिअं।*

*तयनंतरं च णं सत्त एगिंदिअरयणा पुरओ अहानुपुव्वीए संपत्थिआ, तं०–चक्करयणे १ छत्तरयणे २ चम्मरयणे ३ दंडरयणे ४ असिरयणे ५ मणिरयणे ६ कागणिरयणे ७, तयनंतरं च णं नव महानिहिओ पुरओ अहाणुपुव्वीए संपट्ठिआ, तंजहा–णेसप्पे पंडुयए जाव संखे, तयनंतरं च णं सोलस देवसहस्सा पुरओ अहाणुपुव्वीए संपट्ठिआ, तयनंतरं च णं बत्तीसं रायवरसहस्सा अहाणुपुव्वीए संपट्ठिआ।*

*तयनंतरं च णं सेनावइरयणे पुरो अहाणुपुव्वीए संपट्ठिए, एवं गाहावइरयणे वद्धइरयणे पुरोहिअरयणे, तयनंतरं च णं इत्थिरयणे पुरओ अहाणुपुव्वीए० तयनंतरं च णं बत्तीसं उडुकल्लाणिआ सहस्सा पुरओ अहानुपुव्वीए० तयनंतरं च णं बत्तीसं जणवयकल्लाणिआसहस्सा पुरओ अहानुपुव्वीए तयनंतरं च णं बत्तीसं बत्तीसइबद्धा नाडगसहस्सा पुरओ अहाणुपुव्वीए)।*

*तयनंतरं च णं तिन्नि सट्ठा सूअसया पुरओ अहाणुपुव्वीए० तयनंतरं च णं अट्ठारस सेणिप्पसेणीओ पुरओ० तयनंतरं च णं चउरासीइं आससयसहस्सा पुरओ० तयनंतरं च णं चउरासीइं हत्थिसयसहस्सा पुरओ अहाणुपुव्वीए० तयनंतरं च णं छन्नउई मणुस्सकोडीओ पुरओ अहाणुपुव्वीए संपट्ठिआ, तयनंतरं च णं बहवे राईसरतलवर जाव सत्थवाहप्पभिईओ*

पुरओ अहाणुपुव्वीइ संपट्ठिआ तयनंतरं च णं बहवे असिग्गाहा लट्ठिग्गाहा कुंतग्गाहा चावग्गाहा चामरग्गाहा पासग्गाहा फलगग्गाहा परसुग्गाहा पोत्थयग्गाहा वीणग्गाहा कूअग्गाहा हडप्फग्गाहा दीविअग्गाहा सएहिं सएहिं रूवेहिं।

एवं वेसेहिं चिंधेहिं निओएहिं सएहिं २ वत्थेहिं पुरओ अहाणुपुव्वीए संपत्थिआ, तयनंतरं च णं बहवे दंडिणो मुंडिणो सिहंडिणो जडिणो पिच्छिणो हासकारगा खेड्डकारगा दवकारगा चाडुकारगा कंदप्पिआ कुक्कुइआ मोहरिआ गायंता य दीवंता य (वायंता) नच्चंता य हसंता य रमंता य कीलंता य सासेंता य सावेंता य जावेंता य रावेंता य सोमेंता य सोमावेंता य आलोअंता य जयजयसद्दं च पउंजमाणा पुरओ अहाणुपुव्वी संपट्ठिआ, एवं उववाइअगमेणं जाव तस्स रन्नो पुरओ महआसा आसधरा उभो पासिं णागा णागधरा पिट्ठओ रहा रहसंगेल्ली अहाणुपुव्वीए संपट्ठिआ इति।

तए णं से भरहाहिवे नरिंदे हारोत्थए सुकयरइनच्छे जाव अमरवइसण्णिभाए इद्धीए पहिअकित्ती चक्करयणदेसिअमग्गे अनेगरायवरसहस्साणुआयमग्गे जाव समुद्दरवभूअंपिव करेमाणे २ सव्विड्ढीए सव्वज्जुईए जाव निग्घोसणाइयरवेणं गामागरणगरखेडकव्वडमडंब जाव जोअणंतरिआहिं वसहीहिं वसमाणे २ जेणेव विणीआ रायहाणी तेणेव उवागच्छइ उवागच्छित्ता विणीआए रायहाणीए अदूरसामंते दुवालसजोअणायामं नव जोयणाविच्छिण्णं जाव खंधावारणिवेसं करेइ २ त्ता वद्धइरयणं सद्दावेइ २ त्ता जा पोसहसालं अनुपविसइ २ त्ता विणीआए रायहाणीए अट्ठमभत्तं पगिण्हइ २ त्ता जाव अट्ठमभत्तं पडिजागरमाणे २ विहरइ।

तए णं से भरहे राया अट्ठमभत्तंसि परिणममाणंसि पोसहसालाओ पडिनिक्खमइ २ त्ता कोडुंबिअपुरिसे सद्दावेइ २ त्ता तहेव जाव अंजणगिरिकूडसण्णिभं गयवइं नरवई दूरूढे तं चेव सव्वं जहा हेट्ठा नवरिं नव महानिहिओ चत्तारि सेणाओ न पविसंति सेसो सो चेव गमो जाव निग्घोसणाइएणं विणीआए रायहाणीए मज्झंमज्झेणं जेणेव सए गिहे जेणेव भवणवरवडिंसगपडिदुवारे तेणेव पहारेत्थ गमणाए, तए णं तस्स भरहस्स रण्णो विणीअं रायहाणिं मज्झंमज्झेणं अणुपविसमाणस्स अप्पेगइआ देवा विणीअं रायहाणिं सब्भंतरबाहिरिअं आसिअसम्मज्जिओवलित्तं करेंति अप्पेगइआ लाउल्लोइअमहिअं करेंति।

एवं सेसेसुवि पएसु, अप्पेगइआ नानाविहरागवसणुस्सियधयपडागामंडितभूमिअं अप्पे० लाउल्लोइअमहिअं करेंति, अप्पे० जाव गंधवट्टिभूअं करेंति, अप्पे० हिरण्णवासं वासिंति सुवण्णरयणवइरआभरणवासं वासेंति, तए णं तस्स भरहस्स विणीअं रायहाणिं मज्झंमज्झेणं अणुपविसमाणस्स सिंघाडग जाव महापहेसु बहवे अत्थत्थिआ कामत्थिआ भोगत्थिआ लाभत्थिआ इद्धिसिआ किब्बिसिआ कारोडिआ कारवाहिआ संखिया चक्किआ नंगलिआ मुहमंग- लिआ पूसमाणया वद्धमाणया लंखमंखमाइआ ताहिं ओरालाहिं इट्ठाहिं कंताहिं पिआहिं मणुन्नाहिं मणामाहिं सिवाहिं धण्णाहिं मंगल्लाहिं सस्सिरीआहिं हिअयगमणिज्जाहिं हिअयपल्हायणिज्जाहिं वग्गूहिं अनुवरयं अभिनंदंता य अभिथुणंता य एवं वयासी–

जय जय नंदा! जय जय भद्दा! भद्दं ते अजिअं जिणाहि जिअं पालयाहि जिअमज्झे वसाहि इंदो विव देवाणं चंदो विव ताराणं चमरो विव असुराणं धरणे विव नागाणं बहूइं पुव्वस-

*नरसहस्साइं चुल्लसीइं आसवसयसहस्साइं चुलसीइं पुप्फाणीओ पायत्ताणीओ कोडीओ विनीआए रायहाणीए चुल्लहि-मवंतगिरिसागरमेरागस्स य केवलकप्पस्स भरहस्स वासस्स गामागरनगरखेडकब्बड-मडंबदोणमुहपट्टणासमसण्णिवेसेसु सम्मं पयापालणोवज्जिअलद्धजसे महया जाव आहेवच्चं पोरेवच्चं जाव विहराहित्तिकट्टु जयजयसद्दं पउंजंति । तए णं से भरहे राया नयनमालासहस्सेहिं पिच्छिज्जमाणे २ वयणमालासहस्सेहिं अभिथुव्वमाणे २ हिअयमालासहस्सेहिं उन्नंदिज्जमाणे २ मनोहरमाला-सहस्सेहिं विच्छिप्पमाणे २ कंतिरूवसोहग्गगुणेहिं पिच्छिज्जमाणे २ अंगुलिमालासहस्सेहिं दाइज्जमाणे २ दाहिणहत्थेणं बहूणं नरनारी- सहस्साणं अंजलिमालासहस्साइं पडिच्छेमाणे २ भवणपंतीसहस्साइं समइच्छमाणे २ तंतीतल- तुडिअगीअवाइअरवेणं मधुरेणं मणहरेणं मंजुमंजुणा घोसेणं अपडिबुज्झमाणे २ जेणेव सए गिहे जेणेव सए भवणवरवडिंसयदुवारे तेणेव उवागच्छइ २त्ता -*

*- आभिसेक्कं हत्थिरयणं ठवेइ २ त्ता अभिसेक्काओ हत्थिरयणाओ पच्चोरुहइ २ त्ता सोलस देवसहस्से सक्कारेइ सम्माणेइ २ त्ता बत्तीसं रायसहस्से सक्कारेइ सम्माणेइ२त्ता सेनावइरयणं सक्कारेइ सम्माणेइ२त्ता एवं गाहावइरयणं वद्धइरयणं पुरोहियरयणं सक्कारेइ सम्माणेइ २ त्ता तिन्नि सट्ठे सूअसए सक्कारेइ सम्माणेइ२ त्ता अट्ठारस सेणिप्पसेणीओ सक्कारेइ सम्माणेइ २ त्ता अन्नेवि बहवे राईसर जाव सत्थवाहप्पभिईओ सक्कारेइ सम्माणेइ २ त्ता पडिविसज्जेइ ।*

*इत्थीरयणेणं बत्तीसाए उडुकल्लाणिआसहस्सेहिं बत्तीसाए जनवयकल्लाणिआहस्सेहिं बत्तीसाए बत्तीसइबद्धे नाडयसहस्सेहिं सद्धिं संपरिवुडे भवणवरवडिंसगं अईइ जहा कुबेरो व्व देवराया कैलाससिहरिसिंगभूअंति, तए णं से भरहे राया मित्तनाइनिअगसयणसंबंधिपरिअणं पच्चुवेक्खइ २ त्ता जेणेव मज्जणघरे तेणेव उवागच्छइ २ त्ता जाव मज्जणघराओ पडिनिक्खमइ २ त्ता जेणेव भोअणमंडवे तेणेव उवागच्छइ २ त्ता भोअणमंडवंसि सुहासणवरगए अट्ठमभत्तं पारेइ २ त्ताउप्पिं पासायवरगए फुट्टमाणेहिं मुइंगमत्थएहिं बत्तीसइबद्धेहिं नाडएहिं उवलालिज्जमाणे २ उवणच्चिज्जमाणे २ उवगिज्जमाणे २ महया जाव भुंजमाणे विहरइ ।*

वृ 'तए णं'मित्यादि, ततः स भरतो राजा अर्जितराज्यो—लब्धराज्यो निर्जितशत्रुरुत्पन्न-समस्तरत्नस्तत्रापि चक्ररत्नप्रधानो नवनिधिपति समृद्धकोशः—सम्पन्नभाण्डागारः द्वात्रिंशद्राजवरस-हस्रानुयातमार्गः षष्ट्या वर्षसहस्रैः केवलकल्पं—परिपूर्णं भरतवर्षं साधयित्वा कौटुम्बिकपुरुषान् शब्दयति शब्दयित्वा चैवमवादीत्—क्षिप्रमेव भो देवानुप्रिया ! आभिषेक्यं 'हत्थि'त्ति हस्तिवर्णक-स्मारणं 'हयगयरह'त्ति सेनासन्नाहनस्मारणं तथैव नरपतिरारूढवान् ।

अथ प्रस्थिते नरपतौ के पुरतः के पृष्ठतः के पार्श्वतश्च प्रस्थितवन्त इत्याह—'तए णं'मित्यादि, ततस्तस्य भरतस्य राज्ञः आभिषेक्यं हस्तिरत्नमारूढस्य सतः इमान्यष्टाष्टमङ्गलकानि पुरतो यथा नुपूर्व्या—यथाक्रमं संप्रस्थितानि—चलितानि, तद्यथा—स्वस्तिकश्रीवत्सयावत्पदात् पूर्वोक्तमङ्गल कानि ग्राह्यानि, यद्यप्येकाधिकारप्रतिबद्धत्वेनाखण्डस्याधिकारसूत्रस्य लिखनं युक्तिमत्तथापि सूत्रभूयिष्ठत्वेन वृत्तिर्दूरगता वाचयितृणां सम्मोहाय स्यादिति प्रत्येकालापकं वृत्तिर्लिख्यते इति, 'तयनंतरं च णं'मित्यादि तदनन्तरं च पूर्णजलभृतं 'कलशभृङ्गारं' कलशः—प्रतीतः भृङ्गारः—कनकालुका ततः समाहारदेकवद्भावः, इदं च जलपूर्णत्वेन मूर्तिमद् ज्ञेयं, तेनालेख्यरूपाष्ट-मङ्गलान्तर्गतकलशादयं कलशो भिन्नः, दिव्येव दिव्या—प्रधाना चः समुच्चये स च व्यवहितसम्बन्धः

छत्रविशिष्टा पताका च यावत्पदात् 'सचामरा दंसणरइअ आलोअदरिसणिज्जा वाउद्धुअविजयवेजयंती अब्भुस्सिआ गगनतलमणुलिहंती पुरओ अहाणुपुव्वीए' इति ग्राह्यं, अत्र व्याख्या–

सचामरा–चामरयुक्ता दर्शने–प्रस्थातु दृष्टिपथे रचिता मङ्गल्यत्वात् अत एवालोके–बहिःप्रस्थानभाविनि शकुनानुकूल्यालोकने दर्शनीया–द्रष्टुं योग्या, ततो विशेषणसमासः, काऽसावित्याह–वातोद्धूता विजयसूचिका वैजयन्ती–पार्श्वतो लघुपताकाद्वययुक्तः पताकाविशेषः प्राग्वत् उच्छ्रिता–उच्चा गगनतलमनुलिखन्ती अत्युच्चतया एते च कलशादयः पदार्था पुरतो यथानुपूर्व्या संप्रस्थिता इति । 'तए णं'मित्यादि, ततो वैडूर्यमयो 'भिसंत'त्ति दीप्यमानो विमलो दण्डो यस्मिंस्तत्तथा, यावत्पदात् पलम्बं कोरण्टमल्लदामोवसोहिअं चन्दमंडलनिभं समूसिअं विमलं आयवत्तं पवरं सिंहासणं च मणिरयणपायपीढं सपाउआजोगसमाउत्तं बहुकिंकरकम्मकरपुरिसपायत्तपरिक्खित्तं विमलं आयवत्तं पवरं सिंहासणं च मणिरयणपायपीढं सपाउआजोगसमाउत्तं बहुकिंकरकम्मकरपुरिसपायत्तपरिक्खित्तं पुरओ अहानुपुव्वीए संपट्ठिअं'ति, अत्र व्याख्याप्रलम्बेन कोरण्टा- भिधानवृक्षस्य माल्यदाम्ना–पुष्पमालयोपशोभितं चन्द्रमण्डलनिभं समुच्छ्रितं–ऊर्ध्वीकृतं विमलातपत्रं–छत्रं प्रवरं सिंहासनं च मणिरत्नमयं पादपीठं–पदासनं यस्मिंस्तत्तथा, स्वः–स्वकीयो राजसत्क इत्यर्थः पादुकायोगः–पादरक्षणयुगं तेन समायुक्तं, बहवः किङ्कराः–प्रतिकर्म पृच्छाकारिणः कर्मकराः–ततोऽन्यथाविधास्ते च ते पुरुषाश्चेति समासः पादातं–पदातिसमूहस्तैः परिक्षिप्तं–सर्वतो वेष्टितं तैर्धृतत्वादेव पुरतो यथानुपूर्व्या संप्रस्थितं ।

'तए णं'मित्यादि, ततः सप्त एकेन्द्रियरत्नानि पृथिवीपरिणामरूपाणि पुरतः संप्रस्थितानि, तद्यथा–चक्ररत्नादीनि प्रागभिहितस्वरूपाणि, चक्ररत्नस्य च एकेन्द्रियरत्नाखण्डसूत्रपाठादेवात्र भणनं, तस्य मार्गदर्शकत्वेन सर्वतः पुरः संचरणीयत्वाद्, अत्र च गत्यानन्तर्यस्य वक्तुमुपक्रान्तत्वादिति, 'तयनंतरं च णं नव महानिहिओ पुरओ' इत्यादि, ततो नव महानिधयोऽग्रतः प्रस्थिताः पातालमार्गेणेति गम्यं, अन्यथा तेषां निधिव्यवहार एव न सङ्गच्छते, तद्यथा–नैसर्पः पाण्डुको यावच्छङ्खः सर्वं प्राग्वत्, उक्ता स्थावराणां पुरतो गति किङ्करजनधृतत्वेन दिव्यानुभावेन वा, अथ जङ्गमानां गतेरवसर इति 'तयनंतरं च णं सोलस देव' इत्यादि, ततः षोडश देवसहस्राः पुरतो यथानुपूर्व्या संप्रस्थिताः, 'तयनंतरं च णं बत्तीस'मित्यादि, व्यक्तं– 'तए णं'मित्यादि, व्यक्तं, नवरं पुरोहितरत्नं–शान्तिकर्मकृत्, रणे प्रहारार्दितानां मणिरत्नजलच्छटया वेदनोपशामकं, हस्त्यश्वरत्नगमनं तु हस्त्यश्वसेनया सहैव विवक्ष्यते तेन नात्र कथनं ।

'तए णं'मित्यादि, ततो द्वात्रिंशत् ऋतुकल्याणिकाः–ऋतुषु षट्स्वपि कल्याणिकाः–ऋतुविपरीतस्पर्शत्वेन सुखस्पर्शा : अथवाऽमृतकन्यात्वेन सदा कल्याणकारिण्यः न तु चन्द्रगुप्तसहायपर्वतभूपतिपाणिगृहीतमात्रप्राणहारिनन्दनृपनन्दिनीवद्विषकन्यारूपास्तासां सहस्र पुरतः प्रस्थिताः, समर्थविशेषणाद्विशेष्यं लभ्यते इति लक्षणगुणयोगाद्राजकन्या अत्र ज्ञेयास्तासामेव जन्मान्तरोपचितप्रकृष्टपुण्यप्रकृतिमहिम्ना राजकुलोत्पत्तिवद् यथोक्तलक्षणगुणसम्भवात् जनपदाग्रणीकन्यानामग्रेतनसूत्रेणाभिधानाच्च तासां सहस्राः पुरतो यथानुपूर्व्या–यथाज्येष्ठलघुपर्यायं संप्रस्थिताः, तथा द्वात्रिंशत् 'जनवय'त्ति जनपदाग्रणीनां देशमुख्यानां कल्याणिकानां सहस्र अग्रे तथैव, अत्र पदैकदेशे पदसमुदायोपचाराज्जनपदग्रहणेन जनपदाग्रण्यो ज्ञेयाः, न चैवं

स्वमतिकल्पितमिति वाच्यं, 'तावतीभिर्जनपदाग्रणीकन्याभिरवृतः' इति श्रीऋषभचरित् साम्मत्य-दर्शनात्, तदनन्तरं द्वात्रिंशत् द्वात्रिंशत् द्वात्रिंशता पात्रैः-अभिनेतव्यप्रकारैर्बद्धाः-संयुक्ता नाटकसहस्राः पुरतो यथानुपूर्व्या प्रथमं प्रथमोढपितृप्रभृतीकृतनाटकं ततस्तदनन्तरोढानाटकमिति क्रमेण सम्प्रस्थिताः, एतेषां चोक्तसङ्ख्याकता द्वात्रिंशता राजवरसहस्रैः स्वस्वकन्यापाणिग्रहणकारणे प्रत्येकं करमोचनसमयसमर्पितैकैकनाटकसद्भावात् ।

'तयनंतरं च णं तिन्नि सट्ठा सूयसया' इत्यादि ततः त्रीणि सूपानां पूर्ववदुपचारात् सूपकाराणां शतानि षष्ठानि-षष्ट्यधिकानि वर्षदिवसेषु प्रत्येकमेकैकस्य रसवतीवारकदानात्, ततः कुम्भकाराद्या अष्टादश श्रेणयः तदवान्तरभेदाः प्रश्रेणयः ततः चतुरशीतिरश्वशतसहस्र ततश्चतुरशीतिर्हस्तिशत-सहस्राः ततः षन्नवतिर्मनुष्याणां पदातीनां कोटयः पुरतः प्रस्थिताः, 'तयनंतरं च ण'मित्यादि, ततो बहवो राजेश्वरतलवराः यावत्पदात् माडंबिअकोडुंबिय इत्यादिपरिग्रहः सार्थवाहप्रभृतयः परतः सम्प्रस्थिताः अर्थ प्राग्वत् । 'तयनंतरं च ण'मित्यादि, ततो बहवोऽसि-खड्ग स एव यष्टि-दण्डोऽसियष्टिसतद्ग्राहाः -तदग्राहिणः अथवा असिश्च यष्टिश्चेति द्वन्द्वे तदग्राहिण इति, एवमग्रेऽपि यथासम्भवमक्षरयोजना कार्या, नवरं कुन्ताश्चामराणि च प्रतीतानि पाशा-द्यूतोपकरणानि उत्रस्ताश्वादिबन्धनानि वा फलकानि- सम्पुटकफलकानि खेटकानि वा अवष्टम्भानि वा द्यूतोपकरणानि वा पुस्तकानि- शुभाशुभपरिज्ञानहेतुशास्त्रपत्रसमुदायरूपाणि वीणाग्राहा व्यक्तं, कुतपः-तैलादिभाजनं, हडप्फो- द्रम्मादिभाजनं ताम्बूलार्थे पूगफलादिभाजनं वा, पीढग्गाहा दीविअग्गाहा इति पदद्वयं सूत्रे दृश्यमानमपि संग्रहगाथायामदृष्टत्वेन न लिखितं, तद्व्याख्यानं त्वेवं-पीठं-आसनविशेषः दीपिका च प्रतीतेति, स्वकैः२-स्वकीयैः २ रूपैः-आकारैः एवं स्वकीयैः २ इत्यर्थ वेषैः-वस्त्रालङ्काररूपैः चिह्नैः-अभिज्ञानैः नियोगैः-व्यापारैः स्वकीयैर्नेपथ्यैः-आभरणैः सहिता इति, अयञ्चसूत्रे च पदानि न्यूनाधिकान्यपि लिपिप्रमादात् सम्भवेयुरिति तन्नियमार्थं संग्रहगाथा सूत्रबद्धा क्वचिदादर्शे दृश्यते, यथा ।

॥ १ ॥ "असिलट्ठिकुंतचावे चामरपासे अ फलगपोत्थे अ ।
वीणाकूवग्गाहे तत्तो य हडप्फगाहे अ ॥"

'तय ण'मित्यादि, ततो बहवो दण्डिनोदण्डधारिणः मुण्डिनः- अपनीतशिरोजाः शिखण्डिनः-शिखाधारिणः जटिनो-जटाधारिणः पिच्छिनो-मयूरादिपिच्छवाहिनः हास्यकारका इति व्यक्तं खेड्ड-द्यूतविशेषस्तत्कारकाः द्रवकारकाः-केलिकराः चाटुकारकाः-प्रियवादिनः-कान्दर्पिकाः-कामप्रधानकेलिकारिणः कुक्कुइआ इति -कौत्कुच्यकारिणो भाण्डाः, मोहरिआ इति-मुखरा वाचाला असम्बद्धप्रलापिन इति यावत्, गायन्तश्च गेयानि वादयन्तश्च वादित्राणि नृत्यन्तश्च हसन्तश्च रममाणाश्च अक्षादिभिः क्रीडयन्तश्च कामक्रीडया शासयन्तश्च-परेषां गानादीनि शिक्षयन्तः श्रावयन्तश्च-इदं चेदं च परुत् परारिभविष्यतीत्येवंभूतवचांसि श्रवणविषयीकारयन्तः जल्पन्तश्च-शुभवाक्यानि रावयन्तश्च शब्दान् कारयन्तः स्वजल्पितान्यनुवादयन्त इत्यर्थ शोभमानाश्च-स्वयं शोभयन्तः परान् आलोकमानाश्च-राजराजस्यावलोकनं कुर्वन्तः जयजयशब्दं च प्रयुञ्जानाः पुरतो यथानुपूर्व्या पूर्वोक्तपाठक्रमेण सम्प्रस्थिताः । इह गमे क्वचिदादर्शे न्यूनाधिकान्यपि पदानि दृश्यन्ते इति, एवमुक्तक्रमेण औपपातिक- गमने-प्रथमोपाङ्गगतपाठेन तावद् वक्तव्यं

यावत्तस्य राज्ञः पुरतो महाश्वाः—बृहत्तुरङ्गाः अश्वधरा— अश्वधारकपुरुषाश्च उभयतो—भरतो-पवाह्यगजस्तनस्य द्वयोः, पार्श्वयोर्नागा—गजा नागधरा—गजधारकपुरुषाश्च, पृष्ठतो रथाः रथ-सङ्केली—रथसमुदायः, देश्योऽयं शब्दः, चः समुच्चये, आनुपूर्व्या सम्प्रस्थिताः, अत्र यावत्पदसंग्रह-श्चायं—सवर्णकसेनाङ्गानि, तत्राश्वाः— 'तयनंतरं च णं तरमल्लिहाय-णाणं हरिमेलामउलमल्लिअच्छाणं चंचुच्चिअललिअपुलिअचलचवलचंचलगईणं लंघणवग्गण-धावणधोरणतिवइजइणसिक्खियगईणं ललंतलामगललायवरभूसणाणं मुहभंडगओचूलगथासग-अहिलाणचामरगण्डपरिमण्डिअडीणं किंकरवरतरुणपरिग्गहिआणं अट्ठसयं वरतुरगाणं पुरओ अहानुपुव्विए संपट्ठिअं'ति -

तदनंतरं 'तरमल्लिहायणाणं'ति तरो—वेगो बलं वा तथा 'मल्ल मल्लि धारणे' ततश्च तरोमल्लीतरोधारको वेगादिकृत् हायनः—संवत्सरो वर्तते येषां ते तथा यौवनवन्त इत्यर्थः, अतस्तेषां वरतुरङ्गाणामिति योगः, 'वरमल्लिभासणाणं'ति क्वचित्पाठः तत्र प्रधानमाल्यवतामत एव दीप्तिमतां चेत्यर्थः, हरिमेला— वनस्पतिविशेषस्तस्या मुकुलं—कुड्मलं मल्लिका चविचकिलस्तद्वदक्षिणी येषां तथा तेषां ते खुल्लाक्षाणामित्यर्थः, 'चंचुच्चियं'ति प्राकृतत्वेन चंचुरितं—कुटिलगमनं अथवा चंचुः—शुकचंचुस्त द्वक्रतयेत्यर्थ उच्चितं—उच्चिताकरणं पादस्योत्पाटनं चंचुच्चितं च तल्ललितं च—विलासवद्गति पुलितं च—गतिविशेषः प्रसिद्ध एव एवंरूपा चलो—वायुराशुगत्वात् तद्वच्चपलचञ्चला—अतीव चपला गतिर्येषां ते तथा तेषां, शिक्षितं—अभ्यस्तं लंघनं—गर्तादिरतिक्रमणं वल्गनं—उत्कूर्दनं धावनं— शीघ्रगमनं धोरणं—गतिचातुर्यं तथा त्रिपदी—भूमौ पदत्रयन्यासः पदत्रयस्योन्नमनं वा जयिनी— गत्यन्तरजयनशीला गतिश्च येषां ते तेषां, पदव्यत्ययः प्राकृतत्वात्, ललन्ति—दोलायमानानि लामत्ति—आर्षत्वाद् रम्याणि गललातानि—कण्ठे न्यस्तानि वरभूषणानि येषां ते तथा तेषां, तथा मुख नाण्डकं—मुखाभरणं अवचूलाः—प्रलम्बगुच्छाः स्थासका—दर्पणाकारा अश्वालङ्काराः अहिलाणं—मुखसंयमनं एतान्येषां सन्तीति मुखभाण्डकावचूलस्थासकाहिलाणाः मत्वर्थीयलोप- दर्शनादेव प्रयोगः, तथा चमरीगण्डैः—चामरदण्डैः परिमण्डिता कटिर्येषां ते तथा ततः कर्मधार- यस्तेषां, किङ्करभूता ये वरतरुणा—वरयुवपुरुषास्तैः परिगृहीतानां दवरकितानामित्यर्थः, अष्टोत्तरं शतं वरतुरगाणां पुरतो यथानुपूर्व्या सम्प्रस्थितं ।

अथेभाः—'तयनंतरं च णं ईसिदंताणं ईसिमत्ताणं ईसितुंगाणं ईसिउच्छंगउन्नय-विसालधवलदंताणं कंचणकोसीपविट्ठदन्ताणं कंचणमणिरयणभूसिआणं वरपुरिसारोहगसंपउत्ताणं गयाणं अट्ठसयं पुरओ अहानुपुव्वीए संपत्थिअं'ति ईषद्दान्तानां—मनाग्ग्राहितशिक्षाणां गजानामिति योगः ईषन्मत्तानां यौवनारम्भवर्त्तित्वात् ईषत्तुङ्गानां—उन्नतानां तस्मादेव उच्छङ्ग इवोत्सङ्गः—पृष्ठदेशः ईषदुत्सङ्गे उन्नता विशालाश्च यौवनारम्भवर्त्तित्वादेव ते च ते धवलदन्ताश्चेति समासोऽतस्तेषां, काञ्चनकोशी—सुवर्णखोला तस्यां प्रविष्टा दन्ताः अर्थाद् विषाणाख्या येषां ते तथा तेषां काञ्चनमणि-रत्नभूषितानामिति व्यक्तं, वरपुरुषा—ये आरोहका निषादिनस्तैः सम्प्रयुक्तानां—सज्जितानां गजानां—गजकलभानामष्टोत्तरं शतं पुरतो यथानुपूर्व्या सम्प्रस्थितं ।

अथ रथाः—'तयनंतरं च णं सछत्ताणं सज्झयाणं सघंटाणं सपडागाणं सतोरणवराणं सनंदिघोसाणं सखिंखिणीजालपरिक्खित्ताणं हेमवयचित्ततिणिसकणगणिजुत्तदारुगाणं कालाय-ससुकयणेमिजंतकम्माणं सुसिलिट्ठवत्तमण्डलधुराणं आइण्णवरतुरगसुसंपउत्ताणं कुसलण-

रच्छेअसारहिसुसंपग्गहिआणं बत्तीसतोणपरिमंडिआणं अकंकडवडेंसगाणं सचावसरपहरणा-वरणभरिअजुद्धसज्जाणं अट्ठसयं रहाणं पुरओ अहाणुपुव्वीए संपट्ठिअं' इति, उक्तार्थं चेदं प्राक् पद्मवरवेदिकाधिकारगतरथवर्णने नवरमत्र विशेषणानां बहुवचननिर्देशः कार्य, ततः उक्तविशेषणानां रथानामष्टशतं पुरतो यथानुपूर्व्या सम्प्रस्थितं।

अथ पदातयः— 'तयनंतरं च णं असिसत्तिकुंततोमरसूललउडभिंडमालधणुपाणिसज्जं पाइत्ताणीअं पुरओ अहाणुपुव्वीए संपट्ठिअं'ति, ततः पदात्यनीकं पुरतः सम्प्रस्थितं, अस्यादीनि पाणौ हस्ते यस्य तत्तथा, सज्जं च सङ्ग्रामादिस्वामिकार्ये, तत्रास्यादीनि प्रसिद्धानि, नवरं शक्ति—त्रिशूलं शूलं तु एकशूलं 'लउड'त्ति लकुटो भिंदिपालः प्रागुक्तस्वरूप इति। अथ भरतः प्रस्थितः सन् पथि यद्यत् कुर्वन् यत्रागच्छति तदाह— ततः स भरताधिपो नरेन्द्रो हारावस्तृत-सुकृतरतिदवक्षायावदमरपतिसन्निभया ऋद्ध्या प्रथितकीर्तिश्चक्ररत्नोपदिष्ट-मार्गोऽनेकराजवर-सहस्रानुयातमार्गो यावत्समुद्रवभूतामिव मेदिनीं कुर्वन् २ सर्वर्द्ध्या सर्वद्युत्या यावन्निर्घोषनादितेन युक्त इति गम्यं, ग्रामाकरनगरखेटकर्बटमडम्बयावत्पदात् द्रोणमुखपत्तनाश्रम-सम्बाधसहस्रमण्डितां स्तिमितमेदिनीकां वसुधामभिजयन् २ अग्र्याणि—वराणि रत्नानि प्रतीच्छन् २ तद्दिव्यं चक्ररत्न-मनुगच्छन् २ योजनान्तरिताभिर्वसतिभिर्वसन् २ यत्रैव विनीता तत्रैवोपागच्छति तत्रागतः सन् यदकरोत्तदाह—

'उवागच्छित्ता' इत्यादि, व्यक्तं, नवरं विनीताया राजधान्या अष्टमभक्तमित्यत्र विनीता-धिष्ठायकदेवसाधनाय विनीतां राजधानीं मनसि कुर्वन् २ अष्टमं परिसमापयतीत्यर्थः, नन्विदम-ष्टमानुष्ठानमनर्थकं वासनगर्याश्चक्रवर्त्तिनां पूर्वमेव वश्यत्वात्, उच्यते, निरुपसर्गेण वासस्थैर्यामिति, यदाह—'निरुवसग्गपच्चयत्थं विनीअं रायहाणिं मणसी करेमाणे २ अट्ठमभत्तं पगिण्हइ' इति प्राकृतऋषभचरित्रे, अथाष्टमभक्तसमाप्त्यनन्तरं भरतो यच्चक्रे तदाह—

'तए णं' मित्यादि, स्पष्टं, 'तहेव'त्ति पदसंग्रहश्चाभिषेक्यगजसज्जनमज्जनगृहमज्जनादिरूपः, अथ विनीताप्रवेशवर्णके लाघवायातिदेशमाह— तदेव सर्वं वाच्यं यथा हेट्ठा—अधस्तनसूत्रे विनीतां प्रत्यागमने वर्णनं तथाऽत्रापि प्रवेशे वाच्यमित्यर्थः, —नवरं महानिधयो नव न प्रविशन्ति, तेषां मध्ये एकैकस्य विनीताप्रमाणत्वात् कुतस्तेषां तत्रावकाशः ?, चतस्रः सेना अपि न प्रविशन्ति, शेषः स एव गमः—पाठो वक्तव्यः, कियत्पर्यन्तमित्याह— यावन्निर्घोषनादितेन युक्तो विनीताया राजधान्या मध्यंमध्येन—मध्यभागेन यत्रैव स्वकं गृहं यत्रैव च भवनवरावतंसकस्य—प्रधानतरगृहस्य प्रतिद्वारं—बाह्यद्वारं तत्रैव गमनाय प्रधारितवान्— चिन्तितवान्, प्रवृत्तवानित्यर्थः, प्रविशति चक्रिण्याभियोगिकसुरा यथा २ वासभवनं परिष्कुर्वन्ति तथाऽऽह— ततस्तस्य भरतस्य राज्ञो विनीतां राजधानीं मध्यभागेन प्रविशतः अपि—बाढं एके केचन देवा विनीतां साभ्यन्तरबाहिरिकां आसिक्तसम्मार्जितोपलिप्तां कुर्वन्ति, अप्येकके तां मञ्चातिमञ्चकलितां कुर्वन्ति, अप्येकके नानाविधरागवसनोच्छ्रितध्वजपताकामण्डितां अप्येकके लाइउल्लोइअमहितां कुर्वन्ति, अप्येकके गोशीर्षसरसरक्तचन्दनदर्दरदत्तपञ्चाङ्गुलि- तलेत्यादिविशेषणां कुर्वन्ति, ।

— यावद् गन्धवर्त्तिभूतां कुर्वन्ति, अमीषां विशेषणानामर्थ प्राग्वत्, अप्येकके हिरण्यवर्षं वर्षन्ति—रूप्यस्याघटितसुवर्णस्य वा वर्षं वर्षन्ति, एवं सुवर्णवर्षं रत्नवर्षं वज्रवर्षं आभरणवर्षं

वर्षन्ति, वज्राणि–हीरकाणि, पुनः प्रविशतो राज्ञो यदभूत्तदाह–'तए ण'मित्यादि, ततस्तस्य भरतस्य राज्ञो विनीतां राजधानीं मध्यंमध्येनानुप्रविशतः शृङ्गाटकादिषु यावच्छब्दादत्र त्रिकचतुष्कादिग्रहः महापथपर्यन्तेषु स्थानेषु बहवोऽर्थार्थिप्रभृतयस्ताभिरुदारादिविशेषण-विशिष्टाभिर्वाग्भिरभिनन्दयन्तश्चाभिष्टुवन्तश्च एवमवादिषुरिति सम्बन्धः, तत्र शृङ्गाटकादिव्याख्या प्राग्वत्, अर्थार्थिनो–द्रव्यार्थिनो–द्रव्यार्थिनः कामार्थिनो–मनोज्ञशब्दरूपार्थिनः भोगार्थिनो–मनोज्ञगन्धरसस्पर्शार्थिनः लाभार्थिनो–भोजनमात्रादिप्राप्त्यर्थिनः ऋद्धि–गवादिसंपदं इच्छन्त्येषयन्ति वा ऋद्ध्येषाः स्वार्थिकेकप्रत्ययविधानात् ऋद्ध्येषिकाः किल्बिषिकाः–परविदूषकत्वेन पापव्यवहारिणो भाण्डादयः कारोटिकाः–कापालिकाः ताम्बूलस्थगीवाहका वा करं राजदेयं द्रव्यं वहन्तीत्येवंशीलाः कारवाहिनस्त एव कारवाहिकाः कारबाधिता वा शांखिकादयः शब्दाः श्रीऋषभनिष्क्रमणमहाधिकारे व्याख्याता इति ततो व्याख्येया इति, अथ ते किमवादिषुरित्याह–

'जय जय नन्दा!' इत्यादि पदद्वयं प्राग्वत्, भद्रं ते–तुभ्यं भूयादिति शेषः, अजितं प्रतिरिपुं जय जितं–आज्ञावशंवदं पालय, जितमध्ये–आज्ञावशंवदमध्ये वस–तिष्ठ विनीतपरिजनपरिवृतो भूया इत्यर्थः, इन्द्र इव देवानां–वैमानिकानां मध्ये ऐश्वर्यभृत्, चन्द्र इव ताराणां–ज्योतिष्काणां चमर इवासुराणां दाक्षिणात्यानामित्यर्थः, एवं धरण इव नागानामित्यत्रापि ज्ञेयं, अन्यथा सामान्यतोऽसुराणामित्युक्ते बलीन्द्रस्य नागानामित्युक्ते च भूतानन्दस्योपानत्वेनोपन्यासो युक्तिमान् स्यात्, दाक्षिणात्येभ्य उदीच्यानामधिकतेजस्कत्वात्, बहूनि शतसहस्राणि यावद् बह्वीः पूर्वकोटीः बह्वीः पूर्वकोटाकोटीः विनीताया राजधान्याः क्षुल्लहिमवदिरिसागरमर्यादाकस्य केवलकल्पस्य भरतवर्षस्य ग्रामाकरनगरखेटकर्बटमडम्बद्रोणमुखपत्तनाश्रमसन्निवेशेषु सम्यक् प्रजापालनेनोपार्जितं–सलब्धं निजभुजवीर्यार्जितं, न तु नमुचिनेव सेवाद्युपायलब्धं यशो येन स तथा, 'महया जाव''त्ति यावत्पदात् 'हयनट्टगीआवाइअतंतीतलतालतुडिअघणमुइंगपडुप्पवाइअरवेणं विउलाइं भोगभोगाइं भुंजमाणे' इति संग्रहः, आधिपत्यं पौरपत्यं अत्रापि यावत्पदात् 'सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे'त्ति ग्राह्यं, अत्र व्याख्या प्राग्वत्, विचर इति कृत्वा जयजयशब्दं प्रयुञ्जन्ति। अथ विनीतां प्रविष्टः सन् भरतः किं कुर्वन् क्वाजगामेत्याह–

'तए णं से भरहे राया नयनमालासहस्सेहिं पिच्छिज्जमाणे २'इत्यादि, ततः स भरतो राजा नयनमालासहस्रैः प्रेक्ष्यमाण २ इत्यादिविशेषणपदानि श्रीऋषभनिष्क्रमणमहाधिकारे व्याख्यातानीति ततो ज्ञेयानि, नवरं 'अंगुलिमालासहस्सेहिं दाइज्जमाणे २' इत्यत्र जनपदागतानां जनानां पौरजनैर- ङ्गुलिमालासहस्रैर्दर्श्यमान इत्यपि, यत्रैव स्वकं गृहं–पित्र्यः प्रासादः यत्रैव च भवनवरावतंसकं–जगद्वर्तिवासगृहशेखरभूतं राजयोग्यं वासगृहमित्यर्थः तस्य प्रतिद्वारं तत्रैवोपागच्छति, ततः किं करोतीत्याह–उपागत्य आभिषेक्यं हस्तिरत्नं स्थापयति स्थापयित्वा च तस्मात्प्रत्यवरोहति, प्रत्यवरुह्य च विसर्जनीयजनो हि वसर्जनावसरेऽवश्यं सत्कार्य इति विधिज्ञो भरतः षोडश देवसहस्रान् सत्कारयति सन्मानयति, ततो द्वात्रिंशतं राजसहस्रान्, ततः सेनापतिरत्न- गृहपतिरत्नादीनि त्रीणि सत्कारयति सन्मानयति, ततः त्रीणि षष्टानि–षष्ट्यधिकानि सूपशतानि–रसवतीकारशतानि

ततः अष्टादश श्रेणिप्रश्रेणीः ततः अन्यानपि बहून् राजेश्वरतलवरादीन् सत्कारयति सन्मानयति सत्कार्य सन्मान्य च पूर्णे उत्सवेऽतिथीनिव प्रतिविसर्जयति, अथ यावत्परिच्छदो

राजा यथा वासगृहं प्रविवेश तथाऽऽह– स्त्रीरत्नेन–सुभद्रया द्वात्रिंशता ऋतुकल्याणिकासहस्रैर्द्वात्रिंशता जनपदकल्याणिकासहस्रै द्वात्रिंशता द्वात्रिंशद्बद्धैर्नाटकसहस्रैः सार्द्धं संपरिवृतो भवनवरावतंसकमतीति–प्रविशति, प्राकरणिकत्वादनुक्तोऽपि भरतः कर्त्ता गम्यतेऽत्र वाक्ये, यथा कुबेरो–देवराजा धनदो–लोकपालः कैलासं–स्फटिकाचलं, किंलक्षणं? –भवनवरावतंसकं शिखरिशृङ्गं–गिरिशिखरं तद्भूतं–तत्सदृशमुच्चत्वेनेत्यर्थः, लौकिकव्यवहा- रानुसारेणायं दृष्टान्तः, अन्यथा कुबेरस्य सौधर्मावतंसकनाम्न इन्द्रकविमानादुत्तरतो वल्गुविमाने वासस्य श्रूयमाणत्वादागमेन सह विरुद्धयते ॥ प्रविश्य यद्यके तदाह–

मू. (१२२) *तए णं तस्स भरहस्स रन्नो अन्नया कयाइ रज्जधुरं चिंतेमाणस्स इमेआरूवे जाव समुप्पज्जित्था, अभिजिए णं मए निअगबलवीरिअपुरिसक्कारपरक्कमेण चुल्लहिमवंतगिरिसागरमेराए केवलकप्पे भरहे वासे, तं सेअं खलु मे अप्पाणं महया रायाभिसेएणं अभिसेएणं अभिसिंचीवित्तएतिकट्टु एवं संपेहेति २ त्ता कल्लं पाउप्पभाए जाव जलंते जेणेव मज्जणधरे जाव पडिनिक्खमइ २ त्ता जेणेव बाहिरिआ उवट्ठाणसाला जेणेव सीहासणे तेणेव उवागच्छइ २ त्ता सीहासणवरगए पुरत्थाभिमुहे निसीअति निसीइत्ता सोलस देवसहस्से बत्तीसं रायवरसहस्से सेनावइरयणे जाव पुरोहियरयणे तिन्नि सट्ठे सूअसए अट्ठारस सेणिप्पसेणीओ अन्ने अ बहवे राईसरतलवर जाव सत्थवाहप्पभिअओ सद्दावेइ २ त्ता एवं वयासी–*

*अभिजिए णं देवाणुप्पिआ ! मए निअगबलवीरिअ जाव केवलकप्पे भरहे वासे तं तुब्भे णं देवाणुप्पिआ ! ममं महयारायाभिसेअं विअरह, तए णं से सोलस देवसहस्सा जावप्पभिइओ भरहेणं रन्ना एवं वुत्ता समाणा हट्ठतुट्ठकरयल मत्थए अंजलिं कट्टु भरहस्स रण्णो एअमट्ठं सम्मं विनएणं पडिसुणेंति, तए णं से भरहे राया जेणेव पोसहसाला तेणेव उवागच्छइ २ त्ता जाव अट्ठमभत्तिए पडिजागरमाणे विहरइ, तए णं से भरहे राया अट्ठमभत्तंसि परिणममाणंसि अभिओगिए देवे सद्दावेइ २ त्ता एवं वयासी–खिप्पामेव भो देवाणुप्पिआ ! विनीआए रायहाणीए उत्तरपुरच्छिमे दिसीभाए एगं महं अभिसेअमण्डवं विउव्वेह २ त्ता मम एअमाणत्तिअं पच्चप्पिणह ।*

*तए णं ते आभिओगा देवा भरहेणं रन्ना एवं वुत्ता समाणा हट्ठतुट्ठा जाव एवं सामित्ति आणाए विनएणं वयणं पडिसुणेंति पडिसुणित्ता विणीआए रायहाणीए उत्तरपुरत्थिमं दिसीभागं अवक्कमंति २ त्ता वेउव्विअसमुग्घाएणं समोहणंति २ त्ता संखिज्जाइं जोअणाइं दंडं निसिरंति, तंजहा रयणाणं जाव रिट्ठाणं अहाबायरे पुग्गले परिसाडेंति २ त्ता अहासुहुमे पुग्गले परिआदिअंति २ त्ता दुच्चंपि वेउव्वियसमुग्घायेणं जाव समोहणंति २ त्ता बहुसमरमणिज्जं भूमिभागं विउव्वंति से जहानामए आलिंगपुक्खरेइ वा० तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महं एगं अभिसेअमण्डवं विउव्वंति अनेगखंभसयसण्णिविट्ठं जाव गंधवट्टिभूअं पेच्छघरमंडववण्णगोत्ति, तस्स णं अभिसेअमंडवस्स बहुमज्झदेसभाए एत्थ णं महं एगं अभिसेअपेढं विउव्वंति अच्छं सण्हं, तस्स णं अभिसेअपेढस्स तिदिसिं तओ तिसोवाणपडिरूवए विउव्वंति ।*

*तेसि णं तिसोवाणपडिरूवगाणं अयमेआरूवे वन्नावासे पन्नत्ते जाव तोरणा, तस्स णं अभिसेअपेढस्स बहुसमरमणिज्जे भूमिभागे पन्नत्ते, तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महं एगं सीहासणं विउव्वंति, तस्स णं सीहासणस्स अयमेआरूवे*

वण्णावासे पन्नत्ते जाव दामवण्णगं समत्तंति ।

तए णं ते देवा अभिसेअमंडवं विउव्वंति २ त्ता जेणेव भरहे राया जाव पच्चप्पिणंति, तए णं से भरहे राया आभिओगाणं देवाणं अंतिए एअमट्ठं सोच्चा णिसम्म हट्ठतुट्ठ जाव पोसहसालाओ पडिनिक्खमइ २ त्ता कोडुंबिअपुरिसे सद्दावेइ २ त्ता एवं वयासी--खिप्पामेव भो देवाणुप्पिआ ! आभिसेक्कं हत्थिरयणं पडिकप्पेह २ त्ता हयगय जाव सण्णाहेत्ता एअमाणत्तिअं पच्चप्पिणह जाव पच्चप्पिणंति । तए णं से भरहे राया मज्जणघरं अनुपविसइ जाव अंजणगिरिकूडसण्णिभं गयवइं नरवई दूरुढे, तए णं तस्स भरहस्स रन्नो आभिसेक्कं हत्थिरयणं दूरूढस्स समाणस्स इमे अट्ठट्ठमंगलगा जो चेव गमो विणीअं पविसमाणस्स सो चेव निक्खमभाणस्सवि जाव अप्पडिबुज्झमाणे विणीअं रायहाणिं मज्झंमज्झेणं निग्गच्छइ २ त्ता जेणेव विणीआए रायहाणीए उत्तरपुरत्थिमे दिसीभाए अभिसेअमंडवे तेणेव उवागच्छइ २ त्ता अभिसेअमंडवदुवारे आभिसेअपेढे तेणेव उवागच्छइ २ त्ता अभिसेअपेढं अनुप्पदाहिणीकरेमाणे २ पुरत्थिमिल्लेणं तिसोवाणपडिरूवएणं दूरूहइ २ त्ता जेणेव सीहासणे तेणेव उवागच्छइ २ त्ता पुरत्थाभिमुहे सण्णिसण्णेत्ति ।

तए णं तस्स भरहस्स रन्नो बत्तीसं रायसहस्सा जेणेव अभिसेअमण्डवे तेणेव उवागच्छंति २ त्ता अभिसेअमंडवं अनुपविसंति २ त्ता अभिसेअपेढं अणुप्पयाहिणीकरेमाणा २ उत्तरिल्लेणं तिसोवाणपडिरूवएणं जेणेव भरहे राया तेणेव उवागच्छंति २ त्ता करयल जाव अंजलिं कट्टु भरहं रायाणं जएणं वद्धावेंति २ त्ता भरहस्स रन्नो नच्चासण्णे नाइदूरे सुस्सूसमाणा जाव पज्जुवासंति, तए णं तस्स भरहस्स रन्नो सेनावइरयणे जाव सत्थवाहप्पभिईओ तेऽवि तह चेव नवरं दाहिणिल्लेणं तिसोवाणपडिरूवएणं जाव पज्जुवासंति, तए णं से भरहे राया आभिओगे देवे सद्दावेइ २ एवं वयासी–

खिप्पामेव भो देवाणुप्पिआ ! ममं महत्थं महग्घं महरिहं महारायाअभिसेअं उवट्ठवेह, तए णं ते आभिओयिआ देवा भरहेणं रन्ना एवं वुत्ता समाणा हट्ठतुट्ठचित्ता जाव उत्तरपुरत्थिमं दिसीभागं अवक्कमंति अवक्कमित्ता वेउव्विअसमुग्घाएणं समोहणंति, एवं जहा विजयस्स तहा इत्थंपि जाव पंडगवने एगओ मिलायंति एगओ मिलाइत्ता जेणेव दाहिणद्धभरहे वासे जेणेव विनीआ रायहाणी तेणेव उवागच्छंति २ त्ता विणीअं रायहाणिं अनुप्पयाहिणीकरेमाणा २ जेणेव अभिसेअमंडवे जेणेव भरहे राया तेणेव उवागच्छंति २ त्ता तं महत्थं महग्घं महरिहं महारायाभिसेअं तेहिं साभाविएहि अ उत्तरवेउव्विएहि अ वरकमलपइट्ठाणेहिं सुरभिवरवारिपडिपुण्णेहिं जाव महया २ रायाभिसेएणं अभिसिंचंति, अभिसेओ जहा विजयस्स, अभिसिंचित्ता पत्तेअं २ जाव अंजलिं कट्टु ताहिं इट्ठाहिं जहा पविसंतस्स भणिआ जाव विहराहित्तिकट्टु जयजयसद्दं पउंजंति ।

तए णं तं भरहं रायाणं सेनावइरयणं जाव पुरोहियरयणे तिन्नि अ सट्ठा सूअसया अट्ठारस सेणिप्पसेणीओ अन्ने अ बहवे जाव सत्थवाहप्परभिइओ एवं चेव अभिसिंचंति तेहिं वरकमलपइट्ठाणेहिं तहेव जाव अभिथुणंति अ सोलस देवसहस्सा एवं चेव नवरं पम्हसुकुमालाए जाव मउडं पिणद्धेंति, तयनंतरं च णं दद्दरमलयसुगंधिएहिं गंधेहिं गायाइं अब्भुक्खेंति दिव्वं च सुमणोदामं पिणद्धेंति, किं बहुना ? गंट्ठिमवेढिम जाव विभूसिअं करेंति ।

तए णं से भरहे महया २ रायाभिसेएणं अभिसिंचिए समाणे कोडुंबिअपुरिसे सद्दावेइ २ त्ता एवं वयासी–खिप्पामेव भो देवा० ! हत्थिखंधवरगया विनीयाए रायहाणीए सिंघाड-

गतिगचउक्कचच्चर जाव महापहपहेसु महया २ सद्देणं उग्घोसेमाणा २ उस्सुक्कं उक्करं उक्किट्ठं अदिज्जं अमिज्जं अब्भडपवेसं अदंडकुदंडिमं जाव सपुरजनवयं दुवालससंवच्छरिअं पमोअं घोसेह २ ममेअमाणत्तिअं पच्चप्पिणहत्ति।

तए णं ते कोडुंबिअपुरिसा भरहेणं रन्ना एवं वुत्ता समाणा हट्ठतुट्ठचित्तमाणंदिआ पीइमणा हरिसवसविसप्पमाणहियया विनएणं वयणं पडिसुणेंति २ त्ता खिप्पामेव हत्थिखंधवरगया जाव घोसंति २ त्ता एअमाणत्तिअं पच्चप्पिणंति, तए णं से भरहे राया महया २ रायाभिसेएणं अभिसित्ते समाणे सीहासणाओ अब्भुट्ठेइ २ त्ता इत्थिरयणेणं जाव नाडगसहस्सेहिं सद्धिं संपरिवुडे अभिसेअपेढाणो पुरत्थिमिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहइ २ त्ता अभिसेअमंडवाओ पडिनिक्खमइ २ त्ता जेणेव आभिसेक्के हत्थिरयणे तेणेव उवागच्छइ २ त्ता अंजणगिरिकूडणसण्णिभं गयवइं जाव दुरूढे। तए णं तस्स भरहस्स बत्तीसं रायसहस्सा अभिसेअपेढाओ उत्तरिल्लेणं तिसोवाण-पडिरूवएणं पच्चोरुहंति, तए णं तस्स भरहस्स सेनावइरयणे जाव सत्थवाहप्पभिईओ अभिसेअपेढाओ दाहिणिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहंति, तए णं तस्स भरहस्से सेनावइरयणे जाव सत्थवाहप्पभिईओ अभिसेअपेढाओ दाहिणिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहंति, तए णं तस्स भरहस्स आभिसेक्कं हत्थिरयणं दूरूढस्स समाणस्स इमे अट्ठट्ठमंगलगा पुरओ जाव संपत्थिआ, जोऽविअ अइगच्छमाणस्स गमो पढमो कुबेरावसाणो सो चेव इहंपि कमो सक्कारजढो नेअव्वो जाव कुबेरोव्व देवराया कैलासं सिहरिसिंगभूअंति।

तए णं से भरहे राया मज्जणघरं अनुपविसइ २ त्ता जाव भोअणमंडवंसि सुहासणवरगए अट्ठमभत्तं पारेइ २ त्ता भोअणमंडवाओ पडिनिक्खमइ २ त्ता उप्पिं पासायवरगे फुट्टमाणेहिं मुइंगमत्थएहिं जाव भुंजमाणे विहरइ। तए णं से भरहे दुवालससंवच्छरिअंसि पमोअंसि निव्वत्तंसि समाणंसि जेणेव मज्जणघरे तेणेव उवागच्छइ २ त्ता जाव पिनिक्खमइ २ त्ता जेणेव बाहिरिआ उवट्ठाणसाला जाव सीहासणवरगए पुरत्थाभिमुहे निसीअइ २ त्ता सोलस देवसहस्से सक्कारेइ सम्माणेइ २ त्ता पडिविसज्जेइ २ त्ता बत्तीसं रायवरसहस्सा सक्कारेइ सम्माणेइ २ त्ता सेनावइरयणं सक्कारेइ सम्माणेइ २ त्ता जाव पुरोहियरयणं सक्कारेइ सम्माणेइ २ त्ता एवं तिन्नि सट्ठे सूआरसए अट्ठारस सेणिप्पसेणीओ सक्कारेइ सम्माणेइ २त्ता अन्ने अ बहवे राईसरतलवर जाव सत्थवाहप्पभिइओ सक्कारेइ सम्माणेइ २ त्ता पडिविसज्जेति २ त्ता उप्पिं पासायवरगए जाव विहरइ।

वृ. 'तए णं'मित्यादि, ततः स भरतो राजा मित्राणि—सुहृदः ज्ञातयः—सजातीयः निजकाः—मातापितृभ्रात्रादयः स्वजनाः—पितृव्यादयः सम्बन्धिनः—श्वशुरादयः परिजनो--दासादि, एकवद्भावे कृते द्वितीया, प्रत्युपेक्षते—कुशलप्रश्नादिभिरापृच्छय २ संभाषत इत्यर्थः, अथवा चिरमदृष्टत्वेन मित्रादीनुत्कण्ठुलतया पश्यति—स्नेहदृशा विलोकयति, प्रत्युपेक्ष्य च यत्रैव मज्जनगृहं तत्रैवोपागच्छति उपागत्य च यावच्छब्दात् स्नानविधि सर्वोऽपि वाच्यः, मज्जनगृहात् प्रतिनिष्क्रामतीत्यादि प्राग्वत्। अत्र च बाहुबल्यादिनवनवतिभ्रातृराज्यानामात्मसात्करणपूर्वकं चक्ररत्नस्यायुधशालायां प्रवेशनमन्यत्र प्रसिद्धमपि सूत्रकारेण नोक्तमिति नोच्यते इति, एवं विहरतस्तस्य यदुदपद्यत तदाह— ततः तस्य भरतस्य राज्यधुरं चिन्तयतोऽन्यदा कदाचिदयमेतद्रूपः—उक्तविशेषणविशिष्टः सङ्कल्पः समुदपद्यत, स च कः सङ्कल्प इत्याह-

'अभिजिए ण'मित्यादि, अभिजितं मया निजकबलवीर्यपुरुषकारपराक्रमेण क्षुद्रहिम-वद्गिरिसा गरमर्यादया केवलकल्पं भरतं वर्ष तच्छ्रेयः खलु ममात्मानं महाराज्याभिषेकेणाभि-षेचयितुं—अभिषेकं कारयितुं इति कृत्वा—भरतं जितमिति विचार्य एवं सम्प्रेक्षते—राज्याभिषेकं विचारयति, अथैतद्विचारोत्तरकालीनकार्यमाह—'संपेहित्ता' इत्यादि, व्यक्तं, सिंहासने निषद्य यच्चक्रे तदाह—'निसीइत्ता' इत्यादि, कण्ठ्यं, किमवादीदित्याह—'अभिजिए ण'मित्यादि, अभिजितं मया देवानुप्रिया ! निजकबलवीर्यपुरुषकारपराक्रमेण क्षुद्रहिमवद्गिरिसागरमर्यादया केवलकल्पं भरतं वर्षं तद्यूयं देवानुप्रिया ! मम महाराज्याभिषेकं वितरत दत्त कुरुतेत्यर्थः, आवश्यकचूर्ण्यादौ तु भक्त्या सुरनरास्तं महाराज्याभिषेकाय विज्ञपयामासुर्भरतश्च तदनुमेने, अस्ति हि अयं विधेयजनव्यवहारो यत्प्रभूणां समयसेवाविधौ ते स्वयमेवोपतिष्ठन्ते, सत्यप्येवंविधे कल्पे यदत्रत्यात्रानुचर-सुरदानामभिषेकज्ञापनमुक्तं तद् गम्भीरार्थकत्वादस्मादृशां मन्दमेधसामनाकलनीयमिति ।

अथ यथा ते अङ्गीचक्रुस्तथाह—'तए ण'मित्यादि, ततस्ते षोडश देवसहस्र यावतशब्दात् द्वात्रिंशद्राजसहस्रादिपरिग्रहः यावद्राजेश्वरतलवरादिसार्थवाहप्रभृतयः इति, भरतेन राज्ञा इत्युक्ताः सन्तो 'हट्टतुट्ठ'त्ति इहैकदेशदर्शनमपि पूर्णतदधिकारसूत्रदर्शकं तेन हट्ठतुट्ठचित्तमाणंदिआ इत्यादिपदानि ज्ञेयानि, करतलपरिगृहीतं दशनखं शिरस्यावर्त्तं मस्तके अञ्जलिं कृत्वा भरतस्य राज्ञः एतं—अनन्तरोदितमर्थं सम्यग्—विनयेन प्रतिशृण्वन्ति—अङ्गीकुर्वन्ति, अथ 'जलाद्वाब्धात्म-लाभा कृषिर्जलेनैव वर्द्धत' इति ज्ञातात्तपसाऽऽप्तं राज्य तपसैवाभिनन्दतीति चेतसि चिन्तयन् भरतो यदुपचक्रमे तदाह— 'तए ण'मित्यादि, प्राग्वत्, ततः स भरतोऽष्टमभक्ते परिणमति सति आभियोग्यान् देवान् शब्दयति शब्दयित्वा च एवमवादीत्, —'खिप्पामेव'त्ति क्षिप्रमेव भो देवानु-प्रिया ! विनीताया राजधान्या उत्तरपौरस्त्ये दिग्भागे ईशानकोणे इत्यर्थः तस्यात्यन्तप्रशस्तत्वात्, अभिषेकाय मण्डपः अभिषेकमण्डपस्तं विकुर्वत विकुर्व्य च मम एतामाज्ञप्तिं प्रत्यर्पयत,

'तए ण'मित्यादि, ततस्ते आभियोग्या देवा भरतेन राज्ञा एवमुक्ताः सन्तो हट्ठतुट्ठादिपदानि प्राग्वत् एवं स्वामिन् ! यथैव यूयमादिशत आज्ञया—स्वामिपादानामनुसारेण कुर्म्म इत्येवंरूपेण विनयेन वचनं प्रतिशृण्वन्ति—अभ्युपगच्छन्ति, 'पडिसुणित्ता' इत्यादि, प्रतिश्रुत्य च विनीताया राजधान्या उत्तरपौरस्त्यं दिग्भागमपक्रामन्ति—गच्छन्ति, अपक्रम्य च वैक्रियसमुदघातेन—उत्तरवैक्रियकरणार्थकप्रयत्नविशेषेण समवघ्नन्ति—आत्मप्रदेशान् दूरतो विक्षिपन्ति, तत्स्वरूपमेव व्यनक्ति सङ्ख्येयानि योजनानि दण्ड इव दण्डः—ऊर्ध्वाधआयतः शरीरबाहल्यो जीवप्रदेशस्तं निसृजन्ति—शरीराद्बहिर्निष्काशयन्ति निसृज्य च तथाविधान् पुदगलान् आददते इति, एतदेव दर्शयति, तद्यथा—रत्नानां—कर्केतनादीनां यावत्पदात्, 'वइराणं वेरुलिआणं लोहिअक्खाणं मसारगल्लाणं हंसगब्भाणं पुलयाणं सोगन्धिआणं जोईरसाणं अंजणाणं अंजणपुलयाणं जायरूवाणं अंकाणं फलिहाण'मिति संग्रहः, रिट्ठाणमिति साक्षादुपात्तं, एतेषां सम्बन्धिनो यथाबादरान्—असारान् पुद्गलान् परिशातयन्ति—त्यजन्ति यथासूक्ष्मान्—सारान् पुदलान् पर्याददते—गृह्णन्ति पर्यादाय च दिकीर्षितनिर्माणार्थं द्वितीयमपि वारं वैक्रियसमुद्घातेन समवघ्नन्ति, समवहत्य च बहुसमरमणीयं भूमिभागं विकुर्वन्ति, तद्यथा—

'से जहानामए आलिंगपुक्खरेइ वा' इत्यादि, सूत्रतोऽर्थतश्च प्राग्वत्, ननु रत्नादीनां पुदगला

औदारिकास्ते च वैक्रियसमुद्घाते कथं ग्रहणार्हा ? उच्यते, इह रत्नादिग्रहणं पुद्गलानां सारतामात्रप्रतिपादनार्थं, न तु तदीयपुद्गलग्रहणार्थं, ततो रत्नादीनामिवेति द्रष्टव्यं, अथवा औदारिका अपि ते गृहीताः सन्तो वैक्रियतया परिणमन्ते, पुद्गलानां तत्तत्सामग्रीवशात्तथातथापरिणमनभावादतो न कश्चिद्दोष इति, पूर्ववैक्रियसमुद्घातस्य जीवप्रयत्नरूपत्वेन क्रमक्रममन्दमन्दतरभावापन्नत्वेन क्षीणशक्तिकत्वात् इष्टकार्यासिद्धेः, अथ समभूभागे ते यच्चक्रुस्तदाह– 'तस्स णं'मित्यादि, तस्य बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे अत्र महान्तमेकमभिषेकमण्डपं विकुर्वन्ति अनेकस्तम्भशतसन्निविष्टं यावत्पदात् राजप्रश्नीयोपाङ्गगतसूर्याभदेवयानविमानवर्णको ग्राह्यः, स च कियत्पर्यन्तमित्याह–यावत् गन्धवर्तिभूतमिति विशेषणं, अत एव सूत्रकृदेव साक्षादाह– प्रेक्षागृहमण्डपवर्णको ग्राह्य इति, एतत्सूत्रव्याख्ये सिद्धायतनादिवर्णके प्राग्दर्शिते इति नेहोच्येते, 'तस्स णं'मित्यादि, तस्याभिषेकमण्डपस्य बहुमध्यदेशभागे अत्र–अस्मिन् देशे महान्तमेकमभिषेकपीठं विकुर्वन्ति अच्छं अस्तरजस्कत्वात् श्लक्ष्णं सूक्ष्मपुद्गलनिर्मितत्वात् ।

'तस्स णं'मित्यादि, वापीत्रिसोपानप्रतिरूपकवर्णकवदत्र वर्णव्यासो ज्ञेयः यावत्तोरणवर्णनं अथाभिषेकपीठभूमिवर्णनादि प्रतिपादयन्नाह–'तस्स णं'मित्यादि, त्याभिषेकपीठस्य बहुसमरमणीयो भूमिभागः प्रज्ञप्तः, तस्य समभूभागस्य मध्ये एकं महत् सिंहासनं विकुर्वन्ति तस्य वर्णकव्यासो विजयदेवसिंहासनस्येव ज्ञेयः यावद्दाम्नां वर्णको यत्र तद्दाम वर्णकं सम्पूर्ण समस्तं सूत्रं वाच्यमिति शेषः, एनमेवार्थं निगमयन्नाह– 'तए णं'मित्यादि, ततो -भरताज्ञानन्तरं ते देवा उक्तविशेषणविशिषटमभिषेकमण्डपं विकुर्वन्ति विकुर्व्य च यत्रैव भरतो राजा यावत्पदात् 'तेणेव उवागच्छन्ति २ एअमाणत्तिअं' इति ग्राह्यं, 'तए णं'मित्यादि, व्यक्तं, अथैतत्समयोचितं भरतकृत्यमाह–

'तए णं'मित्यादि, प्राग्वत्, 'तए णं'मिति ततस्तस्य भरतस्य राज्ञः आभिषेक्यं हस्तिरत्नमारूढस्य सत इमान्यष्टावष्टौ मङ्गलकानि पुरतः सम्प्रस्थितानीति शेषः, अथ ग्रन्थलाघवार्थमतिदिशति–य एव गमो विनीतां प्रविशतः स एव तस्य निष्क्रामतोऽपि भरतस्य, कियदन्तमित्याह–यावदप्रतिबुद्धयन् २ विनीतां राजधानीं मध्यंमध्येन निर्गच्छति, शेषं व्यक्तं, ततः किं चक्रे इत्याह– 'पच्चोरुहित्ता इत्थीरयणेण'मित्यादि, ततः स भरतो राजा स्त्ररत्नेन सुभद्रया द्वात्रिंशता ऋतुकल्याणिकासहस्र द्वात्रिंशता जनपदकल्याणि- कासहस्रैः द्वात्रिंशता द्वात्रिंशद्बद्धैर्नाटकसहस्र सार्द्धं संपरिवृतोऽभिषे- कमण्डपमनुप्रविशति अनुप्रविश्य च यत्रैवाभिषेकपीठं तत्रैवोपागच्छति उपागत्य चाभिषेकपीठ- मनुप्रदक्षिणीकुर्वन् २ 'स्वामिदृष्टे भक्तजनः' प्रमोदतेतरा'मिति आभियोगिकसुरमनस्तुष्ट्युत्पाद-नहेतोरित्थमेव सृष्टिक्रमाद्य पौरस्त्येन त्रिसोपानकप्रतिरूपकेण आरोहति, आरुह्य च यत्रैव सिंहासनं तत्रैवोपागच्छति उपागत्य च पूर्वाभिमुखः सन्निषण्णः–सम्यग् यथौचित्येनोपविष्टः, अथानुचरा राजादयो यथोपवेरु-स्तथाऽऽह–

'तए णं'मित्यादि, ततस्तस्य भरतस्य राज्ञो द्वात्रिंशद्राजसहस्राणि यत्रैवाभिषेकमण्डपः– तत्रैवोपुगच्छतीत्यादि व्यक्तं, नवरमभिषेकपीठं अनुप्रदक्षिणीकुर्वन्तः २ उत्तरत आरोहतां प्रदक्षिणाकरणेनैव सृष्टिक्रमस्य जायमानत्वात्, 'तए णं'मित्यादि पाठसिद्धं, तए णं'मित्यादि ततः स भरतो राजा आभियोग्यान् देवान् शब्दयित्वा एवमवादीत्–क्षिप्रमेव भो देवानुप्रिया ! मम महान् अर्थो–मणिकनकरत्नादिक उपयुज्यमानो यस्मिन् स तथा तं महान् अर्घ--पूजा यत्र स तथा तं

महं–उत्सवमर्हतीति महार्हस्तं महाराज्याभिषेकमुपस्थापयत–सम्पादयत, आज्ञप्तास्ते यदकुर्वस्तदाह– 'तए णं'मित्यादि, ततः–आज्ञप्त्यनन्तरं ते आभियोग्या देवा भरतेन राज्ञा एवमुक्ताः सन्तो हृष्टतुष्टचित्तेत्यादिरानन्दालापको ग्राह्यः यावत्पदात् 'करयलपरिग्गहिअं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं देवो तहत्ति आणाए विनएणं वयणं पडिसुणेंति २ त्ता' इति ग्राह्यं, व्याख्या च प्राग्वत्, अत्रातिदेशसूत्रमाह–एवं–इत्थंप्रकारमभिषेकसूत्रं यथा विजयस्य–जम्बूद्वीप-विजयद्वाराधिपदेवस्य तृतीयोपाङ्गे उक्तं तथाऽत्रापि ज्ञेयमिति, अत्र च सर्वाभिषेकसामग्री वक्तव्या, सा चोत्तरत्र जिनजन्माधिकारे वक्ष्यते, तत्र तत्सूत्रस्य साक्षाद्दर्शितत्वात्, तथापि स्थानाशून्यार्थं तथाशब्दसूचितसंग्रहदर्शनार्थं किञ्चिल्लिख्यते, तदपि लाघवार्थं संस्कृतरूपमेव युक्तमिति तथैव दर्श्यते, अष्टसहस्रं सौवर्णिककलशानां तथा रूप्यमयकलशानां मनोगुलिकानां वातकरकाणां चित्ररत्नकरण्डकानां पुष्पचङ्गेरीणां यावल्लोमहस्तकचङ्गेरीणां पुष्पपटलकानां यावल्लोमहस्तपटल-कानां सिंहासनानां छत्राणां चामराणां समुद्गकानां ध्वजानां धूपकडुच्छुकानां प्रत्येकमष्टसहस्रं विकुर्वन्ति विकुर्व्य च स्वाभाविकान् वैक्रियांश्चैतान् पदार्थान् गृहीत्वा क्षीरोदे उदकमुत्पलादीनि च गृह्णन्ति, पुष्करोदे तथैव ।

ततो भरतैरावतयोर्मागधादितीर्थत्रये उदकं मृदं च ततस्तयोर्महानदीषूदकं मृदं च ततः क्षुल्लहिमाद्रौ सर्वतुवरसर्वपुष्पादीनि, ततः पद्मद्रहपुण्डरीकद्रहयोरुदकमुत्पलादीनि च, एवं प्रतिवर्षं महानद्योरुदकं मृदं च प्रतिवर्षधरं च सर्वतुवरसर्वपुष्पादीनि च द्रहेषु च उदकोत्पलादीनि वृत्तवैताढ्येषु च सर्वतुवरादीनि विजयेषु तीर्थोदकं मृदं वक्षस्कारगिरिषु सर्वतुवरादीन् तथा अन्तर्नदीषु उदकं मृदं च, ततो मेरौ भद्रशालवने सर्वतुवरादीन् ततो नन्दनवने सर्वतुवरादीन् सरसं च गोशीर्षचन्दनं ततः सौमनसवने सर्वतुवरादीन् सरसं च गोशीर्षचन्दनं दिव्यं च सुमनोदाम ततः पण्डकवने सर्वतुवरपुष्पगन्धादीन् गृह्णन्ति, गृहीत्वा चैकतः एकत्र मिलन्ति, एकत्र मिलित्वा यत्रैव दक्षिणा-र्द्धभरतवर्षं यत्रैव च विनीता राजधानी तत्रैवोपागच्छन्ति, उपागत्य च विनीतां राजधानी-मनुप्रदक्षिणीकुर्वन्तः २ यत्रैवाभिषेकमण्डपो यत्रैव च भरतो राजा तत्रैवोपागच्छन्ति उपागत्य च तत् पूर्वोक्तं महार्थं महार्घं महार्हं महाराज्याभिषेकोपयोगिक्षीरोदकाद्युपस्करमुपस्-थापयन्ति–उपढौकयन्ति । अथोत्तरकृत्यमाह–'तए णं'मित्यादि, ततस्तं भरतं राजानं द्वात्रिंशद्राजसहस्राणि शोभने–निर्दोषगुणपोषे 'तिथिकरणदिवसनक्षत्रमुहूर्त्ते' तिथ्यादिपदानां समाहारद्वन्द्वस्ततः सप्तम्येकवचनं, तत्र तिथि–रिक्तार्केन्दुदग्धादिदुष्टतिथिभ्यो भिन्ना तिथि करणं–विविष्टिदिवसो दुर्दिनग्रहणोत्पातदिनादिभ्यो भिन्नदिवसः नक्षत्रं–राज्याभिषेकोपयोगि श्रुत्यादित्रयोदशनक्षत्राणा- मन्यतरत्, यदाह–

॥ १ ॥ "अभिषिक्तो महीपालः, श्रुतिज्येष्ठालघुध्रुवैः ।
मृगानुराधापौष्णैश्च, चिरं शास्ति वसुन्धराम् ॥"

इति, मुहूर्त्तः–अभिषेकोक्तनक्षत्रसमानदैवत इति, अत्रैव विशेषमाह–उत्तरप्रौष्ठपदा–उत्तरभद्रपदा नक्षत्रं तस्य विजयो नाम मुहूर्त्तः–अभिजिदाह्वयः क्षणस्तस्मिन्, अयं भावः–मुहूर्त्तापर-पर्यायः पञ्चदशक्षणात्मके दिवसेऽष्टमक्षणः, तल्लक्षणं चेदं ज्योतिशास्त्रप्रसिद्धं–

॥ १ ॥ "द्वौ यामौ घटिकाहीनौ, द्वौ यामौ घटिकाधिकौ ।
विजयो नाम योगोऽयं, सर्वकार्यप्रसाधकः ॥"

ततस्तैः पूर्वोक्तैः स्वाभाविकैरुत्तरवैक्रियैश्च वरकमले आधारभूते प्रतिष्ठानं—स्थितिर्येषां ते तथा तैः सुरभिवरवारिप्रतिपूर्णै, अत्र 'चंदणकयचच्चएहिं आविद्धकंठेगुणेहिं पउमुप्पलपिहाणेहिं करयलपरिग्गहिएहिं अट्ठसहस्सेणं सोवण्णिअखलसाणं जाव अट्ठसहस्सेणं भोमेज्जाण'मित्यादिको ग्रन्थो यावत्पदसंग्राह्य उत्तरत्र जिनजन्माभिषेकप्रकरणे व्याख्यास्यते तत्रास्य साक्षाद्दर्शितत्वात्, वाक्यसङ्गत्यर्थं च करणक्रियाविभागो दर्श्यते, उक्तविशेषणविशिष्टैः कलशैः सर्वोदकसर्वमृत्सर्वौषधिप्रभृतिवस्तुभिर्महता २ —गरीयसा २ राज्याभिषेकेणाभिषिञ्चन्ति, अभिषेको यथा विजयस्य जीवाभिगमोपाङ्गे उक्तस्तथाऽत्र बोद्धव्यः, अभिषिच्य च प्रत्येकं २ प्रतिनृपं यावत्पदात् 'करयलपरिग्गहिअं सिरसावत्तं मत्थए' इति ग्राह्यं, अंजलिं कृत्वा ताभिरिष्टाभिः अत्रापि 'कंताहिं जाव वग्गूहिं अभिनंदंता य अभिथुणंता य एवं वयासी— जय २ नंदा जय जय भद्दा ! भद्दं ते अजिअं जिणाहि' इत्यादिको ग्रन्थस्तथा ग्राह्यो यथा विनीतां प्रविशतो भरतस्यार्थार्थिप्रमुखया- चक्रजनैराशीर्गिरामार्गणयं भणितं, किंपर्यन्तमित्याह यावद्विहरेतिकृत्वा जय २ शब्दं प्रयुञ्जन्ति, नन्वत्र सूत्रेऽभिषेकसूत्रं जीवाभिगमगतविजयदेवाभिषेकसूत्रातिदेशेनोक्तं, साम्प्रतीनतदीयादर्शेषु च 'अट्ठसएणं सोवण्णिअकलसाण'मित्यादि दृश्यते, अत्र च वृत्तौ 'अट्ठसहस्सेणं सोवण्णिअकलसाण' मित्यादि दर्शितं तत्कथमनयोर्न विरोधः ?, उच्यते, जीवाभिगमवृत्तौ तानेव विभागतो दर्शयति, अष्टसहस्रेण सौवर्णिकानां कलशानामष्टसहस्रेण रूप्य० अष्टसहस्रेण मणिमयानामित्यादि- पाठाशयेनात्र लिखितत्वान्न दोषः, यदि चात्र कलशानामष्टोत्तरशतसङ्ख्या स्यात्तदा तत्रैव सर्वसङ्ख्यया अष्टभिः सहस्रैरित्युत्तरग्रन्थोऽपि नोपपद्येत, किं च—दृश्यमानतत्सूत्रे विकुर्वणाधिकारे अट्ठसहस्सं सोवण्णिअकलसाणं जाव भोमेज्जाणमित्यादि, अभिषेकक्षणे तु अट्ठसएणं सोवण्णिअकलसाणमित्यादीत्यपि विचार्यं । अथ शेषपरिच्छदाभिषेकवक्तव्यतामाह -

'तए णं'मित्यादि, ततो—द्वात्रिंशद्राजसहस्राभिषेकानन्तरं भरतं राजानं सेनापतिरत्नं यावत्पदात् गाहावइरयणे वड्डइरयणे इति ग्राह्यं, गृहपतिवर्द्धकिपुरोहितरत्नानि त्रीणि च षष्टानि—षष्ट्यधिकानि सूपशतानि अष्टादश श्रेणिप्रश्रेणयः अन्ये च बहवो यावच्छब्दात् राजेश्वरादिपरिग्रहः, ततो राजेश्वरतलवरमाडम्बिअकौटुम्बिकेभ्यश्रेष्ठिसेनापतिसार्थवाहप्रभृतय एवमेव—राजान इवाभिषिञ्चन्ति, तैर्वरकमलप्रतिष्ठानैस्तथैव कलशविशेषणादिकं ज्ञेयं, यावदभिनन्दन्ति अभिष्टुवन्ति च, ततः षोडशदेवसहस्राः एवमेव—उक्तन्यायेनाभिषिञ्चन्ति, यत्तु आभियोगिकसुराणां चरमोऽभिषेकः तद्भरतस्य मनुष्येन्द्रत्वेन मनुष्याधिकारान्मनुष्यकृताभिषेकानन्तरभावित्वेनेति बोध्यं, यद्वा देवानां चिन्तितमात्रतदात्वसिद्धिकारकत्वेन पर्यन्ते तथाविधोत्कृष्टाभिषेक- विधानार्थमिति, ऋषभचरित्रादौ तु पूर्वमपि देवानामभिषेकोऽभिहित इति, अत्र यो विशेषस्तमाह—'नवर'मिति, अयं विशेषः— आभियोगिकसुराणामपरेभ्योऽभिषेचकेभ्यः पक्ष्मलया—पक्ष्मवत्या सुकुमारया च अत्र यावतद्पदग्राह्यमिदं 'गन्धकासाइआए गायाइं लूहेंति सरसगोसीसचन्दणेणं गायाइं अणुलिंपंति २ त्ता नासाणीसासवायवोज्झं चक्खुहरं वण्णफरिसजुत्तं हयलालापेलवाइरेगं धवलं कणगखइ- अंतकम्मं आगासफलिहसरिसप्पभं अहयं दिव्वं देवदूसजुअलं निअंसावेंति २ त्ता हारं पिणद्धेंति २ त्ता एवं अद्धहारं एगावलिं मुत्तावलिं रयणावलिं पालम्बं

अंगयाइं तुडिआइं कडयाइं दसमुद्दि-आनंतगं कडिसुत्तगं वेअच्छगसुत्तगं मुरविं कंठमुरविं कुण्डलाइं चूडामणिं चित्तरयणुक्कडं' ति, अत्र व्याख्या–गन्धकाषायिक्या–सुरभिगन्धकषायद्रव्यपरिकर्मितया लघुशाटिकया इति गम्यं, गात्राणि–भरतशरीरावयवान् रूक्षयन्ति, रूक्षयित्वा च सरसेन गोशीर्षचन्दनेन गात्राण्यनुलिम्पन्ति, अनुलिप्य च देवदूष्ययुगलं निवासयन्ति–परिधापयन्तीति योगः, कथम्भूतमित्याह–नासिकानिश्वासवातेन वाह्यं–दूरापनेयं श्लक्ष्णतरमित्यर्थः,

अयमर्थ–आस्तां महावातः नासावातोऽपि स्वबलेन तद्वस्त्रयुगलं अन्यत्र प्रापयति, चक्षुर्हरं रूपातिशयत्वात् अथवा चक्षुर्हरं–चक्षुरधकं घनत्वात्, अतिशायिना वर्णेन स्पर्शेन च युक्तं हयलाला–अश्वमुखजलं तस्मादपि पेलवं–कोमल-मतिरेकेण–अतिशयेन अतिविशिष्टमृदुत्व–लघुत्वगुणोपेतमिति भावः धवलं प्रतीतं कनकेन खचितानि–विच्छुरितानि अन्तकर्माणि–अञ्चलयोर्वानलक्षणानि यस्य तत् तथा आकाशस्फटिको नाम–अतिस्वच्छस्फटिक-विशेषस्तत्सदृशप्रभं अहतं दिव्यं निवास्य च हारं पिनह्यन्ति–ते देवाश्चक्रिणः कण्ठपीठे बध्नन्ति।

'एवं' मिति एतेनाभिलापेनार्द्धहारादीनि वाच्यानि यावन्मुकुटमिति, तत्र हारार्द्धहारौ प्रतीतौ, एकावली प्राग्वत्, मुक्तावली–मुक्ताफलमयी कनकावली–कनकमणिमयी रत्नावली–रत्नमयी प्रालम्बः–तपनीयमयो विचित्रमणिरत्नभक्तिचित्र आत्मप्रमाण आभरणविशेषः अङ्गदे त्रुटिके च प्राग्वत् कटके प्रसिद्धे दशमुद्रिकानन्तकं–हस्तांगुलिमुद्रादशकं कटिसूत्रकं–पुरुषकट्याभरणं वैकक्ष्यसूत्रकं–उत्तरासङ्गं परिधानीयं–शृङ्खलकं मुरवी–मृदङ्गाकारमाभरणं कण्ठमुरवी–कण्ठासन्नं तदेव कुण्डले व्यक्ते चूडामणि प्राग्वत् चित्ररत्नोत्कटं–विचित्ररत्नोपेतं मुकुटं व्यक्तं।

'तयणंतरं च णं दद्दरमलय' इत्यादि, तदनन्तरं दर्दरमलयसम्बन्धिनो ये सुगन्धाः–शोभनवा-सास्तेषां गन्धः–शुभपरिमलो येषु ते तथा तैर्गन्धैः–काश्मीरकर्पूरकस्तूरीप्रमृतिगन्धवद्द्रव्यैः प्रकरणाद्रसभावमापादितैरभ्युक्षन्ति–सिञ्चन्ति ते देवा भरतं, कोऽर्थ ?–अनेकसुरभि-द्रव्यमिश्रघुसृणरसच्छटकान् कुर्वन्ति, भरतवाससीति भावः, क्वचित् 'सुगन्धगन्धिएहिं गन्धएहिं भुकुडंति' इति पाठस्तत्र भूकुडंतीति–उद्धूलयन्ति, गन्धैः सुरभिचूर्णै–सुरभिचूर्णं भरतोपरि क्षिपन्ति दिव्यं चः समुच्चये सुमनोदाम–कुसुममाला पिनह्यन्ति, किंबहुना ? उक्तेनेति गम्यं, "गंठिमवेढिम यावत्पदात् 'पूरिमसंघाइमेणं चउव्विहेणं मल्लेणं कप्परुक्खयंपिव समलंकिय' त्ति ग्राह्यं, अतर व्याख्या–ग्रन्थनं ग्रन्थस्तेन निर्वृत्तं ग्रन्थिमं, भावादिमप्रत्ययः, यत् सूत्रादिना ग्रथ्यते तद् ग्रन्थिममिति भावः, ग्रथितं सद्वेष्ट्यते यत्तद् वेष्टिमं, यथा पुष्पलंबूसको गेन्दुक इत्यर्थः, पूरिमं येन वंशशलादिमय-पञ्जरादि पूर्यते संघातिमं यत्परस्परतो नालं संघात्यते, एवंविधेन चतुर्विधेन माल्येन कल्पवृक्ष-मिवालङ्कृतविभूषितं भरतचक्रिणं कुर्वन्ति ते देवाः। अथ कृताभिषेको यच्चक्रे तदाह–

'तए णं' मित्यादि, ततः स भरतो राजा महता २ अतिशायिना राज्याभिषेकेणाभिषिक्तः सन् कौटुम्बिकपुरुषान् शब्दयदि शब्दयित्वा चैवमवादीत्, तदेवाह–क्षिप्रमेव भो देवानुप्रिया ! यूयं हस्तिस्कन्धवरगताः विनीतायाः राजधान्याः शृङ्गाटकत्रिकचतुष्कचत्वरादिषु प्राग्व्याख्यातेषु आस्पदेषु महता २ शब्देनोदघोषयन्तो–जल्पन्तो जल्पन्तः, अत्र शत्रन्तस्यापि अविवक्षणात्र कर्मनिर्देशः, आभीक्ष्ण्ये द्विर्वचनं, उच्छुल्कं यावद् द्वादश संवत्सराः कालो मानं यस्यातीति द्वाद-शसंवत्सरिकस्तं प्रमोदहेतुत्वात् प्रमोदः–उत्सवस्तं घोषयत घोषयित्वा च ममैतामाज्ञप्तिकां प्रत्यर्पयत,

उच्छुल्कादिपदव्याख्या प्राग्वत्, अथ ते आज्ञप्ताः यथा प्रवृत्तवन्तस्तथाऽऽह– 'तए ण'मिति, ततस्ते कौटुम्बिकपुरुषा भरतेन राज्ञा एवमुक्ताः सन्तो हृष्टतुष्टचित्तानन्दिताः 'हरिसवस'त्ति हर्षवशविसर्पद्ध दयाः विनयेन वचनं प्रतिशृण्वन्ति प्रतिश्रुत्य च क्षिप्रमेव हस्तिस्कन्धवरगताः यावत्पदात् 'विणीआए रायहाणीए सिंघाडगतिगे'त्यादि ग्राह्यं, कियदंतमित्याह–यावद् घोषयन्ति २ त्वा च एतामाज्ञप्तिकां प्रत्यर्पयन्ति। अथ भरतः किं चक्रे इत्याह– 'तए ण'मिति, ततः स भरतो राजा महता २ राज्याभिषेकेणा- भिषिक्तः सन् सिंहासनादभ्युत्तिष्ठति अभ्युत्थाय च स्त्रीरत्नेन यावत् 'बत्तीसाए उडुकल्लाणिआसह- स्सेहिं बत्तीसाए जणवयकल्लाणिआसहस्सेहिं बत्तीसाए बत्तीसइबद्धेहिं' इति ग्राह्यं, द्वात्रिंशता द्वात्रिंशद्बद्धैर्नाटकसहस्रैः सर्दद्धं संपरिवृतोऽभिषेकपीठात् पौरस्त्येन त्रिसोपानप्रतिरूपकेण प्रत्यवरोहति प्रत्यवरुह्य चाभिषेकमण्डपात् प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च यत्रैवाभिषेक्यं हस्तिरत्नं तत्रैवोपागच्छति उपागत्य चाञ्जनगिरिकूटसन्निभं गजपतिं यावच्छब्दात् नरवइत्ति ग्राह्यं, नरपति- रारूढः, तदनु अनुचरजनो यथाऽनुवृत्तवांसतथाह–

'तए ण'मित्यादि, व्यक्तं, अथ यथा युक्त्या चक्री विनीतां प्रविवेश तामाह 'तए ण' मित्यादि, ततस्तस्य भरतस्य राज्ञ आभिषेक्यं हस्तिरत्नमारूढस्य सत इमान्यष्टमङ्गलकानि पुरतो यावच्छ- ब्दाद्यथानुपूर्व्या संप्रस्थितानि, अत्र ग्रन्थविस्तरभयादतिदेशमाह–योऽपि चातिगच्छतो–विनीतां प्रविशतः क्रमः–परिपाटी प्रथमोऽधस्तनसूत्रोक्तो भरतविनीताप्रवेशवर्णकः, कुबेरदृष्टान्तभावि- तसूत्रावसानः स एव क्रम इहापि सत्कारविरहितो नेतव्य, अयं भावः–पूर्वं प्रवेशे षोडशदेवसहस्र- द्वात्रिंशद्राजसहस्रदनां सत्कारो यथा विहितस्तथा नात्रेति, अस्य च द्वादशवार्षिकप्रमोदनिर्वर्त्त- नोत्तरकाल एवावसरप्राप्तत्वात्। अथ गृहागमनानन्तरं यो विधिस्तमाह– 'तए णं से भरहे राया मज्जणघर'मित्यादि, निगदसिद्धं प्राग् बहुशो निगदितत्वात्, एवं च प्रतिदिनं नवं २ राज्याभिषेक- महोत्सवं कारयतस्तस्य द्वादश वर्षाण्यतिक्रान्तानि, शत्रुंजयमाहात्म्यादौ तु 'राज्याभिषेकोत्सवस्थाने राज्याभिषेक एव द्वादशवार्षिकोऽभिहित इति, अथ तदुत्तरकालेयत्कृत्यं तदाह– ''तए ण' मित्यादि प्राग्वत् ननु सुभूमचक्रवर्त्तिनः परशुरामहतक्षत्रियदाढाभृतस्थालमेव चक्ररत्नतया परिणतमिति श्रुतेश्चक्ररत्नानामनियतोत्पत्तिस्थानकत्वं ज्ञायते, तेन प्रस्तुतप्रकरणे तेषां कोत्पत्तिरित्याशंक्याह–अथ चतुर्दशरत्नाधिपतेर्भरतस्य यानि रत्नानि यत्रोदपद्यंत तत्तथाऽऽह–

*मू. (१२३) भरहस्स रन्नो चक्करयणे १ दंडरयणे २ असिरयणे ३ छत्तरयणे ४ एते णं चत्तारि एगिंदियरयणे आउहघरसालाए समुप्पन्ना, चम्मरयणे १ मणिरयणे २ कागणिरयणे ३ नव य महानिहओ। एए णं सिरिघरंसि समुप्पण्णा, सेनावइरयणे १ गाहावइरयणे २ वद्धइरयणे ३ पुरोहिअरयणे ४ एए णं चत्तारि मणुअरयणा विणीआए रायहाणीए समुप्पन्ना, आसरयणे १ हत्थिरयणे २ एए णं दुवे पंचिंदिअरयणा वेअद्धगिरिपायमूले समुप्पन्ना, सुभद्दा इत्थीरयणे उत्तरिल्लाए विज्जाहरसेढीए समुप्पन्ने।*

वृ. 'भरहस्स रन्नो' इत्यादि, भरतस्य राज्ञश्चक्रादीनि चत्वारि एकेन्द्रियरत्नानि आयुध- शालायां समुत्पन्नानि–लब्धसत्ताकानि जातानि एवमुत्तरसूत्रेऽपि बोध्यं, तेन चर्मरत्नादीनि नव महानिधयश्च एतानि श्रीगृहे–भाण्डागारे समुत्पन्नानि -लब्धसत्ताकानि जातानीत्यर्थः, इत्थं च निधयः शाश्वतभावरूपाः कथमुत्पद्यन्ते इत्याशङ्का निरस्ता, ननु इदं सूत्रं।

॥ १ ॥ 'पादाधःस्थितयस्तस्य, नवापि निधयोऽनिशम् ।
हेमाब्जानीव वृषभप्रभोर्विङ्करतोऽभवन् ॥

इति ऋषभचरित्रवचनेन अत्रैव पूर्वसूत्रेण च सह कथं न विरुध्यते ?, उच्यते, राज्ञां यत्र तत्र स्थितमपि कोशद्रव्यं कोश एव कथ्यत इति लौकिकव्यवहारस्य सुप्रसिध्धत्वात् न दोषः, सेनापत्यादिमनुजरत्नानि चत्वारि विनीतायां समुत्पन्नानि अश्वरत्नहस्तिरत्ने एते द्वे पञ्चेन्द्रिय-तिर्यग्रत्ने वैताढ्यगिरेः पादमूले-मूलभूमौ समुत्पन्ने, सुभद्रानाम स्त्रीरत्नं उत्तरस्यां विद्याधरश्रेण्यां समुत्पन्नं।

अथ षट्खण्डं पालयंश्चक्री यथा प्रववृते तथाह–

**मू. (१२४)** *तए णं से भरहे राया चउदसण्हं रयणाणं नवण्हं महानिहीणं सोलसण्हं देवसाहस्सीणं बत्तीसाए रायसहस्साणं बत्तीसाए उडुकल्लाणिआसहस्साणं बत्तीसाए जनवयकल्लाणिआसहस्साणं बत्तीसाए बत्तीसइबद्धाणं नाडगसहस्साणं तिण्हं सट्ठीणं सूयारसयाणं अट्ठारसण्हं सेणिप्पसेणीणं चउरासीइए आससयसहस्साणं चउरासीइए दंतिसयसहस्साणं चउरासीइए रहसयसहस्साणं छन्नउइए मणुस्सकोडीणं बावत्तरीए पुरवरसहस्साणं बत्तीसाए जनवयसहस्साणं छन्नउइए गामकोडीणं नवनउइए दोणमुहसहस्साणं अडयालीसाए पट्टणसहस्साणं –*

*–चउव्वीसाए कब्बडसहस्साणं चउव्वीसाए मडंबसहस्साणं वीसाए आगरसहस्साणं सोलसण्हं खेडसहस्साणं चउदसण्हं संवाहसहस्साणं छप्पन्नाए अंतरोदगाणं एगूणपन्नाए कुरज्जाणं विणीआए रायहाणीए चुल्लहिमवंतगिरिसागरमेरागस्स केवलकप्पस्स भरहस्स वासस्स अन्नेसिं च बहूणं राईसरतलवर जाव सत्थवाहप्पभिईणं आहेवच्चं पोरेवच्चं भट्टित्तं ।*

*सामित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे ओहयणिहएसु कंटएसु उद्धिअमलिएसु सव्वसत्तुसु निज्जिएसु भरहाहिवे णरिंदे वरचंदणचच्चिअंगे वरहाररइअवच्छे वरमउडविसिट्ठए वरवत्थभूसणधरे सव्वोउअसुरहिकुसुमवरमल्लसोभिअसिरे वरणाडगनाडइज्जवरइत्थिगुम्म सद्धिं संपरिवुडे सव्वोसहिसव्वरयणसमिइसमग्गे संपुण्णमनोरहे हयामित्तमाणमहणे पुव्वकयतवप्पभावनिविट्ठसंचिअफले भुंजइ माणुस्सए सुहे भरहे नामधेज्जेत्ति*

**वृ.** 'तए णं'मिति, ततः–षट्खण्डभरतसाधनानन्तरं स भरतो राजा चतुर्दशरत्नादीनां सार्थवाहप्रभृत्यन्तानामाधिपत्यादिकं कारयन् पालयन् मानुष्यकानि सुखानि भुङ्क्ते इत्यन्वयः, सर्वं प्राग्वत् व्याख्यातार्थं, नवरं षट्पञ्चाशतोऽन्तरोदकानां–जलान्तर्वर्त्तिसन्निवेशविशेषाणां न तु समयप्रसिद्धयुग्मिमनुजाश्रयभूतानां षट्पञ्चाशदन्तरद्वीपानां तेषु कस्याप्याधिपत्यस्यासम्भवात्, एकोनपञ्चाशतः कुराज्यानां–भिल्लादिराज्यानामिति, उध्धृ तेषु–देशान्निर्वासितेषु मर्दितेषु च–मानम्लानिं प्रापितेषु सर्वशत्रुषु–अगोत्रजवैरिषु, एतत्सर्वं कुतो भवतीत्याह–निर्जितेषु–भग्नबलेषु सर्वशत्रुषु उक्तद्विप्रकारवैरिषु अत्र सर्वशत्रुष्विति पदं देहलीप्रदीपन्यायेनोभयत्र योज्यं, कीदृशो भरत इत्याह– भरताधिपो नरेन्द्रः चन्दनेन चर्चितं–समण्डनं कृतमङ्गं यस्य स तथा, वरहारेण रतिदं–प्रष्टॄणां नयनसुखकारि वक्षो यस्य स तथा, वरमुकुटविशिष्टकः, चूर्णौ तु 'वरमउडाविद्धए' इति, तत्र आविद्धए इति आविद्धं परिहितं वरमुकुटं अनेन स तथा, प्राकृतत्वात् पदव्यत्ययः, वरवस्त्र- भूषणधरः सर्वर्त्तुकसुरभिकुसुमानां माल्यैः–मालाभि शोभितशिरस्कः वरनाटकानि–पात्रादिसमुदा- यरूपाणि नाटकीयानि च–नाटकप्रतिबद्धपात्राणि वरस्त्रीणां–प्रधानस्त्रीणां गुल्मं–

अव्यक्तावय- वविभागवृन्दं तेन तृतीयालोप आर्षत्वात् सार्द्ध सम्परिवृतः सर्वौषध्यः—पुनर्नवाद्याः सर्वरत्नानि— कर्केतनादीनि सर्वसमितयः— अभ्यन्तरादिपर्षदस्ताभिः— सम्पूर्णः।

अत एव सम्पूर्णमनोरथः हतानां—पुमर्थत्रयभ्रष्टत्वेन जीवन्मृतानां अमित्राणां—शत्रूणां मानमथनः, कीदृशानि सुखानि भुंक्ते इत्याह—पूर्वकृततपः प्रभावस्य निविष्टसंचितस्य—निकाचिततया संचितस्य तस्यैव ध्रुवफलत्वात्, परनिपातः पदस्यार्षत्वात्, फलानि—फलभूतानि, कीदृशो भरतो? —अस्मिन् क्षेत्रे प्रथमभरताधिपत्येन प्रसिद्धं नामधेयं—नाम यस्य स तथा, विशेष्यपदं तु 'तए णं से भरहे' इत्यत्रैवोक्तं, अनेनैकवाक्ये द्विर्विशेष्यपदं कथमित्याशङ्का निरस्ता।

. अथास्य नरदेवस्य धर्मदेवत्वप्राप्तिमूलमाह—

**मू. (१२५)** *तए णं से भरहे राया अन्नया कयाइ जेणेव मज्जणघरे तेणेव उवागच्छइ २ त्ता जाव ससिव्व पिअदंसणे नरवई मज्जणघराओ पडिनिक्खमइ २ त्ता जेणेव आदंसघरे जेणेव सीहासणे तेणेव उवागच्छइ २ त्ता सीहासणवरगए पुरत्थाभिमुहे निसीअइ २ त्ता आदंसघरंसि अत्ताणं देहमाणे २ चिट्ठइ, तए णं तस्स भरहस्स रन्नो सुभेणं परिणामेणं पसत्थेहिं अज्झवसाणेहिं लेसाहिं विसुज्झमाणीहिं २ ईहापोहमग्गणगवेसणं करेमाणस्स तयावरिज्जाणं कम्माणं खएं कम्मरयविकिरणकरं अपुव्वकरणं पविट्ठस्स अनंते अनुत्तरे निव्वाघाए निरावरणे कसिणे पडिपुण्णे केवलवरनाणदंसणे समुप्पन्ने।*

*तए णं से भरहे केवली सयमेवाभरणालंकारं ओमुअइ २ त्ता सयमेव पंचमुट्ठिअं लोअं करेइ २ त्ता आयंसघराओ पडिनिक्खमइ २ त्ता अंतेउरमज्झंमज्झेणं णिग्गच्छइ २ त्ता दसहिं रायवरसहस्सेहिं सद्धिं संपरिवुडे विणीअं रायहाणिं मज्झंमज्झेणं निग्गच्छइ २ त्ता मज्झदेसे सुहंसुहेणं विहरइ २ त्ता जेणेव अट्ठावए पव्वते तेणेव उवागच्छइ २ त्ता अट्ठावयं पव्वयं सणिअं २ दुरुहइ २ त्ता मेघघणसन्निकासं देवसण्णिवायं पुढविसिलावट्टयं पडिलेहेइ २ त्ता संलेहणा-झूसणाझूसिए भत्तपाणपडिआइक्खिए पाओवगए कालं अणवकंखमाणे २ विहरइ।*

*तए णं से भरहे केवली सत्तत्तरिं पुव्वसयसहस्साइं कुमारवासमज्झे वसित्ता एगं वाससहस्सं मंडलिअरायमज्झे वसित्ता छ पुव्वसयसहस्साइं वाससहस्सूणगाइं महारायमज्झे वसित्ता तेसीइ पुव्वसयसहस्साइं अगारवासमज्झे वसित्ता एगं पुव्वसयसहस्सं देसूणगं केवलिपरिआयं पाउणित्ता तमेव बहुपडिपुण्णं सामन्नपरिआयं पाउणित्ता चउरासीइं पुव्वसयसहस्साइं सव्वाउअं पाउणित्ता मासिएणं भत्तेणं अपाणएणं सवसेणं नक्खत्तेणं जोगमुवागएणं खीणे वेअणिज्जे आउए नामे गोए कालगए वीइक्कंते समुज्जाए छिण्णजाइजरामरणबन्धणे सिद्धे बुद्धे मुत्ते परिनिव्वुडे अंतगडे सव्वदुक्खप्पहीणे। इति भरतचक्रिचरितं।*

**वृ.** 'तए णं'मित्यादि, ततो—वर्षसहस्रोनषट्पूर्वलक्षावधिसाम्राज्यानुभवनानन्तरं स भरतो राजा अन्यदा कदाचिद्यत्रैवमज्जनगृहं तत्रैवोपागच्छति उपागत्य च यावच्छशीव प्रियदर्शनो नरपतिर्मज्जनगृहात् प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च स्ववेषसौन्दर्यदर्शनार्थं यत्रैवादर्शगृहं यत्रैव च सिंहासनं तत्रैवोपागच्छति उपागत्य च सिंहासनवरगतः पूर्वाभिमुखो निषीदति निषद्यादर्शगृहे आत्मानं प्रेक्षमाणः २—तत्र प्रतिबिम्बितं सर्वाङ्गस्वरूपं पश्यन् पश्यंस्तिष्ठति—आस्ते, अत्र च 'व्याख्यातो विशेषप्रतिपत्ति'रित्ययं सम्प्रदायो बोध्यः, तद्यथा—

॥ १ ॥ "तत्र च प्रेक्षमाणस्य, स्वं वपुर्भरतेशितुः ।
अङ्गुल्या एकतमस्या, निपपातांगुलीयकम् ॥
॥ २ ॥ तदंगुल्या गलितमप्यंगुलीयं महीपतिः ।
नाज्ञासीदर्शिणो बर्हभारादर्हमिवैककम् ॥
॥ ३ ॥ वपुः पश्यन क्रमेणेक्षांचक्रे तां चक्रयनूर्मिकाम् ।
अंगुलीं गलितज्योत्स्नां, दिवा शशिकलामिव ॥
॥ ४ ॥ अहो विशोभा किमसावंगुलीति चिचिन्तयन् ।
ददर्श पतितं भूमावंगुलीयं नरेश्वरः ॥
॥ ५ ॥ किमन्यान्यपि विशोभान्यङ्गान्याभरणैर्विना ।
इति मोक्तुं स आरेभे, भूषणान्यपराण्यपि ॥

इति, एवं प्रवृत्तस्य तस्य किमजनीत्याह–'तए ण'मित्यादि, ततो–वपुर्न्यस्तभूषणमोचनानन्तरं तस्य भरतस्य राज्ञः शुभेन परिणामने ।

॥ १ ॥ "अन्तःक्लिन्नस्य विष्ठाद्यैर्मलैः स्रोतोभवैर्बहि ।
चिन्त्यमानं किमप्यस्य, शरीरस्य न शोभनम् ॥
॥ २ ॥ इदं शरीरं कर्पूरकस्तूरीप्रभृतीन्यपि ।
दूषयत्येव पायोदपयांस्यूषरभूरिव ॥
॥ ३ ॥ यत्प्रातः संस्कृतं धान्यं, तन्मध्याह्ने विनश्यति ।
तदीयरसनिष्पन्ने, काये का नाम सारता ॥ इति

शरीरासारत्वभावनारूपया जीवपरिणत्या प्रशस्तैरध्यवसानैः–उक्तस्व-रूपैरमनःपरिणामैः लेश्याभिः–शुक्लादिद्रव्योपहितजीवपरिणतिरूपा भिर्विशुद्धयन्तीभि–उत्तरोत्तरविशुद्धिमापद्यमानाभिरापद्यमानाभिर्निरावरणवपु वैरूप्यविषयकमीहापोहमार्गणागेषणं कुर्वतस्तदावरणीयानां–केवलज्ञानदर्शननिबन्दकानां चतुर्णां घातिकर्मणां क्षयेणसर्वथा जीवप्रदेशेभ्यः तदीयपुद्गलपरिशाटनेन प्राग्व्याख्यातानुत्तरादिविशेषणविशिष्टं केवलज्ञानदर्शन-मुत्पन्नमिति, कीदृशमित्याह–

कर्मरजसां विकिरणकरं–विक्षेपकरं, कीदृशस्य भरतस्य ? –अपूर्वकरणं–अनादौ संसारेऽप्राप्तपूर्वं ध्यानं शुक्लध्यानं प्रविष्टसा प्राप्तस्येत्यर्थः, अत्र च ईहादिपदेषु समाहारद्वन्द्वः, तत्रावग्रहपूर्वक- त्वादीहादीनां प्रथमं तदुल्लेखः, तथाहि–अये ! इह निरलंकारे वपुषि शोभा न दृश्यते इत्यवग्रहः, यथा दूरस्थपुरोवर्त्तिनि वस्तुनि किमिदमिति भावः, अथ सा शोभा औपाधिकी वा नैसर्गिकी वा इत्यवगृहीतार्थाभिमुखा मतिचेष्टा पर्यालोचनरूपा ईहा, यथा तत्रैव स्थाणुर्वा पुरुषो वा, नन्वियं संशयाकारतया संशय एव, स च कथमुत्तरकालभावनिसम्यग्निश्चयापरपर्यायस्यापोहस्य हेतुर्भवति, विरुद्धकोटयवगाहित्वादिति ?, उच्यते, उत्कटकोटिकसंशयरूपत्वेनास्याः सम्भावनारूपाया निश्चयकारणत्वस्याविरुद्धत्वात्, इयमौपाधिक्येव न नैसर्गिकी बाह्यवस्तुसंसर्गजन्यत्वस्य प्रत्यक्षसिद्धत्वात् इति ईहितविशेषनिर्णयरूपोऽपोहः, यथा तत्रैव स्थाणुरेवायं न पुरुष इति, अस्याः प्रकर्षापकर्षौ बाह्यवस्तुप्रकर्षापकर्षानुविधायिनावित्यन्वय-

धर्मालोचनं मार्गणा यथा स्थाणौ निश्चेतव्य इह वल्ल्युत्सर्पणादयो धर्मा सम्भवन्ति, स्वाभाविकत्वे उत्तानदृशां भारभूतस्याभरणस्य वपुषि धारणबुद्धिर्न स्यादिति गवेषणं, यथा तत्रैव इह शिरः-खण्डूयनादयः पुरुषधर्मा न दृश्यन्ते इति, अत्र चेहादीनन्तरेण हानोपादानबुद्धिर्न स्यादिति तद्ग्रहणम्।

अथोत्पन्नकेवलः किं करोतीत्याह– 'तए णं' मित्यादि, ततः—केवलज्ञानानन्तरं स भरतः आसनप्रकम्पावधिना शक्रेण केवलिन्! द्रव्यलिङ्गं प्रपद्यस्व यथाऽहं वन्दे विदधे च निष्क्रमणोत्स-वमित्युक्तः सन् स्वयमेवाभरणभूतमलङ्कारं वस्त्रमाल्यरूपमवमुञ्चति—त्यजति, अत्र भूषणालङ्कारस्य पूर्वं त्यक्तत्वात् केशालङ्कारस्य च तिल्यक्ष्यमाणत्वात् परिशेषात् वस्त्रमाल्यालङ्कारयोरवग्रहः, स्वयमेव पञ्चमुष्टिकं लोचं करोति कृत्वा च उपलक्षमात् सन्निहितदेवतयाऽर्पितं साधुलिङ्गं गृहीत्वा चेति गम्यं, ततः शक्रवन्दितः सन् आदर्शगृहात् प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च अन्तःपुरमध्यंमध्येन निर्गच्छति निर्गत्य च दशभी राजसहस्रैः सार्द्धं संपरिवृतो विनीताया राजधान्या मध्यंमध्येन निर्गच्छति निर्गत्य च मध्यदेशे—कोशलदेशस्य मध्ये सुखंसुखेन विहरति। तदनु किं विधत्ते इत्याह–

'विहरित्ता जेणेव अट्ठावए' इत्यादि, विहृत्य च यत्रैवाष्टापदः पर्वतस्तत्रैवोपागच्छति, उपागत्य चाष्टापदं पर्वतं शनैः २ सुविहितगत्या 'दवदवस्स न गच्छिज्जा' इति वचनात् आरोहति आरुह्य च घनमेघसन्निकाशं—सान्द्रजलदश्यामं पदव्यत्ययः प्राकृतत्वात् देवानां सन्निपातः—आगमनं रम्यत्वात् यत्र स तथा तं, पृथिवीशिलापट्टकः—आसनविशेषस्तं प्रतिलेखयति, केवलित्वे सत्यपि व्यवहारप्रमाणीकरणार्थं दृष्ट्या निभालयति, प्रतिलिख्य च सिंहावलोकनन्यायेनात्रापि आरोहतीति बोध्यं, संलिख्यते—कृशीक्रियन्ते शरीरकषाया अनयेति संलेखना—तपोविशेषस्तस्या जोषणा—सेवना तया जुष्टः—सेवितो झूषितो वा—क्षपितः यः स तथा, प्रत्याख्याते भक्तपाने येन स तथा, क्तान्तस्य परनिपातः प्राकृतत्वात्, 'पादोपगतः' पादो—वृक्षस्य भूगतो मूलभागस्तस्येवा-प्रकम्पतयोपगतम्—अवस्थानं यस्य स तथा कालं—मरणमनवकांक्षन्—अवाञ्छन्, उपलक्षणा-ज्जीवितम्पवाञ्छन्, अरक्तद्विष्टत्वाद्विहरति, अथ स भरतो यस्मिन् पर्याये यावन्तं कालमतिवाह्य निर्वृते तदाह– 'तए णं० ततः स भरतः सप्तसप्ततिं पूर्वशतसहस्राणि कुमारवासमध्ये– कुमारभावे उषित्वा भरतप्रसवानन्तरमेतावन्तं कालं ऋषभस्वामिनो राज्यपरिपालनात्, एकं वर्षसहस्रं माण्डलिकराजा—एकदेशाधिपति भावप्रधानत्वान्निर्देशस्य माण्डलिकत्वं तन्मध्ये उषित्वा षट् पूर्वसहस्राणि वर्षसहस्राणि महाराजमध्ये—चक्रवर्त्तित्वे उषित्वा त्र्यशीतिं पूर्वशतसहस्राणि अगारवासमध्ये गृहित्वे इत्यर्थ उषित्वा एकं पूर्वशतसहस्रं अन्तर्मुहूर्त्तोनं केवलिपर्यायं प्राप्य—पूरयित्वा गृहित्वे एव भावचारित्रप्रतिपत्त्यनन्तरमन्तर्मुहूर्त्तेन केवलोत्पत्तेः, तदेव पूर्वशतसहस्रं बहुप्रतिपूर्णं—सम्पूर्णं, तेनान्तर्मुहूर्त्तेनाधिकमित्यर्थः, भावचारित्रस्यात्र विवक्षा न तु द्रव्यचारित्रस्य तस्य केवलानन्तरं प्रतिपत्तेः, श्रामण्यपर्यायं—यतित्वं प्राप्य चतुरशीतिं पूर्वशतसहस्राणि सर्वायुः परिपूर्य मासिकेन भक्तेन—मासोपवासैरित्यर्थ : अपानकेन—पानकाहारवर्जितेन श्रवणेन नक्षत्रेण योगमुपागतेन चन्द्रेण सहेति गम्यं, क्षीणे वेदनीये आयुषि नाम्नि गोत्रे च भवोपग्राहिकर्मचतुष्टयक्षये इत्यर्थः, 'कालगए' इत्यादि पदानि प्राग्वत्, इतिशब्दोऽधिकारपरिसमाप्तिद्योतकः। स चायं–

'से केणट्ठेणं भंते ! एवं वुच्चइ भरहे वासे २' इति सूत्रेण नामान्वर्थं पृच्छतो गौतमस्य प्रतिवचनाय 'तत्थ णं विणीआए भरहे नामं राया चाउरंतचक्कवट्टी समुप्पज्जित्था' इत्यादिसूत्रैर्भर-तचरित्रं प्रपञ्चितं, तच्च परिसमाप्तमित्यर्थः, तेन भरतः स्वामित्वेनास्यास्तीत्यभ्रादित्वादप्रत्यय

इति निरुक्तवशाद् भरतं क्षेत्रमिति तात्पर्यार्थः । प्रकारान्तरेण नामान्वर्थमाह–

मू. *(१२६) भरहे अ इत्थ देवे महिड्ढीए महज्जुईए जाव पलिओवमट्ठिईए परिवसइ, से एएणट्ठेणं गोअमा ! एवं वुच्चइ भरहे वासे २ इति । अदुत्तरं च णं गो० ! भरहस्स वासस्स सासए नामधिज्जे पन्नत्ते जं न कयाइ न आसि न कयाइ नत्थि न कयाइ न भविस्सइ भुविं च भवइ अ भविस्सइ अ धुवे निअए सासए अक्खए अव्वए अवट्ठिए निच्चे भरहे वासे ।*

वृ. भरतश्चात्र देवो महर्द्धिको महाद्युतिको यावत्पदात् 'महायसे' इत्यादि पदकदम्बकं ग्राह्यं, पल्योपमस्थितिकः परिवसत तद् भरतेति नाम, एतेनार्थेन गौतम ! एवमुच्यते भरतं वर्षं २, निरुक्तं तु प्राग्वत् ॥ उक्तं यौगिकयुक्त्या नाम, अथ तदेव रूढ्या दर्शयति– अथापरं चः समुच्चयेणं वाक्यालङ्कारे गौ० ! भरतस्य वर्षस्य शाश्वतं नामधेयं निर्निमित्तकमनादिसिद्धत्वाद्देव-लोकादिवत् प्रज्ञप्तं, शाश्वतत्वमेव व्यक्त्या दर्शयति–यन्न कदाचिन्नासीदित्यादि प्राग्वत्, एतेन भरतनाम्नश्चक्रिणो देवाच्च भरतवर्षनाम प्रवृत्तत्वं भरतवर्षाच्च तयोर्नाम भरतं स्वकीयेनास्यास्तीति निरुक्तवशेन प्रावर्त्ततेत्यन्योऽन्याश्रयदोषो दुर्निवार इति वचनीयता निरस्ता ॥

वक्षस्कारः–३ समाप्तः

इति सातिशयधर्मदेशनारसमुल्लासविस्मयमानएदंयुगीननराधिपतिचक्रवर्त्तिसमान अकब्बरसुरत्राणपरदत्तविजयमानश्रीमत्पागच्छा धि राजश्रीहीरविजयसूरीश्वरपदद्यो-पासनाप्रवणमहोपाध्यायश्रीसकलचन्द्रगणिशिष्योपाध्यायश्रीशान्तिचन्द्रगणिविराचितायां जम्बूद्वीपप्रज्ञप्तिवृत्तौ प्रमेयरत्नमञ्जूषानाम्न्यां भरतक्षेत्रप्रवृत्तिनिमित्ताविर्भावकभरतचक्रिचरित-वर्णनो नामतृतीयो वक्षस्कारः ॥

**मुनि दीपरत्न सागरेण संशोधिता सम्पादिता जम्बूद्वीपप्रज्ञप्तिउपाङ्गसूत्रे तृतीयवक्षस्कारस्य शान्तिचन्द्रवाचकेन विरचिता टीका परिसमाप्ता ।**

## वक्षस्कारः–४

वृ. अथ क्षुल्लहिमवद्गिरेरवसरः–

मू. *(१२७) कहि णं भंते जम्बुद्दीवे २ चुल्लहिमवंते नामं वासहरपव्वए पन्नत्ते ? गोअमा हेमवयस्स वासस्स दाहिणेणं भरहस्स वासस्स उत्तरेण पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थि-मलवणसमुद्दस्स पुरत्थिमेणं एत्थ णं जम्बुद्दीवे दीवे चुल्लहिमवंते नामं वासहरपव्वए पन्नते*

*–पाईणपडीणायए उदीणदाहिणविच्छिण्णे दुहा लवणसुद्दं पुट्ठे पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठे पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठे, एगं जोअणसयं उद्धं उच्चत्तेणं पणवीसं जोअणाइं उव्वेहेणं एगं जोअणसहस्सं आवण्णं च जोअणाइं दुवालस य एगूणवीसइ भाए जोअणस्स विक्खंभेणंति ।*

*तस्स बाहा पुरत्थिमपच्चत्थिमेणं पंच जोअणसहस्साइं तिन्नि अ पन्नासे जोअणसए पन्नरस य एगूणवीसइभाए जोअणस्स अद्धभागं च आयामेणं, तस्स जीवा उत्तरेणं पाईणपडि- णायया जाव पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठा चउव्वीसं जोअणसहस्साइं नव य बत्तीसे जोअणसए अद्धभागं च किंचिविसेसूणा आयामेणं पन्नत्ता ।*

*तीसे धनुपट्ठे दाहिणेणं पणवीसं जोअणसहस्साइं दोन्नि अ तीसे जोअणसए चत्तारि अ एगूणवीसइभाए जोअणस्स परिक्खेवेणं पन्नत्ते, रुअगसंठाणसंठिए सव्वकणगामए अच्छे सण्हे तहेव जाव पडिरूवे उभओ पासिं दोहिं पउमवरवेइआहिं दोहिं अ वनसंडेहिं संपरिक्खित्ते दुण्हवि पमाणं वण्णगोत्ति । चुल्लहिमवन्तस्स वासहरपव्वयस्स उवरिं बहुसमरमणिज्जे भूमिभागे प० से जहा० आलिंगपुक्खरेइ वा जाव वाण० देवा य देवीओ अ आसयंति जाव विह०*

**वृ.** 'कहि णं'मित्यादि, क्व भदन्त ! जम्बूद्वीपे द्वीपे क्षुद्रः क्षुद्रो वा-महाहिमवदपेक्षया लघुर्हिमवान् क्षुद्रहिमवान् क्षुद्रहिमवान् (वा) नाम्ना वर्षधरः-पर्वतः प्रज्ञप्तः ? वर्षे-उभययोपार्श्वस्थिते द्वे क्षेत्रे धरतीति वर्षधरः, क्षेत्रद्वयसीमाकारी गिरिरित्यर्थ स चासौ पर्वतश्च वर्षधरपर्वतः आख्यातस्तीर्थकृदिरिति, शेषं सुगमं, नवरं एकं योजनशतं ऊर्ध्वोच्चत्वेन पंचविंशतिर्योजनानि उद्वेधेन-भूगतत्वेन, उच्चत्वचतुर्थभागस्यैव भूगतत्वात्, एकं योजनसहस्रं द्विपञ्चाशच्च योजनानि द्वादश चैकोनविंशतिभागान् योजनस्य विष्कम्भेन, अस्योपपत्तिस्तु द्विगुणितजम्बूद्वीपव्यासस्य नवत्यधिकशतेन भागहरणे भवति, क्षुद्रहिमवतो भरताद् द्विगुणत्वात्, अत्र च करणविधिर्भरतवर्षविष्कम्भ इव ज्ञेयः, अथास्य बाहे आह-

'तस्स बाहा' इत्यादि, तस्य-क्षुद्रहिमवतो बाहे प्रत्येकं पूर्वपश्चिमयोः पंच योजनसहस्राणि त्रीणि च योजनशतानि पंचाशदधिकानि पंचदश च योजनस्यैकोनविंशतिभागान् एकस्य योजनैकोनविंशतितमभागस्यार्द्धं च यावदायामेन प्रज्ञप्ते, सूत्रे च वचनव्यत्ययः प्राकृतत्वात्, अस्य व्याख्यानं वैताढ्याधिकारसूत्रतो ज्ञेयं, प्रायः समसूत्रत्वात् ।

अथैतस्य जीवामाह-'तस्स जीवा' इत्यादि, तस्य-क्षुद्रहिमवतो जीवा उत्तरतो ग्राह्या, प्राचीनप्रतीचीनायता, जाव पच्चत्थिमिल्लाए इत्यादि प्राग्वत्, यावत्पदात् पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठा इति ग्राह्यं, आयामेन चतुर्विंशतियोजनसहस्राणि नव च द्वात्रिंशदधिकानि योजनशतानि अर्द्धभागं च-कलार्द्धं प्रज्ञप्ता किंचिद्विशेषोना किंचिदूना इत्यर्थः, किंचिदूनत्वं चास्या आनयनाय वर्गमूले कृते शेषपरितनराश्यपेक्षया द्रष्टव्यं, अथास्याः परिधिमाह-

'तीसे' इत्यादि, तस्याः क्षुद्रहिमवज्जीवायाः धनुःपृष्ठं दक्षिणतो-दक्षिणपार्श्वे पंचविंशति योजनसहस्राणि द्वे च त्रिंशदधिके योजनशते चतुरश्च एकोनविंशतिभागान् योजनस्य परिक्षेपेण-परिधिना प्रज्ञप्तं, यच्चात्र 'तीसे' इतिशब्देन जीवा निर्देशस्तत्तस्वस्वजीवापेक्षया स्वस्वधनुःपृष्ठस्य यथोक्तमानतोपपत्त्यर्थः, अन्यथा न्यूनाधिकमानसम्भवात्, अथ पर्वतं विशेषणैर्विशिनष्टि-'रुअग'इत्यादि, रुचकसंस्थानसंस्थितः सर्वकनकमय इत्यादि प्राग्वत्, नवरं द्वयोरपि पद्मवरवेदिकावनखण्डयोः प्रमाणं वर्णकश्च ज्ञातव्याविति शेषः ।

अथास्य शिखरस्वरूपमाह-'चुल्लहिमवंत'मित्यादि, प्राग्व्याख्यातार्थं, नवरं बहुसमत्वं चात्र नदीस्थानादन्यत्र ज्ञेयं, अन्यथा नदीश्रोतसां संसरणमेव न स्यात् ।

**मू. (१२८)** *तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए इत्थ णं इक्के महं पउमद्दहे नामं दहे पन्नत्ते पाईणपडिणायए उदीणदाहिणविच्छिण्णे इक्कं जोअणसहस्सं आयामेणं पंच जोअणसयाइं विक्खंभेणं दस जोअणाइं उव्वेहेणं अच्छे सण्हे रययामयकूले जाव पासाईए जाव पडिरूवेत्ति, से णं एगाए पउमवरवेइआए एगेण य वनसंडेणं सव्वओ समंता संपरिक्खित्ते*

वेइआवनसंडवण्णओ भाणिअव्वोत्ति, तस्स णं पउमद्दहस्स चउद्दिसिं चत्तारि तिसोवाणपडिरूवगा पन्नत्ता, वण्णावासो भाणिअव्वोति। तेसि णं तिसोवाणपडिरूवगाणं पुरओ पत्तेअं २ तोरणा पन्नत्ता, ते णं तोरणा नाना-मणिमया, तस्स णं पउमद्दहस्स बहुमज्झदेसभाए एत्थं महं एगे पउमे पन्नत्ते, जोअणं आयामवि- क्खंभेणं अध्धजोअणं बाहल्लेणं दस जोअणाइं उव्वेहणं दो कोसे ऊसिए जलंताओ साइरेगाइं दसजोअणाइं सव्वग्गेणं पन्नत्ता, से णं एगाए जगईए सव्वओ समंता संपरिक्खत्ते जम्बुद्दीवजग- इप्पमाणा गवक्खकडएवि तह चेव पमाणेणंति।

तस्स णं पउमस्स अयमेआरूवे वण्णावासे पं०, तं०—वइरामया मूला रिट्ठामए कंदे वेरुलि- आमए नाले वेरुलिआमया बाहिरपत्ता जम्बूनयामया अब्भिंतरपत्ता तवणिज्जमया केसरा नाना- मणिमया पोक्खरत्थिभाया कणगामई कण्णिगा, सा णं अद्धजोयणं आयामविक्खंभेणं कोसं बाहल्लेणं सव्वकणगामई अच्छा, तीसे णं कण्णिआए उप्पिं बहुसमरमणिज्जे भूमिभागे पन्नत्ते, से जहा नामए आलिंग०। तस्स णं बहुसमरमणिज्जस् भूमिभागस्स बहुमज्झदेसभाए, एत्थ णं महं एगे भवणे प० कोसं आयामेणं अद्धकोसं विक्खंभेणं देसूणगं कोसं उद्धं उच्चत्तेणं अनेगखंभ- सयसण्णिविट्ठे पासाईए दरिसणिज्जे, तस्स णं भवणस्स तिदिसिं तओ दारा पं०, ते णं दारा पञ्चधनुसयाइं उद्धं उच्चत्तेणं अड्ढाइज्जाइं धनुसयाइं विक्खंभेणं तावतिअं चेव पवेसेणं सेआवरकणगथूमिआ जाव वणमालाओ नेअव्वाओ।

तस्स णं भवणस्स अंतो बहुसमरमणिज्जे भूमिभागे पन्नत्ते से जहानामए आलिंग०, तस्स णं बहुमज्झदेसभाए एत्थ णं महई एगा मणिपेढिआ पं०, सा णं मणिपेढिआ पंचधनुसयाइं आयामविक्खंभेणं अड्ढाइज्जाइं धनुसयाइं बाहल्लेणं सव्वमणिमइ अच्छा, तीसे णं मणिपेढिआए उप्पिं एत्थं णं महं एगे सयणिज्जे पण्णत्ते सयणिज्जवण्णओ भाणिअव्वो।

से णं पउमे अन्नेणं अट्ठसएणं पउमाणं तदद्धुच्चत्तप्पमाणमित्ताणं सव्वओ समंता संपक्खित्ते, ते णं पउमा अध्धजोअणं आयामविक्खंभेणं कोसं बाहल्लेणं दसजोअणाइं उव्वेहेणं कोसं ऊसिया जलंताओ साइरेगाइं दसजोअणाइं उच्चत्तेणं, तेसि णं पउमाणं अयमेआरूवे वण्णावासे पन्नत्ते, तंजहा—वइरामय मूला जाव कणगामई कण्णिआ, सा णं कण्णिआ कोसं आयामेणं अद्धकोसं बाहल्लेणं सव्वकणगामई अच्छा इति।

तीसे णं कण्णिआए उप्पिं बहुसमरमणिज्जे जाव मणीहिं उवसोभिए, तस्स णं पउमस्स अवरुत्तरेणं उत्तरेणं उत्तरपुरत्थिमेणं एत्थ णं सिरीए देवीए चउण्हं सामानिअसाहस्सीणं चत्तारि पउमसाहस्सीओ प० तस्स णं पउमस्स पुरत्थिमेणं एत्थ णं सिरीए देवीए छउण्हं महत्तरिआणं चत्तारि पउमा प०, तस्स णं पउमस्स दाहिणपुरत्थिमेणं सिरीए देवीए अब्भितरिआए परिसाए अट्ठण्हं देवसाहस्सीणं अट्ठ पउमसाहस्सीओ प० दाहिणेणं मज्झिमपरिसाए दसण्हं देवसाहस्सीणं दस पउमसाहस्सीओ प० दाहिणपच्चत्थिमेणं बाहिरिआए परिसाए बारसण्हं देवसाहस्सीणं बारस पउमसाहस्सीओ प० पच्चत्थिमेणं सत्तण्हं अनिआहिवइणं सत्त पउमा प०

तस्स णं पउमस्स चउदिसिं सव्वओ समंता इत्थणं सिरिए देविए सोलसण्ह आयरक्ख देवसाहस्सीणं सोलस पउम साहस्सीओ प० से णं तीहिं पउम परिक्खेवेहिं सव्वओ समंता संपरिक्खित्ते तं अभिंतरकेणं मज्झिमणं बाहिरएणं, अब्भितरए पउमपरिक्खेवे बत्तीसं पउमसयसाहस्सीओ

*प० मज्झिमए पउमपरिक्खेवे चत्तालीसं पउमसयसाहस्सीओ प० बाहिरए पउमपरिक्खेवे अडयालीसं पउमसयसाहस्सीओ प० एवामेव सपुव्वावरेणं तिहिं पउमपरिक्खेवेहिं एगा पउमकोडी वीसं च पउमसयसाहस्सीओ भवंतीति अक्खायं। से केणट्ठेणं भंते! एवं वुच्चइ–पउमद्दहे २ ?, गोअमा! पउमद्दहे णं तत्थ २ देसे तहिं २ बहवे उप्पलाइं जाव सयसहस्सपत्ताइं पुण्डइप्पभाइं पउमद्दहवण्णाभाइं सिरी अ इत्थ देवी महिड्ढीआ जाव पलिओवमट्ठिईआ परिवसइ, से एएणट्ठेणं जाव अदुत्तरं च णं गोअमा! पउमद्दहस्स सासए नामधेज्जे पन्नत्ते न कयाइ नासि न० ।*

**वृ.** अथैतन्मध्यवर्त्तिह्रदस्वरूपनिरूपणायाह–'तस्स णं'मित्यादि, तस्य–क्षुद्रहिमवतो बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे अत्रावकाशे एको महान् पद्मद्रहो नाम द्रहः पद्मद्रहो नाम ह्रदो वा प्रज्ञप्तः, पूर्वापरायत उत्तरदक्षिणविस्तीर्ण एकं योजनसहस्रमायामेन पंच योजनशतानि विष्कम्भेन दश योजनान्युद्वेधेन–उण्डत्वेन अच्छोऽनाविलजलत्वात्, श्लक्ष्णः सारवज्रादिमयत्वात्, रजतमयकूल इति व्यक्तं, अत्र यावत्करणात् इदं द्रष्टव्यं–'समतीरे वइरामय-पासाणे तवणिज्जतले सुवण्णसुब्भरययामयवालुए वेरुलिअमणिफालिअपडलपच्चोअडे सुहोयारे सुहुत्तारे नानामणितित्थसुबद्धे चाउक्कोणे अणुपुव्वसुजायवप्पगंभीरसीअलजले संछन्नपत्तभिसमुणाले बहुउप्पलकुमुअसुभगसोगंधिअपुंडरीअसयपत्तफुल्लकेसरोवचिए छप्पयपरिभुज्जमाण-कमले अच्छविमलसलिलपुण्णे परिहत्थभमंतमच्छकच्छभअणेगसउणमिहुणपरिअरिए' इति, पासादीए अत्र यावत्पदात् 'दरिसणिज्जे अभिरूवे' इति ।

एतद्व्याख्या तु जगत्युपरिगतवाप्यादिवर्णकाधिकारतो ज्ञेयेति, 'से णं'मित्यादि, स पद्मद्रहः एकया पद्मवरवेदिकया एकेन च वनखण्डेन सर्वतः समन्तात् संपरिक्षिप्तः, वेदिकावनखण्डवर्णको भणितव्यः, प्राग्वदित्यर्थः, 'तस्स णं'मित्यादि व्यक्तं, 'तेसि णं'मित्यादि, सर्वं प्राग्वत्, नवरं नानामणिमयेत्ति वर्णकैकदेशेन पूर्णस्तोरणवर्णको ग्राह्यः, अथात्र पद्मस्वरूपमाह–'तस्स णं' मित्यादि, तस्य–पद्मद्रहस्य बहुमध्यदेशभागः अत्रान्तरे महदेकं पद्मं प्रज्ञप्तं, एकं योजनमायामतो विष्कम्भतश्च अर्द्धयोजनं बाहल्येन–पिण्डेन दश योजनान्युद्वेधेन–जलावगाहेन द्वौ क्रोशावुच्छ्रितं जलान्तात्–जलपर्यन्तात्, एवं सातिरेकाणि दश योजनानि सर्वाग्रेण प्रज्ञप्तानि, जलावगाहोपरितनभागसत्ककमलमानमीलने एतावत एव सम्भवात् । 'से णं'मित्यादि, तत्पद्ममेकया जगत्या–प्राकारकल्पया सर्वतः समन्तात् संपरिक्षिप्तं, सा च जगती जम्बूद्वपजगतीप्रमाणा वेदितव्या, एतच्च प्रमां जलादुपरिष्टाद् ज्ञेयं, दशयोजनात्मकजलावगाहप्रमाणस्याविवक्षितत्वात्, गवाक्षकटकोऽपि–जालकसमूहोऽपि तथैव प्रमाणेन उच्चत्वेनार्द्धयोजनं पञ्चधनुःशतानि विष्कम्भेनेत्यर्थः ।

अथ पद्मवर्णकमाह–'तस्स'त्ति तस्य–पद्मस्यायमेतद्रूपो वर्णव्यासः प्रज्ञप्तः, तद्यथा–वज्रमयानि मूलानि–कन्दादधस्तिर्यग्नर्गतजटासमूहावयवरूपाणि अरिष्ठरत्नमयः कन्दो–मूलनालमध्यवर्त्ती ग्रन्थि वैडूर्यमयं नालं–कन्दोपरि मध्यवर्त्यवयवः वैडूर्यमयानि बाह्यपत्राणि, अत्रायं विशेषो बृहत्क्षेत्रविचारवृत्यादौ–बाह्यानि चत्वारि पत्राणि वैडूर्यमयानि शेषाणि तु रक्त सुवर्णमयानि, जम्बूनदं–ईषद्रक्तस्वर्णं तन्मयान्यभ्यन्तपत्राणि, सिरिनिलयमिति क्षेत्रविचावृत्तौ तु पीतस्वर्णमयान्युक्तानि, तपनीयमयानि–रक्तस्वर्णयानि केसराणि–कर्णिकायाः परितोऽवयवाः नानामणिमयाः पुष्करास्थिभागाःकमलबीजविभागाः कनकमयी कर्णिका०–बीजकोशः, अथ

कर्णिकामानाद्याह–''सा ण''मित्यादि, सा–कर्णिका अर्द्धयोजनमायामेन विष्कम्भेन च क्रोशं बाहल्येन–पिण्डेन सर्वात्मना कनकमयी, अत एव कनकमयीति पूर्वविशेषणेना वयवविभागेऽपि कनकमयत्वं स्यादित्याशङ्का निरस्ता, 'अच्छा' इत्येकदेशेन सण्हा इत्यादिपदान्यपि ज्ञेयानि, तेषां व्याख्या च प्राग्वत् ।

'तीसे ण'मित्यादि, एतानि सर्वाण्यपि निगदसिद्धानि, शयनीयवर्णकश्चायं जीवाभिगमोक्तः–तस्स णं देवसयणिज्जस्स अयमेआरूवे वण्णावासे पं०, तंजहा–नानामणिमया पडिपाया सोवण्णिआ पाया नानामणियाइं पायसीसगाइं जम्बूणयामयाइं गत्ताइं वइरामया संधी णाणामणिमएचिच्चे रययामई तूली लोहिअक्खा मया बिब्बोअणा तवणिज्जमईओ गंडोवहाणियाओ' इति 'से णं सयणिज्जे सालिंगणवट्टिए उभओबिब्बोअणे उभओ उण्णए मज्झेणयगम्भीरे गंगापुलिणवालुआउद्दालसालिसए ओअविअखोमदुगुल्लपट्टपडिच्छायणे आइणगरूअबूरणवणीअतूलतुल्लफासे लसुविरइअरयत्ताणे रत्तंसुअसंवुडे सुरम्मे पासादीए ४'इति, अत्र व्याख्या–तस्य देवशयनीयस्यायमेतद्रूपो वर्णव्यासः प्रज्ञप्तः, तद्यथा–नानामणिमयाः प्रतिपादाः, मूलपादानां प्रतिविशिष्टोपष्टम्भकरणाय पादाः प्रतिपादाः, सौवर्णिकाः–सुवर्णमयाः पादाः–मूलपादाः, जम्बूनदमयानि गात्राणि–ईषादीनि, वज्रमया–वज्ररत्नपूरिताः सन्धयः ।

'नानामणिमए चिच्चे'इति चिच्चं नाम व्यूतं विशिष्टं वानमित्यर्थः, रजतमयी तूली लोहिताक्षमयानि बिब्बोअणा इति–उपधानकानि उच्छीर्षकाणीतियावत्, तपनीयमय्यो गण्डोपधानिकाः गल्लमसूरकाणीत्यर्थः तच्छयनीयं सह आलिङ्गन वर्त्या - शरीरप्रमाणेनोपधानेन यत्तसथा उभयतः - उभौ शिरोऽन्तपादान्तावाश्रित्य बिब्बोअणेउपधाने यत्र तत्तथा, उभयत उन्नतं मध्ये नतं च तत् नम्रत्वात् गम्भीरं च महत्वात् तत्तथा, गङ्गापुलिनवालु कायाः अवदालो–विदलनं पादादिन्यासे अधोगमनमिति तेन सालिसे इति–सदृशकं यत्तत्तथा, तथा 'ओअविअ'त्ति विशिष्टं परिकर्म्मितं क्षौमं–कार्प्पासिकं दुकूलं–वस्त्र तदेव पट्टः स प्रतिच्छादनं–आच्छादनं यस्य तत्तथा, 'आईणगे'त्यादि, प्राग्वत्, सुविरचितं रजस्त्राणं–आच्छादनविशेषोऽपरिभोगावस्थायां यत्र तत्तथा, रक्तांशुकेन–मशकदंशादिनिवारणार्थकमशकगृहाभिधानवस्त्रविशेषेण संवृतं, अत एव सुरम्यं, 'पासा-दीए'इत्यादि पदचतुष्कं प्राग्वत् । अथास्य प्रथमपरिक्षेपमाह–

'से ण'मित्यादि, तत्पद्मन्येनाष्टशतेन पद्मानां 'तदर्द्धोच्चत्वप्रमाणमात्राणां' तस्य–मूलपद्मप्रमाणस्यार्द्धं–अर्द्धरूपा उच्चत्वे–उच्छ्रये प्रमाणे च–आयामविस्तारबाहल्यरूपे मात्रा–प्रमाणं येषां तानि तथा तेषां, सर्वतः समन्तात् संपरिक्षिप्तं, अत्र जलोपरितनभागे उच्चत्वस्य व्यवहारप्राप्तस्य विवक्षणादर्द्धप्रमाणं सम्भवत्यन्यथा जलावगाहसहितोच्चत्वविवक्षायामुत्तरसूत्रे सातिरेकपञ्चयोजनानि इति वक्तव्यं स्यात् सामान्यतः, उक्तमेव मानं व्यनक्ति–'ते ण'मित्यादि, प्रागुक्तप्रायं, एषां वर्णकमाह–'तेसि ण'मित्यादि, व्यक्तं, 'सा ण'मित्यादि, इदमपि व्यक्तं, 'तीसे ण'मित्यादि, व्यक्तं, एषु च श्रीदेव्या भूषणादिवस्तूनि तिष्ठन्ति इति सूत्रानुक्तोऽपि विशेषो बोध्यः ।

अथ द्वितीयपद्मपरिक्षेपमाह– 'तस्स णं' तस्य–मूलपद्मस्यापरोत्तरस्यां–वायव्यकोणे उत्तरस्यां उत्तरपूर्वस्यां–ईशानकोणे च सर्वसङ्कलनया तिसृषु दिक्षु अत्रान्तरे श्रिया देव्याश्चतुर्णां सामानिकसहस्राणां चत्वारि पद्मसहस्राणि प्रज्ञप्तानि, तस्य पद्मस्य पूर्वस्यां दिशि अत्र श्रियाश्चतसृणां

महत्तरिकाणां चत्वारि पद्मानि प्रज्ञप्तानि, अत्र प्राग्व्यावर्णितविजयदेव सिंहासनपरिवारानुसारेण पार्श्वाद्विपद्मसूत्राणि वक्तव्यानि, सुगमत्वाच्च न विव्रियन्ते, यावत्पश्चिमायां सप्तानीकाधिपतीनां सप्त पद्मानि। अथ तृतीयपद्मपरिक्षेपसमयः–तस्य मुख्यपद्मस्य चतसृणां दिशां समाहारश्चतुर्दिक् तस्मिन् चतुर्दिशि सर्वतः समन्तात्, अत्रान्तरे श्रिया देव्याः षोडशानामात्मरक्षकदेवसहस्राणां षोडश पद्मसहस्राणि, तथाहि–चत्वारि पूर्वस्यां चत्वारि दक्षिणस्यां एवं पश्चिमोत्तरयोः। अथोक्तव्यति- रिक्ताः अन्येऽपि त्रयः परिवेषाः सन्तीत्याह–

'से णं पउमे'इत्यादि, तत्पद्मं त्रिभिरुक्तव्यतिरिक्तैः पद्मपरिक्षेपैः सर्वतः समन्तात् सम्परिक्षिप्तं, तद्यथा–अभ्यन्तरकेण–अभ्यन्तरभवेन मध्यमकेन- मध्यभवेन बाहिरकेण–बहिर्भवेन, एतदेव व्यनक्ति–अभ्यन्तरपद्मपरिक्षेपे द्वात्रिंशत्पद्मानां शतसहस्राणि–लक्षाणि मध्यमके चत्वारिंशत्पद्मलक्षाणि बाह्येऽष्टचत्वारिंशत्पद्मलक्षाणि प्रज्ञप्तानि, इदं च पद्मपरिक्षेपत्रिकं आभियोगिकदेवसम्बन्धि बोध्यं, अत एव भिन्नत्रिकख्यापनपरं सूत्रं निर्दिष्टं, अन्यथा सूत्रकृत् चतुर्थपञ्चमषष्ठपरिक्षेपाः इत्येवाकथयिष्यत्, ननु तर्हि आभियोगिकजातीयानामेक एवात्मरक्षकाणामिव वाच्यः, उच्यते, उत्तममध्यनीचकार्यनियोज्यत्वेनाभियोगिकानां भिन्नत्वेन परिक्षेपस्यापि भिन्नत्वात्, अत परिक्षेपत्रिकस्य पद्मसर्वाग्रमाह–

एवमेव–उक्तन्यायेन सपूर्वापरेण–सपूर्वापरसमुदायेन त्रिभिः, पद्मपरिक्षेपैरेका पद्मकोटी विंशतिश्च पद्मलक्षाणि भवन्तीत्याख्यातं मयाऽन्यैश्च तीर्थकृद्भिः, सङ्ख्यानयनं च स्वयमभ्यूह्यं, षण्णां पद्मपरिक्षेपाणां मुख्यपद्मेन सह मीलने सैव सङ्ख्या पञ्चाशत्सहस्रैकशतविंशत्यधिका ज्ञातव्या, ननु कमलानि कमलिन्याः पुष्परूपाणि भवन्ति, मूलं कन्दश्च कमलिन्या एव भवतः, नतु कमलस्य, तत्कथमत्र मूलकन्दावुक्तौ ? उच्यते, कमलान्यत्र न वनस्पतिपरिणामानि, किन्तु पृथिवीकायपरिणामरूपाः कमलाकारवृक्षास्तेन तेषामिमौ न विरुद्धाविति, अत्राद्यपरिक्षेपपद्मानां मूलपद्मादर्द्धमानं सूत्रकृता साक्षादुक्तं, उत्तरोत्तरपरिक्षेपपद्मानां तु पूर्वपूर्वपरिक्षेपपद्मेभ्योऽर्द्धार्द्धमानता युक्तितः सङ्गच्छते विजयप्रासादपंक्तेरिव, अन्यथाऽल्प- र्द्धिकमहर्द्धिकदेवानामाश्रयतारतमयं चतुर्थादिमहापरिक्षेपपद्मानामवकाशः शोभमानस्थितिकत्वं च न सम्भवेत्, अर्द्धार्द्धमानता चैवम्–मूलपद्मं योजनप्रमाणं आद्ये परिक्षेपे पद्मानि द्विक्रोशमानानि द्वितीये क्रोशमानानि तृतीयेऽर्द्धक्रोशमानानि चतुर्थे पञ्चधनुःशतमानानि पञ्चमे सार्द्धद्विशतधनु- र्मानानि षष्ठे सपादशतधनुर्मानानि, तथा मूलपद्मापेक्षया सर्वपरिक्षेपेषु जलादुच्छ्रयभागोऽ- प्यर्द्धार्द्धक्रमेण ज्ञेयः, यथा मूलपद्मं जलात् क्रोशद्वयमुच्छ्रये आद्ये परिक्षेपे क्रोश उच्छ्रयः द्वितीये क्रोशार्द्ध तृतीये क्रोशचतुर्थांशः चतुर्थे क्रोशाष्टांशः पञ्चमे क्रोशषोडशांशः षष्ठे क्रोशद्वात्रिंशांश इति, एवमेव मूलपद्मापेक्षया परिक्षेपपद्मानां बाहल्यमप्यर्द्धार्द्धक्रमेण वाच्यं।

ननु षट् परिक्षेपा इति विचार्यं, योजनात्मना सहस्रत्रयात्मकस्य धनुरात्मना द्विकोटिद्विचत्वारिंशल्लक्षप्रमाणस्य ह्रदपरमपरिधेः षष्ठपरिक्षेपपद्मानां षष्टिकोटिधनुःक्षेत्रमातव्यानां एकया पंक्त्या कथमवकाशः सम्भवति ? एवं प्रथमपरिक्षेपवर्जं शेषपरिक्षेपाणामपि तत्परिधिमानपद्ममाने परिभाव्य वाच्यं, उच्यते, षट् परिक्षेपा इत्यत्र षड्जातीयाः परिक्षेपा इति ग्राह्यं, आद्या मूलपद्मार्द्धमाना जातिः द्वितीया त्पादमाना तृतीया तदष्टमभागमाना चतुर्थी तत्षोडशभागमाना पञ्चमी तद्द्वात्रिंशत्तम-

भागमाना षष्ठी तच्चतुःषष्टितमभागमाना, ततश्च तत्परिधिक्षेत्रपरिक्षेपपद्मसङ्ख्यापद्मविस्तारान् परिभाव्य यत्र यावत्यः पंक्तयः सम्भवंति गणितज्ञेन करणीयास्तत्र तावतीभि पंक्तिभिरेक एव परिक्षेपो ज्ञेयः, पद्मानामेकजातीयत्वात्, महापरिक्षेप एकया पंक्त्या न सम्माति, इह परिधिक्षेत्रस्याल्पत्वात्, पद्मानां च बहुत्वात्, ततः पंक्तिभिः पद्मानि पूरणीयानि, एवं परिक्षेपः पूर्णो भवति, ह्रदपरिधिश्च प्रतिपरिक्षेपं भिन्नमानकत्वात् सपद्मपरिक्षेपो भिन्न एव लक्ष्यते इति, न च ह्रदक्षेत्रस्याल्पत्वमिति वाच्यं, अत्र गणितपदक्षेत्रस्य पञ्चलक्षयोजनप्रमाणत्वात्, सहस्रयोजनप्रमाणायामस्य पञ्चशतयोजनविष्कम्भेन गुणने एतावत एव लाभात्, पद्मावगाढक्षेत्रं तु स्वसङ्ख्यया विंशति सहस्राणि पञ्चाधिकानि योजनानां षोडशभागीकृतस्यैकस्य योजनस्य त्रयोदश भागाः,

मूलपद्मावगाहो योजनमेकं जगती द्वादश योजनानि मूले पृथुरिति, जगतीपूर्वापरभागसत्कमूलव्यासयोर्मीलनेन पञ्चविंशतिर्योजनानीति, तथा तत्परिधौ प्रथमः परिक्षेपोऽष्टोत्तरशतपद्मानां तदवगाहक्षेत्रं सप्तविंशतिर्योजनानि, अर्द्धयोजनप्रमाणत्वेन तेषामेकस्मिन् योजने चतुर्णामवकाशश्चतुर्भिरष्टोत्तरशते भक्ते एतावतामेव लाभात्, ननु योजनार्द्धमानवतां तावतां चतुःपञ्चाशद् योजनानि सम्भवेयुरिति, सत्यं, क्षेत्रबहुत्वादेकपंक्त्या व्यवस्थितत्वेन प्रत्येकं योजनचतुर्थांशावगाहकत्वेन च उक्तासङ्ख्यैव समुचिता, अत्र पद्मरुद्धक्षेत्रस्यैव भणनादिति, तथा द्वितीयः परिक्षेप एकादशाधिकचतुस्त्रिंशत्सहस्राणां, तदवगाहक्षेत्रं द्वे सहस्रे पञ्चविंशत्यधिकं शतं च योजनानां एकादश च भागा योजनस्य षोडशभागीकृतस्य, उपपत्तिस्तु योजनपादप्रमाणत्वादिमानि षोडश मान्तीति ३४०११ इत्ययं परिक्षेपपद्मराशि षोडशभिर्भज्यते, आगच्छत्यनन्तरोक्तो राशिः, अस्यां च परिक्षेपजातौ पंक्तयः सूत्रोक्तस्वस्वदिशि निवेशनीयपद्मनिवेशनेन विषमवृत्ताः सम्भाव्यन्ते, पद्मानां विषमसङ्ख्यकत्वादिति, अथ तृतीयः परिक्षेपः षोडशसहस्रपद्मानां तदवगाढक्षेत्रं द्वे शते पञ्चाशदधिके योजनानां, उपपत्तिस्तु अमूनि योजनाष्टमभागप्रमाणत्वाद्योजने चतुःषष्टिर्मान्तीति चतुःषष्ट्य १६००० प्रमाणः पद्मराशिर्भज्यते, उपतिष्ठते चायं राशि ।

अत्र च पंक्तयः समवृत्ता एव निवेशनीयाः, यथेच्छं चतुर्दिक्षु पद्मानां निवेशनादिति, अथ चतुर्थ परिक्षेपो–द्वात्रिंशल्लक्षपद्मानां तदवगाहक्षेत्रं द्वादश सहस्राणि पञ्चशताधिकानि योजनानां, आनयनोपायस्तु एषां योजनषोडशभागप्रमाणत्वाद्योजने मान्तीति षटपञ्चाश- दधिकशतद्वयेन ३२००००० इत्ययं पद्मराशिर्भज्यते, ततो यथोक्तो राशिरायातीति, अथ पञ्चमः परिक्षेपः चत्वारिंशल्लक्षपद्मानां, तदवगाहक्षेत्रं त्रीणि सहस्राणि नव शतानि च षडधिकानि योजनानां चत्वारश्च षोडशभागा योजनस्य, उपपत्तिस्तु एषां योजनद्वात्रिंशत्तमांश- प्रमाणत्वादमूनि योजने मान्तीति चतुर्विंशत्यधिकसहस्रेण रूपकस्य पद्मराशे- र्भागहरणेन प्राप्यते यथोक्तराशिरिति, अथ षष्ठः परिक्षेपः–अष्टचत्वारिंशल्लक्षं पद्मानां, तदवगाहक्षेत्रं एकादश शतानि एकसप्तत्यधिकानि योजनानां चतुर्द्दश च च षोडशभागाः योजनस्य, उपपत्तिश्चात्र–अमीषां योजनचतु– षष्टितमांशप्रमाणत्वाद्योजने मान्तीति षन्नवत्य- धिकचतुःसहस्रै रित्यस्य पद्मराशेर्भागहरणात् यथोक्तो राशिरुपपद्यत इति पूर्वापरपद्म- क्षेत्रयोजनमीलनेन च पूर्वोक्तं सर्वाग्रं सम्पद्यते, परिक्षेपाश्चात्र वृत्ताकारेण बोद्धव्याः क्षेत्रस्य बहुत्वात् सम्भवन्तीति, पंक्तयश्चात्र ह्रदक्षेत्रस्याय तचतुरस्रत्वेन आयामविस्तारयोर्विषमत्वेऽपि पञ्चशतयोजनमर्यादयैव कर्त्तव्या, ततः परं

व्याससत्कपञ्चशतयोजनानां पर्यवसितत्वात्, क्रोशमानाश्चोक्तरीत्यैव भवन्तीति।

किञ्च–इमानि पद्मानि शाश्वतानि पार्थिवपरिणामरूपत्वात्, वानस्पतान्यपि बहूनि तत्रोत्पद्यन्ते, यदाहुः श्रीउमास्वातिवाचकपादाः स्वोपज्ञजम्बूद्वीपसमासप्रकरणे–"नीलोत्पलपुण्डरीकशतपत्रसौगन्धिकादिपुष्पाञ्चित"इति, अन्यथा श्रीवज्रस्वामिपादाः श्रीदेवतासमर्पितानुपमेयमहापद्मानयनेन पुरिकापुर्यां कथं जिनप्रवचनप्रभावनामकार्षुरिति ? एतानि च न शाश्वतानि, तत्रत्यश्रीदेवतादिभिरवचीयमानत्वात्, यदूचुः, श्रीहेमचन्द्रसूरयःस्वोपज्ञपरिशिष्टपर्वणि–

॥ १ ॥ "तदा च देवपूजार्थमवचित्यैकमम्बुजम्।
श्रीदेव्या देवतागारं, यान्त्या वज्रर्षिरैक्ष्यत ॥"

इति, नन्वयमनन्तरोक्तोऽर्थः कथं प्रत्येतव्यः ?, उच्यते, इदमेव द्वितीयपरिक्षेपसूत्रं प्रत्यायकं, तथाहि–अत्रैकादशाधिकचतुस्त्रिंशत्सहस्रकमलानि उक्तदिशि भावयितव्यानि, तानि च क्रोशमानानि एकपंक्त्या च तदाऽवकाशं लभेत यदा द्वितीयपद्मपरिधिरेकादशाधिकचतुर्स्त्रिंशत्सहस्रक्रोशप्रमाणः स्यात्, स च तदा स्याद् यदा मूलक्षेत्रायामव्यासौ साधिकषड्विंशतिशतप्रमाणौ स्यातां, तौ प्रस्तुते न स्तः, तेन यथासम्भवं पंक्तिभिर्द्वितीयपरिक्षेपपद्मजाति पूरणीयेति तात्पर्यं, एवमन्यपरिक्षेपेष्वपि यथासम्भवं भावना कार्येति, अथ कथमयमर्थः सिद्धान्ततां प्रापित इति उच्यते, अन्यथाऽनुपपत्त्या, न हि यथाक्षरमात्रसन्निवेशं सूरयः सूत्रव्याख्यानपरा भवन्ति, किन्तु प्राकपरार्थाविरोधेन, यदुक्तम्–

॥ १ ॥ "जं जह सुत्ते भणिअं तहेव तं जइ विआलणा नत्थि।
किं कालिआणुओगो दिट्ठो दिट्ठिप्पहाणेहिं ॥ इति।

अलं प्रसङ्गेनेति। अथ पद्मद्रहनामनिरुक्तं पृच्छन्नाह–'से केणट्ठेण'मित्यादि, अथ केनार्थेन भदन्त ! एवमुच्यते–पद्मद्रहः पद्मद्रह इति, गौतम ! पद्मद्रहे तत्र तत्र देशे–तस्मिन् देशे २ बहूनि उत्पलानि यावत् शतसहस्रपत्राणि पद्मद्रहप्रभाणि–पद्मद्रहाकाराणि आयतचतुरस्राकाराणीत्यर्थः, एतेन तत्र वानस्पतानि पद्मद्रहाकाराणि पद्मानि बहूनि सन्ति, न तु केवलं पार्थिवानि वृत्ताकाराणि महापद्मादीन्येव तत्र सन्तीति ज्ञापितं, तथा पद्मद्रहवर्णस्यैवाभा–प्रतिभासो येषां तानि तथा, ततस्तानि तदाकारत्वात्तद्वर्णत्वाच्च पद्मद्रहाणीति प्रसिद्धानि, ततस्तद्योगादयं जलाशयोऽपि पद्मद्रहः, उभयेषामपि च न नाम्नामनादिकालप्रवृत्तत्वेन नेतरेतराश्रयदोषः, अथ पार्थिवपद्मतोऽप्यस्य नामप्रवृत्तिर्जाताऽस्तीति ज्ञापयितुं प्रकारान्तरेण नामनिबन्धनमाह– श्रीश्च देवी पद्मवासाऽत्र परिवसति, ततश्च श्रीनिवासयोग्यपद्माश्रयत्वात् पद्मोपलक्षितो द्रह इति पद्मद्रह आख्यायते, मध्यपदलोपिसमासात्, समाधानं शेषं प्राग्वत्। अथ गङ्गामहानदी- स्वरूपमाह–

मू. (१२१) *तस्स उ णं पउमद्दहस्स पुरत्थिमिल्लेणं तोरणेणं गंगा महानई पवूढा समाणी पुरत्थाभिमुही पञ्च जोअणसयाइं पव्वएणं गंता गंगा वत्तणकूडे आवत्ता समाणी पञ्च तेवीसे जोअणसए तिन्नि अ एगूणवीसइभाए जोअणस्स दाहिणाभिमुही पव्वएणं गंता महया घडमुहपवत्तएणं मुत्तावलिहारसंठिएणं साइरेगजोअणसइएणं पवाएणं पवडइ।*

*गंगा महानई जओ पवडइ इत्थ णं महं एगा जिब्भिया पन्नत्ता, सा णं जिब्भिआ अद्धजोअणं आयामेणं छ सकोसाइं जोअणाइं विक्खंभेणं अद्धकोसं बाहल्लेणं मगरमुहविउट्टसंठाणसंठिआ*

सव्ववइरामई अच्छा सण्हा, गंगा महानई जत्थ पवडई एत्थ णं महं एगे गंगप्पवाए कुंडे नामं कुंडे पन्नत्ते सट्ठिं जोअणाइं आयामविक्खंभेणं नउअं जोअणसयं किंचिविसेसाहिअं परिक्खेवेणं, दस जोअणाइं उव्वेहेणं अच्छे सण्हे रययामयकूले समतीरे वइरामयपासाणे वइरतले सुवण्ण-सुब्भरययामयवालुआए वेरुलिअमणिफालिअपडलपच्चोअडे सुहोआरे सुहोत्तारे नानामणि-तित्थसुबद्धे वट्टे अणुपुव्वसुजायवप्पगंभीरसीअलजले संछण्णपत्तभिसमुणाले बहुउप्पलकुमु-अणलिणसुभगसोगंधिअपोंडरीअमहापोंडरीअसयपत्तसहस्सपत्तसयसहस्सपत्तपप्फुल्लकेसरोवचिए छप्पयमहुयरपरिभुज्जमाणकमले अच्छविमलपत्थसलिले पुण्णे पडिहत्थभमन्तमच्छकच्छभ-अनेगसउणगणमिहुणपविअरियसद्दुन्नइअ महुरसरणाइए पासाईए।

से णं एगाए पउमवरवेइयाए एगेण य वणसंडेणं सव्वओ समंता संपरिक्खित्ते वेइआवनसंडगाणं पउमाणं वण्णओ भाणिअव्वो, तस्स णं गंगप्पवायकुंडस्स तिदिसिं तओ तिसोवाणपडिरूवगा पं०, तंजहा—पुरत्थिमेणं दाहिणेणं पच्चत्थिमेणं, तेसि णं तिसोवाणपडिरूवगाणं अयमेयारूवे वण्णावासे प०त०—वइरामया नेम्मा रिट्ठामया पइट्ठाणा वेरुलिआमया खंभा सुवण्णरुप्पमया फलया लोहिअक्खमईओ सूईओ वयरामया संधी नानामणिमया आलंबणा आलंबणबाहाओत्ति।

तेसि णं तिसोवाणपडिरूवगाणं पुरओ पत्तेअं पत्तेअं तोरणा पन्नत्ता, ते णं तोरणा णाणा-मणिमया नानामणिमएसु खंभेसु उवणिविट्ठसंनिविट्ठा विविहमुत्तंतरोवइआ विविहतारारूवोवचिआ ईहामिअउसहतुरगणरमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्ता खंभुग्गयवइरवेइआपरिगयाभिरामा विज्जाहरजमलजुअलजंतजुत्ताविव अच्चीसहस्समालणीआ रूवगसहस्सकलिआ भिसमाणा भिब्भिसमाणा चक्खुल्लोअणलेसा सुहफासा सस्सिरीअरूवा घंटावलिचलिअमहुरमणहरसरा पासाईआ, तेसि णं तोरणाणं उवरिं बहवे अट्ठट्ठमंगलगा पं०, तं०—सोत्थिए जाव पडिरूवा। तेसि णं तोरणाणं उवरिं बहवे किण्हचामरज्झया जाव सुक्किल्लचामरज्झया अच्छा सण्हा रुप्पपट्टा वइरामयदण्डा जलयामलगंधिआ सुरम्मा पासाईया ४, तेसि णं तोरणाणं उप्पिं बहवे छत्ताइच्छत्ता पडागाइपडागा घंटाजुअला चामरजुअला उप्पलहत्थगा पउमहत्थगा जाव सयसहस्स- पत्तहत्थगा सव्वरयणामया अच्छा जाव पडिरूवा।

तस्स णं गंगप्पवायकुंडस्स बहुमज्झदेसभाए एत्थ णं महं एगे गंगादीवे नामं दीवे पन्नत्ते अट्ठ जोअणाइं आयामविक्खंभेणं साइरेगाइं पणवीसं जोअणाइं परिक्खेवेणं दो कोसे ऊसिए जलंताओ सव्ववइरामए अच्छे सण्हे, से णं एगाए पउमवरवेइआए एगेण य वनसंडेणं सव्वओ समन्ता संपरिक्खित्ते वण्णओ भाणिअव्वो, गंगादीवस्स णं दीवस्स उप्पिं बहुसमरमणिज्जे भूमिभागे पन्नत्ते, तस्स णं बहुमज्झदेसभाए एत्थ णं महं गंगाए देवीए एगे भवणे पन्नत्ते कोसं आयामेणं अद्धकोसं विक्खंभेणं देसूणगं च कोसं उद्धं उच्चत्तेणं अणेगखंभसयसण्णिविट्ठे जाव बहुमज्झदेसभाए मणिपेढियाए सयणिज्जे, से केणट्ठेणं जाव सासए नामधेज्जे प०तस्स णं गंगप्पवायकुंडस्स दक्खिणिल्लेणं तोरणेणं गंगामहानई पवूढा समाणी उत्तरड्ढभ- रहवासं एज्जेमाणी २ सत्तहिं सलिलासहस्सेहिं आउरेमाणी २ अहे खण्डप्पवायगुहाए वेअड्ढपव्वयं दालइत्ता दाहिणड्ढभरहवासं एज्जेमाणी २ दाहिणड्ढभरहवासस्स बहुमज्झदेसभागं गंता पुरत्थाभिमुही आवत्ता समाणी चोद्दसहिं

सलिलासहस्सेहिं समग्गा अहे जगइं दालइत्ता पुरत्थिमेणं लवणसमुद्दं समप्पेइ, गंगा णं महानई पवहे छ सकोसाइं जोअणाइं विक्खंभेणं अद्धकोसं उव्वेहेणं तयनंतरं च णं मायाए २ परिवद्धमाणी २ मुहे बासट्ठिं जोअणाइं अद्धजोअणं च विक्खंभेणं सकोसं जोअणं उव्वेहेणं उभओ पासिं दोहिं पउमवरवेइआहिं दोहिं वनसंडेहिं संपरिक्खित्ता वेइआवनसंडवण्णओ भाणिअव्वो।

एवं सिंधूएवि नेअव्वं जाव तस्स णं पउमद्दहस्स पच्चत्थिमिल्लेणं तोरणेणं सिंधुआवत्तणकूडे दाहिणाभिमुही सिंधुप्पवायकुंडं सिंधुद्दीवो अट्ठो सो चेव जाव अहेतिमिसगुहाए वेअद्धपव्वयं दालइत्ता पच्चत्थिमाभिमुही आवत्ता समाणा चोद्दससलिला अहे जगइं पच्चत्थिमेणं लवणसमुद्दं जाव समप्पेइ, सेसं तं चेवत्ति। तस्स णं पउमद्दहस्स उत्तरिल्लेणं तोरणेणं रोहिअंसा महानई पवूढा समाणी दोन्नि छावत्तरे जोअणसए [illegible] ूणवीस[illegible] जो[illegible]भिमुही पवाहेणं गंता महया घडमुहपवत्तिएणं मुत्तावलिहारसंठिएणं साइरेगजोअणसइएणं पवाएणं पवडइ, रोहिअंसा जओ पवडइ एत्थ णं महं एगा जिब्भिआ प०, सा णं जिब्भिआ जोअणं आयामेणं अद्धतेरसजोअणाइं विक्खंभेणं कोसं बाहल्लेणं मगरमुहविउट्टसंठाणसंठिआ सव्ववइरामई अच्छा।

रोहिअंसा महानई जहिं पवडई एत्थ णं महं एगे रोहिअंसापवायकुण्डे नाम कुण्डे पन्नत्ते सवीसं जोअणसयं आयामविक्खंभेणं तिन्नि असीए जोअणसए किंचिविसेसूणे परिक्खेवेणं, दसजोअणाइं उव्वेहेणं अच्छे कुंडवण्णओ जाव तोरणा, तस्स णं रोहिअंसावायकुंडस्स बहुमज्झदेसभाए एत्थ णं महं एगो रोहिअंसा नामं दीवे पन्नत्ते सोलस जोअणाइं आयामविक्खंभेणं साइरेगाइं पन्नासं जोयणाइं परिक्खेवेणं दो कोसे ऊसिए जलंताओ सव्वरयणामए अच्छे सण्हे सेसं तं चेव जाव भवणं अट्ठो अ भाणिअव्वोत्ति।

तस्स णं रोहिअंसप्पवायकुंडस्स उत्तरिल्लेणं तोरणेणं रोहिअंसा महानई पवूढा समाणी हेमवयं वासं एज्जेमाणी २ चउद्दसहिं सलिलासहस्सेहिं आपूरेमाणी २ सद्दावइवट्टवेअद्धपव्वयं अद्धजोअणेणं असंपत्ता समाणी पच्चत्थाभिमुही आवत्ता समाणी हेमवयं वासं दुहा विभयमाणी २ अट्ठावीसाए सलिलासहस्सेहिं समग्गा अहे जगइं दालइत्ता पच्चत्थिमेणं लवणसमुद्दं समप्पेइ।

रोहिअंसा णं पवहे अद्धतेरसजोअणाइं विक्खंभेणं कोसं उव्वेहेणं तयनंतरं च णं मायाए २ परिवद्धमाणी २ मुहमूले पणवीसं जोअणसयं विक्खंभेणं अड्ढाइज्जाइं जोअणाइं उव्वेहेणं उभो पासिं दोहि पउमवरवेइआहिं दोहि अ वनसंडेहिं संपरिक्खित्ता।

**वृ.** 'तस्स ण'मित्यादि, तस्य—पद्मद्रहस्य पौरस्त्येन तोरणेन गङ्गा नाम्नी महानदी—सवपरिवारभूतचतुर्दशसहस्रनदीसम्पदुपेतत्वेन स्वतन्त्रतया समुद्रगामित्वेन च प्रकृष्ट नदी, एवं सिन्ध्वादिष्वपि ज्ञेयं, प्रव्यूढा—निर्गता सती पूर्वाभिमुखी पञ्च योजनशतानि पर्वतोपरीत्यर्थः अथवा णमिति प्राग्वत् पर्वते गत्वा गङ्गावर्त्तननाम्नि कूटे, अत्र सामीप्ये सप्तमी वटे गावः सुशेरते इत्यादिवत्, गङ्गावर्त्तनकूटस्याधस्तादावृत्ता सती प्रत्यावृत्येत्यर्थः, पञ्चयोजनशतानि त्रयोविंशत्यधिकानि त्रींश्चैकोनविंशतिभागान् योजनस्य दक्षिणाभिमुखी पर्वतेन गत्वा महान् यो घटस्तन्मुखादिव प्रवृत्ति—निर्गमो यस्य स तथा तेन, अयमर्थः—यथा घटमुखाज्जलौघो निर्यन् खुभिखुभितिशब्दायमानो बलीयांश्च निर्याति तथाऽयमपीति, मुक्तावलीनां—मुक्तासरीणां यो हारस्तत्संस्थितेन

तत्संस्थानेनेत्यर्थः सातिरेकं योजनशतं क्षुद्रहिमवच्छिखरतलादारभ्य दशयोजनोद्वेधप्रपातकुण्ड धाद्धारापातात् मानमस्येति सातिरेकयोजनशतिकस्तेन तथा प्रपातेन-प्रपतज्जलौघेन, अत्र करणे तृतीया, प्रपतति-प्रपातकुण्डं प्राप्नोतीत्यर्थः ।

दक्षिणाभिमुखगमनपञ्चयोजनशतादिसङ्ख्या त्वेवम्-हिमवद्गिरिव्यासात् योजन १०५२ कला १२ रूपात् गङ्गाप्रवाहव्यासे योजन ६ क्रोश १ प्रमिते शोधिते शे, १०४६ क्रोशे तु पादोनं कलापञ्चकं तत्कलाद्वादशकात् शोध्यं ततः शेषाः सप्त सपादाः कलाः, गङ्गाप्रवाहः पर्वतस्य मध्यभागेन पद्मद्रहाद्विनिर्याति तेनास्या दक्षिणाभिमुखगङ्गाप्रवाहोनगिरिव्यासार्द्धस्य गन्तव्यत्वेन गङ्गाव्यासोनो गिरिव्यासः योजन १०४६ कलासपादसप्त ७ रूपोऽर्द्धीक्रियते जातं यथोक्तं योजन ५२३ कला ३, यद्यप्यत्र कलात्रिकं किञ्चिदभ्यधिकार्द्धयुक्तमायाति तथाऽप्यल्पत्वान्न विवक्षितम्

अथ जिह्विकाया अवसरः-'गङ्गामहानई जओ पवडइ इत्थ णं'इत्यादि, सा महानदी यतः स्थानात् प्रपतति अत्रान्तरे महती एका जिह्विका प्रणालापरपर्याया प्रज्ञप्ता, 'सा णं'इत्यादि, सा जिह्विका अर्द्धयोजनमायामेन षट् सक्रोशानि योजनानि विष्कम्भेन गङ्गामूलव्यासस्य मातव्यत्वात् अर्द्धक्रोशं बाहल्येन-पिण्डेन विवृतं-प्रसारितं यन्मकरमुखं-जलचरविशेषमुखं तत्संस्थानसंस्थिता विसेषणस्य परनिपातः प्राग्वत् सर्वात्मना वज्रमयी इत्यादि कण्ठ्यं ।

अथ प्रपातकुण्डस्वरूपमाह-'गंगामहानई'इत्यादि, गङ्गा महानदी यत्र प्रपतति अत्रान्तरे महदेकं गङ्गाप्रपातकुण्डं नाम यथार्थनामकं कुण्डं प्रज्ञप्तं, षष्टिं योजनान्यायामविष्कम्भाभ्यां, अत्र करणविभावनायां 'मूले पन्नासं जोअणवित्थारो ५० उवरिं सट्ठी ६०' इति विशेषोऽस्ति, श्रीउमास्वातिवाचककृतजम्बूद्वीपसमाससूत्रादावपि तथैव, इत्थं च कुण्डस्य यथार्थनामतोपपत्तिरपि भवति, एवमन्येष्वपि यथायोगं ज्ञेयमिति, तथा नवतं-नवत्यधिकं योजनशतं किञ्चिद्विशेषाधिकं परिक्षेपेणे, श्रीजिनभद्रगणिक्षमाश्रमणपादाः स्वोपज्ञक्षेत्रविचारसूत्रे-

॥ १ ॥　"आयामो विक्खंभो सट्ठिं कुंडस्स जोअणा हुंति ।
नउअसयं किंचूणं परिही दसजोअणोगाहो ॥"

इत्यूचुः, तद्वृत्तावपि श्रीमलयगिरिपादास्तथैव, करणरीत्याऽपि तथैवागच्छति, तेन प्रस्तुतसूत्र गम्भीरार्थं बहुश्रुतैर्विचार्यं नास्मादृशां मन्दमेधसां मतिप्रवेश इति, यद्वा प्रस्तुतसूत्रं पद्मवरवेदिकासहितकुण्डपरिधिविवक्षया प्रवृत्तमिति सम्भाव्यते, तेन न दोषः, तत्वं तु केवलि-गम्यमिति, दश योजनान्युद्वेधेन-उण्डत्वेन अच्छं-स्फटिकवद्बहिर्निर्मलप्रदेशं श्लक्ष्णं-श्लक्ष्णपुद-गलनिष्पादितबहिप्रदेशं रजतामयं-रूप्यमयं कूलं यस्य तत्तथा समं न गर्त्तासद्भावतो विषमं तीरवर्त्तिजलापूरितं स्थानं यस्मिन् तत्तथा, वज्रमयाः पाषाणाः भित्तिबन्धनाय यस्य तत् तथा, वज्रमयं तलं यस्य तत्तथा, सुवर्णं-पीतहेम सुब्भं-रूप्यविशेषः रजतं प्रतीतं तन्मय्यो वालुका यस्मिन्, तत्तथा, वैडूर्यमणिमयानि स्फटिकरत्नसम्बन्धिपटलमयानि प्रत्यवतटानि-तटसमी-वर्त्यभ्युन्नतप्रदेशा यस्य तत्तथा, सुखेनावतारो-जलमध्ये प्रवेशनं यस्मिन् तत्तथा सुखेनोत्तारो-जलमध्याद् बहिर्विनिर्गमनं यस्मिन् तत्तथा, ततः पूर्वपदविशेषणसमासः, तथा नानामणिभि सुबद्धं तीर्थं यत्र तत्तथा, अत्र बहुव्रीहावपि क्तान्तस्य परनिपातो मायीदिदर्शनात् प्राकृतशैलीवशाद्वा, तथा वृत्तं-वर्त्तुलं आनुपूर्व्येण-क्रमेण नीचैनीचैस्तरभावरूपेण सुष्ठु-अतिशयेन यो जातो वप्रः-

केदारो जलस्थानं तत्र गम्भीरं—अलब्धस्ताधं जलं यस्मिन् तत्तथा संछन्नानि—जलेनान्तरितानि पत्रबिसमृणालानि यस्मिन् तत्तथा, अत्र बिसमृणालसाहचर्यात् पत्राणि—पद्मिनीपत्राणि द्रष्टव्यानि बिसानि—कन्दाः मृणालानि—पद्मनालानि, बहूनामुत्पलकुमुदनलिनसुभगसौगन्धिकपुण्डरीक-महापुण्डरीकशतपत्रसहस्रपत्रशतसहस्रपत्राणा प्रफुल्लानां—विकस्वराणां केसरैः—किंजल्कैरुप-शोभितं—मृतं, विशेषणस्य व्यस्ततया निपातः प्राकृतत्वात्, षट्पदैः—भ्रमरैः परिभुज्यमानानि कमलानि उपलक्षणमेतत् कुमुदादीनि यस्मिन् तत्तथा, अच्छेन—स्वरूपतः स्फटिकवत् शुद्धेन विमलेन—आगन्तुकमलरहितेन पथ्येन—आरोग्यकरणेन सलिलेन पूर्णं, तथा पडिहत्या—अतिप्रभूताः देशीशब्दोऽयं भ्रमन्तो मत्स्यकच्छपा यत्र तत्तथा, अनेकशकुनिमिथुनकानां प्रविचरितं—इतस्ततो गमनं यत्र तत्तथा ततः पूर्वपदेन विशेषणसमासः, तथा शब्दोन्नतिकं—उन्नतशब्दकं सारसादिजल-चररुतापेक्षया मधुरस्वरं च हंसभ्रमरादिकूजितापेक्षया एवंविधं नादितं—विलपितं यत्र तत्तथा, अत्र च यत् कानिचिद्विशेषणानि प्रस्तुतसूत्रदृश्यमानादर्शापेक्षया व्यस्ततया लिखितानि सन्ति तज्जीवाभिगमवाप्यादिवर्णकसूत्रस्य बहुसमानगमकतया तदनुसारेणेति बोध्यं, एवमन्यत्रापि, 'पासाईए'त्ति, अनेन 'पासाईए' दरिसणिज्जे अभिरूवे पडिरूवे' इति पदचतुष्कं ग्राह्यं, तच्च प्राग्वत्।

अथात्र पद्मवरवेदिकादिवर्णनायाह— 'से णं' इत्यादि, व्यक्तं, अत्र सुखावतारोत्तारौ कथं भवत इत्याह— 'तस्स णं' मित्यादि, तस्य गङ्गाप्रपातकुण्डस्य त्रिदिशि—दिकत्रये वक्ष्यमाणलक्षणं त्रीणि सोपानप्रतिरूपकाणि प्रज्ञप्तानि, एतदव्याख्या प्राग्वत्, शेषं व्यक्तं, 'तेसि णं' मित्यादि, व्यक्तं, गतीवर्णकतुल्यत्वात्, नवरं आलम्बनाः—अवतारोत्तारयोरालम्बनहेतुभूताः अवलम्बनबाहा-वयवाः, अवलम्बनबाहा नाम—द्वयोः पार्श्वयोरवलम्बनाश्रयभूता भित्तयः।

'तेसि णं' मित्यादि, तेषां त्रिसोपानप्रतिरूपकाणां पुरतः प्रत्येकं २ तोरणानि प्रज्ञप्तानि तानि तोरणानि नानामणिमयानि नानामणिमयेषु स्तम्भेषु उपनिविष्टानि—सामीप्येन स्थितानि तानि च कदाचिच्चलानि स्थानभ्रष्टानीत्यर्थः अथवा अपदपतितानि भवेयुरिति सन्निविष्टानि—सम्यग् निश्चलतया अपदपरिहारेण च निविष्टानि, ततो विशेषणसमासः, विविधा—नानाविच्छित्तिकलिता मुक्ताः—मुक्ताफलानि अन्तराशब्दोऽगृहीतवीप्सोऽपि सामर्थ्यादवीप्सां गमयति, अन्तरान्तरा ओअविआ—ओरोपितानि यत्र तानि तथा विविधैस्तारारूपैः—तारिकारूपैरुपचितानि, तोरणेषु हि शोभार्थं तारिका निबध्यन्ते इति प्रतीतं लोकेऽपि, ईहामृगाः—वृकाः ऋषभा—वृषभाः व्याला—भुजगाः रुरवो—मृगविशेषाः शरभा—अष्टपदाः चमरा—आटव्या गावः वनलता—अशोकादिलताः प्रतीताः पद्मलताः—पद्मिन्यः शेषं प्रतीतं, एतासां भक्त्योविच्छित्तयस्ताभिश्चित्राणि,

स्तम्भोदतया—स्तम्भोपरिवर्तिन्या वज्रवेदिकया परिगतानि—परिकरितानि सन्ति यानि अभिरामाणि—अभिरमणीयानि तानि तथा, विद्याधरयोः—विशिष्टशक्तिमत्पुरुषविशेषयोर्यमलं—समश्रेणीकं युगलं—द्वन्द्वं तेनैव यन्त्रेण—सञ्चरिष्णुपुरुषप्रतिमाद्वयरूपेण युक्तानि, आर्षत्वाच्चैवंविधः समासः, अथवा प्राकृतत्वेन तृतीया- लोपात् विद्याधरयमलयुगलेनेवेति, शेषं पूर्ववत्, अर्चिषां—मणिरत्नप्रभाणां सहस्रैर्मालनीयानि— परिवारणीयानि रूपकसहस्रकलितानीति स्पष्टं, भृशं—अत्यर्थं मानं—प्रमाणं येषां तानि तथा, 'भिब्भिसमाण'त्ति 'भासेर्भिस' इत्यनेन भिसादेशे प्रकृष्टार्थप्रत्यये च रूपसिद्धिः, अत्यर्थं देदीप्यमानानि लोकने सति चक्षुषो लेशः—श्लेषो यत्र तानि

त्रिपदो बहुव्रीहि, पदविपर्यासः प्राकृतत्वात्, शेषं सुबोधं, नवरं घण्टावलेर्वा वशेन चलितायां मधुरो मनोहरश्च स्वरो येषु तानि तथा, 'तेसि ण'मित्यादि, अस्य व्याख्या प्राग्वत्।

'तेसि ण'मित्यादि, तेषां तोरणानामुपरि बहवः कृष्णचामरध्वजाः एवं नीलचामरध्वजादयोऽपि वाच्याः, ते च सर्वेऽपि कथंभूता इत्याह—अच्छा—आकाशस्फटिकवदतिनिर्मलाः, श्लक्ष्णपुद्गलस्कन्धनिर्मापिताः, रूप्यमयो वज्रमयस्य दण्डस्योपरि पट्टो येषां ते तथा, वज्रमयो दण्डो रूप्यपट्टमध्यवर्त्ती येषां ते तथा, जलजानामिव जलजकुसुमानां पद्मादीनामिवामलो न तु कुद्रव्यगन्धसम्मिश्रो यो गन्धः स विद्यते येषां ते तथा, जलजानामिव जलजकुसुमानां पद्मादीनामिवामलो न तु कुद्रव्यगन्धसम्मिश्रो यो गन्धः स विद्यते येषां ते जलजालमगन्धिकाः 'अतोऽनेकस्वरा' दितीकप्रत्ययः, त एव सुरम्याः, पासाईआ इत्यादि प्राग्वत्, 'तेसि ण'मित्यादि, अस्य व्याख्या प्राग्वत्। अथ गङ्गाद्वीपवक्तव्यतामाह— 'तस्स गङ्गप्पवाय'इत्यादि, तस्य गङ्गाप्रपातकुण्डस्य बहुमध्यदेशभागेऽत्र महानेको गङ्गादेव्यावासभूतो द्वीपो गङ्गद्वीप इति नाम्ना द्वीपः प्रज्ञप्तः मध्यलोपी समासात् साधुः, अष्टौ योजनान्यायामविष्कम्भेन सातिरेकाणि पञ्चविंशतिं योजनानि परिक्षेपेण द्वौ क्रोशौ यावदुच्छ्रितो जलान्तात्—लपर्यन्तात् सर्वतोवर्त्तिजलस्य जलानावृतस्य क्षेत्रस्य द्वीपव्यवहारात्, शेषं व्यक्तं, 'से ण'मित्यादि, स गङ्गाद्वीप एकया पद्मवरवेदिकया एकेन वनखण्डेन सर्वतः समन्तात् सम्परिक्षिप्तः, वर्णकश्च भणितव्यो जगतीपद्मवरवेदिकावदिति, अथ तत्र यद्यदस्ति तदाह—'गंगादीवस्स ण'मित्यादि, गङ्गाद्वीपस्योपरि बहुसमरमणीयो भूमिभागः प्रज्ञप्तः, तस्य बहुमध्यदेशभागे अत्रान्तरे गङ्गाया देव्या महदेकं भवनं प्रज्ञप्तं, आयामादिविभागादिकं शय्यावर्णकपर्यन्तं सूत्रं सव्याख्यानं श्रीभवनानुसारेण ज्ञेयं, अथ नामान्वर्थं पृच्छति—'से केणट्ठेण'मित्यादि, व्यक्तं, अथ गङ्गा यथा यत्र समुपसर्पतितथाऽऽह—

'तस्स ण'मित्यादि, तस्य गङ्गाप्रपातकुण्डस्य दाक्षिणात्येन तोरणेन प्रव्यूढा—निर्गता सती गङ्गामहानदी उत्तरार्द्धभरतवर्षं इयती २—गच्छन्ती २ सप्तभिः सलिलानां—नदीनां सहस्रैरापूर्यमाणा २—भ्रियमाणा अधः खण्डप्रपातगुहाया वैताढ्यपर्वतं दारयित्वा—भित्वा दक्षिणार्द्धभरतं वर्षं इयती २ दक्षिणार्द्धभरतवर्षस्य बहुमध्यदेशभागं गत्वा पूर्वाभिमुखी आवृत्ता सती चतुर्दशभिः सलिलासहस्र समग्रा—संपूर्णा आपूर्यमाणा इत्यर्थः अधोभागे जगतींजम्बूद्वीपप्राकारं दारयित्वा पूर्वेण लवणसमुद्रं समुपसर्पति—अवतरतीत्यर्थः, अथास्या एव प्रवहमुखयोः पृथुत्वोद्वेधौ दर्शयति, गङ्गा महानदी प्रवहे यतः स्थानात् नदी वोढुं प्रवर्त्तते स प्रवहः पद्मद्रहात्तोरणान्निर्गम इत्यर्थः, तत्र षट् सक्रोशानि योजनानि विष्कम्भेन, तथा क्रोशार्द्धमुद्वेधेन, महानदीनां सर्वत्रोद्वेधस्य स्वव्यासपञ्चाशत्तमभागरूपत्वात्, अस्तीति शेषः। 'तदनन्तरं'मिति पद्मद्रहतोरणीयव्यासादनन्तरं एतेन यावत् क्षेत्रं स व्यासोऽनुवृत्तस्ता- वतक्षेत्रादनन्तरं गङ्गाप्रपातकुण्डनिर्गमादनन्तरमित्यर्थः, एतेन च योऽन्यत्र प्रवहशब्देन मकरमुख- प्रणालनिर्गमः प्रपातकुण्डनिर्गमो वाऽभिहितः स नेति, श्री समवायाङ्गवृत्ती श्रीमलयगिरिपादैश्च बृहत्क्षेत्रसमासवृत्ती पद्मद्रहतोरणनिर्गमपरत्वेनैव व्याख्यानात्, एवमुद्वेधेऽपि ज्ञेयं, मात्रया २—क्रमेण २ प्रतियोजनं समुदितयोरुभयोः पार्श्वयोर्धनुर्दश कवृद्ध्या प्रतिपार्श्वं धनुःपञ्चकवृद्ध्येत्यर्थ परिवर्द्धमाना २ मुखे—समुद्रप्रवेशे द्वाषष्टिं योजनानि अर्द्धयोजनं च विष्कम्भेन, प्रवहमानान्मुखमानस्य दशगुणत्वात्, सक्रोशं योजनमुद्वेधेन सार्द्धद्वाष-

थियोजनप्रमाणमुखव्यासस्य पश्चाशत्तमभागे एतावत एव लाभात्, उभयोः पार्श्वयोः ताभ्यां पद्मवरवेदिकाभ्यां वनखण्डाभ्यां च सम्परिक्षिप्ता गङ्गेत्यर्थः, प्रतियोजनाधनुर्दशकवृद्धिस्त्वेयम्—

मुखव्यासात् प्रवहव्यासेऽपनीतेऽवशिष्टे धनूरूपे कृते सरिदायामेन भक्ते लब्धं इष्टप्रदेशगतयोजसङ्ख्यया गुण्यते यावत् स्यात्तावत्युभयपार्श्वयोर्वृद्धिर्वाच्या, तथाहि—गङ्गायाः प्रवहे व्यासः योजन ६ क्रोश १ मुखे तु योजन ६२ क्रोश २, तत्र मुखव्यासात् प्रवहव्यासेऽपनीते जातं योजन ५६ क्रोश १, योजनानां च क्रोशकरणाय चतुर्भिर्गुणने उपरितनैकक्रोशप्रक्षेपे च जातः २२५ क्रोशे च धनुषां सहस्रद्वयमिति सहस्रद्वयेन गुण्यन्ते जातानि धनूंषि ४५००००, ततः पञ्चचत्वारिंशता सहस्रैर्भज्यन्ते लब्धानि १० धनूंषि एकेन गुण्यन्ते जातानि १०, एतावती च समुदितयोरुभयोः पार्श्वयोः प्रवहादेकस्मिन् योजने गते जलवृद्धिः, अथ मूलाद्योजनद्वयान्ते यदा वृद्धिर्ज्ञातुमिष्यते तदा दश धनूंषि द्विकेन गुण्यन्ते जातानि २० एतावती प्रवहादुभयपार्श्वयोज नद्विकान्ते वृद्धिः स्यात्, अस्यार्द्धे १०, एतदावत्येकपार्श्वे वृद्धि, एवं सर्वत्र भाव्यं।

अथ गङ्गायामादीन्यन्यत्रावतारयति—'एवं सिंधु'इत्यादि, एवं सिन्ध्वा अपि स्वरूपं नेतव्यं यावत्तस्य पद्मद्रहस्य पाश्चात्येन तोरणेन सिन्धुमहानदी निर्गता सती पश्चिमाभिमुखी पञ्चयोजन-शतानि पर्वतेन गत्वा सिन्ध्वावर्त्तनकूटे आवृत्ता सती पञ्चयोजनशतानि त्रयोविंशत्यधिकानि त्रींश्चैकोन- विंशतिभागान् दक्षिणाभिमुखी पर्वतेन गत्वा महता घटमुखप्रवृत्तिकेन यावत्प्रपातेन प्रपतति, सिन्धुमहानदी यतः प्रपतति अत्र महती जिह्विका वाच्या, सिन्धुमहानदी यत्र प्रपतति तत्र सिन्धुप्र- पातकुण्डं वाच्यं, तन्मध्ये सिन्धुद्वीपो वाच्योऽर्थ स एव यथा गङ्गाद्वीपप्रमाणि गङ्गाद्वीपवर्णाभानि पद्मानि तथा सिन्धुद्वीपप्रमाणि सिन्धुद्वीपवर्णाभानि पद्मानि सिन्धुद्वीप इत्युच्यते, अत्र यावत्पर्यन्तं सूत्रं वाच्यं तथाह—

यावदधस्तमिस्रगुहाया इत्यादि, अत्र यावत्करणादिदं—'तस्स णं सिन्धुप्पवायकुंडस्स दक्खिणिल्लेणं तोरणेणं सिन्धुमहानई पवूढा समाणी उत्तरद्धभरहवासं एज्जेमाणी २ सलिलासहस्सेहिं आपूरेमाणी २' इति संग्रहः, अधस्तमिस्रगुहाया वैताढ्यपर्वतं दारयित्वा 'देशदर्शनाद्देशस्मरण'मिति 'दाहिणद्धभरहवासस्स बहुमज्झदेसभागं गंता' इति पदानि बोध्यानि, पश्चिमाभिमुखी आवृत्ता सती चतुर्दशभि सलिलासहस्रैः समग्रा—पूर्णा जगतीमधो दारयित्वा पश्चिमायां लवणसमुद्रं समुप-सर्पति, शेषं—उक्तातिरिक्तं प्रवहमुखमानादि तदेव -गङ्गामानसमानमेव ज्ञेयम्,

अथ पद्मद्रहनिर्गततृतीयनदीस्वरूपमाह— 'तस्स णं० व्यक्तं नवरं द्वे षटसप्तत्यधिके योजनशते षट् च एकोनविंशतिभागान् योजनस्य एतावतीं भुवं उत्तराभिमुखी—हैमवतक्षेत्राभिमुखी पर्वतेन गत्वा, अत्रोपपत्ति—हिमवदव्या- सात्द्रहव्यासेऽपनीते शेषहिमवदव्यासेऽर्द्धीकृते एतावत एव लाभात्, ननु गङ्गायां दक्षिणाभिमुखं गिरिगमनं पञ्च योजनशतानि २३ योजनानि कलात्रिकं च समधिकमिति, अस्यास्तु षट्सप्तत्यधिके द्वे शते षट् च कलाः किमित्येतावदन्तरं ? , गङ्गायाः गिरिमध्यवर्त्तिना पूर्वदिक्तोरणेन निर्गतायाः पञ्चशतयोजनपूर्वाभिमुखगमनानन्तरं दक्षिणादिग्गा-मिन्याः स्वव्यासरहितगिरिव्यासा-र्द्धगामित्वं, एवं सिन्ध्वा अपि पञ्चशतयोजनपश्चिमाभिमुखगम-नादनु, अस्यास्तु उत्तरदिक्तोरणेन निर्गतायाः उत्तरगामिन्या द्रहव्यासशुद्धगिरिव्यासार्द्धगामित्व-मिति भेदः।

अथास्या जिह्विकामाह–'रोहिअं' इत्यादि, व्यक्तं, नवरं आयामे योजनंविष्कम्भमानेऽर्द्धत्रयोदशानि योजनानि–सार्द्धद्वादशयोजनानि बाहल्ये क्रोशं, गङ्गाजिह्विकाया अस्या द्विगुणत्वात्। अथ कुण्डस्वरूपमाह–'रोहिअंसा' इत्यादि, प्रायः प्रकटार्थं, परमायामविष्कम्भयोर्विंशत्यधिकं, गङ्गाप्रपातकुण्डादस्य द्विगुणत्वात्, अथात्र द्वीपमाह–'तस्स ण' मित्यादि, प्रकटार्थं, 'से केणट्ठेणं भंते! एवं वुच्चइ रोहिअंसादीवे २' इत्याद्यभिलापेन ज्ञेयः, सम्प्रत्यस्या येन तोरणेन निर्गमो यस्य च क्षेत्रस्य स्पर्शना यावांश्च नदीपरिवारो यत्र स संक्रमस्तथाऽऽह–'तस्स ण' मित्यादि, तस्य–रोहितांशाप्रपातकुण्डस्य औत्तराहेण तोरणेन रोहितांशा महानदी प्रव्यूढा–निर्गता सती हैमवतं वर्षं इयती २–गच्छन्ती २ चतुर्दशभिः सलिलासहस्रैः आपूर्यमाणा २ शब्दापातिनामानं वृत्तवैताढ्यपर्वतं अर्द्धयोजनेनासम्प्राप्ता सती पश्चिमाभिमुखी आवृत्ता सती हैमवन्तं वर्षं द्विधा विभजन्ती २ अष्टाविंशत्या सलिलासहस्रैः समग्रा–परिपूर्णा जगतीं अधो दारयित्वा पश्चिमायां लवणसमुद्रं प्रविशति, अस्या एव मूलविस्ताराद्याह–

'रोहिअंसा ण' मित्यादि, रोहितांशा प्रवहे–मूलेऽर्द्धत्रयोदशानि योजनानि विष्कम्भेन, प्राच्यक्षेत्रनदीतो द्विगुणविस्तारकत्वात्, क्रोशमुद्वेधेन प्रवहव्यासपञ्चाशत्तमभागरूपत्वात्, तदनन्तरं मात्रया २–क्रमेण २ प्रतियोजनं समुदितयोरुभयोः पार्श्वयोर्धनुर्विंशत्या वृद्ध्या प्रतिपार्श्वं धनुर्दशकवृद्ध्येत्यर्थः परिवर्द्धमाना २ मुखमूले–समुद्रप्रवेशे पंचविंशतं योजनशतं विष्कम्भेन, प्रवहव्यासाद्दशगुणत्वात्, अर्द्धतृतीयानि योजनानि उद्वेधेन मुखव्यासपञ्चाशत्तमभागरूपत्वात्, शेषं प्राग्वत्। अथ हिमवति कूटान्याह–

**मू. (१३०)** *चुल्लहिमवंते णं भंते! वासहरपव्वए कइ कूडा पं० ?, गोय० ! इक्कारस कूडा पं०, तं० –सिद्धाययणकूडे १ चुल्लहिमवन्तकूडे २ भरहकूडे ३ इलादेवीकूडे ४ गंगादेवीकूडे ५ सिरिकूडे ६ रोहिअंसकूडे ७ सिन्धुदेवीकूडे ८ सुरदेवीकूडे ९ हेमवयकूडे १० वेसमणकूडे ११*

*कहि णं भंते! चुल्लहिमवन्ते वासहरपव्वए सिद्धाययणकूडे नामं कूडे पं० ?, गोअमा ! पुरच्छिमलवणसमुद्दस्स पच्चत्थिमेणं चुल्लहिमवंतकूडस्स पुरत्थिमेणं एत्थ णं सिद्धाययणकूडे नामं कूडे पन्नत्ते, पंच जोअणसयाइं उद्धं उच्चत्तेणं मूले पंच जोअणसयाइं विक्खंभेणं मज्झे तिन्नि अ पन्नत्तरे जोअणसए विक्खंभेणं उप्पिं अड्ढाइज्जे जोअणसए विक्खंभेणं मूले एगं जोअणसहस्सं पंच य एगासीए जोअणसए किंचिविसेसाहिए परिक्खेवेणं मज्झे एगं जोअणसहस्सं एगं च छलसीअं जोअणसयं किंचिविसेसूणं परिक्खेवेणं उप्पिं सत्तइक्कानउए जोअणसए किंचिविसेसूणे परिक्खेवेणं, मूले विच्छिण्णे मज्झे संखित्ते उप्पिं तणुए गोपुच्छसंठाणसंठिए सव्वरयणामए अच्छे। से णं एगाए पउमवरवेइआए एगेण य वनसंडेणं सव्वओ समंता संपरिक्खित्ते सिद्धाययणस्स कूडस्स णं उप्पिं बहुसमरमणिज्जे भूमिभागे प० जाव तस्स णं बहुमज्झदेसभाए एत्थ णं महं एगे सिद्धाययणे प० पन्नासं जोअणाइं आयामेणं पणवीसं जोअणाइं विक्खंभेणं छत्तीसं जोअणाइं उद्धं उच्चत्तेणं जाव जिनपडिमावण्णओ भा०*

*कहि णं भंते! चुल्लहिमवंते वासहरपव्वए चुल्लहिमवंतकूडे नामं कूडे पन्नत्ते ?, गो० ! भरहकूडस्स पुरत्थिमेणं सिद्धाययणकूडस्स पच्चत्थिमेणं, एत्थ णं चुल्लहिमवंते वासहरपव्वए चुल्लहिमवंतकूडे नामं कूडे पन्नत्ते, एवं जो चेव सिद्धाययणकूडस्स उच्चत्तविक्खंभपरिक्खेवो*

*जाव बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महं एगे पासायवडेंसए पन्नत्ते बासट्ठिं जोअणाइं अद्धजोअणं च उद्धत्तेणं इक्कतीसं जोअणाइं कोसं च विक्खंभेणं अब्भुग्गय-मूसिअपहसिए विव विविहमणिरयणभत्तिचित्ते वाउद्धअविजयवेजयंतीपडागच्छत्ताइच्छत्तकलिए तुंगे गगनतलमभिलंघमाणसिहरे जालंतररयणपंजरुम्मीलिएव्व मणिरयणथूभिआए विअसिअसयवत्तपुंडरीअतिलयरयणद्धचंदचित्ते नानामणिमयदामालंकिए अंतो बहिं च सण्ह-वइरतवणिज्जरुइलवालुगापत्थडे सुहफासे सस्सिरीअरूवे पासाईए जाव पडिरूवे।*

*तस्स णं पासायवडेंसगस्स अंतो बहुसमरमणिज्जे भूमिभागे पं० जाव सीहासनं सपरिवारं, से केणट्ठेणं भंते ! एवं वुच्चइ चुल्लहिमंतकूडे २ ?, गो० ! चुल्लहिमवंते नामं देवे महिड्ढीए जाव परिवसइ, कहि णं भंते ! चुल्लहिमवंतगिरिकुमारस्स देवस्स चुल्लहिमवंता नामं रायहाणी पं० गो० ! चुल्लहिमवंतकूडस्स दक्खिणेणं तिरियमसंखेज्जे दीवसमुद्दे वीईवइत्ता अन्नं जम्बुद्दीवं २ दक्खिणेणं बारस जोअणसहस्साइं ओगाहित्ता इत्थ णं चुल्लहिमवंतस्स गिरिकुमारस्स देवस्स चुल्लहिमवंता नामं रायहाणी पं०, जयणसहस्साइं आयामविक्खंभेणं, एवं विजयरायहाणीसरिसा भाणिअव्वा। एवं अवसेसाणवि कूडाणं वत्तव्वया नेअव्वा, आयामविक्खंभपरिक्खेवपासायदेवयाओ सीहासणपरिवारो अट्ठो अ देवाण य देवीण य रायहाणीओ नेअव्वाओ, चउसु देवा चुल्लहिमवंत १ भरह २ हेमवय ३ वेसमणकूडेसु ४, सेसेसु देवयाओ।*

*से केणट्ठेणं भंते ! एवं वुच्चइ चुल्लहिमवंते वासहरपव्वए ? २, गो० ! महाहिमवंतवास-हरपव्वयं पणिहाय आयामुच्चत्तुव्वेहविक्खंभपरिक्खेवं पडुच्च ईसिं खुड्डतराए चेव हस्सतराए चेव नीअतराए चेव, चुल्लहिमवंते अ इत्थ देवे महिड्ढीए जाव पलिओवमट्ठिइए परिवसइ, से एएणट्ठेणं गो० ! एवं वुच्चइ— चुल्लहिमवंते वासहरपव्वए २, अदुत्तरं च णं गो० ! चुल्लहिमवंतस्स सासए नामधेज्जे पन्नत्ते जं न कयाइ नासि।*

**वृ.** 'चुल्लहिमवंते ण' मित्यादि, व्यक्तं, नवरं सिद्धायतनकूटं क्षुल्लहिमवदिरिकुमारदेवकूटं भरताधिपदेवकूटं, इलादेवीसुरादेवीकूटे तु षट्पञ्चाशददिक्कुमारी देवीवर्गमध्यगतदेवकूटे, गङ्गादेवीकूटं श्रीदेवीकूटं रोहितांशादेवीकूटं सिन्धुदेवीकूटं हैमवतवर्षेशसुरकूटं वैश्रमणलोकपालकूटं

अथ तेषामेव स्थानादिस्वरूपमाह— 'कहि ण' मित्यादि, क्व भदंत ! क्षुल्लहिमद्वर्षधरपर्वते सिद्धायतनकूटंनाम कूटं प्रज्ञप्तं ?, 'गौतमे' त्यादि निर्वचनसूत्रं व्यक्तं, नवरं पञ्चयोजनशतान्युच्चत्वेन मूले पञ्चयोजनशतानि विष्कम्भेन मध्ये त्रीणि च योजनशतानि पञ्चसप्तानि—पञ्चसप्तत्यधिकानि विष्कम्भेन उपरि अर्द्धतृतयानि योजनशतानि विष्कम्भेन मूले एकं योजनसहस्रं पञ्च एका-शीत्यधिकानि योजनशतानि किञ्चिद्विशेषाधिकानि किंचिदधिकानीत्यर्थः, मध्ये एकं योजनसहस्रं एकं षडशीत्यधिकं योजनशतं किञ्चिद्विशेषोनं किंचिदूनमित्यर्थः, अयं भावः—एकं सहस्रमेकं शतं पञ्चाशीतिर्योजनानि पूर्णानि शेषं च क्रोशत्रिकं धनुषामष्टशतानि त्रयोविंशत्यधिकानि इति किंचित्षडशीतितमं योजनं विवक्षितमिति, तथा उपरि सप्त योजनशतानि एकनवत्यधिकानि किंचिदूनानि परिक्षेपेण, अत्राप्ययं भावः—सप्त शतानि नवतिर्योजनानि पूर्णानि, शेषं क्रोशद्विकं धनुषां सप्त शतानि पंचविंशत्यधिकानीति किंचिद्विशेषोनं एकनवतितमं योजनं विवक्षितं, परिक्षेपेणेति सर्वत्र ग्राह्यं, शेषं स्पष्टं ॥

अथात्र पद्मवरवेदिकाद्याह– 'से ण'मित्यादि प्रकटं, अत्र यदस्ति तत्कथनायोपक्रमते–'सिद्धाययण'मित्यादि, निगद-सिद्धं, नवरं प्रथमगमपदेन वैताढ्यगतसिद्धायतनकूटस्येवात्र वर्णको ग्राह्यः, द्वितीयेन तदग- तसिद्धायतनादिवर्णक इति ॥ अथात्रैव क्षुद्रहिमवदिरिकूटवक्तव्यमाह– क्व भदन्त ! क्षुद्रहिमवति वर्षधरपर्वते क्षुद्रहिमवत्कूटं नाम कूटं प्रज्ञप्तम् ?, 'गौतमे'त्यादि उत्तरसूत्रं प्राग्वत्, नवरं 'एवं जो चेवे'त्यादि अतिदेशसूत्रे 'एव'मित्युक्तप्रकारेण य एव सिद्धायतनकूट- स्योच्चत्वविष्कम्भाभ्यां युक्त– परिक्षेपः उच्चत्वविष्कम्भपरिक्षेपः, मध्यपदलोपी समासः, स एव इहापि हिमवत्कूटे बोध्य इत्यर्थः, इदं च वचनं उपलक्षणभूतं तेन पद्मवरवेदिकादिवर्णनं समभूमिभाग- वर्णनं च ज्ञेयं, कियत्पर्यन्तमित्याह–

यावद्बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे अत्रान्तरे महानेकः प्रासादावतंसकः प्रज्ञप्तः, प्रासादानां–आयामाद्द्विगुणोच्छ्रितवास्तुविशेषाणामवतंसक इव–शेखरक इव प्रासादावतंसकः प्रधानप्रासाद इत्यर्थः, स च प्रासादो द्वाषष्टिं योजनान्यर्द्धयोजनं च उच्चत्वेन एकत्रिंशद् योजनानि क्रोशं च विष्कम्भेन समचतुरस्रत्वादस्यायामचिन्ता सूत्रकृता न कृता, तत्र हेतुर्वैताढ्यकूटगतप्रासादाधिकारे निरूपित इति ततो ज्ञेयः, कीदृश इत्याह–अभ्युद्गता–आभिमुख्येन सर्वतो विनिर्गता उत्सृता–प्रबलतया सर्वासु दिक्षु प्रसृता यद्वा अभ्रे–आकाशे उद्गता उत्सृता–प्रबलतया सर्वतस्तिर्यक् प्रसृता एवंविधा या प्रभा तया सित इव–बद्ध इव तिष्ठतीति गम्यते, अन्यथा कथमिव सोऽत्युच्चैर्निरालम्बस्तिष्ठतीति भावः, अत्र हि उत्प्रेक्षया इदं सूचितं भवति–ऊर्ध्वमधस्तिर्यक् आयततया याः प्रासादप्रभास्ताः किल रज्जवस्ताभिर्बद्ध इति, यदिवा प्रबलश्वेतप्रभापटलतया प्रहसित इव–प्रकर्षेण हसित इवेति, विविधा–अनेकप्रकारा ये मणयो रत्नानि च, मणिरत्नयोर्भेदश्चात्र प्राग्वत्, तेषां भक्तिभिः–विच्छित्तिभिश्चित्रो–नानारूप आश्चर्यवान् वा, वातोद्धूता–वायुकम्पिता विजयः–अभ्युदयस्तत्संसूचिका वैजयन्तीनाम्न्यो याः पताकाः अथवा विजया इति वैजयन्तीनां पार्श्वकणिका उच्यन्ते तत्प्रधाना वैजयन्त्यः–पताकास्ता एव विजयवर्जिता वैजयन्त्यः छत्रातिच्छत्राणि–उपर्युपरिस्थितान्यातपत्राणि तैः कलितः तुङ्ग उच्चैस्त्वेन सार्द्धद्वाषष्टियोजनप्रमाणत्वात् ।

अत एव गगनतलमभिलङ्घयद्–अनुलिखच्छिखरं यस्य स तथा, जालानि–जालकानि गृहभित्तिषु लोके यानि प्रतीतानि तदन्तरेषु विशिष्टशोभानिमित्तं रत्नानि रचना वा यस्मिन् स तथा, सूत्रे चात्र विभक्तिलोपः प्राकृतत्वात्, पञ्जरादुन्मीलित इव–बहिष्कृत इव, यथा किमपि वस्तु वंशादिमयप्रच्छादनविशेषादहिकृतमत्यन्तमविनष्टच्छायं भवति एवं सोऽपि प्रासादावतंसक इति भावः, अथवा जालान्तरगतरत्नपञ्जरैः–रत्नसमुदायविशेषैः उन्मीलित इव उन्मिषितलोचन इवेत्यर्थः, माणकनकमयस्तूपिकाक इति प्रतीतं, विकसितानि–विकस्वराणि शतपत्राणि पुण्डरीकाणि च–कमलविशेषाः द्वारादिषु तैश्चित्रो–नानारूप आश्चर्यवान् वा, नानामणिमयदामालङ्कृत इति व्यक्तं, अन्तर्बहिश्च श्लक्ष्णो–मसृणः स्निग्ध इत्यर्थः, तपनीयस्य–रक्तसुवर्णस्य रुचिरा या वालुका–कणिकास्तासां प्रस्तटः–प्रतरः प्राङ्गणेषु यस्य स तथा, शेषं पूर्ववत्, 'तस्स ण'मित्यादि, व्यक्तं, अथास्य नामान्वर्थं व्याचिख्यासुराह–

'से केणट्ठेण'मित्यादि, अथ केनार्थेन भदन्त ! एवमुच्यते–क्षुद्रहिमवत्कूटं २ ?, गौतम !

क्षुद्रहिमवन्नामा देवो महर्द्धिको यावत् अत्र परिवसति तेन 'क्षुद्रहिमवत्कूट'मिति क्षुद्रहिमवत्कूटं, अत्र च सूत्रेऽदृष्टमपि 'से तेणट्ठेणं चुल्लहिमवंतकूडे २' इत्येतद्रूपं सूत्रं बोध्यं, अन्वर्थोपपत्तिश्चात्र दाक्षिणार्द्धभरतकूटस्थेव ज्ञेयेति। अथास्य राजधानीवक्तव्यमाह—'कहि ण'मित्यादि, उत्तानार्थं, क्षुल्लहिमवती क्षुद्रहिमवती वा राजधानी 'एव'मित्युक्तप्रकारेण यथौचित्येनेति, एवमिति—क्षुद्रहिमवत्कूटन्यायेनावशेषाणामपि भरतकूटादीनां वक्तव्यता नेतव्या, आयाम- विष्कम्भपरिक्षेपाः अत्रोपलक्षणादुच्चत्वमपि तथा प्रासादास्तथैव, देवताः अत्र देवताशब्दो देवजाति- वाची तेन भरतादयो देवा इलादेवीप्रमुखा देव्यश्च ततो द्वन्द्वे ताः, तथा सिंहासनं परिवारोऽर्थश्च स्वस्वनामसम्बन्धी तथा देवानां देवीनां च राजधान्यो नेतव्या इति. चतुर्षु क्षुल्लहिमवदादिकूटेषु देवा अधिपाः शेषेषु देवता—देव्यः, तत्र इलादेवीसुरादेव्यौ षटपञ्चाशद्दिक्कुमारीगणान्तर्वर्त्तिन्यौ ज्ञेये एषांच कूटानां व्यवस्था पूर्वं २ पर्वस्यामुत्तरमुत्तरमपरस्यामिति, अथास्य क्षुद्रहिमवत्त्वे कारणमाह-

'से केणट्ठेण'मित्यादि, अथ केनार्थेन भदन्त! एवमुच्यते-क्षुल्लहिमवद्वर्षधरपर्वतः २?, गौतम! महाहिमवद्वर्षधरपर्वतं प्रणिधाय प्रतीत्याश्रित्येत्यर्थः आयामोच्चत्वोद्वेधविष्कम्भपरिक्षेपं, अत्र समाहारद्वन्द्वस्तेन सूत्रे एकवचनं, प्रतीत्य—अपेक्ष्य ईषत्क्षुद्रतरक एव—लघुतरक एव यथासम्भवं योजनया विधेयस्तेनायामाद्यपेक्षया ह्रस्वतरक एवोद्वेधापेक्षया नीचतरक एवोच्चत्वापेक्षया, अन्यच्च क्षुद्रहिमवांश्चात्र देवो महर्द्धिको यावत्पल्योपमस्थितिकः परिवसति, शेषं प्राग्वत्।

अथानेन वर्षधरेण विभक्तस्य हैमवतक्षेत्रस्य वक्तव्यमाह—

**मू. (१३१)** *कहि णं भंते! जम्बुद्दीवे दीवे हेमवए नामं वासे पं० ?, गो० ! महाहिमवंतस्स वासहरपव्वयस्स दक्खिणेणं चुल्लहिमवंतस्स वासहरपव्वयस्स उत्तरेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं एत्थ णं जंबुद्दीवे दीवे हेमवए नामं वासे प०।*

*—पाईणपडीणायए उदीणदाहिणविच्छिण्णे पलिअंकसंठाणसंठिए दुहा लवणसमुद्दं पुट्ठे पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठे, पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठे, दोन्नि जोअणसहस्साइं एगं च पंचुत्तरं जोअणसयं पंच य एगूणवीसइभाए जोअणस्स विक्खंभेणं। तस्स बाहा पुरत्थिमपच्चत्थिमेणं छज्जोअणसहस्साइं सत्त य पणवण्णे जोअणसए तिन्नि अ एगूणवीसइभाए जोअणस्स आयामेणं, तस्स जीवा उत्तरेणं पाईणपडीणायया दुहओ लवणसमुद्दं पुट्ठा पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठा पच्चत्थिमिल्लाए जाव पुट्ठा सत्ततीसं जोअणसहस्साइं छच्च चउवत्तरे जोअणसए सोलस य एगूणवीसइभाए जोअणस्स किंचिविसेसूणे आयामेणं।*

*तस्स धणुं दाहिणेणं अट्ठतीसं जोअणसहस्साइं सत्त य चत्ताले जोअणसए दस य एगूणवीसइभाए जोअणस्स परिक्खेवेणं, हेमवयस्स णं भंते! वासस्स केरिसए आयारभावपडोआरे पन्नत्ते? गो० ! बहुसमरमणिज्जे भूमिभागे प० एवं तइअसमाणुभावो नेअव्वोत्ति।*

**वृ.** 'कहि ण'मित्यादि, क्व भदन्त! जम्बूद्वीपे द्वीपे हैमवतं नाम वर्षं प्रज्ञप्तम्?, गौतम! महाहिमवतो वर्षधरपर्वतस्य 'दक्खिणेणे'त्यादि, व्यक्तं, अत्रान्तरे जम्बूद्वीपे द्वीपे हैमवतनाम वर्षं प्रज्ञप्तमित्यादि सर्वं प्राग्वत्, नवरं पल्यङ्कसंस्थानसंस्थितं आयतचतुरस्रत्वात्, तथा द्वे योजनसहस्रे एकं च पञ्चोत्तरं योजनशतं पञ्च चैकोनविंशतिभागान् योजनस्य यावद्विष्कम्भेन, क्षुद्रहिमवद्गिरिविष्कम्भादस्य द्विगुणविष्कम्भ इत्यर्थः, अथास्य बाहाद्याह—

'तस्स बाहा'इत्यादि, व्यक्तं, 'तस्स जीवा उत्तरेण'मित्यादि, प्राग्वत्, सप्तत्रिंशद् योजनसहस्राणि षट् चतुःसप्ततानि योजनशतानि षोडश कलाः किंचिदूना आयामेनेति, 'तस्स धनु'मित्यादि, तस्य धनुःपृष्ठमष्टत्रिंशद्योजनसहस्राणि सप्त च चत्वारिंशानि चत्वारिंशदधिकानि योजनशतानि दश च एकोनविंशतिभागान् योजनस्य परिक्षेपेणेति, अथ कीदृशमस्य स्वरूपमित्याह–

'हेमवयस्स ण'मित्यादि, व्याख्यातप्रायं, नवरं 'एव'मिति उक्तप्रकारेण तृतीयसमा–सुषमदुष्षमारकस्तस्यानुभावः–स्वभावः स्वरूपमितियावत् नेतव्यः–स्मृतिपथं प्रापणीय इत्यर्थः। अथात्र क्षेत्रविभागकारिगिरिस्वरूपं निर्दिशति–

*मू. (१३२) कहि णं भंते! हेमवए वासे सद्दावई नामं वट्टवेअड्ढपव्वए प०गो० ! रोहिआए महानईए पच्चत्थिमेणं रोहिअंसाए महानईए पुरत्थिमेणं हेमवयवासस्स बहुमज्झदेसभाए, एत्थ णं सद्दावई नामं वट्टवेअड्ढपव्वए प०, एगं जोअणसहस्सं उद्धं उच्चत्तेणं अड्ढाइज्जाइं जोअणसयाइं उव्वेहेणं सव्वत्थसमे पल्लगसंठाणसंठिए एगं जोअणस० आयामविक्खंभेणं तिन्नि जोअणस० एगं च बावट्ठं जोअणसयं किंचिविसेसाहिअं परिक्खेवेणं पन्नत्ते, सव्वरयणामए अच्छे।*

*से णं एगाए पउमवरवेइआए एगेण य वनसंडेणं सव्वओ समंता संपरिक्खित्ते, वेइआवनसंडवण्णओ भाणिअव्वो, सद्दावइस्स णं वट्टवेअड्ढपव्वयस्स उवरिं बहुसमरमणिज्जे भूमिभागे पन्नत्ते, तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महं एगे पासायवडेंसए पन्नत्ते बावट्ठिं जोअणाइं अद्धजोयणं च उद्धं उच्चत्तेणं इक्कतीसं जोअणाइं कोसं च आयामविक्खंभेणं जाव सीहासणं सपरिवारं। से केणट्ठेणं भंते! एवं वुच्चइ सद्दावई वट्टवेयड्ढपव्वए? २, गोअमा! सद्दावइवट्टवेअड्ढपव्वए णं खुद्दा खुड्डिआसु बावीसु जाव बिलपंतिआसु बहवे उप्पलाइं पउमाइं सद्दावइप्पभाइं सद्दावइवण्णाइं सद्दावतिवण्णाभाइं सद्दावई अ इत्थ देवे महिद्धीए जाव महानुभावे पलिओवमट्ठिइए परिवसइत्ति, से णं तत्थ चउण्हं सामानिअसाहस्सीणं जाव रायहाणी मंदरस्स पव्वयस्स दाहिणेणं अन्नंमि जम्बुद्दीवे दीवे०।*

वृ. 'कहि णं भंते'इत्यादि, क्व भदन्त ! हेमवतवर्षे शब्दापतीनाम्ना वृत्तवैताढ्यपर्वतः प्रज्ञप्तः, वैताढ्यान्वर्थस्तु प्रागुक्तः, असौ च वृत्ताकारो न भरतादिक्षेत्रवर्तिवैताढ्यपर्वतवत् पूर्वापरायतस्तेन वृत्तवैताढ्य इत्युच्यते, अत एव एतत्कृतः क्षेत्रविभागः पूर्वतोऽपरतश्च भवति, यथा पूर्वहैमवतमपरहैमवतमिति, आह–पञ्चकलाधिकैकविंशतिशतयोजनप्रमाणविस्तारस्य हैमवतस्य मध्यवर्ती योजनसहस्रमान एष गिरिः कथं क्षेत्रं द्विधा विभजति ?, उच्यते, प्रस्तुतक्षेत्रव्यासो हि उभयोः पार्श्वयोः रोहितारोहितांशाभ्यां नदीभ्यां रुद्धः मध्यतस्त्वनेन, अथ नदीरुद्धक्षेत्रं वर्जयित्वाऽवशिष्टक्षेत्रमसौ द्विधा करोतीत्यस्मिन्नन्वर्थवती वैताढ्यशब्दप्रवृत्तिरिति, एवं शेषेष्वपि वृत्तवैताढ्येषु स्वस्वक्षेत्रस्वस्वनदीनामभिलापेन भाव्यं, दिग्विभागनियमनं सुलभमिति न व्याख्यायते, एकं योजनसहस्रमूर्ध्वोच्चत्वेन अर्द्धतृतीयानि योजनशतान्युद्वेधेन सर्वत्र समः–तुल्योऽधोमध्योर्ध्वदेशेषु सहस्रसहस्रविस्तारकत्वात्, अत एव पल्यङ्कसंस्थानसंस्थितः, पल्यङ्कश्च–ललाटदेशप्रसिद्धो वंशदलेन निर्मापितो धान्याधारकोष्ठकः, एकं योजनसहस्रमायामविष्कम्भाभ्यां त्रीणि योजनसहस्राणि एकं च द्वाषष्ट्यधिकं योजनशतं किञ्चिद्विशेषेण करणवशादागतेन सूत्रानिर्दिष्टेन राशिना अधिकं परिक्षेपेण प्रज्ञप्तं, सर्वात्मना रत्नमयः, कैंचन रजतमयान् वृत्तवैताढ्यानाहुः

परं तेषामनेन ग्रन्थेन सह विरुद्धत्वमिति । अथात्र पद्मवरवेदिकाद्याह–

'से ण'मित्यादि, व्यक्तं, 'सद्दावइस्स ण'मित्यादि, व्यक्तं ।। अथ नामार्थं निरूपयन्नाह– 'से केणट्ठेणं भंते !' इत्यादि, प्रागुक्तऋषभकूटप्रकरणवद् व्याख्येयं, नवरं ऋषभकूटप्रकरणे ऋषभकूटप्रभैः ऋषभकूटवर्णैरुत्पलादिभिऋषभकूटनामनिरुक्तिर्दर्शिता अत्र तु शब्दापातिप्रभैः शब्दापातिवर्णैः उत्पलादिभिः शब्दापातिवृत्तवैताढयनामनिरुक्तर्द्रष्टव्या, शब्दापाती चात्र देवो महर्द्धिको यावन्महानुभावः पल्योपमस्थितिकः परिवसति, अथ शब्दापातिदेवमेव विशिनष्टि– से णं तत्थ'इत्यादि, स–शब्दापाती देवस्तत्र–प्रस्तुतगिरौ चतुर्णां सामानिकसहस्राणां यावत्पदात् विजयदेववर्णकसूत्रं सर्वमपि ज्ञेयं व्याख्येयं च, कियत्पर्यन्तमित्याह–राजधानी मन्दरस्य दक्षिणस्यामन्यस्मिन् जम्बूद्वीपे द्वीपे इति, जम्बूद्वीपप्रज्ञप्त्यादर्शेषु एतत्सूत्रदृष्टोऽपि 'पलिओवमठिई परिवसती'त्ययं सूत्रादेशः पूर्वसूत्रे यद्योजितस्तद्बहुषु विजयदेवप्रकरणादिसूत्रेष्वित्यमेव दृष्टत्वात्, बहुग्रन्थसाम्यत्वेन क्वचिदादर्शवैगुण्यमुदाव्यान्यथा योजनं बहुश्रुतसम्मतमेवास्ति इत्यलं विस्तरेण, ननु अस्य शब्दापातिवृत्तवैताढयस्य क्षेत्रविचारादिग्रन्थेषु अधिपः स्वातिनामा उक्तः तत्कथं न तैः सह विरोधः ?, उच्यते, नामान्तरं मतान्तरं वा । अथ हैमवतवर्षस्य नामार्थं पृच्छति–

**मू. (१३३)** *से केणट्ठेणं भंते ! एवं वुच्चइ हेमवए वासे २ ?, गोअमा ! चुल्लहिमवंतमहाहिमवंतेहिं वासहरपव्वएहिं दुहओ समवगूढे निच्चं हेमं दलइ २-त्ता निच्चं हेमं पगासइ हेमवए अ इत्थ देवे महिद्धीए पलिओवमट्ठिइए परिवसइ, से तेणट्ठेणं गोअमा एवं वुच्चइ हेमवए वासे २*

**वृ.** 'से केणट्ठेणं' इत्यादि, अथ केनार्थेन भगवन्नेवमुच्यते–हेमवतं वर्षं हैमवतं वर्षमिति गौतम! क्षुद्रहिमवन्महाहिमवद्भ्यां वर्षधरपर्वताभ्यांद्विघातो–दक्षिणोत्तरपार्श्वयोः समवगाढं–संश्लिष्टं ततो हिमवतोरिदं हैमवतं, अयं भावः–क्षुद्रहिमवतो महाहिमवतश्चापान्तराले तत् क्षेत्रं, ततो द्वाभ्यामपि ताभ्यां यथाक्रममुभयोर्दक्षिणोत्तरपार्श्वयोः कृतसीमाकमिति भवति तयोः सम्बन्धि यदिवा नित्यं–कालत्रयेऽपि हेम–सुवर्णं ददाति आसनप्रदानादिना प्रयच्छति, कोऽर्थः ? –

तत्रत्ययुग्मिमनुष्याणामुपवेशनाद्युपभोगे हेममयाः शिलापट्टका उपयुज्यन्ते, तत उपचारेण ददातीत्युक्तं, नित्यं हेम–प्रकाशयति, ततो हेम नित्ययोगि प्रशस्यं वाऽस्यास्तीति हेमवत् हेमवदेव हैमवतम्, प्रज्ञादेराकृतिगणतया 'प्रज्ञादिभ्यः' इति स्वार्थेऽण् प्रत्ययः, हैमवतश्चात्र देवो महर्द्धिकः पल्योपमस्थितिकः परिवसति, तेन तद्योगद्धैमवतमिति व्यपदिश्यते, हैमवतो देवः स्वामित्वेनास्यास्तीत्यभ्रादित्वादप्रत्यये वा। अथास्यैवोत्तरतः सीमाकारी यो वर्षधरगिरिस्तं विवक्षुराह –

**मू. (१३४)** *कहि णं भंते ! जम्बुद्दीवे २ महाहिमवंते नामं वासहरपव्वए पं० ?, गो० ! हरिवासस्स दाहिणेणं हेमवयस्स वासस्स उत्तरेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस पुरत्थिमेणं, एत्थ णं जम्बुद्दीवे दीवे महाहिमवंते नामं वासहरपव्वए पन्नत्ते*

*–पाईणपडीणायए उदीणदाहिणविच्छिण्णे पलियंकसंठाणसंठिए दुहा लवणसमुद्दं पुट्ठे पुरत्थिमिल्लाए कोडीए जाव पुट्ठे पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठे दो जोअणसयाइं उद्धं उच्चत्तेणं पन्नासं जोअणाइं उव्वेहेणं चत्तारि जोअणसहस्साइं दोन्नि अ दसुत्तरे जोअणसए दस य एगूणवीसइभाए जोअणस्स विक्खंभेणं । तस्स बाहा पुरत्थिमपच्चत्थिमेणं नव जोअणसहस्साइं दोन्नि अ छावत्तरे जोअणसए नव य एगूणवीसइभाए जोअणस्स अद्धभागं च आयामेणं, तस्स*

*जीवा उत्तरेणं पाईणपडीणायया दुहा लवणसमुद्दं पुट्ठा पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठा पच्चत्थिमिल्लाए जाव पुट्ठा तेवण्णं जोअणसहस्साइं नव य एगतीसे जोअणसए छच्च एगूणवीसइभा जोअणस्स किंचिविसेसाहिए आयामेणं।*

*तस्स धणुं दाहिणेणं सत्तावन्नं जोअणसहस्साइं दोन्नि अ तेनउए जोअणसए दस य एगूणवीसइभाए जोअणस्स परिक्खेवेणं, रुअगसंठाणसंठिए सव्वरयणामए अच्छे उभओ पासिं दोहिं पउमवरवेइआहिं दोहि अ वनसंडेहिं संपरिक्खित्ते। महाहिमवन्तस्स णं वासहरपव्वयस्स उप्पिं बहुसमरमणिज्जे भूमिभागे पन्नत्ते, जाव नानाविहपञ्चवण्णेहिं मणीहि अ तणेहि अ उवसोभिए जाव आसयंति सयंति य।*

**वृ.** 'कहि णं भंते' इत्यादि, सर्वं प्राग्वत्, नवरं द्वे योजनशते उच्चत्वेन क्षुद्रहिमवद्वर्षधरतो द्विगुणोच्चत्वात् पञ्चाशद्योजनान्युद्वेधेन—भूप्रविष्टत्वेन, मेरुवर्जसमयक्षेत्रगिरीणां स्वोच्चत्वचतुर्थांशेनो-द्वेधत्वात्, चत्वारि योजनसहस्राणि द्वे च योजनशते दशोत्तरे दश च योजनैकोनविंशतिभागान् विष्कम्भेन हैमवतक्षेत्रतो द्विगुणत्वात्, अथास्य बाहादिसूत्रमाह—

'तस्स' त्ति, सूत्रत्रयमपि व्यक्तं, प्रायः प्राग्व्याख्यातसूत्रसदृशगमकत्वात्, नवरं अत्रास्य सर्वरत्नमयत्वमुक्तं, बृहत्क्षेत्रविचारादौ तु पीतस्वर्णमयत्वमिति तेन मतान्तरमवसेयम्, अनेनैव मतान्तराभिप्रायेण जम्बूद्वीपपट्टादावस्य पीतवर्णत्वं दृश्यते, अथास्य स्वरूपाविर्भावनायाह— 'महाहिमवन्तस्स ण' मित्यादि, सर्वं जगतीपद्मवरवेदिकावनखण्डवर्णकवद् ग्राह्यं।

सम्प्रति अत्र ह्रदस्वरूपमाह—

**मू. (१३५)** *महाहिमवंतस्स णं बहुमज्झदेसभाए एत्थ णं एगे महापउमद्दहे नामं दहे पन्नत्ते, दो जोअणसहस्साइं आयामेणं एगं जोअणसहस्सं विक्खंभेणं दस जोअणाइं उव्वेहेणं अच्छे रययामयकूले एवं आयामविक्खंभविहूणा जा चेव पउमद्दहस्स वत्तव्वया सा चेव नेअव्वा, पउमप्पमाणं दो जोअणाइं अट्ठो जाव महापउमद्दहवण्णाभाइं हिरी अ इत्थ देवी जाव पलिओवमट्ठिइया परिवसइ से एएणट्ठेणं गोअमा! एवं वुच्चइ, अदुत्तरं च णं गोअमा! महापउमद्दहस्स सासए नामधिज्जे पं० जं न कयाइ नासी ३।*

*तस्स णं महापउमद्दहस्स दक्खिणिल्लेणं तोरणेणं रोहिआ महानई पवूढा समाणी सोलस पंचुत्तरे जोअणसए पंच य एगूणवीसइभाए जोअणस्स दाहिणाभिमुही पव्वएणं गंता महया घडमुहपवित्तिएणं मुत्तावलिहारसंठिएणं साइरेगदोजोअणसइएणं पवाएणं पवडइ रोहिआ णं महानई जओ पवडइ एत्थ णं महं एगा जिब्भिया पं०, सा णं जिब्भिआ जोअणं आयामेणं अद्धतेरसजअणाइं विक्खंभेणं कोसं बाहल्लेणं मगरमुहविउट्टसंठाणसंठिआ सव्ववइरामई अच्छा, रोहिआ णं महानई जहिं पवडइ एत्थ णं महं एगे रोहिअप्पवायकुंडे नामं कुंडे पं० सवीसं जोअणसयं आयामविक्खंभेणं पन्नत्तं तिन्नि असीए जोअणसए किंचिविसेसूणे परिक्खेवेणं दस जोअणाइं उव्वेहेणं अच्छे सण्हे सो चेव वण्णओ।*

*—वइरतले वट्टे समतीरे जाव तोरणा, तस्स णं रोहिअप्पवायकुण्डस्स बहुमज्झदेसभाए एत्थ णं महं एगे रोहिअदीवे नामं दीवे पन्नत्ते, सोलस जोअणाइं आयामविक्खंभेणं साइरेगाइं पन्नासं जोअणाइं परिक्खेवेणं दो कोसे ऊसिए जलंताओ सव्ववइरामए अच्छे, से णं एगाए*

*पउमवरवेइआए एगेण य वनसंडेणं सव्वओ समंता संपरिक्खित्ते, रोहिअदीवस्स णं दीवस्स उप्पिं बहुसमरमणिज्जे भूमिभागे पन्नत्ते, तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महं एगे भवणे पन्नत्ते, कोसं आयामेणं सेसं तं चेव पमाणं च अट्ठो अ भाणिअव्वो ।*

*तस्स णं रोहिअप्पवायकुण्डस्स असंपत्ता पुरत्थाभिमुही आवत्ता समाणी हेमवयं वासं दुहा विभयमाणी २ अट्ठावीसाए सलिलासहस्सेहिं समग्गा अहे जगइं दालइत्ता पुरत्थिमेणं लवणसमुद्दं समप्पेइ रोहिआ णं जहा रोहिअंसा तहा पवाहे अ मुहे अ भाणिअव्वा इति जाव संपरिक्खित्ता ।*

*तस्स णं महापउमद्दहस्स उत्तरिल्लेणं तोरणेणं हरिकंता महानई पवूढा समाणी सोलस पंचुत्तरे जोअणसए पंच य एगूणवीसइभाए जोअणस्स उत्तराभिमुही पव्वएणं गंता महया घडमुहपवत्तिएणं मुत्तावलिहारसंठिएणं साइरेगदुजोअणसइएणं पवाएणं पवडइ, हरिकंता महानई जओ पवडइ एत्थ णं महं एगा जिब्भिआ पं० दो जोयणाइं आयामेणं पणवीसं जोअणाइं विक्खंभेणं अद्धं जोअणं बाहल्लेणं मगरमुहविउट्टसंठाणसंठिआ सव्वरयणामई अच्छा, हरिकंता णं महानई जहिं पवडइ एत्थ णं महं एगे हरिकंतप्पवायकुंडे नामं कुंडे पण्णत्ते दोन्नि अ चत्ताले जोअणसए आयामविक्खंभेणं सत्तअउणट्ठे जोयणसए परिक्खेवेणं अच्छे एवं कुण्डवत्तव्वया सव्वा नेयव्वा जाव तोरणा ।*

*तस्स णं हरिकंतप्पवायकुण्डस्स बहुमज्झदेसभाए एत्थ णं महं एगे हरिकंतदीवे नामं दीवे पं० बत्तीसं जोअणाइं आयामविक्खंभेणं एगुत्तरं जोअणसयं परिक्खेवेणं दो कोसे ऊसिए जलंताओ सव्वरयणामए अच्छे, से णं एगाए पउमवरवेइआए एगेण य वनसंडेणं जाव संपरिक्खित्ते वण्णओ भाणिअव्वोत्ति, पमाणं च सयणिज्जं च अट्ठो अ भाणिअव्वो ।*

*तस्स णं हरिकंतप्पवायकुण्डस्स उत्तरिल्लेणं तोरणेणं जाव पवूढा समाणी हरिवस्सं वासं एज्जेमाणी २ विअडावइं वट्टवेअद्धं जोअणेणं असंपत्ता पच्चत्थाभिमुही आवत्ता समाणी हरिवासं दुहा विभयमाणी २ छप्पन्नाए सलिलासहस्सेहिं समग्गा अहे जगइं दलइत्ता पच्चत्थिमेणं लवणसमुद्दं समप्पेइ, हरिकंता णं महानई पवहे पणवीसं जोअणाइं विक्खम्भेणं अद्धजोअणं उव्वेहेणं ।*

*तयनंतरं च णं मायाए २ परिवद्धमाणी २ मुहमूले अड्ढाइज्जाइं जोअणसयाइं विक्खम्भेणं पञ्च जोअणाइं उव्वेहेणं, उभओ पासिं दोहिं पउमवरवेइआहिं दोहि अ वनसंडेहिं संपरिक्खित्ता*

**वृ.** 'महाहि' इत्यादि प्रायः पद्मद्रहसूत्रानुसारेण व्याख्येयं । अथैतद्दक्षिणद्वारनिर्गतां नदीं निर्दिशन्नाह– तस्य महापद्मद्रहस्य दाक्षिणात्येन तोरणेन रोहिता महानदी प्रव्यूढा–निर्गता सती षोडश पञ्चोत्तराणि योजनशतानि पञ्च चैकोनविंशतिभागान् योजनस्य दक्षिणाभिमुखी पर्वतेन गत्वा महता घटमुखप्रवृत्तिकेन मुक्तावलिहारसंस्थितेन सातिरेकद्वि- योजनशतिकेन, सातिरेकत्वं च रोहिताप्रपातकुण्डोद्वेधापेक्षया बोध्यं, प्रपातेन प्रपतति, षोडशेत्या- दिसङ्ख्यानयनं तु चतुःसहस्रद्विशतदशयोजनतदेकोनविंशतिभागात्मक [भागदश] कादिरिव्यासात् सहस्रयोजनात्मके द्रहव्यासेऽपनीते सत्यर्द्धीकृताद्भवति, अन्यत् सर्वं रोहितांशागमेन वाच्यं, अथ सा यतः प्रपतति तदास्पदं दर्शयति– 'रोहिआ णं० प्राग्वत्, अथ यत्र प्रपतति तदाह–'रोहिआ णं० प्राग्व्या- ख्यातप्रायं, नवरं सविंशतिकं योजनशतं गङ्गाप्रपातकुण्डतो द्विगुणायामविष्कम्भत्वात्, त्रीणि योजनशतानि अशीत्यधिकानि किञ्चिद्विशेषोनानि, ऊनत्वं करणेन यो० ३७९ कोशः १ किंच-

धनुरधिकत्वेन किञ्चिदूनाऽशीतिरुक्ता इत्यर्थः, परिक्षेपेणेति ।

अधुनाऽस्य द्वीपवक्तव्यमाह– 'तस्स णं० व्यक्तं, नवरं गङ्गाद्वीपतो द्विगुणायाम-विष्कम्भत्वात् षोडश योजनानि रोहिता- द्विपप्रमाणमित्यर्थः, 'से ण'मित्यादि, सुगमं, 'रोहि-अदीव'इत्यादि, सुगमं, नवरं शेष विष्क- म्भादिकं प्रमाणं तदेव, कोऽर्थः ? –अर्द्धक्रोशं विष्कम्भेन देशोनक्रोशमुच्चत्वेनेति, चशब्दा- द्रोहितादेवीशयनादिवर्णकोऽपि, अर्थश्च 'से केणट्ठेणं भंते ! रोहिअदीवे' इत्यादि, सूत्रावगम्यः, सम्प्रति यथेयं लवणगामिनी तथाऽऽह–

'तस्स०' तस्य–रोहिताप्रपातकुण्डस्य दाक्षिणात्येन तोरणेन द्वारेणेत्यर्थः रोहिता महानदी प्रव्यूढा–निर्गता सती हैमवतं वर्षं आगच्छन्ती २ हैमवतक्षेत्राभिमुखमायान्तीत्यर्थः शब्दापातनामानं वृत्तवैताढ्यपर्वतमर्द्धयोजनेन क्रोशद्वयेनासम्प्राप्ता–असंस्पृष्टा दूरस्थितेत्यर्थः पूर्वाभिमुखी आवृत्ता सती हैमवतं वर्षं द्विधा विभजन्ती २–द्विभागं कुर्वती २ अष्टाविंशत्या सलिलासहस्रैः समग्रा–पूर्णा, भरतनदीतो द्विगुणनदीपरिवारत्वात्, अधोभागे जगतीं–जम्बूद्वीपकोट्टं दारयित्वा पूर्वभागेन लवणसमुद्रं समुपसर्प्पति, प्रविशतीत्यर्थः, अथ लाघवार्थं रोहितांशातिदेशेन रोहितावक्तव्यमाह– अतिदेशसूत्रत्वादेव प्राग्वत् । अथास्मादुत्तरगामिनीयं नदी क्वावतरतीत्याशंक्याह–

'तस्स ण'मिति व्यक्तं, 'हरिकंता' इत्यादि कण्ठ्यं, अत्र 'सव्वरयणामई'ति पाठो बह्वाद-र्शदृष्टोऽपि लिपिप्रमादापतित एव सम्भाव्यते, बृहत्क्षेत्रविचारादिषु सर्वासां जिह्विकानां वज्रमयत्वेनैव भणनात्, जलाशयानां प्रायो वज्रमयत्वेनैवोपपत्तेश्च, 'हरिकंता ण'मित्यादि, व्यक्तं, नवरं हरिकांता-प्रपातकुण्डं द्वे योजनशते चत्वारिंशदधिके आयामविष्कम्भाभ्यां सप्त योजनसतानि एकोनषष्ठानि–एकोनषष्ट्यधिकानि परिधिना इति ।

'तस्स ण'मित्यादि, सूत्रत्रयं प्राक् सूत्रानुसारेण बोद्धव्यं, नवरं विकटापातिनं वृत्तवैताढ्यं योजनेनासम्प्राप्ता पश्चिमेनावृत्ता सत हरिवर्षं नाम क्षेत्रं वक्ष्यमाणस्वरूपं द्विधा विभजमाना २ षट्पञ्चाशता नदीसहस्रैः समग्रा–परिपूर्णा, हैमवतक्षेत्रनदीतो द्विगुणनदीपरिवारत्वात्, पश्चिमेन भगेन लवणोदधिमुपैति । सम्प्रत्यस्याः प्रवाहाद कियन्मानमित्याह– 'हरिकंता'इत्यादि, हरिकान्ता महानदी प्रवहे–द्रहनिर्गमे पञ्चविंशतियोजनानि विष्कम्भेन अर्द्धयोजनमुद्वेधेन तदनन्तरं च मात्रया २–क्रमेण २ प्रतियोजनं समुदितयोरुभयोः पार्श्वयोः चत्वारिंशद्धनुर्वृद्धया, प्रतिपार्श्वं धनुर्विंश-तिवृद्धयेत्यर्थः, परिवर्द्धमाना २ मुखमूले–समुद्रप्रवेशेऽर्द्धतृतीयानि योजनशतानि विष्कम्भेन पञ्चयोजनान्द्वेधेन, उभयोः पार्श्वयोर्द्वाभ्यां पद्मवरवेदिकाभ्यां द्वाभ्यां च वनखण्डाभ्यां सम्परिक्षिप्ता अथैतस्य कूटवक्तव्यमाह–

*मू. (१३५) महाहिमवंते णं भंते ! वासहरपव्वए कइ कूडा पं० ?, गो० ! अट्ठ कूडा प०, –सिद्धाययणकूडे १ महाहिमवंतकूडे २ हेमवयकूडे ३ रोहिअकूडे ४ हिरिकूडे ५ हरिकंतकूडे ६ हरिवासकूडे ७ वेरुलिअकूडे ८ एवं चुल्लहिमवंतकूडाणं जा चेव वत्तव्वया सच्चेव नेअव्वा ।*

*से केणट्ठेणं भंते ! एवं वुच्चइ महाहिमवंते वासहरपव्वए २ ?, गोअमा ! महाहिमवंत णं वासहरपव्वए चुल्लहिमवंतं वासहरपव्वयं पणिहाय आयामुच्चत्तुव्वेहविक्खम्भपरिक्खेवेणं महंततराए चेव दीहतराए चेव, महाहिमवंते अ इत्थ देवे महिड्ढीए जाव पलिओवमट्ठिइए परिवसइ ।*

वृ. 'महाहिमवंते'त्ति, महाहिमवति वर्षधरपर्वते भगवन् ! कति कूटानि ?, गौतमेत्यादि

सूत्रं सुगमं, कूटानां नामार्थस्त्वयं-सिद्धायतनकूटं महाहिमवदधिष्ठातृकूटं हैमवतपतिकूटं रोहितानदीसुरीकूटं ह्रीसुरीकूटं हरिकान्तानदीसुरीकूटं हरिवर्षपतिकूटं वैडूर्यकूटं तु तद्रत्नमयत्वात् तत्स्वामिकत्वाच्चेति, 'एव'मिति कूटानामुच्चत्वादि सिद्धायतनप्रासादानां च मानादि तत्स्वामिनां च यथारूपं महर्द्धिकत्वं यत्र च राजधान्यस्तत्सर्वं अत्रापि वाच्यं, केवलं नामविपर्यास एव देवानां तद्राजधानीनां चेति।

साम्प्रतं महाहिमवतो नामार्थं निरूपयन्नाह-'से केणट्ठेण' मित्यादि, व्यक्तं नवरमुत्तरसूत्रे महाहिमवान् वर्षधरपर्वतः क्षुद्रहिमवन्तं वर्षधरपर्वतं प्रणिधाय-प्रतीत्य क्षुद्रहिमवदपेक्षयेत्यर्थः, योजनाया विचित्रत्वात् आयामापेक्षया दीर्घतरक एव उच्चत्वाद्यपेक्षया महत्तरक एवेति, अथवा महाहिमवन्नामाऽत्र देवः पल्योपमस्थितिकः परिवसति, सूत्रे आयामोच्चत्वेत्यादावेकवद्भावः समाहाराद् बोध्यः। अथ हरिवर्षनामकवर्षावसरः-

*मू. (१३७) कहि णं भंते! जम्बूद्दीवे दीवे हरिवासे नामं वासे पं० ? निसहस्स वासहरपव्वयस्स दक्खिणेणं महाहिमवंतवासहरपव्वयस्स उत्तरेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं एत्थ णं जम्बूद्दीवे २ हरिवासे नामं वासे पन्नत्ते एवं जाव पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठे अट्ठ जोअणसहस्साइं चत्तारि अ एगवीसे जोअणसए एगं च एगूणवीसइभागं जोअणस्स विक्खम्भेणं। तस्स बाहा पुरत्थिमपच्चत्थिमेणं तेरस जोअणसहस्साइं तिन्नि अ एगसट्ठे जोअणसए छच्च एगूणवीसइभाए जोअणस्स अद्धभागं च आयामेणंति, तस्स जीवा उत्तरेणं पाईणपडीणायया दुहा लवणसमुद्दं पुट्ठा पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं जाव लवणसमुद्दं पुट्ठा तेवत्तरिं जोअण- सहस्साइं नव य एगुत्तरे जोअणसए सत्तरस य एगूणवीसइभाए जोअणस्स अद्धभागं च आयामेणं, तस्स धनुं दाहिणेणं चउरासीइं जोअणसहस्साइं सोलस जोअणाइं चत्तारि एगूणवीसइभाए जोअणस्स परिक्खेवेणं।*

*हरिवासस्स णं भंते! वासस्स केरिसए आगारभावपडोआरे पं० ?, गोअमा! बहुसमरमणिज्जे भूमिभागे पन्नत्ते जाव मणीहिं तणेहिं अ उवसोभिए एवं मणीणं तणाण य वण्णो गंधो फासो सद्दो भाणिअव्वो, हरिवासे णं तत्थ २ देसे तहिं २ बहवे खुड्डा खुड्डिआओ एवं जो सुसमाए अनुभावो सो चेव अपरिसेसो वत्तव्वोत्ति।*

*कहि णं भंते! हरिवासे वासे विअडावई नामं वट्टवेअद्धपव्वए प० ?, गो०! हरीए महानईए पच्चत्थिमेणं हरिकंताए महानईए पुरत्थिमेणं हरिवासस्स २ बहुमज्झदेसाए एत्थ णं विअडावई नामं वट्टवेअद्धपव्वए प०।*

*एवं जो चेव सद्दावइस्स विक्खम्भुच्चत्तुव्वेहपरिक्खेवसंठाण वण्णावासो अ सो चेव विअडावइस्सवि भाणिअव्वो, नवरं अरुणो देवो पउमाइं जाव विअडावइवण्णाभाइं अरुणे अ इत्थ देवे महिड्डीए एवं जाव दाहिणेणं रायहाणी नेअव्वा। से केणट्ठेणं भंते! एवं वुच्चइ-हरिवासे २ ? गो० हरिवासे णं वासे मणुआ अरुणा अरुणो भासा सेआ णं संखदलसण्णिसा हरिवासे अ इत्थ देवे महिड्ढीए जाव पलिओवमट्ठिईए परिवसइ, से तेणट्ठेणं गो० एवं वुच्चइ।*

**वृ.** 'कहि णं भंते! जम्बूद्दीवे २' इत्यादि, व्यक्तं, नवरं अष्टौ योजनसहस्राणि चत्वारि च योजनशतानि एकविंशत्यधिकानि एकं चैकोनविंशतितमं भागं योजनस्य विष्कम्भेन, महाहिमवतो

[illegible] । अधुनाऽस्य बाह्वादिस्वरूपमाह- ''तस्स बाहा' इत्यादि, 'तस्स जीवा' इत्यादि, 'तस्स धनु'मित्यादि, सूत्रत्रयमपि व्यक्तं ॥ अथास्य स्वरूपं पिपृच्छिषुराह– 'हरिवास'- इत्यादि, हरिवर्षस्य वर्षस्य भगवन्! कीदृश आकारभावप्रत्यवतारः प्रज्ञप्तः ?, गौतम! बहुसमरम- णीयो भूमिभागः प्रज्ञप्तः, अत्रातिदेशवाक्यमाह–यावन्मणिभिस्तृणैश्चोपशोभितः, एवं मणीनां तृणानां च वर्णो गन्धः स्पर्शः शब्दश्च भणितव्यः, पद्मवरवेदिकानुसारेणेत्यर्थः, अत्र जलाशयस्वरूपं निरूपयन्नाह–

'हरिवासे णं'मित्यादि, क्षेत्रस्य सरसत्वेन तत्र तत्र देशप्रदेशेषु क्षुल्लिकादयो जलाशया अखाता एव सन्तीत्यर्थः, अत्रैकदेशग्रहणेन सर्वोऽपि वाप्यादिजलाशयालापको ग्राह्यः, अत्र कालनिर्णयार्थमाह–'एवं जो सुसमाए'इत्यादि, एवंउक्तप्रकारेण वर्ण्यमाने तस्मिन् क्षेत्रे यः सुषमायाः–अवसर्पिणीद्वितीयारकस्यानुभावः स एवापरिशेषः–सम्पूर्णो वक्तव्यः, सुषमाप्रतिभागनामकावस्थितकालस्य तत्र सम्भवात् ।

अथास्य क्षेत्रस्य विभाजकगिरिमाह–'कहि णं'मित्यादि, प्रश्नसूत्रं व्यक्तं, उत्तरसूत्रे हरितो–हरिसलिलाया महानद्याः पश्चिमायां हरिकान्ताया महानद्याः पूर्वस्यां हरिवर्षस्य २ बहुमध्यदेशभागे अत्रान्तरे विकटापातिनामा वृत्तवैताढ्यपर्वतः प्रज्ञप्तः, अत्र निगमयंल्लाघ- वार्थमतिदेशसूत्रमाह–एवं विकटापातिवृत्तवैताढ्यवर्णने क्रियमाणे य एव शब्दापातिनो विष्कम्भोच्चत्वोद्वेधपरिक्षेपसंस्थानानां वर्णव्यासो–वर्णकग्रन्थविस्तरः चकारात्तत्रत्यप्रासादत- त्स्वामिराजधान्यादिसंग्रहः, विकटापातिप्रभाणि विकटापातिवर्णाभानि च तेन विकटापातीति नाम, अरुणश्चात्र देव आधिपत्यं परिपालयति तेन तद्योगादपि तथा नाम प्रसिद्धम्, आह– विसदृशनामकदेवाद्विकटापातीति नाम कथमुपपद्यते ? उच्यते, अरुणो विकटापातिपतिरिति तत्कल्पपुस्तकादिषु आख्यायते, सामानिकादीनामप्यनेनैव नाम्ना प्रसिद्ध इति सामर्थ्याद्विक- टापातीति, सुस्थितलवणोदाधिपतेर्गौतमाधिपतित्वाद् गौतमद्वीप इव, बृहत्क्षेत्रविचारादिषु हैरण्यवते विकटापाती हरिवर्षे गन्धापातीत्युक्तं, तत्वं तु केवलिगम्यं, एवं यावद्दक्षिणस्यां दिशि मेरो राजधानी नेतव्या, अथ हरिवर्षनामार्थं पिपृच्छिषुराह–

'से केणट्ठेणं' इत्यादि, प्रश्नसूत्रं सुगमं, उत्तरसूत्रे हरिवर्षे २ केचन मनुजा अरुणा– रक्तवर्णाः, अरुणं च चीनपिष्टादिकं आसन्नवस्तूनि अरुणप्रकाशं न कुरुते अभास्वरत्वाद् इमे च न तथा इत्याह–अरुणावभासा इति, केचन श्वेताः णं पूर्ववत् शङ्खदलानि–शङ्खखण्डास्ते हि अतिश्वेताः स्युस्तेषां सन्निकाशाः–सदृशाः तेन तद्योगाद्धरिवर्षं क्षेत्रमुच्यते, कोऽर्थः ?–हरिशब्देन सूर्यश्चन्द्रश्च तत्र केचन मनुष्याः सूर्यइवारुणा अरुणावभासाः, सूर्यश्चात्र रक्तवर्णप्रस्तावादुद्गच्छन् गृह्यते, केचन चन्द्र इव श्वेता इति, हरय इव हरयो मनुष्याः, साध्यवसानलक्षणयाऽभेदप्रतिपत्ति, ततस्तद्योगात् क्षेत्रं हरय इति व्यपदिश्यते, हरयश्च तद्वर्षं च हरिवर्षं, यदा च मनुष्ययोगात् हरिशब्दः क्षेत्रे वर्तते तदा स्वभावाद्बहुवचनान्तः प्रयुज्यते, यदाह तत्वार्थमूलटीकाकृद् विदेहाश्च पञ्चालादितुल्या'' यदिवा हरिवर्षनामा अत्र देव आधिपत्यं परिपालयति तेन तद्योगदपि हरिवर्षं। अथानन्तरोक्तं क्षेत्रं निषधाद्दक्षिणस्यामुक्तं तर्हि स निषधः क्वास्तीति पृच्छति–

***मू. (१३८) कहि णं भंते ! जम्बूद्दीवे २ निसहे नामं वासहरपव्वए पन्नत्ते ?, गोअमा ! महाविदेहस्स वासस्स दक्खिणेणं हरिवासस्स उत्तरेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं***

पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं एत्थ णं जंबुद्दीवे दीवे निसहे नामं वासहरपव्वए पन्नत्ते।

—पाईणपडीणायए उदीणदाहिणविच्छिण्णे दुहा लवणसमुद्दं पुट्ठे पुरत्थिमिल्लाए जाव पुट्ठे पच्चत्थिमिल्लाए जाव पुट्ठे, चत्तारि जोयणसयाइं उद्धं उच्चत्तेणं चत्तारि गाउअसयाइं उव्वेहेणं सोलस जोअणसहस्साइं अट्ठ य बायाले जोअणसए दोन्नि य एगूणवीसइभाए जोअणस्स विक्खम्भेणं तस्स बाहा पुरत्थिमपच्चत्थिमेणं वीसं जोअणसहस्साइं एगं च पणट्ठं जोअणसयं दुन्नि अ एगूणवीसइभाए जोअणस्स अद्धभागं च आयामेणं, तस्स जीवा उत्तरेणं जाव चउनवइजोअणसहस्साइं एगं च छप्पन्नं जोअणसयं दुन्नि अ एगूणवीसइभाए जोअणस्स आयामेणंति, तस्स धनुं दाहिणेणं एगं जोअणसयसहस्सं चउवीसं च जोअणसहस्साइं तिन्नि अ छायाले जोअणसए नव य एगूणवीसइभाए जोअणस्स परिक्खेवेणंति रुअगसंठाणसंठिए सव्वतवणिज्जमए अच्छे, उभओ पासिं दोहिं पउमवरवेइआहिं दोहि अ वनसंडेहिं जाव संपरिक्खित्ते।

निसहस्स णं वासहरपव्वयस्स उप्पिं बहुसमरमणिज्जे भूमिभागे पन्नत्ते जाव आसयंति सयंति, तस्स ण बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महं एगे तिगिंछिद्दहे नामं दहे पन्नत्ते, पाईणपडीणायए उदीणदाहिणविच्छिन्ने चत्तारि जोअणसहस्साइं आयामेणं दो जोअणसहस्साइं विक्खम्भेणं दस जोअणाइं उव्वेहेणं अच्छे सण्हे रययामयकूले।

तस्स णं तिगिच्छद्दहस्स चउद्दिसिं चत्तारि तिसोवाणपडिरूवगा पं० एवं जाव आयामविक्खम्भविहूणा जा चेव महापउमद्दहस्स वत्तव्वया सा चेव तिगिंछिद्दहस्सवि वत्तव्वया तं चेव पउमद्दहप्पमाणं अट्ठो जाव तिगिंछिवण्णाइं, धिई अ इत्त देवी पलिओवमट्ठिईआ परिवसइ, से तेणट्ठेणं गोयमा! एवं वुच्चइ तिगिंछिद्दहे तिगिंछिद्दहे।

**वृ.** 'कहि ण'मित्यादि, प्रश्नसूत्रं व्यक्तं, उत्तरसूत्रे महाविदेहस्य वर्षस्य दक्षिणस्यां हरिवर्षस्योत्तरस्यां पौरस्त्यलवणोदस्य पश्चिमायां पश्चिमलवमसमुद्रस्य पूर्वस्यां अत्रान्तरे जम्बूद्वीपे निषधो नाम वर्षधरपर्वतः प्रज्ञप्तः, प्राचीनप्रतीचीनेत्यादि प्राग्वत्, चत्वारि योजनशतान्यूर्ध्वोच्चत्वेन चत्वारि गव्यूतशतान्युद्वेधेन—भूप्रवेशेन मेरुवर्जसमयक्षेत्रगिरीणां स्वोच्चत्वचतुर्थांशेनोद्वेधत्वात्, षोडश योजनसहस्राणि द्विचत्वारिंशानि—द्विचत्वारिंशदधिकानि अष्टौ च योजनशतानि द्वौ च एकोनविंशतिभागौ योजनस्य विष्कम्भेन, महाहिमवतो द्विगुणविष्कम्भमानत्वात्, अथ बाहादिसूत्रत्रयमाह— 'तस्स बाहा', 'तस्स जीवा'इत्यादि, अथ यावत्पदात् पाईणपडीणाययया दुहओ लवणसमुद्दं पुट्ठा पुरत्थिमिल्लाए लवणसमुद्दं जाव पुट्ठा इति ग्राह्यं, 'तस्स धनु'मित्यादि सर्वं पूर्वसूत्रानुसारेण व्याख्येयं। अथ निषधमेव विशेषणैर्विशिनष्टि— 'रुअग'इत्यादि, अत्र यावत्पदात् सव्वओ समंता इति ग्राह्यं, शेषं प्राग्वत्। अथास्य देवक्रीडायोग्यत्वं वर्णयन्नाह—'निसह'इत्यादि, अत्र यावत्पदात् आलिङ्गपुष्करादिपदकदम्बकं बोध्यं। अथ ह्रदवक्तव्यावसरः—

'तस्स ण'मित्यादि, तस्य बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागेऽत्रान्तरे महानेकः तिगिंछि—पौष्परजस्तत्प्रधानो द्रहस्तिगिंछिद्रहो नाम द्रहः प्रज्ञप्तः, प्राकृते पुष्परजःशब्दस्य 'तिगिंछि' इति निपातः देशीशब्दो वा, अन्यत् सर्वं प्रागनुसारेणेति, अथास्यातिदेशसूत्रेण सोपानादिवर्णनामाह— तस्य—तिगिंछिद्रहस्य चतुर्दिक्षु चत्वारि त्रिसोपानप्रतिरूपकाणि प्रज्ञप्तानि, एवमित्थंप्रकारेण ह्रदवर्णके क्रियमाणे यावच्छब्दोऽत्र कार्त्स्न्यवाच्यव्ययं तेन यावत्परिपूर्णा चैव महापद्मह्रदस्य वक्तव्यता

आयामविष्कम्भविहीना सैव तिगिंछिद्रहस्य वक्तव्यता, एतदेव व्यक्त्या आचष्टे–

'तं चेव' इत्यादि, तदेव—महापद्मद्रहगतमेव पद्मानां—धृतिदेवीकमलानां प्रमाणं—एककोटिविंशतिलक्षपञ्चाशत्सहस्रैकशतविंशतिरूपं, अन्यथाऽत्र पद्मानामायामविष्कम्भरूपप्रमाणस्य महापद्मद्रहगतपद्मेभ्यो द्विगुणत्वेन विरोधापाततात्, द्रहस्य च प्रमाणमुद्वेधरूपं बोध्यं, आयामविष्कम्भयोः पृथगुक्तत्वादितिष अर्थ तिगिंछिद्रहस्य वाच्यः, स चैवं 'से केणट्ठेण भंते ! एवं वुच्चइ–तिगिंछिद्दहे २' इत्यादि प्राक्सूत्रानुसारेण वाच्यं यावत् तिगिंछिद्रहवर्णाभानि उत्पलादीनि धृतिश्चात्राधिपत्यं परिपालयति 'से तेणट्ठेणं ० प्राग्वत् ।। अथास्माद्या दक्षिणेन नदी प्रवहति तामाह–

मू. (१३९) *तस्स णं तिगिंछिद्दहस्स दक्खिणिल्लेणं तोरणेणं हरिमहानई पवूढा समाणी सत्त जोअणसहस्साइं चत्तारि अ एकवीसे जोअमसए एगं च एगूणवीसइभागं जोअणस्स दाहिणाभमुही पव्वएणं गंता महया घडमुहपवित्तिएणं जाव साइरेगचउजोअणसइएणं पवाएणं पवडइ*

*एवं जा चेव हरिकंताए वत्तव्वया सा चेव हरीएवि नेअव्वा, जिब्भिआए कुंडस्स दीवस्स भवणस्स तं चेव पमाणं अट्ठोऽवि भाणिअव्वो जाव अहे जगइं दालइत्ता छप्पन्नाए सलिलासहस्सेहिं समग्गा पुरत्थिमं लवणसमुद्दं समप्पेइ, तं चेव पवहे अ मुहमूले अ पमाणं उव्वेहो अ जो हरिकन्ताए जाव वनसंडसंपरिक्खित्ता ।*

*तस्स णं तिगिंछिद्दहस्स उत्तरिल्लेणं तोरणेणं सीओआ महानई पवूढा समाणी सत्त जोअणसहस्साइं चत्तारि अ एगवीसे जोअणसए एगं च एगूणवीसइभागं जोअणस्स उत्तराभिमुही पव्वएणं गंता महया घडमुहपवित्तिएणं जाव साइरेगचउजोअणसइएणं पवाएणं पवडइ ।*

*सीओआ णं महानई जओ पवडइ एत्थ णं महं एगा जिब्भिआ पन्नत्ता चत्तारि जोअणाइं आयामेणं पन्नासं जोअणाइं विक्खम्भेणं जोअणं बाहल्लेणं मगरमुहविउट्टसंठाणसंठिआ सव्ववइरामई अच्छा, सीओआ णं महानई जहिं पवडइ एत्थ णं महं एगे सीओअप्पवायकुंडे नामं कुंडे पन्नत्ते चत्तारि असीए जोअणसए आयामविक्खंभेणं पन्नरसअट्ठारे जोअणसए किंचि- विसेसूणे परिक्खेवणं अच्छे एवं कुंडवत्तव्वया नेअव्वा जाव तोरणा ।*

*तस्स णं सीओअप्पवायकुंडस्स बहुमज्झदेसभाए एत्थ णं महं एगे सीओअदीवे नामं दीवे पन्नत्ते चउसट्ठिं जोअणाइं आयामविक्खम्भेणं दोन्नि बिउत्तरे जोअणसए परिक्खेवेणं दो कोसे ऊसिए जलंताओ सव्ववइरामए अच्छे सेसं तमेव वेइयावणसंडभूमिभागभवणसयणिज्जअट्ठो भाणिअव्वो, तस्स णं सीओअप्पवायकुंडस्स उत्तरिल्लेणं तोरणेणं सीओआ महानई पवूढा समाणी देवकुरु एज्जेमाणा २ चित्तविचित्तकूडे पव्वए निसढदेवकुरुसूरसुलसविज्जुप्पभदहे अ दुहा विभयमाणी २ चउरासीए सलिलासहस्सेहिं आपूरेमाणी २ भद्दसालवणं एज्जेमाणी २ मंदरं पव्वयं दोहिं जोअणेहिं असंपत्ता पच्चत्थिमाभिमुही आवत्ता समाणी अहे विज्जुप्पभं वक्खारपव्वयं दारइत्ता मंदरस्स पव्वयस्स पच्चत्थिमेणं अवरविदेहं वासं दुहा विभयमाणी २ एगमेगाओ चक्कवट्टिविजयाओ अट्ठावीसाए २ सलिलासहस्सेहिं आपूरेमाणी २*

*—पञ्चहिं सलिलासयसहस्सेहिं दुतीसाए अ सलिलासहस्सेहिं समग्गा अहे जयंतस्स दारस्स जगइं दालइत्ता पच्चत्थिमेणं लवणसमुद्दं समप्पेति, सीओआ णं महानई पवहे पन्नासं जोअणाइं विक्खम्भेणं जोअणं उव्वेहेणं, तयनंतरं च णं मायाए २ परिवद्धमाणी २ मुहमूले पञ्च जोअणसयाइं विक्खम्भेणं दस जोअणाइं उव्वेहेणं उभओपासिं दोहिं पउमवरवेइआहिं दोहिं अ वनसंडेहिं*

*संपरिक्खित्ता । निसढे णं भंते ! वासहरपव्वए णं कति कूडा पन्नत्ता ?, गोयमा ! नव कूडा पन्नत्ता, तंजहा—सिद्धायनकूडे १ निसढकूडे २ हरिवासकूडे ३ पुव्वविदेहकूडे ४ हरिकूडे ५ धिईकूडे ६ सीओ आकूडे ७ अवरविदेहकूडे ८ रुअगकूडे ९ जो चेव चुल्लहिमवंतकूडाणं उच्चतविक्खम्भ- परिक्खेवो पुव्ववण्णिओ रायहाणी अ सच्चेव इहंपि नेअव्वा ।*

*से केणट्ठेणं भंते ! एवं वच्चइ निसहे वासहरपव्वए २ ?, गोअमा ! निसहे णं वासहरपव्वए बहवे कूडा निसहसंठाणसंठिआ उसभसंठाणसंठिआ, निसहे अ इत्थ देवे महिद्धीए जाव पलिओवमट्ठिईए परिवसइ, से तेणट्ठेणं गोअमा ! एवं वुच्चइ निसहे वासहरपव्वए २ ।*

**वृ.** 'तस्स ण' मित्यादि तस्य तिगिंछिद्रहस्य दाक्षिणात्येन तोरणेन हरिनाम्नी हरिसलिलाऽपरपर्याया महानदी प्रव्यूढा सती सप्तयोजनसहस्राणि चत्वारि च योजनशतानि एकविंशानि—एकविंशत्यधिकानि एकं च एकोनविंशतिभागं योजनस्य दक्षिणाभिमुखी पर्वतेन गत्वा इत्यादि प्राग्वत्, गिरिगन्तव्योपपत्तिस्तु षोडशसहस्राष्टशतद्विचत्वारिंशद्योजनप्रमाणान्निषधव्यासाद् द्विसहस्रयोजनप्रमाणे ह्रदव्यासेऽपनीते शेषेऽर्द्धीकृते भवतीति । निगमयश्नतिदेशसूत्रमाह—

'एव' मित्यादि, 'एव' मित्युक्तप्रकारेण चैव हरिकान्ताया वक्त- व्यता सैव हरितोऽपि महानद्या नेतव्या, जिह्विकाया हरिकुंडस्य हरिद्वीपस्य भवनस्य च तदेव प्रमाणं हरिकान्ताप्रकरणोक्तमवसेयं, अर्थोऽपि हरिद्वीपनाम्नो वाच्यः, अत्र यावत्पदवाच्यं साक्षाल्लिखितं च सर्वं हरिकान्ताप्रकरण इव ज्ञेयं ।। अथास्माद्ध्रदा उत्तरेण नदी प्रवहति तामाह—

'तस्स णं तिगिंछिद्दह' इत्यादि, व्यक्तं, गिरिगन्तव्यं तु हरिन्नद्या इवावसेयं, अथास्या जिह्विकास्वरूपमाह— 'सीओआ' इत्यादि, उत्तानार्थं, नवरमायामेन चत्वारि योजनानि, हरिन्नदीजिह्विकाद्विगुणत्वात्, पञ्चाशद् योजनानि विष्कम्भेन हरिन्नदीप्रवहतो द्विगुणस्य सीतोदाप्रवहस्य मातव्यत्वात्, एवं बाहल्यमपि पूर्वजिह्विकातो द्विगुणमवसेयम्, अथ कुंडस्वरूपमाह— 'सीओआ पंमच्चनईजहिं' इत्यादि, 'एत्थ ण' मित्यादि, अत्र कुंडस्य योजनसङ्ख्या हरिकुंडतो द्वैगुण्ये- नोपपादनीया ।

अथ सीतोदाद्वीपस्वरूपमाह—'तस्स ण' मित्यादि, अत्र शीतोदाद्वीपः आयामविष्कम्भाभ्यां चतुःषष्टियोजनानि पूर्वनदीद्वीपतो द्विगुणायामविष्कम्भत्वात्, द्व्यधिके द्वे शते परिक्षेपेण, अत्र सूत्रेऽनुक्तमपि करणवशात् किञ्चित्साधिकत्वं ज्ञेयं, द्वौ क्रोशौ जलादुत्थितः सर्ववज्रमयः अच्छः शेषमुक्तातिरिक्तं गङ्गाद्वीपप्रकरणोक्तमवसेयं, तच्च विनेयस्मारणार्थं नामतो निर्दिशति—वेदिकावनखण्डभूमिभागभवनशयनीयानि वाच्यानि, अत्र सूत्रे विभक्तिलोपः प्राकृतत्वात्, अर्थश्च शीतोदाद्वीपस्य गङ्गाद्वीपवत् भणितव्य इति । अथ यथेयं पयोधिमुपयाति तथाह— तस्य सीतोदाप्रपातकुंडस्य औत्तराहेण तोरणेन शीतोदा महानदी प्रव्यूढा सती देवकुरून् इयती २—गच्छन्ती २, अत्र सूत्रे एकवचनं आकारान्तत्वं च प्राकृतत्वात्, विचित्रविचित्रकूटौ पूर्वापर- कूलवर्त्तिनौ निषध १ देवकुरु २ सूर ३ सुलस ४ विद्युत्प्रभ ५ ह्रदांश्च द्विधा विभजन्ती २—तन्मध्ये वहन्ती २, अत्रेयं विभागयोजना—चित्रविचित्रकूटपर्वतयोर्मध्ये वहनेन चित्रकूटं पर्वतं पूर्वतः कृत्वा विचित्रकूटं च पश्चिमतः कृत्वा देवकुरुष वहन्ती इति, ह्रदांश्च पञ्चापि समश्रेणिवर्त्तिन एकैकरूपान् द्विभागीकरणेन वहन्तीति, अत्रान्तराले देवकुरुवर्त्तिभिश्चतुरशीत्या सलिलासह- स्रैरापूर्यमाणा २ भद्रशालवनं—मेरुप्रथमवनं इयती २ मन्दरं पर्वतं द्वाभ्यां योजनाभ्यामसम्प्राप्ता, शीतोदामेर्वोरर्थो

क्रोशा अन्तरालमित्यर्थः, ततः पश्चिमाभिमुखी परावृत्ता सती विद्युत्प्रभं वक्षस्कारपर्वतं नैऋतकोणगतकुरुगोपकगिरिमधो दारयित्वा मन्दरस्य पर्वतस्य पश्चिमेनापरविदेहवर्षं-पश्चिमविदेहं द्विधा विभजन्ती २, एकैकस्माच्चक्रवर्त्तिविजयादष्टाविंशत्या २ नदीसहस्रैरापूर्यमाणा २ तथाहि—

अस्या दक्षिणकूलगतविजयाष्टके द्वे द्वे महानद्यौ गङ्गासिन्धुनाम्नी चतुर्दश २ सहस्रनदीपरिवारे उत्तरकूलवर्त्तिविजयाष्टके च द्वे द्वे महानद्यौ रक्तारक्तवतीनाम्नी तावत्परिवारे स्त इति प्रतिविजय-मष्टाविंशतिनदीसहस्राणि, अथ सर्वाग्रेणास्या नदीपरिवारं विशेषणद्वारेणाह—पञ्चभिर्नदीलक्षैर्द्वात्रिं-शता च नदीसहस्रैः समग्रा—परिपूर्णा, तथाहि—अस्या उभयकूलवर्त्तिविजयषोडशकेऽष्टाविं-शतिर२नदीसहस्राणीत्यष्टाविंशतिसहस्राणि षोडशभिर्गुण्यंते, जातं चतुर्लक्षाण्यष्टचत्वारिंशत्सहस्राणि, अत्र राशौ कुरुगत ८४ सहस्रनदीप्रक्षेपे जातं यथोक्तं मानमिति, अधो जयन्तस्य द्वारस्य—पश्चि-मदिग्वर्त्तिजम्बूद्वीपद्वारस्य जगतं दारयित्वा पश्चिमेन— लवणसमुद्रं समुपसर्पतीति

अधुनाऽस्या विष्कम्भाद्याह—'सीओआ'इत्यादि, शीतोदा महानदी प्रवहे—ह्रदनिर्गमे पञ्चाशद्योजनानि विष्कम्भेन, हरिन्नदीप्रवहादस्याः प्रवहस्य द्विगुणत्वात्, योजनमुद्वेधेन—उण्डत्वेन, पञ्चाशद्योजनानां पञ्चाशता भागे एकस्यैव लाभात्, तदनन्तरं मात्रया २—क्रमेण २ प्रतियोजनं समुदितोरुभयोः पार्श्वयोरशीतिधनुर्वृद्धया, प्रतिपार्श्वं चत्वारिंशद्धनुर्वृद्धयेत्यर्थः, परिवर्द्धमाना २ मुखमूले—समुद्रप्रवेशे पञ्च योजनशतानि विष्कम्भेन प्रवहविष्कम्भापेक्षया मुखविष्कम्भस्य दशगुणत्वात्, दशयोजनान्युद्वेधेन, आद्यप्रवहोद्वेधापेक्षयाऽस्य दशगुणत्वात्, शेषं व्यक्तं।

अथ निषधे कूटवक्तव्यमाह—'निसढे ण'मित्यादि, सिद्धायतनकूटं निषधवर्षधराधिप-वासकूटं हरिवर्षक्षेत्रपतिकूटं पूर्वविदेहपतिकूटं हरिसलिलानदीसूरीकूटं धृति—तिगिंछिह्रदसुरी तस्याः कूटं शीतोदानदीसुरीकूटं अपरविदेहपतिकूटं रुचकः—चक्रवालगिरिविशेषस्तदधिपतिकूटं, अत्र वक्तव्येऽतिदेशसूत्रमाह— 'जो चेव'इत्यादि, य एव क्षुद्रहिमवति कूटानामुच्चत्वविष्कम्भाभ्यां सहितः परिक्षेपः उच्चत्व-विष्कम्भपरिक्षेपः, चशब्दात् कूटवर्णकः पूर्ववर्णितः—अधस्तनग्रन्थोक्तः स एव इहापि ज्ञातव्यः, तथाहि—पञ्चयोजनशतान्युच्चत्वं मूलविष्कम्भश्चेत्यादि, राजधानी च सैव इहापि नेतव्या, अत्र लिङ्गविपरिनामेनार्थयोजना इति, कोऽर्थः?—यथा क्षुद्रहिमवदिरिकूटस्य दक्षिणेन तिर्यगसङ्ख्येयान् द्वीपसमुद्रान् व्यतिक्रम्यान्यस्मिन् जम्बूद्वीपे क्षुद्रहिमवती नाम्नी राजधानी तथा इहापि निषधा नाम राजधानीति, अधुनाऽस्य नामार्थं प्रश्नयन्नाह—

'से केणट्ठेण'मित्यादि, व्यक्तं, नवरं निषधे वर्षधरपर्वते बहूनि कूटानि निषधसंस्थान-संस्थितानि, तत्र नितरां सहते स्कन्धे पृष्ठे वा समारोपितं भारमिति निषधो—वृषभः पृषोदरादित्वादिष्ट-रूपसिद्धि तत्संस्थानसंस्थितानि, एतदेव पर्यायान्तरेणाह— वृषभसंस्थितानि, निषधश्चात्र देव आधिपत्यं परिपालयति, तेन निषधाकारकूटयोगान्निषधदेवयोगाद्वा निषध इति व्यवह्रियते। अथ यन्निषधसूत्रे 'महाविदेहस्स वासस्स दक्खिणेण'मित्युक्तं तत् किं महाविदेहमित्याह—

*मू. (१४०) कहि णं भंते ! जंबुद्दीवे दीवे महाविदेहे नामं वासे प० गो० नीलवंतस्स वासहरपव्वयस्स दक्खिणेणं निसहस्स वासहरपव्वयस्स उत्तरेणं पुरत्थिमलवण- समुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं एत्थ णं जंबुद्दीवे २ महाविदेहे वासे पन्नत्ते।*

*—पाईणपडीणायए उदीणदाहिणविच्छिण्णे पलिअंकसंठाणसंठिए दुहा लवणसमुद्दं पुट्ठे*

*पुरत्थिम जाव पुट्ठे पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं जाव पुट्ठे तित्तीसं जोअणसहस्साइं छच्च चुलसीए जोअणसए चत्तारि अ एगूणवीसइभाए जोअणस्स विक्खम्भेणंति, तस्स बाहा पुरत्थि-मपच्चत्थिमेणं तेत्तीसं जोअणसहस्साइं सत्त य सत्तसट्ठे जोअणसए सत्त य एगूणवीसइभाए जोअणस्स आयामेणंति। तस्स जीवा बहुमज्झदेसभाए पाईणपडिणायया दुहा लवणसमुद्दं पुट्ठा पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं जाव पुट्ठा एवं पच्चत्थिमिल्लाए जाव पुट्ठा, एगं जोयणसयसहस्सं आयामेणंति, तस्स धनुं उभओ पासिं उत्तरदाहिणेणं एगं जोयणसयसहस्सं अट्ठावन्नं जोअणसहस्साइं एगं च तेरसुत्तरं जोअणसयं सोलस य एगूणवीसइभागे जोयणस्स किंचिविसेसाहिए परिक्खेवेणंति, महाविदेहे णं वासे चउव्विहे चउप्पडोआरे पन्नत्ते, तंजहा–*

*पुव्वविदेहे १ अवरविदेहे २ देवकुरा ३ उत्तरकुरा ४, महाविदेहस्स णं भंते ! वासस्स केरिसए आगारभावपडोआरे पन्नत्ते ?, गोअमा ! बहुसमरमणिज्जे भूमिभागे पन्नत्ते जाव कित्तिमेहिं चेव अकित्तिमेहिं चेव। महाविदेहे णं भंते ! वासे मणुआणं केरिसए आयारभावपडोआरे पन्नत्ते ?, तेसि णं मणुआणं छव्विहे संघयणे छव्विहे संठाणे पञ्चधनुसयाइं उद्धं उच्चत्तेणं जहन्नेणं अंतोमुहुत्तं उक्कोसेणं पुव्वकोडीआउअं पालेंति पालेत्ता अप्पेगइआ निरयगामी जाव अप्पेगइआ सिज्झंति जाव अंतं करेंति।*

*से केणट्ठेणं भंते ! एवं वुच्चइ–महाविदेहे वासे २ ? गो० महाविदेहे णं वासे भरहेरवयहेम-वयहेरण्णवयहरिवासरम्मगवासेहिंतो आयामविक्खम्भसंठाणपरिणाहेणं विच्छिण्णतराए चेव विपुलतराए चेव महंततराए चेव सुप्पमाणतराए चेव महाविदेहा य इत्थ मणूसा परिवसंति, महाविदेहे अ इत्थ देवे महिड्ढीए जाव पलिओवमट्ठिइए परिवसइ।*

*से तेणट्ठेणं गोअमा ! एवं वुच्चइ–महाविदेहे वासे २, अदुत्तरं च णं गोअमा ! महाविदेहस्स वासस्स सासए नामधेज्जे पन्नत्ते, जं न कयाइ नासि ३।*

**वृ.** 'कहि ण' मित्यादि, क्व भदन्त ! इत्यादि सूत्रे स्वयं योज्यं, नवरं महाविदेहं नाम वर्षं–चतुर्थं क्षेत्रं प्रज्ञप्तं ?, गौतम ! नीलवतो वर्षधरपर्वतस्य चतुर्थस्य क्षेत्रिभागकारिणो दक्षिणेनेत्यर्थः 'निस-हस्स' इत्यादि व्यक्तं, नवरं पल्यङ्कसंस्थानसंस्थितमायतचतुरस्रत्वात्, विस्तारेण त्रयस्त्रिंशद्-योजनसहस्राणि षट् च योजनशतानि चतुरशीत्यधिकानि चतुरश्चैकोनविंशतिभागान् योजनस्य विष्कम्भेन, निषधविष्कम्भाद् द्विगुणविष्कम्भकत्वात्, अथ बाहादिसूत्रत्रयमाह– 'तस्स बाहा'-इत्यादि, तस्य महाविदेहस्य वर्षस्य पूर्वापरभागेन बाहा प्रत्येकं त्रयस्त्रिंशद् योजनसहस्राणि सप्त च योजनशतानि सप्तषष्ट्याऽधिकानि सप्त च एकोनविंशतिभागान् योजनस्य आयामेनेति, ननु।

॥ १ ॥ "महया धनुपट्ठाओ डहरागं सोहिआहि धनुपट्ठं।
जं तत्थ हवइ सेसं तस्सद्धे निद्दिसे बाहं॥"

इति वचनात् महतो धनुःपृष्ठाद् विदेहानां दक्षिणार्द्धस्योत्तरार्द्धस्य च सम्बन्धिनो लक्षमेकमष्टपञ्चाशत्सहस्राणि शतमेकं त्रयोदशाधिकं योजनानां षोडश च कलाः सार्द्धाः योजन १५८११३ कलाः १६ कलार्द्धं चेत्येवंपरिमाणाल्लघु धनुःपृष्ठं निषधासम्बन्धि लक्षमेकं चतुर्विंशति-सहस्राणि त्रीणि शतानि षट्चत्वारिंशदधिकानि योजनानां नव च कला योजन १२४३४६ कला ९ इत्येवंपरिमाणं शोधय, ततश्च शेषमिदं त्रयस्त्रिंशत्सहस्राणि सप्त शतानि सप्तषष्ट्यधिकानि

योजनानां सप्त च कला सार्द्धाः योजनानां ३३७६७ कला ७ कलार्द्धं च, एषामर्द्धे षोडश योजनसहस्राणि अष्टौ शतानि त्र्यशीत्यधिकानि योजनानां त्रयोदश च कलाः सपादाः इत्येवंरूपा बाहा विदेहानां सम्भवति, अत्र तु त्रयस्त्रिंशत्सहस्रादिरूपा उक्ता तत्किमिति ?, उच्यते, सर्वत्र वैताढ्यादिषु पूर्वबाहा अपरबाहा च यावती दक्षिणतस्तावती उत्तरतोऽपि परं व्यवहितत्वेन सा सम्मील्य नोक्ता, इयं तु सम्मिलितत्वात् संमील्यैवोक्ता सूत्रे दक्षिणबाहाप्रमाणमेवोत्तरबाहेत्येनमर्थं बोधयितुमिति अथास्य जीवामाह–

'तस्स जीवा' इत्यादि, तस्य विदेहस्योभयोः पार्श्वयोः एतदेव विवृणोति–'उत्तरदाहिणेणं'ति उत्तरपार्श्वे दक्षिणपार्श्वे वा एकं योजनलक्षं अष्टपञ्चाशच्च योजनसहस्राणि एकं च योजनशतं त्रयोदशोत्तरं षोडश चैकोनविंशतिभागान् योजनस्य किंचिद्विशेषाधिकान् परिक्षेपेण, यच्चान्यत्र सार्द्धाः षोडश कला उक्तास्तदत्र किंचिद्विशेषाधिकपदेन संगृहीतं, उध्धरितकलांशास्तु न विवक्षिता इति, अत्राधिकार्थसूचनार्थं करणान्तरं दर्श्यते–जम्बूद्वीपपरिधिस्तिस्रो लक्षाः षोडश सहस्राणि द्वे शते सप्तविंशत्यधिके योजनानां क्रोशत्रयमष्टाविंशं धनुःशतं त्रयोदशांगुलान्येकमर्द्धांगुलं योजन ३१६२२७ क्रोश ३ धनूंषि १२८ अंगुल १३ अर्द्धांगुलं, अत्र योजनराशिरर्द्धीक्रियते, लब्धमेकं लक्षमष्टापञ्चाशत्सहस्राणि शतमेकं त्रयोदशाधिकं योजन १५८११३, यत्त्वेकं योजनं शेषं तत्कलाः क्रियन्ते लब्धाः एकोनविंशति क्रोशत्रये च लब्धाः सपादाश्चतुर्दश कलाः उभयमीलने जाताः सपादास्त्रयस्त्रिंशत् कलाः तासामर्द्धे लब्धाः सार्द्धाः षोडश कलाः, यश्च कलाया अष्टमो भागोऽधिक उद्धरति यानि च धनुषामर्द्धे लब्धानि चतुःषष्टिर्धनूंषि यानि च सार्द्धत्रयोदशांगुलानामर्द्धे पादोनानि सप्तांगुलानि तदेतत्सर्वमल्पत्वान्न विवक्षितमिति ।

अधुना विदेहवर्षस्य भेदान्निरूपयन्नाह–'महाविदेहे ण' मित्यादि, महाविदेहं वर्षं चतुर्विधं–चतुष्प्रकारं पूर्वविदेहाद्यन्यतरस्य महाविदेहत्वेन व्यपदिश्यमानत्वात्, अत एव चतुर्षु–पूर्वापरविदेहदेवकुरूत्तरकुरुरूपेषु क्षेत्रविशेषेषु प्रत्यवतारः–समवतारो विचारणीयत्वेन यस्य तत्तथा, चतुर्विधस्य पर्यायो वाऽयं, तत्र पूर्वविदेहो यो मेरोर्जम्बूद्वीपगतः प्राग्विदेहः, एवं पश्चिमतः सोऽपरविदेहः दक्षिणतो देवकुरुनामा विदेहः उत्तरतस्तु उत्तरकुरुनामा विदेहः, ननु पूर्वापरविदेहयोः समानक्षेत्रानुभावकत्वेन महाविदेहव्यपदेश्यताऽस्तु, देवकुरूत्तरकुरूणां त्वकर्मभूमिकत्वेन कथं महाविदेहत्वेन व्यपदेशः? प्रस्तुतक्षेत्रयोर्भरताद्यपेक्षया महाभोगत्वात् महाकायमनुष्ययोगित्वान्महाविदेहदेवाधिष्ठेयत्वाच्च महाविदेहवाच्यता समुचितैवेति । अथास्य स्वरूपं वर्णयितुमाह–

'महाविदेह'इत्यादि, प्राग्वत्, अत्र यावत्करणात् 'आलिंगपुक्खरे इ वा जाव नानाविहपञ्चवण्णेहिं मणीहिं तणेहि अ उवसोभिए'इति, सम्प्रत्यत्र मनुजस्वरूपमाह–'महाविदेहे ण'–मित्यादि, प्राग्वत्, आभ्यां सूत्राभ्यामस्य कर्मभूमित्वमभाणि अन्यथा कर्षकादिप्रवृत्तानां तृणादीनां कृत्रिमत्वं तद्वर्षजातानां च मनुष्याणां पञ्चमगतिगामित्वं न स्यात्, अथास्य नामार्थं प्रश्नयन्नाह–

'से केणट्ठेण'मित्यादि, प्राग्वत्, प्रश्नसूत्रं सुगमं, उत्तरसूत्रे–गौतम ! महाविदेहो वर्षं भरतैरावतहैमवतहैरण्यहरिवर्षरम्यकवर्षेभ्यः आयामविष्कम्भसंस्थानपरिणाहेन, समाहारादेकवद्भावः, तत्रायामादित्रिकं प्रतीतं, परिणाहः–परिधिः, अत्र च व्यस्ततया विशेषणनिर्देशेऽपि योजना यथासम्भवं भवतीत्यायामेन महत्तरक एवं लक्षप्रमाणजीवाकत्वात्, तथा विष्कम्भेन विस्तीर्णतरक

एवं साधिकचतुरशीतिषट्शताधिकत्रयस्त्रिंशद्योजनसहस्रप्रमाणत्वात्, तथा संस्थानेन पल्यङ्करूपेण विपुलतरक एव पार्श्वद्वयेऽपीषयोस्तुल्यप्रमाणत्वात्, हैमवतादीनां पल्यङ्कसंस्थितत्वेऽपि पूर्वजगतीकोणानां संवृतत्वेन पूर्वापरेषयोर्वैषम्यादिति, तथा परिणाहेन सुप्रमाणतरक एव, तद्धनुःपृष्ठस्य जम्बूद्वीपपरिध्यर्द्धमानत्वादिति, अत एव महान्—अतिशयेन विकृष्टो—गरीयान् देहः—शरीरमाभोग इतियावत् येषां ते महाविदेहाः, अथवा महान्—अतिशयेन विकृष्टो—गरीयान् देहः—शरीरं कलेवरं येषां ते तथा, ईदृशास्तत्रत्या मनुष्याः, तथाहि—

तत्र विजयेषु सर्वदा पञ्चधनुःशतोच्छ्रया देवकुरूत्तरकुरुषु त्रिगव्यूतोच्छ्रयाः ततो महाविदेहमनुष्ययोगादिदमपि क्षेत्रं महाविदेहाः, महाविदेहश्च शब्दः स्वभावाद् बहुवचनान्त एव, एतच्च प्रागेवोक्तं, ततो बहुवचनेन व्यवह्रियते, दृश्यते च क्वचिदेकवचनान्तोऽपि, तदपि प्रमाणं, पूर्वमशेषं प्राग्वत् । सम्प्रत्युत्तरकुरूर्वक्तुकामस्तदुपयोगित्वेन प्रथमं गन्धमादनवक्षस्कारगिरिप्रश्नमाह—

*मू. (१४१) कहि णं भंते ! महाविदेहे वासे गंधमायणे नामं वक्खारपव्वए पन्नत्ते ?, गोअमा ! नीलवंतस्स वासहरपव्वयस्स दाहिणेणं मंदरस्स पव्वयस्स उत्तरपच्चत्थिमेणं गंधिलावइस्स विजयस्स पुरच्छिमेणं उत्तरकुराए पच्चत्थिमेणं एत्थ णं महाविदेहे वासे गंधमायणे नामं वक्खारपव्वए पन्नत्ते उत्तरदाहिणायए पाईणपडीणविच्छिण्णे तीसं जोअणसहस्साइं दुन्नि अ नउत्तरे जोअणसए छच्च य एगूणवीसइभाए जोअणस्स आयामेणं नीलवंतवासहरपव्वयंतेणं चत्तारि जोअणसयाइं उद्धं उच्चत्तेणं चत्तारि गाउअसयाइं उव्वेहेणं पञ्च जोअणसयाइं विक्खम्भेणं तयनंतरं च णं मायाए २ उस्सेहुव्वेहपरिवद्धीए परिवद्धमाणे २ विक्खम्भपरिहाणीए परिहायमाणे २ मंदरपव्वयंतेणं पञ्च जोअणसयाइं उद्धं उच्चत्तेणं पञ्च गाउअस-याइं उव्वेहेणं अंगुलस्स असंखिज्जइभागं विक्खम्भेणं पन्नत्ते गयदंतसंठाणसंठिए सव्वरयणामए अच्छे, उभओ पासिं दोहिं पउमवरवेइआहिं दोहि अ वनसंडेहिं सव्वओ समंता संपरिक्खित्ते, गंधमायणस्स णं वक्खारपव्वयस्स उप्पिं बहुसमरमणिज्जे भूमिभागे जाव आसयंति ।*

*गंधमायणे णं वक्खारपव्वए कति कूडा प० गो० ! सत्त कूडा, तं०—सिद्धायतनकूडे १ गंधमायण२ गंधिलावई३ उत्तरकूरू ४ फलिह ५ लोहियक्ख ६ आणंद ७ ।*

*कहि णं भंते ! गंधमायणे वक्खारपव्वए सिद्धाययनकूडे नामं कूडे प० गो० मंदरस्स पव्वयस्स उत्तरपच्चत्थिमेणं गंधमायणकूडस्स दाहिणपुरत्थिमेणं, एत्थ णं गंधमायणे वक्खारपव्वए सिद्धाययन नामं कूडे प०, जं चेव चुल्लहिमवंते सिद्धाययनकूडस्स पमाणं तं चेव एएसिं सव्वेसिं भाणिअव्वं एवं चेव विदिसाहिं तिन्नि कूडा भाणि०, चउत्थेत तिअस्स उत्तरपच्चत्थिमेणं पञ्चमस्स दाहिणेणं, सेसा उ उत्तरदाहिणेणं, फलिहलोहिअक्खेसु भोगंकरबोघवईओ देवयाओ सेसेसु सरिसनामया देवा, छसुवि पासायवडेंसगा रायहाणीओ विदिसासु ।*

*से केणट्ठेणं भंते ! एवं वुच्चइ गंधमायणे वक्खारपव्वए २ ?, गो० ! गंधमायणस्स णं वक्खारपव्वयस्स गंधे से जहा नामए कोट्ठपुडाण वा जाव पीसिज्जमाणाण वा उक्किरिज्जमाणाण वा विकिरिज्जमाणाण वा परिभुज्जमाणाण वा जाव ओराला मणुण्णा जाव गंधा अभिनिस्सवंति, भवे एआरूवे ?, नो इणट्ठे समट्ठे, गंधमायणस्स णं इत्तो इट्ठतराए चेव जाव गंधे पन्नत्ते ।*

*से एएणट्ठेणं गोअमा ! एवं वुच्चइ गंधमायणे वक्खारपव्वए २, गंधमायणे अ इत्थ देवे महिद्धीए परिवसइ, अदुत्तरं च णं सासए नामधिज्जे इति ।*

वृ. 'कहि ण'मित्यादि, क्व भदन्त ! महाविदेहे वर्षे गन्धमादनो नाम वक्षसि–मध्ये स्वगोप्यं क्षेत्रं द्वौ संभूय कुर्वन्तीति वक्षस्काराः, तज्जातीयोऽयमिति वक्षस्कारपर्वतो गजदन्तापर्यायः प्रज्ञप्तः ? गौतम ! नीलवन्नाम्नो वर्षधरपर्वतस्य दक्षिणभागेन मन्दरस्य पर्वतस्य–मेरोरुत्तर- पश्चिमेन- उत्तरस्याः पश्चिमायाश्च अन्तरालवर्त्तिना दिग्विभागेन वायव्यकोणे इत्यर्थः, गन्धिलावत्याः- शीतोदोत्तरकूलवर्त्तिनोऽष्टमविजयस्य पूर्वेण उत्तरकुरूणां–सर्वोत्कृष्टभोगभूमिक्षेत्रस्य पश्चिमेन अत्रान्तरे महाविदेहे वर्षे गन्धमादनो नाम वक्षस्कारपर्वतः प्रज्ञप्तः, उत्तरदक्षिणयोरायतः प्राचीनप्रतीचीनयोः–पूर्वपश्चिमयोर्दिशोः विस्तीर्णं, त्रिंशदयोजनसहस्राणि द्वे च नवोत्तरे योजनशते षट् च एकोनविंशतिभागान् योजनस्यायामेन, अत्र यद्यपि वर्षधराद्रि-सम्बद्धमूलानां वक्षस्कारगिरीणां साधिकैकादशाष्टशतद्विचत्वारिंशद्योजनप्रमाणकुरुक्षेत्रान्त- र्वर्त्तिनामेतावानायामो न सम्पद्यते तथाऽप्येषां वक्रभावपरिणतत्वेन बहुतरक्षेत्रावगाहित्वात् सम्भवतीति, नीलवद्वर्षधरसमीपे चत्वारि योजनशतानि ऊर्ध्वोच्चत्वेन चत्वारि गव्यूतशतानि उद्वेधेन पञ्चयोजनशतानि विष्कम्भेन, तदनन्तरं मात्रया २–क्रमेण क्रमेणोत्सेधोद्वेधयोः–उच्चत्वोण्डत्वयोः परिवृद्धया परिवर्द्धमानः २ विष्कम्भपरिहाण्या परिहीयमाणः २ –

–मन्दरपर्वतस्य–मेरोरन्ते–समीपे पञ्चयोजनशतान्यूर्ध्वोच्चत्वेन पञ्चगव्यूतिशतानि उद्वेधेन अंगुलस्यासङ्ख्यभागं विष्कम्भेन प्रज्ञप्तः, गजदन्तस्य यत्संस्थानं–प्रारम्भे नीचत्वमन्ते उच्चत्व- मित्येवंरूपं तेन संस्थितः, सर्वात्मना रत्नमयः, श्रीउमास्वातिवाचककृतजम्बूद्वीपसमासप्रकरणे तु कनकमय इति, शेषं प्राग्वत्, अथास्य भूमिसौभाग्यमावेदयति– 'गन्धमायण' इत्यादि, गन्धमाद- नस्य वक्षस्कारपर्वतस्योपरि बहुसमरमणीयो भूमिभागः प्रज्ञप्तः, अत्र यावत्पदाद्वैताढ्याद्रिशिखरत- लवर्णकगतं सर्वं बोध्यं । सम्प्रत्यत्र कूटवक्तव्यतामाह– 'गन्धमायण' इत्यादि, व्यक्तं, नवरं स्फटिककूटं स्फटिकरत्नमयत्वात् लोहिताक्षकूटं लोहितरत्नवर्णत्वात्, आनन्दनाम्नो देवस्य कूटमानन्दकूटं । ननु यथा वैताढ्यादिषु सिद्धायत- नादिकूटव्यवस्था पूर्वापरायतत्वेन तद्वदत्रापि उत कश्चिद्विशेष इत्याह– 'कहि णं भंते !' इत्यादि, व्यक्तं, नवरं यथा वैताढ्यादिषु सिद्धायतनकूटं समुद्रासन्नं पूर्वेण ततः क्रमेण शेषाणि स्थितानि तथाऽत्र मन्दरासन्नं सिद्धायतनकूटं मन्दरादुत्तर- पश्चिमायां वायव्यां दिशि गन्धमादनकूटस्य तु दक्षिणपूर्वस्यां–आग्नेय्यामस्ति, यदेव क्षुद्रहिमवति सिद्धायतनकूटस्य प्रमाणं तदेवैतेषां सर्वेषां सिद्धायतनादिकूटानां भणितव्यं, अर्थाद् वर्णनमपि तद्वदेवेति, व्यवस्था तु शेषकूटानामत्र भिन्नप्रका- रेणेति मनसिकृत्याह–

''एवं चेव' इत्यादि, एवं चेवेत्येवं–सिद्धायतनानुसारेण विदिक्षु–वायव्यकोणेषु त्रीणि कूटानि सिद्धायतनादीनि भणितव्यानि, उक्तवक्तव्यानां मिश्रितनिर्देशस्तु 'एवं चत्तारिवि दारा भाणिअव्वा' इति सूत्रविवरणोक्तयुक्त्या समाधेयः, अयमर्थः–मेरुत उत्तरपश्चिमायां सिद्धाय- तनकूटं, तस्मादुत्तरपश्चिमायां गन्धमादनकूटं तस्माच्च गन्धिलावतीकूटमुत्तरपश्चिमायामिति, अत्र तिस्रो वायव्यो दिशः समुदिता विवक्षिता इति बहुत्वेन निर्देशः, चतुर्थमुत्तरकुरुकूटं तृतीयस्य गन्धिलावतीकूटस्योत्तरपश्चिमायां पञ्चमस्य स्फटिककूटस्य दक्षिणतः, ननु यथा तृतीयाद् गन्धिला-

वतीकूटाच्चतुर्थं उत्तरकुरुकूटमुत्तरपश्चिमायां चतुर्थाच्च तृतीयं दक्षिणपूर्वस्यां तथा पञ्चमात् स्फटिककूटात् कथं दक्षिणपूर्वस्यां चतुर्थं कूटं न सङ्गच्छते ?, उच्यते, पर्वतस्य वक्रत्वेन चतुर्थकूटत एव दक्षिणपूर्वां प्रति वलनात् पञ्चमाच्चतुर्थं दक्षिणस्यामिति, शेषाणि स्फटिककूटादीनि त्रीणि उत्तरदक्षिणश्रेणिव्यवस्थाया स्थितानि, कोऽर्थः ?

पंचमं चतुर्थस्योत्तरतः षष्ठस्य दक्षिणतः षष्ठं पंचमस्योत्तरतः सप्तमस्य दक्षिणतः सप्तमं षष्ठस्योत्तरत इति परस्परमुत्तरदक्षिणभाव इति, अत्र पंचशतयोजनविस्तारण्यपि कूटानि यत् क्रमहीयमानेऽपि प्रस्तुतगिरिक्षेत्रे मान्ति तत्र सहस्राङ्ककूटरीतिर्ज्ञेया, अथैषामेवाधिष्ठातृस्वरूपं निरूपयति–'स्फटिककूटलोहिताक्षकूटयोः पंचमषष्ठयोर्भोगङ्कराभोग- वत्यौ द्वे देवते -दिक्कुमार्यौ वसतः, शेषेषु कूटसदृशनामका देवाः, षट्स्वपि प्रासादावतंसकाः स्वस्वाधिपतिवासयोग्याः, एषां च राजधान्योऽसङ्ख्याततमे जम्बूद्वीपे विदिक्षु उत्तरपश्चिमासु ।

सम्प्रति नामार्थं निर्दिदिक्षुराह– 'से केणट्ठेणं' इत्यादि, प्रायः सुगमं, नवरं सूत्रे गन्धमादनस्य वक्षस्कारपर्वतस्य गन्धः स यथा नाम कोष्ठपुटानां यावत्पदात् तगरपुटादीनां संग्रहः पिष्यमाणानां वा -संचूर्ण्यमानानां उत्कीर्यमाणानां वा विकीर्यमाणानां वा परिभुज्यमानानां वा यावत्पदात् भाण्डात् भाण्डान्तरं वा संह्रियमाणानामिति, उदारा–मनोज्ञाः यावत्पदात् गन्धा इति कर्तृपदं, अभिनिस्रवन्ति, एवमुक्ते शिष्यः पृच्छति–भवेदेतद्रूपो गन्धमादनस्य गन्ध इति, भगवानाह– नायमर्थः समर्थः, गन्धमादनस्य इतो - भवदुक्ताद् गन्धादिष्टतरक एव यावतकरणात् कान्ततरक एवोत्यादिपदग्रहः, निगमनवाक्ये तेनार्थेन गौतम एवमुच्यते, गन्धेन स्वयं माद्यतीव मदयति वा तन्निवासिदेवदेवीनां मनांसि इति गन्धमादनः, 'कृद्वहुल' मिति वचनात् कर्त्तर्यनटप्रत्ययः, 'धञ्युपसर्गस्य वे' त्यत्र बहुलाधिकारदतिशायितादिवत् मकाराकारस्य दीर्घत्वमिति, गन्धमादन- नामा चात्र देवो महर्द्धिकः परिवसति, तेन तद्योगादिति नाम, अन्यत् सर्वं प्राग्वत् ।। अथ यासामुप- योगित्वेन गन्धमादनो निरूपितस्ता उत्तरकुरू निरूपयति–

**मू. (१४२)** *कहि णं भंते ! महाविदेहे वासे उत्तरकुरा नामं कुरा पं०, गो० ! मंदरस्स पव्वयस्स उत्तरेणं नीलवंतस्स वासहरपव्वयस्स दक्खिणेणं गंधमायणस्स वक्खारपव्वयस्स पुरत्थिमेणं मालवंतस्स वक्खारपव्वयस्स पच्चत्थिमेणं एत्थ णं उत्तरकुरा नामं कुरा पन्नत्ता पाईणपडीणायया उदीणदाहिणविच्छिण्णा अद्धचंदसंठाणसंठआ इक्कारस जोअणसहस्साइं अट्ठ य बायाले जोअणसए दोन्नि अ एगूणवीसइभाए जोअणस्स विक्खम्भेणंति ।*

*तीसे जीवा उत्तरेणं पाईणपडीणायया दुहा वक्खारपव्वयं पुट्ठा, तंजहा–पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं वक्खारपव्वयं पुट्ठा एवं पच्चत्थिमिल्लाए जाव पच्चत्थिमिल्लं वक्खारपव्वयं पुट्ठा, तेवन्नं जोअणसहस्साइं आयामेणन्ति ।*

*तीसे णं धनुं दाहिणेणं सट्ठिं जोअणसहस्साइं चत्तारि अ अट्ठारसे जोअणसए दुवालस य एगूणवीसइभाए जोअणस्स परिक्खेवेणं, उत्तरकुराए णं भंते ! केरिसए आयारभावपडोआरे प० ?*

*गोयमा ! बहुसमरमणिज्जे भूमिभागे पन्नत्ते, एवं पुव्ववण्णिआ जच्चेव सुसमसुसमावत्तव्वया सच्चेव नेअव्वा जाव पउमगंधा १ मिअगंधा २ अममा ३ सहा ४ तेतली ५ सणिंचारी ६ ।*

**वृ.** 'कहि ण'मित्यादि, क्व भदन्त ! महाविदेहे वर्षे उत्तरकुरवो नाम्ना कुरवः प्रज्ञप्ताः ?,

गौतम ! मन्दरस्य पर्वतस्योत्तरतो नीलवतो वर्षधरपर्वतस्य दक्षिणतो गन्धमादनस्य वक्षस्कारपर्वतस्य पूर्वतो वक्ष्यमाणस्वरूपस्य माल्यवतः पश्चिमतः अत्रान्तरे उत्तरकुरवो नाम्ना कुरवः प्रज्ञप्ताः, प्राकपश्चिमायता उत्तरदक्षिणाविस्तीर्णा अर्द्धचन्द्राकारा एकादशयोजनसहस्राण्यष्टौ शतानि द्वाचत्वा- रिंशदधिकानि द्वौ चैकोनविंशतिभागौ योजनस्य विष्कम्भेन, अत्रोपपत्तिर्यथा महाविदेहविष्कम्भात् ३३६८४ कला ४ इत्येवंरूपात् मेरुविष्कम्भेऽपनीते शेषस्यार्द्धे कृते उक्ताङ्कराशि स्यात्, ननु वर्षवर्षधरादीनां क्रमव्यवस्था प्रज्ञापकापेक्षयाऽस्ति यथा प्रज्ञापकासन्नं भरतं ततो हिमवानित्यादि, ततो विदेहकथनानन्तरं क्रमप्राप्ता देवकुरूर्विमुच्य कथमुत्तरकुरूमां निरूपणं ?, उच्यते, चतुर्दिग्मुखे विदेहे प्रायः सर्वं प्रादक्षिण्येन व्यवस्थाप्यमानं समये श्रूयते, तेन प्रथमत उत्तरकुरुकथनं भरतपार्श्वस्थौ विद्युत्प्रभसौमनसौ विहाय गन्धमादनमाल्यवद्वक्षस्कार- प्ररूपणं भरतासन्नविजयान् विहाय कच्छमहाकच्छादिविजयकथनं चेति, अथैतासां जीवामाह—

'तीसे' इत्यादि, तासामुत्तरकुरूणां, सूत्रे एकवचनं प्राकृतत्वात्, जीवा—उत्तरतो नीलवद्वर्ष- धरासन्ना कुरुचरमप्रदेशश्रेणिः पूर्वापरायता द्विधा पूर्वपश्चिमभागाभ्यां वक्षस्कारपर्वतं स्पृष्टा, एतदेव विवृणोति, तद्यथा—पौरस्त्यया कोट्या पौरस्त्यं वक्षस्कारपर्वतं माल्यवन्तं स्पृष्टा पाश्चात्यया पाश्चात्यं गन्धमादननामानं वक्षस्कारपर्वतं स्पृष्टा, त्रिपञ्चाशद्योजनसहस्राणि आयामेन, तत्कथमिति उच्यते, मेरोः पूर्वस्यां दिशि भद्रशालवनमायामतो द्वाविंशतिर्जनसहस्राणि एवं पश्चिमायामपि, उभयमीलने जातं चतुश्चत्वारिंशत्सहस्राणिमेरुविष्कम्भे दशसहस्रयोजनात्मके प्रक्षिप्ते जातं चतुष्प- ञ्चाशदयोजनसहस्राणि, एकैकस्य वक्षस्कारगिरेर्वर्षधरसमीपे पृथुत्वं पञ्च योजनशतानि ततो द्वयोर्वक्षस्कारगिर्यो पृथुत्वपरिमाणं योजनसहस्रं तत्पूर्वराशेरपनीयते, जातः पूर्वराशिस्त्रिपञ्चा- शदयोजनसहस्राणीति ।

अथैतासां धनुःपृष्ठमाह—'तीसे णं धनुं दाहिणेण' मित्यादि, तासां धनुःपृष्ठं दक्षिणतो मेर्वासन्न इत्यर्थः, षष्टियोजनसहस्राणि चत्वारि च योजनशतानि अष्टादशानि—अष्टादशाधिकानि द्वादश चैकोनविंशतिभागान् योजनस्य परिक्षेपेण, तथाहि—एकैकवक्षस्कारगिरेरायामस्त्रिंश- द्योजनसहस्रिणि द्वे च नवोत्तरे षट् च कलाः, ततो द्वयोर्वक्षस्कारयोर्मीलने यथोक्तं मानमिति, अथैतासां स्वरूपप्ररू- पणायाह—'उत्तरकुराए ण' मित्यादि, उत्तरकुरूणां भदन्त ! कीदृश आकारभावप्रत्यवतारः— स्वरूपाविर्भावः प्रज्ञप्तः ?, गौतम ! बहुसमरमणीयो भूमिभागः प्रज्ञप्तः, एवमुक्तन्यायेन पूर्वं भरतप्रकरणे वर्णिता या एव सुषमसुषमायाः आधारकस्य वक्तव्यता सैव निरवशेषा नेतव्या, कियत्पर्यन्तमित्याह—यावत्षड्प्रकाराः पद्मगन्धादयो मनुष्यास्तावदिति ।

उक्तोत्तरकुरुवक्तव्यताऽथ तद्वर्त्तिन यमकपर्वतौ प्ररूपयति—

*मू. (१४३) कहि णं भंते ! उत्तरकुराए जमगानामं दुवे पव्वया प० गो० नीलवंतस्स वासहरपव्वयस्स दक्खिणिल्लाओ चरिमन्ताओ अट्ठजोअणसए चोत्तीसे चत्तारि अ सत्तभाए जोअणस्स अबाहाए सीआए महानईए उभओ कूले एत्थ णं जमगानामं दुवे पव्वया पन्नत्ता ।*

*जोअणसहस्सं उड्डं उच्चत्तेणं अड्ढाइज्जाइं जोअणसयाइं उव्वेहेणं मूले एगं जोअणसहस्सं आयामविक्खम्भेणं मज्झे अद्धट्ठमाणि जोअणसयाइं आयामविक्खम्भेणं उवरिं पंच जोअणसयाइं आयामविक्खम्भेणं मूले तिन्नि जोअणसहस्साइं एगं च बावट्ठं जोअणसयं किंचिविसेसाहिअं*

परिक्खेवेणं मज्झे दो जोअणसहस्साइं तिण्णि बावत्तरे जोअणसए किंचिविसेसाहिए परिक्खेवेणं उवरिं एगं जोअणसहस्सं पञ्च य एकासीए जोअणसए किंचिविसेसाहिए परिक्खेवेणं मूले विच्छिन्ना मज्झे संखित्ता उप्पिं तणुआ जमगसंठाणसंठिआ सव्वकणगामया अच्छा सण्हा पत्तेअं २ पउम-वरवेइआपरिक्खित्ता पत्तेअं २ वनसंडपरिक्खित्ता।

ताओ णं पउमवरवेइआओ दो गाऊआइं उद्धं उच्चत्तेणं पञ्च धनुसयाइं विक्खंभेणं, वेइआवणसंडवण्णओ भाणिअव्वो, तेसि णं जमगपव्वयाणं उप्पिं बहुसमरमणिज्जे भूमिभागे पन्नत्ते, जाव तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं दुवे पासायवडेंसगा पं०, ते णं पासायवडेंसगा बावट्ठिं जोअणाइं अद्धजोअणं च उद्धं उच्चत्तेणं इक्कतीसं जोअणाइं कोसं च आयामविक्खंभेणं पासायवण्णओ भाणिअव्वो, सीहासणा सपरिवारा जाव एत्थ णं जमगाणं देवाणं सोलसण्हं आयरक्खदेवसाहस्सीणं सोलस महासणसाहस्सीओ पन्नत्ताओ।

से केणट्ठेणं भंते! एवं वुच्चइ जमगा पव्वया २ ?, गोअमा! जमगपव्वएसु णं एत्थ २ देसे तहिं २ बहवे खुड्डाखुड्डिआसु वावीसु जाव बिलपंतिआसु बहवे उप्पलाइं जाव जमगवण्णाभाइं जमगा य इत्थ दुवे देवा महिड्ढीया, ते णं एत्थ चउण्हं सामानिअसाहस्सीणं जाव भुंजमाणा विहरंति, से तेणट्ठेणं गो० ! एवं वुच्चइ—जमगपव्वया २, अदुत्तरं च णं सासए नामधिज्जे जाव जमगपव्वया २ । कहि णं भंते! जमगाणं देवाणं जमिगाओ रायहाणीओ प० गो० जंबुद्दीवे दीवे मन्दरस्स पव्वयस्स उत्तरेणं अन्नंमि जंबुद्दीवे २ बारस जोअणसहस्साइं ओगाहित्ता एत्थ णं जमगाणं देवाणं जमिगाओ रायहाणीओ प० बारस जोअणसहस्साइं आयामविक्खम्भेणं सत्तत्तीसं जोअणसहस्साइं नव य अडयाले जोअणसए किंचिविसेसाहिए परिक्खेवेणं।

पत्तेअं २ पायारपरिक्खित्ता, ते णं पागारा सत्तत्तीसं जोअणाइं अद्धजोअणं च उद्धं उच्चत्तेणं मूले अद्धत्तेरस जोअणाइं विक्खम्भेणं मज्झे छ सकोसाइं जोअणाइं विक्खम्भेणं उवरिं तिन्नि सअद्धकोसाइं जोअणाइं विक्खम्भेणं मूले विच्छिन्ना मज्झे संखित्ता उप्पिं तणुआ बाहिं वट्टा अंतो चउरंसा सव्वरयनामया अच्छा, ते णं पागारा णानामणिपञ्चवण्णेहिं कविसीसएहिं उवसोहिआ

तंजहा—किण्हेहिं जाव सुक्किल्लेहिं, ते णं कविसीसगा अद्धकोसं आयामेणं देसूणं अद्धकोसं उद्धं उच्चत्तेणं पञ्च धनुसयाइं बाहल्लेणं सव्वमणिमया अच्छा, जमिगाणं रायहाणीणं एगमेगाए बाहाए पणवीसं २ पणवीसं दारसयं पन्नत्तं, ते णं दारा बावट्ठिं जोअणाइं अद्धजोअणं च उद्धं उच्चत्तेणं इक्कतीसं जोअणाइं कोसं च विक्खम्भेणं तावइअं चेव पवेसेणं, सेआ वरकणगथूभिआगा एवं रायप्पसेणइज्जविमाणवत्तव्वयाए दारवण्णओ जाव अट्ठट्ठमंगलगाइंति, जमियाणं रायहाणीणं चउद्दिसिं पञ्चपञ्च जोअणसए अबाहाए चत्तारि वनसण्डा प० असोगवने १ सत्तिवण्णवने २ चंपगवने ३ चूअवणे ४, ते णं वणसंडा साइरेगाइं बारसजो- अणसहस्साइं आयामेणं पञ्च जोअणसयाइं विक्खम्भेणं पत्तेअं १ पागारपरिक्खित्ता किण्हा वनसण्डवण्णओ भूमिओ पासायवडेंसगा य भा०।

जमिगाणं रायहाणीणं अंतो बहुसमरमणिज्जे भूमिभागे प० वण्णगोत्ति, तेसि णं बहुमज्झदेसभाए एत्थ णं दुवे उवयारियालयणा पन्नत्ता, बारस जोअण- सयाइं आयामविक्खम्भेणं तिन्नि जोअणसहस्साइं सत्त य पञ्चानउए जोअणसए परिक्खेवेणं अद्धकोसं च बाहल्लेणं

सव्वजंबूणयामया अच्छा, पत्तेअं २ पउमवरवेइआपरिक्खित्ता, पत्तेअं २ वणसंडवण्णओ भा०, तिसोवाणपडिरूवगा तोरणचउद्दिसिं भूमिभागा य भा० तस्स णं बहुमज्झदेसभाए एत्थ णं एगे पासायवडेंसए पन्नत्ते बावट्ठिं जोअणाइं अद्धजोअणं अद्धजोअणं च उद्धं उच्चत्तेणं इक्कतीसं जोअणाइं कोसं च आयामविक्खम्भेणं वण्णओ उल्लोआ भूमिभागा सीहासणा सपरिवारा।

— एवं पासायपंतीओ एक्कतीसं जोअणाइं कोसं च उद्धं उच्चत्तेणं साइरेगाइं अद्धसोलसजोअणाइं आयामविक्खम्भेणं बिइअपासायपंती ते णं पासायवडेंसया साइरेगाइं अद्धसोलसजोअणाइं उद्धं उच्चत्तेणं साइरेगाइं अद्धट्ठमाइं जोअणाइं आयामविक्खम्भेणं तइअपासायपंती ते णं पासायवडेंसया साइरेगाइं अद्धट्ठमाइं जोअणाइं उद्धं उच्चत्तेणं साइरेगाइं अद्धुट्ठजोअणाइं आयामविक्खम्भेणं वण्णओ सीहासणा सपरिवारा, तेसि णं मुलपासायवडिंसयाणं उत्तरपुरच्छिमे दिसीभाए एत्थ णं जमगाणं देवाणं सहाओ सुहम्माओ पन्नत्ताओ।

— अद्धतेरस जोअणाइं आयामेणं छस्सकोसाइं जोअणाइं विक्खम्भेणं नव जोअणाइं उद्धं उच्चत्तेणं अनेगखम्भसयसण्णिविट्ठा सभावण्णओ, तासिणं सभाणं सुहम्माणं तिदिसिं तओ दारा पन्नत्ता, ते णं दारा दो जोअणाइं उद्धं उच्चत्तेणं विक्खम्भेणं तावइअं चेव पवेसेणं, सेआ वण्णओ जाव वणमाला, तेसि णं दाराणं पुरओ पत्तेअं २ तओ मुहमंडवा पन्नत्ता, ते णं मुहमंडवा अद्धतेरसजोअणाइं आयामेणं छस्सकोसाइं जोअणाइं विक्खम्भेणं साइरेगाइं दो जोअणाइं उद्धं उच्चत्तेणं जाव दारा भूमिभागायत्ति, पेच्छाघरमंडवाणं तं चेव पमाणं भूमिभागो मणिपेढिआओत्ति, ताओ णं मणिपेढिआओ जोअणं आयामविक्खम्भेणं अद्धजोअणं बाहल्लेणं सव्वमणिमईआ सीहासणा भा०, तेसि णं पेच्छाघरमंडवाणं पुरओ मणिपेढिआओ प०, ताओ णं मणिपेढिआओ दो जोअणाइं आयामविक्खम्भेणं जोअणं बाहल्लेणं सव्वमणिमईओ, तासि णं उप्पिं पत्तेअं २ तओ थूभा, ते णं थूभा दो जोअणाइं उद्धं उच्चत्तेणं दो जोअणाइं आयामविक्खम्भेणं सेआ संखतल जाव अट्ठट्ठमंगलया, तेसि णं थऊभाणं चउद्दिसिं चत्तारि मणिपेढिआओ प०।

— ताओ णं मणिपेढिआओ जोअणं आयामविक्खम्भेणं अद्धजोअणं बाहल्लेणं, जिनपडिमाओ वत्तव्वाओ, चेइअरुक्खाणं मणिपेढिआओ दो जोअणाइं आयामविक्खम्भेणं जोअणं बाहल्लेणं चेइअरुक्खवण्णओत्ति, तेसि णं चेइअरुक्खाणं पुरओ ताओ मणिपेढिआओ पन्नत्ताओ, ताओ णं मणिपेढिआओ जोयणं आयामविक्खम्भेणं अद्धजोअणं बाहल्लेणं, तासि णं उप्पिं पत्तेअं २ महिंदज्झया पन्नत्ता, ते णं अद्धट्ठमाइं जोअणाइं उद्धं उच्चत्तेणं अद्धकोसं उव्वेहेणं अद्धकोसं बाहल्लेणं वइरामयवट्ट वण्णओ वेइआवणसंडतिसोवाणतोरणा य भाणिअव्वा, तासि णं सभाणं सुहम्माणं छच्चमणोगुलिआसाहस्सीओ पन्नत्ताओ, तंजहा—

पुरत्थिमेणं दो साहस्सीओ पन्नत्ताओ पच्चत्थिमेणं दो साहस्सीओ दक्खिणेणं एगा सहस्सी उत्तरेणं एगा जाव दामा चिट्ठंतित्ति, एवं गोमाणसिआओ, नवरं धूवघडिआओत्ति, तासि णं सुहम्माणं सभाणं अंतो बहुसमरमणिज्जे भूमिभागे पन्नत्ते, मणिपेढिआ दो जोअणाइं आयामविक्खम्भेणं जोअणं बाहल्लेणं, तासि णं मणिपेढिआणं उप्पिं माणवए चेइअखम्भे महिंदज्झयप्पमाणे उवरिं छक्कोसे ओगाहित्ता हेट्ठा छक्कोसे वज्जित्ता जिनसकहाओ पन्नत्ताओत्ति, माणवगस्स पुव्वेणं सीहासणा सपरिवारा पच्चत्थिमेणं सयणिज्जवण्णओ, सयणिज्जाणं उत्तरपुरत्थिमे दिसिभाए खुड्डगमहिंदज्झया मणिपेढिआविहूणा महिंदज्झयप्पमाणा, तेसिं अवरेणं चोप्फाला पहरणकोसा

*- तत्थ णं बहवे कलिहरयणपामुक्खा जाव चिट्ठंति, सुहम्माणं उप्पिं अट्ठट्ठमंगलगा, तासि णं उत्तरपुरत्थिमेणं सिद्धायणा स चेव जिनघराणवि गमोत्ति, नवरं इमं नाणत्तं—एतेसि णं बहुमज्झदेसभाए पत्तेअं २ मणिपेढिआओ दो जोअणाइं आयामविक्खम्भेणं जोअणं बाहल्लेणं, तासिं उप्पिं पत्तेअं २ देवच्छंदया पन्नत्ता।*

*दो जोअणाइं आयामविक्खम्भेणं साइरेगाइं दो जोअणाइं उद्धं उच्चत्तेणं सव्वरयणामया जिनपडिमा वण्णओ जाव धूवकडुच्छुगा, एवं अवसेसाणवि सभाणं जाव उववायसभाए सयणिज्जं हरओ अ, अभिसेअसभाए बहुआभिसेक्कं भंडे, अलंकारिअसभाए बहु अलंकारिअभंडे चिट्ठइ, ववसायसभासु पुत्थरयणा, नंदा पुक्खरिणीओ, बलिपेढा दो जोअणाइं आयामविक्खम्भेणं जोअणं बाहल्लेणं जावत्ति।*

वृ. 'कहि ण'मित्यादि, क्व भदन्त! उत्तरकुरुषु यमकौ नाम द्वौ पर्वतौ प्रज्ञप्तौ ?, गौतम! नीलवतो वर्षधरपर्वतस्य दाक्षिणात्याच्चरमान्तात् इत्यत्र दाक्षिणात्यं चरमान्तं आरभ्येति ज्ञेयं, ल्यब्लोपे पञ्चमी, दाक्षिणात्याच्चरमान्तादारभ्यार्वाक् दक्षिणाभिमुखमित्यर्थः, अष्टौ योजनशतानि चतुस्त्रिंशदधिकानि चतुरश्च सप्तभागाना योजनस्याबाधयाअपान्तराले कृत्वेति शेषः शीताया महानद्या उभयोः कूलयोः एकः पुर्वकूले एकः पश्चिमकूले इत्यर्थः, अत्रान्तरे यमकौ नाम द्वौ पर्वतौ प्रज्ञप्तौ, एकं योजनसहस्रमूर्ध्वोच्चत्वेन अर्द्धतृतीयानि योजनशतान्युद्वेधेन उच्छ्रयचतुर्थांशस्य भूम्यवगाहात् मूले योजनसहस्रमायामविष्कम्भाभ्यां वृत्ताकारत्वात् मध्ये—भूतलतः पञ्चयोजनशतातिक्रमेऽर्द्धाष्टमानि योजनशतानि आयामविष्कम्भाभ्यां उपरि—सहस्रयोजनातिक्रमे पञ्चयोजनशतान्यायामविष्कम्भाभ्यां मूले त्रीणि योजनसहस्राणि एकं च योजनशतं द्वाषष्ट्यधिकं किंचिद्विशेषाधिकं कियत्कलमित्यर्थः।

परिक्षेपेण, एवं मध्यपरिधिरुपरितनपरिधिश्च स्वयम्भूयह्यौ, मूले विस्तीर्णौ मध्ये संक्षिप्तावुपरि तनुकौ यमकौ—यमलजातौ भ्रातरौ तयोर्यत्संस्थानं तेन संस्थितौ, परस्परं सदृशसंस्थानावित्यर्थः, अथवा यमका नाम शकुनिविशेषास्तत्संस्थानसंस्थितौ, संस्थानं चानयोर्मूलतः प्रारभ्य संक्षिप्तसंक्षिप्तप्रमाणत्वेन गोपुच्छस्येव बोध्यं, सर्वात्मना कनकमयौ शेषं व्यक्तं, अष्टशताद्युक्तोत्पत्तिरेवं - नीलवद्वर्षधरस्य यमकयोश्च प्रथमं यमकयोः प्रथमह्रदस्य च द्वितीयं प्रथमह्रदस्य द्वितीयह्रदस्य च तृतीयं द्वितीयह्रदस्य तृतीयह्रदस्य च चतुर्थं तृतीयह्रदस्य चतुर्थह्रदस्य च पंचमं चतुर्थह्रदस्य पंचमह्रदस्य च षष्ठं पंचमह्रदस्य वक्षस्कारगिरिपर्यन्तस्य च सप्तमं एतानि च सप्ताप्यन्तराणि मप्रमाणानि, ततश्च कुरुविष्कम्भात् योजन ११८४२ कला २ इत्येवंरूपात् योजनसहस्रायामयोर्यमकयोः योजनसहस्रमेकं तावत्प्रमाणायामानां पंचानां ह्रदानां च योजनसहस्रे (कैं) कं उभयमीलने योजनसहस्रषट्कं शोध्यते च जातं योजन ५८४२ कला २ ततः सप्तभिर्भागे ह्रते ८३४, यच्चावशिष्टं कुरुसत्कं कलाद्वयं तदल्पत्वान्न विवक्षितमिति।

अत्रैवानन्तरोक्तवेदिकावनखण्डप्रमाणाद्याह—'ताओ ण'मित्यादि, व्यक्तं, सम्प्रत्येतयोर्यदस्ति तदाह—'तेसि ण'मित्यादि, तयोर्यमकपर्वतयोरुपरि बहुसमरमणीयो भूमिभागः प्रज्ञप्तः, अत्र पूर्वोक्तः सर्वोभूभागवर्णक उन्नेतव्यः, कियत्पर्यन्त इत्याह—यावत्तयोर्बहुसमरमणीयस्य भूभागस्य बहुमध्यदेशभागे द्वौ प्रासादावतंसकौ प्रज्ञप्तौ, अथ तयोरुच्चत्वाद्याह—'ते ण'मित्यादि,

निरवशेषं विजयदेवप्रासादसिंहासनादिव्यवस्थितसूत्रवद्वक्तव्यं, नवरं यमकदेवाभिलापेनेति, 'से केणट्ठेणं०' प्रश्नसूत्रं व्यक्तं, उत्तरसूत्रे यमकपर्वतयोस्तत्र तत्र देशे तत्र तत्र प्रदेश क्षुद्रक्षुद्रिकासु यावद्बिलपङ्क्तिषु बहून्युत्पलानि अत्र यावत्पदात् कुमुदादीनि ग्राह्याणि, तथा यमकप्रमाणीति परिग्रहः, तत्र यमकौ—यमकपर्वतस्तत्प्रभाणि तदाकाराणीत्यर्थः, तथा यमकवर्णाभानि—

— यमकवर्णसदृशवर्णानीत्यर्थः, यदिवा यमकाभिधानौ द्वौ देवौ महर्द्धिकौ अत्र परिवसतस्तेन यमकाविति शेषं प्राग्वत्, अथानयो राजधानीप्रश्नावसरः—'कहि णं'मित्यादि, क्व भदन्त ! यमक- योर्देवयोर्यमिके नाम राजधान्यौ प्रज्ञप्ते ?, गौतम ! जम्बूद्वीपे द्वीपे मन्दरस्य पर्वतस्योत्त- रेणान्यस्मिन् जम्बूद्वीपे द्वीपे द्वादशयोजनसहस्राण्यवगाह्यात्रान्तरे यमकयोर्देवयोर्यमिके नाम राजधान्यौ प्रज्ञप्ते, द्वादशयोजनसहस्राण्यायामविष्कम्भाभ्यां सप्तत्रिंशद्योजनसहस्राणि नव च योजनशतानि अष्टचत्वारिंशदधिकानि किंचिद्विशेषाधिकानि परिक्षेपेण, प्रत्येकं २ द्वे अपि प्राकारपरिक्षिप्ते, कीदृशौ तौ प्राकाराविति तत्स्वरूपमाह— 'ते णं पागारा' इत्यादि, तौ प्राकारौ सप्तत्रिंशद्योजनानि योजनार्द्धसहितानि ऊर्ध्वोच्चत्वेन मूले अर्द्धत्रयोदशं योजनं येषु तान्यर्द्धत्रयोदशानि योजनानि विष्कम्भेन मध्ये षट् सक्रोशानि योजनानि विष्कम्भेन, मूलविष्कम्भतो मध्यविष्कम्भ- स्यार्द्धमानत्वात्, उपरि त्रीणि सार्द्धक्रोशानि योजनानि विष्कम्भेनास्यापि मध्यविष्कम्भतोऽर्द्ध- मानत्वात्, अत एव मूले विस्तीर्णावित्यादि पदत्रयं विवृतप्रायं, बहिर्वृत्तौ अनुपलक्ष्यमाणकोणत्वात् अन्तश्चतुरस्रोऽउपलक्ष्यमाणकोणत्वात् शेषं प्राग्वत्, अथानयोः कपिशीर्षकवर्णकमाह—

'ते णं पागारा नानामणि' इत्यादि, तौ प्राकारौ नानामणीनां पद्मरागस्फटिकमरकताञ्जनादीनां पंचप्रकारा वर्णा येषु तानि तथा तैः कपशीर्षकैः—प्राकाराग्रैरुपशोभितौ, एतदेव विवृणोति तद्यथा— कृष्णैर्यावच्छुक्लैरिति, अथैतेषां कपि शीर्षकाणा मुच्चत्वादिमानमाह—'ते णं'मित्यादि, निगदसिद्धं, अथानयोः कियन्ति द्वाराणी त्याह- 'जमिगाण'मित्यादि, यमिकयो राजधान्योरेकैकस्यां बाहायां पार्श्वे पंचविंसत्यधिकं २ द्वारशतं प्रज्ञप्तं, तानि द्वाराणि द्वा,षष्टियोजनानि अर्द्धयोजनं च ऊर्ध्वोच्चत्वेन एकत्रिंशद्योजनानि क्रोशं सूर्याभनामकं तस्य वक्तव्यतायां यो द्वारवर्णकः स इहापि ग्राह्यः, कियत्पर्यन्तमित्याह—यावदष्टाष्टमङ्गलकानि, अत्रातिदिष्टमपि सूत्रं न लिखितं, विजयद्वारप्रकरणे सूत्रतोऽर्थतश्च लिखितत्वात् अतिदिष्टस्योभयत्रापि साम्याच्चेति, अथानयोर्बहिर्भागे वनखण्डवक्तव्यमाह- 'जमियाण'मित्यादि, यमिकयो राजधान्योश्चतुर्दिशि चतसृणां दिशां समाहारश्चतुर्दिक् तस्मिंस्तथा, पूर्वादिष्वित्यर्थः, पंचपंचयोजनशतान्यबाधायां अपान्तराले कृत्वेति गम्यते चत्वारि वनखण्डानि प्रज्ञप्तानि, तद्यथा—अशोकवनं सप्तपर्णवनं चम्पकवं आम्रवनमिति, अथैतेषामायामाद्याह—

'ते णं वनसण्डा' इत्यादि, ते च वनखण्डाः सातिरेकाणि द्वादशयोजनसहस्राणि आयामेन पञ्चयोजनशतानि विष्कम्भेन प्रत्येकं २ प्राकारैः परिक्षिप्ताः, कृष्णा इतिपदोपलक्षितो जम्बूद्वीपपद्म- वरवेदिकाप्रकरणलिखितः पूर्णो वनखण्डवर्णको भूमयः प्रासादावतंसकाश्च भणितव्याः, भूमय- श्चैवम्—'तेसि णं वणसंडाणं अंतो बहुसमरमणिज्जा भूमिभागा पन्नत्ता, से जहानामए आलिंग- पुक्खरेइ वा जाव नानाविहपंचवण्णेहिं तणेहिं मणीहि अ उवसोभिआ' इति, प्रासादसूत्रमप्येवं 'तेसि णं वनसंडाणं बहुमज्झदेसभाए पत्तेअं २ पासायवडेंसए पन्नत्ते, ते णं पासायवडेंसया

बावट्ठिं जोअणाइं अद्धजोअणं च उद्धं उच्चत्तेणं इक्कतीसं जोअणाइं कोसं च विक्खम्भेणं अब्भुग्ग-यमूसिअपहसिआ इव, तहेव बहुसमरमणिज्जे भूमिभागे उल्लोओ सीहासणा सपरिवारा, तत्थ णं चत्तारि देवा महिड्ढीआ जाव पलिओवमट्ठिआपरिवसंति तं०-असोए सत्तिवण्णे चंपए चूए' अत्राशोकवनप्रासादेऽशोकलामा देवः, एवं त्रिष्वपि तत्तन्नामानो देवाः परिवसन्ति,

अथानयोरन्तर्भागवर्णकमाह- यमिकयो राजधान्योरन्तर्मध्यभागे बहुसमरमणीयो भूमिभागः प्रज्ञप्तः, वर्णक इतिसूत्रगतपदेन 'आलिंगपुक्खरेइ वा जाव पंचवण्णेहिं मणीहिं उवसोभिए वनसंडविहुण जाव बहवे देवा य देवीओ अ आसयंति जाव विहरंती'त्यन्तो ग्राह्यः, अत्र च उपकारिकालयनसूत्र- मादर्शेष्वदृश्यमानमपि राजप्रश्नीयसूत्रायभविमानवर्णके जीवाभिगमे विजयाराजधानीवर्णके च दृश्यमानत्वात् 'तिन्नि जोअणसहस्साइं सत्त य पंचानउए जोअणसए परिक्खेवेणं'मित्यादिसूत्र- स्यान्यथानुपपत्तेश्च जीवाभिगमतो लिख्यते,

आदर्शेष्वदृश्यमानत्वं च लेखकवैगुण्यादेवेति, तद्यथा- तेषां च बहुसमरमणीयानां भूमिभागानां बहुमध्यदेशभागे अत्रान्तरे द्वे उपकारिकालयने प्रज्ञप्ते, उपकरोति-उपष्टम्नाति प्रासादावतंसकानित्युपकारिका- राजधानीप्रभुसत्कप्रासादावतंसकादीनां पीठिका, अन्यत्र त्वियमुपकार्योपकारिकेतिप्रसिद्धा, उक्तं च-''गृहस्थानं स्मृतं राज्ञामुपकार्योपकारिके''ति सा लयनमिव-गहमिव ते प्रतिराजधानि भवत इति द्वे उक्ते, द्वादशयोजनशतानि आयामविष्कम्भाभ्यां त्रीणि योजनसहस्राणि सप्त च योजनशतानि पञ्चनवत्यधिकानि परिक्षेपेण, अर्द्धकोशं-धनुःसहस्रपरिमाणं बाहल्येन सर्वात्मना जाम्बूनदमये अच्छे प्रत्येकं २ प्रत्युपकारिकालयनं पद्मवरवेदिकापरिक्षिप्ते प्रत्येकं २ वनखण्डवर्णको भणितव्यः, स च जगतीगतपद्मवरवेदिकास्थ-वनखण्डानुसारेणेति, त्रिसोपानप्रतिरूपकाणि- आरोहावरोहमार्गास्तानि चतुर्दिशि-पूर्वादिदिक्षु ज्ञेयानि तोरणानि चतुर्दिशि भूमिभागश्चोप- कारिकालयनमध्यगतो भणितव्यः, तत्सूत्राणि जीवाभिगमोपाङ्गगतानि क्रमेणैव-'से णं वनसंडे देसूणाइं दो जोअणाइं चक्कवालविक्खंभेणं उवयारिआलयणसमए परिक्खेवेणं तेसि णं उवयारि- आलयणाणं चउद्दिसिं चत्तारि तिसोवाणपडिरूवगा पन्नत्ता, वण्णओ, तेसि णं तिसोवाणपडिरूव- गाणं पुरओ पत्तेअं २ तोरणा पन्नत्ता, वण्णओ, तेसि णं उवयारियालयणाणं उप्पिं बहुसमरमणिज्जे भूमिभागे प० जाव मणीहिं उवसोभिए'इति, अत्र व्याख्या सुगमा, अथ यमकदेवयोर्मूलप्रासाद स्वरूपमाह-

'तस्स ण'मित्यादि, तस्योपकारिकालयनस्य बहुमध्यदेशभागे अत्रान्तरे एकः प्रासादा-वतंसकः प्रज्ञप्तः द्वाषष्टिं योजनान्यर्द्धयोजनं च ऊर्ध्वोच्चत्वेन एकत्रिंशद्योजनानि क्रोशं चायाम-विष्कम्भाभ्यां वर्णको विजयप्रासादस्येव वाच्यः, उल्लोकी-उपरिभागौ भूमिभागौ-अधोभागौ सिंहासने सपरिवारे-सामानिकादिपरिवारभद्रासनव्यवस्थासहिते, यच्चात्र उपकारिकालयनस्य प्रासादावतंसकस्य चैकवचनेन विवक्षा उल्लोकभूमिभागसिंहासनानां च द्विवचनेन विवक्षा तत्सूत्र-काराणां विचित्रप्रवृत्तिकत्वादिति, अथास्य परिवारप्रासादप्ररूपनामाह-'एवं पासायपंतीओ'-इत्यादि, एवं-मूलप्रासादावतंसकानुसारेण परिवारप्रासादपङ्क्त्यो ज्ञातव्या जीवाभिगमतः, पङ्क्तयश्चात्र मूलप्रासादतश्चतुर्दिक्षु पद्मानामिव परिक्षेपरूपा अवगन्तव्याः, न पुनः सूचिश्रेणिरूपाः, तत्र प्रथमपासादपंक्तिपाठ एवं- 'से णं पासायवडेंसए अन्नेहिं चउहिं तदद्धुच्चत्तपमाणमित्तेहिं

पासायवडेंसएहिं सव्वओ समन्ता संपरिक्खित्ते' स प्रासादवतंसकोऽन्यैश्चतुर्भिः प्रासादावतंसकैस्तदर्द्धोच्चत्वप्रमाणमात्रैः, अत्रोच्चत्वशब्देनोत्सेधो गृह्यते प्रमाणशब्देन च विष्कम्भायामौ, तेन मूलप्रासादापेक्षया अर्धोच्चत्वविष्कम्भायामैरित्यर्थः, सर्वतः समन्तात् सम्परिक्षिप्तः, एषामुच्चत्वादिकं तु साक्षाद् सूत्रकृदेवाह-एकत्रिंशद्योजनानि-सार्द्धपञ्चदशयोजनानि विष्कम्भायामाभ्यामिति, अथ द्वितीयप्रासादपंक्ति, तत्पाठश्चैवम्-'ते णं पासायवडेंसया अन्नेहिं चउहिं तदद्धुच्चत्तप्पमाणमित्तेहिं पासायवडेंसएहिं सव्वओ समंता संपरिक्खित्ता' इति, ते प्रथमपंक्तिगताश्चत्वारः प्रासादाः प्रत्येकमन्यैश्चतुर्भिस्तदर्द्धोच्चत्वविष्कम्भायामैर्मूलप्रासादापेक्षया चतुर्भागप्रमाणैः प्रासादैः परिक्षिप्ताः, अत एवैते षोडश प्रासादाः सर्वसङ्ख्यया स्युः, एषामुच्चत्वादिकं तु सूत्रकृदाह-ते प्रासादाः सातिरेकाणि-अर्द्धक्रोशाधिकानि सार्द्धपञ्चदशयोजनान्युच्चत्वेन सातिरेकाणि -क्रोशचतुर्थांशाधिकानि अर्द्धाष्टमयोजनान्यायामविष्कम्भाभ्यामिति,

अथ तृतीया पंक्ति, तत्सूत्रमेवम्- 'ते णं पासायवडेंसया अन्नेहिं चउहिं चदद्धुच्चत्तप्पमाणमित्तेहिं पासायवडेंसएहिं सव्वओ समन्ता संपरिक्खित्ता' ते द्वितीयपरिधिस्ताः षोडश प्रासादाः प्रत्येकमन्यैश्चतुर्भिस्तदर्द्धोच्चत्वविष्कम्भायामैर्मूलप्रासादापेक्षया-ऽष्टांशप्रमाणोच्चत्वविष्कम्भायामैः सर्वतः समन्तात् सम्परिक्षिप्ताः, अत एवैते तृतीयपंक्तिगताश्चतुःषष्टिप्रासादाः, एतेषामुच्चत्वादिप्रमाणं सूत्रकृदाह-ते चतुःषष्टिरपि प्रासादाः सातिरेकाण्यर्द्धाष्टमयोजनान्युच्चत्वेन सातिरेकत्वं च प्राग्वत्, अध्युष्टानि-अर्द्धतृतीयानि सातिरेकाणि सार्द्धक्रोशाष्टांशाधिकानि विष्कम्भायामाभ्यां, एषा सर्वेषां वर्णकः सिंहासनानि च सपरिवाराणि प्राग्वत्।

अत्र च पंक्तिप्रासादेषु सिंहासनं प्रत्येकमेकैकं, मूलप्रासादे तु मूलसिंहासनं सिंहासनपरिवारोपेतमित्यादि क्षेत्रसमासवृत्तौ श्रीमलयगिरिपादाः तथा प्रथमतृतीयपंक्त्योर्मूलप्रासादे परिवारे भद्रासनानि द्वितीयपंक्तौ च परिवारे पद्मासनानि इति जीवाभिगमोपाङ्गे इत्यादि विसंवादसमाधानं बहुश्रुतगम्यम्, यद्यपि जीवाभिगमे विजयदेवप्रकरणे तथा श्रीभगवत्यङ्गवृत्तौ चमरप्रकरणे प्रासादपंक्तिचतुष्कं तथाप्यत्र यमकाधिकारे पंक्तित्रयं बोध्यं, -मूलप्रासादेन सह सर्वसंख्यया पञ्चाशीति प्रासादाः , अथात्र सभापञ्चकं प्रपंचयितुकामः सुधर्मासभास्वरूपं निरूपयति-

'तेसि णं' मित्यादि, तयोर्मूलप्रासादावतंसकयोरुत्तरपूर्वस्यां-ईशानकोणेऽत्रैतस्मिन् भागे यमकयोर्देवयोर्योग्ये सुधर्मे नाम सभे प्रज्ञप्ते, सुधर्माशब्दार्थस्तु सुष्ठु-शोभनो धर्मो-देवानां माणवकस्तम्भवर्तिजिनसक्थ्याशातनाभीरुकत्वेन देवाङ्गनाभोगविरतिपरिनामरूपो यस्यां सा तथा, वस्तुतस्तु सुष्ठु-शोभनो धर्मोराजधर्म्मः समन्तुनिर्मन्तुनिग्रहानुग्रहस्वरूपो यस्यां सा तथा, ते चार्द्धत्रयोदशयोजनान्यायामेन सक्रोशानि षट योजनानि विष्कम्भेन नवयोजनान्यूर्ध्वोच्चत्वेन, अत्र लाघवार्थं सभावर्णकसूत्रमतिदिशति, अनेकस्तम्भशतसन्निविष्टे इत्यादिपदसूचितः सभावर्णको जीवाभिगमोक्तो ज्ञेयः, स चैवं-

'अनेगखम्भसयसण्णिविट्ठाओ अब्भुग्गयसुकयवइरवेइआतोरणवररइअसालभंजिआसुसिलिट्ठविसिट्ठसंठिअपसत्थवेरुलिअविमलखंभाओ नानामणिकणगरयणखचिअउज्जलबहुसमसुभत्तभूमिभागाओ ईहामिगउसभतुरगणरमगरविहगवालगकिंनररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्ताओ खंभुग्गयवइरवेइआपरिगयाभिरामा विज्जाहरजमलजुअलजंत-

जुत्ताओविव अच्चीसहस्समालणीआओ रूवगसहस्सकलिआओ भिसमाणीओ भिब्भिसमाणीओ चक्खुल्लोअणलेसाओ सुहफासाओ सस्सिरीअरूवाओ कंचणमणिरयणथूभिआगाओ नानाविहपंचवण्णघंटापडागपरिमंडिअअग्गसिहराओ धवलाओ मरीइकवयविणिम्मुअंतीओ लाउल्लोइअमहिआओ गोसीसरससुरभिरत्तचन्दणदद्दरदिण्णपंचंगुलितलाओ उवचिअचंदणकलसाओ चंदणघडसुकयतोरणपडिदुवारदेसभागाओ आसत्तोसत्तविउलवट्टवग्घारिअमल्लदामकलावाओ पंचवण्णसरससुरहिमुक्कपुप्फपुंजोवयारकलिआओ कालागुरुपवरकुंदुरुक्कतुरुक्कधूवडज्झंतमघमघेंतगन्धुद्धुआभिरामाओ सुगंधवरगंधिआओ गंधवट्टिभूआओ अच्छरगणसंघविकिण्णाओ दिव्वतुडिअसद्दसंपणदिआओ सव्वरयनामईओ अच्छाओ जाव पडिरूवाओ' इति

अत्र व्याख्या तु सिद्धायतनतोरणादिवर्णकेषु उक्तवृत्तिन्यायेन सुलभेति न पुनरुच्यते नवरं अप्सरोगणानां—अप्सरः परिवाराणां यः संघः—समुदायस्तेन सम्यक्—रमणीयतया विकीर्णा-आकीर्णा दिव्यानां त्रुटिताना—आतोद्यानां ये शब्दास्तैः सम्यक् श्रोत्रमनोहारितया प्रकर्षेण नदिता—शब्दवती, शेषं प्राग्वत्, अथास्यां कति द्वाराणीत्याह—'तासि णं सभाण' मित्यादि, तयोः सभायोः सुधर्मयोस्त्रिदिशि त्रीणि द्वाराणि प्रज्ञप्तानि, पश्चिमायां द्वाराभावात्, तानि द्वाराणि प्रत्येकं द्वे योजने ऊर्ध्वोच्चत्वेन योजनमेकं विष्कम्भेन तावदेव—योजनमेकं प्रवेशेन, श्वेता इत्यादि पदेन सूचितः परिपूर्णो द्वारवर्णको वाच्यो यावद्वनमाला, अथ मुखमण्डपादिषट्निरूपणायाह—

'तेसि णं दारण' मित्यादि, तेषा द्वाराणां पुरतः प्रत्येकं २ त्रयो मुखमण्डपाः प्रज्ञप्ताः, सभाद्वाराप्रवर्त्तिनो मण्डपा इत्यर्थः, ते च मण्डपा अर्द्धत्रयोदशयोजनान्यायामेन षट् सक्रोशानि योजनानि विष्कम्भेन सातिरेके द्वे योजने ऊर्ध्वोच्चत्वेन, एतेषामपि 'अनेगखंभसयसण्णिविट्ठा' इत्यादि वर्णनं सुधर्मासभा इव निरवशेषं द्रष्टव्यं, यावद् द्वाराणां भूमिभागानां च वर्णनं, यद्यप्यत्र द्वारान्तमेव सभावर्णनं तदतिदेशेन मुखमण्डपसूत्रेऽपि तावन्मात्रमेवायाति तथापि जीवाभिगमादिषु मुखमण्डपवर्णके भूमिभागवर्णकस्य दृष्टत्वात् अत्रातिदेशः, अथ प्रेक्षामण्डपवर्णकं लाघवादाह— 'पेच्छाघरमण्डवाण' मित्यादि, प्रेक्षागृहमण्डपानां—रङ्गमण्डपानां तदेव—मुखमण्डपोक्तमेव प्रमाणं, भूमिभाग इतिपदेन सर्वं द्वारादिकभूमिभागपर्यन्तं वाच्यं, एषु च मणिपीठिका वाच्या, एतावदर्थसूचकमिदं सूत्रम्—

'तेसि णं मुहमण्डवाणं पुरओ पत्तेअं २ पेच्छाघरमंडवा पन्नत्ता, ते णं पेच्छाघरमंडवा अद्धतेरसजोअणाइं आयामेणं जाव दो जोअणाइं उद्धं उच्चत्तेणं जाव मणिफासो, तेसि णं बहुमज्झदेसभाए पत्तेअं २ वइरामया अक्खाडया पन्नत्ता, तेसि णं बहुमज्झदेसभाए पत्तेअं २ मणिपेढिआओ पन्नत्ताओ' त्ति उक्तप्रायं, नवरमक्षपाटः—चतुरस्राकारो मणिपीठिकाधारविशेषः, अस्याः प्रमाणाद्यर्थमाह— 'ताओ णं मणिपेढिआओ जोअणं आयामविक्खंभेणं अद्धजोअणं बाहल्लेणं सव्वमणिमईओ सीसाहणा भाणिअव्वा' इति, अत्र सिंहासनानि भणितव्यानि सपरिवाराणीत्यर्थः, शेषं व्यक्तम्, अथ स्तूपावसरः— तेषा प्रेक्षागृहमण्डपानां पुरतो मणिपीठिकाः, अत्र बहुवचनं न प्राकृत- शैलीभवं यथा द्विवचनस्थाने बहुवचनं हत्था पाया इत्यादिषु, किन्तु बहुत्वविवक्षार्थं, तेनात्र तिसृषु प्रेक्षागृहमण्डपद्वारदिक्षु एकैकसद्भावात् तिस्रो ग्राह्याः, अन्यत्र जीवाभिगमादिषु तथा दर्शनात्, अथैतासां मानमाह— 'ताओ ण' मित्यादि, कण्ठ्यं, यद्यप्येतत्सूत्रादर्शेषु 'जोअणं आयामवि- क्खम्भेणं अद्धजोअणं बाहल्लेणं' इति पाठो दृश्यते तथापि जीवाभिगमपाठदृष्टत्वेन

राजप्रश्नीयादिषु प्रेक्षामण्डपमणिपीठिकातः स्तूपमणि पीठिकाया द्विगुणमानत्वेन दृष्टत्वाच्चायं सम्यक् पाठः सम्भाव्यते, आदर्शेषु लिपिप्रमादस्तु सुप्रसिद्ध एव, अथ स्तूपवर्णनायाह– तासां मणिपीठाकानामुपरि प्रत्येकं २ स्तूपाः प्रज्ञप्ताः, जीवाभिगमादौ तु चैत्यस्तूपा इति, द्वे योजने ऊर्ध्वोच्चत्वेन द्वे योजने आयामविष्कम्भाभ्यां 'व्याख्यातो विशेषप्रतिपत्ति' रिति दर्शनात् द्वे योजने आयामविष्कम्भाभ्यां ग्राह्ये, अन्यथा मणिपीठिकास्तूपयोरभेद एव स्यात्, जीवाभिगमादौ तु सातिरेके द्वे योजने उच्चत्वमित्यर्थः, ते च श्वेताः, श्वेतत्वमेवोपमया प्रकटयति–'संखदल' त्ति यावत्करणात् 'संखदलविमलनिम्मलदधिघणगोखीरफेणरययनिअरप्पगासा सव्वरयणामया अच्छा जाव पडिरूवा' इति प्रागवत्, कियद्दूरं ग्राह्यमित्याह–यावदष्टमङ्गलकानीति।

अथ तच्चतुर्दिशि यदस्ति तदाह– 'तासि णं थूभाण' मित्यादि, तेषां स्तूपानां प्रत्येकं चतुर्दिक्षु चतस्रो मणिपीठिकाः प्रज्ञप्ताः, ताश्च मणिपीठिकाः योजनमायामविष्कम्भेन अर्द्धयोजनं बाहल्येन, अत्र जिनप्रतिमा वक्तव्याः, तत्सूत्रं चेदम्–'तासि णं मणिपेढिआणं उप्पिं पत्तेअं पत्तेअं चत्तारि जिनपडिमाओ जिनुस्सेहप्पमाणमित्ताओ पलिअंकसण्णिसण्णाओ थूभाभिमुहीओ सण्णि-क्खित्ताओ चिट्ठंति, तंजहा–उसभा वद्धमाणा चन्दानना वारिसेणा' इति, एतद्वर्णनादिकं वैताढ्ये सिद्धायतनाधिकारे प्रागुक्तं, गताः स्तूपाः, 'चेइअरुक्खाण' मित्यादि, व्यक्तम्, अत्र चैत्यवृक्षवर्णको जीवाभिगमोक्तो वाच्यः, स चायम्–'तेसि णं चेइअरुक्खाणं अयमेआरूवे वण्णावासे पन्नत्ते, तं०–वरइमूलरययसुपइट्ठिअविडिमा रिट्ठामयकंदवेरुलिअरुइलखंधा सुजायवरजायरूव-पढमविसालसाला नानामणिरयणविविहसाहप्पसाहवेरुलिअपत्ततवणिज्जपत्तबेंटा जम्बूनयर-त्तमउअसुकुमालपवालपल्लववरंकुरधरा विचित्तमणिरयणसुरभिकुसुमफलभरणमिअसाला सच्छाया सप्पभा अस्सिरीआ सउज्जोआ अमयरससमरसफला अहिअमणनयणणिव्वुइकरा पासा-दीआ जाव पडिरूवा ४' इति, अत्र व्याख्या–तेषां चैत्यवृक्षानामयमेतद्रूपो वर्णावासः प्रज्ञप्तस्तद्यथा–

वज्ररत्नमयानि मूलानि येषां ते वज्रमूला– तथा रजता–रजतमयी सुप्रतिष्ठिता विडिमा–बहुमध्यदेशभागे ऊर्द्धविनिर्गता शाखा येषां ते तथा ततः पूर्वपदेन कर्मधारयः, रिष्ठरत्नमयः कन्दो येषां ते तथा तथा वैडूर्यरत्नमयो रुचिरः स्कन्धो येषां ते तथा ततः पूर्वपदेन कर्मधारयः, सुजातं–मूलद्रव्यशुद्धं वरं–प्रधानं यज्जातरूपं–रूप्यं तदात्मिकाः प्रथमिका–मूलभूता विशालाः शालाः–शाखा येषां ते तथा, तथा वैडूर्याणि–वैडूर्यमयानि पत्राणि येषां ते तथा, तथा तपनीयानि–तपनीयमयानि पत्रवृन्तानि येषां ते तथा, ततः पूर्ववत् पदद्वयपदद्वयमीलनेन कर्मधारयः, जाम्बूनदा–जाम्बूनदनामकसुवर्णविशेषमया रक्तवर्णा मृदुसुकुमारा–अत्यन्तकोमलाः प्रवाला–ईषदुन्मीलितपत्रभावरूपाः पल्लवा–जातपूर्णप्रथमपत्रभावरूपा वरांकुराः–प्रथममुद्भिद्यमानास्तान् धरन्ति ये ते तथा, विचित्रमणिरत्नमयानि सुरभीणि कुसुमानि फलानि च तेषां भरेण नमिता–नामं ग्राहिताः शाखा येषां ते तथा, सती–शोभना छाया येषां ते सच्छायाः, एवं सप्रभाः अत एव सश्रीकाः तथा सोद्द्योताः मणिरत्नानामुद्द्योतभावात्, अमृतरससमरसानि फलानि येषां ते तथा, अधिक नयनमनोनिर्वृतिकराः, शेषं प्रागवत्।

'ते णं चेइअरुक्खा अन्नेहिं बहूहिं तिलयलवयछत्तोवगसिरीससत्तिवण्णलोद्धधवचंदन-नीवकुडयकयंबपण सतालतमालिआलपिअंगुपारावयरायरुक्खनन्दिरुक्खेहिं सव्वओ समन्ता

संपरिक्खित्ता' इति, ते चैत्यवृक्षा अन्यैर्बहुभिस्तिलकलवगच्छत्रोपगशिरीषसप्तपर्णदधिपर्णलोध्रधवचन्दननीपकुटजकदम्बपनसतालतमालप्रियालप्रियंगुपारापताजवृक्षनन्दिवृक्षैः सर्वतः समन्तात् सम्परिक्षिप्ताः, एते च वृक्षाः केचिन्नामकोशतः केचिल्लोकतश्चावगन्तव्याः, 'ते णं तिलया जाव नंदिरुक्खा मूलवन्तो कंदवन्तो जाव सुरम्मा' ते च तिलकादयो वृक्षा मूलवन्तः कन्दवन्त इत्यादि वृक्षवर्णनं प्रथमोपाङ्गतोऽवसेयं यावत्सुरम्या इति, 'ते णं तिलया जाव नन्दिरुक्खा अन्नाहिं बहूहिं पउमलयाहिं जाव सामलयाहिं सव्वओ समन्ता संपरिक्खित्ता' ते च तिलकादयो वृक्षाः अन्याभिर्बहूभि पद्मलताभि- र्यावच्छ्यामलताभि सर्वतः समन्तात् सम्परिक्षिप्ताः, यावच्छब्दादत्र नागलताचम्पकलताद्या ग्रह- णीयाः, 'ताओ णं पउमलयाओ जाव सामलयाओ निच्चं कुसुमिआओ जाव पडिरूवाओ' ताश्च पद्मलताद्या नित्यं कुसुमिता इत्यादि लतावर्णनं यावत्प्रतिरूपाः, 'तेसि णं चेइअरुक्खाणं उप्पिं अट्ठट्ठमंगलया बहवे झया छत्ताइच्छत्ता,' तेषां चैत्यवृक्षानामुपरि अष्टावष्टौ मङ्गलकानि बहवः कृष्णचामरध्वजाः छत्रातिच्छत्राणीत्यादि चैत्यस्तूपकवद्वक्तव्यं। गताश्चैत्यवृक्षाः, अथ महेन्द्रध्वजावसरः—

'तेसि णं चेइअरुक्खाण' मित्यादि, तेषां चैत्यवृक्षाणां पुरतस्तिस्र मणिपीठिकाः प्रज्ञप्ताः, ताश्च मणिपिठिकाः योजनमायामविष्कम्भाभ्यां अर्द्धयोजनं बाहल्येन 'तासि णं उप्पिं पत्तेअं' इत्यादि, तासां मणिपीठिकानामुपरि प्रत्येकं २ महेन्द्रध्वजाः प्रज्ञप्ताः, ते चार्द्धाष्टमानि—सार्द्धसप्तयोजनानि ऊर्ध्वोच्चत्वेन अर्द्धक्रोशं—धनुःसहस्रमुद्वेधेन—उण्डत्वेन तदेव बाहल्येन, 'वइरामयवट्ट' इति- पदोपलक्षितः परिपूर्णो जीवाभिगमाद्युक्तवर्णको ग्राह्यः, स चायम्—'वइरामयवट्टलट्ठसंठि- असुसिलिट्ठपरिघट्ठमट्ठसुपइट्ठिआ अनेगवरपञ्चवण्णकुडभीसहस्सपरिमण्डिआभिरामा वाउद्धुअविजयवेजयन्तीपडागाछत्ताइच्छत्तकलिआ तुंगा गगणतलमभिलंमाणसिहरा पासादीआ जाव पडिरूवा' इति, अत्र व्याख्या—वज्रमयाः तथा वृत्तं—वर्त्तुलं लष्टं—मनोज्ञं संस्थितं—संस्थानं येषां ते तथा तथा सुश्लिष्टा यथा भवन्ति एवं परिघृष्य इव खरशाणया पाषाणप्रतिमेव सुश्लिष्टपरिघृष्टाः तथा मृष्टाः—सुकुमारशाणया पाषाणप्रतिमेव तथा सुप्रतिष्ठिताः—मनागप्यचलनात् तथा अनेकैर्वरैः—प्रधानैः पञ्चवर्णै कुडभीनां—लघुपताकानां सहस्रैः परिमण्डिताः सन्तोऽभिरामाः शेषंप्राग्वत्, 'तेसि णं महिंदज्झयाणं उप्पिं अट्ठट्ठमङ्गलया झया छत्ताइछत्ता' इत्यादि सर्वं तोरणवर्णक इव वाच्यं जीवाभिगमत इति।

उक्ता महेन्द्रध्वजाः, अथ पुष्करिण्यः ताश्च 'वेइआवनसंड' इत्यादिपर्यन्तसूत्रेण संगृह्यते, तथाहि-'तेसि णं महिंदज्झयाणं पुरओ तिदिसिं तओ नंदा पुक्खरिणीओ पन्नत्ताओ अद्धतेरसजोअणाइं आयामेणं छस्सकोसाइं जोअणाइं विक्खम्भेणं दसजोअणाइं उववेहेणं अच्छाओ सण्हाओ पुक्खरिणीवण्णओ पत्तेअं २ पउमवरवेइआपरिक्खित्ताओ पत्तेअं २ वनसण्डपरिक्खित्ताओ वण्णओ' तथा 'तासि णं नन्दापुक्खरिमीणं पत्तेअं २ तिदिसिं तओ तिसोवाणपडिरूवगा पन्नत्ता, तेसि णं तिसोवाणपडिरूवगाणं वण्णओ तोरणवण्णओ अ भाणिअव्वो जाव छत्ताइछत्ताइं' इति, अत्र जगतीगतपुष्करिणीवत् सर्वं वाच्यं, अथ सुधर्मसभायां यदस्ति तदाह—

'तासि न' मित्यादि, तयोः सभयोः सुदर्मयोः षट् मनोगुलिकानां—पीठिकानां सहस्राणि प्रज्ञप्तानि, तथाहि—पूर्वस्यां द्वे सहस्र पश्चिमायां द्वे सहस्र दक्षिणस्यामेकं सहस्रं उत्तरस्यामेकं सहस्रं, 'जाव दामा' इत्यत्र यावत्पदादिदं ग्राह्यम्—'तासु णं मणोगुलिआसु बहवे सुवण्णरुप्पमया फलगा

पन्नत्ता, तेसि णं सुवण्णरुप्पमएसु फलगेसु बहवे वइरामया नागदन्तगा पन्नत्ता, तेसु णं वइरामएसु नागदन्तेसु बहवे किण्हसुत्तवग्घारिअमल्लदामकलावा जाव सुक्किल्लसुत्तवग्घारिअमल्लदामकलावा, ते णं दाम तवणिज्जलंबूसगा चिट्ठंति'त्ति सर्वं विजयद्वारवद्वाच्यम्, अनन्तरोक्तं गोमानसिका-सूत्रेऽतिदिशति– एवं–मनोगुलिकाव्याख्यानेन गोमानस्यः–शय्यारूपा–स्थानविशेषा वाच्याः, नवरं दामस्थाने धूपवर्णको वाच्यः, अथास्या एव भूभागवर्णकमाह–'तासि णं०' तयोः सुधर्मयोः सभयोः अन्तर्बहुसमरमणीयो भूमिभागः प्रज्ञप्तः, अत्र मणिवर्णादयो वाच्याः, उल्लोकाः पद्मलतादयोऽपि च चित्ररूपाः, अत्र विशेषतो यद्वक्तव्यं तदाह–'मणिपे- ढिआ'इत्यादि, अत्र सुधर्मयोर्मध्यभागे प्रत्येकं मणिपीठिका वाच्या, द्वे योजने आयामविष्कम्भाभ्या योजनं बाहल्येन।

'तासि णं'मित्यादि, तयोर्मणिपीठिकयोरुपरि प्रत्येकं माणवकनाम्नि चैत्यस्तम्भे महेन्द्रध्वज-समाने प्रमाणतोऽर्द्धाष्टमयोजनप्रमाण इत्यर्थः वर्णकतोऽपि महेन्द्रध्वजवत्, उपरि षट् क्रोशान् अवगाह्य उपरितनषट्क्रोशान् वर्जयित्वेत्यर्थः अधस्तादपि षट् क्रोशान् वर्जयित्वा मध्येऽर्धपञ्चमेषु योजनेषु गम्यं, जिनसक्थीनि, व्यन्तरजातीयानां जिनदंष्ट्राग्रहणेऽनधिकृतत्वात्, सौधर्मेशान-चमरबलीन्द्रानामेव तदग्रहणात्, शेषो वर्णकश्चात्र जीवाभिगमोक्तो ज्ञेयः, स चायं–

'तस्स णं माणवगचेइअस्स खम्भस्स उवरिं छक्कोसे ओगाहित्ता हिट्ठावि छक्कोसे वज्जित्ता मज्झे अद्धपञ्चमेसु जोअणेसु एत्थ णं बहवे सुवण्णरुप्पमया फलगा पन्नत्ता, तेसु णं बहवे वइरामया नागदन्तगा प०, तेसु णं बहवे रययामया सिक्कगा प०, तेसु णं बहवे वइरामया गोलयवट्टसमुग्गया पन्नत्ता, तेसु णं बहवे जिणसकाहाओ सण्णिखित्ताओ चिट्ठन्ति, जाओ णं जमगाणं देवाणं अन्नेसिं च बहूणं वाणमंतराणं देवाण य देवीण य अच्चणिज्जाओ वंदणि० पूयणिज्जाओ सक्कारणि सम्माणणि कल्लाणं मंगलं देवयं चेइअं पज्जुवासणिज्जाओ' इति,

अत्र व्याख्या– 'तस्स णमित्याद्यारभ्य वज्जित्ता' इति पर्यन्तं प्रायः प्रस्तुतसूत्रे साक्षाद् दृष्टत्वादनन्तरमेव व्याख्यातं, मध्येऽर्द्धपञ्चमेषु योजनेषु अवशिष्टयोजनेष्वित्यर्थः, अत्रान्तरे बहूनि सुवर्णरूप्यमयानि फलकानि प्रज्ञप्तानि, तेषु फलकेषु बहवो वज्रमया नागदन्तकाः प्रज्ञप्ताः, तेषु नागदन्तकेषु बहूनि रजतमयानि शिक्यकानि प्रज्ञप्तानि, तेषु शिक्यकेषु बहवो वज्रमया गोलको–वृत्तोपलस्तद्वद् वृत्ताः समुद्रकाः–प्रसिद्धाः प्रज्ञप्ताः, तेषु समुद्गकेषु बहूनि जिनसक्थीनि सन्निक्षिप्तानि तिष्ठन्ति, यानि यमकयोर्देवयोः अन्येषां च बहूनां यमकराजधानीवास्तव्यानां वानमन्तराणां देवानां देवीनां च अर्चनीयानि चन्दनादिना वन्दनीयानि स्तुत्यादिना पूजनीयानि पुष्पादिना सत्कारणीयानि वस्त्रादिना सम्माननीयानि बहुमानकरणतः कल्याणं मङ्गलं दैवतं चैत्यमिति पर्युपासनीयानीति, एतदाशात- नाभीरुतयैव तत्र देवा देवयुवतिभिर्न सम्भोगादि-कमाद्रियन्ते नापि मित्रदेवादिभिर्हास्यक्रीडादिपराः स्युरिति, ननु जिनगृहादिषु जिनप्रतिमानां देवानामर्चनीयत्वादिकमाशातनात्यागश्च युक्तौ, तासां सद्भावस्थापनारूपत्वेनाराध्यतासङ्कल्प-प्रादुर्भावसम्भवात्, न तथा जिनदंष्ट्रादिषु, तेन कथं तौ घटेते ? पूज्यानामङ्गानि पूज्या इव पूज्यानीति सङ्कल्पस्यात्रापि प्रादुर्भावात् पूज्यत्वं महावैरोप- शमकगुणवत्त्वेन च, अस्मिन्नर्थे श्राद्धविधिवृत्ति-सम्मति, तथाहि परीक्षाप्राप्तानिर्लोभतागुणं रत्नसारकुमारं प्रति चन्द्रशेखरवचः–

''हरिसेनानीर्हरिणैगमेष्यनिमिषाग्रणीः ।
युक्तमेव तव श्लाघां, कुरुते, सुरसाक्षिकम् ॥ ॥१॥

॥२॥ वक्ति स्म विस्मयस्मेरः, कुमारः स सुराग्रणीः ।
मामश्लाघ्यं श्लाघते किं ?, सोऽप्युवाच शृणु ब्रुवे ॥
॥३॥ नव्योत्पन्नतयाऽन्यर्हि, सौधर्मेशानशक्रयोः ।
विवादोऽभूद्विमानार्थं, हर्म्यार्थमिव हर्मिणोः ॥
॥४॥ विमानलक्षा द्वात्रिंशत्तथाऽष्टाविंशति क्रमात् ।
सन्त्येतयोस्तथाऽप्येतौ, विवदेते स्म धिग् भवम् ॥
॥५॥ तयोरिवोर्वीश्वरयोर्विमानर्द्धिप्रलुब्धयोः ।
नियुद्धादिमहायुद्धान्यप्यभूवनन्नेकशः ॥
॥६॥ निवार्यते हि कलहस्तिरश्चां तरसा नरैः ।
नराणां च नराधीशैर्नराधीशां सुरैः क्वचित् ॥
॥७॥ सुराणां च सुराधीशैः, सुराधीशां पुनः कथम् ।
केन वा स निवार्येत, वज्राग्निरिव दुःशमः ? ॥ युग्मम् ।
॥८॥ माणवकाख्यस्तम्भस्थार्हद्दंष्ट्राशान्तिवारिणा ।
आधिव्याधिमहादोषमहावैरनिवारिणा ॥
॥९॥ कियत्कालव्यतिक्रान्तौ, सिक्तौ महत्तरैः सुरैः ।
बभूवतुः प्रशान्तौ तौ, किं वा सिध्येन्न तज्जलात् । युग्मम् ।
॥१०॥ ततस्तयोर्मिथस्त्यक्तवैरयोः सचिवैर्द्वयोः ।
प्रोचे पूर्वव्यवस्थैवं, सुधियां समये हि गीः ॥
॥११॥ सा चैवम्–दक्षिणस्यां विमाना ये, सौधर्मेशस्य तेऽखिलाः ।
उत्तरस्यां तु ते सर्वेऽपीशानेन्द्रस्य सत्तया ॥
॥१२॥ पूर्वस्यामपरस्यां च, वृत्ताः सर्वे विमानकाः ।
त्रयोदशाधीन्द्रकाश्च, स्यु सौधर्मसुरेशितुः ॥
॥१३॥ पूर्वापरदिशोस्त्र्यस्रश्चतुरस्रश्च ते पुनः ।
सौधर्माधिपतेरर्द्धा, अर्द्धा ईशानचक्रिणः ॥
॥१४॥ सनत्कुमारमाहेन्द्रेऽप्येष एव भवेत् क्रमः ।
वृत्ता एव हि सर्वत्र, स्युर्विमानेन्द्रकाः पुनः ॥
॥१५॥ इत्थं व्यवस्थया चेतःस्वास्थ्यमास्थाय सुस्थिरौ ।
विमत्सरौ प्रीतिपरौ, जज्ञाते तौ सुरेश्वरौ ॥इति

अथ प्रकृतं प्रस्तूयते–'माणवगस्स'इत्यादि, माणवकस्य चैत्यस्तम्भस्य पूर्वेण–पूर्वस्यां दिशि सुधर्मायामेव सभायां सिंहासने सपरिवारे स्तः, यमकदेवयोः प्रत्येकमेकैकसद्भावात्, तस्मादेवपश्चिमायां दिशि शयनीये वर्णकश्च तदीयः श्रीदेववर्णनाधिकारे उक्तः, शयनीययोरुत्तरपूर्वस्यां दिशि क्षुल्लकमहेन्द्रध्वजौ स्तः, तौ च मनतो महेन्द्रध्वजप्रमाणौ, सार्द्धसप्तयोजनप्रमाणावुच्चत्वेनार्द्धक्रोशमुद्वेधेन–बाहल्याभ्यामित्यर्थः, ननु यदीमौ प्रागुक्तमहेन्द्रध्वजतुल्यौ तदा किमिमौ क्षुल्लकेन विशेषितौ ?, उच्यते, मणिपीठिकाविहीनौ, त एव क्षुल्लौ, कोऽर्थः ?–

द्वियोजनप्रमाणमणिपीठिकोपरिस्थितत्वेन पूर्वे महान्तो महेन्द्रध्वजास्तदपेक्षया इमौ च क्षुल्लावित्यर्थादागतमिति, तयोः क्षुल्लमहेन्द्रध्वजयोरेकैकराजधानीसम्बन्धिनोरपरेण पश्चिमायां चोप्पालो नाम प्रहरणकोशः–प्रहरणभाण्डागारं, तत्र बहूनि परिघरत्नप्रमुखाणि यावत्पदात् प्रहरणरत्नानि सन्निक्षिप्तानि तिष्ठन्ति, 'सुहम्माण'मित्यादि, सुधर्मयोरुपर्यष्टाष्टमङ्गलकानि इत्यादि तावद् वक्तव्यं यावद् बहवः सहस्रपत्रहस्तकाः सर्वरत्नमया इत्यादि। सुधर्मसभातः परं किमस्तीत्याह–'तासि ण'मित्यादि, तयोः सुधर्मसभयोरुत्तरपूर्वस्यां दिशि द्वे सिद्धायतने प्रज्ञप्ते इति शेषः, प्रतिसभमेकैकसद्भावादिति, अत्र लाघवार्थमतिदेशमाह–एष एव··सुधर्मासभोक्त एव जिनगृहानामपि गमः–पाठोऽवगन्तव्यः, स चायम्–

'ते णं सिद्धाययना अद्धतेरसजोअणाइं आयामेणं छस्सकोसाइं विक्खम्भेणं नव जोअणाइं उद्धं उच्चत्तेणं अनेगखम्भसयसण्णिविट्ठा' इत्यादि, यथा सुधर्मायास्त्रीणि पूर्वदक्षिणोत्तरवर्त्तीनि द्वाराणि तेषां पुरतो मुखमण्डपाः तेषां च पुरतः प्रेक्षाण्डपाः तेषां पुरतः स्तूपाः तेषा पुरतश्चैत्यवृक्षाः तेषां पुरतो महेन्द्रध्वजाः तेषां पुरतो नन्दापुष्करिण्य उक्तास्तदनु सभायां षड् मनोगुलिकासहस्राणि षड् गोमानसीसहस्राण्युक्तानि एवमनेनैव क्रमेण सर्वं वाच्यम्, अत्र च सुधर्मातो यो विशेषस्तमाह–'नवरं इमं नाणत्तं' इत्यादि व्यक्तम्, अथ सुधर्मासभोक्तमेव सभाचुष्केऽतिदिशन्नाह–

'एवं अवसेसाणवि' इत्यादि, एवं सुधर्मान्यायेन अवशिष्टानामुपपातसभादीनां वर्णनं ज्ञेयं, कियत्पर्यन्तमित्याह–यावदुपपातसभायां–उत्पित्सुदेवोत्पत्त्युपलक्षितसभायां शयनीयं वर्णनीयं तच्च प्राग्वत्, तथा ह्रदश्च वक्तव्यो नन्दापुष्करिणीमानः, स चोत्पन्नदेवस्य शुचित्वजलक्रीडादिहेतुः, ततोऽभिषेकसभायां··अभिनवोत्पन्नदेवाभिषेकमहोत्सवस्थानभूतायां बहु आभिषेक्यं–अभिषेकयोग्यं भाण्डं वाच्यं, तथा अलङ्कारसभायां–अभिषिक्तसुरभूषणपरिधानस्थानरूपायां सुबहु अलङ्कारिकभाण्डं–अलङ्कारयोग्यं भाण्डं तिष्ठति, व्यवसायसभयोः–अलंकृतसुरशुभाध्यवसायानुचिन्तन्स्थानरूपयोः पुस्तकरत्ने ततो बलिपीठे अर्चनिकोत्तरकालं नवोत्पन्नसुरयोर्बलिविसर्जनपीठे द्वे योजने आयामविष्कम्भाभ्यां योजनं बाहल्येन यावत्पदात् 'सव्वरयनामया अच्छा पासाईआ ४' ततो नन्दाभिधाने पुष्करिण्यौ बलिक्षेपोत्तरकालं सुधर्मासभां जिगमिषतोरभिनवोत्पन्नसुरयोर्हस्तपादप्रक्षालनहेतुभूते, अत एव सूत्रे प्रथमोक्ते अपि नन्दापुष्करिण्यौ प्रयोजनक्रमवशात् पश्चाद् व्याख्याते क्रमप्राधान्याद् व्याख्यानस्य, अथ यथा सुधर्मासभातः उत्तरपूर्वस्यां दिशि सिद्धायतनं तथा तस्योत्तरपूर्वस्यां दिशि उपपातसभा, एवं पूर्वस्मात् पूर्वस्मात् परं परमुत्तरपूर्वस्यां वाच्यं यावद्बलिपीठादुत्तरपूर्वस्यां नन्दा पुष्करिणीति, अत्र च 'जमिगाओ रायहाणीओ' इत्यादिसूत्रेषु द्विवचनेन, 'तासिं जाव उप्पिं माणवए चेइअखम्भे' इत्यादिसूत्रेष्वेकवचनेन निर्देशः सूत्रकाराणां प्रवृत्तिवैचित्र्यादिति । वर्णिते यमिकाभिधे राजधान्यौ, अनायरधिपयोर्यमकदेवयोरुत्पत्यादिस्वरूपख्यानाय विस्तररुचि सूत्रकृत् संग्रहगाथामाह–

मू. (१४४) *उववाओ संकप्पो अभिसेअविहूसणा य ववसाओ ।*
*अच्चणिअसुधम्मगमो जहा य परिवारणाइड्ढी ॥*

वृ. 'उववाओ संकप्पो' इत्यादि, उपपातो–यमकयोर्देवयोरुत्पत्तिर्वाच्या, ततः उत्पन्नयोः सुरयोः शुभव्यवसायचिन्तनरूपः सङ्कल्पः, ततोऽभिषेकः–इन्द्राभिषेकः, ततः विभूषणा–अलङ्कार-

समायामलङ्कारपरिधानं, ततो व्यवसायः–पुस्तकोद्घाटनरूपः, ततः अर्चनिका–सिद्धायतनार्चा, ततः सुधर्मायां गमनं, यथा च परिवारणा–परिवारकरणं स्वस्वोक्तदिशि परिवारस्थापनं यथा यमकयोर्देवयोः सिंहासनयो। परितो वाममागे चतुःसहस्रसामानिकभद्रासनस्थापनं सैव ऋद्धि–सम्पत् रूपनिष्पत्तिस्तु 'णिज् बहुलं नाम्नः कृगादिषु' इत्यनेन करणार्थे 'निवेत्यासश्रयघट्टनवन्देरनः' इत्यनेन थानप्रत्यये स्त्रलिङ्गीय आपप्रत्यये साधुः तथा वाच्यं 'जीवाभिगमादिभ्यः'।

**मू. (१४५)** *जावइयंमि पमाणंमि हुंति जमगाओ णीलवंताओ।*
*तावइअमन्तरं खलु जमगदहाणं दहाणं च ॥*

**वृ.** अथ यमकौ ह्रदाश्च यावतां अन्तरेण परस्परं स्थितास्तन्निर्णेतुमाह– 'जावइयं' इत्यादि, यावति प्रमाणे–अन्तरमाने नीलवतो यमकौ भवतः खलु–निश्चितं तावदन्तरं योजनसप्तभाग-चतुर्भागाभ्यधिकचतुस्त्रिंशदधिकाष्टशतयोजनरूपं यमकद्रहयोर्द्रहाणां च बोध्यमिति शेषः, उपपत्तिस्तु प्राग्वत्। अथ येषां ह्रदानामन्तरमानमन्तरमुक्तं तान् स्वरूपतो निर्दिशति–

**मू. (१४६)** *कहि णं भंते! उत्तरकुराए नीलवन्तद्दहे नामं दहे प० गो० जमगाणं दक्खिणिल्लाओ चरिमंताओ अट्ठसे चोत्तीसे चत्तारि अ सत्तभाए जोअणस्स अबाहाए सीआए महानईए बहुमज्झदेसभाए एत्थ णं नीलवन्तद्दहे नामं दहे प० दाहिणउत्तरायए पाईणपडीण-विच्छिण्णे जहेव पउमद्दहे तहेव वण्णओ नेअव्वो, णाणत्तं दोहिं पउमवरवेइआहिं दोहि य वनसंडेहिं संपरिक्खित्ते, नीलवंते नामं णागकुमारे देवे सेसं तं चेव नेअव्वं, नीलवंतद्दहस्स पुव्वावरे पासे दस २ जोअणाइं अबाहाए एत्थ णं वीसं कंचणगपव्वया प०, एगं जोयणसयं उद्धं उच्चत्तेणं–*

**वृ.** 'कहि ण'मित्यादि, क्व भदन्त! उत्तरकुरुषु २ नीलवद्ध्रहो नाम ह्रदः प्रज्ञप्तः?, गौतम यमकयोर्दाक्षिण्यात् चरमान्तादष्ट शतानि चतुस्त्रिंशदधिकानि चत्वारि च सप्तभागान् योजनस्य अबाधया कृत्वा इति गम्यं, अपान्तराले मुक्त्वेति भावः, शीताया महानद्या बहुमध्यदेशभागेऽत्रान्तरे नीलवद्द्रहो नाम ह्रदः प्रज्ञप्तः, दक्षिणोत्तरायतः प्राचीनप्रतीचीनविस्तीर्ण, पद्मद्रहश्च प्रागपरायतः उदग्दक्षिणपृथुरिति पृथग्विशेषणं, यथैव पद्मद्रहे वर्णकस्तथैव नेतव्यः, नानात्वमिति विशेषोऽयं, द्वाभ्यां पद्मवरवेदिकाभ्यां द्वाभ्यां च वनखण्डाभ्या सम्परिक्षिप्तः, अयं भावः–पद्मद्रह एकया पद्मवरवेदिकया एकेन च वनखण्डेन परिक्षिप्तः, अयं तु प्रविशन्त्या निर्यान्त्या च शीतया महानद्या द्विभागीकृतत्वेनोभयोः पार्श्वयोर्वर्त्तिनीभ्यां वेदिकाभ्यां युक्त इति सम्यक्, अर्थश्च नीलव-द्वर्षधरनिभानि तत्र तत्र प्रदेशेषु शतपत्रादीनि सन्ति अथवा नीलवन्नामा नागकुमारो देवोऽ-त्राधिपतिरिति नीलवान् ह्रद इति, शेषं पद्मादिकं तदेव नेतव्यं, पद्मद्रह इव पद्ममानसङ्ख्या-परिक्षेपादिकं ज्ञातव्यमित्यर्थः। अथ काञ्चनगिरिव्यवस्थामाह–

नीलवद्द्रहस्य पूर्वापरपार्श्वयोः प्रत्येकं दशदशयोजनान्यबाधया कृत्वेति गम्यं, आपन्तराले मुक्त्वेति भावः, अत्रान्तरे दक्षिणोत्तरश्रेण्या परस्परं मूले सम्बद्धाः अन्यथा शतयोजनविस्तारानामेषां सहस्रयोजनमाने द्रहायामेऽवकाशासम्भव इति, विंशति काञ्चनकपर्वताः प्रज्ञप्ताः, एकं योजनशतमूर्ध्वोच्चत्वेन, गाथाद्वयेनैतेषां विष्कम्भप रिक्षेपावाह–

**मू. (१४७)** *मूलंमि जोअणसयं पन्नत्तरि जोअणाइं मज्झंमि।*
*उवरितले कंचनगा पन्नासं जोअणा हुंति ॥*

वृ. मूले योजनशतं मध्ये—मूलतः पञ्चाशद्योजनोर्ध्वगमने पञ्चसप्ततिर्योजनानि उपरितने—शिखरतले पञ्चाशद्योजनानि विस्तारेण भवंति काञ्चनकाभिधाः पर्वताः

मू. (१४८) *मूलंमि तिन्नि सोले सत्तत्तीसाइं दुन्नि मज्झंमि ।*
*अट्ठावन्नं च सयं उवरितले परिरओ होइ ॥*

वृ. मूले त्रीणि योजनशतानि षोडशाधिकानि मध्ये द्वे योजनशते सप्तत्रिंशदधिके अष्टपञ्चाशदधिकयोजनशतं उपरितले परिरयः—परिधिरिति ॥ इह च मूले परिधौ मध्यपरिधौ च किंचिद्विशेषाधिकत्वं गाथाबन्धानुलोम्यादनुक्तमप्यवसेयं ।

मू. (१४९) *पढमित्थ नीलवंतो १ बितिओ उत्तरकुरू २ मुणेअव्वो ।*
*चंदद्दहोत्थ तइओ ३ एरावय ४ मालवंतो अ ५ ॥*

वृ. अथ सङ्ख्याक्रमेण पञ्चानामपि ह्रदानां नामान्याह—'पढमित्थ' इत्यादि, प्रथमो नीलवान् द्विती उत्तरकुरुर्ज्ञातव्यः चन्द्रह्रदोऽत्र तृतीयः ऐरावतश्चतुर्थ पञ्चमो माल्यवांश्च, अथानन्तरोक्तानां काञ्चनाद्रीणां एषां च ह्रदादीनां स्वरूपप्ररूपणाय लाघवार्थमेकमेव सूत्रमाह—

मू. (१५०) *एवं वण्णओ अट्ठो पमाणं पलिओवमट्ठिइआ देवा ।*

वृ. 'एवं वण्णओ' इत्यादि, एवं—उक्तन्यायेन नीलवद्द्रहन्यायेनेत्यर्थः उत्तरकुरुह्रदादीनामपि ज्ञेयः पद्मवरवेदिकावनखण्डत्रिसोपानप्रतिरूपकतोरणमूलपद्माष्टोत्तरशतपद्मपरिवारपद्मशेषपद्मपरिक्षेपत्रयवक्तव्यतापि, तथैवार्थउत्तरकुर्वद्रिह्रदनामान्वर्थ उत्तरकुरुह्रदप्रभोत्तरकुरुह्रदाकारोत्पलादियोगादुत्तरकुरुदेवस्वामिकत्वाच्चोत्तरकुरुह्रद इति, चन्द्रह्रदप्रभाणि—चन्द्रह्रदाकाराणि चन्द्रह्रदवर्णानि चन्द्रश्चात्र देवः स्वामीति चन्द्रह्रदः, ऐरावतं—उत्तरपार्श्ववर्तिभरतक्षेत्रप्रतिरूपकक्षेत्रविशेषस्तत्प्रभाणि—तदाकाराणि, आरोपितज्यधनुराकाराणीत्यर्थः, उत्पलादीनि ऐरावतश्चात्र देवः प्रभुरित्यैरावतः, माल्यवद्वक्षस्कारनिभोत्पलादियोगान्माल्यवद्देवस्वामिकत्वाच्च माल्यवद्ह्रद इति, प्रमाणं च सहस्र योजनान्यायामस्तदर्द्ध विष्कम्भ इत्यादिकं, पल्योपमस्थितिकाश्चात्र देवाः परिवसन्ति तत्राद्यस्य नागेन्द्र उक्तः, शेषाणां व्यन्तरेन्द्राः, काञ्चनाद्रीणां च वर्णको यमकाद्रिवद्वाच्यः, अर्थश्च काञ्चनवर्णोत्पलादियोगात् काञ्चनाभिधदेवस्वामिकत्वाच्च काञ्चनाद्रयः, प्रमाणं योजनशतोच्चत्वं मूले योजनशतं विस्तार इत्यादिकं उत्तरकुरुह्रदादिशेषद्रहपार्श्ववर्तिकाञ्चनाचलापेक्षयेदं बोध्यं, अथवा प्रमाणं प्रतिह्रदं विंशति प्रतिपार्श्वं दश सर्वसङ्ख्यया शतमित्यादिकं पल्योपमस्थितिकाश्चात्र देवा इति राजधान्यश्चैतेषामत्रानुक्ता अपि यमकदेवराजधानीवद्वाच्याः परं तत्तदभिलापेनेति ।

अथ यन्नाम्ना इदं जम्बूद्वीपं ख्यातं तां सुदर्शनानाम्नीं जम्बूं विवक्षुस्तदधिष्ठानमाह—

मू. (१५१) *कहि णं भंते ! उत्तरकुराए २ जंबूपेढे नामं पेढे प० गो० नीलवंतस्स वासहरपव्वयस्स दक्खिणेणं मंदरस्स उत्तरेणं मालवंतस्स वक्खारपव्वयस्स पच्चत्थिमेणं सीआए महानईए पुरत्थिमिल्ले कूले एत्थ णं उत्तरकुराए जंबूपेढेनामं पेढे प०, पंच जोअणसयाइं आयामविक्खंभेणं पन्नरस एकासीयाइं जोअणसयाइं किंचिविसेसाहिआइं परिक्खेवेणं ।*

*बहुमज्झदेसभाए बारस जोअणाइं बाहल्लेणं तयनंतरं च णं मायाए २ पदेसपरिहाणीए २ सव्वेसु णं चरिमपेरंतेसु दो दो गाऊआइं बाहल्लेणं सव्वजंबूणयामए अच्छे, से णं एगाए*

*पउमवरवेइआए एगेण य वनसंडणं सव्वओ समंता सपरिक्खित्त दुण्हंपि वण्णओ, तस्स णं जंबूपेढस्स चउद्दिसिं एए चत्तारि तिसोवाणपडिरूवगा पन्नत्ता वण्णओ जाव तोरणाइं।*

*तस्स णं जंबूपेढस्स बहुमज्झदेसभाए एत्थ णं मणिपेढआ पन्नत्ता अट्ठजोअणाइं आयामविक्खम्भेणं चत्तारि जोअणाइं बाहल्लेणं, तीसे णं मणिपेढिआए उप्पिं एत्थ णं जंबूसुदंसणा पन्नत्ता, अट्ठ जोअणाइं उद्धं उच्चत्तेणं अद्धजोअणं उव्वेहेणं, तीसे णं खंधो दो जोअणाइं उद्धं उच्चत्तेणं अद्धजोअणं बाहल्लेणं, तीसे णं साला छ जोअणाइं उद्धं उच्चत्तेणं बहुमज्झदेसभाए अट्ठ जोअणाइं आयामविक्खंभेणं साइरेगाइं अट्ठ जोअणाइं सव्वग्गेणं।*

*तीसे णं अयमेआरूवे वन्नावासे पं०— वइरामया मूला रययसुपइट्ठिअविडिमा जाव अहिअमनिव्वुइकरी पासाईआ दरिसणिज्जा०, जंबूए णं सुदंसणाए चउद्दिसिं चत्तारि साला पं०, तेसि णं सालाणं बहुमज्झदेसभाए एत्थ णं सिद्धाययने पन्नत्ते, कोसं आयामेणं अद्धकोसं विक्खम्भेणं देसूणगं कोसं उद्धं उच्चत्तेणं अनेगखम्भसयसन्निविट्ठे जाव दारा पंचधनुसयाइं उद्धं उच्चत्तेणं जाव वणमालाओ मणिपेढिआ पंचधनुसयाइं आयामविक्खंभेणं अद्धाइज्जाइं धनुसयाइं बाहल्लेणं, तीसे णं मणिपेढिआए उप्पिं देवच्छन्दए पंचधनुसयाइं आयामविक्खम्भेणं साइरेगाइं पंचधनुसयाइं उद्धं उच्चत्तेणं, जिनपडिमावण्णओ नेअव्वोत्ति।*

*तत्थ णं जे से पुरत्थिमिल्ले साले एत्थ णं भवणे पन्नत्ते, कोसं आयामेणं एवमेव नवरमित्थ सयणिज्जं सेसेसु पासायवडेंसया सीहासणा य सपरिवारा इति। जंबू णं बारसहिं पउमवरवेइआहिं सव्वओ समंता संपरिक्खित्ता, वेइआणं वण्णओ, जंबू णं अन्नेणं अट्ठसएणं जंबूणं तदद्धुच्चत्ताणं सव्वओ समंता संपरिक्खित्ता, तासि णं वण्णओ, ताओ णं जंबू छहिं पउमवरवेइआहिं संपरिक्खित्ता, जंबूए णं सुदंसणाए उत्तरपुरत्थिमेणं उत्तरेणं उत्तरपच्चत्थिमेणं एत्थ णं अणाढिअस्स देवस्स चउण्हं सामानिअसाहस्सीणं चत्तारि जंबूसाहस्सीओ पन्नत्ताओ, तीसे णं पुरत्थिमेणं चउण्हं अग्गमहिसीणं चत्तारि जंबूओ पन्नत्ताओ—*

**वृ.** 'कहि णं'मित्यादि, क्व भदन्त! उत्तरकुरुषु जम्बूपीठं नाम पीठं प्रज्ञप्तं?, निर्वचनसूत्रे गौतमेत्यामन्त्रणं गम्यं, नीलवतो वर्षधरपर्वतस्य दक्षिणेन मन्दरस्य पर्वतस्योत्तरेण माल्यवतो वक्षस्कारपर्वतस्य गजदन्तापरपर्यस्य पश्चिमेन—पश्चिमायां शीताया महानद्याः पूर्वकूले- शीताद्विभागीकृतोत्तरकुरुपूर्वार्द्धे तत्रापि मध्यभागे अत्रान्तरे उत्तरकुरुषु कुरुषु जम्बूपीठं नाम पीठं प्रज्ञप्तं, पञ्चयोजनशतान्यायामविष्कम्भेन योजनानां पञ्चदशशतान्येकाशीत्यधिकानि किंचिद्विशेषाधिकानि परिक्षेपेण बहुमध्यदेशभागे विवक्षितिदिकप्रान्तादर्धतृतीयशतयोजनातिक्रमे इत्यर्थः। बाहल्येन द्वादश योजनानि, तदनन्तरं मात्रया २—क्रमेण २ प्रदेशपरिहाण्या परिहीयमाणः २ 'सव्वेसु'त्ति पाकृतत्वात् पञ्चम्यर्थे सप्तमी तेन सर्वेभ्यश्चरमप्रान्तेषु मध्यतोऽर्द्धतृतीययोजनशतातिक्रमे इत्यर्थः, द्वौ क्रोशौ बाहल्येन, सर्वात्मना जाम्बूनदमयं, 'अच्छ'मित्यादि, 'से णं एगाए पउम'इत्यादि, तदिति अनन्तरोक्तं जम्बूपीठं एकया पद्मवरवेदिकया एकेन च वनखण्डेन सर्वतः समन्तात् सम्परिक्षिप्तमिति शेषः, द्वयोरपि पद्मवरवेदिकावनखण्डयोर्वर्णकः स्मर्त्तव्यः प्राक्तनः तच्च जघन्यतोऽपि चरमान्ते द्विक्रोशोच्चं कथं सुखारोहावरोहमियाशङ्कयाह—

'तस्स णं'मित्यादि, तस्य जम्बूपीठस्य चतुर्दिशि एतानि दिग्नामोपलक्षितानि चत्वारि

त्रिसोपानप्रतिरूपकाणि प्रज्ञप्तानि, एतानि च त्रीणि मिलितानि द्विक्रोशोच्चानि भवन्ति क्रोशविस्तीर्णानि अत एव प्रान्ते द्विक्रोशबाहल्यात् पीठात् उत्तरतामवतरतां च मुखावहद्वारभूतानि वर्णकश्च तावद्वक्तव्यो यावत् तोरणानि, 'तस्स णं' मित्यादि, व्यक्तं, 'तीसे णं' मित्यादि, तस्या मणिपीठिकाया उपरि अत्र जम्बूः सुदर्शनानाम्नी प्रज्ञप्ता, अष्टयोजनान्यूर्ध्वोच्चत्वेन अर्द्धयोजनमुद्वेधेन–भूप्रवेशेन, अथास्या एवोच्चत्वस्याष्ट योजनानि विभागतो द्वाभ्यां सूत्राभ्यां दर्शयति–

'तीसे णं' मित्यादि, तस्या जम्ब्वाः स्कन्धः–कन्दादुपरितनः शाखाप्रभवपर्यन्तोऽवयवो द्वे योजने ऊर्ध्वोच्चत्वेनार्द्धयोजनं बाहल्येन–पिण्डेन तस्याः शाला विडिमापरपर्याया दिक्प्रसृता शाखा–मध्यभागप्रभवा ऊर्ध्वगता शाखा षड् योजनान्यूर्ध्वोच्चत्वेन, तथा बहुमध्यदेशभागे प्रकरणाज्जम्बूरिति गम्यम्, अष्टौ योजनान्यायामविष्कम्भाभ्यां तान्येवास्याः स्कन्धोपरितनभागाच्चतसृष्वपि दिक्षु प्रत्येकमेकैका शाखा निर्गता ताश्च क्रोशोनानि चत्वारि योजनानि, तेन पूर्वापरशाखादैर्घ्यस्कन्धबाहल्यसम्बन्ध्यर्द्धयोजनमीलनेनोक्तसङ्ख्यानयनं, बहुमध्यदेशभागश्चात्र व्यावहारिको ग्राह्यः, वृक्षादीनां शाखाप्रसरस्थाने मध्यदेशस्य लोकैर्व्यवह्रियमाणत्वात्, पुरुषस्य कटिभाग इव, अन्यथा विडिमाया द्वियोजनातिक्रमे निश्चयप्राप्तस्य मध्यभागस्य ग्रहणे पूर्वापरशाखाद्वयविस्तारस्य ग्रहणसम्भवः विषमश्रेणिकत्वात्, अथवा बहुमध्यदेशभागः शाखानामिति गम्यते, कोऽर्थः ? –यतश्चतुर्दिक्शाखामध्यभागस्तस्मिन्नित्यर्थः, अष्टयोजनानयनं तु तथैव, उच्चत्वेन तु सर्वाग्रेण–सर्वसङ्ख्यया कन्दस्कन्धविडिमापरिमाणमीलने सातिरेकाण्यष्टौ योजनानीति, अथास्या वर्णकमाह– 'तीसे णं' मित्यादि, तस्या जम्ब्वा अयमेतद्रूपो वर्णावासः प्रज्ञप्तः, वज्रमयानि मूलानि यस्याः सा वज्रमयमूला तथा रजता–रजतमयी सुप्रतिष्ठिता विडिमा–बहुमध्यदेशभागे ऊर्ध्वविनिर्गता शाखा यस्याः सा रजतसुप्रतिष्ठितविडिमा, ततः पदद्वयकर्मधारयः, यावत्पदात् चैत्यवृक्षवर्णकः सर्वोऽप्यत्र वाच्यः, कियत्पर्यन्तमित्याह– अधिकमनोनिर्वृतिकरी प्रासादीया दर्शनीया इत्यादि । अथास्याः शाखाव्यक्तिमाह–

'जंबूए णं' मित्यादि, जम्ब्वाः सुदर्शनायाः चतुर्दिशि चतस्रः शालाः–शाखाः प्रज्ञप्ताः, तासां शालानां बहुमध्यदेशभागे उपरितनविडिमाशालायामित्यध्याहार्यं जीवाभिगमे तथा दर्शनात्, शेषं सुलभं वैताढ्यसिद्धकूटगतसिद्धायतनप्रकरणतो ज्ञेयमित्यर्थः, अत्र पूर्वशालादौ यत्र यदस्ति तत्र तद्वक्तुमाह–'तत्थ णं' मित्यादि, तत्र–तासु चतसृषु शालासु या सा पौरस्त्या शाला सूत्रे प्राकृतत्वात् पुंस्त्वनिर्देशः अत्र भवनं प्रज्ञप्तं क्रोशमायामेन 'एवमेवे' ति सिद्धायतनवदिति, अर्द्धक्रोशं विष्कम्भेन देशोनं क्रोशमुच्चत्वेनेति प्रमाणं द्वारादिवर्णकश्च वाच्यः, नवरमत्र शयनीयं वाच्यं, शेषासु दाक्षिणात्यादिशालासु प्रत्येकमेकैकभावेन त्रयः प्रासादावतंसकाः सिंहासनानि सपरिवाराणि च बोद्धव्यानि तेषां प्रमाणं च भवनवत्, तत्र खेदानोदाय भवनेषु शयनीयानि प्रासादेषु त्वास्थानसभा इति, ननु भवनानि विषमायामविष्कम्भानि पद्मद्रहादिमूलपद्मभवनादिषु तथा दर्शनात् प्रासादास्तु समायामविष्कम्भाः दीर्घवैताढ्यकूटगतेषु वृत्तवैताढ्यगतेषु विजयादिराजधानीगतेषु अन्येष्वपि विमानादिगतेषु च प्रासादेषु समचतुरस्रत्वेन समायामविष्कम्भत्वस्य सिद्धान्तसिद्धत्वात् तत्कथमत्र प्रासादानां भवनतुल्यप्रमाणता घटते ?, उच्यते ।

'ते पासाया कोसं समूसिआ अद्धकोसविच्छिन्ना' इत्यस्य पूज्यश्रीजिनभद्रगणिक्ष-

माश्रमणोपज्ञक्षेत्रविचारगाथार्द्धस्य वृत्तौ—ते प्रासादाः क्रोशमेकं देशोनमिति शेषः समुच्छ्रिता—उच्चाः क्रोशार्द्धं—अर्द्धक्रोशं विस्तीर्णा परिपूर्णमेकं क्रोशं दीर्घा इति श्रीमलयगिरिपादाः तथा जम्बूद्वीपसमासप्रकरणे "प्राच्ये शाले भवनं इतरेषु प्रासादाः मध्ये सिद्धायतनं सर्वाणि विजयार्द्धमानानी"ति श्रीउमास्वातिवाचकपादाः तथा तपागच्छाधिराजपूज्यश्रीसोमतिलकसूरिकृतनव्यबृहत्क्षेत्रावचारसत्कायाः "पासाया सेसदिसासालासु वेअड्ढगिरिगयव्व तओ" इत्यस्या गाथाया अवचूर्णौ—"शेषासु तिसृषु शाखासु प्रत्येकमेकैकभावेन तत्र त्रयः प्रासादाः—आस्थानोचितानि मन्दिराणि देशोनं क्रोशमुच्चाः क्रोशार्द्धं विस्तीर्णा पूर्णं क्रोशं दीर्घा" इति श्रीगुणरत्नसूरिपादाः यदाहुः तदाशयेन प्रस्तुतोपाङ्गस्योत्तरत्र जम्बूपरिक्षेपकवनवापीपरिगतप्रासादप्रमाणसूत्रानुसारेण च इत्येवं निश्चिनुमो जम्बूप्रकरणप्रासादा विषमायामविष्कम्भा इति, यत्तु श्रीजीवाभिगमसूत्रवृत्तौ 'क्रोशमेकमूर्ध्वमुच्चैस्त्वेन अर्द्धक्रोशं विष्कम्भेने'त्युक्तं तद्गम्भीराशयं न विद्मः।

अथास्याः पद्मवरवेदिकादिस्वरूपमाह—'जंबू णं'मित्यादि, जम्बूर्द्वादशभिः पद्मवरवेदिकाभिः—प्राकारविशेषरूपाभिः सर्वतः समन्तात् सम्परिक्षिप्ता, वेदिकाना वर्णकः प्राग्वत्, इमाश्च मूलजम्बू परिवृत्य स्थिता ज्ञातव्याः, या तु पीठपरिवेष्टिका सा तु प्रागेवोक्ता। अथास्याः प्रथमपरि- क्षेपमाह—'जंबू णं'मित्यादि, जम्बूः णमिति वाक्यालङ्कारे अन्येनाष्टशतेन—अष्टोत्तरशतेन जम्बूवृक्षाणां 'तदर्द्धोच्चत्वानां' तस्या मूलजम्ब्वाः अर्द्धप्रमाणमुच्चत्वं यासां तास्तथा तासां सर्वतः समन्तात् सम्परिक्षिप्ता उपलक्षणं चैतत् तेनोद्वेधस्य मणिपीठस्य अपि अर्द्धप्रमाणं ज्ञेयम्, तथाहि—ता अष्टाधिकशतसङ्ख्या जम्ब्वः प्रत्येकं चत्वारि योजनान्युच्चैस्त्वेन क्रोशमेकमवगाहेन एकं योजनमुच्चः स्कन्धः त्रीणि योजनानि विडिमा सर्वाग्रेणोच्चैस्त्वेन सातिरेकाणि चत्वारि योजनानि तत्रैकैका शाखा अर्द्धक्रोशहीने द्वे योजने दीर्घा क्रोशपृथुत्वः स्कन्ध इति भवन्ति सर्वसंख्यया आयामविष्कम्भतश्चत्वारि योजनानि, आसु चानादृतदेवस्याभरणादि तिष्ठति, एतासां वर्णकज्ञापनायाह—'तासि णं वण्णओ'त्ति तासां च वर्णको मूलजम्बूसदृश एवेति, अथासां यावत्यः पद्मवरवेदिकास्ता आह—

'ताओ णं'मित्यादि, उत्तानार्थं, नवरं प्रतिजम्बूवृक्षं षट् षट् पद्मवरवेदिका इत्यर्थः, एतासु च १०८ जम्बूषु अत्र सूत्रे जीवाभिगमे बृहत्क्षेत्रविचारादौ सूत्रकृद्भिः वृत्तिकृद्भिश्च जिनभवनभवनप्रासादचिन्ता कापि न चक्रे बहवोऽपि च बहुश्रुताः श्राद्धप्रतिक्रमणसूत्रचूर्णिका- दयो मूलजम्बूवृक्षगततत्प्रथमवनखण्डगतकूटाष्टकजिनभवनैः सह सप्तदशोत्तरं शतं जिनभवनानां मन्यमानाः इहाप्येकैकं सिद्धायतनं पूर्वोक्तमानं मेनिरे ततोऽत्र तत्त्वं केवलिनो विदुरिति।

सम्प्रति शेषान् परिक्षेपान् वक्तुं सूत्रचतुष्टयमाह— जम्ब्वाः सुदर्शनायाः उत्तरपूर्वस्या—ईशानकोणे उत्तरस्यामुत्तर- पश्चिमायां—वायव्यकोणे अत्रान्तरे दिक्त्रयेऽपीत्यर्थः अनादृतनाम्नो—जम्बूद्वीपाधिपतेर्देवस्य चतुर्णां सामानिकसहस्राणां चत्वारि जम्बूसहस्राणि प्रज्ञप्तानि, 'तीसे णं'-मित्यादि, कण्ठ्यं, गाथाबन्धेन पार्षद्यदेवजम्बूराह—

**मू. (१५२)** *दक्खिणपुरत्थिमे दक्खिणेण तह अवरदक्खिणेणं च।*

*अट्ठ दस बारसेव य भवंति जंबूसहस्साइं॥*

**वृ.** 'दक्खिण'इत्यादि, दक्षिणपरस्त्ये—आग्नेयकोणे दक्षिणस्यां अपरदक्षिणस्यां—नैऋतकोणे चः समुच्चये एतासु तिसृषु दिक्षु यथासंख्य। अष्ट दश द्वादश जम्बूनां सहस्राणि भवन्ति, एवोऽवधारणे

तेन नाधिकानि न न्यूनानीत्यर्थः, घः प्राग्वत् ।

**मू. (१५३)** *अणिआहिवाण पच्चत्थिमेण सत्तेव होंति जंबूओ ।*
*सोलस साहस्सीओ चउद्दिसिं आयरक्खाणं ॥*

**वृ.** अनीकाधिपजम्बूस्तृतीयपरिक्षेपजम्बूश्च गाथाबन्धेनाह–'अणिआहिवाण'इत्यादि, अनीकाधिपाना–गजादिकटकाधीशानां सप्तानां सप्तैव जम्बू: पश्चिमायां भवन्ति, द्वितीयः परिक्षेपः पूर्णः ।

अथ तृतीयमाह–आत्मरक्षकानामनाध्तदेवसामानिकचतुर्गुणानां षोडशसहस्राणां जम्ब्वः एकैकदिक्षु चतुःसहस्र सद्भावात् षोडश सहस्राणि भवन्ति ।

**मू. (१५४)** *जम्बूए णं तिहिं सइएहिं वनसंडेहिं सव्वओ समंता संपरिक्खित्ता, जंबूए णं पुरत्थिमेणं पन्नासं जोअणाइं पढमं वनसंडं ओगाहित्ता एत्थ णं भवणे पन्नत्ते कोसं आयामेण सो चेव वण्णओ सयणिज्जं च, एवं सेसासुवि दिसासु भवणा, जंबूए णं उत्तरपुरत्थिमेणं पढमं वनसण्डं पन्नासं जोअणाइं ओगाहित्ता एत्थ णं चत्तारि पुक्खरिणीओ पन्नत्ताओ, तंजहा–पउमा १ पउमप्पभा २ कुमुदा ३ कुमुदप्पभा ४, ताओ णं कोसं आयामेणं अद्धकोसं विक्खम्भेणं पञ्च- धनुस याइं उव्वेहेणं वण्णओ तासि णं मज्झे पासायवडेंसगा कोसं आयामेणं अद्धकोसं विक्खंभेणं देसूणं कोसं उद्धं उच्चत्तेमं वण्णओ सीहासणा सपरिवारा, एवं सेसासु विदिसासु, गाहा–*

**वृ.** यद्यपि चानयोः परिक्षेपयोर्जम्बूनामुच्चत्वादिप्रमाणं न पूर्वाचार्यैश्चिन्तितं तथापि पश्चाद्वदपश्चपरिक्षेपन्ययेन पूर्वपूर्वपरिक्षेपजम्ब्वपेक्षयोत्तरोत्तरपरिक्षेपजम्ब्वोऽर्द्धमाना ज्ञातव्याः, अत्राप्येकैकस्मिन् परिक्षेपे एकैकस्यां पङ्क्तौ क्रियमाणायां क्षेत्रसाङ्कीर्ण्येर्नानवकाशदोष-स्तथैवोद्-भावनीयस्तेन परिक्षेपजातयस्तिस्रस्तथैव वाच्याः, सम्प्रत्यस्या एव वनत्रयपरिक्षेपान् वक्तुमाह– सा चैवंपरिवारेति गम्यं, त्रिभि शतिकैः–योजनशतप्रमाणैर्वनखण्डैः सर्वतः सम्परिक्षिप्ताः, तद्यथा–अभ्यन्तरेण मध्यमेन बाह्येनेति, अथात्र यदस्ति तदाह–'जंबूए ण'मित्यादि, जम्ब्वाः सपरिवारायाः पूर्वेण पञ्चाशदयोजनानि प्रथमवनखण्डमवगाह्यात्रान्तरे भवनं प्रज्ञप्तं, क्रोशमायामेन, उच्चत्वादिकथनायातिदेशमाह–स एव मूलजम्बूपूर्वशाखागतभवन- सम्बन्धी वर्णको ज्ञेयः, शयनीयं तानाध्तयोग्यं, एवं शेषास्वपि दक्षिणादिदिक्षु स्वस्वदिशि पञ्चाशद्योजनान्यवगाह्याद्ये वने भवनानि वाच्यानि, अथात्र वने वापीस्वरूपमाह–

'जंबूए णं उत्तरे'त्यादि, जम्ब्वाः उत्तरपौरस्त्ये दिग्भागे प्रथमं वनखण्डं पञ्चाशद-योजनान्यवगाह्यात्रान्तरे चतस्रः पुष्करिण्यः प्रज्ञप्ताः, एताश्च न सूचीश्रेण्या व्यवस्थिताः किन्तु स्वविदिग्गतप्रासादं परिक्षिप्य स्थिताः, तेन प्रादक्षिण्येन तन्नामान्येवं– पद्मा पूर्वस्यां पद्मप्रभा दक्षिणस्यां कुमुदा पश्चिमायां कुमुदप्रभा उत्तरस्यां, एवं दक्षिणपूर्वाविदिग्गतवापीष्वपि वाच्यं, ताश्च क्रोशमायामेन अर्द्धक्रोशं विष्कम्भेन पञ्चधनुःशतान्युद्वेधेनेति ।

अथात्र वापीमध्यगतप्रासादस्वरूपमाह– 'तासि ण'मित्यादि, तासां वापीनां चतसृणां मध्ये प्रासादावतंसकाः प्रज्ञप्ताः, बहुवचनं च उक्तवक्ष्यमाणानां वापीनां प्रासादापेक्षया द्रष्टव्यं, तेन प्रतिवापीचतुष्कमेकैकप्रासादभावेन चत्वारः प्रासादाः, एवं निर्देशो लाघवार्थं, क्रोशमाया-मेनार्द्धक्रोशं विष्कम्भेन देशोनं क्रोशमुच्चत्वेन, वर्णको मूलजम्बूदक्षिणशाखागतप्रासादवद् ज्ञेयः, एषु चानाद्दतदेवस्य क्रीडार्थं सिंहासनानि सपरिवाराणि वाच्यानि, जीवाभिगमे त्वपरिवाराणि,

एवं शेषासु दक्षिणपूर्वादिषु विदिक्षु वाप्यः प्रासादाश्च वक्तव्याः, एतासां नामदर्शनाय गाथाद्वयं।

मू. (१५५) *पउमा पउमप्पभा चेव, कुमुदा कुमुदप्पहा।*
*उप्पलगुम्मा नलिना, उप्पला उप्पलुज्जला॥*

वृ. पद्मादयः प्रागुक्ताः पुनः पद्यबन्धबद्धत्वेन संगृहीता इति न पुनरुक्तिः, एताश्च सर्वा अपि सत्रिसोपानचतुर्द्वाराः पद्मवरवेदिकावनखण्डयुक्ताश्च बोध्याः, अथ दक्षिणपूर्वस्यां उत्पलगुल्मा पूर्वस्यां नलिना दक्षिणस्यां उत्पलोज्ज्वला पश्चिमायां उत्पला उत्तरस्यां तथा अपरदक्षिणस्यां।

मू. (१५६) *भिंगा भिंगप्पभा चेव, अंजणा कज्जलप्पभा।*
*सिरिकंता सिरिमहिआ, सिरिचंदा चेव सिरिनिलया॥*

वृ. भृङ्गाभृङ्गप्रभा अञ्जना कज्जलप्रभा तथा अपरोत्तरस्यां श्रीकान्ता श्रीमहिता श्रीचन्द्रा श्रीनिलया, चैवशब्दः प्राग्वत्, अथास्य वनस्य मध्यवर्त्तीनि कूटानि स्वरूपतो लक्षयति–

मू. (१५७) *जंबूए णं पुरत्थिमिल्लस्स भवणस्स उत्तरेणं उत्तरपुरत्थिमिल्लस्स पासायवडेंसगस्स दक्खिणेणं एत्थ णं कूडे पन्नत्ते अट्ठ जोअणाइं उद्धं उच्चत्तेणं दो जोअणाइं उव्वेहेणं मूले अट्ठ जोअणाइं आयामविक्खम्भेणं बहुमज्झदेसभाए छ जोअणाइं आयामविक्खम्भेणं उवरिं चत्तारि जोयणाइं आयामविक्खम्भेणं–*

वृ. 'जंबूए णं' इत्यादि, जम्ब्वा अस्मिन्नेव प्रथमे वनखण्डे पौरस्त्यस्य भवनस्य उत्तरस्यां उत्तरपौरस्त्यस्य–ईशानकोणसत्कस्य प्रासादावतंसकस्य दक्षिणस्यां अत्रान्तरे कूटं प्रज्ञप्तं अष्टौ योजनान्यूर्ध्वोच्चत्वेन द्वे योजने उद्वेधेन, वृत्तत्वेन य एव आयामः स एव विष्कम्भ इति, मूलेऽष्ट योजनान्यायामविष्कम्भाभ्यां बहुमध्यदेशभागे, भूमितश्चतुर्षु योजनेषु गतेष्वित्यर्थः, षड् योजनान्यायामविष्कम्भाभ्यां,उपरिशिखरभागे चत्वारि योजनान्यायामविष्कम्भाभ्यां, अथामीषां परिधिकथनाय पद्यमाह–

मू. (१५८) *पणवीसट्ठारस बारसेव मूले अ मज्झि उवरिं च।*
*सविसेसाइं परिरओ कूडस्स इमस्स बोद्धव्वो॥*

वृ. 'पणवीसे'त्यादिकं, सर्वं प्रथमपाठगतऋषभकूटाभिलापानुसारेण वाच्यं, नवरं पञ्चविंशति योजनानि सविशेषाणि किञ्चिदधिकानि मूले परिरय इत्यादि यथासंख्यं योज्यम्, जिनभद्रगणिक्षमाश्रमणैस्तु 'अट्ठसहकूडसरिसा सव्वे जम्बूनयामया भणिआ' । इत्यस्यां गाथया-मृषभकूटसमत्वेन भणितत्वात् द्वादश योजनानि अष्टौ मध्ये चेत्यूचे, तत्त्वं तु बहुश्रुतगम्यं, एषु च प्रत्येकं जिनगृहमेकैकं विदिभागतजिनगृहतुल्यमिति।

मू. (१५९) *मूले विच्छिन्ने मज्झे संखित्ते उवरिं तणुए सव्वकणगामए अच्छे वेइआवनसंडवण्णओ, एवं सेसावि कूडा इति। जम्बूए णं सुदंसणाए दुवालस नामधेज्जा पं०, तं०–*

वृ. अथ शेषकूटवक्तव्यतामतिदेशेनाह–'एवं सेसावि कूडा' इति, एवमुक्तरीत्या वर्णप्रमाणपरिध्याद्यपेक्षया शेषाण्यपि सप्त कूटानि बोध्यानि, स्थानविभागस्त्वयं तेषां, तथाहि–पूर्वदिग्भाविनो भवनस्य दक्षिणतो दक्षिणपूर्वदिग्भाविनः प्रासादावतंसकस्योत्तरतो द्वितीयं कूटं तथा दक्षिणदिग्भाविनो भवनस्य पूर्वतो दक्षिणपूर्वदिग्भाविनः प्रासादावतंसकस्य पश्चिमायां तृतीयं तथा दक्षिणदिग्भाविनो भवनस्य पश्चिमायां दक्षिणापरदिग्भाविनः प्रासादावतंसकस्य

पूर्वतश्चतुर्थं तथा पश्चिमदिग्भाविनो भवनस्य दक्षिणतो दक्षिणापरदिग्भाविनः प्रासादावतंसकस्योत्तरतः पञ्चमं तथा पश्चिमदिग्भाविनो भवनस्योत्तरतः उत्तरपश्चिमदिग्भाविनः प्रासादावतंसकस्य दक्षिणतः षष्ठं तथा उत्तरदिग्भाविनो भवनस्य पश्चिमायां उत्तरपश्चिमदिग्भाविनः प्रासादावतंसकस्य पूर्वतः सप्तमं तथा उत्तरदिग्भाविनो भवनस्य पूर्वतः उत्तरपूर्वदिग्भाविनः प्रासादावतंसकस्य अपरतोऽष्टममिति, अत्रैषां स्थापना यथा यन्त्रे तथा विलोकनीया, अथ जम्ब्वा नामोत्कीर्त्तनमाह–

**मू. (१६०)** *सुदंसणा १ अमोहा २ य, सुप्पबुद्धा ३ जसोहरा ४ ।*
*विदेहजंबू ५ सोमणसा ६, निअया ७ निच्चमंडिआ ८ ॥*

**मू. (१६१)** *सुभद्दा य ९ विसाला य १०, सुजाया ११ सुमणा १२ विआ ।*
*सुदंसणाए जंबूए, नामधेज्जा दुवालस ॥*

**वृ.** जम्ब्वाः सुदर्शनायाः द्वादश नामधेयानि प्रज्ञप्तानि, तद्यथा–सुष्ठु–शोभनं नयनमनसोरानन्दकत्वेन दर्शनं यस्याः सा तथा, अमोघा–सफला, इयं हि स्वस्वामिभावेन प्रतिपन्ना सती जम्बूद्वीपाधिपत्यं जनयति, तदन्तरेण तद्विषयस्य स्वामिभावस्यैवायोगात्, सुष्ठु–अतिशयेन प्रबुद्धा–उत्फुल्ला उत्फुल्लपुष्पयोगादियमप्युत्फुल्ला, सकलभुवनव्यापकं यशो धरतीति यशोधरा, 'लिहादित्यादच्' जम्बूद्वीपो ह्यनया जम्ब्वा भुवनत्रयेऽपि विदितमहिमा ततः सम्पन्नं यथोक्तयशोधारित्वमस्याः, विदेहेषु जम्बूः विदेहजम्बूर्विदेहान्तर्गतोत्तरकुरुकृतनिवासत्वात्, सौमनस्यहेतुत्वात् सौमनस्या, न हि तां पश्यतः कस्यापि मनो दुष्टं भवति, नियता सर्वकालमवस्थिता शाश्वतत्वात् नित्यमण्डिता सदा भूषणभूषितत्वात्, सुभद्रा–शोभनकल्याणभाजिनी, न ह्यस्याः कदाचिदुपद्रवसम्भवो महर्द्धिकेनाश्रितत्वात्, चः समुच्चये, विशाला–विस्तीर्णा, चः पूर्ववत्, आयामविष्कम्भाभ्यामुच्चत्वेन चाष्टयोजनप्रमाणत्वात्, शोभनं जातं–जन्म यस्याः सा सुजाता, विशुद्धमणिकनकरत्नमूलद्रव्यजनिततया जन्मदोषरहितेति भावः, शोभनं मनो यस्याः सकाशाद्भवति सा सुमनाः, अपि चेति समुच्चये, अत्र जीवाभिगमादिषु विदेहजम्ब्वादीनां सुदशर्नादीनां च नाम्ना व्यत्यासेन पाठो दृश्यते तत्रापि न कश्चिद्विरोध इति ।

**मू. (१६२)** *जंबूए णं अट्ठट्ठमंगलगा०, से केणट्ठेणं भंते ! एवं वुच्चइ–जंबू सुदंसणा २ गोअमा ! जंबूए णं सुदंसणाए अनाढिए नामं जंबुद्दीवाहिवई परिवसइ महिद्धीए, से णं तत्थ चउण्हं सामाणिअसाहस्सीणं जाव आयरक्खदेवसाहस्सीणं, जंबुद्दीवस्स णं दीवस्स जंबूए सुदंसणाए अणाढिआए रायहाणीए अन्नेसिं च बहूणं देवाण य देवीण य जाव विहरइ, से तेणट्ठेणं गो० ! एवं वुच्चइ, अदुत्तरा णं च णं गोअमा ! जंबूसुदंसणा जाव भुविं च ३ धुवा निअआ सासया अक्खया जाव अवट्ठिआ ! कहि णं भंते ! अणाढिअस्स देवस्स अणाढिआ नामं रायहाणी पन्नत्ता?, गोअमा ! जंबूद्दीवे मंदरस्स पव्वयस्स उत्तरेणं जं चेव पुव्ववण्णिअं जमिगापमाणं तं चेव नेअव्वं, जाव उववाओ अभिसेओ अ निरवसेसोत्ति ।*

**वृ.** 'जंबूए णं अट्ठट्ठमंगलगा' इति व्यक्तं, उपलक्षणाद् ध्वजच्छत्रादिसूत्राणि वाच्यानीति, सम्प्रति सुदर्शनाशब्दप्रवृत्तिनिमित्तं पिपृच्छिषुरिदमाह–'से केणट्ठेण'मित्यादि, प्रश्नः प्रतीतः, उत्तरसूत्रे गौतम ! जम्ब्वां सुदर्शनायामनादृतो नाम जम्बूद्वीपाधिपतिर्न आदृता–आदरविषयीकृताः शेषजम्बूद्वीपगता देवा येनात्मनोऽनन्यसदृशं महर्द्धिकत्वमीक्षमाणेन सोऽनादृत इति यथार्थनामा

परिवसति, महर्द्धिक इत्यादि प्राग्वत्, स च चतुर्णां सामानिकसहस्राणां यावदात्मरक्षकसहस्राणां जम्बूद्वीपस्य जम्ब्वाः सुदर्शनायाः अनादृतनाम्नया राजधान्या अन्येषां च बहूनां देवानां देवीनां चानादृताराजधानीवास्तव्यनामाधिपत्यं पालयन् यावद्विहरति, तदेतेनार्थेन एवमुच्यते—

जंबूसुदर्शनेति, कोऽर्थः ?—अनादृतदेवस्य सदृशमात्मनि महर्द्धिकत्वदर्शनमत्रकृतावासस्येति, सुष्ठु—शोभमतिशयेन वा दर्शनं—विचारणमनन्तरोक्तस्वरूपं चिन्तनमितियावत् अनादृतदेवस्य यस्याः सकाशात् सा सुदर्शना इति, यद्यप्यनादृता राजधानीप्रश्नोत्तरसूत्रे सुदर्शनाशब्दप्रवृत्तिनिमित्तप्रश्नोत्तरसूत्रनिगमनसूत्रान्तर्गते बहुष्वादर्शेषु दृष्टे तथापि 'से तेणट्ठेण'मित्यादि निगमनसूत्रमुत्तरसूत्रानन्तरमेव वाचयितृनामव्यामोहाय सूत्रपाठेऽस्माभिर्लिखितं व्याख्यातं च, उत्तरसूत्रानन्तरं निगमनसूत्रस्यैव यौक्तिकत्वादिति, अथापरं गौतम ! यावच्छब्दाज्जम्ब्वाः सुदर्शनाया एतच्छाश्वतं नामधेयं प्रज्ञप्तं, यत्र कदाचिन्नासीदित्यादिकं ग्राह्यं, नाम्नः शाश्वतत्वं दर्शितम्, अथ प्रस्तुतवस्तुनः शाश्वतत्वमस्ति नवेत्याशङ्का परिहरन्नाह—'जंबुसुदंसणा' इत्यादि, व्याख्याऽस्य प्राग्वत्, अथ प्रस्तावादस्य राजधानीं विवक्षुराह— 'कहि णं भंते ! अणाढिअस्स' इत्यादि, गतार्थं, नवरं यदेव प्राग्वर्णितं यमिकाराजधानीप्रमाणं तदेव नेतव्यं यावदनादृतदेवस्योपपातोऽभिषेकश्च निरवशेषो वक्तव्य इति शेषः । अथोत्तरकुरुनामार्थं पिपृच्छिषुरिदमाह—

मू. (१६३) *से केणट्ठेणं भंते ! एवं वुच्चइ उत्तरकुरा २ ? गो० उत्तरकुराए उत्तरकुरुनामं देवे परिवसइ महिड्ढीए जाव पलिओवमट्ठिइए, से तेणट्ठेणं गो० एवं वुच्चइ उत्तरकुरा २, अदुत्तरं च णंति जाव सासए । कहि णं भंते ! महाविदेहे वासे मालवंते नामं वक्खारपव्वए प० ?*

*गो० ! मंदरस्स पव्वयस्स उत्तरपुरत्थिमेणं नीलवंतस्स वासहरपव्वयस्स दाहिणेणं उत्तरकुराए पुरत्थिमेणं वच्छस्स चक्कवट्टिविजयस्स पच्चत्थिमेणं एत्थ णं महाविदेहे वासे मालवंते नामं वक्खारपव्वए पन्नत्ते उत्तरदाहिणायए पाईणपडीणविच्छिण्णे जं चेव गंधमायणस्स पमाणं विक्खम्भो अ नवरमिमं णाणत्तं सव्ववेरुलिआमए अवसिट्ठं तं चेव जाव गो० नवकूडा प० ।*

वृ. 'से केणट्ठेण'मित्यादि, प्रतीतं, नवरं उत्तरकुरुनामाऽत्र देवः परिवसति, तेनेमा उत्तरकुरव इत्यर्थः, अथ यस्मादुत्तरकुरवः पश्चिमायामुक्तास्तं माल्यवन्तं नाम द्वितीयं गजदन्ताकारगिरिं प्ररूपयति—'कहि ण'मित्यादि, प्रश्नसूत्रं सुगमं, उत्तरसूत्रे—गौतम ! मन्दरस्य पर्वतस्य उत्तरपौरस्त्ये—ईशानकोणे नीलवतो वर्षधरपर्वतस्य दक्षिणस्यामुत्तरकुरूणां पूर्वस्यां कच्छनाम्नश्चक्रवर्तिविजयस्य पश्चिमायामत्रान्तरे महाविदेहेषु माल्यवन्नाम्ना वक्षस्कारपर्वतः प्रज्ञप्त इति शेषः, पूर्वदक्षिणयोरायतः पूर्वपश्चिमयोर्विस्तीर्णः, किं बहुना विस्तरेण ?, यदेव गन्धमादनस्य पूर्वोक्तवक्षस्कारगिरेः प्रमाणं विष्कम्भश्च तदेव ज्ञातव्यमिति शेषः, नवरमिदं नानात्वं—अयं विशेषः, सर्वात्मना वैडूर्यरत्नमयः, अवशिष्टं तदेव, कियत्पर्यन्तमित्याह—'जाव' त्ति, सुलभं, नवरं उत्तरसूत्रे उक्तमपि सिद्धायतनकूटं यत्पुनरुच्यते ।

मू. (१६४) *सिद्धायतनकूडे० सिद्धे य मालवंते उत्तरकुरु कच्छसागरे रयए ।*
*सीओय पुण्णभद्दे हरिस्सहे चेव बोद्धव्वे ।*

वृ. 'सिद्धे य मालवंते' इति तद् गाथाबन्धेन सर्वसंग्रहायेति, सिद्धायतनकूटं चः पादपूरणे माल्यवत्कूटं प्रस्तुतवक्षस्काराधिपतिवासकूटं उत्तरकुरुकूटं— उत्तरकुरुदेवकूटं कच्छकूटं—कच्छ-

विजयाधिपकूटं सागरकूटं रजतकूटं, इदं चान्यत्र रुचकमिति प्रसिद्धं, शीताकूटं—शीतासितुसुरीकूटं, पदैकदेशे पदसमुदायोपचार इति सिद्धि, चः समुच्चये, पूर्णभद्रनाम्नो व्यन्तरेशस्य कूटं पूर्णभद्रकूटम्, हरिस्सहनाम्न उत्तरश्रेणिपतिविद्युत्कुमारेन्द्रस्य कूटं हरिस्सहकूटं, चैवशब्द पूर्ववत्, सम्प्रत्यमीषां स्थानप्ररूपणायाह—

मू. (१६५) *कहि णं भंते! मालवंते वक्खारपव्वए सिद्धायतनकूडे नामं कूडे प० गो० मन्दरस्सपव्वयस्स उत्तरपुरत्थिमेणं मालवंतस्स कूडस्स दाहिणपच्चत्थिमेण एत्थ णं सिद्धायतने कूडे प० पंच जोअणसयाइं उद्धं उच्चत्तेणं अवसिट्ठं तं चेव जाव रायहाणी, एवं मालवंतस्स कूडस्स उत्तरकुरुकूडस्स कच्छकूडस्स, एए चत्तारि कूडा दिसाहिं पमाणेहिं नेअव्वा, कूडसरिसनामया देवा। कहि णं भंते! मालवंते सागरकूडे नामं कूडे प० गो० कच्छकूडस्स उत्तरपुरत्थिमेणं रययकूडस्स दक्खिणेणं एत्थ णं सागरकूडे नामं कूडे पन्नत्ते, पंच जोअणसयाइं उद्धं उच्चत्तेणं अवसिट्ठं तं चेव सुभोगा देवी रायहाणी उत्तरपुरत्थिमेणं रययकूडे भोगमालिनी देवी रायहाणी उत्तरपुरत्थिमेणं, अवसिट्ठा कूडा उत्तरदाहिणेणं नेअव्वा एक्केणं पमाणेणं।*

वृ. 'कहि ण' मित्यादि, प्रश्नः प्रतीतः, उत्तरसूत्रे मन्दरस्य पर्वतस्य उत्तरपूर्वस्यां—ईशानकोणे प्रत्यासन्नमाल्यवत्कूटस्य दक्षिणपश्चिमायां नैऋतकोणे, अत्र सिद्धायतनकूटं प्रज्ञप्तमिति गम्यं, पञ्चयोजनशतान्यूर्ध्वोच्चत्वेन अवशिष्टं मूलविष्कम्भादिकं वक्तव्यं तदेव गन्धमादनसिद्धायतनकूटवदेव वाच्यं, यावद्राजधानी भणितव्या स्यात्, अयमर्थः—सिद्धायतनकूटवर्णके सामान्यतः कूटवर्णकसूत्रं विशेषतः सिद्धायतनादिवर्णकसूत्रं च द्वयमपि वाच्यं, तत्र सिद्धायतनकूटे राजधानीसूत्रं न सङ्गच्छते इति राजधानीसूत्रं विहाय तदधस्तनसूत्रं वाच्यमिति, अत्र यावच्छब्दो न संग्राहकः किन्त्ववधिमात्रसूचकः, यथा 'आसमुद्रक्षितीशाना' मित्यत्र समुद्रं विहाय क्षितीशत्वं वर्णितमिति, लाघवार्थमत्रातिदेशमाह— 'एवं मालवंतस्स' इत्यादि, एवं सिद्धायतनकूटरीत्या माल्यवत्कूटस्य उत्तरकुरुकूटस्य कच्छकूटस्य वक्तव्यं, ज्ञेयमिति गम्यं, अथैतानि किं परस्परं स्थानादिना तुल्यानि उतातुल्यानीत्याह— एतानि सिद्धायतनकूटसहितानि चत्वारि परस्परं दिग्भिरीशानविदिग्रूपाभि प्रमाणैश्च नेतव्यानि, तुल्यानीति शेषः, अयमर्थः—प्रथमं सिद्धायतनकूटं मेरोरुत्तरपूर्वस्या दिशि ततस्तस्य दिशि द्वितीयं माल्यवत्कूटं ततस्तस्यामेव दिशि तृतीयमुत्तरकुरुकूटं ततोऽप्यस्यां दिशि कच्छकूटं, एतानि चत्वार्यपि कूटानि विदिग्भावीनि मानतो हिमवत्कूटप्रमाणानीति, कूटसदृग्नामकाश्चात्र देवाः, अत्र 'यावत्सम्भवं विधिप्राप्ति' रिति न्यायात् सिद्धकूटवर्जेषु त्रिषु कूटेषु कूटनामका देवा इति बोध्यं, सिद्धायतनकूटे तु सिद्धायतनं, अन्यथा—

॥ १ ॥ "छसयरि कूडेसु तहा चूलाचउ वणतरूसु जिनभवणा।
भणिआ जंबुद्दीवे सदेवया सेस ठाणेसु ॥"

इति स्वोपज्ञक्षेत्रविचारे रत्नशेखरसूरिवचो विरोधमापद्येतेति, अथावशिष्टकूटस्वरूपमाह—'कहि ण' मित्यादि, प्रश्नसूत्रं सुगमम्, उत्तरसूत्रे कच्छकूटस्य चतुर्थस्योत्तरपूर्वस्यां रजतकूटस्य दक्षिणस्यामत्रान्तरे सागरकूटं नाम कूटं प्रज्ञप्तं, पञ्चयोजनशतान्यूर्ध्वोच्चत्वेन अवशिष्टं मूलविष्कम्भादिकं तदेव, अत्र सुभोगानाम्नी दिक्कुमारी देवी अस्या राजधानी मेरोरुत्तरपूर्वस्यां, रजतकूटं षष्टं पूर्वस्मादुत्तरस्यां अत्र भोगमालिनी दिक्कुमारी सुरी राजधानी उत्तरपूर्वस्यां, अवशिष्टानि

शीताकूटादीनि उत्तरदक्षिणस्यां नेतव्यानि, कोऽर्थः ? –पूर्वस्मात् २ उत्तरोत्तरमुत्तरस्यां २ उत्तरस्मा-दुत्तरस्मात्पूर्वं २ दक्षिणस्यां २ इत्यर्थः, एकेन तुल्येन प्रमाणेन सर्वेषामपि हिमवत्कूटप्रमाणत्वात्।

अथ नवमं सहस्राङ्कमिति पृथग्निर्देष्टुमाह–

*मू. (१६६) कहि णं भंते! मालवंते हरिस्सहकूडे नामं कूडे पन्नत्ते ?, गोअमा ! पुण्णभद्दस्स उत्तरेणं नीलवंतस्स दक्खिणेणं एत्थ णं हरिस्सहकूडे नामं कूडे पन्नत्ते, एगं जोअणसहस्सं उद्धं उच्चत्तेणं जमगपमाणेणं नेअव्वं, रायहाणी उत्तरेणं असंखेज्जे दीवे अन्नंमि जंबुद्दीवे दीवे उत्तरेणं बारस जोअणसहस्साइं ओगाहित्ता एत्थ णं हरिस्सहस्स देवस्स हरिस्सहानामं रायहाणी प०*

*चउरासीइं जोअणसहस्साइं आयामविक्खंभेणं बे जोअणसयसहस्साइं पन्नट्ठिं च सहस्साइं छच्च छत्तीसे जोअणसए परिक्खेवेणं सेसं जहा चमरचंचाए रायहाणीए तहा पमाणं भाणिअव्वं, महिड्ढीए महज्जुईए।*

*से केणट्ठेणं भंते! एवं वुच्चइ मालवंते वक्खार पव्वए २ ?, गोअमा ! मालवंते णं वक्खारपव्वए तत्थ तत्थ देसे तहिं २ बहवे सरिआगुम्मा नोमालिआगुम्मा जाव मगदंतिआगुम्मा, ते णं गुमा दसद्धवण्णं कुसुमं कुसुमेंति। जे णं तं मालवंतस्स वक्खारपव्वयस्स बहुसमरमणिज्जं भूमिभागं वायविधुअग्गसाला- मुक्कपुप्फपुंजोवयारकलिअं करेंति, मालवंते अ इत्थ देवे महिड्ढीए जाव पलिओवमट्ठिइए परिवसइ, से तेण० गो० एवं वुच्चइ, अदुत्तरं च णं जाव निच्चे।*

वृ. 'कहि ण'मित्यादि, क्व भदन्त ! माल्यवति वक्षस्कारगिरौ हरिस्सहकूटं नाम कूटं प्रज्ञप्तम् गौतम! पूर्णभद्रस्योत्तरस्यां नीलवतो वर्षधरपर्वतस्य दक्षिणस्यां अत्रान्तरे हरिस्सहकूटं नाम कूटं प्रज्ञप्तं, एकं योजनसहस्रमूर्ध्वोच्चत्वेन अवशिष्टं यमकगिरिप्रमाणेन नेतव्यं, तच्चेदम्–'अड्ढाइज्जाइं जोअणसयाइं उव्वेहेणं मूले एगं जोअणसहस्सं आयामविक्खम्भेण' मित्यादि, आह परः–५०० योजनपृथुगजदन्ते १००० योजनपृथु इदं कथमिति, उच्यते, अनेन गजदन्तस्य ५०० योजनानि रुद्धानि ५०० योजनानि पुनर्गजदन्ताद्बहिराकाशे ततो न कश्चिद्दोष इति, अस्य चाधिपस्यापर- राजधानीतो दिक्प्रमाणाधैर्विशेष इति तां विवक्षुराह–

'रायहाणी' इत्यादि, राजधानी उत्तरस्यामिति, एतदेव विवृणोति–'असंखेज्जदीवे' त्ति पदं स्मारकं तेन 'मंदरस्स पव्वयस्स उत्तरेणं तिरिअमसंखेज्जाइं दीवसमुद्दाइं वीईवइत्ता' इति ग्राह्यम्, अन्यस्मिन् जम्बूद्वीपे द्वीपे उत्तरस्यां द्वादशयोजनसहस्राण्यवगाह्य अत्रान्तरे हरिस्सहदेवस्य हरिस्सह-नाम्नी राजधानी प्रज्ञप्ता चतुरशीतियोजनसहस्राण्यायामविष्कम्भाभ्यां द्वे योजनलक्षे पञ्चषष्टिं च योजनसहस्राणि षट् च द्वात्रिंशदधिकानि योजनशतानि परिक्षेपेण, शेषं यथा चमरचञ्चायाः– चमरेन्द्रराजधान्याः प्रमाणं भनितं भगवत्यङ्गे तथा प्रमाणं प्रासादादीनां भणितव्यमिति, 'महिड्ढीए महज्जुईए' इति सूत्रेणास्य नामनिमित्तविषयके प्रश्ननिर्वचने सूचिते, ते चैवं–

'से केणट्ठेणं भंते ! एवं वुच्चइ हरिस्सहकूडे २ ?, गोअमा ! हरिस्सहकूडे बहवे उप्पलाइं पउमाइं हरिस्सहकूडसमवण्णाइं जाव हरिस्सहे नामं देवे अ इत्थ महिड्ढीए जाव परिवसइ, से तेणट्ठेणं जाव अदुत्तरं च णं गो० जाव सासए नामधेज्जे', अथास्य वक्षस्कारस्य नामार्थं प्रश्नयति-

'से केणट्ठेण' मित्यादि, प्रश्नार्थ प्राग्वत्, उत्तरसूत्रे गौतम ! माल्यवति वक्षस्कारपर्वते तत्र

तत्र देशे—स्थाने तस्मिन् तस्मिन् प्रदेशे—देशैकदेशे इत्यर्थः बहवः सरिकागुल्माः नवमालिकागुल्माः यावन्मगदन्तिकागुल्माः सन्तीति शेषः, ते गुल्माः क्षेत्रानुभावतः सदैव पञ्चवर्णं कुसुमं कुसुमयन्ति—जनयन्ति इत्यर्थः, ते गुल्मास्तं माल्यवतो वक्षस्कारपर्वतस्य बहुसमरमणिज्जं भूमिभागं वातविधुताग्रशालामुक्तपुष्पपुञ्जोपचारकलितं कुर्वन्ति, एतदर्थ प्राग्वत्, ततो माल्यं--पुष्पं नित्यस्यास्तीति माल्यवान् माल्यवान्नाम्ना देवश्चात्र महर्द्धिको यावत्पल्योपमस्थितिकः तेन तद्योगादयमपि माल्यवान्, 'अथापरं चे'त्यादि, प्राग्वत् ॥ इह द्विविधा विदेहाः, तद्यथा—पूर्वविदेहा अपरविदेहाश्च, तत्र ये मेरोः प्राक् ते पूर्वविदेहाः ते च शीतया महानद्या दक्षिणोत्तरभागाभ्यां द्विधा विभक्ताः, एवं ये मेरोः पश्चिमायां ते अपरविदेहास्तेऽपि तथैव शीतोदया द्विधा विभक्ताः, एवं विदेहानां चत्वारो भागाः दर्शिताः, सम्प्रत्यमीषु विजयवक्षस्कारादिव्यवस्थालाघवार्थं पिण्डार्थगत्या सूत्रकृद्दर्शयिष्यमाणरीत्या बोधनीयानां दुर्बोधा इति विस्तरतो निरूप्यते, तत्रैकैकस्मिन् भागे यथायोगं माल्यवदादेर्गजदन्ताकारवक्षस्कारगिरेः समीपे एको विजयः तथा चत्वारः सरलवक्षस्कारास्तिस्रश्चान्तर्नद्यः, एषां सप्तानां वस्तूनामन्तराणि षट्, सर्वत्राप्यन्तराणि रूपोनानि भवन्ति तथाऽत्र, प्रतीतमेतद्धस्तसृनामङ्गुलीनामप्यन्तरालानि त्रीणिति, ततोऽन्तरे २ एकैकसद्भावात् षड् विजयाः।

एते चत्वारो वक्षस्कारादय एकैकान्तरनद्याऽन्तरितास्ततश्चतुर्णामद्रीनामन्तरे सम्भवत्यन्तरनदीत्रयमिति व्यवस्था स्वयमवसातव्या, तथा वनमुखमवधीकृत्यैको विजय इति प्रतिविभागं सिद्धा अष्टौ विजयाः चत्वारो वक्षस्कारास्तिस्रोऽन्तरनद्यो वनमुखं चैकमिति, इयमत्र भावना--पूर्वविदेहेषु माल्यवतो गजदन्तपर्वतस्य पूर्वतः शीताया उत्तरत एको विजयः, ततः पूर्वस्यां प्रथमो वक्षस्कारः ततोऽपि पूर्वस्यां द्वितीयो विजयः ततोऽपि पूर्वस्यां प्रथमान्तरनदी, अनेन क्रमेण तृतीयो विजयः द्वितीयो वक्षस्कारः चतुर्थो विजयः द्वितीयान्तरनदी पञ्चमो विजयः तृतीयो वक्षस्कारः षष्ठो विजयः तृतीयान्तरनदी सप्तमो विजयः चतुर्थो वक्षस्कारः अष्टमो विजयः ततश्चैकं वनमुखं जगत्यासन्नं, एवं शीताया दक्षिणतोऽपि सौमनसगजदन्तपर्वतस्य पूर्वतोऽयमेव विजयादिक्रमो वाच्यः, तथा पश्चिमविदेहेषु शीतोदाया दक्षिणतो विद्युत्प्रभस्य पश्चिमतोऽप्ययमेव क्रमः, तथा शीतोदाया उत्तरतोऽपि गन्धमादनस्य पश्चिमत इति ।

अथ प्रादक्षिण्येन निरूपणेऽयमेव हि आद्य इति, प्रथमविभागमुखे कच्छविजयं विवक्षुराह—

**मू. (१६७)** *कहि णं भंते ! जंबुद्दीवे दीवे महाविदेहे वासे कच्छेनामं विजए पन्नत्ते ?, गोअमा ! सीआए महानईए उत्तरेणं नीलवंतस्स वासहरपव्वयस्स दक्खिणेणं चित्तकूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं मालवंतस्स वक्खारपव्वयस्स पुरत्थिमेणं एत्थ णं जंबुद्दीवे २ महाविदेहे वासे कच्छे नामं विजए पन्नत्ते उत्तरदाहिणायए पाईणपडीणविच्छिण्णे पलिअंकसंठाणसंठिए गंगासिंधूहिं महानईहिं वेयड्ढेण य पव्वएणं छब्भागपविभत्ते सोलस जोअणसहस्साइं पंच य बानउए जोअणसए दोन्नि अ एगूणवीसइभाए जोअणस्स आयामेणं दो जोअणसहस्साइं दोन्नि अ तेरसुत्तरे जोअणसए किंचिविसेसूणे विक्खम्भेणंति ।कच्छस्स णं विजयस्स बहुमज्झदेसभाए एत्थ णं वेअद्धे नामं पव्वए प०, जेणं कच्छं विजयं दुहा विभयमाणे २ चिट्ठइ, तंजहा -दाहिणद्धकच्छं च उत्तरद्धकच्छं चेति, कहि णं भंते ! जंबुद्दीवे दीवे महाविदेहे वासे दाहिणद्धकच्छे नामं विजए पं० ? गो० वेअद्धस्स पव्वयस्स दाहिणेणं सीआए महानईए उत्तरेणं चित्तकूडस्स वक्खारपव्वयस्स*

*पञ्चत्थिमेणं मालवंतस्स वक्खारपव्वयस्स पुरत्थिमेणं एत्थ णं जंबुद्दीवे दीवे महाविदेहे वासे दाहिणद्धकच्छे उत्तरदाहिणायए पाईणपडीणविच्छिण्णे अट्ठ जोअणसहस्साइं दोन्नि अ एगसत्तरे जोअणसए एक्कं च एगूणवीसइभागं जोअणस्स आयामेणं दो जोअणसहस्सइं दोन्नि अ तेरसुत्तरे जोअणसए किंचिविसेसूणे विक्खम्भेणं पलिअंकसंठाणसंठिए।*

*दाहिणद्धकच्छस्स णं भंते! विजयस्स केरिसए आयारभावपडोआरे प० गो० बहुसमरमणिज्जे भूमिभागे प० --जाव कत्तिमेहिं चेव अकत्तिमेहिं चेव, दाहिणद्धकच्छे णं भंते! विजए मणुआणं केरिसए आयारभावपडोआर प० गो० तेसि णं मणुआणं छव्विहे संघयणे जाव सव्वदुक्खाणमंतं करेंति। कहि णं भंते! जंबुद्दीवे दीवे महाविदेहे वासे कच्छे विजए वेअद्धे नामं प० गो० दाहिणद्धकच्छविजयस्स उत्तरेणं उत्तरद्धकच्छस्स दाहिणेणं चित्तकूडस्स पच्चत्थिमेणं मालवंतस्स वक्खारपव्वयस्स पुरत्थिमेणं एत्थ णं कच्छे विज वेअद्धे नामं पव्वए प०--*

*-- पाईणपडीणायए उदीणदाहिणविच्छिण्णे दुहावक्खारपव्वए पुट्ठे--पुरत्थिमिल्लाए कोडीए जाव दोहिवि पुट्ठे भरहवेअद्धसरिसए नवरं दो बाहाओ जीवा धनुपट्ठं च न कायव्वं, विजयविक्खम्भसरिसे आयामेणं, विक्खम्भो उच्चत्तं उव्वेहो तहेव व विज्जाहरआभिओगसेढीओ तहेव, नवरं पणपन्नं २ विज्जाहरणगरावासा पं०, आभिओगसेढीए उत्तरिल्लाओ सेढीओ सीआए ईसाणस्स सेसाओ सक्कस्सत्ति, कूडा--*

वृ. 'कहि णं भंते' त्ति क्व भदन्त! जम्बूद्वीपे द्वीपे महाविदेहे वर्षे कच्छो नाम विजयः प्रज्ञप्तः गौतम! शीताया महानद्या उत्तरस्यां नीलवतो वर्षधरपर्वतस्य दक्षिणस्यां चित्रकूटसरल-वक्षस्कार-पर्वतस्य पश्चिमायां माल्यंवतो गजदन्ताकारवक्षस्कारपर्वतस्य पूर्वस्यां अत्रान्तरे महाविदेहे वर्षे कच्छो नाम चक्रवर्त्तिविजेतव्यभूविभागरूपो विजयः प्रज्ञप्तः, सर्वात्मना विजेतव्यश्चक्रवर्त्ति-नामिति विजयः अनादिप्रवाहनिपतितेयं संज्ञा तेनेदमन्वर्थमात्रदर्शनं न तु साक्षात्प्रवृत्तिमित्तोपदर्श-नमिति, उत्तरदक्षिणाभ्यामायतः पूर्वापरविस्तीर्ण पल्यङ्कसंस्थानसंस्थितः आयतचतुरस्रत्वात्, गङ्गासिन्धुभ्यां महानदीभ्यां वैताढ्येन च पर्वतेन षड्भागप्रविभक्तः षट्खण्डीकृत इत्यर्थः, एवमन्येऽपि विजया भाव्याः, परं शीताया उदीच्याः कच्छादयः शीतोदाया याम्याः पक्ष्मादयो गङ्गासिन्धुभ्यां षोढा कृताः, शीताया याम्या वच्छादयः शीतोदाया उदीच्या वप्रादयो रक्तारक्तवतीभ्यामिति, उत्तर-दक्षिणायतेति विवृणोति -षोडश योजनसहस्राणि पञ्चयोजनशतानि द्विनवत्यधिकानि द्वौ चैकोन- विंशतिभागौ योजनस्यायामेन, अत्रोपपत्तिर्यथा--विदेहविस्तारात् योजन ३३६८४ कला ८ रूपात् शीतायाः शीतोदाया वा विष्कम्भो योजन ५०० रूपः शोध्यते, शेषस्यार्द्धे लभ्यते यथोक्तं मानं, इह यद्यपि शीतायाः शीतोदाया वा समुद्रप्रवेशे एव पञ्चशतयोजनप्रमाणो विष्कम्भोऽन्यत्र तु हीनो हीनतरस्तथापि कच्छादिविजयसमीपे उभयकूलवर्त्तिनो रमणप्रदेशावधिकृत्य पञ्चयोजन- शतप्रमाणो विष्कम्भः प्राप्यत इति, प्राचीनप्रतीचीनति विवृणोति--द्वे योजनसहस्रे द्वे च योजनशते त्रयोदशोत्तरे किञ्चिदूने।

अत्राप्युपपत्तिर्यथा--इह महाविदेहेषु देवकुरूत्तरकुरुमेरुभद्रशालवनक्षस्कारपर्वतान्तर नदीवनमुख- व्यतिरेकेणान्यत्र सर्वत्र विजयाः, ते च पूर्वापरविस्तृतास्तुल्यविस्ताराः, तत्रैकस्मिन् दक्षिणभागे उत्तरभागे वाऽष्टौवक्षस्कारगिरयः, एकैकस्य पृथुत्वं पंचयोजनशतानि, सर्ववक्षस्कार-

पृथुत्वमीलने चत्वारि योजनसहस्राणि, अन्तरनद्यश्च षट् एकैकस्याश्चान्तरनद्या विष्कम्भः पंचविंशं योजनशतं ततः सर्वान्तरनदीपृथुत्वमीलने जातानि सप्त शतानि पंचाशदधिकानि, द्वे च वनमुखे एकैकस्य वनमुखस्य पृथुत्वमेकोनत्रिंशच्छतानि द्वाविंशत्यधिकानि, उभयपृथुत्वमीलने जातानि अष्टपञ्चाशच्छतानि चतुश्चत्वारिंशदधिकानि, मेरुपृथुत्वं दशसहस्राणि, पूर्वापरभद्रशालवनयोरायामश्चतुश्चत्वारिंशत्सहस्राणि, सर्वमीलने जातानि चतुःषष्टिसहस्राणि पंचशतानि चतुर्नवत्यधिकानि, एतज्जम्बूद्वीपविस्तारात् शोध्यते, शोधिते च स्थितं जातं शेषं पंचत्रिंशत्सहस्राणि चत्वारि शतानि षडुत्तराणि, एकैकस्मिंश्च दक्षिणे उत्तरे वा भागे विजयाः षोडश, ततः षोडशभिर्भागे हृते लब्धानि द्वाविंशतिशतानि किंचिदूनत्रयोदशाधिकानि, त्रयोदशस्य योजनस्य षोडशचतुर्दशभागा-त्मकत्वात्, एतावानेवैकैकस्य विजयस्य विष्कम्भः।

अयं च भरतवद्वैताढ्येन द्विधाकृत इति तत्र तं विवक्षुराह–'कच्छस्स णं' मित्यादि, कच्छस्य विजयस्य बहुमध्यदेशभागे वैताढ्यः पर्वतः प्रज्ञप्तः, यः कच्छं विजयं द्विधा विभजंस्तिष्ठति, तद्यथा–दक्षिणार्द्धकच्छं चोत्तरार्द्धकच्छं च, चशब्दौ उभयोस्तुल्यकक्षताद्योतनार्थौ।

दक्षिणार्द्धकच्छं स्थानतः पृच्छन्नाह–'कहि णं' मित्यादि, क्व भदन्त ! जम्बूद्वीपे द्वीपे महाविदेहनाम्नि वर्षे दक्षिणार्द्धकच्छो नाम विजयः प्रज्ञप्तः ?, गौतम ! वैताढ्यपर्वतस्य दक्षिणस्यां शीताया महानद्या उत्तरस्यां चित्रकूटस्य वक्षस्कारपर्वतस्य पश्चिमायां माल्यवतो वक्षस्कारपर्वतस्य पूर्वस्यां अत्रान्तरे जम्बूद्वीपे द्वीपे यावद् दक्षिणार्द्धकच्छो नाम विजयः प्रज्ञप्तः, उत्तरेत्यादिविशेषणद्वयं प्राग्वद् बोध्यं, अष्टौ योजनसहस्राणि द्वे च एकसप्तत्युत्तरे योजनशते एकं चैकोनविंशतिभागं योजनस्यायामेन, एतदङ्कोत्पत्तिश्च षोडशसहस्रपञ्चशतद्विनवतियोजनकलाद्वयरूपात् कच्छविजयमानात् पञ्चाशद्योजनप्रमाणे वैताढ्यव्यासे (ऽपनीते ततोऽ) र्द्धीकृते भवति, शेषं प्राग्वद् अयं च कर्मभूमिरूपोऽकर्मभूमिरूपो वेति निर्णेतुमाह–'दाहिणद्ध' इत्यादि, दक्षिणार्द्धभरतप्रकरणं इवेदं निर्विशेषं व्याख्येयं, अत्र मनुजस्वरूपं पृच्छति–'दाहिण' इत्यादि, कण्ठ्यं, अथास्य सीमाकारिणं वैताढ्य इति नाम्ना प्रतीतं गिरिं स्थानतः पृच्छति–

'कहि णं' मित्यादि, स्पष्टं, नवरं द्विधा वक्षस्कारपर्वतौ–माल्यवच्चित्रकूटवक्षस्कारौ स्पृष्टः, इदमेव समर्थयति–पूर्वया कोट्या यावत्करणात् 'पुरत्थिमिल्लं वक्खारपव्वयं पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं वक्खारपव्वयं' इति बोध्यं, तेन पौरस्त्यं वक्षस्कारं–चित्रकूटं नामानं पाश्चात्यया कोट्या पाश्चात्यं वक्षस्कारं–माल्यवन्तं, अत एव द्वाभ्यां कोटिभ्यां स्पृष्टः, भरतवैताढ्यसदृशकः रजतमयत्वात् रुचकसंस्थानसंस्थितत्वाच्च, नवरं द्वे बाहे जीवा धनुःपृष्ठं च न कर्त्तव्यमवक्रक्षेत्रवर्त्तित्वात्, लम्बभागश्च न भरतवैताढ्यसदृश इत्याह–विजयस्य कच्छादेर्यो विष्कम्भः–किंचिदूनत्रयोदशाधिकद्वाविंशतिशतयोजनरूपस्तेन सदृश आयामेन, कोऽर्थः ?–

विजयस्य यो विष्कम्भभागः सोऽस्यायामविभाग इति, विष्कम्भः–पंचाशद्योजनरूपः, उच्चत्वं–पंचविंशतियोजनरूपं उद्वेधः–पंचविंशतिक्रोशात्मकस्तथैव–भरतवैताढ्यवदेवेत्यर्थः, उच्चत्वस्य प्रथमदशयोजनातिक्रमे विद्याधरश्रेण्यौ तथैव, नवरमिति विशेषः पंचपंचाशत् २ विद्याधरनगरावासाः प्रज्ञप्ताः, एकैकस्यां श्रेण्यां–दक्षिणश्रेण्यां उत्तरश्रेण्यां वा, भरतवैताढ्ये तु दक्षिणतः पञ्चाशदुत्तरतस्तु षष्टिर्नगराणीति भेदः, आभियोग्यश्रेण्यौ तथैवेति गम्यं, कोऽर्थः ?–विद्याधर-

श्रेणिभ्यामूर्ध्वं दशयोजनातिक्रमे दक्षिणोत्तरभेदेन द्वे भवतः, अत्राधिकारात् सर्ववैताढ्याभि-योग्यश्रेणिविशेषमाह—उत्तरदिक्स्थाः आभियोग्यश्रेणयः शीताया महानद्या ईशानस्य—द्वितीय-कल्पेन्द्रस्य शेषाः—शीतादक्षिणस्याः शक्रस्य--आद्यकल्पेन्द्रस्य, किमुक्तं भवति ? —शीताया उत्तर-दिशि ये विजयवैताढ्यास्तेषु या आभियोग्यश्रेणयो दक्षिणगा वा उत्तरगा वा ताः सर्वा सौधर्मेन्द्र-स्येति, बहुवचनं चात्र विजयवर्तिसर्ववैताढ्यश्रेण्यपेक्षया द्रष्टव्यं, अथ कूटानि वक्तव्यानीति तदुद्देशमाह—'कूडा'इति, व्यक्तम्, अथ तन्नामान्याह—

**मू. (१६८)** *सिद्धे १ कच्छे २ खंडग ३ माणी ४ वेअड्ढ ५ पुण्ण ६ तिमिसगुहा ७ ।*
*कच्छे ८ वेसमणे वा ९ वेअड्ढे होंति कूडाइं ॥*

**वृ.** 'सिद्धे'इत्यादि, पूर्वस्यां प्रथमं सिद्धायतनकूटं, ततः पश्चिमदिशमवलम्ब्यमान्यष्टावपि कूटानि वाच्यानि, तद्यथा—द्वितीयं दक्षिणकच्छार्द्धकूटं, तृतीयं खण्डप्रपातगुहाकूटं चतुर्थं माणीति पदैकदेशे पदसमुदायोपचारात् माणिभद्रकूटं शेषं व्यक्तं, परं विजयवैताढ्येषु सर्वेष्वपि द्वितीयाष्टमकूटे स्वस्वदक्षिणोत्तरार्द्धविजयसनामके यथा द्वितीयं दक्षिणकच्छार्द्धकूटं अष्टममुत्तरकच्छार्द्धकूटं इतराणि भरतवैताढ्यकूटसमनामकानीति ।

**मू. (१६९)** *कहि णं भंते ! जंबुद्दीवे २ महाविदेहे वासे उत्तरद्धकच्छे नामं विजए प० गो० वेयद्धस्स पव्वयस्स उत्तरेणं नीलवंतस्स वासहरपव्वयस्स दाहिणेणं मालवंतस्स वक्खारपव्वयस्स पुरत्थिमेणं चित्तकूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं एत्थ णं जंबुद्दीवे दीवे जाव सिज्झंति ।*

*– तहेव नेअव्वं कहि णं भंते ! जंबुद्दीवे दीवे महाविदेहे वासे उत्तरद्धकच्छे विजए सिंधुकुंडे नामं कुंडे पन्नत्ते ?, गोअमा ! मालवंतस्स वक्खारपव्वयस्स पुरत्थिमेणं उसभकूडस्स पच्चत्थिमेणं णीलवंतस्स वासहरपव्वयस्स दाहिणिल्ले नितंबे एत्थ णं जंबुद्दीवे दीवे महाविदेहे वासे उत्तरद्धकच्छविजए सिंधुकुंडे नामं कुंडे पन्नत्ते, सट्ठिं जोअणाणि आयामविक्खम्भेणं जाव भवणं अट्ठो रायहाणीय नेअव्वा, भरहसिंधुकुंडसरिसं सव्वं नेअव्वं, जाव तस्स णं सिंधुकुंडस्स दाहिणिल्लेणं तोरणेणं सिंधुमहानई पवूढा समाणी उत्तरद्धक- च्छविजयं एज्जेमाणी २ सत्तहिं सलिलासहस्सेहिं आपूरेमाणी २ अहे तिमिसगुहाए वेअद्धपव्वयं दालयित्ता दाहिणकच्छविजयं एज्जेमाणी २ चोद्दसहिं सलिलासहस्सेहिं समग्गा दाहिणेणं सीयं महानइं समप्पेइ, सिंधुमहानई पवहे अ मूले अ भरहसिंधुसरिसा पमाणेणं जाव दोहिं वणसंडेहिं संपरिक्खित्ता ।*

*कहि णं भंते ! उत्तरद्धकच्छविजए उसभकूडे नाम पव्वए प० गो० सिंधुकुंडस्स पुरत्थिमेणं गंगाकुंडस्स पच्चत्थिमेणं नीलवंतस्स वासहरपव्वयस्स दाहिणिल्ले नितंबे एत्थ नं कच्छविजए उसहकूडे नामं पव्वए प०, अट्ठ जोअणाइं उद्धं उच्चत्तेमं तं चेव पमाणं जाव रायहाणी से नवरं उत्तरेणं भा० ।*

*कहि णं भंते ! उत्तरद्धकच्छे विजए गंगाकुंडे नामं कुंडे प० गो० चित्तकूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं उसहकूडस्स पव्वयस्स पुरत्थिमेणं नीलवंतस्स वासहरपव्वयस्स दाहिणिल्ले नितंबे एत्थ णं उत्तरद्धकच्छे गंगाकुंडे नामं कुंडे प० सट्ठिं जोअणाइं आयाम- विक्खम्भेणं तहेव जहा सिंधू जाव वनसंडेण य संपरिक्खित्ता ।*

*से केणट्ठेणं भंते ! एवं वुच्चइ कच्छे विजए २ ?, गो० कच्छे विजए वेअड्ढस्स पव्वयस्स दाहिणेणं सीआ महानईए उत्तरेणं गंगाए महानईए पच्चत्थिमेणं सिंधूए महानईए पुरत्थिमेणं दाहिणद्धकच्छविजयस्स बहुमज्झदेसभाए, एत्थ णं खेमानामं रायहाणी पं० विणीआरायहाणीसरिसा भा० ।*

*तत्थ णं खेमाए रायहाणीए कच्छे नामं राया समुप्पज्जइ, महया हिमवंत जाव सव्वं भरहोअवणं भा० निक्खमणवज्जं सेसं सव्वं भा० जाव भुंजए माणुस्सए सुहे, कच्छनामधेज्जे अ कच्छे इत्थ देवे महड्ढीए जाव पलिओवमट्ठिईए परिवसइ, से एएणट्ठेणं गो० एवं वुच्चइ कच्छे विजए कच्छे विजए जाव निच्चे ।*

**वृ.** अथोत्तरार्द्धकच्छं प्रश्नयति– 'कहि ण'मित्यादि, व्यक्तं, तथैव दक्षिणार्द्धकच्छवद् ज्ञेयं यावत्सिद्ध्यन्तीति, अथैतदन्तर्वर्त्तिसिन्धुकुंडं वक्तव्यमित्याह– 'कहि ण'मित्यादि, व्यक्तं, परं नितम्बः–कटकः, लाघवार्थमतिदेशमाह– 'भरतसिन्धुकुंडसिसं सव्वं नेअव्वं' इत्यादि, सर्वं गतार्थं, गङ्गागमेन व्याख्यातत्वात्, तत्रैव ऋषभकूटवक्तव्यमाह– 'कहि न'मित्यादि, प्राग्वत्, अथ गङ्गाकुंडप्रस्तावनार्थमाह– 'कहि ण'मित्यादि, सिन्धुकुंडगमो निर्विशेषः सर्वोऽपि वाच्यः, परं ततो गङ्गानदी खण्डप्रपातगुहाया अधो वैताढ्यं विभिद्य दक्षिणे भागे शीतां समुपसर्पतीति, ननु भरते नदीमुख्यत्वेन गङ्गामुपवर्ण्य सिन्धुरुपवर्णिता इह तु सिन्धुरुपवर्ण्य सा वर्ण्यते इति कथं व्यत्ययः ?, उच्यते, इह माल्यवद्वक्षस्कारतो विजयप्ररूपणायाः प्रकान्तत्वेन तदासन्नत्वात् सिन्धुकुंडस्य प्रथमं सिन्धुप्ररूपणा ततो गङ्गाया इति ।

अथ केनार्थेन भदन्त ! एवमुच्यते कच्छो विजयः २ ? गौ० कच्छे विजये वैताढ्यस्य दक्षिणस्यां शीताया महानद्या उत्तरस्यां गङ्गायाः महानद्याः पश्चिमायां सिन्धो- र्महानद्याः पूर्वस्यां दक्षिणार्द्धकच्छविजयस्य बहुमध्यदेशभागे–मध्यखण्डेऽत्रान्तरे क्षेमानाम्ना राजधानी प्रज्ञप्ता, विनीताराजधानीसदृशी भणितव्या, तत्र क्षेमायां राजधान्यां कच्छो नाम–राजा चक्रवर्त्ती समुत्पद्यते, कोऽर्थः ?–यस्तत्र षट्खण्डभोक्ता समुत्पद्यते स तत्र लोकैः 'कच्छ' इति व्यवह्रियते, अत्र वर्त्तमाननिर्देशेन सर्वदापि यथासम्भवं चक्रवर्त्युत्पत्ति सूचिता, न तु भरत इव चक्रवर्त्युत्पत्तौ कालनियम इति, 'महयाहि मवन्ते'त्यादिकः सर्वो ग्रन्थो वाच्यः यावत्सर्वं भरतस्य क्षेत्रस्य ओअवणमिति–साधनं स्वायत्तीकरणं भरतस्य चक्रिण इति शेषः, निष्क्रमणं–प्रव्रज्याप्रतिपत्तिस्तद्वर्जं भणितव्यं, भरतचक्रिणा सर्वविरतिर्गृहीता कच्छचक्रिणस्तु तद्ग्रहणेऽनियम इति, कियत्पर्यन्तमित्याह–

यावद् भुङ्क्ते मानुष्यकानि सुखानि, अथवा कच्छनामधेयश्चात्र कच्छे विजये देवः पल्योपमस्थितिकः परिवसति तेनार्थेन गौ० एवमुच्यते–कच्छराजस्वामिकत्वात् कच्छदेवाधिष्ठितत्वाच्च कच्छविजयः २ इति, यावन्नित्य इत्यन्त मन्त्रोऽन्याश्रयनिवारणार्थकं सूत्रं प्राग्वदेव योजनीयमिति गतः प्रथमो विजयः, अथ यतोऽयं पश्चिमायामुक्तं तं चित्रकूटं वक्षस्कारं लक्षयन्नाह–

**मू. (१७०)** *कहि णं भंते ! जंबुद्दीवेदीवे महाविदेहे वासे चित्तकूडे नामं वक्खारपव्वए पन्नत्ते ?, गोअमा ! सीआए महानईए उत्तरेणं नीलवंतस्स वासहरपव्वयस्स दाहिणेणं कच्छविजयस्स पुरत्थिमेणं सुकच्छविजयस्स पच्चत्थिमेणं एत्थ णं जंबुद्दीवे दीवे महाविदेहे वासे*

*चित्तकूडे नामं वक्खारपव्वए पन्नत्ते ।*

*– उत्तरदाहिणायए पाईणपडीणविच्छिण्णे सोलसजोअणसहस्साइं पञ्च य बानउए जोअणसए दुन्नि अ एगूणवीसइभाए जोअणस्स आयामेणं पञ्च जोअणसयाइं विक्खम्भेणं नीलवंतवासहर- पव्वयंतेणं चत्तारि जोअणसयाइं उद्धं उच्चत्तेणं चत्तारि गाऊअसयाइं उव्वेहेणं तयणंतरं च णं मायाए २ उस्सेहोव्वेहपरिवुद्धीए परिवद्धमाणे २ सीआमहानईअंतेणं पञ्च जोअणसयाइं उद्धं उच्चत्तेणं पञ्च गाऊअसयाइं उव्वेहेणं अससखंधसंठाणसंठिए सव्वरयनामए अच्छे सण्हे जाव पडिरूवे उभओ पासिं दोहिं पउमवरवेइआहिं दोहि अ वनसंडेहिं संपरिक्खित्ते, वण्णओ दुण्हवि - चित्तकूडस्स णं वक्खारपव्वयस्स उप्पिं बहुसमरमणिज्जे भूमिभागे पन्नत्ते जाव आसयंति,*

*चित्तकूडे णं भंते ! वक्खारपव्वए कति कूडा प० गो० तं०–सिद्धाययनकूडे चित० कच्छ० सुकच्छ०, समा उत्तरदाहिणेणं परूप्परंति, पढमं सीआए उत्तरेणं चउत्थए नीलवंतस्स वासहरपव्वयस्स दाहिणेणं एत्थ णं चित्तकूडे नामं देवे महिड्ढीए जाव रायहाणी सेत्ति ।*

**वृ.** 'कहि ण' मित्यादि, सुलभं, नवरं आयामः षोडशसहस्रयोजनादिरूपो विजयसमान एव, विजयानां विजयवक्षस्काराणां च तुल्यायामत्वात्, तेन तत्करणं प्राग्वदेव, विष्कम्भे तु पञ्च योजनशतानिति विशेषस्तेन, ननु तानि कथमिति, उच्यते, जम्बूद्वीपपरिमाणविष्कम्भात् षन्नवतिसहस्रेषु शोधितेषु अवशिष्टानि चत्वारि सहस्राणि एकस्मिन् दक्षिणभागे उत्तरे वाऽष्टौ वक्षस्कारगिरयस्ततोऽष्टभिर्विभज्यन्ते, ततः सम्पद्यते वक्षस्काराणां प्रत्येकं पूर्वोक्तो विष्कम्भः, इह हि विदेहेषु विजयान्तरनदीमुखवनमेर्वादिव्यतिरेकेणान्यत्र सर्वत्र वक्षस्कारगिरयस्ते पूर्वापरविस्तृताः सर्वत्र तुल्यविस्तारास्ततोऽस्य करणस्यावकाशः, तत्र विजयषोडशकपृथुत्वं पंचत्रिंशत्सहस्राणि चत्वारिंशतानि षडुत्तराणि, अन्तरनदीषटकपृथुत्वं सप्त शतानि पंचाशदधिकानि मेरुविष्कम्भपूर्वापरभद्रशालवनायामपरिमाणं चतुःपंचाशत्सहस्राणि मुखवनद्वयपृथुत्वमेका- पञ्चाशच्छतानि चतुश्चत्वारिंशदधिकानि, सर्वमीलने जातानि षन्नवतिसहस्राणि ।

- तथा नीलवद्वर्षधरपर्वतसमीपे चत्वारि योजनशतान्यूर्ध्वोच्चत्वेन चत्वारि गव्यूतशतानि उद्वेधेन तदनन्तरं च मात्रया २–क्रमेण २ उत्सेधोद्वेधपरिवृद्धया परिवर्द्धमानः २, यत्र यावदुच्चत्वं तत्र तच्चतुर्थभाग उद्वेध इति द्वाभ्यां प्राकाराभ्यामधिकतरो२ भवित्रित्यर्थः, शीतामहानद्यन्ते पंचयोजनशतान्यूर्ध्वोच्चत्वेन पंचगव्यूतशतान्युद्वेधेन, अत एवाश्वस्कन्धसंस्थानसंस्थितः प्रथमतोऽ- तुङ्गत्वात् क्रमेणान्ते तुङ्गत्वात्, सर्वरत्नमयः, शेषं प्राग्वत् । अथास्य शिखरसौभाग्यमावेदयति– 'चित्तकूडस्स ण०' व्यक्तं, अथात्र कूटसङ्ख्यार्थं पृच्छति– 'चित्तकूडे' इत्यादि, पदयोजना सुलभा, भावार्थस्त्वयम्–परस्परमेतानि चत्वार्यपि कूटानि उत्तरदक्षिणभावेन समानि–तुल्यानीत्यर्थः ।

तथाहि–प्रथमं सिद्धायतनकूटं द्वितीयस्य चित्रकूटस्य दक्षिणस्यां चित्रकूटं च सिद्धायतनकूटस्योत्तरस्यां, एवं प्राक्तनं २ अग्रेतनाद् २ दक्षिणस्या अग्रेतनम् २ प्राक्तनात् २ उत्तरस्यां ज्ञेयं, तर्हि शीतानीलवतोः कस्यां दिशि इत्याह–प्रथमकं शीताया उत्तरतः चतुर्थकं नीलवतो वर्षधरपर्वतस्य दक्षिणतः, सूत्रपाठोक्तक्रमबलात् द्वितीयं चित्रनामकं प्रथमादनन्तरं ज्ञेयं, तृतीयं कच्छनामकं चतुर्थादर्वाक् ज्ञेयमिति, चित्रकूटादिषु वक्षस्कारेष्वेवं कूटनामनिवेशो

पूर्वेषां क्रमतः—सर्वाद्यं सिद्धायतनकूटं महानदीसमीपवर्ते गण्यमानत्वाद् द्वितीयं स्वस्ववक्षस्कारनामकं तृतीयं पाश्चात्यविजयनामकं चतुर्थं प्राच्यविजयनामकमिति, अथास्य नामार्थं प्ररूपयति—

'एत्थ ण'मित्यादि, अत्र चित्रकूटनामा देवः परिवसति तद्योगाच्चित्रकूट इति नाम, अस्य राजधानी मेरोरुत्तरतः शीताया उत्तरदिग्भाविवक्षस्काराधिपतित्वात्, एवमग्रेतनेष्वपि वक्षस्कारेषु यथासम्भवं वाच्यमिति। गतः प्रथमो वक्षस्कारः, अधुना द्वितीयविजयप्रश्नावसरः—

*मू. (१७१) कहि णं भंते! जंबुद्दीवे दीवे महाविदेहे वासे सुकच्छे नामं विजए पन्नत्ते?, गोअमा! सीआए महानईए उत्तरेणं नीलवंतस्स वासहरपव्वयस्स दाहिणेणं गाहावईए महानईए पच्चत्थिमेणं चित्तकूडस्स वक्खारपव्वयस्स पुरत्थिमेणं एत्थ णं जंबुद्दीवे दीवे महाविदेहे वासे सुकच्छे नामं विजए पन्नत्ते, उत्तरदाहिणायए जहेव कच्छे विजए तहेव सुकच्छे विजए, नवरं खेमपुरा रायहाणी सुकच्छे राया समुप्पज्जइ तहगेव सव्वं।*

*कहि णं भंते! जंबुद्दीवे २ महाविदेहे वासे गाहावइकुंडे पन्नत्ते?, गो० सुकच्छविजयस्स पुरत्थिमेणं महाकच्छस्स विजयस्स पच्चत्थिमेणं नीलवंतस्स वासहरपव्वयस्स दाहिणिल्ले नितम्बे एत्थ णं जंबुद्दीवे दीवे महाविदेहे वासे गाहावइकुंडे नामं कुंडे पन्नत्ते, जहेव रोहिअंसाकुंडे तहेव जाव गाहावइदीवे भवणे, तस्स णं गाहावइस्स कुंडस्स दाहिणिल्लेणं तोरणेणं गाहावई महानई पवूढा समाणी सुकच्छमहाकच्छविजए दुहा विभयमाणी २ अट्ठावीसाए सलिलासहस्सेहिं समग्गा दाहिणेणं सीअं महानइं समप्पेइ, गाहावई णं महानई पवहे अ मुहे अ सव्वत्थ समा पणवीसं जोअणसयं विक्खम्भेणं अड्ढाइज्जाइं जोअणाइं उव्वेहेणं उभओ पासिं दोहि अ पउमवरवेइआहिं दोहि अ वनसंडेहिं जाव दुण्हवि वण्णओ इति।*

*कहि णं भंते! महाविदेहे वासे महाकच्छे नामं विजये पन्नत्ते?, गोअमा! नीलवंतस्स वासहरपव्वयस्स दाहिणेणं सीआए महानईए उत्तरेणं पम्हकूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं गाहावईए महानईए पुरत्थिमेणं एत्थ णं महाविदेहे वासे महाकच्छे नामं विजए पन्नत्ते, सेसं जहा कच्छविजयस्स जाव महाकच्छे इत्थ देवे महिड्ढीए अट्ठो अ भाणिअव्वो।*

*कहि णं भंते! महाविदेहे वासे पम्हकूडे नामं वक्खारपव्वए पन्नत्ते?, गोअमा! नीलवंतस्स दक्खिणेणं सीआए महानईए उत्तरेणं महाकच्छस्स पुरत्थिमेणं कच्छावईए पच्चत्थिमेणं एत्थ णं महाविदेहे वासे पम्हकूडे नामं वक्खारपव्वए पन्नत्ते, उत्तरदाहिणायए पाईणपडीणविच्छिण्णे सेसं जहा चित्तकूडस्स जाव आसयंति, पम्हकूडे चत्तारि कूडा पं० तं०—सिद्धायतणकूडे पम्हकूडे महाकच्छकूडे कच्छावइकूडे एवं जाव अट्ठो, पम्हकूडे इत्थ देवे महड्ढिए पलिओवमट्ठिईए परिवसइ, से तेणट्ठेण गोयमा! एवं वुच्चइ।*

*कहि णं भंते! महाविदेहे वासे कच्छगावती नामं विजए पं० गो० नीलवंतस्स दाहिणेणं सीआए महानईए उत्तरेणं दहावतीए महानईए पच्चत्थिमेणं पम्हकूडस्स पुरत्थिमेणं एत्थ णं महाविदेहे वासे कच्छगावती नामं विजए पं० उत्तरदाहिणायए पाईणपडीणविच्छिण्णे सेसं जहा कच्छस्स विजयस्स जाव कच्छगावई अ इत्थ देवे।*

*कहि णं भंते! महाविदेहे वासे दहावई कुंडे नामं कुंडे पन्नत्ते?, गोअमा! आवत्तस्स*

विजयस्स पच्चत्थिमेणं कच्छगावईए विजयस्स पुरत्थिमेणं नीलवंतस्स दाहिणिल्ले नितंबे एत्थ णं महाविदेहे वासे दहावईकुंडे नामं कुंडे पं० सेसं जहा गाहावईकुंडस्स जाव अट्ठो, तस्स णं दहाईकुंडस्स दाहिणेणं तोरणेणं दहावईए । कहि णं भंते ! महाविदेहे वासे आवत्ते नामं विजए पन्नत्ते ?, गोअमा ! नीलवंतस्स वासहरपव्वयस्स दाहिणेणं सीआए महानईए उत्तरेणं नलिनकूडस्स वक्खारपव्वयस्स पच्चत्थिमेणं दहावतीए महानईए पुरत्थिमेणं एत्थ णं महाविदेहे वासे आवत्ते नामं विजए पन्नत्ते, सेसं जहा कच्छस्स विजयस्स इति ।

कहि णं भंते ! महाविदेहे वासे नलिनकूडे नामं वक्खारपव्वए पन्नत्ते ?, गो० ! नीलवंतस्स दाहिणेणं सीआए उत्तरेणं मंगलावइस्स विजयस्स पच्चत्थिमेणं आवत्तस्स विजयस्स पुरत्थिमेणं एत्थ णं महाविविदेहे वासे नलिनकूडे णं महाविदेहे वासे नलिनकूडे नामं वक्खारपव्वए पन्नत्ते, उत्तरदाहिणायए पाईणपडीणविच्छिण्णे सेसं जहा चित्तकूडस्स जाव आसयंति ।

नलिनकूडे णं भंते ! कति कूडा पं ?, गोअमा ! चत्तारि कूडा पन्नत्ता, तंजहा --सिद्धाययन-कूडे नलिनकूडे आवत्तकूडे मंगलावत्तकडे, एए कूडा पञ्चसइआ रायहाणीओ उत्तरेणं ।

कहि णं भंते ! महाविदेहे वासे मंगलावत्ते नामं विजए पन्नत्ते ?, गोअमा ! णीलवंतस्स दक्खिणेणं सीसाए उत्तरेणं नलिनकूडस्स पुरत्थिमेणं पंकावईए पच्चत्थिमेणं एत्थ णं मंगलावत्ते नामं विजए पन्नत्ते, जहा कच्छस्स विजए तहा एसो भाणियव्वो जाव मंगलावत्ते अ इत्थ देवे परिवसइ, से एएणट्ठेणं० ।कहि णं भंते ! महाविदेहे वासे पंकावई कुंडे नामं कुंडे पन्नत्ते ? गोअमा ! मंगलावत्तस्स पुरत्थिमेणं पुक्खलविजयस्स पच्चत्थिमेणं णीलवंतस्स दाहिणे नितंबे, एत्थ ण पंकावई जाव कुंडे पन्नत्ते तं चेव गाहावइकुंडप्पमाणं जाव मंगलावत्तपुक्खलावत्तविजये दुहा विभयमाणी २ अवसेसं तं चेव जं चेव गाहावईए ।

कहि णं भंते ! महाविदेहे वासे पुक्खलावत्तेनामं विजए पन्नत्ते ?, गोअमा ! नीलवंतस्स दाहिणेणं सीआए उत्तरेणं पंकावईए पुरत्थिमेणं एकसेलस्स वक्खारपव्वयस्स पच्चत्थिमेणं, एत्थ णं पुक्खलावत्ते नामं विजए पन्नत्ते जहा कच्छविजए तहा भाणिअव्वं जाव पुक्खले अ इत्थ देवे महिड्ढिए पलिओवमट्ठिइए परिवसइ, से एएणट्ठेणं० ।

कहि णं भंते ! महाविदेहे वासे एगसेले नामं वक्खारपव्वए पं० ? गो० ! पुक्खलावत्त-चक्कवट्टिविजयस्स पुरत्थिमेणं पोक्खलावतीचक्कवट्टिविजयस्स पच्चत्थिमेणं नीलवंतस्स दक्खिणेणं सीआए उत्तरेणं एत्थणं एगसेले नामं वक्खार पव्वए प० चित्तकूडगमेणं नेअव्वो जाव देवा आसयंति, चत्तारिकूडा, प० तं०-सिध्यायतन कूडे एगसेलकूडे पुक्खलावत कूडे पुक्ख लावरकूडे कूडाणंतं चेव पंचसइअं परिमाणं जाव एगसलेअदेवे महिड्ढिण, कहिणं भंते महाविदेहे वासे पुक्खलावइ नामंचक्कवट्टीविजयेप० ? गो० नीलवंतस्स दक्खिणेणंसीआएउत्तरेणं० उत्तरिल्लस्स सीआमुहवनवस्स-पच्चत्थिमेणं एगसेलस्सवक्खारपवयस्सपुरत्थिमेणं० एत्थ णं महाविदेहे वासे पुक्खलावई नामं विजए प० उत्तरदाहिणायएएवं कच्छ विज यस्स जाव पुक्खलावई अ इत्थ देवे परिवसइ एएणट्ठेणं,

कहि णं भंते !महाविदेहेवासे सीयाए महानइए उत्तरिल्ले सीआमुहवने नामं वने प० गो० नीलवंतस्स दक्खिणेणं सीआए उत्तरेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पुक्खला-वइचक्कवट्टिविजयस्स पुरत्थिमेणं, एत्थ णं सीआमुहवने नामं वने पन्नत्ते उत्तरदाहिणायए

*पाईणपडीणायच्छिण्णे सोलस जोअणसहस्साइं पञ्च य बानउए जोअणसए दोण्णि अ एगूणवीसइभाए जोअणस्स आयामेणं सीआए महानइए अंतेणं दो जोअणसहस्साइं नव य बावीसे जोअणसए विक्खंभेणं तयणंतरं च णं मायाए २ परिहायमाणे २ नीलवंतवासहरपव्वयंतेणं एगं एगूणवीसइभागं जोअणस्स विक्खंभेणंति, से णं एगाए पउमवरवेइआए एगेण य वनसण्डेणं संपरिक्खित्ते वण्णओ सीआमुह- वणस्स जाव देवा आसयंति, एवं उत्तरिल्लं पासं समत्तं। विजया भणिआ। रायहाणीओ इमाओ–*

**वृ.** 'कहि ण'मित्यादि, सर्वं सुगमं कच्छतुल्यवक्तव्यत्वात्, नवरं खेमपुरा राजधानी सुकच्छस्तत्र राजा चक्रवर्त्ती समुत्पद्यते, विजयसाधनादिकं तथैव सर्वं वक्तव्यमिति शेषः। उक्तः सुकच्छः, अथ प्रथमान्तरनद्यवसरः–'कहि णं भंते!'इत्यादि, क्व भदन्त! जम्बूद्वीपे द्वीपे महाविदेहे वर्षे ग्राहावत्या अन्तरनद्याः कुंडं-प्रभवस्थानं ग्राहावतीकुंडनाम कुंडं प्रज्ञप्तम्? गौतम! सुकच्छस्य विजयस्य पूर्वस्यां महाकच्छस्य विजयस्य पश्चिमायां नीलवतो वर्षधरपर्वतस्य दाक्षिणात्ये नितम्बे, अत्र–सामीपिकेऽधिकरणे सप्तमी तेन नितम्बसमीपे इत्यर्थः, अत्र जम्बूद्वीपे द्वीपे महाविदेहे वर्षे ग्राहावतीकुंडं प्रज्ञप्तं, यथैव रोहितांशाकुंडं तथेदमपि विंशत्यधिकशतयोजनायामविष्कम्भमित्यादिरीत्या ज्ञेयं, कियत्पर्यन्तमित्याह–यावद् ग्राहावती द्वीपं भवनं चेति, उपलक्षणं चैतत्, तेनार्थेन सूत्रमपि भावनीयम्, तथाहि–'से केणट्ठेणं भंते!' एवं वुच्चइ गाहावई दीवे गाहावई दीवे?, गोअमा! गाहावई दीवे णं बहूइं उप्पलाइं जाव सहस्सपत्ताइं गाहावईदीवसमप्पभाइं समवण्णाइं' इत्यादि, अथास्याद्या नदी प्रवहति तामाह–

'तस्स ण'मित्यादि व्यक्तं, नवरं ग्राहाः–तन्तुनामानो जलचरा महाकायाः सन्त्यस्यामिति ग्राहावती, मतुप्प्रत्यये मस्य वत्वे ङीप्रत्यये रूपसिद्धि दीर्घत्वं चात्राकृतिगणत्वात् 'अनजिरादिबहुस्वरशरादीनां मतौ' वित्यनेन, महानदी प्रव्यूढ सती सुकच्छमहाकच्छौ विजयौ द्विधा विभजन्ती २ अष्टाविंशत्या नदीसहस्रैः समग्रा–सहिता दक्षिणेन भागेन–मेरोर्दक्षिणदिशि शीतां महानदीं समुप- सर्पति, अथास्य विष्कम्भादिकमाह– ग्राहावती महानदी प्रवहे–ग्राहव- तीकुंडनिर्गमे मुखे -शीताप्रवेशे च सर्वत्र मुखप्रवहयोरन्यत्रापि स्थाने समा–समविस्तरोद्वेधा एतदेव दर्शयति–पंचविंशत्यधिकं योजनशतं विष्कम्भेन, अर्द्धतृतीयानि योजनान्युद्वेधेन, सपादशतयोजनानां पंचाशत्तमभागे एतावत एव लाभात्, पृथुत्वं च प्राग्वत्, तथाहि–महाविदेहेषु कुरुमेरुभद्रशालविजयवक्षस्कारमुखवनव्यतिरेकेणान्यत्र सर्वत्रान्तरनद्यः, ताश्च पूर्वापरविस्तृतास्तुल्यविस्तारप्रमाणास्तत एव तत्करणावकाशः, तत्र मेरुविष्कम्भपूर्वापरभद्रशालवनायामप्रमाणं चतुःपंचाशत्सहस्राणि विजय १६ पृथुत्वं पंचत्रिंशत्सहस्राणि चतुःशतानि षड्उत्तराणि वक्षस्कार ८ पृथुत्वं चत्वारि सहस्राणि मुखवनद्वय २ पृथुत्वं ५८४४, सर्वमीलनेन नवनवतिसहस्राणि द्वे शते पंचाशदधिके, एतज्जम्बूद्वीपविष्कम्भलक्षाच्छोध्यते शोधिते च जातं सप्तशतानि पंचाशदग्राणि।

एतच्च दक्षिणे उत्तरे वा भागेऽन्तरनद्यः षट् सन्तीति षड्भिर्विभज्यते लब्धः प्रत्येकमन्तरनदीनामुक्तो विष्कम्भ इति, आयामस्तु विजयायामप्रमाणवक्षस्कारान्तरनदीमुखवनानां समायामकत्वात्, ननु 'जावइया सलिलाओ माणुसलोगंमि सव्वंमि॥ पणयालीस सहस्सा आयामो होइ सव्वसरिआणं' इति वचनात् कथमिदं सङ्गच्छते?, उच्यते, इदं वचनं भरतगङ्गादिसाधारणं,

तेन यथा तत्र नदीक्षेत्रस्याल्पत्वेनानुपपत्तानुपपत्त्यर्थं कोष्ठाकरणमाश्रयणीयं तथाऽत्रापि, अत्र श्रीमलयगिरिपादाः क्षेत्रसमासवृत्तौ जंबूद्वीपाधिकारे एताश्च ग्राहावतीप्रमुखा नद्यः सर्वा अपि सर्वत्र कुंडाद्विनिर्गमे शीताशीतोदायाः प्रवेशे च तुल्यप्रमाणविष्कम्भोद्वेधा इत्युक्त्वा यत्पुनर्धातकीखण्डपुष्करार्द्धाधिकारयोर्नदीनां द्वीपे द्वीपे द्विगुणविस्तारं व्याख्यानयन्तः प्रोचुः यथा जम्बूद्वीपे रोहितांशारोहितासुवर्णकूलारूप्यकूलानां ग्राहावत्यादीनां च द्वादशानामन्तरनदीनां सर्वाग्रेण षोडशानां नदीनां प्रवाहविष्कम्भा द्वादशयोजनानि सार्द्धानि उद्वेधः क्रोशमेकं समुद्रप्रवेशे ग्राहावत्यादीनां च महानदीप्रवेशे विष्कम्भो योजन १२५ उद्वेधो योजन २ क्रोश २ इति तत्र पूर्वापरविरोधि, यतस्तत्रैव तैः ''अत्र लघुवृत्त्यभिप्रायेण प्रवहप्रवेशयोर्विशेषोऽभिहित'' इति कथनेन समाहितम्, एवमन्योऽपि लघुवृत्तिगतस्तात्रभिप्रायो दर्शितो वर्तते, उभयत्रापि तत्वं तु सर्वविदो विदन्ति, किञ्च-आसां सर्वत्र समविष्कम्भत्वे आगमवद्युक्तिरप्यनुकूला, तथाहि-आसां विष्कम्भवैषम्ये उभयपार्श्ववर्त्तिनोर्विजययोरपि विष्कम्भवैषम्यं स्यादिष्यते च समविष्कम्भकत्वमिति, शेषं व्यक्तमिति, अथ तृतीयं विजयं प्रश्नयन्नाह– 'कहि ण'मित्यादि, स्पष्टं, नवरं यावत्पदात् 'तत्थ णं अरिट्ठाए रायहाणीए महाकच्छे नामं राया समुप्पज्जइ, महया हिमवंत जाव सव्वं भरहोअवणं भाणिअव्वं, निक्खमणवज्जं सेसं भाणि- अव्वं, जाव भुंजइ माणुस्सए सुहे, महाकच्छनामधेज्जे' इति ग्राह्यं, ईदृशेनाभिलापेनार्थो महाकच्छ- शब्दस्य भणितव्यः ।

सम्प्रति ब्रह्मकूटप्रश्नः–'कहि ण'मित्यादि, सर्वं व्यक्तं, ब्रह्मकूटनामा द्वितीयो वक्षस्कारः चित्रकूटातिदेशेन यावत्पदादायामसूत्रादिकं भूमिरमणीयसूत्रान्तं च सर्वं वाच्यम् । अथात्र कूटवक्तव्यतामाह–'ब्रह्मकूडे चत्तारि कूडा' इत्यादि, व्यक्तं, नवरं एवं चित्रकूटवक्षस्कारकूटन्यायेन वाच्यं, यावत्करणात् समा उत्तरदाहिणेणं परुप्परंतीत्यादि ग्राह्यं, अर्थो–ब्रह्मकूटशब्दार्थः, 'से केणट्ठेणं भंते ! एवं वुच्चइ -ब्रह्मकूडे २' इत्यालापकेन उल्लेख्यः, ब्रह्मकूटनामा देवश्चात्र पल्योपमस्थितिकः परिवसति, तदेतेनार्थेनेति सुगमं। अथ चतुर्थविजयः–'कहि णं० व्यक्तं, परं द्रहावत्याः अन्तरनद्याः पश्चिमायां कच्छगावतीविजयः कच्छा एव कच्छकाः–मालुकाकच्छादयः सन्त्यस्यामतिशायिन इति 'अनजिरे'ति सूत्रे शरादी- नामाकृतिगणत्वेन सिद्धि, शेषं प्राग्वत्, अथायमनन्तरोक्तो विपो यस्याः पश्चिमायां तामन्तरनदीं लक्षयितुमाह–'कहि णं० प्रश्नसूत्रं व्यक्तं, उत्तरसूत्रे आवर्तनाम्नः पूर्वदिग्वर्त्तिनो विजयस्य पश्चिमायां कच्छावत्या विजयस्य पूर्वस्यां यावद् द्रहावतीकुंडं नाम कुंडं प्रज्ञप्तं शेषं यथा ग्राहावतीकुंडस्य स्वरूपाख्यानं ग्राहावतीद्वीपपरिमाण भवनवर्णकनामार्थकथनप्रमुखं तथा ज्ञेयं, नवरं द्रहावतीद्वीपो द्रहावतीदेवीभवनं द्रहावतीप्रमपद्मादियोगाद् द्रहावतीति नामार्थं समधिगम्यः, द्रहा– अगाधजलाशयाः सन्त्यस्यामिति द्रहावती साधनिका प्राग्वत्, अथ यथेयं महानदीं समुपैति तथाऽऽह–'तस्स णं०उक्तप्रायम्, अथ पञ्चमो विजयः–'कहि णं० व्यक्तम्, अथ तृतीयो वक्षस्कारः–

'कहि ण'मित्यादि, सूत्रद्वयमपि व्यक्तं, नवरं द्वितीयसूत्रे कूटानि पञ्चशतकानि– पंचशतप्रमाणानीति, अथ षष्ठो विजयः–'कहि ण'मित्यादि, स्पष्ट, पङ्कवत्या स्तृतीयान्तरनद्या इति, अथ तृतीयान्तरनद्यवसरः–'कहि ण'मित्यादि, प्रायः प्राग्वत्, नवरं पङ्कोऽतिशयेनास्त्यस्यामिति पङ्कावती प्राग्वद्रूपसिद्धि, अथ सप्तमविजयावसरः–'कहि ण'मित्यादि व्यक्तं, अथ चतुर्थव-

क्षस्कारः—'कहि णं० सर्वं स्पष्टं, नवरं पुष्कलावर्त्तः सप्तमो विजयः स एव चक्रवर्त्तिविजेतव्यत्वेन चक्रवर्त्तिविजय इत्युच्यते, एवं पुष्कलावतीचक्रवर्तिविजयोऽपि बोध्यः, सम्प्रत्यष्टमो विजयः—

'कहि णं भंते! महाविदेहे' इत्यादि, प्रकटार्थः, नवरं औत्तराहस्य शीतामहानधा मुखवनस्य—अनन्तरसूत्रे वक्ष्यमाणस्वरूपस्य शीतामहानदीनीलवद्वर्षधरमध्यवर्त्तिमुखवनस्यवनस्य पश्चिमायामित्यर्थः, दाक्षिणात्याच्छीतामुखवनादयं वायव्यां स्यादिति औत्तराहग्रहणमिति, अथानन्तरमेवोक्तं शीतामुखवनं लक्षयन्नाह— 'कहि ण'मित्यादि, क्व भदन्त! महाविदेहे वर्षे शीताया महानधा उत्तरदिग्वर्त्तिशीतायाः मुखे—समुद्रप्रवेशे वनं शीतामुखवनं निरस्तं, तथाहि—चत्वारि मुखवनानि—एकं शीतानीलवतोर्मध्ये १ द्वितीयं शीतानिषधयोः २ तृतीयं शीतोदानिषधयोः ३ चतुर्थं शीतोदानीलवतोः ४ एषां मध्ये आद्यस्यैव शीताल उत्तरेण दर्शनात्।

गौतम! नीलवतो दक्षिणस्यां शीताया उत्तरस्यां पौरस्त्यलवणसमुद्रस्य पश्चिमायां पुष्कलावतीचक्रवर्तिविजयस्य पूर्वस्यां अत्रान्तरे शीता मुखवनं नाम वनं प्रज्ञप्तम्, उत्तरदक्षिणायतेत्यादिविशेषणानि विजयवद्वाच्यानि, इह विजयवक्षस्कारगिर्यन्तरनद्यः सर्वत्र तुल्यविस्ताराः वनमुखानि तु निषधसमीपे नीलवत्समीपे चाल्पविष्कम्भानि शीताशीतोदोभयकूलपार्श्वे तु पृथुविष्कम्भानि जगत्यनुरोधात्, तथाहि—पूर्वस्यामपरस्यां च दिशि निषधान्नीलवतो वाऽऽरभ्य जगती वक्रगत्या शीतां शीतोदां वा प्राप्ता, जगतीसंस्पर्शवर्त्तीनि च मुखवनानि, ततस्तदनुरोधाद् दर्शयति—शीतामहानद्यन्ते द्वे योजनसहस्रे नव च द्वाविंशत्यधिकानि योजनशतानि विष्कम्भेन, अत्रोपपत्ति प्राग्वत्, विजयवक्षस्काराद्यन्तरनदीमेरुपृथुत्वपूर्वापरभद्रशालवनायाममीलने जातानि ९४१५६, अस्य राशेर्जम्बूद्वीपरिमाणात् शोधने शेषं ५८४४, अस्य शीताशीतोदयोरेकस्मिन् दक्षिणे उत्तरे वा भागे द्वे मुखवने इति द्वाभ्यां भागे हृते आगतानि द्वाविंशत्यधिकान्येकोनत्रिंशद्योजनशतानि २९२२, अत्रो च तेवीसे इति पाठोऽशुद्धः, एतच्च पृथुत्वपरिमाणं न सर्वत्र शीताशीतोदयोर्मुखप्रत्यासत्तावेतत्करणायकाशादत्रैव महाविदेहवर्षस्य सर्वोत्कृष्टविस्तारलाभादित्याह—तदनन्तरं च मात्रया २—अंशेनांशेन परिहीयमानं २—हानिमुपगच्छद् नीलवद्वर्षधरपर्वतान्ते एकमेकोनविंसतिभागं योजनस्य विष्कम्भेन, एकां कलां यावत्पृथुत्वेनेत्यर्थः, 'कालाध्वनोर्व्याप्ता'—वित्यनेन द्वितीया, अत्र करणं—मुखवनानां सर्वलघुर्विष्कम्भो वर्षधरपार्श्वे ततो वर्षधरजीवात इदं करणं समुत्तिष्ठति, तथाहि—

प्रस्तुते नीलवज्जीवा चतुर्नवतिसहस्राणि शतमेकं षट्पञ्चाशदधिकं योजनानां द्वे चैकोनविंशतिभागरूपे कले अथ पूर्वोक्तानि विजय १६ वक्षस्कारः ८ अन्तरनदी ६ गन्धमादन १ माल्यवत् १ गजदन्तपृथुत्वोत्तरकुरुजीवापरिमाणान्येकत्र मील्यन्ते, जातानि चतुर्नवतिसहस्राणि शतमेकं षट्पञ्चाशदधिकं एतस्मिन् प्रागुक्ताज्जीवापरिमा-णाच्छोधिते शेषं द्वे कले तत् एकस्मिन् दक्षिणे उत्तरे वा भागे शीताशीतोदासत्के द्वे वने इति द्वाभ्यां भज्यते आगतैका कला इति, ननु विजयवक्षस्कारादीनां सर्वत्र तुल्यविस्तारकत्वेन वनमुखानां च वर्षधरसमीपे एककलामात्रविष्कम्भकत्वेन सप्तदशकलाधिकैकोनत्रिंशद्योजनशतप्रमाणः शेषजम्बूद्वीपक्षेत्र- विभागः कुत्रान्तर्भावनीयः?, अत्र जगत्या वृत्तत्वेन सङ्कीर्णभूतत्वात् समाधेयं, अयमर्थः—पूर्वस्यामपरस्यां च दिशि निषधान्नीलवतो वा आरभ्य जगती वक्रगत्या शीताशीतोदे प्राप्ता, जगतीसंस्पर्शवर्त्तीनि

च वनमुखानि ततस्तदनुरोधात् वर्षधरसमीपे तेषां स्तोको विष्कम्भः शीताशीतोदासमपे तु भूयानिति, एवामिष्टस्थाने विष्कम्भपरिज्ञानाय सूत्रेऽनुक्तमपि प्रसङ्गगत्या करणमुच्यते - अतिक्रान्तं योजनादिकं गुरुपृथुत्वेन २९२२ इत्येवंरूपेण गुण्यते, गुणितश्च योजनराशि कलीकरणार्थमेकनोविंशत्या गुण्यते, तन्मध्ये स गुरुपृथुत्वगणितः कलाराशि प्रक्षिप्यते, ततः कलीकृतेन वनायामपरिमाणराशिना ह्रियते, ततो लभ्यते इष्टस्थाने वनमुखविष्कम्भः, यथा यथानिषधान्नीलवतो वा षोडशसहस्राणि पंच शतानि द्विनवत्यधिकानि योजनानां द्वे च कले इत्येतावद् गत्वा विष्कम्भो ज्ञातुमिष्टः तेनैष राशिर्ध्रियते १६५९२ कला २, धृत्वा च एकोनत्रिंशच्छतैर्द्वाविंशत्यधिकैर्गुण्यते, जातो योजनराशि ४८४८१८२४, कलाद्वयमपि २९२२ अनेनैव गुण्यते जातः कलाराशि ५८४४, ततो योजनराशी ४८४८१८२४ सवर्णिते जातं ९२११५४६५६ ततः कलाराशि ५८४४ क्षेपे जातं ९२११६०५०० ततोऽस्य मुखवनायामेन १६५९२ सवर्णितेन कलाद्वययुक्तेन ३१५२५० भागे हृते लब्ध इष्टस्थाने २९२२ योजनरूपो विष्कम्भः, एवमन्यत्रापि।

अथास्य पद्मवरवेदिकादिवर्णनायाह--'से णं एगाए पउ०' इत्यादि, तन्मुखवनमेकया पद्मवरवेदिकया एकेन च वनखण्डेन सम्परिक्षिप्तम्। अथ शीतामुखवनस्य वर्णको वाच्यः - 'किण्हे किण्होभासे' इत्यादि, कः कियत्पर्यन्तमित्याह—यावद्देवता आसते शेरते इत्यादि, अत्र विजयदिशि पद्मवरवेदिका गोपिका लवणदिशि तु जगत्येव गोपिका इत्येका, इयं च पद्मवरवेदिका जगतीवन्मुखवनव्यास एवान्तर्लीना, यत्र तु वनव्यासः कलाप्रमाणस्तत्र विजयव्यासं रुणद्धीति तात्पर्यं, अन्यथा विजयदिभिर्जम्बूद्वीपस्य परिपूर्णलक्षपूर्ताबुभयतो जगत्यादेः क्वाकाशः स्यात्, उक्त -

॥१॥ "अविवक्खिऊण जगइं सवेइवणमुहचउक्कपिहुलत्तं।
गुणतीससयदुवीसं णइंति गिरिअंति एगकला ॥"

इति, अथोपसंहारमाह—'एवं उत्तरिल्लं' इत्यादि, एवं—विजयादिकथनेन उत्तरदिग्वर्त्ति पार्श्वं समाप्तम्, प्राच्यमिति शेषः, प्राक् चतुर्विभागतयोद्दिष्टस्य विदेहक्षेत्रस्य प्राच्योत्तरपार्श्वं विजयादिकथनापेक्षया पूर्णं निर्दिष्टमित्यर्थः। अथ प्रतिविजयमेकैकां राजधानीं निदिदिक्षन्नाह—'विजया' इत्यादि, विजया भणिताः, अत्र च भणितानामपि विजयानां यत्पुनर्भणनमुक्तं तद्राजधानीनिरूपणार्थं, राजधान्यश्चेमाः पद्यबन्धेन संगृह्णाति।

**मू. (१७२)** *खेमा १ खेमपुरा २ चेव, रिट्ठा ३ रिट्ठपुरा ४ तहा।*
*खग्गी ५ मंजूसा ६ अविअ, ओसही ७ पुंडरीगिणी ८ ॥*

**वृ.** कच्छविजयतः क्रमेण नामतो ज्ञेयाः, क्षेमा १ क्षेमपुरा २ अरिष्ठा ३ अरिष्ठपुरा ४ तथा खड्गी ५ मंजूषा ६ अपि चेति समुच्चये औषधी ७ पुंडरीकिणी ८ इति, एताः शीताया औदीच्यानां विजया नां दक्षिणार्द्धमध्यमखण्डेषु वेदितव्याः, अथैषु श्रेणिस्वरूपमाह—

**मू. (१७३)** *सोलस विज्जाहरसेढीओ तावइआओ अभिओगसेढीओ सव्वाओ इमाओ ईसाणस्स, सव्वेसु विजएसु कच्छवत्तव्वया जाव अट्ठो रायाणो सरिसनामगा विजएसु सोलसण्हं वक्खारपव्वयाणं चित्तकूडवत्तव्वया जाव कूडा चत्तारि २ बारसण्हं नईणं गाहावइवत्तव्वया जाव उभओ पासिं दोहिं पउमवरवेइआहिं वनसंडेहि अ वण्णओ।*

वृ. 'सोलस विज्ञाहरसेढीओ' इत्यादि, उक्तेष्वष्टसु विजयेषु षोडश विद्याधरश्रेणयो वाच्याः, प्रतिवैताढ्यं श्रेणिद्वयद्वयसम्भवात्, आसु च विद्याधरश्रेणिषु प्रत्येकं दाक्षिणोत्तरपार्श्वयोः पञ्चपञ्चाशन्नगराणि वाच्यानि, उभयत्रापि वैताढ्यस्य समभूमिकत्वात्, तावत्यः आभियोग्यश्रेण्यो वाच्याः षोडश इत्यर्थः, सर्वाश्चेमा अभियोग्यश्रेणय ईशानेन्द्रस्य मेरुतः उत्तरदिग्वर्त्तित्वात्, अत्र च विद्याधरश्रेणिसूत्रं आदर्शान्तरेष्वदृष्टमपि प्रस्तावादाभियोग्यश्रेणिसङ्गत्यनुपपत्तेश् प्राकृतशैल्या संस्कृत्य मा लिखितमस्तीति बहुश्रुतैर्मयि सूत्राशातना न चिन्तनीयेति, उत्तरत्रापि सूत्रकारेण संग्रहगाथायामभियोग्यश्रेणिसंग्रहो विद्याधरश्रेणिसंग्रहपूर्वकमेव वक्ष्यते।

अथ शेषविजयवक्षस्कारादीनां स्वरूपप्ररूपणाय लाघवाशयेनातिदेशसूत्रमाह–

'सव्वेसु' इत्यादि, सर्वेषु विजयेषु कच्छवक्तव्यता ज्ञेया, यावदर्थो–विजयानां नाम निरुक्तं, तथा विजयेषु विजयसदृशनामका राजानो ज्ञेयाः, तथा षोडशवक्षस्कारपर्वतानां चित्रकूटवक्तव्यता ज्ञेया यावच्चत्वारि २ कूटानि व्यावर्णितानि भवन्ति, तथा द्वादशानां नदीनां–अन्तरनदीनामित्यर्थः ग्राहावतीवक्तव्यता ज्ञेया यावदुभयोः पार्श्वयोर्द्वाभ्यां पद्मवरवेदिकाभ्यां द्वाभ्यां वनखण्डाभ्या च सम्परिक्षिप्ता वर्णकश्चेति। अथ द्वितीयं विदेहविभागं निर्देष्टुमाह–

**मू. (१७४)** *कहि णं भंते! जंबुद्दीवे दीवे महाविदेहे वासे सीआए महानईए दाहिणिल्ले सीयामुहवणे नामं वने पन्नत्ते?, एवं जह चेव उत्तरिल्लं सीआमुहवणं तह चेव दाहिणंपि भाणिअव्वं, नवरं निसहस्स वासहरपव्वयस्स उत्तरेणं सीआए महानईए दाहिणेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं वच्छस्स विजयस्स पुरत्थिमेणं एत्थ णं जंबुद्दीवे दीवे महाविदेहे वासे सीआए महानईए दाहिणिल्ले सीआमुहवने नामं वणे पं० उत्तरदाहिणायए तहेव सव्वं नवरं निसहवासहरपव्वयंतेणं एगमेगूणवीसइभागं जोअणस्स विक्खम्भेणं किण्हे किण्होभासे जाव महया गन्धद्धाणिं मुअंते जाव आसयन्ति उभओ पासिं दोहिं पउमवरवेइआहिं वणवण्णओ इति।*

*कहि णं भंते! जंबुद्दीवे दीवे महाविदेहे वासे वच्छे नामं विजए पन्नत्ते?, गोअमा! निसहस्स वासहरपव्वयस्स उत्तरेणं सीआए महानईए दाहिणेणं दाहिणिल्लस्स सीआमुहवण्णस्स पच्चत्थिमेणं तिउडस्स वक्खारपव्वयस्स पुरत्थिमेणं एत्थ णं जंबुद्दीवे दीवे महाविदेहे वासे वच्छे नामं विजए पन्नत्ते तं चेव पमाणं सुसीमा रायहाणी १, तिउडे वक्खारपव्वए सुवच्छे वजए कुंडला रायहाणी २, तत्तजला नई महावच्छे विजए अपराजिआ रायहाणी ३, वेसमणकूडे वक्खारपव्वए वच्छावई विजए पभंकरा रायहाणी ४, मत्तजला नई रम्मे विजए अंकावई रायहाणी ५, अंजणे वक्खारपव्वए रम्मगे विजए पम्हावई, रायहाणी ६, उम्मत्तजला महानई रमणिज्जे विजए सुभा रायहाणी ७, मायंजणे वक्खारपव्वए मंगलावई विजए रयणसंचया रायहाणीति ८*

*एवं जह चेव सीआए महानईए उत्तरं पासं तह चेव दक्खिणिल्लं भा०, 'दाहिणिल्लसीआमुहवणाइ, इमे वक्खारकूडा तं०–तिउडे १ वेसमणकूडे २ अंजणे ३ मायंजणे ४, विजया तं०।*

**मू. (१७५)** *वच्छे सुवच्छे महावच्छे चउत्थे वच्छगावई।*
*रम्मे रम्मए चेव, रमणिज्जे मंगलावई॥*

**मू. (१७६)** *सुसीमा कुंडला चेव अवराइयं पहंकरा।*
*अंकायइ पम्हावई सुभा रयण संचया॥*

वृ. 'कहि ण'मित्यादि, क्व भदन्त ! जम्बूद्वीपे द्वीपे महाविदेहे वर्षे शीतामहानद्या दाक्षिणात्यं शीतामुखवनं शीतानिषधमध्यवर्त्तीत्यर्थः अतिदेशसूत्रत्वेनोत्तरसूत्रं स्वयं भाव्यं, परं वच्छस्य विजयस्य–विदेहद्वितीयभागाद्यविजयस्य पूर्वत इति । अथ द्वितीये महाविदेहविभागे विजयादिव्यवस्थामाह– 'कहि ण'मित्यादि, प्रश्नः सुलभः, उत्तरसूत्रे निषधस्य वर्षधरपर्वतस्योत्तरस्यां शीताया महानद्या दक्षिणस्यां दाक्षिणात्यस्य शीतामुखवनस्य पश्चिमतः त्रिकूटस्य वक्षस्कारपर्वतस्य पूर्वस्यां अत्रान्तरे जम्बूद्वीपे महाविदेहे वर्षे वत्सो विजयः प्रज्ञप्तः, सुसीमा राजधानी विजयविभाजकश्च त्रिकूटनामा वक्षस्कारपर्वतः १ सुवच्छो विजयः कुंडला राजधानी तप्तजलाऽन्तरनदी २ महावत्सो विजयः अपराजिता राजधानी वैश्रमणकूटो नाम वक्षस्काराद्रि ३, वत्सावती विजयः प्रभङ्करा राजधानी मत्तजला नदी ४, रम्यो विजयः अङ्कावती राजधानी अञ्जनो वक्षस्कारः ५, रम्यको विजयः पक्ष्मावती राजपूः उन्मत्तजला महानदी ६ रमणीयो विजयः शुभा राजपूःमातञ्जनो वक्ष- स्काराद्रिः ७, मङ्गलावती विजयः रत्नसञ्चया नगरी ८, सुलभसूत्रे शब्दसंस्कार एव विवरममिति, इमाश्च राजधान्यः शीतादक्षिणदिग्भाविराजधानीत्वेन विजयानामुत्तरार्द्धमध्यमखण्डेषु ज्ञेयाः, अथ विजयादीनां व्यासादिसाम्ये दर्शितेऽपि केनचित्प्रकारेण न पार्श्वयोः परस्परं भेदो भविष्यतीत्याशङ्कानिवृत्त्यर्थमाह–

'एवं जह' इत्यादि, एवं-अनुक्तप्रकारेण यथैव शीताया महानद्या उत्तरं पार्श्वं प्राच्यमिति शेषः तथैव दाक्षिणात्यं पार्श्वमिति शेषः भणितव्यं, अत्र विशेषणद्वारेण संग्रहमाह, किंविशिष्टमिदं पार्श्वम् ?–दाक्षिणात्यशीतामुखवनमादौ यत्र तद् दाक्षिणात्यशीतामुखवनादि, अनेन यथा प्रथमविभागस्य कच्छविजय आदिरुक्तस्तथा द्वितीयविभागस्य दाक्षिणात्यशीतामुखवनमादिरुक्तमिति, तथा इमे वक्ष्यमाणा वक्षस्कारकूटाः, कूटशब्देनात्र कूटान्येषां सन्तीत्यभ्रादित्वादप्रत्यये कूटाः–पर्वताः, तद्यथा–त्रिकूटेत्यादि, विजयानां राजधानीनां च संग्रहाय पद्यमेकैकं, इमानि च संग्रहसूत्राणि सुखप्रतिपत्तिहेतुभूतानीति न पुनरुक्तिर्विभाव्या, अथ पूर्वसूत्राल्लब्धेऽपि वत्सविजयदिग्नियमे विचित्रत्वात् सूत्रप्रवृत्ते रीत्यन्तरमाह–

मू. (१७७) *वच्छस्स विजयस्स निसहे दाहिणेणं सीआ उत्तरेणं दाहिणिल्लसीदामुहवणे पुरत्थिमेणं तिउडे पच्चत्थिमेणं सुसीमा रायहाणी पमाणं तं चेवेति, वच्छाणंतरं तिउडे तओ सुवच्छे विजए एएणं कमेणं तत्तजला नई महावच्छे विजए वेसमणकूडे वक्खारपव्वए वच्छावई विजए मत्तजला नई रम्मे विजए अंजणे वक्खारपव्वए रम्मए विजए उम्मत्तजला नई रमणिज्जे विजए मायंजणे वक्खारपव्वए मंगलावई विजए ।*

वृ. 'वच्छस्स' इत्यादि, वत्सस्य विजयस्य निषधो दक्षिणेन तथा तस्यैव शीता उत्तरेणेत्यादि स्पष्टं, न चैवं निषधादयो लक्ष्याः लक्षणं वत्सविजय इति वाच्यं, लक्ष्यलक्षणभावस्य कामचारात्, प्रस्तुते च प्रकरणबलात् वत्स एव लक्ष्यत इति, सुसीमा राजधानी प्रमाणं तदेव–अयोध्यासम्बन्धेयव, प्रमाणाभिधानाय राजधान्याः पुनरुपन्यासेन न पुनरुक्तिदोषः, अथैषां विजयादीनां स्थानक्रमदर्शनायाह 'वच्छाण'मित्यादि, सुगमं, नवरं वत्सानन्तरं त्रिकूटः पश्चिमत इति बोध्यं, अन्यथा पूर्वतो दाक्षिणात्यशीतामुखवनस्य प्रतिपत्ति स्यादित्युक्तो द्वितीयो विदेहविभागः ।

अथ क्रमायातं गजदन्तगिरिं सौमनसाख्यं लक्षयितुमाह–

*मू. (१७८) कहि णं भंते ! जंबुद्दीवे दीवे महाविदेहे वासे सोमनसे नामं वक्खारपव्वए पन्नत्ते ?, गो० निसहस्स वासहरपव्वयस्स उत्तरेणं मंदरस्स पव्वयस्स दाहिणपुरत्थिमेणं मंगलावईविजयस्स पच्चत्थिमेणं देवकुराए पुरत्थिमेणं एत्थ णं जंबुद्दीवे २ महाविदेहे वासे सोमनसे नामं वक्खारपव्वए पन्नत्ते उत्तरदाहिणायए पाईणपडीणविच्छिण्णे जहा मालवंते वक्खारपव्वए तहा नवरं सव्वरययामए अच्छे जाव पडिरूवे ।*

*निसहवासहरपव्वयंतेणं चत्तारि जोअणसयाइं उद्धं उच्चत्तेणं चत्तारि गाउअसयाइं उव्वेहेणं सेसं तहेव सव्वं नवरं अट्ठो से गोअमा ! सोमनसे णं वक्खारपव्वए बहवे देवा य देवीओ अ सोमा सुमना सोमसे अ इत्थ देवे महिद्धीए जाव परिवसइ से एएणट्ठेणं गोअमा ! जाव निच्चे । सोमणसे वक्खारपव्वए कइ कूडा पं० ?, गो० ! सत्त कूडा पं०, तं०–*

वृ. 'कहि ण'मित्यादि, क्व भदन्तेत्यादिप्रश्नः सुलभः, उत्तरसूत्रे निषधस्य वर्षधरपर्वतस्य उत्तरस्यां मन्दरस्य पर्वतस्य पूर्वदक्षिणस्यां–आग्नेयकोणे मङ्गलावतीविजयस्य पश्चिमायां देवकुरूणां पूर्वस्यां यावत् सौमनसो वक्षस्कारपर्वतः प्रज्ञप्तः इत्यादि सर्वं माल्यवदगजदन्तानुसारेण भाव्यं, यत्तु सप्रपञ्चं प्रथमं व्याख्याते गन्धमादनेऽतिदेशयितव्ये माल्यवतोऽतिदेशनं तदस्यासन्नवर्त्तित्वेन सूत्रकारशैलीवैचित्र्यज्ञापनार्थं, नवरं सर्वात्मना रजतमयोऽयं माल्यवांस्तु नीलमणिमयः, अयं च निषधवर्षधरपर्वतान्ते चत्वारि योजनशतान्यूर्ध्वोच्चत्वेन चत्वारि गव्यूतिशतान्युद्वेधेन माल्यवांस्तु नीलवत्समीपे इति विशेषः, अर्थे च विशेषमाह– 'से केणट्ठेण'मित्यादि, प्राग्वत्, भगवानाह–गौतम सौमनसवक्षस्कारपर्वते बहवे देवा देव्यश्च सौम्याः कायकुचेष्टाया अभावात् सुमनसो– मनःकालुष्याभावात् परिवसन्ति, ततः सुमनसामयमावास इति सौमनसः, सौमनसनामा चात्र देवो महर्द्धिकः परिवसति तेन तद्योगात् सौमनस इति, 'से एएणट्ठेण'मित्यादि, प्राग्वत्, 'सौमनसे' इति प्रायः सूत्रं व्यक्तं, नवरमेषां कूटानां पृच्छेति–प्रश्नसूत्ररूपा दिशि विदिशि च भणितव्या ।

*मू. (१७९) सिद्धे १ सोमनसे २ विअ बोद्धव्वे मंगलावईकूडे ३ ।*
*देवकुरू ४ विमल ५ कंचण ६ वसिट्ठकूडे ७ अ बोद्धव्वे ॥*

वृ. 'कहि णं भंते ! सौमनसे वक्खारपव्वए सिद्धायणकूडे नामं कूडे पन्नत्ते' इत्यादिरूपा, यथा गन्धमादनस्य-प्रथमवक्षस्कारगिरेः सप्तानां कूटाना दिग्विदिग्वक्तव्यता तथाऽत्रापि, अत्र चासन्नत्वेन प्रागतिदेशितोऽपि माल्यवान्नवकूटाश्रयत्वेन कूटाधिकारे उपेक्षित इति, कूटानां दिग्विदिग्वक्तव्यता यथ–मेरोः प्रत्यासन्नं दक्षिणपूर्वस्यां दिशि सिद्धायतनकूटं तस्य दक्षिणपूर्वस्यां दिशि द्वितीयं सौमनसकूटं, तस्यापि दक्षिणपूर्वस्यां दिशि तृतीयं मङ्गलावतीकूटं, इमानि त्रीणि कूटानि विदिग्भावीनि मङ्गलावतीकूटस्य दक्षिणपूर्वस्या पञ्चमविमलकूटस्योत्तरस्यां चतुर्थं देवकुरुकूटं, तस्य दक्षिणतः पञ्चमं विमलकूटं, तस्यापि दक्षिणतः षष्ठं काञ्चनकूटं, अस्यापि च दक्षिणतो निषधस्योत्तरेण सप्तमं वासिष्ठकूटं, सर्वाणि रत्नमयानि परिमाणतो हिमवत्कूटतुल्यानि प्रासादादिकं सर्वं तद्वत्, विमलकूटे सुवत्सा देवी काञ्चनकूटे वत्समित्रा अवशिष्टेषु कूटेषु कूटसदृशनामानो देवाः, तेषां राजधान्यो मेरोर्दक्षिणत इति । इदानीं देवकुरवः–

*मू. (१८०) एवं सव्वे पञ्चसइआ कूडा, एएसि पुच्छा दिसिविदिसाए भाणिअव्वा जहा गंधमायणस्स, विमलकंचणकूडेसु नवरिं देवयाओ सुवच्छा वच्छमित्ता य अवसिट्ठेसु कूडेसु*

*सरिसनामया देवा रायहाणीओ दक्खिणेणंति । कहि णं भंते ! महाविदेहे वासे देवकुरानामं कुरा पन्नत्ता ? गो० ! मंदरस्स पव्वयस्स दाहिणेणं निसहस्स वासहरपव्वयस्स उत्तरेणं विज्जुप्पहस्स वक्खारपव्वयस्स पुरत्थिमेणं सोमनसवक्खारपव्वयस्स पच्चत्थिमेणं एत्थ णं महाविदेहे वासे देवकुरानामं कुरा प० पाईणपडीणायया उदीणदाहिणविच्छिण्णा इक्कारस जोअणसहस्साइं अट्ठ य बायाले जोअणसए दुन्नि अ एगूणवीसइभाए जोअणस्स विक्खम्भेणं जहा उत्तरकुराए वत्तव्वया जाव अणुसज्जमाणा पम्हगंधा मिअगंधा अममा सहा तेतली सणिचारीति ६ ।*

वृ. 'कहि णं भंते !' इत्यादि, क्व भदन्त ! महाविदेहे वर्षे देवकुरवो नाम कुरवः प्रज्ञप्ताः ?, गौतम ! मन्दरगिरेर्दक्षिणतो निषधाद्रेरुत्तरतो विद्युत्प्रभवक्षस्काराद्रेर्नैऋतकोणस्थगजदन्ताकारगिरेः पूर्वतः सौमनसवक्षस्काराद्रेः पश्चिमायां अत्रान्तरे देवकुरवो नाम कुरवः प्रज्ञप्ताः, शेषं प्राग्वत्, इमाश्चोत्तरकुरूणां यमलजातका इवेति तदतिदेशमाह–यथोत्तरकुरूणां वक्तव्यता, कियद्दूर-मित्याह–यावदनुसजन्तः–सन्तानेनानुवर्त्तमानाः सन्ति, वर्त्तमाननिर्देशः कालत्रयेऽप्येतेषां सत्ता-प्रतिपादनार्थं, आह–के ते इत्याह- पद्मगन्धाः १ मृगगन्धाः २ अममाः ३ सहाः ४ तेजस्तलिनः ५ शनैश्चारिणः ६, एते मनुष्यजातिभेदाः, एतद्व्याख्यानं प्राक् सुषमसुषमावर्णनतो ज्ञेयं । अथैता-सूत्तरकुरुतुल्यवक्तव्यत्वेन यमकाविव चित्रविचित्रकूटौ पर्वतौ स्थानतः पृच्छति ।

मू. (१८१) *कहि णं भंते ! देवकुराए चित्तविचित्तकूडानामं दुवे पव्वया प० ?, गो० !, निसहस्स वासहरपव्वयस्स उत्तरिल्लाओ चरिमंताओ अट्ठचोत्तीसे जोअणसए चत्तारि अ सत्तभाए जोअणस्स अबाहाए सीओआए महानईए पुरत्थिमपच्चत्थिमेणं उभओकूले एत्थ णं चित्तविचित्तकूडा नामं दुवे पव्वया प०, एवं जच्चेव जमगपव्वयाणं सच्चेव, एएसिं रायहाणीओ दक्खिणेणंति ।*

वृ. 'कहि णं भंते ! देवकुराए चित्तविचित्तकूडा' इत्यादि, व्यक्तं, नवरं एवं–उक्तन्यायेन यैव यमकपर्वतयोर्वक्तव्यता इति शेषः सैवैतयोश्चित्रविचित्रकूटयोः एतदधिपतिचित्रविचित्रदेवयो राजधान्यौ दक्षिणेनेति, अथ हृदपञ्चकस्वरूपमाह–

मू. (१८२) *कहि णं भंते ! देवकुराए २ निसढद्दहे नामं दहे पन्नत्ते ?, गो० ! तेसिं चित्तविचित्तकूडाणं पव्वयाणं उत्तरिल्लाओ चरिमंताओ अट्ठचोत्तीसे जोअणसए चत्तारि अ सत्तभाए जोअणस्स अबाहाए सीओआए महानईए बहुमज्झदेसभाए एत्थ णं निसहद्दहे नामं दहे प०*

*एवं जच्चेव नीलवंतउत्तरकुरुचंदेरावयमालवंताणं वत्तव्या सच्चेव निसहदेवकुरुसुल-सविज्जुप्पमाणं नेअव्वा, रायहाणीओ दक्खिणेणंति ।*

वृ. 'कहि ण'मित्यादि, एवमुक्तालापकानुसारेण यैव नीलवदुत्तरकुरुचन्द्रैरावतमाल्यवतां पञ्चानां ह्रदानां उत्तरकुरुषु वक्तव्या सैव निषधदेवकुरुसूरसुलसविद्युत्प्रभनामकानां नेतव्या, एतदीयाधिपसुराणां राजधान्यो मेरुतो दक्षिणेनेति शेषः ।

अथैतासु जम्बूपीठतुल्यं वृक्षपीठं क्वास्तीति पृच्छन्नाह–

मू. (१८३) *कहि णं भंते ! देवकुराए २ कूडसामलिपेढे नामं पेढे पन्नत्ते ?, गोअमा ! मंदरस्स पव्वयस्स दाहिणपच्चत्थिमेणं निसहस्स वासहरपव्वयस्स उत्तरेणं विज्जुप्पभस्स वक्खार-पव्वयस्स पुरत्थिमेणं सीओआए महानईए पच्चत्थिमेणं देवकुरुपच्चत्थिमद्धस्स बहुमज्झदेसभाए*

*- एत्थ णं देवकुराए कुराए कूडसामली पेढे नामं पेढे पं०, एवं जच्चेव जम्बूए सुदंसणाए वत्तव्वया सच्चेव सामलीएवि णवरिं इमं नामविहूणा गरुलदेवे रायहाणी दक्खिणेणं अवसिट्ठं तं चेव जाव देवकुरू अ इत्थ देवे पलिओवमट्ठिइए परिवसइ, से तेणट्ठेणं गो० ! एवं वुच्चइ देवकुरा २, अदुत्तरं च णं देवकुराए० ।*

वृ. 'कहि ण'मित्यादि, प्रश्नसूत्रं प्राग्वत्, नवरं कूटाकारा–शिखराकारा शाल्मली तस्याः पीठं, उत्तरसूत्रे मन्दरस्य पर्वतस्य दक्षिणपश्चिमायां–नैऋतकोणे निषधस्योत्तरस्यां विद्युत्प्रभव-क्षस्कारस्य पूर्वतः शीतोदाया महानद्याः पश्चिमायां देवकुरूणां शीतयोत्तकुरूणामिव शीतोदया द्विधाकृतानां पश्चिमार्द्धस्य बहुमध्यदेशभागे अत्र–प्रज्ञापक निर्दिष्टदेशे देवकुरुषु कूटशाल्मल्याः कूटशाल्मलीपीठं प्रज्ञप्तम्, एवमुक्तसूत्रानुसारेण यैव जम्ब्वाः सुदर्शनाया वक्तव्यता सैव शाल्मल्या अपि भणितव्या, अत्र विशेषमाह–नामभि : प्राग्व्यावर्णितैर्द्वादशभिर्जम्बूनमभिर्विहीना, इह शाल्मली- नामानि न सन्तीत्यर्थः, तथा अनादृतस्थाने गरुडदेवोऽत्र, गरुडो–गरुडजातीयो वेणुदेवनामा मतान्तरेण गरुडवेगनामा वा देवः, राजधान्यस्य मेरुतो दक्षिणस्यां, तथा सूत्रेऽनुक्तमपीदं बोध्यं–अस्य पीठं कूटानि च प्रासादभवनान्तरालवर्त्तीनि रजतमयानि जम्बूवृक्षस्य तु स्वर्णमयानि, अपि चायं शाल्मलीवृक्षो यदा यदा वा सुपर्णकुमाराधिपवेणुदेववेणुदालिक्रीडास्थानं, तथा चाह सूत्र कृताङ्गचूर्णिकृत् शाल्मलीवृक्षवक्तव्यतावसरे– ''तत्थ वेणुदेवे वेणुदाली अ वसइ'' तयोर्हि तत् क्रीडास्थान''मिति, अवशिष्ट तदेव– जम्बूप्रकरणप्रोक्तमेव यो विशेषः स दर्शित इत्यर्थः, कियत्पर्यन्तमित्याह–यावद्देवकुरुर्नाम्ना देवोऽत्र परिवसति, तेनार्थेन देवकुरवः, अथापरमित्यादि प्राग्वत् ॥

अथ चतुर्थवक्षस्कारावसरः– 'कहि ण'मित्यादि, सर्वं स्पष्टं,- माल्यवदतिदेशेन वाच्यत्वात् नवरमयं सर्वात्मना रक्तसुवर्णमयः, अथात्र कूटवक्तव्यता- माह– 'विज्जुप्पभे'इत्यादि, प्रश्नसूत्रं व्यक्तं, उत्तरसूत्रे सिद्धायतनकूटं विद्युत्प्रभव- क्षस्कारनाम्ना कूटं देवकुरुनाम्ना कूटं पक्ष्मविजयकूटं कनककूटं सौवस्तिककूटं शीतोदाकूटं शतज्वलकूटं हरिनाम्नो दक्षिणश्रेण्यधिपविद्युत्कुमारेन्द्रस्य कूटं हरिकूटं, उक्तमेवं संग्रह- गाथयाऽऽह– 'सिद्धे अ विज्जुनामे'इत्यादि, एतानि हरिकूटा (दी) नि पञ्चशतिकानि ज्ञातव्यानि, एतेषां कूटानां ।

**मू. (१८४)** *कहि णं भंते ! जंबुद्दीवे २ महाविदेहे वासे विज्जुप्पभे नामं वक्खारपव्वए पन्नत्ते ?, गो० ! निसहस्स वासहरपव्वयस्स उत्तरेणं मन्दरस्स पव्वयस्स दाहिणपच्चत्थिमेणं देवकुराए पच्चत्थिमेणं पम्हस्स विजयस्स पुरत्थिमेणं । एत्थ णं जंबुद्दीवे २ महाविदेहे वासे विज्जुप्पभे वक्खारपव्वए पं०, उत्तरदाहिणायए एवं जहा मालवंते नवरि सव्वतवणिज्जमए अच्छे जाव देवा आसयन्ति । विज्जुप्पभे णं भंते ! वक्खारपव्वए कइ कूडा पं० ?, गो० ! नव कूडा पं०, तं० –सिद्धायणकूडे विज्जुप्पभकूडे देवकुरुकूडे पम्हकूडे कणगकूडे सोवत्थिअकूडे सीओआ ।*

**मू. (१८५)** *सिद्धे अ विज्जुनामे देवकुरू पम्हकणगसोवत्थी ।*
*सीओआ य सयज्जलहरिकूडे चेव बोद्धव्वे ॥*

वृ. 'कहि णं भंते ! विज्जुप्पभे वक्खारपव्वए सिद्धायतनकूडे नामं कूडे पन्नत्ते ?' इत्येवंरू- पायां पृच्छायां दिशो विदिशश्च ज्ञेयाः, यथायोगमवस्थित्याधारतया वाच्या इत्यर्थः, तथाहि–

मेरोर्दक्षिणपश्चिमायां दिशि मेरोरासन्नमाद्यं सिद्धायतनकूटं तस्य दक्षिणपश्चिमायां दिशि विद्युत्प्रभकूटं ततोऽपि तस्यां दिशि तृतीयं देवकुरुकूटं तस्यापि तस्यामेव दिशि चतुर्थं पक्ष्मकूटं एतानि चत्वारि कूटानि विदिग्भावीनि, चतुर्थस्य दक्षिणपश्चिमायां षष्ठस्य कूटस्योत्तरतः पञ्चमं कनककूटं तस्य दक्षिणतः षष्ठं सौवस्तिककूटं तस्यापि दक्षिणतः सप्तमं शीतोदाकूटं तस्यापि दक्षिणोऽष्टमं शतज्वलकूटं, नवमस्य सविशेषत्वेन हरिस्सहातिदेशमाह– यथा माल्यवद्वक्षस्कारयस्य हरिस्सहकूटं तथैव हरिकूटं बोद्धव्यं सहस्रयोजनच्चं अर्द्धतृतीयशतान्यवगाढं मूले सहस्रयोजनानि पृथु इत्यादि, तथा पृथुत्वविषयकावाक्षेपपरिहारौ तथैव वाच्यौ, नवरमष्टमतो दक्षिणतः इदं निषधासन्नमित्यर्थः, हरिस्सहकूटं उत्तरतो नीलवदासन्नं

**मू. (१८६)** *एए हरिकूडवज्जा पञ्चसइआ नेअव्वा, एएसिं कूडाणं पुच्छ दिसिविदिसाओ नेअव्वाओ जहा मालवंतस्स हरिस्सहकूडे तह चेव हरिकूडे यहाणी जह चेव दाहिणेणं चमचंचा रायहाणी तह नेअव्वा, कणगसोवत्थिअकूडेसु वारिसेणबलाहया दो देवयाओ अवसिट्ठेसु कूडेसु कूडसरिसनामया देवा रायहाणीओ दाहिणेणं ।*

*से केणट्ठेणं भंते ! एवं वुच्चइ–विज्जुप्पभे वक्खारपव्वए २ ?, गो० ! विज्जुप्पभे णं वक्खारपव्वए विज्जुमिव सव्वओ समंता ओभासेइ उज्जोवेइ पभासइ विज्जुप्पभे य इत्थ देवे पलिओवमट्ठिइए जाव परिवसइ । से एएणट्ठेणं गो० ! एवं वुच्चइ विज्जुप्पभे २, अदुत्तरं च णं जाव निच्चे ।*

**वृ.** अस्य राजधानी यथैव दक्षिणेन चमरचञ्चा राजधानी तथैव ज्ञेया, कनकसौवस्तिककूटयोर्वारिषेणबलाहके दिक्कुमार्यौ द्वे देवते, अवशिष्टेषु विद्युत्प्रभादिषु कूटेषु कूटसदृशनामानो देवा देव्यश्च राजधान्यो दक्षिणेन, यद्यप्युत्तरकुरुवक्षस्कारयोर्यथायोगं सिद्धहरिकूटवर्ज्जकूटाधिपराजधान्यो यथाक्रमाग्नेय्यां नैर्ऋत्यां च वक्तुमुचितास्तथापि प्रस्तुतसूत्रसम्बन्धियावदादर्शेषु श्रीमलयगिरिकृतक्षेत्रविचारवृत्तौ च तथादर्शनाभावात् अस्माभिरपि राजधान्यो दक्षिणेनेत्यलेखि,

अथास्य नामनिमित्तं पिपृच्छिषुराह–'से केणट्ठेण'मित्यादि, उत्तरसूत्रे विद्युत्प्रभो वक्षस्कारपर्वतो विद्युदिव रक्तस्वर्णमयत्वात् सर्वतः समन्तादवभासते द्रष्टणां चक्षुषि प्रतिभाति यदयं विद्युत्प्रकाश इति, एतदेव द्रढयति–भास्वरत्वादासन्नं वस्तु द्योतयति, स्वयं च प्रभासते–शोभते, तेन विद्युदिव प्रभातीति विद्युत्प्रभः, विद्युत्प्रभश्चात्र देवः परिवसति तेन विद्युत्प्रभः, शेषं प्राग्वत्

अथ महाविदेहस्य दाक्षिणात्यपश्चिमनामानं तृतीयं विभागं वक्तुं तदगतविजयादीनाह–

**मू. (१८७)** *एवं पम्हे विजए अस्सपुरा रायहाणी अंकावई वक्खारपव्वए १, सुपम्हे विजए सीहपुरा रायहाणी खीरोदा महानई २, महापम्हे विजए महापुरा रायहाणी पम्हावई वक्खारपव्वए ३, पम्हगावई विजए विजयपुरा रायहामी सीअसोआ महानई ४, संखे विजए अयराइआ रायहाणी आसीविसे वक्खारपव्वए ५, कुमुदे विजए अरजा रायहाणी अंतोवाहिणी महानई ६, नलिने विजए असोगा रायहाणी सुहावहे वक्खारपव्वए ७, नलिनावई विजए वीयसोगा रायहाणी ८ ।*

*दाहिणिल्ले सीओआमुहवणसंडे, उत्तरिल्लेवि एमेव भाणिअव्वे जहा सीआए, वप्पे विजए विजया रायहाणी चंदे वक्खारपव्वए १, सुवप्पे विजए जयंती रायहाणी ओम्मिमालिणी नई २, महावप्पे विजए जयंती राहाणी सूरे वक्खारपव्वए ३, वप्पावई विजए अपराइआ रायहाणी*

*फेणमालिणी नई ४, वग्गू विजए चक्कपुरा रायहाणी नागे वक्खारपव्वए ५, सुवग्गू विजए खग्गपुरा रायहाणी गंभीरमालिणी अंतरनई ६, गंधिले विजए अवज्झा रायहाणी देवे वक्खारपव्वए ७, गंधिलावई विजए अओज्झा रायहाणी ८। एवं मन्दरस्स पव्वयस्स पच्चत्थिमिल्लं पासं भाणिअव्वं तत्थ ताव सीओआए नईए दक्खिणिल्ले णं कूले इमे विजया, तं—*

**मू. (१८८)** *पम्हे सुपम्हे महापम्हे, चउत्थे पम्हगावई।*
*संखे कुमुए नलिने, अट्ठमे नलिनावई ॥*

**मू. (१८९)** *इमाओ रायहाणीओ, तं०— आसपुरा सीहपुरा महापुरा चेव हवइ विजयपुरा*
*अवराइआ य अरया असोग तह वीअसोगा य ॥*

**मू. (१९०)** *इमे वक्खारा, तंजहा—अंके पम्हे आसीविसे सुहावहे एवं इत्थ परिवाडीए दो दो विजया कूडसरिसनामया भाणिअव्वा दिसा विदिसाओ अ भा० ओष सीओआमुहवणं च भा० सीओआए दाहिणिल्लं उत्तरिल्लं च, सीओआए उत्तरिल्ले पासे इमे विजया, तंजहा—*

**मू. (१९१)** *वप्पे सुवप्पे महावप्पे चउत्थे वप्पयावई।*
*वग्गू अ सुवग्गू अ, गंधिले गंधिलावई (रायहाणीओ इमाओ तंजहा) ॥*

**मू. (१९२)** *विजया वेजयंती जयंती अपराजिआ।*
*चक्कपुरा खग्गपुरा हवइ अवज्झा अउज्झा य ॥*

**मू. (१९३)** *इमे वक्खारा तंजहा—चंदपव्वए १ सूरपव्वए २ नागपव्वए ३ देवपव्वए ४, इमाओ नईओ सीओआए महानईए दाहिणिल्ले कूले—खीरोआ सीहसोआ अंतरवाहिणीओ नईओ ३, उम्मिमालिणी १ फेणमालिणी २ गंभीरमालिणी ३ उत्तरिल्लविजयाणंतराउत्ति, इत्थ परिवाडीए दो दो कूडा विजयसरिसनामया भाणिअव्वा, इमे दो दो कूडा अवट्ठिआ तंजहा—सिद्धाययनकूडे पव्वयसरिसनामकूडे।*

**वृ.** 'एवं पम्हे विजए' इत्यादि, स्पष्टेऽप्यत्र लिपिप्रमादाद् भ्रम इति तन्निरासाय शब्दसंस्कारमात्रेण लिख्यते—पक्ष्मो विजयः अश्वपुरी राजधानी, सूत्रे स्राकारः आर्षत्वात्, एवमग्रेऽपि, अङ्कावती वक्षस्कारपर्वतः सुपक्ष्मो विजयः सिंहपुरा राजधानी क्षीरोदा अन्तरनदी २, महापक्ष्मो विजयः महापुरी राजपूः पक्ष्मावती वक्षस्कारः ३, पक्ष्मावती विजयः विजयपुरी राजधानी शीतस्रोता महानदी ४, शंखो विजयः अपराजिता नगरी आशीविषो वक्षस्कारः ५, कुमुदो विजयः अरजपूः अन्तर्वाहिनी नदी ६ नलिनो विजयः अशोका ७, सुखावह वक्षस्कारः, नलिनावती विजयः सलिलावतीति पर्यायः, वीतशोका राजधानी ८ दाक्षिणात्यं शीतोदामुखवनखण्डमिति।

अथ चतुर्थविभागावसरः—'उत्तरिल्ले' इत्यादि, एवमेवोक्तन्यायेनैव दाक्षिणात्यशीतामुखवनानुसारेणोत्तरदिग्भाविशीतोदामुखवनखण्डे भणितव्यं, यथा शीतायाः औत्तराहमुखवनं व्याख्यातं तथा व्याख्येयमित्यर्थः, चतुर्थविगविजयादयस्त्विमे—वप्रो विजयो विजया राजधानी चन्द्रो वक्षस्कारपर्वतः १, सुवप्रो विजयो वैजयन्ती राजधानी और्मिमालिनी नदी २, महावप्रो विजयो वजयन्ती राजधानी सूरो वक्षस्कारपर्वतः ३, वप्रावती विजयोऽपराजिता राजधानी फेनमालिनी नदी ४, वल्गुर्विजयश्चक्रपुरा राजधानी नागो वक्षस्कारः ५, सुवल्गुर्विजयः खड्गपुरी राजधानी गम्भीरमालिनी अन्तरनदी, गम्भीरं जलं मलते—धारयतीति गम्भीरमालिनी, एवं और्मिमालिनी फेनमालिनीति

६, गन्धिलो विजयोऽवध्या राजधानी देवो वक्षस्कारः ७, गन्धिलावती विजयोऽयोध्या राजधानी ८, एवं–उक्ताभिलापेन शीतोदाकृतविभागद्वयगतविजयादिनिरूपणेनेत्यर्थः मन्दरस्य पाश्चात्यं पार्श्वं भणितव्यमिति, अथात्र संग्रहमाह–

'तत्थ ताव सीओआ' इत्यादि, विवृतप्रायं, नवरं तत्र संग्रहे विवक्षितव्ये तावदिति भाषाक्रमे अङ्केति पदैकदेशे पदसमुदायोपचारात् अङ्कावर्ती, 'एवं पम्हंत' पक्ष्मावतीति, अथ द्वात्रिंशतोऽपि विजयानां नामानयनोपायमाह– 'एवं इत्थ परिवाडी' इत्यादि, एवम्–उक्तरीत्या अत्र–परिपाट्यां विभागचतुष्टयगतविजयानुपूर्व्या द्वौ विजयौ कूटसदृग्नामकौ भणितव्यौ, स्वस्वविजयविभेदकवक्षस्कारगिरितृतीयचतुर्थकूटसदृशनामकावित्यर्थः, तथाहि–

चित्रकूटवक्षस्कारे कूटचतुष्टयमध्ये आद्यं सिद्धायतनकूटं ततः स्ववक्षस्कारनामकं ततस्तृतीयं कच्छनामकं चतुर्थं सुकच्छनामकं तेन कच्छसुकच्छविजयावित्यर्थः, एवं सर्वत्र भावनीयमिति, दिशि–प्राच्याद्याः विपरीतदिशो विदिशश्च भणितव्याः, यथा प्राच्याः प्रतीची उदीच्याश्चापाची, एवं दिग्विदिग्नियमः कार्य, तथाहि–कच्छो विजयः शीताया महानद्याः उत्तरस्यां नीलवतो वर्षधरस्य दक्षिणस्यां चित्रकूटसरलवक्षस्कारपर्वतस्य पश्चिमायां माल्यवतो गजदन्ताकारवक्षस्कारपर्वतस्य पूर्वस्यामिति, एवं सुकच्छादिषु विजयेष्वपि स्वस्वदिश्यवस्त्वनुसारेण तत्तद्दिग्नियमः कार्य, एवं शीतोदामुखवनं च भणितव्यं, तद्विभागतो दर्शयति–शीतोदायाः दाक्षिणात्यं चौत्तराहं चेति, अथ चतुर्थविभागगतविजयादिसंग्रहः–

'सीओआए' इत्यादि, सम्प्रत्यनुक्तपूर्वं पाश्चात्यविभागद्वयगतान्तरनदीसंग्रहमाह–' सीओआ'इत्यादि, प्राग्वत्, नवरं 'उत्तरिल्लविजयाण' इति औत्तराहविजयानां, 'अंतराउ'त्ति अन्तरनद्यः 'ते लुग्वा' इत्यनेन उत्तरपदलोपः, यत्तु पूर्वविभागे विजयादिसंग्रहः प्राच्यविभागद्वयेऽन्तरनदीसंग्रहश्च नोक्तस्तत्र सूत्रकाराणां प्रवृत्तिविचित्र्यं हेतुर्व्यवच्छिन्नसूत्रता वेति ।

अत्र सरलवक्षस्कारकूटेषु नामव्यवस्थोपायमाह– 'इत्थ परिवाडीए' इत्यादि, अत्र परिपाट्या अर्थाद्वक्षस्कारानुपूर्व्या द्वौ द्वौ कूटौ विजयसदृशनामकौ भणितव्यौ, अयं भावः–प्रतिवक्षस्कारं चत्वारि २ कूटानि, तत्राद्यद्वयं नियतं, तच्च सूत्रकार एव व्यक्तीकरिष्यतीति, अपरं च द्वयमनियतं तत्र यो यो वक्षस्कारगिरिर्यौ यौ विजयौ विभजति तन्मध्ये यो यः पाश्चात्यो विजयस्तन्नामकं तस्मिन् वक्षस्कारे तृतीयं कूटं, यो यश्चाग्रिमो विजयस्तन्नामकं चतुर्थं कूटं, द्वौ द्वौ चावस्थितौ कूटौ, तद्यथा– एकं सिद्धायतनकूटं द्वितीयं पर्वतसदृशनामकं कूटं, वक्षस्कारसदृशनामकमित्यर्थः, कस्मिन्नपि वक्षस्कारे इमे नाम्नी न व्यभिचरत इत्यवस्थितौ, ननु सिद्धायतनकूटमवस्थितिमिति युक्तं, पर्वतसदृगनामकं तु भिन्न २वक्षस्कारनामानुयायित्वेन कथमवस्थितमिति ?, उच्यते, पर्वतसदृगनामकत्वेन धर्मेणास्यावस्थितत्वं, एतादृशधर्मस्य सर्वेष्वपि वक्षस्कारद्वितीयकूटेषु अव्यभिचारात्, न च तर्हि अपरकूटद्वयस्य विजयसमनामकत्वेन धर्मेणावस्थितत्वं भवतु, उक्तधर्मस्य सर्वत्राव्यभिचारात् इति वाच्यम्, विजयसमनामकस्य धर्मस्य द्वयोः कूटयोः साधारण्येनान्यतरानिश्चयेन झटिति नामव्यवहारानुपपत्तेरिति । सम्प्रति महाविदेहवर्षस्य पूर्वापरविभागकारिणं मेरुं पृच्छन्नाह–

**मू. (१९४)** *कहि णं भंते ! जंबुद्दीवे २ महाविदेहे वासे मंदरे नामं पव्वए पन्नत्ते ?,*

गोअमा ! उत्तरकुराए दक्खिणेणं देवकुराए उत्तरेणं पुव्वविदेहस्स वासस्स पच्चत्थिमेणं अवरविदेहस्स वासस्स पुरत्थिमेणं जंबुद्दीवस्स बहुमज्झदेसभाए एत्थ णं जंबुद्दीवे दीवे मन्दरेनामं पव्वए पन्नत्ते, नवनउतिजोअणसहस्साइं उद्धं उच्चत्तेणं एगं जोअणसहस्सं उव्वेहेणं मूले दसजोअणसहस्साइं णवइं च जोअणाइं दस य एगारसभाए जोअणस्स विक्खम्भेणं, धरणिअले दस जोअणसहस्साइं विक्खम्भेणं तयणंतरं च णं मायाए २ परिहायमाणे परिहायमाणे उवरितले एगं जोअणसहस्सं विक्खंभेणं मूले एक्कतीसं जोअणसहस्साइं नव य दसुत्तरे जोअणसए तिन्नि अ एगारसभाए जोअणस्स परिक्खेवेणं धरणिअले एकत्तीसं जोअणसहस्साइं छच्च तेवीसे जोअणसए परिक्खेवेणं उवरितले तिन्नि जोअणसहस्साइं एगं च बावट्ठं जोअणसयं किंचिविसेसाहिअं परिक्खेवेणं मूले विच्छिन्ने मज्झे संखित्ते उवरिं तणुए गोपुच्छसंठाणसंठिए सव्वरयणामए अच्छे सण्हेति ।

से णं एगाए पउमवरवेइआए एगेण य वनसंडेणं सव्वओ समंता संपरिक्खित्ते वण्णओत्ति, मंदरे णं भंते ! पव्वए कइ वणा पं० ?, गो० ! चत्तारि वणा पं०, तं०—भद्दसालवने १ नंदनवने १ सोमनसवने ३ पंडगवने ४, कहि णं भंते ! मंदरे पव्वए भद्दसालवने नामं वणे पं० ? गो० ! धरणिअले एत्थ णं मंदरे पव्वए भद्दसालवने नामं वने पन्नत्ते पाईणपडीणायए उदीणदाहिणविच्छिण्णे सोमनसविज्जुप्पहगंधमायणमालवंतेहिं वक्खारपव्वएहिं सीआसीओआहि अ महानईहिं अट्ठभागपविभत्ते मंदरस्स पव्वयस्स पुरत्थिमपच्चत्थिमेणं बावीसं बावीसं जोअणसहस्साइं आयामेणं उत्तरदाहिणेणं अड्ढाइज्जाइं अड्ढाइज्जाइं जोअणसयाइं विक्खम्भेणंति

से णं एगाए पउमवरवेइयाए एगेण य वनसंडेणं सव्वओ समंता संपरिक्खित्ते दुण्हवि वण्णओ भाणिअव्वो किण्हे किण्होभासे जाव देवा आसयंति सयंति, मंदरस्स णं पव्वयस्स पुरत्थिमेणं भद्दसालवनं पन्नासं जोअणाइं ओगाहित्ता एत्थ णं महं एगे सिद्धाययने पन्नत्ते पन्नासं जोअणाइं आयामेणं पणवीसं जोअणाइं विक्खम्भेणं छत्तीसं जोअणाइं उद्धं उच्चत्तेणं अनेगखम्भसयसण्णिविट्ठे वण्णओ, तस्स णं सिद्धाययनस्स तिदिसिं तओ दारा पं०, ते णं दारा अट्ठ जोअणाइं उद्धं उच्चत्तेणं चत्तारि जोअणाइं विक्खम्भेणं तावइयं चेव पवेसेणं सेआ वरकणगथूमिआगा जाव वणमालाओ भूमिभागो अ भाणिअव्वो, तस्स णं बहुमज्झदेसभाए एत्थ णं महं एगा मणिपेढिया पन्नत्ता अट्ठजोअणाइं आयामविक्खम्भेणं चत्तारि जोअणाइं बाहल्लेणं सव्वरयणामई अच्छा, तीसे णं मणिपेढिआए उवरिं देवच्छन्दए अट्ठजोअणाइं आयामविक्खम्भेणं साइरेगाइं अट्ठजोअणाइं उद्धं उच्चत्तेणं जाव जिनपडिमावण्णओ देवच्छंदगस्स जाव धूवकडुच्छुआणं इति । मंदरस्स णं पव्वयस्स दाहिणेणं भद्दसालवनं पन्नासं जोअणाइं ओगाहित्ता एत्थ णं चत्तारि नंदापुक्खरिणीओ पन्नत्ताओ, तं०—पउमा १ पउमप्पभा २ चेव, कुमुदा ३ कुमुदप्पभा ४, ताओ णं पुक्खरिणीओ पन्नासं जोअणाइं आयामेणं पणवीसं जोअणाइं विक्खम्भेणं दसजोअणाइं उव्वेहेणं वण्णओ वेइआवणसंडाणं भाणिअव्वो, चउद्दिसिं तोरणा जाव तासि णं पुक्खरिणीणं बहुमज्झदेसभाए एत्थ णं महं एगे ईसाणस्स देविंदस्स देवरण्णो पासायवडिंसए पन्नत्ते पञ्चजोअणसयाइं उद्धं उच्चत्तेणं अड्ढाइज्जाइं जोअणसयाइं विक्खंभेणं, अब्भुग्गयमूसिय एवं सपरिवारो पासायवडिंसओ भाणिअव्वो ।

मंदरस्स णं एवं दाहिणपुरत्थिमेणं पुक्खरिणीओ उप्पलगुम्मा णलिया उप्पला उप्पलुज्जला तं चेव पमाणं मज्झे पासायवडिंसओ सक्कस्स सपरिवारो तेणं चेव पमाणेणं दाहिणपच्चत्थिमेणवि

*पुक्खरिणीओ भिंगा भिंगनिभा चेव, अंजणा अंजणप्पभा । पासायवडिंसओ सक्कस्स सीहासनं सपरिवारं, उत्तरपुरत्थिमेणं पुक्खरिणीओ–सिरिकंता १ सिरिचंदा २ सिरिमहिआ ३ चेव सिरिनिलया ४ । पासायवडिंसओ ईसानस्स सीहासणं सपरिवारंति मंदरे णं भंते ! पव्वए भद्दसालवने कइ दिसाहत्थिकूडा पं० ?, गो० ! अट्ठ दिसाहत्थिकूडा पन्नत्ता, तंजहा–*

वृ. 'कहि ण' मित्यादि, प्रश्नः प्राग्वत्, उत्तरसूत्रे गौतम ! उत्तरकुरूणां दक्षिणस्यां देवकुरूणां उत्तरस्यां पूर्वविदेहस्य वर्षस्य पश्चिमायां पश्चिममहाविदेहस्य वर्षस्य पूर्वस्यां जम्बूद्वीपस्य द्वीपस्य बहुमध्यदेशभागे, अत्रान्तरे जम्बूद्वीपे द्वीपे मन्दरो नाम पर्वतः प्रज्ञप्तः, नवनवतियोजनसहस्राणि ऊर्ध्वोच्चत्वेन एकं योजनसहस्रमुद्वेधेन सर्वाग्रेण पूर्णं लक्षमित्यर्थ वक्ष्यमाणचूलासत्कानि चत्वारिंशद्योजनानि त्वधिकानि, उच्छ्रयचतुर्थांशो भूम्यवगाहस्तु मेरुवर्जपर्वतेषु ज्ञेय इति, मूले–कन्दे दशयोजनसहस्राणि नवतिं च योजनानि दश चैकादशभागान् योजनस्य विष्कम्भेन एकादशरूपेण छेदेन क्रमादपचीयमानविष्कम्भोऽसौ धरणीतले समे भागे दशयोजनसहस्राणि विष्कम्भेन, मूलतो योजनसहस्रमूर्द्धगमने मूलगतानि नवतियो० दश च एकादशभागा योजनस्य त्रुत्रुटुरित्यर्थः, तदनन्तरं मात्रया २ ऊर्ध्वगमने–उच्चत्वस्य योजनैकादशांशवृद्ध्या विष्कम्भस्य योजनैकादशांशहानिस्तयोच्चत्वैकादशयोजनवृद्ध्या विष्कम्भैकयोजनहानि एवमेकादशयोजनशतवृद्ध्या योजनशतहानि० तथा एकादशयोजनसहस्रवृद्ध्या योजनसहस्रहानि- रित्येवंरूपेण परिमाणेन परिहीयमाणः २ उपरितले–यत्र चूलिकाया उद्भवस्तत्र एकं योजनसहस्रं विष्कम्भेन ।

समभूतलतो नवनवतियोजनसहस्राण्यूर्ध्वगमने पृथुत्वगतनवयोजनसहस्राणि त्रुत्रुटुरित्यर्थः, अथास्य परिधिः–मूले एकत्रिंशद्योजनसहस्राणि नव च शतानि दशोत्तराणि त्रींश्चैकादशभागान् योजनस्य परिक्षेपण, धरणीतले एकत्रिंसद्योजनसहस्राणि षट् च त्रयोविंशत्यधिकानि योजनशतानि परिक्षेपेण उपरितले त्रीणि योजनसहस्राणि एकं च द्वाषष्ट्यधिकं योजनशतं किञ्चिद्विशेषाधिकं परिक्षेपेण, अथाद्यपरिधिगणितं मूले विष्कम्भस्य सच्छेदत्वाद्विषममिति दर्श्यते–मूले विष्कम्भो दशयोजनसहस्राणि नवत्यधिकानि दश चैकादशभागा योजनस्य तत्र योजनराशावेकादशभागकरणार्थमेकादशभिर्गुणिते उपरितनदशभागक्षेपे च जाता एकादशभागा लक्षमेकादश च सहस्राणि ततोऽस्य राशेर्वर्गकरणे जातं एकको द्विकस्त्रिको द्विकः एककः षट् च शून्यानि ततोऽस्य दशभिर्गुणने जातानि सप्त सून्यानि अथास्य वर्गमूलानयने लब्धस्त्रिकः पञ्चक एककः शून्यमेकको द्विकः अथास्य योजन- करणार्थं ११ भागः लब्धं योजन ३१९१० अंश २, शेषं ५७५८५६७०२०२४, अर्द्धाभ्यधि-कत्वाद्रूपे दत्ते अंशाः ३, समभूतलगतपरिधावपि ३१६२२ योजनानि अवशिष्टांशानाम-र्द्धाभ्यधिकत्वाद्रूपे दत्ते त्रयोविंशतिर्योजनानि, शिखरपरिधौ चार्द्धतो न्यूनत्वादंशानां सूत्रे किंचिदधिकत्वं न्यवेदि, अत एव मूले विस्तीर्णो मध्ये संक्षिप्तः उपरि तनुकः ऊर्ध्वं मेखलाद्वयाविवक्षया उदस्तगोपुच्छाकारेण संस्थितः सर्वात्मना रत्नमयः, इदं च प्रायोवचनं, अन्यथा काण्डत्रयविवेचने आद्यकाण्डस्य पृथ्व्युपलशर्करावज्रमयत्वं तृतीयकाण्डे जाम्बूनदमयत्वं च भणिष्यमाणं विरुणद्धि, शेषं प्राग्वत् ।

अथात्र पद्मवरवेदिकाद्याह–'से णं एगाए' इत्यादि, व्यक्तं, अत्र चारोहेऽवरोहे च इष्टस्थाने विस्तारादिकरणानि सूत्रेऽनुक्तान्यपि उत्तरग्रन्थे बहूपयोगानीति दर्श्यन्ते–तत्र कन्दादारोहे

करणमिदं-ऊर्ध्वगतस्य यत्र योजनादौ विस्तारजिज्ञासा तस्मिन् योजनादिके एकादशभिर्भक्ते यल्लब्धं तस्मिन् कन्दविस्तारादपनीते यदवशिष्टं स तत्र प्रदेशे मेरुव्यासः, तथाहि—कन्दा- द्योजनलक्षमूर्ध्वं गतस्ततो योजनलक्षं ध्रियते तस्मिंश्चैकादशभिर्भक्ते लब्धानि नवतिशतानि नवत्यधिकानि योजनानां दश चैकादशभागा योजनस्य अस्मिन् कन्दव्यासात् दशयोजनसहस्राणि नवत्यधिकानि दश चैकादशभागा योजनस्येत्येवंपरिमाणादपनीयते शेषं योजनसहस्रं, एतावानत्र प्रदेशे मेरूपरितले व्यासः, अथवा योजनसहस्रमारूढस्ततो योजनसहस्रं एकादशभिर्भक्ते लब्धानि नवतियोजनानि दश चैकादशभागा योजनस्य अस्मिन् योजनसहस्रमारूढस्ततो योजनसहस्रं एकादशभिर्भक्ते लब्धानि नवतियोजनानि दश चैकादशभागा योजनस्य अस्मिन् पूर्वोक्तात् कदन्व्यासाच्छोधिते शेषं दशयोजनसहस्राणि एवमन्यत्रापि भाव्यं।

अथ शिखरादवरोहे करणं, यथा मेरुशिखरादवपत्य यत्र योजनादौ विष्कम्भजिज्ञासा तस्मिन् योजनादिके एकादशभिर्भक्ते यल्लब्धं ततसहितं तत्र प्रदेशे मेरुव्यासमानं, यथा शिखराद्यो जनलक्षमवतीर्णस्ततो लक्षे एकादशभिर्भक्ते लब्धानि नवतिशतानि नवत्यधिकानि दश चैकादशभागाः अस्मिन् योजनसहस्रप्रक्षेपे जातानि १००९० $^{10}/_{11}$ इयान् कन्दे व्यासः, अथवा शिखराग्र- वनवतियोजनसहस्राण्यवतीर्णस्ततस्तेषामेकादशभिर्भागे हृते लब्धानि नवसहस्राणि तानि सहस्रसहितनि जातानि दशसहस्राणि एतावान् धरणीतले विस्तारः, एवमन्यत्रापि, अथ मेरौ मूलादारोहे मौलितोऽवरोहे च विष्कम्भविषयकहानिवृद्धिज्ञानार्थं करणमिदं—उपरितनाधस्तन- योर्विस्तारयोर्विश्लेषे कृते तयोर्मध्यवर्त्तिना पर्वतोच्छ्रयेण भक्ते यल्लब्धं सा हानिर्वृद्धिश्च, तथाहि— उपरितने विस्तारे योजनसहस्रं अधस्तनाद्योजन १००९० $^{10}/_{11}$ इत्येवंरूपाच्छोधिते शेषं ९०९० सवर्णनार्थं योजनराशिमेकादशगुणीकृत्य अधस्तना दश भागाः प्रक्षेप्याः जातं $^{100000}/_{11}$ अस्य च भजनार्थं मध्यवर्त्तिनि पर्वतोच्छ्रये १००००० इत्येवंरूपे एकादशगुणे कृते जातं $^{100000}/_{1100000}$ अत्र छेदराशेरेकादश- गुणत्वाद्भागाप्राप्तौ उभयोर्लक्षेणापवर्त्ते कृते जातं $^{1}/_{11}$ इयती प्रतियोजनं हानिर्वृद्धिश्च तया इदमेव लब्धमर्द्धीकार्यं एककस्यार्द्धासम्भवात् छेद एव द्विगुणीक्रियते जातं इयं मेरोरेकस्मिन् पार्श्वे वृद्धिर्हानिश्चेति।

अथोच्चत्वपरिज्ञानाय करणमिदं—मेरोर्यत्र भूतलादौ प्रदेशे यो यावान् विस्तारः तस्मिन् मूलविस्ताराच्छोधिते यच्छेषं तदेकादशभिर्गुणितं सत् यावद् भवति तावत्प्रमाण उत्सेधः, तथाहि—शिखरव्यासो योजनसहस्रं तस्मिन् कन्दव्यासात् पूर्वोक्ताच्छोधिते शेषं नवतिसहस्राणि नवत्यधिकानि दश चैकादशभागा योजनस्येत्येतदात्मकं योजनराशिरेकादशभिर्गुण्यते जातं ९९९९० ये च दशैकादशभागास्तेऽपि एकादशभिर्गुण्यन्ते जातं ११० तस्यैकादशभिर्भागे हृते लब्धानि दश योजनानि पूर्वराशौ प्रक्षिप्यन्ते जातं योजनानां लक्षं, एतावदधोविस्तारोपरित- नविस्तारयोरन्तरे उच्चत्वं, एवं मध्यभागादावप्युच्चत्वपरिमाणं भावनीयमिति।

नन्विह कस्मादेकादशलक्षणः छेदः कस्माद्वा तेन शेषं गुण्यते ?, उच्यते, एकादशानां योजनानामन्ते एकं योजनं एकादशानां योजनशतानामन्ते एकं योजनशतं एकादशानां योजनसहस्रानामन्ते एकं योजनसहस्रं त्रुटयति तत एकादशलक्षणः छेदः, तेनोच्चत्वपिज्ञानाय विस्तारशेषं गुण्यते, अन्यथा योजनानां दशसहस्राणि नवत्यधिकानि दश चैकादशभागा

योजनस्येत्येवंविस्तारात् कन्दादारोहणे धरणीतले नवतिर्योजनानि दश चैकादशभागाः कथं त्रुट्येयुरिति, ननु मेखलाद्वये प्रत्येकं परितः पञ्चयोजनशतविस्तारयोर्नन्दनसौमनसवनयोः सद्भावात् प्रत्येकं योजनसहस्रस्य युगपत् त्रुटि ततः किमित्येकादशभागपरिहाणि ?, उच्यते, कर्णगत्या समाधेयमिति, का च कर्णगतिरिति चेत्, उच्यते, कन्दादारभ्य शिखरं यावदेकान्तऋजुरूपायां दवरिकायां दत्तायां यदपान्तराले कापि कियदाकाशं तत्सर्वं कर्णगत्या मेरोराभाव्यमिति मेरुतया परिकल्प्य गणितज्ञाः सर्वत्रैकादशभागपरिहाणि परिवर्णयन्ति, अयं चार्थ श्रीजिनभद्रगणिक्षमाश्रमणपूज्यैरपि विशेषण- वत्यां लवणोदधिघनगणितनिरूपणावसरे दृष्टान्तद्वारेण ज्ञापित एवेति ।

सम्प्रत्येतदगतवनखण्डवक्तव्यतामाह- 'मन्दरे ण' मित्यादि, प्रश्नसूत्रं व्यक्तं, उत्तरसूत्रे चत्वारि वनानि प्रज्ञप्तानि, तद्यथा-भद्राः-सद्भूमिजातत्वेन सरलाः शालाः साला वा-तरुशाखा यस्मिन् तत् भद्रशालं भद्रसालं वा, अथवा भद्राः शाला-वृक्षा यत्र तद् भद्रशालं नन्दयति-आनन्दयति देवादीनिति नन्दनं सुमनसां-देवानामिदं सौमनसं देवोपभोग्यभूमिकासनादिमत्वात् पण्डते-गच्छति जिनजन्माभिषेकस्थानत्वेन सर्ववनेष्वतिशायितामिति णकप्रत्यये पण्डकं, इमानि चत्वार्यपि स्वस्थाने मेरुं परिक्षिप्य स्थितानि, आद्यवनं स्थानतः पृच्छति- 'कहि ण', प्रश्नः प्राग्वत्, निर्वचनसूत्रे गौ० ! धरणीतलेऽत्र मेरौ भद्रशालवनं प्रज्ञप्तं, प्राचीनेत्यादि प्राग्वत्, सौमनसविद्युत्प्रभगन्धमादनमाल्यवद्भिर्वक्षस्कारपर्वतैः शीताशीतोदाभ्यां च महानदीभ्यामष्टभागप्रविभक्तं-अष्टधाकृतं, तद्यथा-एको भागो मेरोः पूर्वतः १ द्वितीयोऽपरतः २ तृतीयो विद्युत्प्रभसौमनसमध्ये दक्षिणतः ३ चतुर्थो गन्धमादनमाल्यवन्मध्ये उत्तरतः ४ तथा शीतोदया उत्तरतो गच्छन्त्या दक्षिणखण्डं पूर्वपश्चिमविभागेन द्विधा कृतं ततो लब्धः पञ्चमो भागः ५ तथा पश्चिमतो गच्छन्त्या पश्चिमखण्डं दक्षिणोत्तरविभागेन द्विधा कृतं ततो लब्धः षष्ठो भागः ६ तथा शीतया महानद्या दक्षिणाभिमुखं गच्छन्त्या उत्तरखण्डं पूर्वपश्चिमभागेन द्विधा कृतं ततो लब्धः सप्तमो भागः ७ तथा पूर्वतो गच्छन्त्या पूर्वखण्डं दक्षिणोत्तरविभागेन द्विधा कृतं ततो लब्धोऽष्टमो भागः ८ ।

मन्दरस्य पूर्वतः पश्चिमतश्च द्वाविंशतिं २ योजनसहस्राण्यायामेन, कथमिति चेत्, उच्यते, कुरुजीवा त्रिपञ्चाशदयोजनसहस्राणि, एकैकस्यां च वक्षस्कारगिरेर्मूले पृथुत्वं पञ्चयोज- नशतानि ततो द्वयोः शैलयोर्मूले पृथुत्वपरिमाणं योजनसहस्रं तस्मिन् पूर्वराशौ प्रक्षिप्ते जातानि चतुःपञ्चाशद् योजनसहस्राणि, तस्मान्मेरुव्यासे शोधिते शेषं चतुश्चत्वारिंशदयोजन सहस्राणि तेषामर्द्धे द्वाविंशतिर्योजनसहस्राणि पूर्वतः पश्चिमतश्च भवन्ति, अथवेदमुपपत्यन्तरं-शीतावनमुखं २९२२ योजनानि अन्तरनदीषट्कं ७५० योजनानि वक्षस्काराष्टकं ४००० योजनानि विजयषोडशकपृथुत्वं ३५४०६ योजनानि शीतोदावनमुखं २९२२ योजनानि एतेषां विस्तारसर्वाग्रमीलने षट्चत्वारिंशद् योजनसहस्राणि एतच्च लक्षप्रमाणमहाविदेहजीवायाः शोध्यते शेषं चतुःपञ्चशदयोजनसहस्राणि एतावद्भद्रशालवनक्षेत्रं तच्च मेरुसहितमिति धरणीतलसत्कदशयोजनसहस्रशोधने शेषं चतुश्चत्वारिंशदयोजनसहस्राणि तस्यार्द्धे एकैकपार्श्वे द्वाविंशतिर्योजनसहस्राणीति, उत्तरतो दक्षिणतश्चार्द्धतृतीयानि योजनसतानि विष्कम्भेन, दक्षिणत उत्तरतश्च तद्भद्रशालवनमर्द्धतृतीययोजनशतानि यावद् देवकुरूत्तरकुरुषु प्रविष्टमित्यर्थः, अत एव देवकुरुमेरूत्तरकुरुव्यासरुद्धे

विदेहव्यासे क्व भद्रशालवनाकाश इति प्रश्नो दूरापास्त इति ।

अथैतद्वर्णनातिदेशायाह–'से णं एगाए' इत्यादि, प्राग्वत्, अथात्र सिद्धायतनादिवक्तव्य-माह–'मन्दरस्स' इत्यादि, मेरोः पूर्वतः पञ्चशदयोजनानि भद्रशालवनमवगाह्यअतिक्रम्यात्रान्तरे महदेकं सिद्धायतनं प्रज्ञप्तं, पञ्चाशदयोजनान्यायामेन पञ्चविंशतिर्योजनानि विष्कम्भेन षट्त्रिंश-द्योजनानि ऊर्ध्वोच्चत्वेन अनेकस्तम्भशतसन्निविष्टेत्यादिकः सूत्रतोऽर्थतश्च वर्णकः प्रागुक्तो ग्राह्यः

अथात्र द्वारादिवर्णकसूत्राण्याह–'तस्स ण' मित्यादि, प्राग्वत्, 'तस्स' त्ति, 'तीसे णं' मित्यादि, सूत्रद्वयं व्यक्तं । अथोक्तरीतिमवशिष्टसिद्धायतनेषु दर्शयति–'मन्दरस्स' इत्यादि, मन्दरस्य पर्वतस्य दक्षिणतो भद्रशालवनं पञ्चाशदयोजनान्यवगाह्येत्याद्यालपको ग्राह्यः, एवं चतुर्दिक्ष्वपि मन्दरस्य भद्रशालवने चत्वारि सिद्धायतनानि भणितव्यानि, यच्च त्रिष्वतिदेष्टव्येषु चत्वार्यतिदिष्टानि तत्र जम्बूद्वीपद्वारवर्णके 'एवं चत्तारिवि दा भाणिअव्वा' इत्येतत्सूत्रव्याख्यानमनुस्मरणीयम् ।

अथैतदतपुष्करिण्यो वक्तव्याः–'मन्दरस्स' इत्यादि, सुगमं, अथासां प्रमाणाद्याह–'ताओ ण' मित्यादि, मेरोरीशान्यां दिशि भद्रशालवनं पञ्चाशदयोजनान्यवगाह्यात्रान्तरे चतस्र नन्दा–नन्दाभिधानाः शाश्वताः पुष्करिण्यः प्रज्ञप्ताः, आसां च प्रादक्षिण्येन नामानि पद्मा पद्मप्रभा कुमुदा कुमुदप्रभा चैवः समुच्चये ताश्च पुष्करिण्यः पञ्चाशदयोजनान्यायामेन पंचविंशतिं योजनानि विष्कम्भेन दशयोजनान्युद्वेधेन–उण्डत्वेन वर्णको वेदिकावनखण्डानां भणितव्यः प्राग्वत्, यावच्चतुर्दिशि तोरणानि ।

अथैतासां मध्ये यदस्ति तदाह–तासां पुष्करिणीनां बहुमध्यदेशभागे अत्रान्तरे महानेकः ईशानदेवेन्द्रस्यदेवराज्ञः प्रासादावतंसकः प्रज्ञप्तः, कोऽर्थः ? –तं प्रासादं चतस्रः पुष्करिण्यः परिक्षिप्य स्थिता इति, पञ्चयोजनशतान्यूर्ध्वोच्चत्वेन अर्द्धतृतीयानि योजनशतानि विष्कम्भेन समचतुरस्रत्वादायामेनापि, 'अब्भुग्गयमूसिअ' इत्यादि प्रसादानां वर्णनं प्राग्वत्, एव-मुक्ताभिलापानुसारेण सपरिवारः–ईशानेन्द्रयोग्यशयनीयसिंहासनदिपरिवारयुक्तः प्रासादा-वतंसको भणितव्यः, अथ प्रादक्षिण्येन शेषविदिग्गतपुष्करिण्यादिप्ररूपणायाह-मेरोः एवमितिपदमुक्तातिदेशार्थं तेन 'भद्दसालवणं पन्नासं जोअणाइं ओगाहित्ता' इत्यादि ग्राह्यं, नवरं दक्षिणपूर्वस्यामिति–आग्नेय्यां दिशीत्यर्थः, ताश्चोत्पलगुल्मादयः पूर्वक्रमेण तदेव प्रमाणंईशा-नविदिग्गतप्रासादप्रमामेनेत्यर्थः, दक्षिणपश्चिमायामपि –नैऋत्यां विदिशि पुष्करिण्यो भृङ्गाद्याः प्रादक्षिण्येन ज्ञेयाः, प्रासादावतंसकः शक्रस्य सिंहासनं सपरिवारं, उत्तरपश्चिमाया–वायव्यां विदिशि पुष्करिण्यः श्रीकान्ताद्याः प्रासादावतंसकः ईशानस्य सिंहासनं सपरिवारं, अत्र उत्तरदिक-सम्बद्धत्वेन एशानवायव्यप्रासादौ ईशानेनन्द्रसत्कौ दक्षिणदिकसम्बद्धत्वेन आग्नेयनैर्ऋतप्रासादौ शक्रेन्द्रसत्काविति । सम्प्रति दिग्गजकूटवक्तव्यतामाह–

'मन्दरे णं भंते ! पव्वए' इत्यादि, प्रश्नसूत्रे दिक्षु–एशान्यादिविदिकप्रभृतिषु हस्त्याकाराणि कूटानि दिगहस्तिकूटानि, कूटशब्दवाच्यानामप्येषां पर्वतत्वव्यवहारः ऋषभकूटप्रकरण इव ज्ञेयः, स्थानाङ्गेऽष्टमस्थाने तु पूर्वादिषु दिक्षु हस्त्याकाराणि कूटानिति ।

*मू. (१९५) पउमुत्तरे १ नीलवंते २ सुहत्थी ३ अंजनागिरी ४ ।*
*कुमुदे अ ६ पलासे अ ६, वडिंसे ७ रोअणागिरी ८ ॥*

**वृ.** उत्तरसूत्रे पद्मोत्तरेति श्लोकः, पद्मोत्तरः नीलवान् सुहस्ती अञ्जनागिरिं 'अञ्जनादीनां गिरा' वित्यादिना दीर्घः, कुमुदः पलाशः अवतंसः रोचनागिरि, अन्यत्र रोहणागिरि, अत्रापि दीर्घत्वं प्राग्वत्, अथैषां दिग्व्यवस्थां पृच्छन्नाह–

**मू. (१९६)** *कहि णं भंते ! मंदरे पव्वए भद्दसालवने पउमुत्तरे नामं दिसाहत्थिकूडे पं० गोअमा ! मंदरस्स पव्वयस्स उत्तरपरत्थिमेणं पुरत्थिमिल्लाए सीआए उत्तरेणं एत्थ णं पउमुत्तरेनामं दिसाहत्थिकूडे पन्नत्ते पञ्चजोअणसयाइं उद्धं उच्चत्तेणं पञ्चगाउअसयाइं उव्वेहेणं एवं विक्खम्भ-परिक्खेवो भा० चुल्लहिमवंतसरिसो, पासायाण य तं चेव पउमुत्तरो देवो रायहाणी उत्तरपुरत्थि० मेणं १। एवं नीलवंतदिसाहत्थिकडे मंदरस्स दाहिणपुरत्थिमेणं पुरत्थिमिल्लाए सीआए दक्खिणेणं एअस्सवि नीलवंतो देवो रायहाणी दाहिणपुरत्थिमेणं २, एवं सुहत्थिदिसाहत्थिकूडे मंदरस्स दाहिणपुरत्थिमेणं दक्खिणिल्लाए सीओआए पुरत्थिमेणं एअस्सवि सुहत्थी देवो रायहाणी दाहिण-पुरत्थिमेणं ३, एवं चेव अंजणागिरिदिसाहत्थिकूडे मंदरस्स दाहिणपच्चत्थिमेणं दक्खिणिल्लाए सीओआए पच्चत्थिमेणं, एअस्सवि अंजणागिरी देवो रायहाणी दाहिणपच्चत्थिमेणं ४।*

*एवं कुमुदे विदिसाहत्थिकूडे मंदरस्स दाहिणपच्चत्थिमेणं पच्चत्थिमिल्लाए सीओआए दक्खिणेणं एअस्सवि कुमुदो देवो रायहाणी दाहिणपच्चत्थिमेणं ५, एवं पलासे विदिसाहत्थिकूडे मंदरस्स उत्तरपच्चत्थिमेणं पच्चत्थिमिल्लाए सीओआए उत्तरेणं एअस्सवि पलासो देवो रायहाणी उत्तरपच्चत्थिमेणं ६। एवं वडेंसे विदिसाहत्थिकूडे मंदरस्स उत्तरपच्चत्थिमेणं उत्तरिल्लाए सीआए महानईए पच्चत्थिमेणं एअस्सवि वडेंसो देवो रायहाणी उत्तरपच्चत्थिमेणं, एवं रोअणागिरी दिसाहत्थिकूडे मंदरस्स उत्तरपुरत्थिमेणं उत्तरिल्लाए सीआए पुरत्थिमेणं एयस्सवि रोअणागिरी देवो रायहाणी उत्तरपुरत्थिमेणं।*

**वृ.** 'कहि ण' मित्यादि, क्व भदन्त ! मेरौ भद्रशालवने पद्मोत्तरो नाम दिगहस्तिकूटः प्रज्ञप्तः गौतम ! मन्दरस्यैशान्यां पौरस्त्यायाः -मेरुतः पूर्वदिग्वर्त्तिन्याः शीताया उत्तरस्यां, अनेनोत्तरदिग-वर्त्तिन्याः शीताया व्यवच्छेदः कृतः, अत्रान्तरे पद्मोत्तरो नाम दिगहस्तिकूटः प्रज्ञप्तः, ऐशानवा-पीचतुष्कमध्यस्थप्रासादप्राच्यजिनभवनयोरन्तरालवर्त्तीत्यर्थः, अत एव दिगहस्तिकूटा अपि मेरुतः पञ्चाशद्योजनातिक्रम एव भवन्ति, प्रासादजिनभवनसमश्रेणिस्थितत्वात्, पञ्चयोजनशतान्यू-र्ध्वोच्चत्वेन पञ्चगव्यूतशतान्युद्वेधेन एवमुच्चत्वन्यायेन विष्कम्भः, अत्र विभक्तिलोपः प्राकृतत्वात्, परिक्षेपश्च भणितव्यः, तथाहि-मूले पञ्चयोजनशतानि मध्ये त्रीणि योजनशतानि पञ्चसप्तत्यधिकानि उपरि अर्द्धतृतीयानि योजनशतानित्येवंरूपो विष्कम्भः, तथा मूले पञ्चदशयोजनशतानि एकाशीत्य-धिकानि मध्ये एकादशयोजनशतानि षडशीत्यधिकानि किञ्चिदूनानि उपरि सप्तयोजनशता-न्येकनवत्यधिकानि किञ्चिदूनानीति परिक्षेपः प्रसादानां च एतद्वर्त्तिदेवस्कानां तदेव प्रमाणमिति गम्य यत् क्षुद्रहिमवत्कूटपतिप्रासादस्येति, अत्र बहुवचननिर्देशो वक्ष्यमाणदिगहस्तिकूट-वर्त्तिप्रासादेष्वपि समानप्रमाणसूचनार्थं, पद्मोत्तरोऽत्र देवः, तस्य राजधानी उत्तरपूर्वस्यां उक्त-विदिग्वर्त्तिकूटाधिपत्वादस्येति, अथ शेषेषु उक्तन्यायं प्रदक्षिणाक्रमेण दर्शयन्नाह–

'एव नीलवन्त' इत्यादि, व्यक्तं, नवरं एवमिति–पद्मोत्तरन्यायेन नीलवन्नाम्ना दिगहस्तिकूटः २ मन्दरस्य दक्षिणपूर्वस्यां पौरस्त्यायाः शीतायाः दक्षिणस्यां, ततोऽयं प्राच्यजिनभवनाग्नेय-

प्रासादयोर्मध्ये ज्ञेयः, एतस्यापि नीलवान् देवः प्रभुस्तस्य राजधानी दक्षिणपूर्वस्यामिति, 'एवं सुहत्थि'इत्यादि, नवरं दाक्षिणात्याया–मेरुतो दक्षिणदिग्वर्त्तिन्याः शीतोदायाः पूर्वतः, अनेन मेरुतः पश्चिमदिग्वर्त्तिन्याः शीतोदायाः व्यवच्छेदः कृतः, अत्रान्तरे सुहत्थिदिग्हस्तिकूटः ३, आग्नेयप्रासाददाक्षिणात्यजिनभवनमध्यवर्त्तीत्यर्थः, एतस्यापि सुहस्ती देवः राजधानी तस्य दक्षिणपूर्वस्यां, नीलवत्सुहस्तिनोरेकस्यामेव दिशि राजधानीद्वयं, एवं सर्वविदिग्वर्त्तिनो दिग्हस्ति-कूटाधिपयोरेकस्यां विदिशि राजधानीद्वयं २ अग्रेऽपि भाव्यं।

'एवं चेव'इत्यादि, व्यक्तं, नवरं दाक्षिणात्यजिनगृहनैऋतप्रासादयोर्मध्ये इत्यर्थः ४, 'एव'मित्यादि, व्यक्तं, नवरं पाश्चात्यायाः–पश्चिमाभिमुखं वहन्त्याः शीतोदाया दक्षिणस्यामिति, नैऋतप्रासादपाश्चात्यजिनभवनयोर्मध्यवर्त्तीत्यर्थः, 'एव'मिति, व्यक्तं, पाश्चात्यजिनभवनवायव्यप्रासादयोरन्तरे इत्यर्थः, 'एवं वडेसे विदिसाहत्थिकूडे'इत्यादि, गतार्थं, नवरं औत्तराह्याः–मेरुतः उत्तरदिग्वर्त्तिन्याः शीतायाः पश्चिमतः, अनेन पूर्वदिग्वर्त्तिन्याः शीतायाः व्यवच्छेदः कृतः, वायव्यप्रासादौत्तराहभवनयोर्मध्यवर्त्तीत्यर्थः 'एवं रोअणागिरी दिसाहत्थिकूडे'इत्यादि व्यक्तं, नवरं औत्तराह्याः–शीतायाः पूर्वतः औत्तराह्यजिनभवनैशानप्रासादयोरन्तराले इत्यर्थः, एषु च बहुभि पूर्वाचार्यैः शाश्वतजिनभवनसूत्रेषु जिनभवनान्युच्यन्ते इह तु सूत्रकृता नोक्तानि तेन तत्वं केवलिनो विदन्ति, अत एवोक्तं रत्नशेखरसूरिभि स्वोपज्ञक्षेत्रविचारे–

॥१॥ "करिकूडकुंडनइदहकुरुकंचणजमलसमविअड्ढेसुं।
जिनभवणविसंवाओ जो तं जाणंति गीअत्था ॥" इति।

अथैषां वापीचतुष्कप्रासादानां जिनभवनानां करिकूटानां च स्थाननियमनेऽयं वृद्धानां सम्प्रदायः, तथाहि–भद्रशालवने हि मेरोश्चतसृऽपि दिशो नदीद्वयप्रवाहैः रुद्धाः, अतो दिक्ष्वेव भवनानि न भवन्ति, किन्तु नदीतटनिकटस्थानि भवनानि गजदन्तनिकटस्थाः प्रासादा भवनप्रासादान्तरालेष्वष्टसु करिकूटाः, अत एव विशेषतो दर्श्यते–मेरोरुत्तरपूर्वस्यामुत्तरकुरूणां बहिः शीताया उत्तरदिग्भागे पञ्चाशद्योजनेभ्यः परः प्रासादः तत्परिक्षेपिण्यश्चतस्रो वाप्यः, एवं शेषेष्वपि प्रासादेषु ज्ञेयं, मेरोः पूर्वस्यां शीतायाः दक्षिणतः ५० योजनेभ्यः परं सिद्धायतनं, मेरोर्दक्षिणपूर्वस्यां ५० योजनातिक्रमे देवकुरूणां बहि शीताया दक्षिणत एव प्रासादः मेरोर्दक्षिणतः ५० योजनातिक्रमे देवकुरूणां मध्ये शीतोदायाः पूर्वतः सिद्धायतनं, मेरोरपरदक्षिणतः ५० योजनान्यवगाह्य देवकुरूणां बहि शीतोदाया दक्षिणतः प्रासादः मेरोः पश्चिमायां ५० योजनातिक्रमे शीतोदाया उत्तरतः सिद्धायतनं मेरोरपरोत्तरस्यां ५० योजनान्यवगाह्योत्तरकुरूणां बहिः शीतोदाया उत्तरत एव प्रासादः, मेरोरुत्तरतः पञ्चाशद्योजनेभ्यः उत्तरकुरूणां मध्ये शीतायाः पश्चिमतः सिद्धायतनमिति, एतेषां चाष्टस्वन्तरेष्वष्टौ कूटा इति–

**मू. (१९७)** *कहि णं भंते ! मंदरे पव्वए नंदनवने नामं वने पन्नत्ते ?, गो० ! भद्दसालवन्नस्स बहुसमरमणिज्जाओ भूमिभागाओ पञ्चजोअणसयाइं उद्धं उप्पइत्ता एत्थ णं मंदरे पव्वए नंदनवने नामं वने पन्नत्ते पञ्चजोअमसयाइं चक्कवालविक्खम्भेणं वट्टे वलयाकारसंठाणसंठिए जे णं मंदरं पव्वयं सव्वओ समंता संपरिक्खित्ताणं चिट्ठइत्ति नवजोअणसहस्साइं नव य चउप्पन्ने जोअणसए छच्चेगारसभा जोअणस्स बाहिं गिरिविक्खम्भो एगतीसं जोअणसहस्साइं चत्तारि अ*

*अउणासीए जोअणसए किंचिविसेसाहिए बाहिं गिरिपरिरएणं अट्ठ जोअणसहस्साइं नव य चउप्पन्ने जोअणसए छच्चेगारसभाए जोअणस्स अंतो गिरिविक्खम्भो अट्ठावीसं जोअणसहस्साइं तिन्नि य सोलसुत्तरे जोअणसए अट्ठ य इक्कारसभाए जोअणस्स अंतो गिरिपरिरएणं।*

*से णं एगाए पउमवरवेइआए एगेण य वणसंडेणं सव्वओ समन्ता संपरिक्खित्ते वण्णओ जाव देवा आसयंति, मंदरस्स णं पव्वयस्स पुरत्थिमेणं एत्थ णं महं एगे सिद्धाययने प० एवं चउद्दिसिं चत्तारि सिद्धाययना विदिसासु पुक्खरिणीओ तं चेव पमाणं सिद्धाययनाणं पुक्खरिणीणं च पासायवडिंसगा तह चेव सक्केसाणाणं तेणं चेव पमाणेणं, नंदनवने णं भंते! कइ कूडा पं० ?, गोअमा! नव कूडा पन्नत्ता, तंजहा–नंदनवनकूडे १ मंदरकूडे २ निसहकूडे ३ हिमवयकूडे ४ रययकूडे ५ रुअगकूडे ६ सागरचित्तकूडे ७ वइरकूडे ८ बलकूडे ९।*

*कहि णं भंते! नंदनवने नंदनवनकूडे नामं कूडे पं० ?, गोअमा! मंदरस्स पव्वयस्स पुरत्थिमिल्लसिद्धाययनस्स उत्तरेणं उत्तरपुरत्थिमिल्लस्स पासायवडेंसयस्स दक्खिणेणं, एत्थ णं नंदनवने नंदनवने नामं कूडे पन्नत्ते पञ्चसइआ कूडा पुव्ववण्णिआ भाणिअव्वा, देवी मेहंकरा रायहाणी विदिसाएत्ति १, एआहिं चेव पुव्वाभिलावेणं नेअव्वा इमे कूडा इमाहिं दिसाहिं पुरत्थिमिल्लस्स भवणस्स दाहिणेणं दाहिणपुरत्थिमिल्लस्स पासायवडेंसगस्स उत्तरेणं मंदरे कूडे मेहवई रायहाणी पुव्वेणं २ दक्खिणिल्लस्स भवणस्स पुरत्थिमेणं दाहिणपुरत्थिमिल्लस्स पासायवडेंसगस्स पच्चत्थिमेणं निसहे कूडे सुमेहा देवी रायहाणी दक्खिणेणं ३ दक्खिणिल्लस्स भवणस्स पच्चत्थिमेणं दक्खिण- पच्चत्थिमिल्लस्स पासायवडेंसगस्स पुरत्थिमेणं हेमवए कूडे हेमामालिनी देवी रायहाणी दक्खिणेणं ४ पच्चत्थिमिल्लस्स भवणस्स दक्खिणेणं दाहिणपच्चत्थिमिल्लस्स पासायवडेंसगस्स उत्तरेणं रयए कूडे सुवच्छा देवी रायहाणी पच्चत्थिमेणं ५ पच्चत्थिमिल्लस्स भवणस्स उत्तरेणं उत्तरपच्चत्थिमिल्लस्स पासायवडेंसगस्स दक्खिणेणं रुअगे कूडे वच्छमित्ता देवी रायहाणी पच्चत्थिमेणं ६ उत्तरिल्लस्स भवणस्स पच्चत्थिमेणं उत्तरपच्चत्थिमिल्लस्स पासायवडेंसगस्स पुरत्थिमेणं सागरचित्ते कूडे वइरसेणा देवी रायहाणी उत्तरेणं ७ उत्तरिल्लस्स भवणस्स पुरत्थिमेणं उत्तरपुरत्थिमिल्लस्स पासाय- वडेंसगस्स पच्चत्थिमेणं वइरकूडे बलाहया देवी रायहाणी उत्तरेणंति ८।*

*कहि णं भंते! नंदनवने बलकूडे नामं कूडे पन्नत्ते ?, गोअमा! मंदरस्स पव्वयस्स उत्तरपुरत्थिमेणं एत्थ णं नन्दनवने बलकूडे नामं कूडे प०, एवं जं चेव हरिस्सहकूडस्स पमाणं रायहाणी अ तं चेव बलकूडस्सवि, नवरं बलो देवो रायहाणी उत्तरपुरत्थिमेणंति।*

**वृ.** अथ द्वितीयवनं पृच्छन्नाह–'कहि ण'मित्यादि, प्रश्नः प्रतीतः, उत्तरसूत्र गौतम! भद्रशालवनस्य बहुसमरमणीयद्भूमिभागात् पञ्चयोजनशतान्यूर्द्धमुत्पत्य–गत्वाऽत्रतो वर्द्धिष्णा- विति गम्यं मन्दरे पर्वते एतस्मिन् प्रदेशे नन्दनवनं नाम वनं प्रज्ञप्तं, पञ्चयोजनशतानि 'चक्रवाल- विष्कम्भेण' चक्रवालं–विशेषस्य सामान्येऽनुप्रवेशात् समचक्रवालं तस्य यो विष्कम्भः– स्वपरिक्षेपस्य सर्वतः समप्रमाणतया विष्कम्भस्तेन, अनेन विषमचक्रवालादिविष्कम्भनिरासः, अत एव वृत्तं, तच्च मोदकादिवत् घनमपि स्यादत आह–वलयाकारं–मध्येशुषिरं यत् संस्थानं तेन संस्थितं, इदमेव द्योयति--यन्मन्दरं पर्वतं सर्वतः समन्तात् संपरिक्षिप्य–वेष्टयित्वा तिष्ठति।

अथ मेरोर्बहिर्विष्कम्भादिमानमाह– 'णवजोअण'इत्यादि, मेखलाविभागे हि गिरीणां

बाह्याभ्यन्तररूपं विष्कम्भद्वयं भवति, तत्र मेरौ बाह्यविष्कम्भोऽयं–नवयोजनसहस्राणि नव शतानि चतुष्पञ्चाशदधिकानि षट् चैकादशभागा योजनस्य, तथाहि–मेरोरुर्ध्वमेकस्मिन् योजने गते विष्कम्भसम्बन्धी एक एकादशभागो योजनस्य गतो लभ्यते इति प्रागुक्तं ततोऽत्र त्रैराशिकं– यद्येकयोजनारोहे मेरोरुपरि व्यासस्यापचयः सर्वत्रैकादशो भागो योजनस्यैको लभ्यते ततः पञ्चशतयोजनारोहे कोऽपचयो लभ्यते ?, लब्धानि ४५ योजनानि ५/११ एतत् समभूतलगतव्यासात् दशयोजनसहस्ररूपात् त्यज्यते आतं यथोक्तं मान, एतच्च नन्दनवनस्य दहि पूर्वापरयोरुत्तर- दक्षिणयोर्वा अन्तयोः सम्भवति, अतो नन्दनवनाद्बहिर्वर्तित्वेन बाह्यो गिरिविष्कम्भः, तथा एकत्रिंशदयोजनसहस्राणि चत्वारि शतानि एकोनाशीत्यधिकानि किञ्चिद्विशेषाधिकानि इत्ययं बाह्यो गिरिपरिरयो मेरुपरिधिरित्यर्थः, णमिति वाक्यालङ्कारे अन्तर्गिरिविष्कम्भो नन्दनवनादर्वाक् यो गिरिविस्तारः सोऽष्टयोजनसहस्राणि नव च योजनशतानि चतुष्पञ्चाशदधिकानि षट् च एकाद- शभागा योजनस्येत्येतावत्प्रमाणः, अयं च बाह्यगिरिविष्कम्भे सहस्रोने यथोक्तः स्यात्, तथा अष्टाविंशतियोजनसहस्राणि त्रीणि च योजनशतानि षोडशाधिकानि अष्ट चैकादशभागा योजन- स्यैतावत्प्रमाणोऽन्तर्गिरिपरिरय इति, णमिति प्राग्वत् ।

अथात्र पद्मवरवेदिकाद्याह– 'से णं एगाए पउम'इत्यादि, व्यक्तं, अथात्र सिद्धायतनादिव- क्तव्यमारभ्यते–मन्दरस्य पूर्वस्यां अत्र –नन्दने पञ्चाशदयोजनातिक्रमे महदेकं सिद्धायतनं प्रज्ञप्तम्, एवमिति–भद्रशालवनानुसारेण चतसृषु दिक्षु चत्वारि सिद्धायतनानि विदिक्षु पुष्करिण्यः, तदेव प्रमाणं सिद्धायतनानां पुष्करिणीनां च यद्भद्रशाले उक्तं प्रासादव- तंसकास्तथैव शक्रेशानयोर्वाच्याः यथा भद्रशाले दक्षिणदिकसम्बद्धविदिग्वर्तिनः प्रासादाः शक्रस्य तथोत्तरदिकसम्बद्धविदिग्वर्तिनस्तु ईशानेन्द्रस्य तेनैव प्रमाणेन–पञ्चयोजनशतोच्चत्वादिनेति, अत्र च पुष्करिणीनां नामानि सूत्रकारालिखितत्वाल्लिपिप्रमादाद्वा आदर्शेषु न दृश्यन्ते इति तत्रैशान्या- दिप्रासादक्रमादिमानि नामानि द्रष्टव्यानि पूज्यप्रणीतक्षेत्रविचारतः–नन्दोत्तरा १ नन्दा २ सुनन्दा ३ नन्दिवर्द्धना ४ तथा नन्दिषेणा १ अमोघा २ गोस्तूपा ३ सुदर्शना ४ तथा भद्रा १ विशाला २ कुमुदा ३ पुण्डरीकिणी ४ तथा विजया १ वैजयन्ती २ अपराजिता ३ जयन्ती ४ इति, कूटान्यपि मेरुतस्तावत्येवान्तरे सिद्धायतनप्रासादावतंसकमध्यवर्तीनि ज्ञातव्यानि, तत्र यो विशेषस्तमाह–

'नंदनवने ण'मित्यादि, व्यक्तं, भद्रशालेऽष्टौ कूटानि इह तु नव ततः सङ्ख्यया नामभिश्च विशेषः, तेष्वाद्यं स्थानतः पृच्छति–'कहि ण'मित्यादि, क्व भदन्त ! नन्दनवने नन्दनवनकूटं नाम कूटं प्रज्ञप्तम् ?, गौतम ! मन्दरस्य पर्वतस्य सम्बन्धिनः पौरस्त्यसिद्धायतनस्योत्तरतः उत्तरपौरस्त्ये–ईशानदिग्वर्तिनः प्रासादावतंसकस्य दक्षिणेन एतस्मिन् प्रदेशे नन्दनवनकूटं नाम कूटं प्रज्ञप्तं, अत्रापि मेरुतः पञ्चाशदयोजनातिक्रम एव क्षेत्रनियमो बोध्यः, अन्यथाऽस्य प्रासादभवनयोरन्त- रालवर्तित्वं न स्यात्, अथ लाघवार्थमुक्तस्य वक्ष्यमाणानां च कूटानां साधारणमतिदिशति– पञ्चशतिकानि कूटानि पूर्वं विदिगहस्तिकूटप्रकरणे वर्णितानि उच्चत्वव्यासपरिधिवर्णसंस्थान- राजधानीदिगादिभि तान्यत्र भणितव्यानीति शेषः, सदृशगमत्वात्, अत्र देवी मेघङ्करा नाम्नी अस्य राजधानी विदिशि अस्य पश्चोत्तरकूटस्थानीयत्वेन राजधानीविदिगुत्तरपूर्वा ग्राह्या, अथ शेषकूटानां तद्देवीनां तद्राजधानीनां च का व्यवस्था इत्याह–

'एआर्हिं'इत्यादि, एताभिर्देवीभिश्चशब्दाद् राजधानीभिरनन्तरसूत्रे वक्ष्यमाणाभिः सह पूर्वाभिलापेन नन्दनवनकूटसत्कसूत्रगमनेन नेतव्यानि इमानि वक्ष्यमाणानि कूटानि इमाभिर्वक्ष्यमाणाभिर्दिग्भिः, एतदेव दर्शयति–'पुरत्थिमिल्लस्स'इत्यादि, इदं च सर्वं भद्रशालवनगमसदृशं तेन तदनुसारेण व्याख्येयं, विशेषश्चात्रायं–पञ्चशतिके नन्दनवने मेरुतः पञ्चाशदयोजनान्तरे स्थितानि पञ्चशतिकानि कूटानि किञ्चिन्मेखलातो बहिराकाशे स्थितानि बोध्यानि बलकूटवत्, एतत्कूटवासिन्यश्च देव्योऽष्टौ दिक्कुमार्य, अत्र नवमं कूटं सहस्राङ्कमिति पृथक् पृच्छति–

'कहि ण'मित्यादि, क्व भदन्त ! नन्दनवने बलकूटं नाम कूटं प्रज्ञप्तम् ?, गौतम ! मेरोरीशानविदिशि नन्दनवनं अत्रान्तरे बलकूटं नाम कूटं प्रज्ञप्तं, अयमर्थः–मेरुतः पञ्चाशदयोजनातिक्रमे ईशानकूणे एशानप्रासादस्ततोऽपीशानकोणे बलकूटं, महत्तमवस्तुनो विदिशोऽपि महत्तमत्वात्, एवमनेनाभिलापेन यदेव हरिस्सहकूटस्य–माल्यवद्वक्षस्कारगिरेर्नवमकूटस्य प्रमाणं सहस्रयोजनरूपं, यथा चाल्पेऽपि स्वाधारक्षेत्रे महतोऽप्यस्यावकाशः या च राजधानी चतुरशीतियोजनसहस्रप्रमाण तदेव सर्वं बलकूटस्यापि नवरमत्र बलो देवस्तत्र तु हरिस्सहनामा। अथ तृतीयवनोपक्रमः–

*मू. (१९८) कहि णं भंते ! मंदरए पव्वए सोमनसवणे नामं वने प० ?, गोअमा ! नंदनवनस्स बहुसमरमणिज्जाओ भूमिभागाओ अद्धतेवट्ठिं जोअणसहस्साइं उद्धं उप्पइत्ता एत्थ णं मंदरे पव्वए सोमनसवने नामं वने पन्नत्ते पञ्चजोणसयाइं चक्कवालविक्खम्भेणं वट्टे वलयाकारसंठाणसंठिए जे णं मंदरं पव्वयं सव्वओ समंता संपरिक्खित्ताणं चिट्ठइ।*

*– चत्तारि जोअणसहस्साइं दुन्नि य अनुत्तरे जोअणसए अट्ठ य इक्कारसभाए जोअणस्स बाहिं गिरिविक्खम्भेणं तेरस जोअणसहस्साइं पञ्च य एक्कारे जोअणसए छच्च इक्कारसभाए जोअणस्स बाहिं गिरिपरिरएणं तिण्णि जोअणसहस्साइं दुन्नि अ बावत्तेर जोअणसए अट्ठ य इक्कारसभाए जोयणस्स अतो गिरिविक्खम्भेणं दस जोअणसहस्साइं तिन्नि अउणापन्ने जोअणसए तिन्नि अ इक्कारसभाए जोअणस्स अंतो गिरिपरिरएणंति। से णं एगाए पउमवरवेइआए एगेण य वनसंडेणं सव्वओ समंता संपरिक्खित्ते वण्णओ किण्हे जाव आसयन्ति एवं कूडवज्जा सच्चेव नंदनवनवत्तव्वया भा०, तं चेव ओगाहिऊण जाव पासायवडेंसगा सक्कीसाणाणंति।*

वृ. 'कहि ण'मित्यादि, क्व भदन्त ! मेरौ सौमनसवनं नाम वनं प्रज्ञप्तम् ?, गौतम ! नन्दनवनस्य बहुसमरमणीयाद् भूमिभागादर्द्धत्रिषष्टिं सार्द्धद्वाषष्टिरित्यर्थः योजनसहस्राण्यूर्ध्वमुत्पत्यात्रान्तरे मन्दरपर्वते सौमनसवनं नाम वनं प्रज्ञप्तं, पञ्चयोजनशतानि चक्रवालविष्कम्भेनेत्यादिपदानि प्राग्वत्, यन्मन्दरं पर्वतं सर्वतः समन्तात् सम्परिक्षिप्य तिष्ठति, एतच्च कियता विष्कम्भेन कियता च परिक्षेपेणेत्याह– 'चत्तारी'त्यादि, प्रथममेखलायामिव द्वितीयमेखलायामपि विष्कम्भद्वयं वाच्यं, तत्र बहिर्गिरिविष्कम्भेन चत्वारि योजनसहस्राणि द्वे च योजनशते द्विसप्तत्यधिके अष्टौ चैकादशभागा योजनस्य, एतदुपपत्तिरेवं–धरणीतलात् सौमनसं यावद् गमने मेरूच्छ्रयस्य ६३ सहस्रयोज- नान्यतिक्रान्तानि एषां चैकादशभिर्भागे लब्धं ५७२७ $^{3}/_{11}$ अस्मिंश्च राशौ धरणीतलगतमेरुव्या- सादशसहस्रयोजनप्रमाणाच्छोधिते जातं यथोक्तं मानमिति, बहिर्गिरिपरिरयेण त्रयोदश योजन - सहस्राणि पञ्चयोजनशतानि एकादशानि–एकादशाधिकानि षट् च एकादशभागा योजनस्य, तथाऽन्तर्गिरिविष्कम्भेन त्रीणि योजनसहस्राणि द्वे द्वासप्तत्यधिके योजनशते अष्टौ

चैकादशभागा योजनस्य, उपपत्तिस्तु बहिर्गिरिविष्कम्भात् उभयतो मेखलाद्वयव्यासे पञ्चशत२योजनरूपेऽपनीते यथोक्तमानं, अन्तर्गिरिपरिरयेण तु दश सहस्रयोजनानि त्रीणि च योजनशतानि एकनोपञ्चाशदधिकानि त्रयश्चैकादशभागा योजनस्येति ।

अथास्य वर्णकसूत्रं–'से णं एगा' इत्यादि, व्यक्तं, नवरं एवमुक्ताभिलापेन कूटवर्ज्जा सैव नन्दनवनवक्तव्यता भणितव्या, कियत्पर्यन्तमित्याह–तदेव मेरुतः पञ्चाशद्योजनरूपं क्षेत्रमवगाह्य यावत्प्रासादावतंसकाः शक्रेशानयोरिति, वापीनामानि त्विमानि तेनैव क्रमेण, सुमनाः १ सौमनसा २ सौमनांसा सौमनस्या वा ३ मनोरमा ४ तथा उत्तरकुरु १ देवकुरु २ वारिषेणा ३ सरस्वती ४ तथा विशाला १ माघभद्रा २ अभयसेना ३ रोहिणी ४ तथा भद्रोत्तरा १ भद्रा २ सुभद्रा ३ भद्रावती भद्रवती वा ४ । अथ चतुर्थं वनं–

*मू. (१९९) कहि णं भंते ! मन्दरपव्वए पंडगवने नामं वने प० ! सोमनसवनस्स बहुसमरमणिज्जाओ भूमिभागाओ छत्तीसं जोअणसहस्साइं उद्धं उप्पइत्ता एत्थ णं मंदरे पव्वए सिहरतले पंडगवने नामं वणे पन्नत्ते, चत्तारि चउनउए जोयणसए चक्कवालविक्खम्भेणं वट्टे वलयाकारसंठाणसंठिए । जे णं मंदरचूलिअं सव्वओ समंता संपरिक्खित्ताणं चिट्ठइ तिन्नि जोअणसहस्साइं एगं च बावट्ठं जोअणसयं किंचिविसेसाहिअं परिक्खेवेणं, से णं एगाए पउमवरवेइआए एगेण य वनसंडेणं जाव किण्हे देवा आसयंति ।*

*पंडगवनस्स बहुमज्झदेसभाए एत्थ णं मंदरचूलिआ नामं चूलिआ पन्नत्ता चत्तालीसं जोअणाइं उद्धं उच्चत्तेणं मूले बारस जोअणाइं विक्खम्भेणं मज्झे अट्ठ जोअणाइं विक्खम्भेणं उप्पिं चत्तारि जोअणाइं विक्खम्भेणं मूले साइरेगाइं सत्ततीसं जोअणाइं परिक्खेवेणं मज्झे साइरेगाइं पणवीसं जोअणाइं परिक्खेवेणं उप्पिं साइरेगाइं बारस जोअणाइं परिक्खेवेणं मूले विच्छिन्ना मज्झे संखित्ता उप्पिं तणुआ गोपुच्छसंठाणसंठिआ सव्ववेरुलिआमई अच्छा सा णं एगाए पउमवरवेइआए जाव संपरिक्खित्ता इति उप्पिं बहुसमरमणिज्जे भूमिभागे जाव सिद्धाययनं बहुमज्झदेसभाए कोसं आयामेणं अद्धकोसं विक्खम्भेणं देसूणगं कोसं उद्धं उच्चत्तेणं अनेगखंभसय जाव धूवकडुच्छुगा । मंदरचूलिआए णं पुरत्थिमेणं पंडगवनं पन्नासं जोअणाइं ओगाहित्ता एत्थ णं महं एगे भवणे प० एवं जच्चेव सोमनसे पुव्ववण्णिओ गमो भवणाणं पुक्खरिणीणं पासायवडेंसगाण य सो चेव नेअव्वो जाव सक्कीसाणवडेंसगा तेणं चेव परिमाणेणं ।*

**वृ.** 'कहि णं' मित्यादि, प्रश्नः प्रतीतः, उत्तरसूत्रे सौमनसवनस्य बहुसमरमणीयाद् भूमिभागादूर्ध्वं षट्त्रिंशद्योजनसहस्राणि उत्पत्य तत्र देशे मन्दरे पर्वते शिखरतले–मौलिभागे पण्डकवनं नाम वनं प्रज्ञप्तं, चत्वारि योजनशतानि चतुर्नवत्यधिकानि चक्रवालविष्कम्भेन, एतदुपपत्तिस्तु सहस्रयोजनप्रमाणाच्छिखरव्यासान्मध्यस्थितचूलिकामूलव्यासे द्वादशयोजनप्रमाणे सोधितेऽवशिष्टेऽर्धीकृते यथोक्तमानं, यत्पण्डकवनं मन्दरचूलिकां सर्वतः समन्तात् सम्परिक्षिप्य तिष्ठति, यथा नन्दनवनं मेरु सर्वतः समन्तात् सम्परिक्षिप्य स्थितं तथेदं मेरुचूलिकामिति, त्रीणि योजनसहस्राणि एकं च द्वाषष्टिं–द्वाषष्ट्यधिकं योजनशतं किञ्चिद्विशेषाधिकं परिक्षेपेणेति, अथास्य वर्णकमाह– 'से णं' इत्यादि, व्यक्तं, या च पण्डकवनमभिवाप्य स्थिता सा क चूलिकेत्याह–'पंडगवने' त्ति पण्डकवनस्य प्रज्ञप्ता, चत्वारिंशतं योजनान्यूर्ध्वोच्चत्वेन मूले द्वादश

योजनानीत्यादिसूत्रं प्राग्वत्, केवलं सर्वात्मना वैडूर्यमयी नीलवर्णत्वात्।

साम्प्रतं सूत्रेऽनुक्तोऽपि वाचयितॄनामपूर्वार्थजिज्ञापयिषया चूलिकाया इष्टस्थाने विष्कम्भपरिज्ञानाय प्रसङ्गगत्योपायो लिख्यते, यथा तत्राधोमुखगमने करणमिदं—चूलिकायाः सर्वोपरितनभागादवपत्य यत्र योनादावतिक्रान्ते विष्कम्भजिज्ञासः तस्मिन्नतिक्रान्तयोजनादिके पञ्चभिर्भक्ते लब्धराशिश्चतुर्भिर्युतस्तत्र व्यासः स्यात्, तत् उपरितलाद्विंशतियोजनान्यवतीर्णस्ततो विंशतिर्ध्रियते तस्याः पञ्चभिर्भागे लब्धाश्चत्वारः ते चतुर्भि सहिताः अष्टौ एतावानुपरितलाद्विंशतियोजनातिक्रमे विष्कम्भः, एवमन्यत्रापि भावनीयं, यदा तूर्ध्वमुखगत्या विष्कम्भजिज्ञासा तदाऽयमुपायः— चूलिकाया मूलादुत्पत्य यत्र योजनादौ विष्कम्भिज्ञासा तस्मिन्नतिक्रान्तयोजनादिके पंचभिर्भक्ते यल्लब्धं तावत्प्रमाणे मूलविष्कम्भादपनीते अवशिष्टं तत्र विष्कम्भः तथाहि—मूलात्किल विंशतिर्योजनान्यूर्ध्वं गतस्ततो विंशतिर्ध्रियते तस्याः पंचभिर्भागे लब्धानि चत्वारि योजनानि तानि मूलविष्कम्भाद् द्वादशयोजनप्रमाणादपनीयते शेषाण्यष्टौ एतावान् मूलादूर्ध्वं विंशतियोजनातिक्रमे विष्कम्भः, एवमन्यत्रापि भावनीयं, यथा मेरौ एकादशभिरंशैरेकोऽशः एकादशभिर्योजनैरेकं योजनं व्यासस्य चीयते अपचीयते तथाऽस्यां पञ्चभिरंशैरेकोऽशः पञ्चभिर्योजनैरेकं योजनं व्यासस्येति तात्पर्यार्थः। अत्र बीजं—द्वादशयोजनप्रमाणान्मूलाव्यासादारोहे चत्वारिंशद्योजनेषु गतेषु अष्टौ योजनानि त्रुट्यन्ति अवरोहे च तान्येव वर्द्धन्ते मध्यराशावन्त्यराशिना गुणिते एकेन गुणितं तदेव भवतीति जाता अष्टौ अस्य राशेश्चत्वारिंशता भजने भागाप्राप्तौ द्वयो राश्योरष्टभिरपवर्ते जातं $^1/_5$। अथास्य वर्णकसूत्रम्—

'सा णं एगाए पउमवर जाव' इत्यादि, प्राग्वत्, अथास्यां बहुसमरमणीयभूमिभागवर्णनं सिद्धायतनवर्णनं चातिदेशेनाह-- 'उप्पिं बहुसम' इत्यादि, अस्याश्चूलिकाया उपरि बहुसमरमणीयो भूमिभागः प्रज्ञप्तः, स च यावत्पदकरणात् 'से जहा नामए आलिंगपुक्खरे इ वा' इत्यादिको ग्राह्यः, तथा तस्य बहुमध्यदेशभागे सिद्धायतनं वाच्यं, क्रोशमायामेनार्द्धक्रोशं विष्कम्भेन देशोनं क्रोशमुच्चत्वेन अनेकस्तम्भशतसन्निविष्टमित्यादिकः सिद्धायतनवर्णको वाच्यो यावद्धूपकडुच्छुकानामष्टोत्तरं शतमिति, अथ प्रस्तुतवने भवनप्रासादादिवक्तव्यगोचरं सूत्रं— मन्दरचूलिकायाः पूर्वतः पण्डकवनं पञ्चाशद्योजनान्यवगाह्य अत्रान्तरे महदेकं भवनं—सिद्धायतनं प्रज्ञप्तं, एवमुक्ताभिलापेन य एव सौमनसवने पूर्ववर्णितो—नन्दनवनप्रस्तावोक्तो गमः कूटवर्ज सिद्धायतनादिव्यवस्थाधायकः सद्धशालापकः पाठः स एवात्रापि भवनानां पुष्करिणीनां प्रासादावतंसकानां च ज्ञातव्यः, यावच्छक्रेशानप्रासादावतंसकास्तेनैव प्रमाणेनेति, अत्र वापीनामानि प्रागुक्तयुक्त्या सूत्रेऽदृष्टान्यपि ग्रन्थान्तरतो लिख्यन्ते, तद्यथा—ऐशानप्रसादे पूर्वादिक्रमेण पुण्ड्रा १ पुण्ड्रप्रभा २ सुरक्ता ३ रक्तावती ४ आग्नेयप्रासादे क्षीररसा १ इक्षुरसा २ अमृतरसा ३ वारुणी ४ नैऋतप्रासादे शंखोत्तरा १ शङ्खा २ शङ्खावर्त्ता ३ बलाहका ४ वायव्यप्रासादे पुष्पोत्तरा १ पुष्पवती २ सुपुष्पा ३ पुष्पमालिनी ४ चेति। अथात्राभिषेकशिलावक्तव्यतामाह—

**मू. (२००)** *पंडकवने णं भंते! वने कइ अभिसेअसिलाओ प० गो० चत्तारि अभिसेअसिलाओ प०, तं०-पंडुसिला १ पंडुकंबलसिला २ रत्तसिला ३ रत्तकंबलसिलेति ४।*

*कहि णं भंते ! पंडगवने पंडुसिलानामं सिला प. गो० मंदरचूलिआए पुरत्थिमेणं पंडगवनपुरत्थिमपेरंते, एत्थ णं पंडगवने पंडुसिला नामं सिला प० उत्तरदाहिणायया पाईण-पडीणविच्छिण्णा अद्धचंदसंठाणसंठिआ पंचजोअणसयाइं आयामेणं अड्ढाइज्जाइं जोअणसयाइं विक्खंभेणं चत्तारि जोअणाइं बाहल्लेणं तव्वकणगामई अच्छा वेइआवनसंडेणं सव्वओ समंता संपरिक्खित्ता वण्णओ, तीसे णं पंडुसिलाए चउद्दिसिं चत्तारि तोसावणपडिरूवगा प० जाव तोरणा वण्णओ, तीसे णं पंडुसिलाए उप्पिं बहुसमरमणिज्जे भूमिभागे प० जाव देवा आसयंति, तस्स णं बहुमज्झदेसभाए उत्तरदाहिणेणं एत्थ णं दुवे सीहासणा प० पञ्च धनुसयाइं आयामविक्खम्भेणं अड्ढाइज्जाइं धनुसयाइं बाहल्लेणं सीहासनवण्णओ भा० विजयदूसवज्जोत्ति ।*

*तत्थ णं जे से उत्तरिल्ले सीहासणे तत्थ णं बहूहिं भवणवइवाणमंतरजोइसिअवेमाणिएहिं देवेहिं देवीहि अ कच्छाइआ तित्थयरा अभिसिंचति, तत्थ णं जे से दाहिणिल्ले सीहासणे तत्थ णं बहूहिं भवण जाव वेमाणिएहिं देवेहिं देवीहि अ वच्छाईआ तित्थयरा अभिसिंचंति ।*

कहि णं भंते ! पंडगवने पंडुकंबलासिलानामं सिला प० गो० मंदरचूलिआए दक्खिणेणं पंडगवनदाहिणपेरंते, एत्थ णं पंडगवने पंडुकंबलसिलानामं सिला प०, पाईणपडीणायया उत्तरदाहिणविच्छिण्णा एवं तं चेव पमाणं वत्तव्वया य भाणिअव्वा जाव तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महं एगे सीहासणे प० तं चेव सीहासणप्पमाणं एत्थ णं बहूहिं भवणवइ जाव भारहगा तित्थयरा अहिसिच्चन्ति । कहि णं भंते ! पंडगवने रत्तसिला नामं सिला प० ?, गो० ! मंदरचूलिआए पच्चत्थिमेणं पंडगवणपच्चत्थिमपेरंते, एत्थ णं पंडगवणे रत्तसिला नामं सिला पन्नत्ता उत्तरदाहिणायया पाईणपडीणविच्छिण्णा जाव तं चेव पमाणं सव्वतवणिज्जमई अच्छआ उत्तरदाहिणेणं एत्थ णं दुवे सीहासणा पन्नत्ता ।

*तत्थ णं जे से दाहिणिल्ले सीहासणे तत्थ णं बहूहिं भवण० पम्हाइआ तित्थयरा अहिसिंचंति, तत्थ णं जे से उत्तरिल्ले सीहासणे तत्थ णं बहूहिं भवण जाव वप्पाइआ तित्थयरा अहिसिच्चंति ।*

*कहि णं भंते ! पंडगवने रत्तकंबलसिला नामं सिला प० गो० मंदरचूलिआए उत्तरेणं पंडयगवनउत्तरचरिमंते एत्थ णं पंडगवने रत्तकंबलसिला नामं सिला प०, पाईणपडिणायया उदीणदाहिणविच्छिण्णा सव्वतवणिज्जमई अच्छा जाव मज्झदेसभाए सीहासणं, तत्थ णं बहूहिं भवणवइ जाव देवेहिं देवीहि अ एरावयगा तित्थयरा अहिसिंचंति ।*

वृ. पण्डकवने भदन्त ! कति अभिषेकाय–जिनजन्मस्नात्राय शिलाः अभिषेकशिलाः प्रज्ञप्ताः गौतम ! चतस्रोऽभिषेकशिलाः प्रज्ञप्ताः, तद्यथा–पाण्डुशिला १ पाण्डुकम्बलशिला २ रक्तशिला ३ रक्तकम्बलशिला ४ अन्यत्र तु पाण्डुकम्बला १ अतिपाण्डुकम्बला २ रक्तकम्बला ३ अतिरक्तकम्बलेति ४ नामान्तराणीति । सम्प्रति प्रथमायाः स्थानं पृच्छति– 'कहि णं'मित्यादि, प्रश्नः प्रतीतः, उत्तरसूत्रे मन्दरचूलि- कायाः पूर्वतः पण्डकवनपूर्वपर्यन्ते पाण्डुशिला नाम शिला प्रज्ञप्ता, उत्तरतो दक्षिणतश्चायता पूर्वतोऽपरतश्च विस्तृता अर्द्धचन्द्रसंस्थानसंस्थिता पञ्चयोजनशतान्यायामेन–मुखविभागेन अर्द्धतृतीयानि योजनशतानि विष्कम्भेन–मध्यभागेन, अर्द्धचन्द्राकारक्षेत्रानामेवमेव परमव्या- समम्भवात्, अत एवास्याः परमव्यासः शरत्वेन लम्बो जीवात्वेन परिक्षेपो धनुःपृष्ठत्वेन तत्करणरीत्या आनेतव्या, तथा चत्वारि योजनानि

बाहल्येन—पिण्डेन सर्वात्मना कनकमयी प्रस्तावादर्जुन- सुवर्णमयी अच्छा वेदिकावनखण्डेन सर्वतः समन्तात् सम्परिक्षिप्ता, [illegible] तु स्वस्वदिकक्षेत्राभिमुखा, वर्णकश्च वेदिकावनखण्डयोर्वक्तव्यः, चतुर्योजनोच्छ्रिता च शिला दुरारोहा आरोहकाणामित्याह

'तीसे णं'मित्यादि, तस्यां शिलायां चतुर्दिशि चत्वारि त्रिसोपानप्रतिरूपकाणि प्रज्ञप्तानि, तेषां च वर्णको वाच्यो यावत्तोरणानि। अथास्या भूमिसौभाग्यभावेदयन्नाह— तस्याः—पाण्डुशिलायाः उपरि बहुसमरमणीयो भूमिभागः प्रज्ञप्तः यावद्देवा आसते शेरते इत्यादि, अथात्राभिषेकासनवर्णनायाह— तस्य बहुसमरमणीयस्य भूमिभागस् बहुमध्यदेशभागे उत्तरतो दक्षिणतश्च अत्रान्तरे द्वे अभिषेकसिंहासने—जिनजन्माभिषेकाय पीठे प्रज्ञप्ते पंचधनुःशतान्यायामविष्कम्भाभ्यां अर्द्धतृतीयानि धनुःशतानि बाहल्येन उच्चत्वेनेत्यर्थः, अत्र च सिंहासनवर्णको भणितव्यः, स च विजयदुष्यवर्ज—उपरिभागे विजयनामकचन्द्रोदयवर्णनारहित इत्यर्थः, शिलासिंहासनानामनाच्छादितदेशे स्थितत्वात्, अत्र च सिंहासनानामायामविष्कम्भयोस्तुल्यत्वेन समचतुरस्रतोक्ता, नन्वत्रैकेनैव सिंहासनेनाभिषेके सिद्धे किमर्थं सिंहासनद्वयमित्याह—

'तत्थ णं'मित्यादि, तत्र—तयोः सिंहासनयोर्मध्ये 'से' इति भाषालङ्कारे यदौत्तराहं सिंहासनं तत्र बहुभिर्भवनपतिव्यन्तरज्योतिष्कवैमानिकैर्देवैर्देवीभिश्च कच्छादिविजयाष्टकजातास्तीर्थकराः अभिषिच्यन्ते—जन्मोत्सवार्थं स्नप्यन्ते, यत्तु दाक्षिणात्यं सिंहासनं तत्र वच्छादिका इति, अत्रायमर्थः— एषाहि शिला पूर्वदिग्मुखा एतद्दिगभिमुखं च क्षेत्रं पूर्महाविदेहाख्यं तत्र च युगपज्जगद्गुरुयुगं जन्मभाग् भवति तत्र शीतोत्तरदिग्वर्तिविजयजातो जगद्गुरुरुत्तरदिग्वर्तिनि सिंहासनेऽभिषिच्यते, तस्या एव दक्षिणदिग्वर्त्तिविजयजातो जगद्गुरुर्दक्षिणदिग्वर्त्तिनीति।

इदानीं द्वितीयशिलाप्रश्नावतारः 'कहि णं'मित्यादि, प्रश्नः प्रतीतः, उत्तरसूत्रे मेरुचूलिकाया दक्षिणतः पण्डकवनदाक्षिणात्यपर्यन्ते पाण्डुकम्बला नाम्नी शिला प्रज्ञप्ता, प्राक्पश्चिमायता उत्तरदक्षिणविस्तीर्णा, आद्या तु प्राकपश्चिमविस्तीर्णा उत्तरदक्षिमातेत्येतद्विशेषणद्वयं विहायान्यत् प्रागुक्तमतिदिशति—एवमेवोक्ताभिलापेन तदेव प्रमाणं शिलायाः पञ्चयोजनशतायामादिकं वक्तव्यता चार्जुनस्वर्णवर्णादिका भणितव्या यावत्तस्य बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागेऽत्रान्तरे महदेकं सिंहासनं प्रज्ञप्तं तदेव पञ्चधनुःशतादिकं सिंहासनप्रमाणमुच्चत्वादौ ज्ञेयं, तत्र बहुभिर्भवनपत्यादिभिर्देवैर्भारतका--भरतक्षेत्रोत्पन्नास्तीर्थकृतोऽभिषिच्यन्ते, ननु पूर्वशिलायां सिंहासनद्वयं अत्र तु एकं सिंहासनं किमिति ?, एषा हि शिला दक्षिणदिगभिमुखा तद्दिगभिमुखं च क्षेत्रं भारताख्यं तत्र चैककालमेक एव तीर्थकृदुत्पद्यते इति तदभिषेकानुरोधेनैकत्वं सिंहासनस्येति

अथ तृतीयशिला—'कहि णं'मित्यादि, इदं च सूत्रं पूर्वशिलागमेन बोध्यं, केवलं वर्णतः सर्वात्मना तपनीयमती रक्तवर्णत्वात्, सिंहासनद्वित्वभावना त्वेवं—एषा पश्चिमाभिमुखा तद्दिगभिमुखं च क्षेत्रं पश्चिममहाविदेहाख्यं शीतोदादक्षिणोत्तररूपभागद्वयात्मकं, तत्र च प्रतिविभागमेकैकजिनजन्मसम्भवाद्युगपज्जिनद्वयमुत्पद्यते, तत्र दाक्षिणात्ये सिंहासने दक्षिणभागगतपक्ष्मादिविजयाष्टकजाता जिनाः स्नप्यन्ते औत्तराहे च उत्तरभागगतवप्रादिविजयाष्टकजाता।

सम्प्रति चतुर्थी शिला—'कहि णं'मित्यादि, प्रश्नः प्राग्वत्, उत्तरसूत्रे सर्वं द्वितीयशिलानुसारेण वाच्यं, वर्णतश्च सर्वतपनीयमयी, श्रीपूज्यैस्तु सर्वा अर्जुनस्वर्णवर्णा उक्ता इति, 'ऐरावतका'

इति ऐरावतक्षेत्रभवाः, सिंहासनस्यैकत्वं भरतक्षेत्रोक्तयुक्त्या वाच्यम्।

अथ मेरौ काण्डसङ्ख्यां जिज्ञासुर्गौतमः पृच्छति–

*मू. (२०१) मंदरस्स णं भंते! पव्वयस्स कइ कंडा पन्नत्ता ?, गोयमा! तओ कंडा पन्नत्ता, तंजहा–हिट्ठिल्ले कंडे मज्झिल्ले कण्डे उवरिल्ले कण्डे, मंदरस्स णं भंते! पव्वयस्स हिट्ठिल्ले कंडे कतिविहे प० गो० चउव्विहे पन्नत्ते, तंजहा–पुढवी १ उवल २ वइरे ३ सक्करा ४।*

*मज्झिमिल्ले णं भंते! कंडे कतिविहे पं० ? गोअमा! चउव्विहे पन्नत्ते, तंजहा–अंके १ फलिहे २ जायरूवे ३ रयए ४, उवरिल्ले कण्डे कतिविहे पन्नत्ते ?, गोअमा! एगागारे पन्नत्ते सव्वजम्बूणयामए, मंदरस्स णं भंते! पव्वयस्स, हेट्ठिल्ले कण्डे केवइअं बाहल्लेणं पं० ?, गोयमा! एगं जोअणसहस्सं बाहल्लेणं प०, मज्झिमिल्ले कण्डे पुच्छा, गोअमा! तेवट्ठिं जोअणसहस्साइं बाहल्लेणं पं०, उवरिल्ले पुच्छा, गोयमा! छत्तीसं जोअसहस्साइं बाहल्लेणं पं०, एवामेव सपुव्वावरेणं मंदरे पव्वए एगं जोअणसयसहस्सं सव्वग्गेणं प०।*

वृ. 'मंदरस्स ण'मित्यादि, मेरोर्भदन्त! पर्वतस्य कति काण्डानि प्रज्ञप्तानि ?, कांडं नाम विशिष्टपरिनामानुगतो विच्छेदः पर्वतक्षेत्रविभाग इतियावत्, गौतम! त्रिणी काण्डानि प्रज्ञप्तानि, –अधस्तन काण्डं मध्यमं काण्डं उपरितनं काण्डं, अथ प्रथमं काण्डं कतिप्रकारमिति पृच्छति–

'मन्दरस्स' इत्यादि, प्रश्नः प्रतीतः, निर्वचनसूत्रे पृथ्वी–मृत्तिका उपलाः–पाषाणाः वज्राणि–हीरकाः शर्कराः–कर्करिकाः एतन्मयः कन्दो मन्दरस्य एतदेव हि प्रथमं काण्डं सहस्रयोजनप्रमाणं, ननु प्रथमकाण्डस्य चतुष्प्रकारत्वात् तदीययोजनसहस्रस्य चतुर्विभजने एकैकप्रकारस्य योजन-सहस्रचतुर्थांशप्रमाणक्षेत्रता स्यात् तथा च सति विशिष्टपरिनामानुगतविच्छेदरूपत्वात् त एव काण्डसङ्ख्यां कथं न वर्द्धनावकाश इति, मध्यकाण्डगतवस्तुपृच्छार्थमाह–

'मज्झिमिल्ले' इत्यादि, अङ्करत्नानि–स्फटिकरत्नानि जातरूपं–सुवर्णं रजतं–रूप्यम्, अत्रापीयं भावना–कचिदङ्कबहुलमित्यादि, अथ तृतीयं काण्डं–'उवरिल्ले' इत्यादि, प्रश्नो व्यक्तः, उत्तरसूत्रे एकाकारं–भेदरहितं सर्वात्मना जाम्बूनदं–रक्तसुवर्णं तन्मयमिति। काण्डपरिमाणद्वारा मेरुपरिमाणमाह–'मन्दरस्स ण'मित्यादि, भगवन्! मन्दरस्याधस्तन् काण्डं कियद्बाहल्येन–उच्चत्वेन प्रज्ञप्तम् ?, गौ० एकं योजनसहस्रं बाहल्येन प्रज्ञप्तं, मध्यमकाण्डे पृच्छा–प्रश्नपद्धतिर्वाच्या-

सा च 'मन्दरस्स णं भंते! पव्वयस्स मज्झिमिल्ले कांडे केवइयं बाहल्लेणं पन्नत्ते ?' इत्यादिरूपा स्वयमभ्यूह्या, गौतम! त्रिषष्टिं योजनसहस्राणि बाहल्येन प्रज्ञप्तम्, अनेन भद्रशालवनं नन्दनवनं सौमनसवनं द्वे अन्तरे चैतत् सर्वं मध्यमकाण्डे अन्तर्भूतमिति, यत्तु समवायाङ्गे अनेन भद्रशालवनं नन्दनवनं सौमनसवनं द्वे अन्तरे चैतत् सर्वं मध्यमकाण्डे अन्तर्भूतमिति, यत्तु समवायाङ्गे अष्टत्रिंशत्तमे समवाये 'द्वितीयकाण्डविभागोऽष्टत्रिंशत्सहस्रयोजनान्युच्चत्वेन भवती' त्युक्तं तन्मतान्तरेणेति, एवमुपरितने काण्डे पृच्छा ज्ञेया, षट्त्रिंशद्योजनसहस्राणि बाहल्येन प्रज्ञप्तम्, एवमुक्तरीत्या पूर्वापरमीलनेन मंदरपर्वतः एकं योजनशतसहस्रं सर्वसंख्यया प्रज्ञप्तः, ननु चत्वारिंशद्योजनप्रमाणा शिरःस्था चूलिका मेरुप्रमाणमध्ये कथं न कथिता उच्यते, क्षेत्रचूलात्वेन तस्याः अगणनात्, पुरुषोच्छ्रयगणने शिरोगतकेशपाशस्येवेति, इयं च सूत्रत्रयी एकार्थप्रतिबद्धत्वेन समुदितैवा-लेखि। अथ मेरोः समयप्रसिद्धानि षोडश नामानि प्रश्नयितुमाह–

मू. (२०२) मंदरस्स णं भंते ! पव्वयस्स कति नामधेआ प० गो० सोलस तं०—

वृ. 'मंदरस्स णं'मित्यादि, मन्दरस्स पर्वतस्य भगवन् ! कति नामधेयानि—नामानि प्रज्ञप्तानि गौतम ! षोडश नामधेयानि प्रज्ञप्तानि, तद्यथा—

मू. (२०३) मन्दर १ मेरु २ मनोरम ३ सुदंसण ४ सयंपभे अ ५ गिरिराया ६ ।
रयणोच्चय ७ सिलोच्चय ८ मज्झे लोगस्स ९ नाभी य १० ॥

वृ. 'मन्दरे'त्यादि गाथाद्वयं, मन्दरदेवयोगात् मन्दरः ?, एवं मेरुदेवयोगात् मेरुरिति, नन्वेवं मेरोः स्वामिद्वयमापद्येतेति चेत, उच्यते, एकस्यापि देवस्य नामद्वयं सम्भवतीति न काप्याशङ्का, निर्णीतिस्तु बहुश्रुतगम्येति २, तथा मनांसि देवानामप्यतिसुरूपतया रमयतीति मनोरमः ३, तथा सुष्ठु—शोभनं जाम्बूनदमयतया रत्नबहुलतया च मनोनिर्वृतिकरं दर्शनं यस्यासौ सुदर्शनः ४, तथा रत्नबहुलतया स्वयमादित्यादिनिरपेक्षा प्रभा—प्रकाशो यस्यासौ स्वयम्प्रभः ५, चः समुच्चये, तथा सर्वेषामपि गिरीनामुच्चेन तीर्थकरजन्माभिषेकाश्रयतया च राजा गिरिराजः ६, तथा रत्नानां नानाविधानामुत्—प्राबल्येन चयः—उपचयो यत्र स रत्नोच्चयः ७, तथा शिलानां—पाण्डुशिलादीनामूर्ध्व—शिरस उपरि चयः—सम्भवो यत्र स शिलोच्चयः ८ ।

तथा लोकस्य मध्यं, तस्य सकललोकमध्यवर्त्तित्वात् नन्वत्र लोकशब्देन चतुर्दशरज्ज्वात्मकलोके व्याख्यातव्ये 'धम्माइ लोगमज्झं जोअणअसंखकोडीहिं' इति वचनात् समभूतलाद्रत्नप्रभाया असंख्याताभिर्योजन- कोटीभिरतिक्रान्ताभिर्लोकमध्यं तत्र च मेरोरसम्भवेन बाधितं व्याख्यानं, अथ लोकशब्देन तिर्यग्लोकस्तस्याप्यष्टादशशतयोजनप्रमाणोच्चस्यास्मिन्नेवान्तर्लीनत्वात् कुतरस्तरामस्य लोकमध्यवर्त्तित्वमिति चेत्, उच्यते, तिर्यग्लोके तिर्यग्भागस्य स्थालाकारैकरज्जुप्रमाणायाम- विष्कम्भस्यात्र लोकशब्देन विवक्षणात् तस्य मध्यं, मेरु तन्मध्य- वर्तीत्यर्थः, अस्मात् सर्वतोऽप्य- लोकस्य पञ्चसहस्रनार्द्धरज्जुप्रमाणेन दूरव्यवहितत्वात्, अत एवोप- लक्षणालोकस्याप्यसौ मध्यं अस्मात् सर्वतोऽप्यलोकस्यानन्तयोजनप्रमाणत्वात् ९, एवं 'नाभी य'त्ति अत्र च देहलीप्रदीपन्यायेन लोकशब्दस्य संयोजनात् लोकनाभि, अत्र भावना तु उक्तन्यायेनैव १०, चः समुच्चये ।

मू. (२०४) अच्छे अ ११ सूरिआवत्ते १२, सूरिआवरणे १३ तिआ ।
उत्तमे १४ अ दिसादीअ १५, वडेंसेति १ अ सोलसे ॥

वृ. अथ श्लोकदन्धेन 'अच्छे'इत्यादि, अच्छः—सुनिर्मलः जाम्बूनदरत्नबहुलत्वात्, चतुर्थाङ्गे षोडशसमवाये तु अत्थे इति पाठः, तत्र अनेन ह्यन्तरितः सूर्यादिरस्त इत्यभिधीयते, इदं च पूर्वापरमहाविदेहापेक्षया ज्ञेयं, अतोऽयमपि कारणे कार्योपचारादस्त इति ११, तथा सूर्या उपलक्षणमेतत्तेन चन्द्रादयश्च प्रदक्षिणमावर्त्तन्ति यस्य स सूर्यावर्त्तः १२, तथा सूर्यैरुपलक्षणमेतत् चन्द्रग्रहनक्षत्रादिभिश्च समन्तात् भ्रमणशीलैराव्रियते स्म—वेष्ट्यते स्मेति सूर्यावरणः 'कृद्बहुल' मिति वचनात् कर्मण्यनट्प्रत्ययः १३, इतिशब्दो नामसमाप्तौ चः समुच्चये, तथा उत्तमो गिरिषु सर्वतोऽप्यधिकसमुन्नतत्वात्, समवायाङ्गे तु उत्तर इति पाठः, तत्र उत्तरतः—उत्तरदिग्वर्त्ती सर्वेभ्यो भरतादिवर्षेभ्य इति, यदाह—

"सर्वेषामुत्तरो मेरु"रिति, ननु भरतादिभ्यः उत्तरदिग्वर्त्तित्वं जम्बूद्वीपपट्टादौ विलोकनेन

सुज्ञेयं ऐरावतादिभ्यः कथमुत्तरदिग्वर्तित्वं ?, उच्यते, यत्क्षेत्रीयाणां यस्यां दिशि सूर्योदयः तत्क्षेत्रीयाणां सा पूर्वेति सर्वेषां सम्प्रदायः, तेन तदनुसारेण तत्तत्क्षेत्रेषु पूर्वादिदिग्व्यवहारं जम्बूद्वीपपट्टादौ गुरुहस्तकलातः परिभाव्यैरावतादिभ्योऽप्यस्योत्तरदिग्वर्त्तित्वमवसेयं १४, चः समुच्चये, दिशामादि–प्रभवो दिगादि, तथाहि–रुचकाद्दिशां विदिशां च प्रभवो रुचकश्चाष्टप्रदेशात्मको मेरुमध्यवर्ती ततो मेरुरपि दिगादिरित्युच्यते १५, तथाऽवतंसः–शेखरः गिरीणां श्रेष्ठ इत्यर्थः १६, चः पूर्ववत्, अस्यैवार्थस्य निगमनमाह–इति षोडशः ।

**मू. (२०५)** *से केणट्ठेणं भंते ! एवं वुच्चइ मंदरे पव्वए २ ?, गोअमा ! मन्दरे पव्वए मन्दरे नामं देवे परिवसइ महिड्ढीए जाव पलिओवमट्ठिइए, से तेणट्ठेणं गोअमा ! एवं वुच्चइ मन्दरे पव्वए २ अदुत्तरं तं चेवत्ति ।*

**वृ.** अथ यदुक्तं–षोडशसु नामसु मन्दरेति मुख्यं नाम तन्निदानं पिपृच्छिषुराह–'से केणट्ठेण'-मित्यादि, व्यक्तम् ॥ उक्ता महाविदेहाः अथ तत्परतोवर्तिनं नीलवन्तं नाम गिरिं पिपृच्छिषुराह–

**मू. (२०६)** *कहि णं भंते ! जंबुद्दीवे दीवे नीलवंते नामं वासहरपव्वए पन्नत्ते ? गोयमा ! महाविदेहस्स वासस्स उत्तरेणं रम्मगवासस्स दक्खिणेणं पुरत्थिमिल्ललवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं एत्थ णं जंबुद्दीवे २ नीलवंते नामं वासहरपव्वए पन्नत्ते पाईणपडीणाय उदीणदाहिणविच्छिण्णे निसहवत्तव्वया नीलवंतस्स भाणिअव्वा ।*

*नवरं जीवा दाहिणेणं धनु उत्तरेणं एत्थ णं केसरिद्दहो, दाहिणेणं सीआ महानई पवूढा समाणी उत्तरकुरुं एज्जेमाणी २ जमगपव्वए नीलवंतउत्तरकुरुचन्देरावतमालवंतद्दहे अ दुहा विभयमाणी २ उत्तरासीए सलिलासहस्सेहिं आपूरेमाणी २ भद्दसालवनं एज्जेमाणी २ मंदरं पव्वयं दोहिं जोअणेहिं असंपत्ता पुरत्थाभिमुही आवत्ता समाणी अहे मालवंतवक्खारपव्वयं दालयित्ता मंदरस्स पव्वयस्स पुरत्थिमेणं पुव्वविदेहवासं दुहा विभयमाणी २ एगमेगाओ चक्कव-ट्टिविजयाओ अट्ठावीसाए २ सलिलासहस्सेहिं आपूरेमाणी २ पञ्चहिं सलिलासयसहस्सेहिं बत्तीसाए अ सलिलासहस्सेहिं समग्गा अहे विजयस्स दारस्स जगइं दालइत्ता पुरत्थिमेणं लवणसमुद्दं समप्पेइ, अवसिट्ठं तं चेवत्ति ।*

*एवं नारिकंतावि उत्तराभिमुही नेअव्वा, नवरमिमं णाणत्तं गंधावइवट्टवे- अड्ढपव्वयं जोअणेणं असंपत्ता पच्चत्थाभिमुही आवत्ता समाणी अवसिट्ठं तं चेव पवहे अ मुहे अ जहा हरिकंतासलिला इति । नीलवंते णं भंते ! वासहरपव्वए कइ कूडा प० गो० ! नव कूडा पं०, तंजहा–सिद्धायय‌णकूडे० ।*

**वृ.** 'कहि ण' क्व भदन्त ! जम्बूद्वीपे द्वीपे नीलवन्नाम्ना वर्षधरपर्वतः प्रज्ञप्तः ?, उत्तरसूत्रं व्यक्तं, नवरं रम्यकक्षेत्रं महाविदेहेभ्यः परं युग्मिमनुजाश्रयभूतमस्ति तस्य दक्षिणतः अयं च निषधबन्धुरिति तत्साम्येन लाघवं दर्शयति–'निसह'इत्यादि, निषधवक्तव्यता नीलवंतोऽपि भणितव्या, नवरमस्य जीवा–परम आयामो दक्षिणतः, उत्तरतः क्रमेण जगत्या वक्रत्वेन न्यूनत-रत्वात्, धनुःपृष्ठमुत्तरतः, अत्र केसरिद्रहो नाम द्रहः, अस्माच्च शीता महानदी प्रव्यूढा सती उत्तरकुरून् इयती २–परिगच्छन्ती २ यमकपर्वतौ नीलवदुत्तरकुरुचन्द्रैरावतमाल्यवन्नामकान् पञ्चापि द्रहांश्च द्विधा विभजन्ती २ चतुरशीत्या सलिलासहस्रैरापूर्यमाणा २ भद्रशालवनमियती २–आगच्छन्ती

२ मन्दरं पर्वतं द्वाभ्यां योजनाभ्यामसम्प्राप्ता पूर्वाभिमुखी परावृत्ता सती माल्यवदवक्षस्कारपर्वतमधो विदार्य्य मेरोः पूर्वस्यां पूर्वमहाविदेहं द्विधा विभजन्ती २ एकैकस्माच्चक्रवर्त्तिविजयादष्टाविंशत्या २ सलिलासहस्रैरापूर्यमाणा २ आत्मना सह पञ्चभिर्नदीलक्षैर्द्वात्रिंशता च सहस्रैः समग्रा अधो विजयस्य द्वारस्य जगतीं विदार्य पूर्वस्यां लवणसमुद्रमुपैति, अवशिष्टं प्रवहव्यासोण्डत्वादिकं तदेवेति–निषधनिर्गतशीतोदाप्रकरणोक्तमेव, अथास्मादेवोत्तरतः प्रवृत्तां नारीकान्तामतिदिशति–

'एवंनारीकंता' इत्यादि, एवमुक्तन्यायेन नारीकान्ताऽपि उत्तराभिमुखी नेतव्या, कोऽर्थः यथा नीलवति केसरिद्रहाद् दक्षिणाभिमुखी शीता निर्गता तथा नारीकान्ताऽप्युत्तराभिमुखी नेतव्या, कोऽर्थः ?–यथा नीलवति केसरिद्रहाद् दक्षिणाभिमुखी शीता निर्गता तथा नारीकान्ताऽप्युत्तराभिमुखी निर्गता तर्हि अस्याः समुद्रप्रवेशोऽपि तद्वदेवेत्याशङ्क्यमानमाह–नवरमिदं नानात्वं गन्धापातिनं वृत्तवैताढ्यपर्वतं योजनेनासम्प्राप्ता पश्चिमाभिमुखी आवृत्ता सती इत्यादिकमवशिष्टं सर्वं तदेव हरिकान्तासलिलावद् भाव्यं, तद्यथा–

'रम्मगवासं दुवा विभयमाणी २ छप्पन्नाए सलिला सहस्सेहिं समग्गा अहे जगई दालइ २ त्ता पच्चत्थिमेणं लवणसमुद्दं समप्पेइ' त्ति, अत्र चावशिष्टपदसंग्रहे प्रवहमुखव्यासादिकं न चिन्तितं, समुद्रप्रवेशावधिकस्यैवालापकस्य दर्शनात्, तेन तत् पृथगाह–प्रवहे च मुखे च यथा हरिकान्ता सलिला, तथाहि–प्रवहे २५ योजनानि विष्कम्भेन अर्द्धयोजनमुद्वेधेन मुखे २५० योजनानि विष्कम्भेन ५ योजनान्युद्वेधेनेति, यच्चात्र हरिसलिलां विहाय प्रवहमुखयोर्हरिकान्तातिदेश उक्तस्तत्हरिसलिलाप्रकरणेऽपि हरिकान्तातिदेशस्योक्तत्वात्, अथात्र कूटानि प्रष्टव्यानि–

'नीलवंते ण' मित्यादि, नीलवति भदन्त ! वर्षधरपर्वते कति कूटानि प्रज्ञप्तानि ? गौतम ! नव कूटानि प्रज्ञप्तानि, तद्यथा -सिद्धायतनकूटं, अत्र नवानामप्येकत्र संग्रहायेयं गाथा–

*मू. (२०७) सिद्धे १ नीले २ पुव्वविदेहे ३ सीआ य ४ किति ५ नारी अ ६ ।*
*अवरविदेहे ७ रम्मगकूडे ८ उवदंसणे चेव ९ ॥*

**वृ.** 'सिद्धे' त्ति सिद्धकूटं–सिद्धायतनकूटं, तच्च पूर्वदिशि समुद्रासन्नं, ततो नीलवत्कूटं–नीलवद्वक्षस्काराधिपकूटं, पूर्वविदेहाधिपकूटं शीताकूटं–शीतासुरकूटं, चः समुच्चये, कीर्तिकूटं–केसरिद्रहसुरीकूटं नारीकूटं–नारीकान्तानदीसुरीकूटं, चः पूर्ववत्, अपरविदेहकूटं–अपरविदेहाधिपकूटं रम्यककूटं–रम्यकक्षेत्राधिपकूटं उपदर्शनकूटं–उपदर्शननामकं कूटं ।

*मू. (२०८) सव्वे एए कूडा पञ्चसइआ रायहाणीउ उत्तरेणं । से केणट्ठेणं भंते ! एवं वुच्चइ–नीलवंते वासहरपव्वए २ ?, गोअमा ! नीले नीलोभासे नीलवंते अ इत्थ देवे महिड्ढीए जावपरिवसइ सव्ववेरुलिआमए नीलवंते जाव निच्चेति ।*

**वृ.** एतानि च कूटानि हिमवत्कूटवत् पञ्चशतिकानि–पञ्चशतयोजनप्रमाणानि वाच्यानि वक्तव्यताऽपि तद्वत्, कूटाधिपानां राजधान्यो मेरोरुत्तरस्याम् । अथास्य नामनिबन्धनं पृच्छन्नाह–

'से केणट्ठेणं' इत्यादि, प्रश्नः प्राग्वत्, उत्तरसूत्रे चतुर्थो वर्षधरगिरिर्नीलो–नीलवर्णवान् नीलावभासो–नीलप्रकाशः आसन्नं वस्त्वन्यदपि नीलवर्णमयं करोति तेन नीलवर्णयोगान्नीलवान्, नीलवांश्चात्र महर्द्धिको देवः पल्योपमस्थितिको यावत्परिवसति तेन तद्योगाद्वा नीलवान्, अथवा असौ सर्ववैडूर्यरत्नमयस्तेन वैडूर्यरत्नपर्यायकनीलमणियोगान्नीलः शेषं प्राग्वत् । अथ पञ्चमं वर्षप्रश्नयन्नाह–

*मू. (२०९) कहि णं भंते ! जंबुद्दीवे २ रम्मए नामं वासे पन्नत्ते ?, गो० नीलवंतस्स*

उत्तरेणं रुप्पिस्स दक्खिणेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं एवं जह चेव हरिवासं तह चेव रम्मयं वासं भाणिअव्वं, नवरं दक्खिणेणं जीवा उत्तरेणं धणुं अवसेसं तं चेव। कहि णं भंते ! रम्मए वासे गंधावईनामं वट्टवेअद्धपव्वए प० गो० नरकंताए पच्चत्थिमेणं नारीकंताए पुरत्थिमेणं रम्मगवासस्स बहुमज्झदेसभाए एत्थ णं गंधावईनामं वट्टवेअद्धे पव्वए पन्नत्ते, जं चेव विअडावइस्स तं चेव गंधावइस्सवि वत्तव्वं, अट्ठो बहवे उप्पलाइं जाव गंधावईवण्णाइं गंधावइप्पभाइं पउमे अ इत्थ देवे महिड्ढीए जाव पलिओवमट्ठिईए परिवसइ, रायहाणी उत्तरेणंति। से केणट्ठेणं भंते ! एवं वुच्चइ रम्मए वासे २ ?, गोअमा ! रम्मगवासे णं रम्मे रम्मए रमणिज्जे रम्मए अ इत्थ देवे जाव परिवसइ, से तेणट्ठेणं०।

कहि णं भंते ! जंबुद्दीवे २ रुप्पी नामं वासहरपव्वए पन्नत्ते ?, गोअमा ! रम्मगवासस्स उत्तरेणं हेरण्णवयवासस्स दक्खिणेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स-पुरत्थिमेणं एत्थ णं जंबुद्दीवे दीवे रुप्पी नामं वासहरपव्वए पन्नत्ते पाईणपडीणायए उदीणदाहिण-विच्छिन्ने, एवं जा चेव महाहिमवंतवत्तव्वया सा चेव रुप्पिस्सवि, नवरं दाहिणेणं जीवा उत्तरेणं धनु अवसेसं तं चेव महापुण्डरीए दहे नरकंता नदी दक्खिणेणं नेअव्वा जहा रोहिआ पुरत्थिमेणं-गच्छइ, रुप्पकूला उत्तरेणं नेअव्वा जहा हरिकंता पच्चत्थिमेणं गच्छइ, अवसेसं तं चेवत्ति।

रुप्पिंमि णं भंते ! वासहरपव्वए कइ कूडा पं० ? अट्ठ कूडा पं० तं०।

**मू. (२१०)** सिद्धे १ रुप्पी २ रम्मग ३ नरकंता ४ बुद्धि ५ रुप्पकूला य ६।
हेरन्नवय ७ मणिकंचण ८ अट्ठ य रुप्पिंमि कूडाइं॥

**वृ.** प्रश्नः प्रतीतः, उत्तरसूत्रे नीलवत उत्तरस्यां रुक्मिणो–वक्ष्यमाणस्य पञ्चमव-र्षधराद्रेर्दक्षिणस्यां एवं यथैव हरिवर्षं तथैव रम्यकं वर्षं यश्च विशेषः स नवरमित्यादिना सूत्रेण साक्षादाह– 'दक्खिणेणं जीवे'त्यादि, व्यक्तम्, अथ यदुक्तं नारीकान्ता नदी रम्यकवर्षं गच्छन्ती गन्धापातिनां वृत्तवैताढ्यं योजनेनासम्प्राप्तेति, तदेष गन्धापाती कास्तीति पृच्छति–

'कहि णं' मित्यादि, क्व भदन्त ! रम्यके वर्षे गन्धापाती नाम वृत्तवैताढ्यपर्वतः प्रज्ञप्तः ?, गौतम ! नरकान्ताया महानद्याः पश्चिमायां नारीकान्तायाः पूर्वस्यां रम्यकवर्षस्य बहुमध्य-देशभागे अत्रान्तरे गन्धापाती नाम वृत्तवैताढ्यः प्रज्ञप्तः, यदेव विकटापातिनो हरिवर्षक्षेत्रस्थितवृत्त-वैताढ्यस्योच्चत्वादिकं तदेव गन्धापातिनोऽपि वक्तव्यं, यच्च सविस्तरं निरूपितस्य शब्दापातिनोऽतिदेशं विहाय विकटापातिनोऽतिदेशः कृतस्तत्र तुल्यक्षेत्रस्थितिकत्वं हेतुः।

अत्र यो विशेषस्तमाह–अर्थस्त्वयं–वक्ष्यमाणो बहून्युत्पलानि यावद् गन्धापातिवर्णानि–तृतीयवृत्तवैताढ्यवर्णानि गन्धापातिवर्णसदृशानीत्यर्थः रक्तवर्णत्वात् गन्धापातिप्रभाणि–गन्धा-पातिवृत्तवैताढ्याकाराणि सर्वत्र समत्वात् तेन तद्वर्णत्वात् तदाकारत्वाच्च गन्धापातीनीत्युच्यन्ते, पद्मश्चात्र देवो महर्द्धिकः पल्योपमस्थितिकः परिवसति, तेन तद्योगात्तत्स्वामिकत्वाच्च गन्धापातीति, यथा च विसदृशनामकस्वामिकत्वेन नामान्वर्थोपपत्तिस्तथा प्रागभिहितं, अस्याधिपस्य राज-धान्युत्तरस्यां। अथ रम्यकक्षेत्रनामनिबन्धनमाह– 'से केणट्ठेण' मित्यादि, अथ केनार्थेन भदन्त ! एवमुच्यते–रम्यकं वर्षं २ ?, गौतम ! रम्यकं वर्षं रम्यते–क्रीडयते नानाकल्पद्रुमैः स्वर्णमणिखचितैश्च तैस्तैः प्रदेशैरतिरमणीयतया रतिविषयतां नीयते इति रम्यं रम्यमेव रम्यकं रमणीयं च त्रीण्ये-

कार्थिकानि रम्यतातिशयप्रतिपादकानि, रम्यकश्चात्र देवो यावत् परिवसति तेन तद् रम्यकमिति व्यवह्रियते।

अथ पञ्चमो वर्षधरः - 'कहि णं भंते' क्व भदन्त ! जम्बूद्वीपे द्वीपे रुक्मी नाम वर्षधरपर्वतः प्रज्ञप्तः ?, गौतम ! रम्यकवर्षस्य उत्तरस्यां वक्ष्यमाणहैरण्यवतक्षेत्रस्य दक्षिणस्यां पूर्वलवणसमुद्रस्य पश्चिमायां पश्चिमलवणसमुद्रस्य पूर्वस्यां अत्रान्तरे जम्बूद्वीपे द्वीपे रुक्मीनाम्ना पञ्चमो वर्षधरः प्रज्ञप्तः प्राचीनप्रतीचीनायतः उत्तरदक्षिणयोर्विस्तीर्णः, एवमुक्तानुसारेण यैव महाहिमवद्वर्षधर-वक्तव्यता सैव रुक्मिणोऽपि परं दक्षिणतो जीवा उत्तरस्यां धनुःपृष्ठं अवशेषं—व्यासादिकं तदेव—द्वितीयवर्षधरप्रकरणोक्तमेव, द्वयोः परस्परं समानत्वात्, महापुण्डरीकोऽत्र द्रहो महापद्मद्रहतुल्यः, अस्माच्च निर्गता दक्षिणतोरणेन नरकान्ता महानदी नेतव्या, अत्र च का नदी निदर्शनीयेत्याह -

'जहा रोहिय'त्ति यथा रोहिता 'पुरत्थिमेणं गच्छइ'त्ति पूर्वेण गच्छति समुद्रमिति शेषः, यथा रोहिता महाहिमवतो महापद्मद्रहतो दक्षिणेन प्रव्यूढा सती पूर्वसमुद्रं गच्छति तथैषाऽपि प्रस्तुतवर्षधराद्दक्षिणेन निर्गता पूर्वेणाब्धिमुपसर्प्पतीति भावः, रूप्यकूला उत्तरेण—उत्तरतोरणेन निर्गता नेतव्या, यथा हरिकान्ता हरिवर्षक्षेत्रवाहिनी महानदी पश्चिमाब्धिं गच्छति, अथ नरकान्तायाः समानक्षेत्रवर्त्तित्वेन हरिकान्तायाः रूप्यकूलायास्तु रोहितायाः अतिदेशो वक्तुमुचित इत्याह—अवशेषं—गिरिगन्तव्यमुखमूलव्यासरित्सम्पदादिकं वक्तव्यं तदेवेति- समानक्षेत्रवर्त्ति-सरित्प्रकरणोक्तमेव, तच्च नरकान्ताया हरिकान्ताप्रकरणोक्तं रूप्यकूलायास्तु रोहिताप्रकरणोक्तं, यत्तु नरकान्ताया अतुल्यदिग्वर्त्तिन्या रोहितया सह रूप्यकूलायाश्च हरिकान्तया सहातिदेशकथनं तत्र समानदिगनिर्गतत्वं समानदिग्गामित्वं च हेतुः।

अथात्र कूटवक्तव्यमाह—'रुप्पिंमि णं' मित्यादि, रुक्मिणि पर्वते भगवन् ! कति कूटानि प्रज्ञप्तानि ?, गौतम ! अष्ट कूटानि प्रज्ञप्तानि, तद्यथा—प्रथमं समुद्रदिशि सिद्धायतनकूटं ततो रुक्मिकूटं- पञ्चमवर्षधरपतिकूटं—रम्यकक्षेत्राधिपदेवकूटं नरान्तनदीदेवीकूटं बुद्धिकूटं—

महापुण्डरीकद्रहसुरीकूटं रूप्यकुलानदीसुरीकूटं हैरण्यवतकूटं—हैरण्यवतक्षेत्राधि-पदेवकूटमणिकाञ्चनकूटं, एतानि प्राग्परायतश्रेण्या व्यवस्थितानि पञ्चशतकानि सर्वाण्यपि, राजधान्यः कूटाधिपदेवानामुत्तरस्यां।

***मू. (२११)** सव्वेवि एए पंचसइआ रायहाणीओ उत्तरेणं। से केणट्ठेणं भंते ! एवं वुच्चइ रुप्पी वासहरपव्वए २ ?, गोअमा ! रुप्पीनामवासहरपव्वए रुप्पी रुप्पपट्टे रुप्पोभासे सव्वरुप्पामए रुप्पी अ इत्थ देवे पलिओवमट्ठिईए परिवसइ, से एएणट्ठेणं गोअमा ! एवं वुच्चइत्ति। कहि णं भंते जंबुद्दीवे २ हेरण्णवए नामं वासे पन्नत्ते ?, गो० ! रुप्पिस्स उत्तरेणं सिहरिस्स दक्खिणेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं एत्थ णं जंबुद्दीवे दीवे हिरन्नवए वासे पन्नत्ते, एवं जह चेव हेमवयं तह चेव हेरण्णवयंपि भाणिअव्वं, नवरं जीवा दाहिणेणं उत्तरेणं धनुं अवसिट्ठं तं चेवत्ति। कहि णं भंते ! हेरन्नवए वासे मालवंतपरिआए नामं वट्टवेअद्धपव्वए पं० ?, गो० ! सुवण्णकूलाए पच्चत्थिमेणं रुप्पकूलाए पुरत्थिमेणं एत्थ णं हेरण्णवयस्स वासस्स बहुमज्झदेसभाए मालवंतपरिआए नामं वट्टवेअड्ढे पं० - जह चेव सद्दावइ तह चेव मालवंतपरि-आएवि, अट्ठो उप्पलाइं पउमाइं मालवंतप्पभाइं मालवंतवण्णाइं मालवंतवण्णाभाइं पभासे अ*

*इत्थ देवे महिड्ढीए पलिओवमट्ठिईए परिवसइ, से एएणट्ठेणं०, रायहाणी उत्तरेणंति । से केणट्ठेणं भंते! एवं वुच्चइ- हेरण्णवए वासे २ ?, गोअमा! हेरण्णवए णं वासे रुप्पीसिहरीहिं वासहरपव्वएहिं दुहओ समवगूढे निच्चं हिरण्णं दलइ निच्चं हिरण्णं मुंचइ निच्चं हिरण्णं पगासइ हेरण्णवए अ इत्थ देवे परिवसइ से एएणट्ठेणंति ।*

*कहि णं भंते! जंबुद्दीवे दीवे सिहरी नामं वासहरपव्वए पन्नत्ते ?, गोअमा! हेरण्णवयस्स उत्तरेणं एरावयस्स दाहिणेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं, एवं जह चेव चुल्लहिमवंतो तह चेव सिहरीवि नवरं जीवा दाहिणेण धनुं उत्तरेणं अवसिट्ठं तं चेव पुंडरीए दहे सुवण्णकूला महानई दाहिणेणं नेअव्वा जहा रोहिअंसा पुरत्थिमेणं गच्छइ, एवं जह चेव गंगासिंधूओ तह चेव रत्तारत्तवईओ नेअव्वाओ पुरत्थिमेणं रत्ता पच्चत्थिमेण रत्तवई अवसिट्ठं तं चेव, [ अवसेसं भाणिअव्वंति ] । सिहरिम्मि णं भंते ! वासहरपव्वए कइ कूडा प० गो० ! इक्कारस कूडा पं० तं०– सिद्धायणकूडे १ सिहरिकूडे २ हेरण्णवयकूडे ३ सुवण्णकूलाकूडे ४ सुरादेवीकूडे ५ रत्ताकूडे ६ लच्छीकूडे ७ रत्तवईकूडे ८ इलादेवीकूडे ९ एरवयकूडे १० तिगिच्छिकूडे ११, एवं सव्वेवि कूडा पंचसइआ रायहाणीओ उत्तरेणं । से केणट्ठेणं भंते ! एवमुच्चइ सिहरिवासहरपव्वए २ ?, गो० सिहरिंमि वासहरपव्वए बहवे कूडा सिहरिसंठाणसंठिआ सव्वरयनामया सिहरी य इत्थ देवे जाव परिवसइ, से तेणट्ठेणं० ।*

*कहि णं भंते! जंबुद्दीवे दीवे एरावए नामं वासे पन्नत्ते ?, गोअमा! सिहरिस्स उत्तरेणं उत्तरलवणसमुद्दस्स दक्खिणेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं, एत्थ णं जंबुद्दीवे दीवे एरावए नामं वासे पन्नत्ते, खाणुबहुले कंटकबहुले एवं जच्चेव भरहस्स वत्तव्वया सच्चेव सव्वा निरवसेसा नेअव्वा सओअवणा सणिक्खमणा सपरिनिव्वाणा नवरं एरावओ चक्कवट्टी एरावओ देवो, से तेणट्ठेणं एरावए वासे २ ।*

वृ. सम्प्रत्यस्य नामनिदानं पर्यनुयुङ्क्ते 'से केणट्ठेण'मित्यादि, अथ केनार्थेन भदन्त ! एवमुच्यतेरुक्मी वर्षधरपर्वतः २ इति ?, गौतम ! रुक्मी वर्षधरपर्वतो रुक्मं–रूप्यं शब्दानामनेकार्थत्वात् तदस्यातीति रुक्मी एष सर्वदा रूप्यमयः शाश्वतिक इति नित्ययोगे इन् प्रत्ययः, 'रूप्यावभासो' रूप्यमिव सर्वतोऽवभासः–प्रकाशो भास्वरत्वेन यस्यासौ तथा, एतदेव व्याचष्टे–सर्वात्मना रूप्यमय इति, रुक्मी चात्र देवस्ततस्तन्मयत्वात् तत्स्वामिकत्वाच्च रुक्मीति व्यपदिश्यते।

अथ षष्ठं वर्षं विभावयितुमाह–'कहि ण'मित्यादि, क्व भदन्त ! जम्बूद्वीपे हैरण्यवतं नाम वर्षं प्रज्ञप्तम् ?, गौतम ! रुक्मिणो वर्षधरस्योत्तरस्यां शिखरिणो वक्ष्यमाणवर्षधरस्य दक्षिणस्यां 'पुरत्थिमे'त्यादि प्राग्वत् अत्रान्तरे जम्बूद्वीपे द्वीपे हैरण्यवतनाम वर्षं प्रज्ञप्तम्, एवमुक्ताभिलापेन यथैव हैमवतं तथैव हैरण्यवतमपि भणितव्यं, 'नवरं' मित्यादि पाठसिद्धं, अवशिष्टं व्यासादिकं तदेव–हैरण्यवत वर्ष प्रकरणोक्तमेवेति । अथमाल्यवत् पर्यायो वृत्तवैताढ्यः क्वास्तीति पृच्छति ? कहि णं० क्व भदन्त ! हैरण्यवतवर्षे माल्यवत्पर्यायो नाम वृत्तवैताढ्यपर्वतः प्रज्ञप्तः ?, गौतम ! सुवर्णकूलाया अत्रैव क्षेत्रे पूर्वागमिमहानद्याः पश्चिमतो रूप्यकूलायाः अत्रैव पश्चिमगामिमहानद्याः पूर्वतः हैरण्यवतस्य वर्षस्य बहुमध्यदेशभागेऽत्रान्तरे माल्यवत्पर्यायो नाम वृत्तवैताढ्यपर्वतः प्रज्ञप्तः, यथैव शब्दापाती तथैव माल्यवत्पर्यायः, विशेषस्त्वर्थे इति तमाह–अर्थोऽयं उत्पलानि–पद्मानि उपल-क्षणात् शतपत्रादिग्रहः माल्यवत्प्रभाणि माल्यवद्वर्णानि

माल्यवद्वर्णामानीति प्राग्वत्, प्रभासश्चात्र देवः पल्योपमस्थितिकः परिवसति 'से तेणट्ठेण'मित्यादि निगमनसूत्रं प्राग्वत् राजधानी तस्योत्तरस्यां शब्दापातिनस्तु दक्षिणस्यां मेरोरिति, अथ हैरण्यवतनाम्नोऽर्थव्यक्तये पृच्छति–

'से केणट्ठेण'मित्यादि, अथ केनार्थेन भदन्त ! एवमुच्यते–हैरण्यवतं वर्षं २-इति ?, गौ० ! हैरण्यवतं वर्षं रुक्मिशिखरिभ्यां वर्षधरपर्वताभ्यां द्विधातः–उभयओदक्षिणोत्तर-पार्श्वयोः समुपगूढं–समालिङ्गितं, कृतसीमाकमित्यर्थः, अथ कथमाभ्यां समालिङ्गितत्वेनास्य हैरण्यवतमिति नाम सिद्धं ?, उच्यते, रुक्मी शिखरी च द्वावप्येतौ पर्वतौ यथाक्रमं रूप्यसुवर्णमयौ यच्च यन्मयं तत्र तद्विद्यते हिरण्यशब्देन सुवर्णं रूप्यमपि च ततो हिरण्यं–सुवर्णं विद्यते यस्यासौ हिरण्यवान्शिखरी हिरण्यं–रूप्यं विद्यते यस्यासौ हिरण्यवान्–रुक्मी द्वयोः हिरण्यवतोरिदं हैरण्य- वतम्, यद्वा हिरण्यं जनेभ्यः आसनप्रदानादिना प्रयच्छति अथवा दर्शनमनोहारितया तत्र तत्र प्रदेशे हिरण्यं जनेभ्यः प्रकाशयति, तथाहि–बहवस्तत्र मिथुनकमनुष्याणामुपवेशनशयनादिरूपोपभोगयोग्या हिरण्यमयाः शिलापट्टकाः सन्ति पश्यन्ति च ते मनुष्यास्तत्र तत्र प्रदेशे मनोहारिणो हिरण्यमयान्नि- वेशान् ततो हिरण्यं प्रशस्यं प्रभूतं नित्ययोगि वाऽस्यास्तीति हिरण्यवत् तदेव हैरण्यवतं, स्वार्थेऽण- प्रत्ययः, यदिवा हैरण्यवतनामात्र देवः पल्योपमस्थितिकः आधिपत्यं परिपाल- यति तेनैतत्स्वामि- कत्वाद्धैरण्यवतम् ।

अथ षष्ठवर्षधरावसरः–क्व भदन्त ! जम्बूद्वीपे द्वीपे शिखरीनामवर्ष धरपर्वतः प्रज्ञप्तः ?, गौ० ! हैरण्यवतस्योत्तरस्या ऐरावतस्य–वक्ष्यमाणसप्तमक्षेत्रस्य दक्षिणस्यां 'पुरत्थिमे'त्यादि प्राग्वत्, एवमुक्ताभिलापेन यथा क्षुद्रहिमवान् तथैव शिखर्यपि, नवरं जीवा दक्षिणेन धनुरुत्तरेण अवशिष्टं तदेवेति–क्षुद्रहिमवत्प्रकरणोक्तमेव, तत्र पुण्डरीको ह्रदः, तस्मात्सुव- र्णकूला महानदी दक्षिणेन निर्गता नेतव्या, परिवारादिना च यथा रोहितांशा, सा च पश्चिमायां समुद्रं प्रविशति इयं च पूर्वस्यामित्यत आह–सुवर्णकूलायाः रोहितांशातिदेशन्यायेन, यथैव गङ्गासिन्धू तथैव रक्तारक्तवत्यौ नेतव्ये, तत्रापि दिग्व्य- क्तिमाह–पूर्वस्यां रक्ता पश्चिमायां रक्तावती अवशिष्टं तदेव–गङ्गासिन्धुप्रकरणोक्तमेव सम्पूर्णं नेतव्यं ।

अथात्र कूटवक्तव्यमाह–'सिहरिम्मि णं भंते ! वासहरपव्वए'इत्यादि, शिखरिणि पर्वते भगवन् ! कति कूटानि प्रज्ञप्तानि ?, गौतम ! एकादश कूटानि प्रज्ञप्तानि, तद्यथा–पूर्वस्यां सिद्धाय- तनकूटं, ततः क्रमेण शिखरिकूटं–शिखरिवर्षधरनाम्ना कूटं हैरण्यवतक्षेत्रसुरकूटं सुवर्णकूलानदी- सुरीकूटं सुरादेवीदिक्कुमारीकूटं रक्तावर्त्तनकूटं लक्ष्मीकूटं–पुण्डरीकद्रहसुरीकूटं रक्तावत्यावर्त्तनकूटं इलादेवीदिक्कुमारीकूटं तिगिच्छिद्रहपतिकूटं एवं सर्वाण्यप्येतानि पञ्चशतिकानि ज्ञातव्यानि, क्षुद्रहिमवत्कूटतुल्यवक्तव्यताकानि ज्ञेयानि, एतत्स्वामिनां राजधान्य उत्तरस्यामिति । अथास्य नामनिबन्धनं प्रष्टुमाह–'से केणट्ठेणं०अथ केनार्थेन भदन्त! एवमुच्यते शिखरीवर्षधरपर्वतः२ ? गौतम ! शिखरिणि पर्वते बहूनि कूटानि शिखरी–वृक्षस्तत्संस्थानसंस्थितानि सर्वरत्नमयानि सन्तीति तद्योगाच्छिखरी, कोऽर्थ–अत्र वर्षधराद्रौ यानि सिद्धायतनकूटादीन्येकादश कूटान्युक्तानि तेभ्योऽतिरिक्तानि बहूनि शिखराणि वृक्षाकारपरिणतानि सन्तीति, अनेन चान्येभ्यो वर्षधरेभ्यो व्यावृत्ति कृता, अन्यथा तेषामपि कूटवत्वेन शिखरित्वव्यपदेशः स्यादिति, अथवा शिखरी चात्र देवो महर्द्धिको यावत्पल्योपमस्थितिकः परिवसति तेन तत्स्वामिकत्वात् शिखरीति, 'से

तेणट्ठेण'मित्यादि निगमनवाक्यं पूर्ववदिति।

अथ सप्तमवर्षावसरः—'कहि णं'मित्यादि, क्व भदन्त! जम्बूद्वीपे द्वीपे ऐरावतं नाम वर्षं प्रज्ञप्तम्?, गौतम! शिखरिणो वर्षधरस्योत्तरस्यां उत्तरदिग्वर्त्तिनो लवणसमुद्रस्य दक्षिणस्यां 'पुरत्थिमे'त्यादि प्राग्वत् अत्रान्तरे जम्बूद्वीपे ऐरावतं नाम वर्षं प्रज्ञप्तं, स्थाणुबहुलं कण्टकबहुलं एवमनेन प्रकारेण यैव भरतस्य वक्तव्यता सैवास्यापि सर्वा निरवशेषा नेतव्या, यतो यन्मेरोर्दक्षिणभागे तन्निरवशेषमुत्तरेऽपि भागे भवति, यथा वैताढ्येन द्वेधा कृतं भरतमित्याद्युक्तं तथैवैरावतेऽपि विज्ञेयमिति, सा च कथंभूतेत्याह—सओअवणा—षट्खण्डैरावतक्षेत्रसाधनसहिता सनिक्खमणा—दीक्षाकल्याणकवर्णकसहिता सपरिनिर्व्वाणा—मुक्तिगमनकल्याणकसहिता, नवरं राजनगरी क्षेत्रदिगपेक्षया ऐरावतोत्तरार्द्धमध्ये तापक्षेत्रदिगपेक्षया त्वेपाऽपि दक्षिणार्द्ध एव केवलमिह शास्त्रे क्षेत्रदिगपेक्षया व्यवहारः, क्षेत्रदिक् च 'इंदा विजयाईया'इत्यादिना भावनीयेति, तथा वैताढ्यश्चात्र विपर्ययनगरसङ्ख्यः, जगत्यनुरोधेन क्षेत्रसाङ्कीर्ण्यार्त, तथैरावतनामा चक्रवर्त्ती वक्तव्यः, कोऽर्थः? यथा भरतक्षेत्रे भरतश्चक्रवर्त्ती तस्य च दिग्विजयनिष्क्रमणादिकं निरूपितं तथैराव- तचक्रवर्त्तिनो वाच्यं, अनेन चैरावतस्वामियोगादैरावतमिति नाम सिद्धं, अथवा ऐरावतो नाम्नाऽत्र देवो महर्द्धिको यावत्पल्योपमस्थितिकः परिवसति चेत्यध्याहार्यं, तेन तत्स्वामिकत्वादैरावतमिति व्यवह्रियते इति निगमनवाक्यं स्वयमभ्यूह्यम्॥

वक्षस्कारः—४ समाप्तः

इति सातिशयधर्मदेशनारससमुल्लासविस्मयमानएदंयुगीननराधिपतिचक्रवर्त्तिसमानश्री अकब्बरसुरत्राणप्रदत्तषाण्मासिकसर्वजगज्जन्तुजाताभयप्रदानशत्रुञ्जयादिकरमोचनस्फुरन्मानप्रदान- प्रभृतिबहुमानसाम्प्रतविजयमानश्रीमत्तपागच्छाधिराजश्रीहीरविजयसूरीश्वरपदपद्मोपास- नाप्रवणमहोपाध्यायश्रीसकलचन्द्रगणिशिष्योपाध्यायश्रीशान्तिचन्द्रगणिविरचितायां जंबूद्वीपप्रज्ञप्तिवृत्तौरत्नमञ्जूषानाम्न्यांक्षुद्रहिमवदादिवर्षधरैरावतान्तवर्षवर्णनोनामचतुर्थो वक्ष०।

मुनि दीपरत्नसागरेण संशोधिता सम्पादिता जंबूदीपप्रज्ञप्तिउपाङ्गसूत्रे

चतुर्थ वक्षस्कारस्य शान्तिचन्द्रवाचकेन विरचिता टीका परिसमाप्ता।

## वक्षस्कारः—५

वृ. सम्प्रति यदुक्तं पाण्डुकम्बलाशिलादौ सिंहासनवर्णनाधिकारे 'अत्र जिना अभिषिच्यन्ते' तत्सिंहावलोकनन्यायेनानुस्मरन् जिनजन्माभिषेकोत्सवर्णनार्थं प्रस्तावनासूत्रमाह—

मू. (२१२) *जया णं एक्कमेक्के चक्कवट्टिविजए भगवंतो तित्थयरा समुप्पज्जंति तेणं कालेणं तेणं समएणं अहेलोगवत्थव्वाओ अट्ठ दिसाकुमारीओ महत्तरिआओ सएहिं २ कूडेहिं सएहिं २ भवणेहिं सएहिं २ पासायवडेंसएहिं पत्तेअं २ चउहिं सामानिअसाहस्सीहिं चउहिं महत्तरिआहिं सपरिवाराहिं सत्तहिं अनिएहिं सत्तहिं अनि आहिवईहिं सोलसएहिं आयरक्खदेवसाहस्सीहिं अन्नेहि अ बहूहिं भवणवइवाणमंतरेहिं देवेहिं देवीहि अ सद्धिं संपरिवुडाओ महया हयनट्टगीयवाइअ जाव भोगभोगाइं भुंजमाणीओ विहरंति, तंजहा—*

वृ. यदा—यस्मिन् काले एकैकस्मिन् चक्रवर्त्तिविजेतव्ये क्षेत्रखण्डे भरतैरावतादौ भगवन्तो- स्तीर्थकराः समुत्पद्यन्ते—जायन्ते तदाऽयं जन्ममहोत्सवः प्रवर्त्तते इति शेषः, अत्र च चक्रवर्त्तिविजये

इत्यनेनाकर्मभूमिषु देवकुर्वादिषु जिनजन्मासम्भव इत्युक्तं भवति, एकैकस्मिन्नित्यत्र वीप्साकरणेन च सर्वत्रापि कर्मभूमौ जिनजन्मसम्भवश्च यथाकालमभिहित इति, तत्र वादौ षट्पञ्चाशतो दिक्कुमारीणामितिकर्तव्यता वक्तव्या, तत्राप्यधोलोकवासिनीनामष्टानामिति तासां स्वरूपमाह–'तेणं कालेण'मित्यादि, तस्मिन् काले सम्भवज्जिनजन्मके भरतैरावतेषु तृतीयचतुर्थाकलक्षणे महाविदेहेषु चतुर्थारकप्रतिभागलक्षणे, तत्र सर्वदापि तदाद्यसमयसदृशकालस्य विद्यमानत्वात् तस्मिन् समये–सर्वत्राप्यर्द्धरात्रलक्षणे, तीर्थकराणां हि मध्यरात्र एव जन्मसम्भवात्, अधोलोकवास्तव्याः–चतुर्णां गजदन्तानामधः समभूतलान्नवशतयोजनरूपां तिर्यग्लोकव्यवस्थां विमुच्य प्रतिगजदन्तं द्विद्विभावेन, तत्र भवनेषु वसनशीलाः, यत्तु गजदन्तानां षष्ठपञ्चमकूटेषु पूर्वं गजदन्तसूत्रे आसां वासः प्ररूपितस्तत्र क्रीडार्थमागमनं हेतुरिति, अन्यथा आसामपि चतुःशतयोजनादिपञ्चशतयोजनपर्यन्तोच्चत्वगजदन्तगिरिगतपञ्चशतिककूटगतप्रासादावतंसकवासित्वेन नन्दनवनकूटगतमेघङ्करादिदिक्कुमारीणामिवोर्ध्वलोकवासित्वमापत्ति ।

अथ प्रकृतं प्रस्तुमः, अष्टौ दिक्कुमार्यो–दिक्कुमारभवनपतिजातीया महत्तरिकाः–स्ववर्ग्येषु प्रधानतरिकाः स्वकेषु स्वकेषु कूटेषु–गजदन्तादिगिरिवर्तिषु स्वकेषु २ भवनेषु–भवनपतिदेवावासेषु स्वकेषु २ प्रासादावतंसकेषु–स्वस्वकूटवर्त्तिक्रीडावासेषु, सूत्रे च सप्तम्यर्थे तृतीया प्राकृतत्वात्, प्रत्येकं २, चतुर्भिः सामानिकानां–दिक्कुमारीसदृशद्युतिविभवादिकदेवानां सहस्रैः चतसृभिश्च महत्तरिकादिभिः दिक्कुमारिकातुल्यविभवाभिस्ताभिरनतिक्रमणीयवचनाभिश्च स्वस्वपरिवारसहिताभिः सप्तभिरनीकैः–हस्त्यश्वरथपदातिमहिषगंधर्वनाट्यरूपैः सप्तभिरनीकाधिपतिभि षोडशभिरात्मरक्षकदेवसहस्रैरित्यादिकं सर्वं विजयदेवाधिकार इव व्याख्येयं, ननु कासाञ्चित् दिक्कुमारीणां व्यवस्था स्थानाङ्गे पल्योपमस्थितेर्भणनात् समानजातीयत्वेनासामपि तथाभूतायुषः सम्भाव्यमानत्वाद् भवनपतिजातीयत्वं सिद्धं तेन भवनपतिजातीयानां वानमन्तरजातीयपरिकरः कथं सङ्गच्छते उच्यते । एतासां महर्द्धिकत्वेन ये आज्ञाकारिणो व्यन्तरास्ते ग्राह्या इति, अथवा वानमन्तरशब्देनात्र वनानामन्तरेषु चरन्तीति योगिकार्थसंश्रयणात् भवनपतयोऽपि वानमन्तरा इत्युच्यन्ते, उभयेषामपि प्रायो वनकूटादिषु विहरणशीलत्वादिति सम्भाव्यते, तत्त्वं तु बहुश्रुतगम्यमिति सर्वं सुस्थम् ।

मू. (२१३) *भोगंकरा १ भोगवई २, सुभोगा ३ भोगमालिनी ४ ।*
*तोयधारा ५ विचित्ता य ६, पुप्फमाला ७ अनिंदिआ ८ ॥*

वृ. आसां नामान्याह–'तंजहा' इत्यादि, तद्यथा–भोगंकरेत्यादिरूपकमेतत्, कण्ठ्यं ।

मू. (२१४) *तए णं तासिं अहेलोगवत्थव्वाणं अट्ठण्हं दिसाकुमारीणं मयहरिआणं पत्तेयं पत्तेअं आसणाइं चलंति, तए णं ताओ अहेलोगवत्थव्वाओ अट्ठ दिसाकुमारीओ महत्तरिआओ पत्तेयं २ आसणाइं चलिआइं पासंति २ त्ता ओहिं पउंजंति पउंजित्ता भगवं तित्थयरं ओहिणा आभोएंति २ त्ता अन्नमन्नं सद्दाविंति २ त्ता एवं वयासी–*

*उप्पन्ने खलु भो ! जंबुद्दीवे दीवे भयवं ! तित्थयरे तं जीयमेअं तीअपच्चुप्पन्नमनागयाणं अहेलोगवत्थव्वाणं अट्ठण्हं दिसाकुमारीमहत्तरिआणं भ० तित्थगरस्स जम्मणमहिमं करेत्तए, तं गच्छामो णं अम्हेवि भग० जम्मणमहिमं करेमोत्तिकट्टु एवं वयंति २ त्ता पत्तेअं २ आभिओगिए देवे सद्दावेंति २ त्ता एवं वयासी–*

*खिप्पामेव भो देवाणुप्पिआ ! अनेगखम्भसयसण्णिविट्ठे लीलट्ठिअ० एवं विमाणवण्णओ भाणि० जाव जोअणविच्छिण्णे दिव्वे जाणविमाणे विउव्वित्ता एअमाणत्तिअं पच्चप्पिणहत्ति । तए णं ते आभिओगा देवा अनेगखम्भसय जाव पच्चप्पिणंति, तए णं ताओ अहेलोगवत्थव्वाओ अट्ठ दिसाकुमारीमहत्तरिआओ हट्ठतुट्ठ० पत्तेयं पत्तेयं चउहिं सामानिअसाहस्सीहिं चउहिं महत्तरिआहिं जाव अन्नेहिं बहूहिं देवेहिं देवीहि अ सद्धिं संपरिवुडाओ ते दिव्वे जाणविमाणे दुरूहंति दुरूहित्ता सव्विड्ढीए सव्वजुईए घणमुइंगपणवपवाइअरवेणं ताए उक्किट्ठाए जाव देवगईए जेणेव भगवओ तित्थगरस्स जम्मणणगरे जेणेव तित्थयरस्स जम्मणभवणे तेणेव उवागच्छंति २ त्ता भगवओ तित्थयरस्स जम्मणभवणं २ तेहिं दिव्वेहिं जाणविमाणेहिं तिखुत्तो आयाहिणपयाहिणं करेंति करित्ता उत्तरपुरत्थिमे दिसीभाए ईसिं चउरंगुलमसंपत्ते धरणिअले ते दिव्वे जाणविमाणे ठविंति ठवित्ता पत्तेअं २ चउहिं सामानिअसहस्सेहिं जाव सद्धिं संपरिवुडाओ दिव्वेहिंतो जाणविमाणेहिंतो पच्चोरुहंति २ त्ता सव्विड्ढीए जाव नाइएणं जेणेव भगवं तित्थयरे तित्थयरमाया य तेणेव उवागच्छंति २ त्ता भगवं तित्थयरं तित्थयरमायरं च तिखुत्तो आयाहिणपयाहिणं करेंति करित्ता उत्तरपुरत्थिमे दिसीभाए ईसिं चउरंगुलमसंपत्ते धरणिअले ते दिव्वे जाणविमाणे ठविंति ठवित्ता पत्तेअं २ चउहिं सामानि- असहस्सेहिं जाव सद्धिं संपरिवुडाओ दिव्वेहिंतो जाणविमाणेहिंतो पच्चोरुहंति २ त्ता सव्विड्ढीए जाव नाइएणं जेणेव भगवं तित्थयरे तित्थयरमाया य तेणेव उवागच्छंति २ त्ता भगवं तित्थयरं तित्थयरमायरं च तिखुत्तो आयाहिणपयाहिणं करेंति २ त्ता पत्तेअं २ करयलपरिग्गहिअं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी -*

*नमोत्थु ते रयणकुच्छिधारिए जगप्पईवदाईए सव्वजगमंगलस्स चक्खुणो अ मुत्तस्स सव्व-जगजीववच्छलस्स हिअकारगमग्गदेसियपागिद्धिविभुपभुस्स जिनस्स नाणिस्स नायगस्स बुहस्स बोहगस्स सव्वलोगनाहस्स निम्ममस्स पवरकुलसमुब्भवस्स जाईए खत्तिअस्स जंसि लोगुत्तमस्स जननी धन्नासि तं पुन्नासि, कयत्थासि अम्हे णं देवाणुप्पिए ! अहेलोगवत्थव्वाओ अट्ठ दिसा-कुमारीमहत्तरिआओ भगवओ तित्थगरस्स जम्मणमहिमं करिस्सामो तण्णं तुब्भेहिं न भाइव्वं इतिकट्टु उत्तरपुरत्थिमं दिसी भाग अवक्कमंति २ त्ता वेउव्विअसमुग्घाएणं समोहणंति २ त्ता संखिज्जाइं जोयणाइं दंडं निसरंति -*

*तंजहा—रयणाणं जाव संवट्टगवाए विउव्वंति २ त्ता तेणं सिवेणं मउएणं मारुएणं अणुद्धुएणं भूमितलविमलकरणेणं मनहरेणं सव्वोउअसुरहिकुसुमगंधाणुवासिएणं पिंडिमणिहारिमेणं गंधुद्धुएणं तिरिअं पवाइएणं भगवओ तित्थयरस्स जम्मणभवणस्स सव्वओ समंता जोअण- परिमंडलं से जहा नामए कम्मगरदारए सिआ जाव तहेव जं तत्थ तणं वा पत्तं वा कट्ठं वा कय- वरं वा असुइमचोक्खं पूइअं दुब्भिगंधं तं सव्वं आहुणिअ २ एगंते एडेंति एडेंति २ जेणेव भगवं तित्थयरे तित्थयरमाया य तेणेव उवागच्छंति २ त्ता भगवओ तित्थयरस्स तित्थयरमायाए अ अदूरसामंते आगायमाणीओ परिगायमाणीओ चिट्ठंति ।*

वृ. अथैतास्वेवं विहरन्तीषु सतीषु किं जातमित्याह—'तए ण'मित्यादि, ततस्तासा-मधोलोगवास्तव्यानामष्टानां दिक्कुमारीणां महत्तरिकाणां प्रत्येकं२मासनानि चलन्तीति, अथैताः किं किमकार्षुरित्याह—'तए ण'मित्यादि, ततः—आसनप्रकम्पानन्तरं ताः—अधोलोकवास्तव्या

अष्टौ दिक्कुमार्यो महत्तरिकाः प्रत्येकं २ आसनानि चलितानि पश्यन्ति दृष्ट्वा चावधिं प्रयुञ्जन्ति प्रयुज्य च भगवन्तं तीर्थकरमवधिना आभोगयंति आभोग्य च अन्यमन्यं शब्दयन्ति शब्दयित्वा च एवमवादिषुः, यदवादिषुस्तदाह– 'उप्पन्ने'इत्यादि, उत्पन्नः खलु भो ! जंबूद्वीपे द्वीपे भगवांस्तीर्थकरः तज्जीतमेतत्–कल्प एषोऽतीतप्रत्युत्पन्नानागतानामधोलोकवास्तव्यानामष्टानां दिक्कुमारीमहत्तरिकाणां भगवतो जन्ममहिमां कर्त्तुं, तद् गच्छामो वयमपि भगवतो जन्ममहिमां कुर्म इतिकृत्वा–धातूनामनेकार्थत्वान्निश्चित्य मनसा एवं–अनन्तरोक्तं वदन्ति, उदित्वा च प्रत्येकं २ आभियोगिकान् देवान् शब्दयन्ति, शब्दयित्वा च एवमवादिषुः, किमवादिषुरित्याह–

'खिप्पामेव'इत्यादि, भो देवानुप्रियाः ! क्षिप्रमेव अनेकस्तम्भशतसन्निविष्टानि लीलास्थितशालभञ्जिकाकानीत्येवमनेन क्रमेण विमानवर्णको भणितव्यः, स चायं– 'ईहामिगउसभतुरगणरमगरविहगवालगकिन्नररुरुसरभचमरकुञ्जरवणलयपउमलयभत्तिचित्ते खंभुग्गयवइरवेइआपरिगयाभिरामे विज्जाहरजमलजुअलजन्तजुत्ते विवअच्चीसहस्समालिणीए रूवगसहस्सकलिए भिसमाणे भिब्भिसमाणे चक्खुल्लोअणलेसे सुहफासे सस्सिरीअरूवे घंटावलिअमहुरमणहरसरे सुभे कंते दरिसणिज्जे णिउणोविअमिसिमिसिंतमणिरयणघंटिआजालपरिक्खित्ते'त्ति, कियत्पर्यन्तमित्याह– यावद्योजनविस्तीर्णानि दिव्यानि यानाय–इष्टस्थाने गमनाय विमानानि अथवा यानरूपाणि–वाहनरूपाणि विमानानि यानविमानानि विकुर्वत–वैक्रियशक्त्या सम्पादयत विकुर्वित्वा च एनामाज्ञप्तिं प्रत्यर्पयत, अथ यानविमानवर्णकव्याख्या प्राग्वद् ज्ञेया, तोरणादिवर्णकेषु एतद्विशेषणगणस्य व्याख्यातत्वात्, ततस्ते किं चक्रुरित्याह– 'तए णं'मित्यादि ततस्ते आभियोगिका देवा अनेकस्तम्भशतसन्निविष्टानि यावदाज्ञां प्रत्यर्पयन्ति, अथैताः किं कुर्वन्तीत्याह– 'तए णं ताओ'इत्यादि, ततस्ता अधोलोकवास्तव्या अष्टौ दिककुमारीमहत्तरिकाः हट्ठतुट्ठेत्याद्येकदेशदर्शनेन सम्पूर्ण आलापको ग्राह्यः, स चायं– हट्ठतुट्ठचित्तमाणंदिआ पीअमणा परमसोमणस्सिआ हरिसवसविसप्पमाणहिअया विअसिअव- रकमलनयणा पचलिअवरकडगतुडिअकेऊरमउड- कुण्डलहारविरायंतरइअवच्छा पालंबपलंबमाण- घोलंतभूसणधरा ससंभमं तुरिअं चवलं सीहासणाओ अब्भुट्ठेन्ति २ त्ता पायपीढाओ पच्चोरुहंति २ त्ता' इति प्रत्येकं २ चतुर्भिः सामानिकसहस्रैः चतसृभिश्च महत्तरिकाभिर्यावदन्यैर्बहुभिर्देवैर्देवीभिश्च सार्द्धं संपरिवृताः तानि दिव्यानि यानविमानान्यारोहंति, आरोहणोत्तरकालं येन प्रकारेण सूतिकागृहमुपतिष्ठन्ते तथाऽऽह–

'दुरुहित्ता'इत्यादि, आरुह्य च सर्वर्द्ध्या सर्वद्युत्या घनमृदङ्ग–मेघवद् गम्भीरध्वनिकं मृदङ्गं पणवो–मृत्पटहः, उपलक्षणमेतत् तेनान्येषामपि तूर्याणा संग्रहः, एतेषां प्रवादितानां यो रवस्तेन, तया उत्कृष्टया यावत्करणात् 'तुरिआए चवलाए' इत्यादिपदसंग्रहः प्राग्वत् देवगत्या यत्रैव भगवतस्तीर्थकरस्य जन्मनगरं यत्रैव च तीर्थकरस्य जन्मभवनं तत्रैवोपागच्छंति उपागत्य च भगवतस्तीर्थकरस्य जन्मभवनं तैर्दिव्यैर्यानविमानैस्त्रिकृत्वः आदक्षिणप्रदक्षिणं कुर्वन्ति, त्रीन् वारान् प्रदक्षिणयन्तीत्यर्थः, त्रि प्रदक्षिणणीकृत्य च उत्तरपौरस्त्ये दिग्भागे–ईशानकोणे ईषच्चतुरङ्गुलमसम्प्राप्तानि धरणितले तानि दिव्यानि यानविमानानि स्थापयन्तीति । अथ यच्चक्रुस्तदाह–

स्थापयित्वा च प्रत्येकं २ अष्टावपीत्यर्थः चतुर्भिः सामानिकसहस्रैर्यावत् सार्द्धं सम्परिवृता दिव्येभ्यो यानविमानेभ्यः प्रत्यवरोहंति प्रत्यवरुह्य च सर्वर्द्ध्या यावच्छब्दात् सर्वद्युत्यादिपरिग्रहः

कियत्पर्यन्तमित्याह–'संखपणवभेरिझल्लरिख-रमुहिहुडुक्कमुरजमुइंगदुंदुहिनिग्घोसनाइएणं'ति, यत्रैव भगवांस्तीर्थकरमाता च तत्रैवोपागच्छंति, उपागत्य च भगवन्तं तीर्थकरं तीर्थकरमातरं च त्रि प्रदक्षिणयन्ति त्रि प्रदक्षिणीकृत्य च प्रत्येकं करतलपरिगृहीतं शिरस्यावर्त्त मस्तके अञ्जलिं कृत्वा एवं–वक्ष्यमाणमवादिषुः, मदवादिषुस्तदाह– नमोऽस्तु ते–तुभ्यं रत्नं–भगवल्लक्षणं कुक्षौ धरतीति रत्नकुक्षिधारिके अथवा रत्नगर्भावद् गर्भधारकत्वेनापरस्त्रीकुक्षिभ्योऽतिशायित्वेन रत्नरूपां कुक्षिं धरतीति, शेषं तथैव, तथा जगतो–जगद्वर्त्तिजनानां सर्वभावानां प्रकाशकत्वेन प्रदीप इव प्रदीपो भगवान् तस्य दीपिके, सर्वजगन्मङ्गलभूतस्य चक्षुरिव चक्षु सकल-जगद्भावदर्शकत्वेन तस्य, चः समुच्चये, चक्षुश्च द्रव्यभावभेदाभ्यां द्विधा, तत्राद्यं भावचक्षुरसहकृतं नार्थप्रकाशकं तेन भावचक्षुषा भगवानुपमीयते, तच्चामूर्त्तमिति ततो विशेषमाह–मूर्त्तस्य–मूर्त्तिमतः चक्षुर्ग्राह्यस्येत्यर्थः, सर्वज- गज्जीवाना वत्सलस्य–उपकारकस्य उक्तार्थे विशेषणद्वारा हेतुमाह–हितकारको मार्गो–मुक्तिमार्गः सम्यग्ज्ञानदर्शनचारित्ररूपस्तस्य देशिका–उपदेशिका उपदेशदर्शिकेत्यर्थः, तथा विभ्वी–सर्वभाषा- नुगमनेन परिणमनात् सर्वव्यापिनी सगकलश्रोतृजनहृदयसङ्क्रान्ततात्पर्यार्था एवंविधा वागऋद्धि–वाकसम्पत्तस्याः प्रभुः–स्वामी सातिशयवचनलब्धिक इत्यर्थः, तस्य तथा, अत्र विशेषणस्य परनिपातः प्राकृतत्वात् ।

जिनस्य–रागद्वेषजेतुः ज्ञानिनः–सातिसयज्ञानयुक्तस्य नायकस्य–धर्मवरचक्रवर्त्तिनः बुद्धस्य–विदिततत्वस्य बोधकस्य–परेषामावेदिततत्वस्य सकललोकनाथस्य–सर्वप्राणिवर्गस्य बोधिबीजाधानसंरक्षणाभ्यां योगक्षेमकारित्वात् निर्ममस्य–ममत्वरहितस्य प्रवरकुलसमुद्भवस्य जात्या क्षत्रियस्य एवंविधविख्यातगुणस्य लोकोत्तमस्य यत्वमसि जननी तत्वं धन्याऽसि पुण्यवत्यसि कृतार्थाऽसि, वयं हे देवानुप्रिये ! अधोलोकवास्तव्या अष्टौ दिककुमारीमहत्तरिकाः भगवतो जन्ममहिमां करिष्यामस्तेन युष्माभिर्न भेतव्यं, असम्भाव्यमानपरजनापातेऽस्मिन् रहःस्थाने इमा विसदृशजातीयाः किमितशङ्काकुलं चेतो न कार्यमित्यर्थः, अथैतासामितिकर्त्तव्यतमाह–

'इतिकट्टु उत्तरपुरत्थिमं दिसीभाग' मित्यादि,इतिकृत्वा–प्रस्तावादित्युक्त्वा ता एवोत्तर-पौरस्त्यं दिग्भागमपक्रामन्ति, अपक्रम्य च वैक्रियसमुदघातेन समवघ्नन्ति समवहत्य च सङ्ख्यातानि योजनानि दण्डं निसृजन्ति, निसृज्य च किं ताः कुर्वन्ति ?, तदेवाह–तद्यथा रत्नानां यावत्पदात् 'वइराणं वेरुलिआणं लोहिअक्खाणं मसारगल्लाणं हंसगब्भाणं पुलयाणं सोगंधियाणं जोईरसाणं अंजणाणं पुलयाणं रयणाणं जायरूवाणं अंकाणं फलिहाणं रिट्ठाणं अहाबायरे पुग्गले परिसाडेइ, अहासुहुमे पुग्गले परिआएइ, दुच्चंपि वेउव्विअसमुग्घाएणं समोहणइ २ त्ता' इति पदसंग्रहः, एतस्य विस्तरव्याख्या पूर्वं भरताभियोगिकदेवानां वैक्रियकरणाधिकारे कृता तेन ततो ग्राह्या, वाक्ययोजनार्थं तु किञ्चिल्लिख्यते, एषां रत्नानां बादरान् पुदगलान् परिशाटय सूक्ष्मान् पुदगलान् गृह्णन्ति, पुनर्वैक्रियसमुदघातपूर्वकं संवर्त्तकवातान् विकुर्वन्ति, बहुवचनं चात्र चिकीर्षितकार्यस्य सम्यक्संसिद्ध्यर्थं पुनः पुनर्वातविकुर्वणाज्ञापनार्थं, विकुर्व्य च तेन–तत्कालविकुर्वितेन शिवेन–उपद्रवरहितेन मृदुकेन–भूमिसर्पिणा मारुतेन अनुद्धूतेन–अनूर्ध्ववारिणा भूमितल विमलकरणेन मनोहरेण सर्वर्तुकानां–षडऋतुसम्भवानां सुरभिकुसुमानां गंधेनुवासितेन पिण्डिमः–पिण्डितः सन् निर्हारिमो–दूरं विनिर्गमनशीलो यो गंधस्तेन उद्धुरेण बलिष्ठेनेत्यर्थः तिर्यकप्रवातेन–तिर्यक

वातुमारकेन भगवतस्तीर्थकरस्य जन्मभवनस्य सर्वतो दिक्षु समन्ताद्विदिक्षु योजनपरिमण्डलं 'से जहानामए कम्मारदारए सिआ जाव' इत्येतत्सूत्रैकदेशसूचितदृष्टान्तसूत्रान्तर्गतेन तहेवेति दार्ष्टान्तिकसूत्रबलादायातेन सम्मार्जतीतिपदेन सहान्वयोजना कार्या, तच्चेदं दृष्टान्तसूत्रं।

से जहानामए कम्मयरदारए सिआ तरुणे बलवं जुगवं जुवाणे अप्पायंके थिरग्गहत्थे दढपाणिपाए पिट्ठंतरोरुपरिणए घणनिचिअवट्टवलिअखंधे चम्मेट्ठगदुहणमुट्ठिअसमाहयनिचिअगत्ते उरस्सबलसमण्णागए तलजमलजुअलपरिघबाहू लंघणपवणजइणपमद्दणसमत्थे छेए दक्खे पट्ठे कुसले मेहावी निउणसिप्पोवगए एगं महंतं सिलागहत्थगं वा दंडसंपुच्छणिं वा वेणुसिलागिगं वा गहाय रायंगणं वा रायंतेउरं वा देवकुलं वा सभं वा पवं वा आरामं वा उज्जाणं वा अतुरिअमचवल-मसंभंतं निरंतरं सनिउणं सव्वओ समंता संपमज्जति' स यथानामको—यत्प्रकारनामकः कर्मदारकः स्याद्—भवेत्, आसन्नमृत्युर्हि दारको न विशिष्टसामर्थ्यभाग् भवतीत्यत् आह—

तरुणः—प्रवर्द्धमानवयाः, स च बलहीनोऽपि स्यादित्यत आह—बलवान्, कालोपद्रवोऽपि विशिष्टसामर्थ्यविघ्नहेतुरित्यत आह—युगं—सुषमदुष्षमादिकालः सोऽदुष्टो—निरुपद्रवो विशिष्टबलहेतुर्यस्यास्त्यसौ युगवान्, एवंविधश्च को भवति ?—युवा—यौवनवयस्थः, ईदृशोऽपि ग्लानः सन् निर्बलो भवत्यतः अल्पातङ्कः, अल्पशब्दोऽभावाभावचनः, तेन निरातङ्क इत्यर्थः, तथा स्थिरः—प्रस्तुतकार्यकरणेऽकम्पोऽग्रहस्तो—हस्ताग्रं यस्यासौ तथा, तथा दृढं- निबिडितर-चयमापन्नं पाणिपादं यस्य स तथा, पृष्ठं—प्रतीतं अन्तरे—पार्श्वरूप ऊरू—सक्थिनी एतानि परिणतानि— परिनिष्ठिततां गतानि यस्य स तथा, सुखादिदर्शनात् पाक्षिकः क्तान्तस्य परनिपातः अहीनाङ्ग इत्यर्थः, घननिचितौ—निबिडतरचयमापन्नौ वलिताविव वलितौ हृदयाभिमुखौ जातावित्यर्थः वृत्तौ स्कन्धौ यस्य स तथा, तथा चर्मेष्टकेनचर्मपरिणद्धकुट्टनोपगरणविशेषेण द्रुघणेन—धनेन मुष्टिकया च -मुष्ट्या समाहताःसमाहताः सन्तस्ताडितास्ताडिताः सन्तो ये निचिता—निबिडीकृताः प्रवहणप्रेष्यमाणवस्त्रग्रन्थकादयस्तद्वद् गात्रं यस्य स तथा।

उरसि भवमुरस्यं ईदृशेन बलेन समन्वागतः—आन्तरोत्साहवीर्ययुक्तः तलौ—तालवृक्षौ तयोर्यमलं—समश्रेणीकं यद्युगलं—द्वयं परिघश्च—अर्गला तन्निभे—तत्सदृश दीर्घसरलपीनत्वादिना बाहू यस्य स तथा लंघने—गर्त्तादिरतिक्रमे प्लवने—मनाक् विक्रमवति गमने जवनेअतिशीघ्रगमने प्रमर्दने—कठिनस्यापि वस्तुनश्चूर्णने समर्थः, छेकः—कलापण्डितः दक्षः—कार्याणामविमलम्बिकारी प्रष्ठो—वाग्मी कुशलः—सम्यकक्रियापरिज्ञानवान् मेधावी—सकृतश्रुतदृष्टकर्मज्ञः 'निपुणशिल्पो-पगतः' निपुणं यथा भवत्येवं शिल्पक्रियासु कौशलं उपगतः—प्राप्तः, एकं महान्तं शलाकहस्तकं—सरित्पर्णादिशलाकासमुदायं सरित्पर्णादिशलाकामयीं सम्मार्जनीमित्यर्थः वाशब्दा विकल्पार्थाः दण्डसंपुंछनीं—दण्डयुक्तां सम्मार्जनीं वेणुशलाकिकीं—वंशशलानिर्वृत्तां सम्मार्जनीं गृहीत्वा, राजाङ्गणं वा राजान्तःपुरं वा देवकुलं वा सभां वा, पुरप्रधानानां सुखनिवेशनहेतुमण्डपिकामित्यर्थः, प्रपां वा—पानीयशालां आरामं वा—दम्पत्योर्नगरासन्नरतिस्थानं उद्यानं वा—क्रीडार्थागतजनानां प्रयोजना-भावेनोर्ध्वावलम्बितयानवाहनाधाश्रयभूतं तरुखण्डं त्वरितमचपलमसम्भ्रान्तं, त्वरायां चापल्ये सम्भ्रमे वा सम्यककचवराधपगमासम्भवात्, तत्र त्वरा—मासीत्सुक्यं चापल्यं—कायौत्सुक्यं सम्भ्रमश्च—गतिस्खलनमिति निरन्तरं न तु अपान्तरालमोचनेन सुनिपुणमल्पस्याप्यचोक्षस्यापसारणेन

13 25

सम्प्रमार्जयेदिति, अथोक्तदृष्टान्तस्य दार्ष्टान्तिकयोजनामाह–

तथैवैता अपि योजनपरिमण्डलं–योजनप्रमाणं वृत्तक्षेत्रं सम्मार्जयन्तीति–यत्तत्र योजनपरिमण्डले तृणं वा पत्रं वा काष्ठं वा कचवरं वा अशुचि–अपवित्रं अचोक्षं–मलिनं पूतिकं–दुरभिगंधं तत्सर्वमाधूय २–सञ्चाल्य २ एकान्ते–योजनमण्डलादन्यत्र एडयन्ति–अपनयन्ति, अपनीयार्थात् संवर्त्तकवातोपशमं विधाय च यत्रैव भगवांस्तीर्थकरस्तीर्थकरमाता च तत्रैवोपागच्छंति उपागत्य च भगवतस्तीर्थकरस्य तीर्थकरमातुश्च नातिदूरासन्ने आगायन्त्य आ–ईषत्स्वरेण गायन्त्यः प्रारम्भकाले मंदरस्वरेण गायमानत्वात् परिगायन्त्यो–गीतप्रवृत्तिकालानन्तरं तारस्वरेण गायन्त्यस्तिष्ठन्ति । अथोर्ध्वलोकवासिनीनामवसरः–

मू. (२१५) *तेणं कालेणं तेणं समएणं उद्धलोगवत्थव्वाओ अट्ठ दिसाकुमारीमहत्तरिआओ सएहिं २ कूडेहिं सएहिं २ भवणेहिं सएहिं २ पासायवडेंसएहिं पत्तेअं २ चउहिं सामानिअसाहस्सीहिं एवं तं चेव पुव्ववण्णिअं जाव विहरंति, तंजहा–*

वृ. 'तेणं कालेणं' मित्यादि, व्यक्तं, नवरं ऊर्ध्वलोकवासित्वं चासां समभूतलात् पञ्चशत-योजनोच्चनन्दनवनगतपञ्चशतिकाष्टकूटवासित्वेन ज्ञेयं, नन्वधोलोकवासिनीनां गजदन्तगिरिगत-कूटाष्टके [illegible] भविष्यतीति चेत्, मैवं, यथाऽधोलोकवासिनीनां गजदन्तगिरीणामधो भवनेषु वासः श्रूयते तथैतासामश्रूमाणत्वेन तत्र निरन्तरं वासस्ततश्चोर्ध्वलोकवासित्वं ।

मू. (२१६) *मेहंकरा १ मेहवई २, सुमेहा ३ मेहमालिनी ४ ।*
*सुवच्छा ५ वच्छमित्ता य ६, वारिसेणा ७ बलाहगा ॥*

वृ. ताश्चेमा नामतः पद्यबन्धेनाह–"मेघङ्करा १ मेघवती २ सुमेघा ३ मेघमालिनी ४ सुवत्सा ५ वत्समित्रा ६ चः समुच्चये वारिषेणा ७ बलाहका ८ ।

मू. (२१७) *तए णं तासिं उद्धलोगवत्थव्वाणं अट्ठण्हं दिसाकुमारीमहत्तरिआणं पत्तेअं २ आसणाइं चलंति, एवं तं चेव पुव्ववण्णिअं भाणिअव्वं जाव अम्हे णं देवाणुप्पिए ! उद्धलोगवत्थव्वाओ अट्ठ दिसाकुमारीमहत्तरिआओ जेणं भगवओ तित्थगरस्स जम्मणमहिमं करिस्सामो तेणं तुब्भेहिं न भाइअव्वंतिकट्टु उत्तरपुरत्थिमं दिसीभागं अवक्कमंति २ त्ता जाव अब्भवद्दलए विउव्वंति २ त्ता जाव तं निहयरयं नट्ठरयं भट्ठरयं पसंतरयं उवसंतरयं करेंति २ खिप्पामेव पच्चुवसमंति। एवं पुप्फवद्दलंसि पुप्फवासं वासंति वासित्ता जाव कालागुरुपवर जाव सुरवराभिगमणजोग्गं करेंति २ त्ता जेणेव भयवं तित्थयरे तित्थयरमाया य तेणेव उवागच्छंति २ त्ता जाव आगायमाणीओ परिगायमाणीओ चिट्ठंति ।*

वृ. अथ यत्तासां वक्तव्यं तदाह–'तए णं तासिं उद्धलोगवत्थव्वाण' मित्यादि, व्यक्तं, नवरं तदेव पूर्ववर्णितं भणितव्यं, कियत्पर्यन्तमित्याह–'जाव अम्हे ण' मित्यादि, अत्र यावच्छब्दोऽवधिवाचको नतु संग्राहकः, 'अवक्कमित्ता जाव' त्ति अत्र यावत्पदात् 'वेउव्विअसमुग्धाएणं समोहणंति २ त्ता जाव दोच्चंपि वेउव्विअसमुग्धाएणं समोहणंति २ त्ता' इति बोध्यम्, 'अभ्रवादलकानि विकुर्व्वन्ति' अभ्रे–आकाशे वाः–पानीयं तस्य दलकानि अभ्रवार्दलकानि मेघानित्यर्थः, 'विउव्वितता जाव' त्ति अत्र यावत्करणादिदं ध्येयम्–

'से जहानामए कम्मारदारए जाव सिप्पोवगए एगं महंतं एगवारगं वा दगकुमयं वा दगथालगं वा दगकलसं वा दगभिंगारं वा गयाह रायंगणं वा प० समंता जाव समंता आव- रिसिज्जा, एवमेव ताओवि उद्धलोगवत्थव्वाओ अट्ठ दिसाकुमारीमहत्तरिआओ अब्भवद्दलए विउव्वित्ता खिप्पामेव पतणतयनायंति २ त्ता खिप्पामेव विज्जआयंति २ त्ता भगवओ तित्थगरस्स जम्मणभवणस्स सव्वओ समंता जोअणपरिमंडलं निच्चोअगं नाइमट्टिअं पविरलपफुसिअं रयरेणुवि- नासणं दिव्वं सुरभिगंधोदयवासं वासंति,' अत्र व्याख्या–

स यथा कर्मदारक इत्यादि प्राग्वत् व्याख्येयं, एकं महान्तं दकवारकं वा–मृत्तिकामय- जलभाजनविशेषं दककुम्भकं वा–जलघटं दकस्थालकं वा–कांस्यादिमयं जलपात्रं दककलशं वा जलभृंगारं वा गृहीत्वा राजाङ्गणं वा यावदुद्यानं वा आवर्षेत्–समन्तात् सिञ्चेत् एवमेता अपि उद्धलोगवत्थव्वाओ इत्यादि प्राग्वत्, क्षिप्रमेव 'पतणतणायन्ति' त्ति, अत्यन्तं गर्जन्तीत्यर्थः, गर्जित्वा च 'पविज्जआयन्ति' त्ति प्रकर्षेण विद्युतं कुर्वन्ति, कृत्वा च भगवतस्तीर्थकरस्य जन्मभवनस्य सर्वतः समन्ताद्योजनपरिमण्डल क्षेत्रं यावत्। अत्र नैरन्तर्ये द्वितीया, निरन्तरं योजनपरिमण्डलक्षेत्रे इत्यर्थः, नात्युदकं नातिमृत्तिकं यथा स्यात्तथा प्रकर्षेण यावता रेणवः स्थगिता भवन्ति तावन्मात्रेणोत्कर्षेणेति भावः, उक्तप्रकारेण विरलानि–सान्तराणि घनभावे कर्दमसम्भवात् प्रस्पृष्टानि–प्रकर्षवन्ति स्पर्शनानि मन्दस्पर्शनसम्भवे रेणुस्थगनासम्भवात् यस्मिन् वर्षे तत् प्रविरलप्रस्पृष्टं, अत एव रजसां–श्लक्ष्णरेणुपुदगलानां रेणूनां च–स्थूलतमतत्पुद्गलानां विनाशनं दिव्यं–अतिमनोहरं सुरभिगंधोदकवर्षं वर्षन्ति वर्षित्वा च, अथ प्रस्तुतसूत्रमनुश्रियते–तद् योजनपरिमण्डलं क्षेत्रं निहतरजः कुर्वन्तीति योगः, निहतं–भूय उत्थानाभावेन मन्दीकृतं रजो यत्र तत्तथा, तत्र निहतत्वं रजसः क्षणमात्रमुत्थानाभावेनापि सम्भवति तत आह–नष्टं सर्वथा सध्वस्तीभूतं रजो यत्र तत्तया, तथा भ्रष्टं वातोद्धूततया योजनमात्रात् दूरतः क्षिप्तं रजो यत्र तत्तया।

अत एव प्रशान्तं–सर्वथाऽसदिव रजो यत्र तत्तया, अस्यैवात्यन्तिकताख्यापनार्थमाह– उपशान्तं रजो यत्र तत्तया, कृत्वा च क्षिप्रमेव प्रत्युपशाम्यन्ति, गंधोदकवर्षणान्निवर्तन्त इत्यर्थः, अथासां तृतीयकर्त्तव्यकरणावसरः–एवं गंधोदकवर्षणानुसारेण पुष्पवार्दलकेन–पुष्पवर्षक- वार्दलकेन प्राकृतत्वात् तृतीयार्थे सप्तमी पुष्पवर्षं वर्षन्तीति, अत्रैवमित्यादिवाक्यसूचितमिदं सूत्रं ज्ञेयम्, 'तच्चंपि वेउव्विअसमुग्घाएणं समोहणंति २ त्ता पुप्फवद्दलए विउव्वन्ति, से जहानामए मालागारदारए सिआ जाव सिप्पोवगए एगं महं पुप्फछज्जिअं वा पुप्फपडलगं वा पुप्फचंगेरीअं वा गहाय रायंगणं वा जाव समन्ता कयग्गहगहिअकरयलपब्भट्ठविप्पमुक्केणं दसद्ध- वण्णेणं कुसुमेणं पुप्फपुंजोवयारकलिअं करेति एवमेव ताओवि उद्धलोगवत्थव्वाओ जाव पुप्फवद्दलए विउव्वित्ता खिप्पामेव पतणतणायन्ति जाव जोअणपरिमण्डलं जलयथलयभासुरप्प- भूयस्स विंटट्ठाइस्स दसद्धवण्णस्स कुसुमस्स जाणुस्सेहपमाणमित्तं वासं वासंति' त्ति।

अत्र व्याख्या–तृतीयवारं वैक्रियसमुदघातेन समवघ्नन्ति कोऽर्थः ? –संवर्त्तकवातवि- कुर्वणार्थं हि यत् वेलाद्वयमपि वैक्रियसमुद्घातेन समवहननं तत्किलैकं, द्वमभ्रवार्दलकविकुर्वणार्थं द्वितीयं इदं तु पुष्पवार्दलकविकुर्वणार्थं तृतीयं, समवहत्य च पुष्पवार्दलकानि विकुर्वन्ति, स यथानामको मालाकारदारको–मालिकपुत्रः अस्यैव प्रस्तुतकार्ये व्युत्पन्नत्वात् स्याद्यावन्निपुण-

शिल्पोपगतः एकां महतीं 'पुष्पच्छाधिकां वा' छाद्यते—उपरि स्थग्यते इति छाद्या छाद्यैव छाधिका पुष्पैर्भृता छाधिका पुष्पछाधिका तां पुष्पपटलं वा—पुष्पाधारभाजनविशेषं पुष्पचङ्गेरिका वा प्रतीतः यावत् समन्तात् रतकलहेया पराङ्मुखी सुमुखी तत्संमुखीकरणाय केशेषु ग्रहणं कचग्रहस्तत्यकारेण गृहीतं तथा करतलाद्विप्रमुक्तं सत् प्रभ्रष्टं करतलप्रभ्रष्टविप्रमुक्तं प्राकृतत्वात् पदव्यत्ययस्ततो विशेषणसमासः तेन कचग्रहगृहीतकरतलप्रभ्रष्टविप्रमुक्तेन दशार्द्धवर्णेन—पञ्चवर्णेन कुसुमेन—जात्यपेक्षया एकवचनं कुसुमजातेन पुष्पपुञ्जोपचारो—बलिप्रकारस्तेन कलितं करोति, एवमेता अपि ऊर्ध्वलोकवास्तव्या अष्टौ दिक्कुमारीमहत्तरिकाः पुष्फवद्दलए विउव्वित्ता इत्यादिकं योजन-परिमण्डलान्तं प्राग्वद् व्याख्येयं, वाक्ययोजना तु योजनपरिमण्डलं यावत् दशार्द्धवर्णस्य कुसुमस्य वर्षं वर्षन्तीति, कथंभूतस्य कुसुमस्य ? जलजं—पद्मादि स्थलजं—विचकिलादि भास्वरं—दीप्यमानं प्रभूतं च—अतिप्रचुरं ततः कर्मधारयः भास्वरं च तत् प्रभूतं च भास्वरप्रभूतं जलस्थलजं च तत् भास्वरप्रभूतं च तत्तथा, 'वृन्तस्थायिनः' वृन्तेन—अधोभागवर्तिना तिष्ठतीत्येवंशीलस्य, तथा, वृन्तमधोभागे पत्राण्युपरीत्येवं स्थानशीलस्येत्यर्थः, कथंभूतं वर्षं ? – जान्ववधिक उत्सेधो जानूत्सेधस्तस्य प्रमाणं—द्वात्रिंशदंगुललक्षणं तेन सदृशी मात्रा यस्य स तथा तं, द्वात्रिंशदंगुलानि चैवं—चरणस्य चत्वारि जंघायाश्चतुर्विंशति जानुनश्चत्वारीति, एवमेव सामुद्रिके चरणादिमानस्य भणनात्, वर्षित्वा च, कियत्पर्यन्तोऽयं 'एव'मित्यादिवाक्यसूचितसूत्रसंग्रह इत्याह—

यावत् 'कालागुरुपवर' त्ति अत्र यावच्छब्दोऽवधिवाची 'जाव सुरवराभिगमणजोग्गं' ति अत्र यावत्करणात् कुंदुरुक्कतुरुक्कडज्झंतधूवमघमघन्तगंधुद्धुआभिरामं सुगंधवरगंधिअं गंध-वट्टिभूअं दिव्वंति पर्यन्तं सूत्रं ज्ञेयं, तत्कालागुरुप्रभृतिधूपधूपितं धूपालापकव्याख्या प्राग्वत्, अथ एव 'सुरवराभिगमनयोग्यं' सुरवरस्य—इन्द्रस्याभिगमनाय—अवतरणाय योग्यं कुर्वन्ति, कृत्वा च यत्रैव भगवांस्तीर्थकरस्तीर्थकरमाता च तत्रैवोपागच्छंति, उपागत्य च यावच्छब्दात् 'भगवओ तित्थयरस्स तित्थयरमायाए य०' इति ग्राह्यं, आगायन्त्यः परिगायन्त्यस्तिष्ठन्तीति ।

अथ रुचकवासिनीदिक्कुमारीवक्तव्ये प्रथमं पूर्वरुचकस्यानामष्टानां वक्तव्यमाह—

**मू. (२१८)** *तेणं कालेणं तेणं समएणं पुरत्थिमरुअगवत्थव्वाओ अट्ठ दिसाकुमारीमहत्तरि-आओ सएहिं २ कूडेहिं तहेव जाव विहरंति, तंजहा—*

**वृ.** 'तेणं कालेणं तेणं समएण' मित्यादि, तस्मिन् काले तस्मिन् समये पौरस्त्यरुच-कवास्तव्याः—पूर्वदिग्भागवर्त्तिरुचककूटवासिन्योऽष्टौ दिक्कुमारीमहत्तरिकाः स्वकेषु स्वकेषु कूटेषु तथैव यावद् विहरन्ति, तद्यथा—

**मू. (२१९)** *नंदुत्तराय १ नंदा २, आनंदा ३ नंदिवद्धणा ४ ।*
*विजया य ५ वेजयंती ६, जयंती ७ अपराजिआ ८ ॥*

**वृ.** नन्दोत्तरा १ चः समुच्चये नन्दा २ आनन्दा ३ नन्दिवर्धना ४ विजया ५ चः पूर्ववत् वैजयन्ती ६ जयन्ती ७ अपराजिता ८ इत्येता नामतः कथिताः ।

**मू. (२२०)** *सेसं तं चेव जाव तुब्भाहिं न भाइअव्वंतिकट्टु भगवओ तित्थयरस्स तित्थयर-मायाए अ पुरत्थिमेणं आयंसहत्थगयाओ आगायमाणीओ परिगायमाणीओ चिट्ठंति । तेणं कालेणं तेणं समएणं दाहिणरुअगवत्थव्वाओ अट्ठ दिसाकुमारीमहत्तरिआओ तहेव जाव विहरंति, तंजहा—*

वृ. शेषं आसनप्रकम्पावधिप्रयोगभगवद्दर्शनपरस्पराह्वानस्वस्वाभियोगिककृतयानविमान-विकुर्व्वणादिकं तथैव यावद्युष्माभिर्न भेतव्यमिति कृत्वा भगवतः तीर्थकरस्य तीर्थकरमातुश्च पूर्वरुचकसमागतत्वात् पूर्वतो हस्तगत आदर्शो-दर्पणो जिनजनन्योः श्रृङ्गारादिविलोकनाद्युपयोगी यासां तास्तथा, विशेषणपरनिपातः प्राकृतत्वात्, आगायन्त्यः परिगायन्त्यस्तिष्ठन्तीति ।

अत्र च रुचकादिस्वरूपप्ररूपणेयं-एकादेशेन एकादशे द्वितीयादेशेन त्रयोदशे तृतीयादेशेन एकविंशे रुचकद्वीपे बहुमध्ये वलयाकारो रुचकशैलश्चतुरशीतियोजनसहस्रण्युच्चः मूले १००२२ मध्ये ७०२३ शिखरे ४०२४ योजनानि विस्तीर्ण, तस्य शिरसि चतुर्थे सहस्रे पूर्वदिशि मध्ये सिद्धायतनकूटं, उभयोः पार्श्वयोश्चत्वारि २ दिककुमारीणां कूटानि, नन्दोत्तराद्यास्तेषु वसन्तीति .सम्प्रति दक्षिणरुचकस्थानां वक्तव्यमुपक्रम्यते-'तेणं कालेणं' मित्यादि, तस्मिन् काले तस्मिन् समये दक्षिणरुचकवास्तव्या इति पूर्ववद्रूचकशिरसि दक्षिणदिशि मध्ये सिद्धायतनकूटं उभयतश्चत्वारि २ कूटानि, तत्रवासिन्य इत्यर्थः, अष्टौ दिक्कुमारीमहत्तरिकाः तथैव यावद्विहरन्ति, तद्यथा-

मू. (२२१) *समाहारा १ सुप्पइन्ना २, सुप्पबुद्धा ३ जसोहरा ४ ।*
*लच्छिमई ५ सेसवई ६, चित्तगुत्ता ७ वसुंधरा ८ ॥*

वृ. समाहारा १ सुप्रदत्ता २ सप्रबुद्धा ३ यशोधरा ४ लक्ष्मीवती ५ शेषवती ६ चित्रगुप्ता ७ वसुन्धरा ८ ।

मू. (२२२) *तहेव जाव तुब्भाहिं न माइअव्वंतिकट्टु भगवओ तित्थयरस्स तित्थयरमाऊए अ दाहिणेणं भिंगारहत्थगयाओ आगायमाणीओ परिगायमाणीओ चिट्ठंति । तेणं कालेणं तेणं समएणं पच्चत्थिमरुअगवत्थव्वाओ अट्ठ दिसाकुमारीमहत्तरिआओ सएहिं २ जाव विहरंति, तं० ।*

वृ. तथैव यावद्युष्माभिर्न भेतव्यमितिकृत्वा जिनजनन्योर्दक्षिणदिग्गतत्वाद्दक्षिणदिग्भागे जिनजननीस्नपनोपयोगिजलपूर्णकलशहस्ता आगायन्त्यः परिगायन्त्यस्तिष्ठन्तीति ।

साम्प्रतं पश्चिमरुचकस्थानां वक्तव्यतामाह-'तेणं कालेण' मित्यादि, सर्वं तथैव नवरं पश्चिमरुचकवास्तव्याः-पश्चिमदिग्भागवर्त्तिरुचकवासिन्य इति ।

मू. (२२३) *इलादेवी १ सुरादेवी २, पुहवी ३ पउमावई ४ ।*
*एगनासा ५ नवमिआ ६, भद्दा ७ सीआ य ८ अट्ठमा ॥*

वृ. नामान्यासां पद्येनाह -इलादेवी १ सुरादेवी २ पृथिवी ३ पद्मावती ४ एकनासा ५ नवमिका ६ भद्रा ७ सीता ८ चः समुच्चये, अष्टमी चेति ।

मू. (२२४) *तहेव जाव तुब्भाहिं न भाइअव्वंतिकट्टु जाव भगवओ तित्थयरस्स तित्थयरमाऊए अ पच्चत्थिमेणं तालिअंटहत्थगयाओ आगायमाणीओ परिगायमाणीओ चिट्ठंति। तेणं कालेणं तेणं समएणं उत्तरिल्लरुअगवत्थव्वाओ जाव विहरंति, तंजहा-*

वृ. कूटव्यवस्था तथैव, पश्चिमरुचकागतत्वाज्जिनजनन्योः पश्चिमदिग्भागे तालवृन्तं-व्यजनं तदहस्तगतास्तिष्ठन्तीति, उदीच्या अप्येवमेतेति तत्सूत्रमाह-'तेणं कालेण' मित्यादि, व्यक्तं, नवरमुत्तररुचकवास्तव्या-उत्तरदिग्भागवर्त्तिरुचकवासिन्य इति ।

मू. (२२५) *अलंबुसा १ मिस्सकेसी २, पुण्डरीआ य ३ वारुणी ४ ।*
*हासा ५ सव्वप्पभा ६ चेव, सिरी ७ हिरि ८ चेव उत्तरओ ॥*

वृ. नामान्यासां पद्येनाह—अलंबुसा १ मिश्रकेसी २ पण्डरीका ३ थः प्राग्वत् वारुणी ४ हासा ५ सर्वप्रभा ६ चैवेति प्राग्वत् श्रीः ७ ह्री ८ श्चोत्तरतः ।

मू. (२२६) *तहेव जाव वंदित्ता भगवओ तित्थयरस्स तित्थयरमाऊए अ उत्तरेणं चामरहत्थगयाओ आगायमाणीओ परिगायमाणीओ चिट्ठंति । तेणं कालेणं तेणं समएणं विदिसिरुअगवत्थव्वाओ चत्तारि दिसाकुमारीमहत्तरिआओ जाव विहरंति, तंजहा—चित्ता य १ चित्तकणगा २, सतेरा ३ य सोदामिणी ४ ।*

*तहेव जाव न भाइअव्वंतिकट्टु भगवओ तित्थयरस्स तित्थयरमाऊए अ चउसु विदिसासु दीविआहत्थगयाओ आगायमाणीओ परिगायमाणीओ चिट्ठंतित्ति ।*

*तेणं कालेणं तेणं समएणं मज्झिमरुअगवत्थव्वाओ चत्तारि दिसाकुमारीमहत्तरिआओ सएहिं २ कूडेहिं तहेव जाव विहरंति, तंजहा—रूआ रूआसिआ, सुरूआ रूअगावई । तहेव जाव तुब्भाहिं न भाइयव्वंतिकट्टु भगवओ तित्थयरस्स चउरंगुलवज्जं नाभिनालं कप्पंति कप्पेत्ता विअरगं खणंति खणित्ता विअरगे नाभिं निहणंति निहणित्ता रयणाण य वइराण य पूरेंति २ त्ता हरिआलिआए पेढं बंधंति २ त्ता तिदिसिं तओ कयलीहरए विउव्वंति, ते णं तेसिं कयलीहरगाणं बहुमज्झदेसभाए तओ चाउस्सालए विउव्वंति, तए णं तेसिं चाउस्सालगाणं बहुमज्झदेसभाए तओ सीहासणे विउव्वंति, तेसि णं सीहा० अयमेयारूवे वण्णावासे प०सव्वो वण्णगो भा० ।*

*तए णं ताओ रुअगमज्झवत्थव्वाओ चत्तारि दिसाकुमारीओ महतराओ जेणेव भयवं तित्थयरे तित्थयरमाया य तेणेव उवागच्छंति २ त्ता भगवं तित्थयरं करयलसंपुडेणं गिण्हंति तित्थयरमायरं च बाहाहिं गिण्हंति २ त्ता जेणेव दाहिणिल्ले कयलीहरए जेणेव चाउसालए जेणेव सीहासणे तेणेव उवागच्छंति २ त्ता भगवं तित्थयरं तित्थयरमायरं च सीहासणे निसीयावेंति २ त्ता सयपागसहस्सपागेहिं तिल्लेहिं अब्भंगेंति २ त्ता सुरभिणा गंधवट्टएणं उव्वट्टेंति २ त्ता भगवं तित्थयरं कयलपुडेण तित्थयरमायरं च बाहासु गिण्हंति २ त्ता जेणेव पुरत्थिमिल्ले कयलीहरए जेणेव चउसालए जेणेव सीहासणे तेणेव उवागच्छंति उवागच्छित्ता भगवं तित्थयरं तित्थयरमायरं च सीहासणे णिसीआवेंति २ त्ता तिहिं उदएहिं मज्जावेंति, तंजहा—*

*गंधोदएणं १ पुप्फोदएणं २ सुद्धोदएणं, मज्जावित्ता सव्वालंकारविभूसिअं करेंति २ त्ता भगवं तित्थयरं करयलपुडेणं तित्थयरमायरं च बाहाहिं गिण्हंति २ त्ता जेणेव उत्तरिल्ले कयलीहरए जेणेव चउसालए जेणेव सीहासणे तेणेव उवागच्छंति २ त्ता भगवं तित्थयरं तित्थयरमायरं च सीहासणे निसीआविंति २ त्ता आभिओगे देवे सद्दाविन्ति २ त्ता एवं वयासी—*

*खिप्पामेव भो देवाणुप्पिया ! चुल्लहिमवंताओ वासहरपव्वयाओ गोसीसचंदनकट्ठाइं साहरह, तएणं ते आभिओगा देवा ताहिं रुअगमज्झवत्थव्वाहिं चउहिं दिसाकुमारीमहत्तरिआहिं एवं वुत्ता समाणा हट्ठतुट्ठा जाव विनएणं वयणं पडिच्छंति २ त्ता खिप्पामेव चुल्लहिमवंताओ वासहरपव्वयाओ सरसाइं गोसीसचंदंकट्ठाइं साहरंति ।*

*तए णं ताओ मज्झिमरुअगवत्थव्वाओ चत्तारी दिसाकुमारी महत्तरिआओ सरगं करेंति २ त्ता अरणिं घडेंति अरणिं, घडित्ता सरएणं अरणिं महिंति २ त्ता अग्गिं पाडेंति २ अग्गिं संधुक्खंति २ त्ता गोसीसचंदणकट्ठे पक्खिवंति २ त्ता अग्गिं उज्जालंति २ समिहाकट्ठाइं पक्खिविन्ति २ त्ता अग्गिहोमं करेंति २ त्ता भूतिकम्मं करेंति २ त्ता रक्खापोट्टलिअं बंधन्ति बंधेतानानामणि-*

*रयणमतिचित्ते दुविहे पाहाणवट्टगे गहाय भगवओ तित्थयरस्स कण्णमूलंमि टिट्टिआणिवंति भवउ भयवं पव्वयाउए २ ।*

*तए णं ताओ रुअगमज्झवत्थव्वाओ चत्तारि दिसाकुमारीमहत्तरिआओ भयवं तित्थयरं करयलपुडेणं तित्थयरमायरं च बाहाहिं गिण्हंति गिण्हित्ता जेणेव भगवओ तित्थयरस्स जम्मणभवणे तेणेव उवागच्छंति २ ता तित्थयरमायरं सयणिज्जंसि निसीआविंति निसीआवित्ता भयवं तित्थयरं माउए पासे ठवेंति ठवित्ता आगायमाणीओ परिगायमाणीओ चिट्ठंतीति ।*

वृ. कूटव्यवस्था [illegible], [illegible] दिग्भागे [illegible] हस्तगता आगायन्त्यः परिगायन्त्यसतिष्ठन्ति । अथ विदिग्रुचकवासिनीनामागमनावसरः—

'तेणं कालेण'मित्यादि, व्यक्तं, नवरं विदिग्रुचकवास्तव्यास्तस्यैव रुचकपर्वतस्य शिरसि चतुर्थे सहस्रे चतसृषु विदिक्षु एकैकं कूटं तत्र वासिन्यश्चतस्रः विदिक्कुमार्यो यावद् विहरन्ति, इमाश्च स्थानाङ्गे विद्युत्कुमारीमहत्तरिका इत्युक्ता इति, एतासां चैशान्यादिक्रमेण नामान्येवं—चित्रा १ चः समुच्चये चित्रकनका २ शतेरा ३ सौदामिनी ४ तथैव यावन्न भेतव्यमितिकृत्वा, विदिगागतत्वात् भगवतस्तीर्थकरस्य तीर्थकरमातुश्च चतसृषु विदिक्षु दीपिकाहस्तगता आगायन्त्यः परिगायन्त्यस्तिष्ठन्तीति । अथ मध्यरुचकवासिन्य आगमितव्याः—

तस्मिन्काले तस्मिन् समये मध्यरुचकवास्तव्या— मध्यभागवर्तिरुचकवासिन्यः, कोऽर्थः ? —चतुर्विंशत्यधिकचतुःसहस्रप्रमाणे रुचकशिरोविस्तारे द्वितीयसहस्रे चतुर्दिग्वर्तिषु चतुर्षु कूटेषु पूर्वादिक्रमेण चतस्रस्ता वसन्तीत्यर्थः, श्रीअभयदेवसूरयस्तु षष्ठाङ्गवृत्तौ मल्ल्यध्ययने 'मज्झिमरुअगवत्थव्वा' इत्यत्र रुचकद्वीपस्याभ्यन्त- रार्द्धवासिन्य इत्याहुः, अत्र तत्त्वं बहुश्रुतगम्यं, चतस्रो दिक्कुमारिका यावद् विहरन्ति, तद्यथा -रूपा १ रूपासिका २ सुरूपा ३ रूपकावती ४, तथैव युष्माभिर्न भेतव्यमितिकृत्वा भगवतीस्तीर्थकरस्य चतुरंगुलवर्जं नाभिनालं कल्पयन्ति कल्पयित्वा च विदरकं—गर्त्तां खनन्ति खनित्वा च विदरके कल्पितां तां नाभिं निधानयन्ति, निधानयित्वा च रत्नैश्च वज्रैश्च प्राकृतत्वाद् विभक्तिव्यत्ययः पूरयन्ति पूरयित्वा च हरितालिकाभिः—दूर्वाभिः पीठं बध्नन्ति—पीठं बध्वा तदुपरि हरितालिका वपन्तीत्यर्थः, विवरक-खननादिकं च सर्वं भगवदवयवस्याशातनानिवृत्यर्थं, पीठं बध्वा च त्रिदिशि पश्चिमावर्जदिकत्रये त्रीणि कदलीगृहाणि वि०, ततस्तेषां कदलीगृहाणां बहुमध्यदेशभागे त्रीणि चतुःशालकानि— भवनविशेषान् वि०, ततस्तेषा चतुःशालकानां बहुमध्यदेशभागे त्रीण सिंहासनानि विकुर्वन्ति, तेषां सिंहासनानामयमेतादृशो वर्णव्यासः प्रज्ञप्तः, सिंहासनानां सर्वो वर्णकः पूर्ववद् भणितव्यः।

सम्प्रति सिंहासनविकुर्वणानन्तरीयकृत्यमाह— 'तए णं ताओ रुअगमज्झवत्थव्वाओ चत्तारि दिसाकुमारीओ' इत्यादि, ततस्ता रुचकमध्यवास्तव्याः चतस्रः दिक्कुमारीमहत्तरिका यत्रैव भगवां-स्तीर्थकरस्तीर्थकरमाता च तत्रैवोपागच्छंति उपागत्य च भगवन्तं तीर्थकरं करतलसम्पुटेन तीर्थकरमातरं च बाहाभिर्गृह्णन्ति गृहीत्वा च यत्रैव कदलीगृहं यत्रैव चतुःशालकं यत्रैव च सिंहासनं तत्रैवोपागच्छंति, उपागत्य च भगवन्तं तीर्थकरं तीर्थकरमातरं च सिंहासने निषादयन्ति— उपवेशयन्ति निषाद्य च शतपाकैः सहस्रपाकैः—शतकृत्वोऽपरापरौषधिरसेन कार्षापणानां शतेन वा यत्पक्वं तच्छतपाकमेवं सहस्रपाकमपि बहुवचनं तथाविधसुरभितैलसंग्रहार्थं तैलैरभ्यङ्गयंति

तैलमभ्यंजयंतीत्यर्थः, अभ्यङ्गयित्वा च सुरभिणा गंधवर्त्तकेन गंधप्रव्याप्तं–उत्पलकुष्ठादीनामुद्वर्त्तकेन–चूर्णपिण्डेन गंधयुक्तगोधूमचूर्णपिण्डेन वा उद्वर्त्तयन्ति प्रक्षिततैलापनयनं कुर्वन्ति उद्वर्त्य च भगवन्तं तीर्थकरं करतलपुटेन तीर्थकरमातरं च बाहोर्गृह्णन्ति गृहीत्वा च यत्रैव पौरस्त्यं कदलीगृहं यत्रैव चतुःशालं यत्रैव च सिंहासनं तत्रैवोपागच्छंति उपागत्य च भगवन्तं तीर्थकरं तीर्थकरमातरं च सिंहासने निषादयन्ति निषाद्य च त्रिभिरुदकैर्मज्जयंति–स्नपयंति, तान्येव त्राणि दर्शयति– 'तद्यथे'त्यादिना, गंधोदकेन–कुंकुमादिमिश्रितेन पुष्पोदकेन–जात्यादिमिश्रितेन शुद्धोदकेन–केवलोदकेन, मज्जयित्वा सर्वालङ्कारविभूषितौ कुर्वन्ति, मातृपुत्राविति शेषः, कृत्वा च भगवन्तं तीर्थकरं करतलपुटेन तीर्थकरमातरं च बाहाभिर्गृह्णन्ति गृहीत्वा च यत्रैवोत्तराहं कदलीगृहं यत्रैव च चतुःशालकं यत्रैव च सिंहासनं तत्रैव उपागच्छंति उपागत्य च भगवन्तं तीर्थकरं तीर्थकरमातरं च सिंहासने निषादयन्ति निषाद्य च आभियोगिकान् देवान् शब्दयन्ति शब्दयित्वा च एवमावादिषुः–क्षिप्रमेव भो देवानुप्रियाः! क्षुद्रहिमवतो वर्षधरपर्वताद् गोशीर्षचन्दनकाष्ठानि संहरत–समानयत, ततस्ते आभियोगा देवास्ताभी रुचकमध्यवास्तव्याभिश्चतसृभिर्दिक्कुमारीमहत्तरिकाभिरेवं–अनन्तरोक्तमुक्ताः–आज्ञप्ताः सन्तः हृष्टतुष्ट इत्यादि यावद् विनयेन वचनं प्रतीच्छंति–अङ्गीकुर्वन्ति प्रतीष्य च क्षिप्रमेव क्षुद्रहिमवतो वर्षधरपर्वतात् सरसानि गोशीर्षचन्दनकाष्ठानि संहरन्ति।

ततस्ते मध्यरुचकवास्तव्याश्चतस्रो दिक्कुमारीमहत्तरिकाः शरकं–शरप्रतिकृति-तीक्ष्णमुखमग्न्युत्पादकं काष्ठविशेषं कुर्वन्ति, कृत्वा च तेनैव शरकेन सह अरणिं–लोकप्रसिद्धं काष्ठविशेषं घटयन्ति–संयोजयन्ति, घटयित्वा च शरकेनाग्निं मथ्नन्ति, मथित्वा च अग्निं पातयन्ति, पातयित्वा च अग्निं सन्धुक्षन्ति–सन्दीपयन्ति, सन्धुक्ष्य च गोशीर्षचन्दनकाष्ठानि प्रस्तावात् खण्डशः कृतानीति बोध्यं यादृशैश्चन्दनकाष्ठैरग्निरुद्दीपितः स्यात् तादृशानीतिभावः, प्रक्षिपन्ति, प्रक्षिप्य पूर्वोहि काष्ठप्रक्षेपोऽग्न्युद्दीपनाय अयं च रक्षाकरणायेति विशेषः, प्रक्षिप्य च अग्निहोमं कुर्वन्ति,

कृत्वा च भूतेः–भस्मनः कर्म–क्रिया तां कुर्वन्ति, येन प्रयोगेणेन्धनानि भस्मरूपाणि भवन्ति तथा कुर्वन्तीत्यर्थः, कृत्वा च जिनजनन्योः शाकिन्यादिदुष्टदेवताभ्यो दृगदोषादिभ्यश्च रक्षाकरीं पोट्टलिकां बध्नन्ति, बध्ध्वा च नानामणिरत्नानां भक्ती–रचना तया विचित्रौ द्वौ पाषाणवृत्तगोलकौ पाषाणगोलकावित्यर्तं गृह्णन्ति गृहीत्वा च भगवतस्तीर्थकरस्य कर्णमूले टिट्टिआवेंतीत्यनुकरणशब्दोऽयं तेन टिट्टिआवेंति–परस्परं ताडनेन टिट्टीतिशब्दोत्पादनपूर्वकं वादयन्तीत्यर्थः।

अनेन हि बाललीलावशादन्यत्र व्यासक्तं भगवन्तं वक्ष्यमाणाशीर्वचनश्रवणे पटुं कुर्वन्तीति भावः, तथा कृत्वा च भवतु भगवान् पर्वतायुः २ इत्याशीर्वचनं ददतीति, ततः–उक्तसकलकार्यकरणानन्तरं ता रुचकमध्यवास्तव्याश्चतस्रो दिक्कुमारीमहत्तरिका भगवन्तं तीर्थकरं करतलपुटेन तीर्थकरमातरं च बाहाभिर्गृह्णन्ति गृहीत्वा च यत्रैव भगवतस्तीर्थकरस्य जन्मभवनं तत्रैवोपागच्छंति उपागत्य च तीर्थकरमातरं शय्यायां निषादयन्ति निषाद्य च भगवन्तं तीर्थकरं मातुः पार्श्वे स्थापयन्ति, स्थापयित्वा च नातिदूरासन्नगा आगायन्त्यः परिगायन्त्यस्तिष्ठन्ति, एतासां च मध्येऽष्टावधोलोकवासिन्यो गजदन्तगिरिणामधोभवनवासिन्यः, यत्वेतदधिकारसूत्रे 'सएहिं २ कूडेहिं' इति पदं तदपरसकलदिक्कुमार्यधिकारसूत्रपाठसंरक्षणार्थं, साधारणसूत्रपाठे हि यथासम्भवं विधिनिषेधौ समाश्रयणीयाविति, ऊर्ध्वलोकवासिन्योऽष्टौ नन्दनवने योजनपञ्चशतिककूटवासिन्यः अन्याश्च

सर्वा अपि रुचकसत्ककूटेषु योजनसहस्रोषु मूले सहस्रयोजनविस्तारेषु शिरसि पञ्चशतविस्तारेषु वसन्ति। उक्तं षटपञ्चाशद्दिक्कुमारीकृत्यमिति। अथेन्द्रकृत्यावसरः—

*मू. (२२७) तेणं कालेणं तेणं समएणं सक्के नामं देविंदे देवराया वज्रपाणी पुरंदरे सयक्कऊ सहस्सक्खे मघवं पागसासणे दाहिणद्धलोकाहिवई बत्तीसविमाणावाससयसहस्साहिवई एरावणवाहणे सुरिंदे अरयंबरवत्थधरे आलइयमालमउडे नवहेमचारुचित्तचंचलकुण्डलविलिहिज्जमाणगंडे भासुरबोंदी पलंबवनमाले महिड्ढीए महज्जुईए महाबले महायसे महानुभागे महासोक्खे सोहम्मे कप्पे सोहम्मवडिंसए विमाणे सभाए सुहम्माए सक्कंसि सीहासणंसि।*

*से णं तत्थ बत्तीसाए विमाणावाससयसाहस्सीणं चउरासीए सामानिअसाहस्सीणं तायत्तीसाए तायत्तीसगाणं चउण्हं लोगपालाणं अट्ठण्हं अग्गमहिसीणं सपरिवाराणं तिण्हं परिसाणं सत्तण्हं अनिआणं सत्तण्हं अनिआहिवईणं चउण्हं चउरासीणं आयरक्खदेवसाहस्सीणं अन्नेसिं च बहूणं सोहम्मकप्पवासीणं वेमाणियाणं देवाण य देवीण य आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे महयाहयनट्टगीयवाइयतंतीतलतालतुडिअघनमुइंगपडुपडहवाइअरवेणं दिव्वाइं भोगभोगाइं भुंजमाणे विहरइ।*

*तए णं तस्स सक्कस्स देविंदस्स देवरन्नो आसणं चलइ, तए णं से सक्के जाव आसणं चलिअं पासइ २ त्ता ओहिं पउंजइ पउंजित्ता भगवं तित्थयरं ओहिणा आभोएइ २ त्ता हट्ठतुट्ठचित्ते आनंदिए पीइमणे परमसोमनस्सिए हरिसवसविसप्पमाणहिअए धाराहयकयंबकुसुमचंचुमालइअऊससिअरोमकूवे विअसिअवरकमलनयणवयणे पचलिअवरकडगतुडिअकेऊरमउडे कुंडलहारविरायंतवच्छे पालंबपलम्बमाणघोलंतभूसणधरे ससंभमं तुरिअं चवलं सुरिंदे सीहासणाओ अब्भुट्ठेइ २ त्ता पायपीढाओ पच्चोरुहइ २ त्ता वेरुलिअवरिट्ठरिट्ठअंजणनिउणोविअमिसिमिसिंतमणिरयणमंडिआओ पाउआओ ओमुअइ २ त्ता एगसाडिअं उत्तरासंगं करेइ २ त्ता अंजलिमउलियग्गहत्थे तित्थयराभिमुहे सत्तट्ठ पयाइं अनुगच्छइ २ त्ता वामं जाणुं अंचेइ २ त्ता दाहिणं जाणुं धरणीअलंसि साहट्टु तिक्खुत्तो मुद्धाणं धरणियलंसि निवेसेइ २ त्ता ईसिं पच्चुण्णमइ २ त्ता कडगतुडिअथंभिआओ भुआओ साहरइ २ त्ता करयलपरिग्गहिअं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी—*

*नमोत्थु णं अरहंताणं भगवंताणं, आइगराणं तित्थयराणं सयंसंबुद्धाणं, पुरिसुत्तमाणं पुरिससीहाणं पुरिसवरपुंडरीआणं पुरिसवरगंधहत्थीणं, लोगुत्तमाणं लोगनाहाणं लोगहियाणं लोगपईवाणं लोगपज्जोअगराणं, अभयदयाणं चक्खुदयाणं मग्गदयाणं सरणदयाणं जीवदयाणं बोहिदयाणं, धम्मदयाणं धम्मदेसयाणं धम्मनायगाणं धम्मसारहीणं धम्मवरचाउरंतचक्कवट्टीणं, दीवो ताणं सरणं गई पइट्ठा अप्पडिहयवरनाणदंसणधराणं विअट्टछउमाणं, जिणाणं जावयाणं तिन्नाणं तारयाणं बुद्धाणं बोहयाणं मुत्ताणं मोअगाणं, सव्वन्नूणं सव्वदरिसीणं सिवमयलमरुअमणंतमक्खयमव्वाबाहमपुणरावित्तिसिद्धिगइणामधेयं ठाणं संपत्ताणं नमो जिणाणं जिअभयाणं।*

*नमोऽत्थु णं भगवओ तित्थगरस्स आइगरस्स जाव संपाविउकामस्स, वंदामि णं भगवंतं तत्थगयं इहगए, पासउ मे भयवं! तत्थगए इहगयंतिकट्टु वंदइ नमंसइ २ त्ता सीहासणवरंसि पुरत्थाभिमुहे सन्निसण्णे। ते णं तस्स सक्कस्स देविंदस्स देवरन्नो अयमेआरूवे जाव संकप्पे समुप्पज्जित्था—उप्पन्ने खलु भो जंबु भो जंबुद्दीवे दीवे भगवं तित्थयरे तं जीयमेयं*

तीअपच्चुप्पन्नमणागयाणं सक्काणं देविंदाणं देवराईणं तित्थयराणं जम्मणमहिमं करेत्तए, तं गच्छामि णं अहंपि भगवओ तित्थगरस्स जम्मणमहिमं करेमित्तिकट्टु एवं संपेहेइ २ त्ता हरिणेगमेसिं पायत्ताणीयाहिवइ, देवं सद्दावेत्ति २ त्ता एवं वयासी–

खिप्पामेव भो देवाणुप्पिआ ! सभाए सुहम्माए मेघोघरसिअं गंभीरमहुरयरसद्दं जोयणपरिमण्डलं सुघोसं सूसरं घंटं तिक्खुत्तो उल्लालेमाणे २ महया महया सद्देणं उग्घोसेमाणे २ एवं वयाहि–

आणवेइ णं भो सक्के देविंदे देवराया गच्छइ णं भो सक्के देविंदे देवराया जंबुद्दीवे २ भगवओ तित्थयरस्स जम्मणमहिमं करित्तए, तं तुब्भेवि णं देवाणुप्पिआ ! सव्विद्धीए सव्वजुईए सव्वबलेणं सव्वसमुदएणं सव्वायरेणं सव्वविभूईए सव्वविभूसाए सव्वसंभमेणं सव्वनाडएहिं सव्वोवरोहेहिं सव्वपुप्फगंधमल्लालंकारविभूसाए सव्वदिव्वतुडिअसद्दसण्णिणाएणं महया इद्धीए जाव रवेणं निअयपरिआलसंपरिवुडा सयाइं २ जाणविमाणवाहणाइं दुरूढा समाणा अकालपरिहीणं चेव सक्कस्स जाव अंतिअं पाउब्भवह । तए णं से हरिणेगमेसी देवे पायत्ताणीयाहिवई सक्केणं ३ जाव एवं वुत्ते समाणे हट्ठतुट्ठ जाव एवं देवोत्ति आणाए विनएणं वयणं पडिसुणेइ २ त्ता सक्कस्स ३ अंतिआओ पडिनिक्खमइ २ त्ता जेणेव सभाए सुहम्माए मेघोघरसिअंगम्भीरमहुरयरसद्दा जोअणपरिमण्डला सुघोसा घंटा तेणेव उवागच्छइ २ त्ता तं मेघोघरसिअगम्भीरमहुरयरसद्दं जोअणपरिमण्डं सुघोसं घंटं तिक्खुत्तो उल्लालेइ ।

तए णं तीसे मेघोघरसिअगम्भीरमहुरयरसद्दाए जोअणपरिमण्डलाए सुघोसाए घंटाए तिक्खुत्तो उल्लालिआए समाणीए सोहम्मे कप्पे अन्नेहिं एगूणेहिं बत्तीसविमाणावाससयसहस्सेहिं अन्नाइं एगूणाइं बत्तीसं घंटासयसहस्साइं जमगसमगं कणकणारावं काउं पयत्ताइं हुत्था इति

तए णं सोहम्मे कप्पे पासायविमाणनिक्खुडावडिअसद्दसमुट्ठिअघंटापडेंसुआसयसहस्ससंकुले जाए आवि होत्था इति, तए णं तेसिं सोहम्मकप्पवासीणं बहूणं वेमाणियाणं देवाण य देवीण य एगंतरइपसत्तणिच्चपमत्तविसयसुहमुच्छिआणं सूसरघंटारसिअविउलबोलपूरिअचवलपडिबोहणे कए समाणे घोसणकोऊहलदिण्णकण्णएगग्गचित्तउवउत्तमाणसाणं से पायत्ताणीआहिवई देवे तंसि घंटारवंसि निसंतमडिसंतंसि समाणंसि तत्थ तत्थ तहिं २ देसे महया महया सद्देणं उग्घोसेमाणे २ एवं वयासीति–

हंत ! सुणंतु भवंतो बहवे सोहम्मकप्पवासी वेमाणिअदेवा देवी अ सोहम्मकप्पवइणो इणमो वयणं हिअसुहत्थं–आणावइ णं भो सक्के तं चेव जाव अंतिअं पाउब्भवहत्ति, तए णं ते देवा देवीओ अ एअमट्ठं सोच्चा हट्ठतुट्ठ जाव हिअआ अप्पेगइआ वंदणवत्तिअं एवं पूअणत्तिअं सक्कारवत्तिअं सम्माणपत्तिअं दंसणवत्तिअं जिनभत्तिरागेणं अप्पेगइआ तं जीअमेअं एवमादित्तिकट्टु जाव पाउब्भवंतिति ।

तए णं से सक्के देविंदे देवराया ते विमाणिए देवे देवीओ अ अकालपरिहीणं चेव अंतिअं पाउब्भवमाणे पासइ २ त्ता हट्ठे पालयं नामं आभिओगिअं देवं सद्दावेइ २ त्ता एवं वयासी–

खिप्पामेव भो देवाणुप्पिआ ! अनेगखम्भसयसण्णिविट्ठं लीलट्ठियसालभंजिआकलिअं ईहामिअउसभतुरगणरमगरविहगवालगकिण्णररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्तं खंभुग्गयवयवइरवेइआपरिगयाभिरामं विज्जाहरजमलजुअलजंतजुत्तंपिव अच्चीसहस्समालिणीअं

*सवगसहस्सकलिअं भिसमाणं चक्खुल्लोअणलेसं सुहफासं सस्सिरीअरुवं घंटावलिअमहुरमणहरसरं सुहं कंतं दरिसणिज्जं निउणोविअमिसिमिसिसिंतमणियणघंटिआजालपरिक्खित्तं जोयणसहस्सवच्छिण्णं पञ्चजोअणसयमुव्विद्धं सिग्घं तुरिअं जइणनिव्वाहिं दिव्वं जाणविमाणं विउव्वाहि २ ता एअमाणत्तिअं पच्चप्पिणाहि ।*

वृ. 'तेणं कालेण'मित्यादि, तस्मिन् काले तस्मिन् समये इत्यत्र समयो दिक्कुमारीकृत्यानन्तरीयत्वेन विशेषणीयः शक्रो नाम सौधर्माधिपतिरित्यादिव्याख्यानं कल्पसूत्रटीकादौ प्रसिद्धात्वान्नात्र लिख्यते, अथ वन्दननमस्करणानन्तरं शक्रस्य सिंहासनोपवेशने यदभूत्तदाह–

'ततः' सिंहासनोपवेशनानन्तरं तस्य शक्रस्य देवेन्द्रस्य देवराज्ञः अयमेतादृशो यावत्सङ्कल्पः समुदपद्यत, कोऽसावित्याह–उत्पन्नः खलु भो ! जंबूद्वीपे द्वीपे भगवांस्तीर्थकरः तस्माज्जीतमेतदतीतप्रत्युत्पन्नानागतानां शक्राणां देवेन्द्राणां देवराज्ञां तीर्थक-राणां जन्ममहिमां कर्तुं तद् गच्छामि णमिति प्राग्वत् अहमपि भगवतस्तीर्थकरस्य जन्ममहिमां करोमीतिकृत्वा–इतिहेतुपदमाव्येवं - वक्ष्यमाणं सम्प्रेक्षते सम्प्रेक्ष्य च हरेः–इन्द्रस्य निगमं–आदेश- मिच्छतीति हरिनिगमेषी तं अथवा इन्द्रस्य नैगमेषी नामा देवस्तं पदात्यनीकाधिपतिं देवं शब्दयति शब्दयित्वा चैवमवादीत्, किमवादीदित्याह–क्षिप्रमेव भो देवानुप्रिया ! सभायां सुधर्मायां मेघानामोघः–संघातो मेघौघस्तस्य रसितं–गर्जितं तद्वद् गम्भीरो मधुरतरश्च शब्दो यस्याः सा तथा तां योजनप्रमाणं परिमण्डलं–भावप्रधानत्वान्निर्देशस्य पारिमाण्डल्यं–वृत्तत्वं यस्याः सा तथा तां शब्दो यस्याः सा तथा तां सुघोषां नाम सुस्वरां घंटां त्रिकृत्वः–त्रीन् वारान् उल्लालयन् २ –ताडयन् २ महता २ शब्देनोदघोषयन् २ एवं वद–आज्ञापयति भो देवाः ! शक्रो देवेन्द्रो देवराजा, किमित्याह–

गच्छति भोः ! शक्रो देवेन्द्रो देवराजा जंबूद्वीपे द्वीपे भगवतस्तीर्थकरस्य जन्ममहिमां कर्तुं, सामान्यतो जिनवर्णके प्रक्रान्तेऽपि यज्जम्बूद्वीपनामग्रहणं तज्जम्बूद्वीपप्रज्ञप्त्यधिकारात्, तद्यूयमपि देवानुप्रियाः ! सर्वर्द्ध्या सर्वद्युत्या सर्वबलेन सर्वसमुदायेन सर्वादरेण सर्वविभूषया सर्वदिव्यत्रुटितशब्दसन्निनादेन महत्या ऋद्ध्या यावद्रवेण अत्राव्याख्यातपदानि यावत्पदसंग्राह्यं च प्राग्वत् निजकपरिवारसम्परिवृताः स्वकानि स्वकानि यानविमानानि प्राग्वत् वाहनानि– शिबिकादीन्यारूढाः सन्तोऽकालपरिहीणं–निर्विलम्बं यथा स्यात्तथा चैवोऽवधारणे शक्रस्य यावत्क- रणात् देवेन्द्रस्य देवराज्ञः इतिपदद्वयंग्राह्यं अन्तिकं–समीपंप्रादुर्भवत, अथ स्वाम्यादेशानन्तरं हरिणेगमेषी यदकरोत्तदाह–

'तए णं से हरिणेगमेसी'इत्यादि, ततः स हरिणेगमेषी देवः पदात्यनीकाधिपतिः शक्रेण देवेन्द्रेण देवराज्ञा एवमुक्तः सन् हृष्ट इत्यादि यावदेवं देव इति आज्ञया विनयेन वचनं प्रतिश्रृणोति प्रतिश्रुत्य च शक्रान्तिकात् प्रतिनिष्क्रामति प्रतिनिष्क्रम्य च यत्रैव सभायां सुधर्मायां मेघौघरसितगम्भीरमधुरतरशब्दा योजनपरिमण्डला सुघोषा घंटा तत्रैवोपागच्छति उपागत्य च तां मेघौघरसितगम्भीरमधुरतरशब्दांयोजनपरिमण्डलां सुघोषां घंटांत्रिकृत्व उल्लालयतीति, उल्लालनानन्तरं यदजायत तदाह–

'तए णं तीसे मेघोघरसिअगम्भीरमुहरयर'इत्यादि, ततः–उल्लालनानन्तरं तस्यां मेघौघरसितगम्भीरमधुरतरशब्दायां योजनपरिमण्डलायां सुघोषायां घंटायां त्रिकृत्व उल्लालितायां सत्यां सौधर्मे कल्पे अन्येषु एकोनेषु द्वात्रिंशतविमानरूपा ये आवासा–देववासस्थानानि तेषां शतसहस्रेषु, अत्र सप्तम्यर्थे तृतीया, अन्यान्येकोनानि द्वात्रिंशद् घंटाशतसहस्राणि यमकसमकं–युगपत् कणकणारावं कर्तुं प्रवृत्तान्यप्यभवन्, अत्रापिशब्दो भिन्नक्रमत्वात् घंटाशतसहस्राण्यपि इत्येवं

योजनीयः, अथ घंटानादतो यत् प्रवृत्तं तदाह– 'ततो' घंटानां कणकणारावप्रवृत्तेरनन्तरं सौधर्म्मः कल्पः प्रासादानां विमानानां च ये निष्कुटा–गम्भीरप्रदेशास्तेषु ये आपतिताः–सम्प्राप्ताः शब्दाः–शब्दवर्गणापुदग-लास्तेभ्यः समुत्थितानि यानि घंटाप्रतिश्रुतां–घंटासम्बन्धिप्रतिशब्दानां शतसहस्राणि तैः संकुलो जातश्चाप्यभूत्,–घंटायां महता प्रयत्नेन ताडितायां ये विनिर्गताः शब्दपुद्गला- स्तत्प्रतिघातवशतः सर्वासु दिक्षु विदिक्षु च दिव्यानुभावतः समुच्छलितैः प्रतिशब्दैः सकलोऽपि सौधर्म्मः कल्पो बधिर उपजायत इति, एतेन द्वादशयोजनेभ्यः समागतः शब्दः श्रोत्रग्राह्यो भवति न परतः ततः कथमेकत्र ताडितायां घंटायां सर्वत्र तच्छब्दश्रुतिरुपजायत इति यदुच्यते तदपा- कृतमवसेयं, सर्वत्र दिव्यानुभावतस्तथारूपप्रतिरूपशब्दोच्छलने यथोक्तदोषासम्भवात्, एवं शब्दमये सौधर्म्मे कल्पे सञ्जाते पदातिपतिर्यदकरोत् तदाह–'तए ण'मित्यादि, ततः–शब्दव्याप्त्यनन्तरं तेषां सौधर्मकल्पासिनां बहूनां वैमानिकानां देवानां देवीनां च एकान्तेन रतौ–रमणे प्रसक्ता–आसक्ता अत एव नित्यप्रमत्ता विषयसुखेषु मूर्च्छिता–अध्युपपन्नास्ततः पदत्रयस्य पदद्वय २ मीलनेन कर्मधारयस्तेषां सुस्वरा या पंक्तिरथन्या- येन सुघोषा घंटा तस्याः रसितं तस्माद् विपुलः–सकलसौधर्मदेवलोककुक्षिम्भरियों बोलः–कोलाह- लस्तेन, अत्र तृतीयालोपः प्राकृतत्वात्, त्वरितं–शीघ्रं चपले–असम्भ्रमे प्रतिबोधने कृते सति आमिकालसम्भाव्यमाने घोषणे कुतूहलेन–किमिदानीमुदघोषणं भविष्यतीत्यात्मकेन दत्तौ कर्णौ यैस्ते तथा, एकाग्रं– घोषण- श्रवणैकविषयं चित्तं येषां ते तथा, एकाग्रचित्तत्वेऽपि कदाचिन्नोपयोगः स्याच्छाद्मस्थ्यवशादत आह–उपयुक्तमानसाः–शुश्रूषितवस्तुग्रहणपटुमनसस्ततो विशेषणसमास- स्तेषां स पदात्यनीकाधिपतिर्देवस्तस्मिन् घंटारवे नितरां शान्तः–अत्यन्तमन्दभूतः ततः प्रकर्षेण–सर्वात्मना शान्तः प्रशान्तः ततश्छिन्नप्ररूढ इत्यादाविव विशेषणसमासस्तस्मिन् सति, तत्र तत्र– महति देशे तस्मिन् २–देशैकदेशे महता २ शब्देन–तारतारस्वरेण उदघोषयन् २ एवमवादीत

'हंत सुण'मित्यादि, हन्त ! इति हर्षे स च स्वस्वस्वामिनाऽऽदिष्टत्वात् जगद्गुरुजन्ममहक- रणार्थकप्रस्थानसमारम्भाद्य, शृण्वन्तु भवन्तो बहवः सौधमकल्पवासिनो वैमानिका देवा देव्यश्च सौधर्म्मकल्पपतेरिदं वचनं हितं–जन्मान्तरकल्याणायहं सुखं–तद्भवसम्बन्धि तदर्थमाज्ञापयति, भो देवाः ! शक्रः तदेव ज्ञेयं, यद्यावत्सूत्रे शक्रेण हरिनैगमेषिपुर उदघोषयितव्यमादिष्टं यावत्प्रादुर्भवत

अथ शक्रादेशानन्तरं यद्देवविधेयं तदाह–ततस्ते देवा देव्यश्च एनं अनन्तरोदितमर्थं श्रुत्वा हृष्टतुष्टयावद् हर्षवशविसर्पद्हृदयाः अपि सम्भावनायामेकका:–केचन वन्दनं–अभिवादनं प्रशस्तकायवाङ्मनःप्रवृत्तिरूपं तत्प्रत्ययं तदस्माभिस्त्रिभुवनभट्टारकस्य कर्त्तव्यमित्येवंनिमित्तं एवं 'पूजनप्रत्ययं' पूजनं–गन्धमाल्यादिभिःसमभ्यर्चनं एवं 'सत्कारप्रत्ययं' सत्कारः–स्तुत्यादिभिर्गुणो- न्नतिकरणं सन्मानो–मानसप्रीतिविशेषस्तत्प्रत्ययं दर्शनं–अदृष्टपूर्वस्य जिनस्य विलोकनं तत्प्रत्ययं कुतूहलं–तत्र गतेनास्मत्प्रभुणा किं कर्त्तव्यमित्यात्मकं तत्प्रत्ययं, अप्येकका: शक्रस्य वचनमनुव- र्त्तमानाः न हि प्रभुवचनमुपेक्षणीयमिति भृत्यधर्ममनुश्रयन्तः अप्येकका: अन्यमन्यं मित्रमनुवर्त्तमाना मित्रगमनानुप्रवृत्ता इत्यर्थः अप्येकका जीतमेतद् यत् सम्यग्दृष्टिदेवैर्जिनजन्ममहे यतनीयं, 'एव- मादी'त्यादिकमागमननिमित्तमितिकृत्वा–चित्तेऽवधार्य यावच्छब्दात् 'अकालपरिहीणं चेव सक्कस्स देविंदस्स देवरन्नो' इति ग्राह्यं, अन्तिकं प्रादुर्भवन्ति, अथ शक्रस्येतिकर्त्तव्यमाह–

'तए णं'मित्यादि, ततः शक्रो देवेन्द्रो देवराजा तान् बहून् वैमानिकान् देवान् उपतिष्ठमानान् पश्यति दृष्ट्वा च हट्ठतुट्ठ इत्येकदेशेन सर्वोऽपि हर्षालापको ग्राह्यः, पालकनामविमानविकुर्वणाधिकारिणमाभियोगिकं देवं शब्दयन्ति, शब्दयित्वा च एवमवादीत्, यदवादीत्तदाह–'खिप्पामेव' त्ति, इदं यानविमानवर्णकं प्राग्वत्, नवरं योजनशतसहस्रविस्तीर्णमित्यत्र प्रमाणांगुलनिष्पन्नं योजनलक्षं ज्ञेयं, ननु वैक्रियप्रयोगजनितत्वेनोत्सेधांगुलनिष्पन्नत्वमप्यस्य कुतो नेति चेन्न 'नगपुढविविमाणाई मिणसु पमाणंगुलेणं तु' इयि वचनात् अस्य प्रमाणांगुलनिष्पन्नत्वं युक्तिमत्, न च 'नगपुढविविमाणाई'ति वचनं शाश्वतविमानापेक्षया न यानविमानापेक्षयेति ज्ञेयं अस्योत्सेधांगुलप्रमाणनिष्पन्नत्वे जंबूद्वीपान्तः सुखप्रवेशनीयत्वेन नन्दीश्वरे विमानसंकोचनस्य वैयर्थ्यापत्तेः, तथा श्रीस्थानाङ्गे चतुर्थाध्ययने 'चत्तारि लोगे समा पन्नत्ता, तंजहा–

अपइट्ठाणे नरए १ जंबुद्दीवे दीवे २ पालए जाणविमाणे ३ सव्वट्ठसिद्धे महाविमाणे ४ इत्यत्रापि पालकविमानस्य जंबूद्वीपादिभिः प्रमाणतः समत्वं प्रमाणांगुलनिष्पन्नत्वेनैव सम्भवतीति दिक्, तथा पञ्चशतयोजनोच्चं शीघ्रं त्वरितजवनं, अतिशयेन वेगवदित्यर्थः, निर्वाहि–प्रस्तुतकार्यनिर्वहणशीलं पश्चात् पूर्वपदेन कर्मधारयः, एवंविधं दिव्यं यानविमानं विकुर्वस्व विकुर्व्य च एतामाज्ञप्तिं प्रत्यर्पय, कृतकृत्यो निवेदय इत्यर्थः। तदनु यदनुतिष्ठति स्म पालकस्तदाह–

**मू. (२२८)** *तए णं से पालयदेवे सक्केणं देविंदेणं देवरन्ना एवं वुत्ते समाणे हट्ठतुट्ठ जाव वेउव्विअसमुग्घाएणं समोहणित्ता तहेव करेइ इति, तस्स णं दिव्वस्स जाणवमाणस्स तिदिसिं तओ तिसोवाणपडिरूवगा वण्णओ, तेसि णं पडिरूवगाणं पुरओ पत्तेअं २ तोरणा वण्णओ जाव पडिरूवा १।*

*तस्स णं जाणविमाणस्स अंतो बहुसमरमणिज्जे भूमिभागे, से जहा नामए आलिंगपुक्खरेइ वा जाव दीविअचम्मेइ वा अनेगसंकुकीलकसहस्सवितते आवडपच्चावडसेढिपसेढिसुत्थिअसोवत्थिअवद्धमाण पूसमाणवमच्छंडगमगरंडगजारमारफुल्लावलीपमपत्तसागरतरंगवसंतलयप उलयभत्तिचित्तेहिं सच्छाएहिं सप्पभेहिं समरीइएहिं सउज्जोएहिं नानाविहपञ्चवण्णेहिं मणीहिं उवसोभिए २।*

*तेसि णं मणीणं वण्णे गंधे फासे अ भाणिअव्वे जहा रायप्पसेणइज्जे, तस्स णं भूमिभागसबहुमज्झदेसभाए पिच्छाघरमण्डवे अनेगखम्भसयसण्णिविट्ठे वण्णओ जाव पडिरूवे, तस्स उल्लोए पउमलयभत्तिचित्ते जाव सव्वतवणिज्जमए जाव पडिरूवे, तस्स णं मंडवस्स बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागंसि महं एगा मणिपेढिआ अट्ठ जोअणाइं आयामविक्खम्भेणं चत्तारि जोअणाइं बाहल्लेणं सव्वमणिमयी वण्णओ, तीए उवरिं महं एगे सीहासणे वण्णओ, तस्सुवरिं महं एगे विजयदूसे सव्वरयणामए वण्णओ, तस्स मज्झदेसभाए एगे वइरामए अंकुसे*

*एत्थ णं महं एगे कुम्भिक्के मुत्तादामे, से णं अन्नेहिं तदद्धुच्चत्तप्पमाणमित्तेहिं चउहिं अद्धकुम्भिक्केहिं मुत्तादामेहिं सव्वओ समंता संपरिक्खित्ते, ते णं दामा तवणिज्जलंबूसगा सुवण्णपयरगमण्डिआ नानामणिरयणविविहहारद्धहारउवसोभिआ समुदया ईसिं अन्नमन्नमसंपत्ता पुव्वाइएहिं वाएहिं मंदं एइज्जमाणा २ जाव निव्वुइकरेणं सद्देणं ते पएसे आपूरेमाणा २ जाव अईव उवसोभेमाणा २ चिट्ठंतित्ति। तस्स णं सीहासणस्स अवरुत्तरेणं उत्तरेणं उत्तरपुरत्थिमेणं एत्थ णं सक्कस्स चउरासीए सामानिअसाहस्सीणं चउरासीइ भद्दासणसाहस्सीओ पुरत्थिमेणं*

*अट्ठण्हं अग्गमहिसीणं एवं दाहिणपुरत्थिमेणं अब्भंतरपरिसाए दुवालसण्हं देवसाहस्सीणं दाहिणेणं मज्झिमाए चउदसण्हं देवसाहस्सीणं दाहिणपच्चत्थिमेणं बाहिरपरिसाए सोलसण्हं देवसाहस्सीणं पच्चत्थिमेणं सत्तण्हं अनिआहिवईणंति।*

*तए णं तस्स सीहासनस्स चउद्दिसिं चउण्हं चउरासीणं आयारक्खदेवसाहस्सीणं एवमाई विभासिअव्वं सूरिआभगमेणं जाव पच्चप्पिणन्तित्ति।*

**वृ.** 'तए णं से पालए देवे सक्केण'मित्यादि, ततः स पालको देवः शक्रेण देवेन्द्रेण देवराज्ञा एवमुक्तः सन् हृष्टतुष्ट यावद् वैक्रियसमुदघातेन समवहत्य तथैव करोति, पालकविमानं रचयतीत्यर्थः अथ विमानस्वरूपवर्णनायाह– 'तस्स णं'मित्यादि इति सूत्रद्वयी व्यक्ता, अथ तद्विभागं वर्णयन्नाह–'तस्स णं'इत्यादि, इदं प्राग्वद् ज्ञेयम्, नवरं मणीनां वर्णो गंधः स्पर्शश्च भणितव्यो यथा राजप्रश्नीये द्वितीयोपाङ्गे, अत्रापि जगतीपद्मवरवेदिकावर्णने मणिवर्णादयो व्याख्यातास्ततोऽपि वा बोद्धव्याः, अत्र प्रेक्षागृहमण्डवर्णनायाह–

'तस्स णं'मित्यादि, यावच्छब्दग्राह्यं व्याख्या च यमकराजधानीगतसुधर्मासभाधिकारतो ज्ञेये, उपरिभागवर्णनायाह–'तस्स उल्लोए' इत्यादि, तस्योल्लोकः उपरिभागः पद्मलताभक्तिचित्रः यावत्सर्वात्मना तपनीयमयः प्रथमयावच्छब्देन अशोकलताभक्तिचित्र इत्यादिपरिग्रहः द्वितीययावच्छब्दाद् अच्छे सण्हे इत्यादिविशेषणग्रहः, अत्र च राजप्रश्नीये सूर्याभयानविमानवर्णकेऽक्षपाटकसूत्रं दृश्यते परं बहुष्वेतत्सूत्रादर्शेषु अदृष्टत्वान्न लिखितं, अथात्र मणिपीठिकावर्णनायाह– 'तस्स णं'मित्यादि, व्यक्तं, 'तीए उवरिं' इत्यादि, एतदव्याख्या विजयद्वारस्यप्रकण्ठकप्रासादगतसिंहासनसूत्रवदवसेया।

'ते णं'मित्यादि, इदं सूत्रं प्राक् पद्मवरवेदिकाजालवर्णके व्याख्यातमिति ततो बोध्यं, अत्रप्रथमयावत्पदात् 'वेइज्जमाणा २ पलम्बमाणा २ पझंझमाणा २ ओरालेणं मणुण्णेणं मनहरेणं कण्णमण' इति संग्रहः, द्वितीययावत्पदात् 'ससिरीए' इति ग्राह्यं, सम्प्रति अत्रास्थाननिवेशनप्रक्रियामाह–'तस्स णं'मित्यादि, 'तस्य' सिंहासनस्य पालकविमानमध्यभागवर्तिनोऽपरोत्तरायां–वायव्यामुत्तरस्यां उत्तरपूर्वायां–एशान्यां अत्रान्तरे शक्रस्य चतुरशीतेः सामानिकसहस्राणां चतुरशीतिभद्रासनसहस्राणि, उक्तदिक्त्रये चतुरशीतिभद्रासनसहस्राणीत्यर्थः, पूर्वस्यां दिश्यष्टानामग्रमहिषीणामष्ट चतुरशीति भद्रासनानि, एवं दक्षिणपूर्वायां–अग्निकोणेऽभ्यन्तरपर्षदः सम्बन्धिनां द्वादशानां देवसहस्राणां द्वादश भद्रासनसहस्राणि दक्षिणस्यां मध्यमायाः पर्षदश्चतुर्दशानां देवसहस्राणां चतुर्दश भद्रासनसहस्राणि दक्षिणपश्चिमायां–नैऋतकोणे बाह्यपर्षदः षोडशानां देवसहस्राणां षोडश भद्रासनसहस्राणि पश्चिमायां सप्तानामनीकाधिपतीनां सप्त भद्रासनानीति।

'तए णं'मित्यादि, 'ततः' प्रथमवलयस्थापनान्तरं द्वितीये वलये तस्य सिंहासनस्य चतुर्दिशि चतसृणां चतुरशीतानां–चतुर्गुणीकृतचतुरशीतिसंख्याकानां आत्मरक्षकदेवसहस्राणां, षट्त्रिंशत्सहस्राधिकलक्षत्रयमितानामात्मरक्षकदेवानामित्यर्थः, तावन्ति भद्रासनानि विकुर्वितानीत्यर्थः, एवमादि विभाषितव्यं–इत्यादि वक्तव्यं सूर्याभगमेन यावत्प्रत्यर्पयन्ति, यावत्पदसंग्रहश्चायम्– 'तस्स णं दिव्वस्स जाणविमाणस्स इमे एआरूवे वण्णावासे पन्नत्ते, से जहा णामए अइरुग्गयस्स हेमंतिअबालसूरिअस्स खाइलिंगालाण वा रत्तिं पज्जलिआणं जासुमणवणस्स वा केसुअवणस्स

वा पलिजायवणस्स वा सव्वओ समंता संकुसुमिअस्स, भवे एआरूवे सिआ ?, नो इणट्ठे समट्ठे, तस्स णं दिव्वस्स जाणविमाणस्स इत्तो इट्ठतराए चेव ४ वण्णे पन्नत्ते, गंधो फासो अ जहा मणीणं।

तए णं से पालए देवे तं दिव्वं जाणविमाणं विउव्वित्ता जेणेव सक्के ३ तेणेव उवागच्छइ २ त्ता सक्कं ३ करयलपरिग्गहिअं सिरसावत्तं मत्थए अंजलिं कट्टु जएणं विजएणं वद्धावेइ २ त्ता तमाणत्तिअ'मिति, अत्र व्याख्या—तस्य दिव्यस्य यानविमानस्यायमेतद्रूपो वर्णव्यासः प्रज्ञप्तः, स यथानामकोऽचिरोद्गतस्य—तत्कालमुदितस्य हैमन्तिकस्य—शिशिरकालसम्बन्धिनो बालसूर्यस्य खादिराङ्गाराणां वा 'रत्ति'मिति सप्तम्यर्थे द्वितीया रात्रौ प्रज्वालितानां जपावनस् वा किंशुकवनस्य वा पारिजाताः—कल्पद्रुमास्तेषां वनस्य वा सर्वतः समन्तात् सम्यक् कुसुमितस्य, अत्र शिष्यः पृच्छति—भवेदेतद्रूपः स्यात्—कथञ्चित् ?, नायमर्थः समर्थः, तस्य दिव्यस्य यानविमानस्य इति इष्टतरक एव कान्ततरक एवेत्यादि प्राग्वद्, गंधः स्पर्शश्च यथा प्राङ्मणीनामुक्तास्तथेति, ननु अत्रैव पालकविमानवर्णके प्राग्मणीनां वर्णादय उक्ताः पुनर्विमानवर्णकादिकथनेन पुनरुक्तिरिति चेत्, मैवं, पूर्वं हि अवयवभूतानां मणीनां वर्णादयः प्रोक्ताः सम्प्रति अवयविनो विमानस्येति नोक्तदोषः।

'तओ णं से पालए देवे' इत्यादिकमाज्ञाप्रत्यर्पणसूत्रं स्वतोऽभ्यूह्यम्। अथ शक्रकृत्यमाह—

**मू. (२२९)** *तए णं से सक्के जाव हट्ठहिअए दिव्वं जिणेंदाभिगमणजुग्गं सव्वालंकारविभूसिअं उत्तरवेउव्विअं रूवं विउव्वइ २ त्ता अट्ठहिं अग्गमहिसीहिं सपरिवाराहिं नट्टाणीएणं गंधव्वाणीएण य सद्धिं तं विमाणं अणुप्पयाहिणीकरेमाणे २ पुव्विल्लेणं तिसोवाणेणं दुरुहइ २ त्ता जाव सीहासणंसि पुरत्थाभिमुहे सण्णिसण्णेत्ति, एवं चेव सामानिआवि उत्तरेणं तिसोवाणेणं दुरुहित्ता पत्तेअं २ पुव्वण्णत्थेसु भद्दासणेसु निसीअंति अवसेसा य देवा देवीओ अ दाहिणिल्लेणं तिसोवाणेणं दुरुहित्ता तहेव जाव निसीअंति।*

*तए णं तस्स सक्कस्स तंसि दुरूढस्स इमे अट्ठट्ठमंगलगा पुरओ अहाणुपुव्वीए संपट्ठिआ, तयनंतरं च णं पुण्णकलसभिंगारं दिव्वा य छत्तपडागा सचामरा य दंसणरइअआलोअदरिसणिज्जा वाउद्धुअविजयवेजयन्ती अ समूसिआ गगणतलमनुलिहंती पुरओ अहाणुपुव्वीए संपत्थिआ।*

*तयनंतरं छत्तभिंगारं, तयनंतरं च णं वइरामयवट्टलट्ठसंठिअसुसिलिट्ठपरिघट्ठमट्ठसुपइट्ठिए विसिट्ठे अनेगवरपञ्चवण्णकुडभीसहस्सपरिमण्डिआभिरामे वाउद्धुअविजयवेजयंतीपडागाछत्ताइच्छत्तकलिए तुंगे गयणतलमणुलिहंतसिहरे जोअणसहस्समूसिए महइमहालए महिंदज्झए पुरओ अहाणुपुव्वीए संपत्थिएत्ति, तयनंतरं च णं सरूवनेवत्थपरिअच्छिअसुसज्जा सव्वालंकारविभूसिआ पञ्च अनिआ पञ्च अनिआहिवईणो जाव संपट्ठिआ।*

*तयनंतरं च णं बहवे आभिओगिआ देवा य देवीओ अ शएहिं सएहिं रूवेहिं जाव निओगेहिं सक्कं देविंदं देवरायां पुरओ अ मग्गओ अ अहा०, तयनंतरं च णं बहवे सोहम्मकप्पवासी देवा य देवीओ अ सव्विड्ढीए जाव दुरूढा सम्माणा मग्गओ अ जाव संपट्ठिआ।*

*तए णं से सक्के तेणं पञ्चाणिअपरिक्खित्तेणं जाव महिंदज्झएणं पुरओ पकड्ढिज्जमाणेणं चउरासीए सामानिअ जाव परिवुडे सव्विड्ढीए जाव रवेणं सोहम्मस्स कप्पस्स मज्झंमज्झेणं तं दिव्वं देवड्ढिं जाव उवदंसेमाणे २ जेणेव सोहम्मस्स कप्पस्स उत्तरिल्ले निज्जाणमग्गे तेणेव उवागच्छइ उवागच्छित्ता जोअणसयसाहस्सीएहिं विग्गहेहिं ओवयमाणे २ ताए उक्किट्ठाए जाव देवगईए*

*वीईवयमाणे २ तिरियमसंखिज्जाणं दीवसमुद्दाणं मज्झंमज्झेणं जेमेव नंदीसरवरे दीवे जेणेव दाहिणपुरत्थिमिल्ले रइकरगपव्वए तेणेव उवागच्छइ २ त्ता एवं जा चेव सूरिआभस्स वत्तव्वया नवरं सक्काहिगारो वत्तव्वो इति जाव तं दिव्वं देविद्धिं जाव दिव्वं जाणविमाणं पडिसाहरमाणे २*

*–जाव जेणेव भगवओ तित्थयरस्स जम्मणनगरे जेणेव भगवओ तित्थयरस्स जम्मणभवणे तेणेव उवागच्छति २ त्ता भगवओ तित्थयरस्स जम्मणभवणं तेणं दिव्वेणं जाणविमाणेणं तिक्खुत्तो आयाहिणपयाहिणं करेइ २ त्ता भगवओ तित्थयरस्स जम्मणभवणस्स उत्तरपुरत्थिमे दिसीभागे चतुरंगुलमसंपत्तं धरणियले तं दिव्वं जाणविमाणं ठवेइ २ त्ता अट्ठहिं अग्गमहिसीहिं दोहिं अनीएहिं गंधव्वाणीएण य नट्टाणीएण य सद्धिं ताओ दिव्वाओ जाणविमाणाओ पुरत्थिमिल्लेणं तिसोवाण-पडिरूवएणं पच्चोरुहइ । तए णं सक्कस्स देविंदस्स देवरन्नो चउरासीइ सामानिअसाहस्सीओ दिव्वाओ जाणविमाणाओ उत्तरिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहइ ।*

*तए णं सक्कस्स देविंदस्स देवरन्नो चउरासीइ सामानिअसाहस्सीओ दिव्वाओ जाण-विमाणाओ उत्तरिल्लेण तिसोवाणपडिरूवएण पच्चोरुहंति, अवसेसा देवा य देवीओ अ ताओ दिव्वाओ–जाणविमाणाओ दाहिणिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहंतित्ति ।*

*तए णं से सक्के देविंदे देवराया चउरासीए सामानिअसाहस्सीएहिं जाव सद्धिं संपरिवुडे सव्विद्धीए जाव दुंदुभिनिग्घोसणाइयरवेणं जेणेव भगवं तित्थयरे तित्थयरमाया य तेणेव उवागच्छइ २ त्ता आलोए चेव पणामं करेइ २ त्ता भगवं तित्थयरं तित्थयरमायरं च तिक्खुत्तो आयाहिणपयाहिणं करेइ २ त्ता करयल जाव एवं वयासी–*

*नमोत्थु ते रयणकुच्छिधारए एवं जहा दिसाकुमारीओ जाव धन्नासि पुन्नासि तं कयत्थाऽसि, अहण्णं देवाणुप्पिए ! सक्के नामं देविंदे देवराया भगवओ तित्थयरस्स जम्मणमहिमं करिस्सामि, तं णं तुब्भाहिं ण भाइव्वंतिकट्टु ओसोवणिं दलयइ २ त्ता तित्थयरपडिरूवगं विउव्वइ तित्थयरमाउ-आए पासे ठवइ २ त्ता पंच सक्के विउव्वइ विउव्वित्ता एगे सक्के भगवं तित्थयरं करयलपुडेणं गिण्हइ एगे सक्के पिट्ठओ आयवत्तं धरेइ दुवे सक्का उभओ पासिं चामरुक्खेवं करेंति एगे सक्के पुरओ वज्जपाणी पकड्डइत्ति ।*

*तए णं से सक्के देविंदे देवराया अन्नेहिं बहूहिं भवणवइवाणमंतरजोइसवेमाणिएहिं देवेहिं देवीहि अ सद्धिं संपरिवुडे सव्विद्धीए जाव नाइएणं ताए उक्किट्ठाए जाव वीईवयमाणे जेणेव मंदरे पव्वए जेमेव पंडगवने जेणेव अभिसेअसिला जेणेव अभिसेअसीहासणे तेणेव उवागच्छइ २ त्ता सीहासणवरगए पुरत्थाभिमुहे सण्णिसण्णेत्ति ।*

**वृ.** 'तए णं'मित्यादि, ततः स शक्र इत्यादि व्यक्तं, दिव्यं–प्रधानं जिनेंद्रस्य भगवतोऽभिग-मनाय–अभिमुखगमनाय योग्यं–उचितं यादृशेन वपुषा सुरसमुदायसर्वातिशायश्रीर्भवति तादृशेनेत्यर्थः 'सर्वालङ्कारविभूषितं' सर्वै–शिरःश्रवणाद्यलङ्कारैर्विभूषितं, उत्तरवैक्रियशरीरत्वात्, स्वाभाविकवैक्रियशरीरस्य तु आगमने निरलङ्कारतयैवोत्पादश्रवणात्, उत्तरं–भवधारणीयशरीरा-पेक्षया कार्योत्पत्तिकालापेक्षया चोत्तरकालभावि वैक्रियरूपं विकुर्वति, विकुर्व्य चाष्टाभिरग्रमहिषीभि सपरिवाराभिः प्रत्येकं २ षोडशदेवीसहस्रपरिवारपरिवृताभिर्नाट्यानीकेन गंधर्वानीकेन च सार्द्धं तं विमानमनुप्रदक्षिणीकुर्वन् २ पूर्वदिक्कस्थेन त्रिसोपानेनारोहति, आरुह्य च यावच्छब्दात् 'जेणेव

सीहासणे तेणेव उवागच्छइ २ त्ता' इति ग्राह्यं, सिंहासने पूर्वाभिमुखः सन्निषण्ण इति। अथास्थानं सामानिकादिभि यथा पूर्य्यते तथाऽऽह- 'एवं देव'इत्यादि, व्यक्तं, नवरं अवशेषाश्च—आभ्यंतर-पार्षद्यादयः। अथ प्रतिष्ठासोः शक्रस्य पुरः प्रस्थायिनां क्रममाह—

'तए णं तस्स'इत्यादि, एतदव्याख्या भरतचक्रिणोऽयोध्याप्रवेशाधिकारतो ज्ञेया, 'तए ण'मित्यादि, तदनन्तरं छत्र च भृङ्गारं च छत्रभृङ्गारं सामाहारदेकवद्भावः, छत्रं च 'वेरुलिअभिसंतविमलदण्ड'मित्यादिवर्णकयुक्तं भरतस्यायोध्याप्रवेशाधिकारतो ज्ञेयं, भृङ्गारश्च विशिष्ट-वर्णकचित्रोपेतः, पूर्वं च भृङ्गारस्य जलपूर्णत्वेन कथनात् अयं च जलरिक्तत्वेन विवक्षित इति न पौनरुक्त्यं, तदनंतरं वज्रमयो—रत्नमयः तथा वृत्तं—वर्त्तुलं लष्टं—मनोज्ञं संस्थितं—संस्थानं आकारो यस्य स तथा, तथा सुश्लिष्टः—सुश्लेषापन्नावयवो मसृण इत्यर्थः परिघृष्ट इव परिघृष्टः खरशाणया पाषाणप्रतिमावत् मृष्ट इव मृष्टः सुकुमारशाणया पाषाणप्रतिमेव सुप्रतिष्ठितो न तु तिर्यकूपतिततया वक्रस्तत एतेषां पदद्वय२मीलनेन कर्मधारयः, अत एव शेषध्वजेभ्यो विशिष्टः– अतिशायी, तथाऽनेकानि वराणि पञ्चवर्णानि कुडभीनां—लघुपताकानां सहस्राणि तैः परिमण्डितः—अलंकृतः स चासावभिरामश्चेति, वातोद्धूतेत्यादिविशेषणद्वयं व्यक्तं, तथा गगनतलं—अम्बरतलमनुलिखत्—संस्पृशत् शिखरं—अग्रभागो यस्य स तथा, योजनसहस्रमुत्सृतोऽत एवाह—

'महइमहालए'इति अतिशयेन महान् महेन्द्रध्वजः पुरतो यथानुपूर्व्या सम्प्रस्थित इति, 'तए ण'मित्यादि, तदनंतरं स्वरूपं—स्वकर्मानुसारि नेपथ्यं—वेषः परिकच्छितः—परिगृहीतो यैस्तानि तथा, सुसज्जानि पूर्णसामग्रीकतया प्रगुणानि सर्वालङ्कारविभूषितानि पञ्चानीकानि पञ्चानीकाधिपतयश्च पुरतो यथानुपूर्व्या सम्प्रस्थितानि, 'तयनन्तरं च ण'मित्यादि, तदनंतरं बहवः आभियोगिका देवाश्च देव्यश्च स्वकैः स्वकैः रूपैः—यथास्वकर्मोपस्थितैरुत्तरवैक्रियस्वरूपैय-विच्छब्दात्स्वकैः स्वकैः विभवैः—यथास्वकर्म्मोपस्थितैर्विभवैः—सम्पत्तिभि स्वकैर्नियोगैः—उपकरणैः शक्रं देवेंद्रं देवराजं पुरतश्च मार्गतश्च—पृष्ठतः पार्श्वतश्च उभयोः यथानुपूर्व्या—यथावृद्धक्रमेण सम्प्रस्थिताः,तदनंतरं बहवः सौधर्मकल्पवासिनो देवाश्च देव्यश्च सर्वर्द्ध्या यावत्करणादिंद्रस्य-अन्तिनिगमेषिणं पुरः स्वाज्ञप्तिविषयकः प्रागुक्त आलापको ग्राह्यः तेन स्वानि २ यानविमानवाहनानि आरूढाः संतो मार्गतश्च यावच्छब्दात् पुरतः पार्श्वतश्च शक्रस्य सम्प्रस्थिताः।

अथ यथा शक्रः सौधर्मकल्पान्निर्याति तथा चाह— ततः स शक्रस्तेन– प्रागुक्तस्वरूपेण पञ्चभिः संग्रामिकैरनीकैः परिक्षिप्तेन—सर्वतः परिवृतेन यावत् पूर्वोक्तः सर्वो महेंद्रध्वजवर्णको ग्राह्यः, महेंद्रध्वजेन पुरतः प्रकृष्यमाणेन–निर्गम्यमाने चतुरशीत्या सामानि- कसहस्रर्यावत्करणात् 'चउहिं चउरासीहिं आयरक्खदेवसाहस्सीहिं' इत्यादि ग्राह्यं, परिवृतः सर्वर्द्ध्या यावद्रवेण यावत्करणात् 'सव्वजुईए'इत्यादि प्रागुक्तं ग्राह्यं, सौधर्मस्य कल्पस्य मध्यंमध्येन तां दिव्यां देवर्द्धिं यावच्छब्दाद् 'दिव्वं देवजुइं इत्यादि ग्रहः, सौधर्मकल्पवासिनं देवानुमुपदर्शयन् २ यत्रैव सौधर्मकल्पस्योत्तराहो निर्याणमार्गो—निर्गमनसम्बंधी पंथास्तत्रैवोपा- गच्छति, यथा मरचिता नागराणां विवाहोत्सव-स्फातिदर्शनार्थं राजपथे याति नतु नष्टरथ्यादौ तथाऽयमपि, एतेन समग्रदेवलोकाधारभूतपृथिवी-प्रतिष्ठितविमाननिरुद्धमार्गत्वेनेतस्ततः सञ्चरणा- भावेन मध्यंमध्येनेति उत्तरिल्ले निज्जाणमग्गे

इत्युक्तमिति ये आहुस्ते आगमसाम्मत्यं युक्तिसाङ्गत्यं च प्रष्टव्याः।

उपागत्य च योजनशतसाहस्रकैः—योजनलक्षप्रमाणैर्विग्रहैः—क्रमैरिव गंतव्यक्षेत्रातिक्रमरूपैः, एतेन स्थावरस्वरूपस्य विमानस्य पदंयासरूपाः क्रमाः कथं भवेयुरिति शङ्का निरस्ता, अवपतन् अवपतन् तयोत्कृष्टया यावत्करणात् 'तुरिआए' इत्यादिग्रहः, देवगत्या व्यतिव्रजन् २ तिर्यगसंख्येयानां द्वीपसमुद्राणां मध्यंमध्येन यत्रैव नंदीश्वरद्वीपो यत्रैव तस्यैव पृथुत्वमध्यभागे दक्षिणपूर्व—आग्नेयकोणवर्ती रतिकरपर्वतस्तत्रैवोपागच्छति, इदं च स्थानांगाथाशयेनोक्तं, अन्यथा प्रवचनसारोद्धारादिषु पठ्यमानानां पूर्वाद्यञ्जनगिरिविदिग्व्यवस्थितवापीद्वयद्वयांतराले वह्निकोणयो प्रत्यासत्तौ प्रत्येकं द्वयं२ भावेन तिष्ठतामष्टानां रतिकरपर्वतानां मध्ये विनिगमनाविरहात् कतरो रतिकरपर्वतो दक्षिणपूर्व स्यादिति, ननु सौधर्मादवतरतः शक्रस्य नंदीश्वरद्वीप एवावतरणं युक्तिमत्, न पुनरसंख्येयद्वीपसमुद्रातिक्रमेण तत्रागमनमिति, उच्यते, निर्याणमार्गस्यासंख्याततमस्य द्वीपस्य वा समुद्रस्य वा उपरिस्थितत्वेन सम्भाव्यमानत्वात् तत्रावतरणं, ततश्च नंदीश्वराभिगमनेऽसंख्याद्वीपसमुद्रातिक्रमणं युक्तिमदेवेति, अत्र दृष्टांताय सूत्रं।

'एवं जा चेव'त्ति एवमुक्तरीत्या यैव सूर्याभस्य वक्तव्यता यथा सूर्याभः सौधर्मकल्पादवतीर्णस्तथाऽयमपीत्यर्थः, नवरं अयं भेदः—शक्राधिकारो वक्तव्यः—सौधर्मेन्द्रानाम्ना सर्वं वाच्यम् 'जाव तं दिव्वं'इत्यादि, प्रायो व्यक्तं, नवरमत्र प्रथमयावच्छब्दो दृष्टांतविषयीकृतसूर्याभाधिकारस्यावधिसूचनार्थः, स चावधिर्विमानप्रतिसंहरणपर्यतो वाच्यः, द्वितीययावच्छब्दो 'दिव्वं देवजुइं दिव्वं दिव्वाणुभावं' इति पदद्वयग्राही, अस्य चायमर्थ—दिव्यां देवर्द्धिं—परिवारसम्पदं स्वविमानवर्ज्जसौधर्मकल्पवासिदेवविमानानां मेरौ प्रेषणात्, तथा दिव्यां देवद्युतिं शरीराभरणादिह्रासेन तथा दिव्यं देवानुभावं देवगतिह्रस्वताऽऽपादनेन, तथा दिव्यं यानविमानं पालकनामकं जंबूद्वीपपरिमाणंयूनविस्तरायामकरणेन प्रतिसंहरन् २—संक्षिपन् संक्षिपन्निति, तृतीययावच्छब्दो 'जेणेव जंबुद्दीवे दीवे जेणेव भरहे वासे' इति ग्राहकः, ननु पूर्वत्रिसोपानप्रतिरूपकेणोत्तारः शक्रस्योक्तोऽपरभ्यां केषामुत्तार इत्याह—'तए णं सक्कस्स देविंदस्स देवरन्नो' इत्यादि व्यक्तम्। अथ शक्रः किमकार्षीदित्याह—'तए णं से सक्के देविंदे देवराया चउरासीए'इत्यादि, कण्ठ्यं, यावत्पदसंग्राह्यं तु पूर्वसूत्रानुसारेण बोध्यं, यदवादीत्तदाह— 'नमुत्थु ते'इत्यादि, नमोऽस्तु तुभ्यं रत्नकुक्षिधारिके! एवंप्रकारं सूत्रं यथा दिक्कुमार्य आहुस्तथाऽवादीदित्यर्थः, यावच्छब्दादिदं ग्राह्यम्- जगप्पईवदाईए चक्खुणो अमुत्तस्स सव्वजग- जीववच्छलस्स हिअकारगमग्गदेसिअवागिद्धिविभुप्पभुस्स जिनस्स नाणिस्स नायगस्स बुद्धस्स बोहगस्स सव्वलोगणाहस्स सव्वजगमङ्गलस्स णिम्ममस्स पवरकुलसमुप्पभवस्स जाईए खत्तियस्स जंसि लोगुत्तमस्स जननी'ति, कियत्पर्यंतमित्याह—धंयाऽसि पुण्याऽसि त्वं कृतार्थाऽसि, अहं देवानुप्रिये ! शक्रो नाम देवेंद्रो देवराजा भगवतस्तीर्थकरस्य जंममहिमां करिष्यामि, तन युष्माभिर्न भेतव्यमितिकृत्वा अवस्वापिनीं ददाति—सुते मेरुं नीते सुतविरहार्त्ता मा दुःखभागभूदिति दिव्यनिद्रया निद्राणां करोतीत्यर्थः।

दत्वा च तीर्थकरस्य मेरुनेतव्यस्य भगवतः प्रतिरूपकं—जिनसदृशं रूपं विकुर्वति, अस्मासु मेरु गतेषु जंममहव्यापृतिव्यग्रेषु आसन्नदुष्टदेवतया कुतूहलादिनाऽपहृतनिद्रा सती मा इयं तथा भवत्विति भगवद्रूपान्निर्विशेषं रूपं विकुर्वतीत्यर्थः, विकुर्व्य च तीर्थकरमातुः पार्श्वे स्थापयति स्थापयित्वा च पञ्च शक्रान् विकुर्वति, आत्मना पञ्चरूपो भवतीत्यर्थः, विकुर्व्य च तेषां पञ्चानां

मध्ये एकः शक्रो भगवंतं तीर्थकरं परमशुचिना सरसगोशीर्षचंदनलिप्तेन धूपवासितेनेति शेषः करतलयोः—ऊर्ध्वाधोव्यवस्थितयोः पुटं—सम्पुटं शुक्तिकासम्पुटमिवेत्यर्थः तेन गृह्णाति एकः शक्रः पृष्ठत आतपत्रं—छत्रं धरति द्वौ शक्रावुभयोः पार्श्वयोश्चामरोत्क्षेपं कुरुतः एकः शक्रः पुरतो वज्रपाणि सन् प्रकर्षति--निर्गमयति, आत्मानमिति शेषः, अग्रतः प्रवर्त्तत इत्यर्थः, अत्र च सत्यपि सामानिकादिदेवपरिवारे यदिंद्रस्य स्वयमेव पञ्चरूपविकुर्वणं तत् त्रिजगद्गुरोः परिपूर्णसेवालिप्सुत्वेनेति। अथ यथा शक्रो विवक्षितस्थानमाप्नोति तथा आह— ततः स शक्रो देवेंद्रो देवराजा अन्यैर्बहुभिर्भवनपतिवान- मंतरज्योतिष्कवैमानिकैर्देवैर्देवीभिश्च सार्द्धं सम्परिवृतः सर्वर्द्ध्या यावत्करणात् 'सव्वज्जुईए' इत्यादि पदसङ्ग्रहः पूर्वोक्तो ज्ञेयः, तयोत्कृष्टया यावत्करणात् 'तुरिआए' इत्यादिग्रहः व्यतिव्रजन् २ यत्रैव मंदरपर्वतो यत्रैव च पण्डकवनं यत्रैव चाभिषेकशिला यत्रैव चाभिषेकसिंहासनं तत्रैवोपागच्छति उपागत्य च सिंहासनवरगतः पूर्वाभिमुखः सन्निषण्ण इति, पालकविमानं च गृहीतस्वामिकस्य स्वस्वामिनः पादचारित्वेन तमनुव्रजतां देवानामप्यनुपयोगित्वदभिषेकशिलायां यावदनुव्रजदभूदिति सम्भाव्यते।

**मू. (२३०)** *तेणं कालेणं तेणं समएणं ईसाणे देविंदे देवराया सूलपाणी वसभवाहणे सुरिंदे उत्तरद्धलोगाहिवई अट्ठावीसविमाणवाससयसहस्साहिवई अरयंबरवत्थधरे एवं जहासक्के एवं जहा सक्के इमं नाणत्तं—महाघोसा घंटा लहुपरक्कमो पायत्ताणियाहिवई पुप्फओ विमाणकारी दक्खिणे निज्जाणमग्गे उत्तरपुरत्थिमिल्लो रइकरपव्वओ मंदरे समोसरिओ जाव पज्जुवासइति, एवं अवसिट्ठावि, इंदा भाणिअव्वा जाव अच्चुओत्ति, इमं नाणत्तं—*

**वृ.** 'तेणं कालेणं' मित्यादि, तस्मिन् काले सम्भवज्जिनजन्मके तस्मिन् समये- दिक्कुमारीकृत्यानं- तरीये न तु शक्रागमनानंतरीये सर्वेषामिंद्राणां जिनकल्याणकेषु युगपदेव समागमनारम्भस्य जायमानत्वात्, यत्तु सूत्रे शक्रागमनानंतरीयमीशानेंद्रागमनमुक्तं तत्क्रमेणैव सूत्रबंधस्य सम्भवात्, ईशानो देवेंद्रो देवराजा शूलपाणिर्वृषभवाहनः सुरेंद्र उत्तरार्द्धलोकाधिपतिः, मेरोरुत्तरतोऽस्यैवा- धिपत्यात्, अष्टाविंशतविमानावासशतसहस्राधिपति अरजांसि—निर्मलानि अम्बरवस्त्राणि—स्वच्छ- तयाऽऽकाशकल्पानि वसनानि धरति यः स तथा, एवं यथा शक्रः सौधर्मेंद्रस्तथाऽयमपि, इदमत्र नानात्वं—विशेषः महाघोषा घंटा लघुपराक्रमनामा पदात्यनीकाधिपति पुष्पकनामा विमानकारी दक्षिणा निर्याणभूमि उत्तरपौर्स्त्यो रतिकरपर्वतः मंदरे समवसृतः—समागतः यावत्पदात् 'भगवंतं तित्थयरं तिक्खुत्तो आयाहिणपयाहिणं करेइ २ त्ता वंदइ नमंसइ वंदित्ता नमंसित्ता नच्चासण्णे णाइदूरे सुस्सूसमाणे नमंसमाणे अभिमुहे विनएणं पंजलिउडे' इति, पर्युपास्ते।

— अथातिदेशेनावशिष्टानां सनत्कुमारादीन्द्राणां वक्तव्यमाह—'एवं अवसिट्ठावि' इत्यादि, एवं—सौधर्मेशानेंद्ररीत्या अवशिष्टा अपि इंद्रा वैमानिकानां भणितव्याः यावदच्युतेंद्रः— एकादशद्वादशकल्पाधिपतिरिति, अत्र यो विशेषस्तमाह—इदं नानात्वं—भेदः, चतुरशीति सहस्राणि शक्रस्य अशीति सहस्रमीशानेंद्रस्य द्विसप्तति सहस्राणि सनत्कुमारेंद्रस्य एवं सप्ततिमहिंद्रस्य चः समुच्चये षष्टिर्ब्रह्मेंद्रस्य चः प्राग्वत् पञ्चाशल्लांतकेंद्र चत्वारिंशच्छुक्रेंद्रस्य त्रिंशत्सहस्रारेंद्रस्य विंशतिरानतप्राणतकल्पद्विकेंद्रस्य दशारणाच्युतकल्पद्विकेंद्रस्य, एते संख्याप्रकाराः सामानिकानां देवानां क्रमेण दशकल्पेंद्रसम्बंधिनामिति।

**मू. (२३१)** *चउरासीइ असीइ बावत्तरि सत्तरी अ सट्ठी अ।*
*पन्ना चत्तालीसा तीसा वीसा दस सहस्सा।*

**वृ.** तेन 'चउरासीए सामानिअसाहस्सीण'मित्येतद्विशेषणस्थाने प्रतीन्द्रालापकं असीए सामानिअसाहस्सीणमित्यादिअभिलापो ग्राह्यः।

**मू. (२३२)** *(एए सामानिआणं,) बत्तीसदावीसा बारसट्ठ चउरो सयसहस्सा।*
*पन्ना चत्तालीसा छच्च सहस्सारे॥*

**मू. (२३३)** *आणयपाणयकप्पे चत्तारि सयाऽऽरणच्चुए तिन्नि। एए विमाणाणं, इ जाणविमाणकारी देवा, तंजहा–*

**वृ.** तथा सौधर्मेन्द्रकल्पे द्वात्रिंशल्लक्षाणि ईशाने अष्टाविंशतिर्लक्षाणि एवं सनत्कुमारे द्वाद माहेंद्रे अष्ट ब्रह्मलोके चत्वारि तथा लांतके पञ्चाशत्सहस्राणि एवं शुक्रे चत्वारिंशत्सहस्राणि च समुच्चये सहस्रारे षट् सहस्राणि आनतप्राणतकल्पयोर्द्वयोः समुदितयोश्चत्वारि शतानि आरणाच्युत योस्त्रिणि शतानि एते विमानानां संख्याप्रकाराः, यानविमानविकुर्वकाश्च देवा इमे वक्ष्यमाण शक्रादिक्रमेण, तद्यथा–

**मू. (२३४)** *पालय १ पुप्फे य २ सोमनसे ३ सिरिवच्छे अ ४ नंदिआवत्ते ५।*
*कामगमे ६ पीइगमे ७ मनोरमे ८ विमल ९ सव्वओभद्दे १०॥*

**वृ.** पालकः १ पुष्पकः २ सौमनसः ३ श्रीवत्सः ४ चः समुच्चये नंदावर्त्तः ५ कामगमः ६ प्रीतिगमः ७ मनोरमः ८ विमलः ९ सर्वतोभद्र १० इति, अथ दशसु कल्पेंद्रेषु केनचित्प्रकारेण पञ्चानां २ साम्यमाह–

**मू. (२३५)** *सोहम्मगाणं सणंकुमारगाणं बंभलोअगाणं महासुक्कयाणं पाणयगाणं इंदाण सुघोसा घंटा हरिणेगमेसी पायत्ताणीआहिवई उत्तरिल्ला निज्जाणभूमी दाहिणपुरत्थिमिल्ले रइकर- गपव्वए, ईसाणगाणं माहिंदलंतगसहस्सारअच्चुअगाण य इंदाण महाघोसा घंटा लहुपरक्कमो पायत्ताणीआहिवई दक्खिणिल्ले निज्जाणमग्गे उत्तरपुरत्थिमिल्ले रइकरगपव्वए।*

*परिसा णं जहा जीवाभिगमे आयरक्खा सामाणिअचउग्गुणा सव्वेसिं जाणविमाणा सव्वेसिं जोअणसयसहस्सविच्छिण्णा उच्चत्तेणं सविमाणपमाणा महिंदज्झया सव्वेसिं जोअणसाहस्सिआ, सक्कवज्जा मंदरे समोअरंति जाव पज्जुवासंतित्ति।*

**वृ.** सौधर्मकानां–सौधर्मदेवलोकोत्पन्नानां एवमग्रेऽपि ज्ञेयं, तथा सनत्कुमारकाणां ब्रह्मलोककानां महाशुक्रकानां प्राणतकानामिंद्राणां बहुवचनं सर्वकालवर्तीन्द्रापेक्षया, सुघोषा घंटा हरिनेगमेषी पदातयनीकाधिपति इति औत्तराहा निर्याणभूमि दक्षिणपौरस्त्यो रतिकरपर्वतः, तथा ईशानकानां माहेंद्रलांतकसहस्राच्युतकानां च इंद्राणां महाघोषा घंटा लघुपराक्रमः पदात्यनीकाधिपति यस्य यावद्देवदेवीप्रमाणा भवति तस्य तावत्प्रमाणा यथा जीवाभिगमे तथा ज्ञेयाः।

ताश्चैवं शक्रस्याभ्यंतरिकायां पर्षदि १२ सहस्राणि देवानां मध्यमायां १४ सहस्राणि बाह्यायां १६ सहस्राणि ईशानेंद्रस्याद्यायां १० सहस्राणि द्वितीयायां १२ सहस्राणि तृतीयायां १४ सहस्राणि, सनत्कुमारेंद्रस्याद्यायां ८ सहस्राणि द्वितीयस्यां १० सहस्राणि तृतीयायां १२ सहस्राणि एवं माहेंद्रस्य क्रमेण ६ सहस्राणि ८ सहस्राणि १० सहस्राणि ब्रह्मेंद्रस्य ४–६–८ सहस्राणि लांतकेंद्रस्य

२–४–६ सहस्राणि शुक्रेंद्रस्य १–२–४ सहस्राणि सहस्रेंद्रस्य ५०० शतानि १० शतानि २० शतानि आनतप्राणतेंद्रस्य २ शते सार्द्धे ५ शतानि १० शतानि आरणाच्युतेंद्रस्य १ शतं २ शते सार्द्धे ५०० शतानि ।

इमाश्च तत्तदिंद्रवर्णके 'तिण्हं परिसाण'मित्याद्यालापके यथासंख्यं भाव्याः, शक्रेशान-योर्देवीपर्षत्त्रयं जीवाभिगमादिषूक्तमपि श्रीमलयगिरिपादैः स्वावश्यकवृत्तौ जंबूद्वीपप्रज्ञप्ति-मध्यगतोऽयमितितिलिख्यमानजिनजंमाभिषेकमहग्रंथे नोक्तमिति मया तदनुयायित्वेन नालेखि, आत्मरक्षाः—अङ्गरक्षका देवाः सर्वेषामिंद्राणां स्वस्वसामानिकेभ्यश्चतुर्गुणाः, एते चेत्थं वर्णके अभिलाप्याः 'चउण्हं चउरासीणं आयरक्खदेवसाहस्सीणं छउण्हं असीईणं आयरक्खदेवसाहस्सीणं चउण्हं बावत्तरीणं आयरक्खदेवसाहस्सीणं आहेवच्चं' इत्यादि, तथा यानविमानानि सर्वेषां योजनशतसहस्रविस्तीर्णानि उच्चत्वेन स्वविमानप्रमाणानि—इंद्रस्य स्वस्वविमानं सौधर्मावतंसकादि तस्यैव प्रमाणं पञ्चशतयोजनादिकं येषां तानि तथा, अस्यायमर्थः—

आद्यकल्पद्विकविमानानामुच्चत्वे पञ्चयोजनशतानि द्वितीये द्विके षट् योजनशतानि तथा तृतीये द्विके सप्त तथा चतुर्थे द्विकेऽष्टौ ततोऽग्रेतने कल्पचतुष्के विमानानामुच्चत्वं नव योजनशतानि, तथा सर्वेषां महेंद्रध्वजाः योजनसाहस्रिकाः—सहस्रैर्योजनविस्तीर्णा शक्रवर्ज्जा मंदरे समवसरति यावत्पर्युपास्ते यावत्पदसंग्रहः प्राग्वत् । अथ भवनवासिनः–

**मू. (२३६)** *तेणं कालेणं तेणं समएणं चमरे असुरिंदे असुरराया चमरचंचाए रायहाणीए सभाए सुहम्माए चमरंसि सीहासणंसि छउसट्ठीए सामानिअसाहस्सीहिं तायत्तीसाए तायत्तीसेहिं चउहिं लोगपालेहिं पञ्चहिं अग्गमहिसीहिं सपरिवाराहिं तिहिं परिसाहिं सत्तहिं अनिएहिं सत्तहिं अनियाहिवईहिं चउहिं चउसट्ठीहिं आयरक्खसाहस्सीहिं अन्नेहि अ जहा सक्के नवरं इमंनाणत्तं—दुमो पायत्ताणीआहिवई ओघस्सरा घंटा विमाणं पन्नासं जोअणसहस्साइं महिंदज्झओ पंचजो-अणसयाइं विमाणकारी आभिओगिओ देवो अवसिट्ठं तं चेव जाव मंदरे समोसरइ पज्जुवासईति*

*तेणं कालेणं तेणं समएणं बली असुरिंदे असुरराया एवमेव नवरं सट्ठी सामाणीअसाहस्सीओ चउगुणा आयरक्खा महादुमो पायत्तीणीआहिवई महाओहस्सरा घंटा सेसं तं चेव परिसाओ जहा जीवाभिगमे इति ।*

*तेणं कालेणं तेणं समएणं धरणे तहेव नाणत्तं छ सामानिअसाहस्सीओ छ अग्गमहिओ चउग्गुणा आयरक्खा मेघस्सरा घंटा भद्दसेणो पायत्ताणीयाहिवई विमाणं पणवीसं जोअणसहस्सं महिंदज्झओ अद्धाइज्जाइं जोअणसयाइं एवमसुरिंदवज्जिआणं भवणवासिइंदाणं, नवरं असुराणं ओघस्सरा घंटा नागाणं मेघस्सरा सुवण्णाणं हंसस्सरा विज्जूणं कोंचस्सरा अग्गीणं मंजुस्सरा दिसाणं मंजुघोसा उदहीणं सुस्सरा दीवाणं महुरस्सरा वाऊणं नंदिस्सरा थणिआणं नंदिघोसा ।*

**वृ.** 'तेणं कालेणं तेणं समएण'मित्यादि प्राग्वत्, चमरोऽसुरेंद्रोऽसुरराजा चमरचञ्चायां राजधांयां सभायां सुधर्मायां चमरे सिंहासने चतुःषष्ट्या सामानिकसहस्रैः त्रयस्त्रिंशता त्रायस्त्रिंशैः चतुर्भिः लोकपालैः पञ्चभिरग्रमहिषीभिः सपरिवाराभि तिसृभिः पर्षद्भिः सप्तभिरनीकैः सप्तभिर-नीकाधिपतभि चतसृभिः चतुःषष्टिभिरात्मरक्षकसहस्रैः अंयैश्चेत्यालापकांशेन सम्पूर्ण आलापकस्त्वयं

बोध्यः—'चमरचञ्चारायहाणीवत्थव्वेहिं बहूहिं असुरकुमारेहिं देवेहि अ देवीहि अ'त्ति, यथा शक्रस्तथाऽयमप्यवगम्यः, नवरमिदं नानात्वं—भेदः, द्रुम—पदात्यनीकाधिपति ओघस्वरा घंटा यानविमानं पञ्चाशद् योजनसहस्राणि विस्तारायामं महेंद्रध्वजः पञ्चयोजनशतान्युच्चः विमानकृदाभियोगिको देवो न पुनर्वैमानिकेंद्राणां पालकादिरिव नियतनामकः अवशिष्टं तदेव—शक्राधिकारोक्तं वाच्यं नवरं दक्षिणपश्चिमो रतिकरपर्वतः, कियद्दूरमित्याह—यावंमंदरे समवसरति पर्युपास्त इति।

अथ बलींद्रः—'तेणं कालेण'मित्यादि, तस्मिन् काले तस्मिन् समये बलिरसुरेंद्रोऽसुरराजा एवमेवेति—चमर इव नवरं षष्टि सामानिकसहस्राणि चतुर्गुणा आत्मरक्षाः, सामानिकसंख्यातश्चतुर्गुणसंख्याङ्काः आत्मरकक्षका इत्यर्थः, महाद्रुमः पदात्यनीकाधिपति महौघस्वरा घंटा 'व्याख्यातोऽधिकं प्रतिपद्यत' इति चमरचञ्चास्थाने बलिचञ्चा दाक्षिणात्यो निर्याणमार्ग उत्तरपश्चिमो रतिक- रपर्वत इति, शेषं—यानविमानविस्तारादिकं तदेव—चमरचञ्चाधिकारोक्तमेव, पर्षदो यथा जीवाभिगमे, इदं च सूत्रं देहलीप्रदीपंन्यायेन सम्बंधनीयं, यथा देहलीस्थो दीपोऽतःस्थदेहलीस्थबाह्यस्थवस्तुप्रकाशनोपयोगी तथेदमप्युक्ते चमराधिकारे उच्यमाने बलींद्राधिकारे वक्ष्यमाणेष्वष्टसु भवनपतिषूपयोगी भवति, त्रिष्वप्यधिकारेषु पर्षदो वाच्या इत्यर्थः, तथाहि—

चमरस्याभ्यंतरिकायां पर्षदि २४ सहस्राणि देवानां मध्यमायां २८ सहस्राणि बाह्यायां च ३२ सहस्राणि, तथा बलींद्रस्याभ्यंतरिकायां पर्षदि २४ सहस्राणि देवानां मध्यमायां २८ सहस्राणि बाह्यायां च ३२ सहस्राणि, तथा बलींद्रस्याभ्यंतरिकायां पर्षदि २० सहस्राणि मध्यमायां २४ सहस्राणि बाह्यायां २८ सहस्राणि, तथा धरणेंद्रस्याभ्यंतरिकायां पर्षदि ६० सहस्राणि मध्यमायां ७० सहस्राणि, अवशिष्टानां भवनवासिषोडशेंद्राणां मध्ये ये वेणुदेवादयो दक्षिणश्रेणिपतयस्तेषां पर्षत्त्रयं धरणेंद्रस्येव उत्तरश्रेण्यधिपानां वेणुदालिप्रमुखाणां भूतानंदस्येव ज्ञेयम्।

अथ धरणः 'तेणं कालेण' मित्यादि, तस्मिन् काले तस्मिन् समये धरणस्तथैव—चमरवत् नवरमिदं नानात्वं—भेदः षट् सामानिकसहस्राणां षडग्रमहिष्यः चतुर्गुणा आत्मरक्षकः मेघस्वरा घंटा भद्रसेनः पदात्यनीकाधिपति विमानं पञ्चविंशतियोजनसहस्राणि महेंद्रध्वजोऽर्द्धतृतीयानि योजनशतानि, अथावशिष्टभवनवासींद्रवक्तव्यतामस्यातिदेशेनाह—'एवमसुरिंद'इत्यादि, एवं—धरणेंद्रंन्यायेनासुरेंद्री—चमरबलींद्री ताभ्यां वर्जितानां भवनवासींद्राणां भूतानंदादीनां वक्तव्यं बोध्यं, नवरं असुराणां—असुरकुमाराणां ओघस्वरा घंटा नागानां—नागकुमाराणां मेघस्वरा घंटा सुपर्णानां—गरुडकुरामाणां हंसस्वरा विद्युत्कुमाराणां क्रौञ्चस्वरा अग्निकुमाराणां मंजुस्वरा दिक्कुमाराणां मंजुघोषा उदधिकुमाराणां सुस्वरा द्वीपकुमाराणां मधुरस्वरा वायुकुमाराणां नंदिस्वरा स्तनितकुमाराणां नंदिघोषा।

मू. (२३७) *चउसट्ठी सट्ठी खलु छच्च सहस्सा उ असुरवज्जाणं।*
*सामानिआ उ एए चउग्गुणा आयरक्खा उ॥*

वृ. एणामेवोक्तानुक्तसामानिकसंग्रहार्थं गाथामाह—चतुष्षष्टिश्चमरेंद्रस्य षष्टिर्बलींद्रस्य खलुर्निश्चये षट् च सहस्राणि असुरवर्जानां धरणेंद्रादीनामष्टादशभवनवासींद्राणां सामानिकाः चः समुच्चये तथा पुनरर्थे भिन्नक्रमे तेनैते सामानिकाः चतुर्गुणाः पुनरात्मरक्षका भवंति।

*मू. (२३८) दाहिणिल्लाणं पायत्ताणीआहिवई भद्दसेणो उत्तरिल्लाणं दक्खोत्ति । वाणमंतरजोइसिआ नेअव्वा, एवं चेव, नवरं चत्तारि सामानिअसाहस्सीओ चत्तारि अग्गमहिसीओ सोलस आयरक्खस- हस्सा विमाणा सहस्सं महिंदज्झया पणवीसं जोअणसयं घंटा दाहिणाणं मंजुस्सरा उत्तराणं मंजुघोसा पायत्ताणीआहिवई विमाणकारी अ आभिओगा देवा जोइसिआणं सुस्सरा सुस्सर- निग्घोसाओ घंटाओ मंदरे समोसरणं जाव पज्जुवासंतित्ति ।*

वृ. दाक्षिणात्यानां चमरेंद्रवर्जितानां भवनपतींद्राणां भद्रसेनः पदात्यनीकाधिपति औत्तराहाणां वलिवर्जितानां दक्षो नाम्ना पदातिपति, यच्चात्र घंटादिकं पूर्वं स्वस्वसूत्रे उक्तमप्युक्तं तत्समुदायवाक्ये सर्वसङ्ग्रहार्थमिति ।

अथ व्यंतरेंद्रज्योतिष्केंद्राः—'वाणमंतर' इत्यादि, व्यंतरेंद्रा ज्योतिष्केंद्राश्च नेतव्याः— शिष्यबुद्धिं प्रापणीयाः एवमेव, यथा भवनवासिनस्तथैवेत्यर्थः, नवरं चत्वारि सामानिकानां सहस्राणि चतस्रोऽग्रमहिष्यः षोडश आत्मरक्षकसहस्र विमानानि योजनसहस्रमायामविष्कम्भाभ्यां महेंद्रध्वजः पञ्चविंशत्यधिकयोजनशतं घंटाश्च दाक्षिणात्यानां मञ्जुस्वरा औत्तराहाणां मञ्जुघोषाः, पदात्य- नीकाधिपतयो विमानकारिणश्च आभियोगिका देवाः, कोऽर्थः ?—स्वाम्यादिष्टा हि आभियोगिका देवा घंटावादनादिकर्मणि विमानविकुर्व्वणे च प्रवर्त्तते न पुनर्हरिनिगमेषिवत्पालकवच्च निर्दिष्टना-मका इति, 'व्याख्या विशेषप्रतिपादिनी' तिसूत्रेऽनुक्तमपीदं बोध्यं--सर्वेषामभ्यंतरिकायां पर्षदि देवानां ८ सहस्राणि मध्यमाया १० सहस्राणि बाह्यायां १२ सहस्राणीति, एतेषामुल्लेखस्त्वयम्—

'तेणं कालेणं तेणं समएणं काले नामं पिसाइंदे पिसायराया चउहिं सामानिअसाहस्सीहिं चउहिं अग्गमहिसीहिं सपरिवाराहिं तिहिं परिसाहिं सत्तहिं अनीएहिं सत्तहिं अनीआहिवइहिं सोलसहिं आयरक्खदेवसाहस्सीहिं' 'तं चेव, एवं सव्वेवी'ति, व्यंतरा इव ज्योतिष्का अपि ज्ञेयाः, तेन सामानिकादिसङ्ख्यासु न विशेषः, घंटासु चायं विशेषः—चंद्राणां सुस्वरा सूर्याणां सुस्वरनिर्घोषा, सर्वेषां च मंदरे समवरणं वाच्यं यावत्पर्युपासते, यावच्छब्दग्राह्यं तु प्राग्दर्शितं ततो ज्ञेयं, एतदुल्लेखस्त्वयं— 'तेणं कालेणं तेणं समएणं चंदा जोइसंदा जोइसरायाणो पत्तेअं पत्तेअं चउहिं सामानिअसाहस्सीहिं चउहिं अग्गमहिसीहिं तिहिं परिसाहिं सत्तहिं अनिएहिं सत्तहिं अनिआहिवइहिं सोलसहिं आयारक्खदेवसाहस्सीहिं, एवं जहा वाणमंतरा एवं सूरावि' नन्वत्रोल्लेखे चंद्राः सूर्या इत्यत्र बहुवचनं किमर्थम् ? , प्रस्तुतकर्मणि एकस्यैव सूर्यस्य चंद्रस्य चाधिकृतत्वात् अंयथेंद्राणां चतुःषष्टिसङ्ख्याकत्वव्याघातात् ? , उच्यते, जिनकल्याणकादिषु दश कल्पेंद्रा विंशतिर्भवनवासींद्राः द्वात्रिंशद्व्यन्तरेंद्राः एते व्यक्तितः चंद्रसूर्यौ तु जात्यपेक्षया तेन चंद्राः सूर्या असङ्ख्याता अपि समायान्ति, के नाम न कामयंते भुवनभट्टारकाणां दर्शनं स्वदर्शनं पुपूषवः यदुक्तं शांतिचरित्रे श्री मुनिदेव सूरि कृते श्रीशातिदेवजन्ममहवर्णने—

॥ १ ॥ "ज्योतिष्कनायकौ पुष्पदंत सङ्ख्यातिगावपि ।
हेमाद्रिमाद्रियंते स्म, चतुःषष्टि सुरेश्वराः ॥"

अथामीषां प्रस्तुतकर्मणीतिवक्तव्यतामाह—

*मू. (२३९) तए णं से अच्चुए देविंदे देवराया महं देवाहिवे आभिओगे देवे सद्दावेइ २ त्ता*

*एवं वयासी–खिप्पामेव भो देवाणुप्पिआ! महत्थं महग्घं महारिहं विउलं तित्थयराभिसेअं उवट्ठवेह, तए णं ते अभिओगा देवा हट्ठतुट्ठ जाव पडिसुणित्ता उत्तरपुरत्थिमं दिसीभागं अवक्कमंति २ त्ता वेउव्विअसमुग्घाएणं जाव समोहणित्ता अट्ठसहस्सं सोवण्णिअकलसाणं एवं रुप्पमयाणं मणिमयाणं सुवण्णरुप्पमयाणं सुवण्णमणिमयाणं रुप्पमणिमयाणं सुवण्णरुप्पमणिमयाणं अट्ठसहस्सं भोमिज्जाणं अट्ठसहस्सं चंदणकलसाणं एवं भिंगाराणं आयंसाणं थालाणं पाईणं सुपइट्ठगाणं चित्ताणं रयणकरंडगाणं वायकरगाणं पुप्फचंगेरीणं, एवं जहा सूरिआभस्स सव्वचंगेरीओ सव्वपडलगाइं विसेसिअतराइं भाणिअव्वाइं, सीहासणछत्तचामरतेल्लसमुग्ग जाव सरिसवसमुग्गा तालिअंटा जाव अट्ठसहस्सं कडुच्छुगाणं विउव्वंति विउव्वित्ता साहाविए विउव्विए अ कलसे जाव कडुच्छुए अ गिण्हित्ता जेणेव खीरोदए समुद्दे तेणेव आगम्म खीरोदगं गिण्हंति २ त्ता जाइं तत्थ उप्पलाइं पउमाइं जाव सहस्सपत्ताइं ताइं गिण्हंति।*

*एवं पुक्खरोदाओ जाव भरहेरवयाणं मागहाइतित्थाणं उदगं मट्टिअं च गिण्हंति २ त्ता एवं गंगाईणं महानईणं जाव चुल्लहिमवंताओ सव्वतुअरे सव्वपुप्फे सव्वगंधे सव्वमल्ले जाव सव्वोसहीओ सिद्धत्थए य गिण्हंति २ त्ता पउमद्दहाओ दहोअगं उप्पलादीणि अ।*

*एवं सव्वकुलपव्वएसु वट्टवेअद्धेसु सव्वमहद्दहेसु सव्ववासेसु सव्वचक्कवट्टिविजएसु वक्खारपव्वएसु अंतरनईसु विभासिज्जा जाव उत्तरकुरुसु जाव सुदंसणभद्दसालवने सव्वतुअरे जाव सिद्धत्थए अ गिण्हंति, एवं नंदनवणाओ सव्वतुअरे जाव सिद्धत्थए अ सरसं च गोसीसचंदणं दिव्वं च सुमनदामं गेण्हंति, एवं सोमनसपंडगवनाओ अ सव्वतुअरे जाव सुमनसदामं ददर-मलयसुगंधे य गिण्हंति २ त्ता एगओ मिलंति २ त्ता जेणेव सामी तेणेव उवागच्छंति २ त्ता महत्थं जाव तित्थयराभिसेअं उवट्ठवेंतित्ति।*

**वृ.** 'तए णं'मित्यादि, ततः सोऽच्युतो यः प्रागभिहितो देवेंद्रो देवराजा महान् देवाधिपो महेंद्रः चतुःषष्टावपि इंद्रेषु लब्धप्रतिष्ठोऽत एवास्य प्रथमोऽभिषेक इति, आभियोग्यान् देवान् शब्दयति शब्दयित्वा च एवमवादीत्, यदवादीत्तदाह–क्षिप्रमेव भो देवानुप्रियाः! महार्थं महार्घं विपुलं तीर्थकराभिषेकमुपस्थापयत, अत्र महार्थादिपदानि प्राग्भरतराज्याधिकारे वर्णितानि, वाक्ययोजना तु सुलभा, अथ यथा ते चक्रुस्तथाऽऽह–'तए णं'मित्यादि, ततस्ते आभियोगिका देवा हृष्टतुष्टयावत् प्रतिश्रुत्य उत्तरपौरस्त्यं दिग्भागमपक्रामति अपक्रम्य च वैक्रियसमुद्‌घातेन यावत्पदात् 'समोहणंति'त्ति ग्राह्यं समवहत्य चाष्टसहस्रं–अष्टोत्तरं सहस्रं सौवर्णिककलशानां विकुर्वतीति सम्बंधः, एवं अष्टसहस्रं रूप्यमयानां मणिमयानां सुवर्णरूप्यमयानां सुवर्णमणिमयानां रूप्यमणिमयानां सुवर्णरूप्यमणिमयानां अष्टसहस्रं भौमेयकानां मृन्मयानामित्यर्थः अष्टसहस्रं चंदनकलशानां–मङ्गल्यघटानां एवं भृङ्गाराणां आदर्शानां स्थालीनां पात्रीणां सुप्रतिष्ठकानां चित्राणां रत्नकरण्डकानां वातकरकाणां–बहिश्चित्रितानां मध्ये जलशून्यानां करकाणां पुष्पचङ्गेरीनाम-ष्टसहस्रं, एवमुक्तंयावेन यथा सूर्याभस्य राजप्रश्नीये इंद्राभिषेकसमये सर्वचङ्गेर्यस्तथाऽत्र वाच्याः 'अट्ठसहस्सं आभरणचङ्गेरीणं लोमहत्थचङ्गेरीण'मिति, तथा सर्वपटलकानि वाच्यानि, तथाहि–

अष्टसहस्रं पुष्पपटलकानां, इमानि वस्तूनि सूर्याभाभिषेकोपयोगवस्तुभिः सङ्ख्ययैव तुल्यानि

ननु गुणेनेत्याह—विशेषिततराणि—अतिविशिष्टानि भणितव्यानि—वाच्यानि प्रथमकल्पीयदेव-विकुर्वणातोऽच्युतकल्पदेवविकुर्वणाया अधिकतरत्वात्, तथा सिंहासनच्छत्रचामरतिलसमुद्गकयावत्सर्षपसमुद्गकः, अत्र यावत्पदात् कोष्ठसमुद्गकादयो वाच्याः, एषां च व्याख्या प्राग्वत्, तालवृंतानि यावत्करणात् व्यजनानीति ग्रहः, तत्र व्यजनानीति सामान्यतो वातोपकरणानि तालवृंतानि तद्विशेषरूपाणि, एषामष्टसहस्रमष्टसहस्रमिति, अष्टसहस्रं धूपकडुच्छुकानामिति।

अथ विकुर्वणायाः सार्धकल्पमाह—'विउव्वित्ता' इत्यादि, विकुर्व्य च स्वाभाविकान्—देवलोके देवलोकवत् स्वयंसिद्धान् शाश्वतान् वैक्रियांश्च—अनंतरोक्तान् सौवर्णादिकान् यावच्छब्दात् भृङ्गारादयो व्यजनांता ग्राह्याः, धूपकडुच्छुकांश्च सूत्रे साक्षादुपात्तान्, गृहीत्वा च यत्रैव क्षीरोदः समुद्रः तत्रैवागत्य क्षीरोदकं—क्षीररूपमुदकं गृह्णन्ति, ननु मेरुतोऽभिषेकाङ्गभूवस्तुग्रहणाय चलंतस्ते देवास्तदग्रहणोपयोगि वस्तुजातं कलशभृङ्गारादिकं गृह्णन्तु परं तदनुपयोगि यावच्छब्दोदरप्रविष्टं सिंहासनचामरादिकं तैलसमुद्गकादिकं च कथं गृह्णन्तीति चेदुच्यते, विकुर्वणासूत्रस्यातिदेशेन ग्रहणसूत्रस्यातिदिष्टत्वादेतत्सूत्रपाठस्यांतर्गतत्वेऽपि ये ग्रहणोचितास्ते एव गृहीता इति बोध्यं, योग्यतावशादेवार्थप्रतिपत्तेः, यच्च धूपकडुच्छुकानां तत्र ग्रहणं तत्कलश-भृङ्गारादिदेवहस्तधूपनार्थमिति, अंयथा सूत्रे साक्षादुपदर्शितस्य धूपकडुच्छुकानां ग्रहणस्य नैरर्थक्यापत्तेः। अथ प्रस्तुतसूत्रं—गृहीत्वा च यानि तत्र क्षीरोदे उत्पलानि पद्मानि यावत्सहस्रपत्राणि तानि गृह्णन्ति यावत्पदात् कुमुदादिग्रहः, एवमनया रीत्या पुष्करोदात्—उदकादिकं गृह्णन्ति, यत्तु क्षीरोदाद्विनिवृत्तैर्वारुणीवरमंतरा मुक्त्वा पुष्करोदे जलं गृहीतं तद्वारुणीवरवा- रिणोऽग्राह्यत्वादिति सम्भाव्यते, यावच्छब्दात् समयखित्ते इति ग्राह्यं, तेन मनुष्यक्षेत्रे भरतैरावतयोः प्रस्तावात् पुष्करवरद्वीपार्द्धसत्कयोः मागधादीनां तीर्थानामुदकं मृत्तिकां च गृह्णन्ति

'एव'मिति समयक्षेत्रस्थपुष्कवरद्वीपार्द्धसत्कानां गङ्गादीनां महानदीनां आदिशब्दात् सर्वमहानदीग्रहः यावत्पदात् उदकमुभयतटमृत्तिकां गृह्णन्ति, क्षुद्रहिमवतः सर्वान् तुवरान्—कषायद्रव्याणि आमलकादीनि सर्वाणि जातिभेदेन पुष्पाणि सर्वान् गंधान्—वासादीन् सर्वाणि माल्यानि—ग्रथितादिभेदभिन्नानि सर्वा महौषधीः—राजहंसीप्रमुखाः सिद्धार्थकांश्च—सर्षपान् गृह्णन्ति २ त्वा च पद्मद्रहाद् द्रहोदकमुत्पलादीनि च गृह्णन्ति, एवं क्षुद्रहिमवन्न्यायेन सर्वक्षेत्रव्यवस्थाकारित्वेन कुलकल्पाः पर्वताः मध्यपदलोपे कुलपर्वता हिमाचलादयस्तेषु वृत्तवैताढ्येषु सर्वमहाद्रहेषु—पद्मद्रहादिषु सर्ववर्षेषु—भरतादिषु सर्वचक्रवर्तिविजयेषु—कच्छादिषु वक्षस्कारपर्वतेषु—गजदंताकृतिषु माल्यवदादिषु सरलाकृतिषु च चित्रकूटादिषु तथा अंतरनदीषु—ग्राहावत्यादिषु विभाषेत—वदेत्, पर्वतेषु तु तुवरादीनां द्रहेषु उत्पलादीनां कर्मक्षेत्रेषु मागधादितीर्थदकमृदां नदीषूदकोभयतटमृदां ग्रहणं वक्तव्यमित्यर्थः, यावत्पदात् देवकुरुपरिग्रहस्तेन कुरुद्वये चित्रविचित्रगिरियमकगिरि-काञ्चनगिरिह्रददशकेषु यथासम्भवं वस्तुजातं गृह्णन्ति, यावत्पदात् पुष्करवरद्वीपार्द्धस्य पूर्वाप-रार्द्धयोर्भरतादिस्थानेषु वस्तुग्रहो वाच्यः, ततो जंबूद्वीपेऽपि तदग्रहस्तथैव वाच्यः, कियत्पर्यंतं ?

सुदर्शने पूर्वार्धमेरौ भद्रशालवने नंदनवने सौमनसवने पण्डकवने च सर्वतुवरान् गृह्णन्ति तथा तस्यैवापरार्धे अनेनैव क्रमेण वस्तुजातं गृह्णन्ति, ततो धातकीखण्डजंबूद्वीपगतो मेरुस्तस्य

भद्रशालवने सर्वतुवरान् यावत् सिद्धार्थकांश्च गृह्णन्ति, एवमस्यैव नंदनवनात् सर्वतुवरान् यावत्सिद्धार्थकांश्च सरसं च गोशीर्षचंदनं दिव्यं च सुमनोदाम-ग्रथितपुष्पाणि गृह्णन्ति, एवं सौमनसवनात् सूत्रपाठे पञ्चमीलोपः प्राकृतत्वात् पण्डकवनाच्च सर्वतुवरान् यावत् सुमनोदामदर्दरमलयसुगंधिकान् गंधान् दर्दरमलयौ चंदनोत्पत्तिखानिभूतौ पर्वतौ तेन तदुद्भवं चंदनमपि 'तात्स्थ्यात् तद्व्यपदेश' इति न्यायेन दर्दरमलयशब्दाभ्यामभिधीयते, ततो दर्दरमलयनामके चंदने तयोः सुगंधः परमगंधो यत्र तान् दर्दरमलयसुगंधिकान् गंधान्-वासान् गृह्णन्ति, गृहीत्वा च इतस्ततो विप्रकीर्णा आभियोग्यदेवा एकत्र मिलन्ति मिलित्वा यत्रैव स्वामी तत्रैवोपागच्छंति उपागत्य च तं महार्थं यावच्छब्दात् महार्धं महार्हं विपुलमिति पदत्रयी तीर्थकराभिषेकं तीर्थकराभिषेकयोग्यं क्षीरोदकाद्युपस्करमुपस्थापयति-उपनयति, अच्युतेंद्रस्य समीपस्थितं कुर्वतीत्यर्थः । अथाच्युतेंद्रो यदकरोत्तदाह-

*मू. (२४०) तए णं से अच्चुए देविंदे दसहिं सामानिअसाहस्सीहिं तायत्तीसाए तायत्तीसएहिं चउहिं लोगपालेहिं तिहिं परिसाहिं सत्तहिं अनिएहिं सत्तहिं अनिआहिवईहिं चत्तालीसाए आयरक्खदेवसाहस्सीहिं सद्धिं संपरिवुडे तेहिं साभाविएहिं विउव्विएहि अ वरकमलपइट्ठाणेहिं सुरभिवरवारिपडिपुण्णेहिं चंदणकयचच्चाएहिं आविद्धकंठेगुणेहिं पउमुप्पलपिहाणेहिं करयलसुकुमारपरिग्गहिएहिं अट्ठसहस्सेणं सोवण्णिआणं जाव अट्ठसहस्सेणं भोमेज्जाणं जाव सव्वोदएहिं सव्वमट्टिआहिं सव्वतुअरेहिं जाव सव्वोसहिसिद्धत्थएहिं सव्विड्ढीए जाव रवेणं महया २ तित्थयराभिसेएणं अभिसिंचंति । तए णं सामिस्स महया २ अभिसेअंसि वट्टमाणंसि इंदाईआ देवा छत्तचामरधूवकडुच्छुअपुप्फगंधजावहत्थगया हट्ठतुट्ठ जाव वज्जसूलपाणी पुरओ चिट्ठंति पंजलिउडा इति, एवं विजयानुसारेण जाव अप्पेगइआ देवा आसिअसंमज्जिओवलित्तसित्तसुइ-सम्मट्ठरत्थंतरावणवीहिअं करेंति जाव गंधवट्टिभूअंति, अप्पे० हिरन्नवासं वासिंति एवं सुवण्ण-रयणवइरआभरणपत्तपुप्फफलबीअमल्लगंधवण्ण जाव चुण्णवासं वासंति, अप्पे० हिरण्णिहिं भाइंति एवं जाव चुण्णविधिं भाइंति, अप्पे० चउव्विहं वज्जं वाएंति तंजहा-*

*ततं १ विततं २ घनं ३ झुसिरं ४, अप्पेगइआ चउव्विहं गेअं गायंति, तंजहा-उक्खित्तं १ पायत्तं २ मंदायईयं ३ रोइआवसाणं ४, अप्पेगइआ चउव्विहं नट्टं नच्चंति, तं०-अंचिअं १ दुअं २ आरभडं ३ भसोलं ४, अप्पेगइआ चउव्विहं अभिनयं अभिनेंति, तं०-दिट्ठंतिअं पाडिसुइअं सामण्णोवणिवाइअं लोगमज्झावसाणिअं, अप्पेग० बत्तीसइविहं दिव्वं नट्टविहिं उवदंसेंति, अप्पेगइआ उप्पयनिवयं निवयउप्पयं संकुचिअपसारिअं जाव भंतसंभंतनामं दिव्वनट्टविहिं उवदंसंतीति, अप्पेगइआ तंडवेंति अप्पेगइआ लासेंति अप्पेगइआ पीणेंति, -*

*-एवं बुक्कारेंति अप्फोडेंति वग्गंति सीहणायं नदंति अप्पे० सव्वाइं करेंति अप्पे० हयहेसिअं एवं हत्थिगुलगुलाइअं रहघणघणाइअं अप्पे० तिन्निवि, अप्पे० उच्छोलंति अप्पे० पच्छोलंति अप्पे० तिवइं छिंदंति पायदद्दरयं करेंति भूमिचवेडे दलयंति अप्पे० महया सद्देणं रावेंति एवं संजोगा विभासिअव्वा, अप्पे० हक्कारेंति । एवं पुक्कारेंति वक्कारेंति ओवयंति उप्पयंति परिवयंति जलंति तवंति पयवंति गज्जंति विज्जुआयंति वासिंति अप्पे० देवुक्कलिअं करेंति एवं देवकहकहगं*

*करोंति अप्पे० दुहुदुहुगं करेंति अप्पे० विकिअभूयाइं रूवाइं विउव्वित्ता पणच्चंति एवमाइं विभासेज्जा जहा विजयस्स जाव सव्वओ समंता आहावेंति परिधावेंतिति ।*

**वृ.** 'तए णं से अच्चुए' इत्यादि, ततः उपस्थितायामभिषेकसामग्र्यां सोऽच्युतो देवेंद्रो दशभि सामानिकसहस्रैः त्रयस्त्रिंशता त्रायस्त्रिंशकैः चतुर्भिर्लोकपालैः तिसृभिः पर्षद्भिः सप्तभिरनीकैः सप्तभिरनीकाधिपतिभि चत्वारिंशता आत्मरक्षकदेवसहस्रैः सार्द्धं संपरिवृतस्तैस्तदगतदेवजनप्रसिद्धैः स्वाभाविकैर्वैक्रियैश्च वरकमलप्रतिष्ठानैरित्यादि सर्वं प्राग्वत्, सुकुमालकरतलपरिगृहीतैरनेकसहस्रसङ्ख्याकैः कलशैरिति गम्यते, तानेव विभागतो दर्शयति–अष्टसहस्रेण सौवर्णिकानां कलशानां यावत्पदादष्टसहस्रै रौप्याणामष्टसहस्रेण मणिमयानामष्टसहस्रेण सुवर्णरूप्यमयानामष्टसहस्रेण सुवर्णमणिमयानामष्टसहस्रेण रूप्यमणिमयानामष्टसहस्रेण सुवर्णरूप्यमणिमयानामिति अष्टसहस्रेण भौमेयानां सर्वसङ्ख्यया अष्टभिः सहस्रैः चतुःषष्ट्यधिकैश्च- विच्छब्दात् भृङ्गारादिपरिग्रहः सर्वोदकैः सर्वमृत्तिकाभि सर्वतुवरैर्यावच्छब्दात् पुष्पादिग्रहः, सर्वौषधिसिद्धार्थकैः सर्वर्द्ध्या यावद्रवेण यावच्छब्दात् 'सव्वजुईए इत्यारभ्य दुंदुहिनिग्घोसनाइअ' इत्यंतं ग्राह्यं, महता २ तीर्थकराभिषेकेण, अत्र करणे तृतीया, कोऽर्थः ? –येनाभिषेकेण तीर्थकरा अभिषिच्यंते तेनेत्यर्थः, अत्राभिषेकशब्देनाभिषेकोपयोगि क्षीरोदादिजलं ज्ञेयम्, अभिषिञ्चति–अभिषेकं करोतीत्यर्थः । सम्प्रत्यभिषेककारिणि इंद्रादपरे इंद्रादयो यत्कुर्वन्ति तदाह– ततः स्वामिनोऽतिशयेन महत्यभिषेके वर्त्तमाने इंद्रादिका देवाः छत्रचामरकलशधूपकडुच्छुक- पुष्पगंधयावत्पदात् माल्यचूर्णादिपरिग्रहः, हस्तगताः हृष्टतुष्टयावत्पदादानंदालापको ग्राह्यः, वज्रशूलपाणयः उपलक्षणादन्यशस्त्रपाणयोऽपि भाव्याः पुरतस्तिष्ठंति, अयमर्थः– केचन छत्रधारिणः केचन चामरोत्क्षेपकाः केचन कलशधारिण इत्यादि, सेवाधर्मसत्यापनार्थं न तु वैरिनिग्रहार्थं तत्र वैरिणामभावात्, केचन वज्रपाणयः, केचन शूलपाणय इति, केचन छत्राद्यव्य- ग्रपाणयः प्राञ्जलिकृतास्तिष्ठंति, अत्रातिदेशमाह–

'एवं विजया' इत्यादि, एवमुक्तप्रकारमभिषेकसूत्रं विजयदेवाभिषेकसूत्रानुसारेण ज्ञेयं, यावत्पदात् 'अप्पेगइआ पंडगवनं नच्चोअगं नाइमट्टिअं पविरलपप्फुसियं रयरेणुविणासणं दिव्वं सुरहिगंधोदकासं वासंति, अप्पेगइआ निहयरयं णट्ठरयं भट्ठरयं पसंतरयं उवसंतरयं करेंति' इति ग्राह्यम्, अत्र व्याख्या प्राग्वत्, वाक्ययोजना त्वेवं–अपिर्बाढार्थे, एकका:–केचन देवाः पण्डकवने नात्युदकं नातिमृत्तिकं यथा स्यात्तथा प्रविरलप्रस्पृष्टं रजोरेणुविनाशनं दिव्यं सुरभिगंधोदकवर्षं वर्षंति, अप्येकका: पण्डकवनं निहतरजः नष्टरजः भ्रष्टरजः प्रशांतरजः उपशांतरजः कुर्वंति, अथ सूत्रं –अप्येकका: देवा पण्डकवनं आसिक्तसम्मार्जितोपलिप्तं तथा सिक्तानि जलेन अत एव शुचीनि सम्मृष्टानि कचवरापयेन रथ्यांतराणि आपणवीथय इवापणवीथयो रथ्याविशेषा यस्मिन् तत्तया कुर्वंति, अयमर्थः– तत्र स्थानस्थानानीतचंदनादिवस्तूनि मार्गांतरेषु तथा राशीकृतानि सति यथा हट्टश्रेणिप्रतिरूपं दधति यावत्पदात् 'पंडगवनं मंचाइमंचकलिअं करेंति, अप्पेगइआ नानाविह- रागऊसिअज्झयपडागमंडिअं करेंति, अप्पे० गोसीसचंदनदद्दरदिन्नपंचंगुलितलं करेंति, अप्पे० उवचिअचंदनकलसं अप्पे० चंदनघडसुकयतोरणपडिदुवारदेसभागं करेंति, अप्पे० आसत्तोसत्तविपुलवट्टवग्घारिअमल्लदामकलावं करेंति, अप्पे० पंचवण्णसरससुरहिमुक्कपुंजो-

मयारकलिअं करेंति, अप्पे० कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूवमघमघंतगंधुद्धुआभिरामं सुगंधवरगंधियं' इति ग्राह्यं, पुनः प्रकारांतरेण देवकृत्यमाह—'अप्पे० हिरन्न'इत्यादि, अप्येकका: हिरण्यस्य—रूप्यस्य वर्ष—वृष्टिं वर्षंति कुर्वतीत्यर्थः, एवं सर्वत्र योजना कार्या, नवरं सुवर्णं प्रतीतं, रत्नानि—कर्केतनादीनि वज्राणि—हीरकाः आभरणानि—हारादीनि पत्राणि—दमनकादीनि पुष्पाणि फलानि च प्रतीतानि बीजानि सिद्धार्थादीनि माल्यानि—ग्रथित- पुष्पाणि गंधाः—वासाः वर्णो—हिङ्गुलादि यावच्छब्दाद्वस्त्रमपि चूर्णानि—सुगंधद्रव्यक्षोदाः, तथा अप्येकका: हिरण्यविधिं—हिरण्यरूपं मङ्गलप्रकारं भाजयति शेषदेवेभ्यो ददतीत्यर्थः, एवं यावत्पदात् सुवर्णविधिं रत्नविधिं इत्यादिपदानि ग्राह्याणि चूर्णविधिं भाजयन्ति ।

अथ सङ्गीतविधिरूपमुत्सवमाह—'अप्पेगइआ चउव्विहं वज्जं' इत्यादि, अप्येककाश्चतुर्विधं वाद्यं वादयन्ति, तद्यथा—ततं—वीणादिकं विततं—पटहादिकं, श्रीहेमचंद्रसूरिपादास्तु विततस्थाने आनद्धमाहुः, घनं—तालप्रभृतिकं शुषिरं—वंशादिकं, अप्येकका: चतुर्विधं गेयं गायति, तद्यथा—उत्क्षिप्तं—प्रथमतः समारभ्यमाणं पादात्तं—पादवृद्धं वृत्तादिचतुर्भागरूपपादबद्धमिति भावः मंदायमिति—मध्यभागे मूर्च्छनादिगुणोपेततया मंदं मंदं घोलनात्मकं, 'रोचितावसाण'मिति रोचितं—यथोचितलक्षणोपेततया भावितं सत्यापितमितियावत् अवसानं यस्य तत्तथा, 'रोइअग'मिति पाठे रोचितकमित्यर्थः, स एव, अप्येकका: चतुर्विधं नाट्यं नृत्यति, तद्यथा—अञ्चितं द्रुतं आरभटं भसोलमिति, अप्येककाश्चतुर्विधमभिनयमभिनयति, तद्यथा—दार्ष्टांतिकं प्रातिश्रुतिकं सामान्यतो विनिपातिकं लोकमध्यावसानिकमिति, एते नाट्यविधयोऽभिनयविधयश्च भरतादिसङ्गीतशास्त्रज्ञेभ्योऽवसेयाः, अप्येकका द्वात्रिंशद्विधं अष्टमाङ्गलिक्यादिकं दिव्यं नाट्यविधिमुपदर्शयति, स च येन क्रमेण भगवतो वर्द्धमानस्वामिनः पुरतः सूर्याभदेवेन भावितस्तेन क्रमेणोपदर्श्यते, तत्र प्रारिप्सित-महानाट्यरूपमङ्गल्यवस्तुनिर्विघ्नसिद्ध्यर्थमादौ मङ्गल्यनाट्यं, तथाहि- स्वस्तिकश्रीवत्सनंद्यावर्त्तवर्द्धमानकभद्रासनकलशमत्स्यदर्पणरूपाष्टमाङ्गलिक्यभक्तिचित्रं, अत्राष्टपदानां व्याख्या प्राग्वत्, नवरं तेषां भक्त्या—विच्छित्या चित्रं—आलेखनं तत्तदाकाराविर्भावना यत्र तत्तथा तदुपदर्शयंतीत्यर्थः, यथाहि चित्रकर्मणि सर्वे जगद्वर्त्तिनो भावाश्चित्रयित्वा दर्श्यंते तथा तेऽभिनयविषयीकृत्य नाट्येऽपि, अभिनयः—चतुर्भिराङ्गिकवाचिकसात्त्विकाहार्यभेदैः समुदितैरसमुदितैर्वाऽभिनेतव्यवस्तुभावप्रकटनं, प्रस्तुते चाङ्गिके नाट्यकर्तृणा तत्तंमङ्गलाकारतयाऽवस्थानं हस्तादिना तत्तदाकारदर्शनं वा वाचिकेन प्रबंधादौ तत्तंमङ्गलशब्दोच्चारणं सभासदां मनसि रक्तिपूर्वकं तत्तंमङ्गलस्वरूपाविर्भावनं मङ्गलनाट्यमिति १ ।

अथ द्वितीयं नाट्यं, आवर्त्तप्रत्यावर्त्तश्रेणिप्रश्रेणिस्वस्तिकपुष्यमाणवर्द्धमानकमत्स्याण्डकमकराण्डकजारमारपुष्पावलिपद्मपत्रसागरतरङ्गवासंतीलताषद्मलताभक्तिचित्रं, तत्र सृष्टिमेण प्रमदभ्रमरिकादानैर्नर्त्तनमावर्त्तस्तद्विपरीतक्रमेण भ्रमरिकादानैर्नर्त्तनं प्रत्यावर्त्तः श्रेण्या—पङ्क्त्या स्वस्तिकाः श्रेणिस्वस्तिकाः, ते चैकपङ्क्तिगता अपि स्युरिति अनुवृत्ताः श्रेणिस्वस्तिकाः प्रश्रेणिस्वस्तिकाः, अत्र प्रशब्दोऽनुकृत्तार्थे यथा प्रशिष्यः प्रपुत्र इत्यादौ, अयमर्थः—मुख्यस्यैकस्य स्वस्तिकस्य प्रतिशाखं गता अंये स्वस्तिका इत्यर्थः, एतेन प्रथमनाट्यगतस्वस्तिकनाट्याद् भेदो दर्शितः,

तदभिनयेन नर्त्तनं, तथा पुष्यमाणः—पुष्टीभवन् तदभिनयेन नृत्यं, यथा हि पुष्टो गच्छन् जल्पन् श्वसिति बहु बहु प्रस्विद्यति दारुहस्तप्रायौ स्वहस्तावतिमेदस्विनौ चालयन् २ सभासदामुपहासपात्रं भवति तथाऽभिनयो यत्र नाट्ये तत्पुष्यमाणनाट्यं, एतदेवोत्तरसूत्रकारो।

'अप्पेगइआ पीणेंती'ति सूत्रेण स्वयमेव वक्ष्यति, वर्द्धमानकः—स्कंधाधिरूढः पुरुषस्तदभिनयगर्भितं नाट्यं वर्द्धमानकनाट्यं, एतेन प्रथमनाट्यगतवर्द्धमाननाट्याद्भेदो दर्शितः, मत्स्यानामण्डकंमत्स्याण्डकं मत्स्या हि अण्डाज्जायंते तदाकारकरणेन यन्नर्त्तनं तंमत्स्याण्डकनाट्यं, एवं मकराण्डकमपि, न हि यथाकामविकुर्विणां देवानां किञ्चिदसाध्यं नाट्येन चानभिनेतव्यं येन तदभिनयो न सम्भवतीति, मत्स्यकाण्डपाठे तु मत्स्यकाण्डं—मत्स्यवृंदं, तद्धि सजातीयैः सह मिलितमेव जलाशये चलति, सञ्चारित्वात्, तथा यत्र नटोऽपरनटैः सह सङ्गतो रङ्गभूमौ प्रविशति ततो वा निर्याति तंमत्स्यकाण्डनाट्यम्, एवं मकरकाण्डपाठे मकरवृंदं वाच्यं, तद्धि यथा विकृतरूपत्वेनातीव द्रष्टॄणां त्रासकृद् भवति तथा यन्नाट्यं तदाकारदर्शनेन भयानकं स्यात् तद्भयानकरसप्रधानं मकरकाण्डं नाम नाटकं, तथा जारनाटकं जारः—उपपति स च यथा स्त्रीभिः अतिरहस्येव रक्ष्यते तद्वद्यत्र मूलवस्तुतिरोधानात्तत्तदिन्द्रजालाविर्भावनेन सभासदां मनस्यंयदेवावतार्यते तज्जारनामकं नाट्यं। तथा मारनाटकं मारः—कामस्तदुद्दीपकं नाटकं मारनाटकं, शृङ्गाररसप्रधानमित्यर्थः, तथा पुष्पावलिनाट्यं यत्र कुसुमापूर्णसच्छिद्रवंशशलाकादिदर्शनाभिनयस्तत्पुष्पावलिनाटकं, तथा पद्मपत्रनाट्यं यत्र पद्मपत्रेषु नृत्यन्नटस्तथाविधकरणप्रयत्नविशेषेण वायुरिव लघूभवन् न पद्मपत्रं क्लमयति नापि त्रोटयति न वक्रीकरोति तत्पद्मपत्रोपलक्षितं नाट्यं पद्मपत्रनाटकं, तथा सागरत- रङ्गाभिनयं नाम नाट्यं यत्र वर्णनीयवस्तुनो वचनचातुर्यवर्णनाद्यैः सागरतरङ्गा अभिनीयंते अथवा यत्र तकतक झें झें किटता किटता कुकु इत्यादयस्तालोदघट्टनार्थकवर्णा बहवोऽस्खलदगत्या प्रोच्यंते तत्सागरतरङ्गनामनाटकं, एवं वसंतादिऋतुवर्णने वासंतीलतापद्मलतावर्णनाभिनयं नाटकं, नंवेवं सत्यभिनेतव्यवस्तूनामानंत्येन नाट्यानामप्यानंत्यप्रसङ्गस्तेन द्वात्रिंशत्सङ्ख्याक- त्वविरोधः, उच्यते।

एषा च सूत्रोक्ता सङ्ख्या, उपलक्षणाच्चान्येऽपि तत्तदभिनयकरणपूर्वकं नाट्यभेदा ज्ञेयाः, एवं सर्वं नाट्येष्वपि ज्ञेयं २, अथ तृतीयं—ईहामृगऋषभतुरगनरमकरविहगव्यालकिन्न- ररुरुसरभचमरकुञ्जरवनलतापद्मलताभक्तिचित्रं, तत्र ईहामृगा—वृकाः ऋषभादयः प्रतीताः नवरं रुरवश्चमराश्च मृगविशेषाः वनो—वृक्षविशेषस्तस्य लताः ३, अथ चतुर्थं—एकतोवक्रद्विधातोवक्रएकतश्चक्रवालद्विधातश्चक्रवालचक्रार्द्धचक्रवालाभिनयात्मकः, एकतोत्रकं नाम नटानां एकस्यां दिशि धनुराकारश्रेण्या नर्त्तनं, अनेन श्रेणिनाट्याद्भेदो दर्शितः, एवं द्विधातोवक्रं द्वयो—परस्पराभिमुखदिशोः धनुराकारश्रेण्या नर्त्तनं, तथा एकतश्चक्रवालं—एकस्यां दिशि नटानां मण्डलाकारेण नर्तनं, एवं द्विधातश्चक्रवालं—द्वयोः परस्पराभिमुखदिशोर्ज्ञेयं, तथा 'चक्रार्द्धचक्रवालं' चक्रस्य—रथाङ्गस्यार्द्धं तद्रूपं यच्चक्रवालं—मण्डलं तदाकारेण नर्तनं अर्द्धमण्डलाकारेणेत्यर्थः, तदभिनयं नाम नाटकं। इदं च नटानां नर्त्तने संस्थानविशेषप्रधानं नाम नाटकं ४, अथ पञ्चमं- चंद्रावलिप्रविभक्ति- सूर्यावलिप्रविभक्तिवलयतारांहंसैकमुक्ताकनकरत्नावलिप्रविभक्त्यभिनयात्म-

कमावलिप्रविभक्तिनामं, तत्र चंद्राणामावलि–श्रेणिस्तस्याः प्रविभक्तिर्विच्छित्ती रचनाविशेषस्तदभिनयात्मकं, एवं सूर्यावलिप्रविभक्त्यभिनयात्मकं, तथा वलयादिरत्नांतेषु पदेषु आवलिशब्दो योज्यस्तेन वलयावलिप्रविभक्त्यादि, अयमर्थः–पङ्क्तिस्थितानां रजतस्थालहस्तानां भ्रमीपरायणानां नटानां नाट्यं, एवं वलयहस्तानां वलयनाट्यं, एवं वर्त्तुलकहस्तगतानां तारावलिनाट्यं, अनयैव युक्त्या तत्सदृशवस्तुदर्शनेन अचिंत्यत्वाद्वा वैक्रियशक्तेस्तद्वस्तुदर्शनेन तत्तदभिनयकरणं तत्तन्नामकं नाट्यं ज्ञेयं, एतच्चावलिकाबद्धमित्यावलिकाप्रविभक्ति–रचना तदभिनयगर्भं यथा उदये सूर्यचंद्रयोर्मण्डलमरुणं प्राच्यां चारुणः प्रकाशस्तथा यत्राभिनीयते तदुदगमनप्रविभक्तिः ६, अथ सप्तमं–चंद्रसूर्यागमनप्रविभक्ति चंद्रस्य सविमानस्यागमनं–आकाशादवतरमं तस्य प्रविभक्तिर्यत्र नाट्येऽभिनयेन दर्शनं, एवं सूर्यागमनप्रविभक्ति ७।

अथाष्टमं–चंद्रसूर्यावरणप्रविभक्तियुक्तमावरणप्रविभक्ति, यथा हि चंद्रो घनपटलादिना आव्रियते तथाऽभिनयदर्शनं चंद्रावरप्रविभक्ति, एवं सूर्यावरणप्रविभक्त्यपि ८, अथ नवमंचंद्रसूर्यास्तमयनप्रविभक्तियुक्तमस्तमयनप्रविभक्ति यत्र सर्वतः संध्यारागप्रसरणतमः प्रसरणकुमुदसङ्कोचादिना चंद्रास्तमयनमभिनीयते तच्चंद्रास्तमयनप्रविभक्ति, एवं सूर्यास्तमयनप्रविभक्त्यपि, नवरं कमलसङ्कोचोऽत्र वक्तव्यः ९, अथ दशमं–चंद्रसूर्यनागयक्षभूतराक्षसगंधर्वमहोरगमण्डलप्रविभक्तियुक्तं मण्डलप्रविभक्ति, तथा बहूनां चंद्राणां मण्डलाकारेण–चक्रवालरूपेण निदर्शनं चंद्रमण्डलयोश्चंद्रावलिसूर्यावलिनाट्यतो भेदो दर्शितस्तयोरावलिकाप्रविष्टत्वात् १०।अथैकादशं–ऋषभसिंहललितहयगजविलसितमत्तहयगजिलसिताभिनयरूपं द्रुतविलम्बितं नाम नाट्यं, तत्र ऋषभसिंहौ प्रतीतौ तयोर्ललितं–सलीलगति तथा हयगजयोर्विलसितं–मंथरगति, एतेन विलम्बितगतिरुक्ता उत्तरत्र मत्तपदविशेषणेन द्रुतगतेर्वक्ष्यमाणत्वात्, तथा मत्तहयगज- योर्विलसितं–द्रुतगति तदभिनयरूपं गतिप्रधानं द्रुतविलम्बितं नाम नाट्यं ११, अथ द्वादशं– शकटोद्धिसागरनागरप्रविभक्ति, शकटोद्धि–प्रतीता तस्याः प्रविभक्तितदाकारतया हस्त- योर्विधानं, एतत्तु नाट्ये प्रलम्बितभुजयोर्योजने प्रणामाद्यभिनये भवतीति, तथा सागरस्य–समुद्रस्य सर्वतः कल्लोकप्रसरणवडवानलज्वालादर्शनतिमिङ्गिलादिमत्स्यविवर्त्तनगम्भीरगर्जिताद्यभिनयनं सागरप्रविभक्ति, तथा नागराणां–नगरवासिलोकानां सविवेकनेपथ्यकरणं क्रीडासञ्चरणं वचनचातुरीदर्शनमित्याद्यभिनयो नागरप्रविभक्ति तन्नामकं नाट्यं १२।

अथ त्रयोदशं–नंदाचम्पाप्रविभक्तिनाम नाट्यं, नंदा–नंदाभिधानाः शाश्वत्यः पुष्करिण्यस्तासु देवानां जलक्रीडाजलजकुसुमावचयनमंतरणमाप्लवनमित्याद्यभिनयनं नंदाप्रविभक्ति तथा चम्पानाम महाराजधानी उपलक्षणं चैतत् तेन कोशलाविशालादिराजधानीपरिग्रहः तासां च परिखासौधप्रासादचतुष्पदाद्यभिनयनं चम्पाप्रविभक्ति १३, अथ चतुर्दशंमत्स्याण्डकमकराण्डकजारमारप्रविभिक्तिनाम नाट्यं, एतत्तु पूर्वं व्याख्यातमेव, अत्रैषां चतुर्णामभिनयनं पृथगुक्तं तत्र तु व्यामिश्रितमिति भेदः १४।

अथ पञ्चदशं–कखगघङ इति कवर्गप्रविभक्तिकं तत्र ककाराकारेणाभिनयदर्शनं ककार-

प्रविभक्ति, कोऽर्थः ? –तथा नाम ते नटा नृत्यंति यथा ककाराकारोऽभिव्यज्यते एवं खकारगकार-घकारङकारप्रविभक्त्यो वाच्याः, एतच्च कवर्गप्रविभक्तिकं नाट्यं, यद्यपि लिपीनां वैचित्र्येण ककराद्याकारवैचित्र्यात् प्रस्तुतनाट्यस्याप्यनैयत्यप्रसङ्गस्तथापि कवर्गीयजातीयत्वेन विशेषणान्नात्र दोषः, एवं चकारप्रविभक्तिजातीयमितियादि बोध्यं, अथवा ककारशब्दोदघट्टनेन चचपुटचाच-पुटादौ कंकांकिंकीं इथ्यादिवाचिकाभिनयस्य प्रवृत्या नाट्यं ककारप्रविभक्ति, एवं कादिङांतानां शब्दानामादात्वेन ककारखकारगकारघकारङकारप्रविभक्तिकं नाट्यं, एवं चवर्गप्रविभक्त-यादिष्वपि वाच्यं १५, अथ षोडशं चछजझञप्रविभक्तिकं १६, अथ सप्तदशं–टठडढणप्रविभक्ति १७, अथाष्टदशं–तथदधनप्रविभक्तिकं १८, अथैकोनविंशतितमं–पफबभमप्रविभक्तिकं १९

अथ विंशतितमं–अशोकाम्रकम्बूकोसम्बपल्लवप्रविभक्तिकं अशोकादयो–वृक्षविशेषा-स्तेषां पल्लवा–नवकिसलयानि ततस्ते यथा मंदमारुतेरिता नृत्यंति तदभिनयात्मकं पल्लवप्रविभक्तिकं नाम नाट्यं २०, अथैकविंशतितमं–पद्मनागाशोकचम्पकचूतवनवासन्तीकुंदातिमुक्तकश्यामल-ताप्रविभक्तिकं लताप्रविभक्तिकं नाम नाट्यं, इह येषां वनस्पति- कायिकानां स्कंध-प्रदेशविवक्षितोर्ध्वगतैकशाखाव्यतिरेकेणान्यत् शाखांतरं परिस्थूरं न निर्गच्छति तं लता विज्ञेयास्ते च पद्मादय इति पद्मलतादिपदानामर्थ प्राग्वत्, एता यथा मारुतेरिता नृत्यन्ति तदभिनयात्मकं लताप्रविभक्तिकनाम नाट्यं २१, अथ द्वाविंशतितमं–द्रुतनामं नाट्यं २२,

अथ त्रयोविंशतितमं–विलम्बितं नाम नाट्यं, यत्र विलम्बिते–गीतश्दे, स्वरघोलनाप्रकारेण यतिभेदेन विश्रांते तथैव वाद्यशब्देऽपि यतितारूपेण वाद्यमाने तदनुयायिना पादसञ्चारेण नर्त्तनं तद्विलम्बितं नाम नाट्यं २३, अथ चतुर्विंशतितमं–द्रुतविलम्बितं नाम नाट्यं यथोक्तप्रकारद्वयेन नर्त्तनं २४। अथ पञ्चविंशतितमं–अञ्चितं नाट्यं, अञ्चितः–पुष्पाद्यलङ्कारैः पूजितस्तदीयं तदभिनय-पूर्वकं नाट्यमप्यञ्चितमुच्यते, अनेन कौशिकीवृत्तिप्रधानाङ्गाय्याभिनयपूर्वकं नाट्यं सूचितं २५, अथ सप्तविंशतितमं अञ्चितरिभितं नाम नाट्यं–यत्रानंतरोक्तमभिनयद्वयमवतरति तत् २७, अथाष्टविंशतितममारभटं नाम नाट्यं, आरभटाः–सोत्साहाः सुभटास्तेषामिवमारभटं, अयमर्थः–महाभटानां स्कंधास्फालनहृदयोल्वणनादिका या उद्धतवृत्तिस्तदभिनयमिति, अनेनारभटीवृत्ति-प्रधानमाङ्गिकाभिनयपूर्वकं नाट्यमुक्तं ३८।

अथैकोनत्रिंशं भसोलं नाम नाट्यं, 'भस भर्त्सनदीप्तयो'रित्यस्य ह्वादिगणस्थस्य धातोर्ब-भस्ति–दीप्यते इति अचि प्रत्यये भसः–शृङ्गारः पङ्क्तिरथंयायेन शृङ्गाररस इत्यर्थः तं अवतीति भसोस्तं रतिभावाभिनयनेन लाति–गृह्णातीति भसोलो–नटस्ततो धर्मधर्मिणोरभेदोपचारात् भसोलं नाम नाट्यं, एतेन शृङ्गाररससात्त्विकभावः सूचितः, इदं च सर्वं व्याख्यानमुपलक्षणपरं ज्ञेयं, तेनात्र सर्वे सात्त्विका भावा अभिनयविषयीकार्या, एतेन सात्वतीवृत्तिप्रधानं सात्त्विकाभिनय-गर्भितं भसोलं नाम नाट्यं २९, अथ त्रिंशत्तममारभटभसोलं नाम नाट्यं, इदं चानंतरोक्ताभिन-यद्वयप्रधानं ज्ञेयं ३०, अथैकत्रिंशत्तमं उत्पातनिपातप्रवृत्तं संकुचितप्रसारितं रेचकरेचितं भ्रांत-संभ्रांतं नाम नाट्यं, उत्पातो–हस्पादादीनामभिनयगत्योर्ध्वक्षेपणं तेषामेवाधःक्षेपणं निपातस्ताभ्यां यत्प्रवृत्तं प्रवृत्तिमज्जातमित्यर्थः एवं हस्तपादयोरङ्गहारार्थं संकोचनेन संकुचितं प्रसारणेन च प्रसारितं,

तथा रेचकैः-भ्रमरिकाभिः रेचितं-निष्पन्नं, भ्रांतो-भ्रमप्राप्तः स इव यत्राद्भुतचरित्रदर्शनेन पर्षज्जनः सम्भ्रांतः-साश्चर्यो भवति तत् भ्रांतसम्भ्रांतं तदुपचाराज्ञाटयमपि भ्रांतसम्भ्रांतं ३१

अथ द्वात्रिंशत्तमं चरमचरमनामनिबद्धनामकं, तच्च सूर्याभदेवेन भगवतो वर्द्धमानस्वामिनः पुरतो भगवतश्चरमपूर्वमनुष्यभवचरमदेवलोकभवचरमच्यवनचर मगर्भसंहरणचरमभरत-क्षेत्रावसर्पिणीतीर्थकरजंमाभिषेकचरमबाल भाचरमयौवनचरमकामभोगचरमनिष्क्रमणचरमतप-श्चरणचरमज्ञानोत्पादचरमतीर्थप्रवर्तनचरमपरिनिर्वाणाभिनयात्मकं भावितं, इह तु यस्य तीर्थकृतो जंममहं कुर्वंति तच्चरिताभिनयात्मकमुपदर्शयति, यद्यप्यत्राञ्चितरिभितारभटभसोलेषु चतुर्षु मूलभेदेषु गृहीतेषु साभिनयनाटयमात्रसङ्ग्रहः स्यात् तथापि कचिदेकैकेनाभिनयेन कचिद- भिनयसमुदायेन कचिच्चाभिनयविशेषेणांतरकरणात् सर्वप्रसिद्धद्वात्रिंशन्नाटकसङ्ख्याव्य- वहारसंरक्षणार्थं द्वात्रिंशद्भेदा दर्शिताः ।

अथाभिनयशून्यमपि नाटकं भवतीति तत् दर्शयितुमाह-'अप्पेगइआ उप्पय'इत्यादि, अप्येकका उत्पातः-आकाशे उच्छलनं निपातः-तस्मादवपतनं उत्पातपूर्वो निपातो यस्मिन् तदुत्पा-तनिपातं, एवं निपातोत्पातं, संकुचितप्रसारितं प्राग्वत्, यावत्पदात् 'रिआरिअ'मिति ग्राह्यं, तत्र रिअंगमनं रङ्गभूमेर्निष्क्रमणं आरिअं-पुनस्तत्रागमनं, भ्रांतसम्भ्रांतं तु अनंतरोक्तैकत्रिंशत्त-मनाटके व्याख्यातमिति ततो ग्राह्यं, इदं च पूर्वोक्तचतुर्विधद्वात्रिंशद्विधनाटयेभ्यो विलक्षणं सर्वाभि-नयशून्यं गात्रविक्षेपमात्रं विवाहाभ्युदयादावुपयोगि सामांयतो नर्त्तनं भरतादिसङ्गीतेषु नृत्तमित्युक्तं

अथोक्तमेव नाटयं प्रकारद्वयेन सङ्ग्रहीतुमाह-'अप्पेगइआ तंडवेंति अप्पेगइआ लासेंति'त्ति, अप्येककास्ताण्डवं नाम नाटकं कुर्वंति, तच्चोद्धतैः करणैरङ्गहारैरभिनयैश्च निर्वर्त्य, अत एवारभटी-वृत्तिप्रधानं नाट्यं, अथ यथा बालस्वामिपादानां देवाः कुतूहलमुपदर्शयंति तथाह-'अप्पेगइआ पीणेंति' इत्यादि, अप्येकका देवाः पीनयंति-स्वं स्थूलीकुर्वंति, 'एव'मित्यप्येकका बूत्कारयंति-बूत्कारं कुर्वंति आस्फोटयंति-उपविशंतः पुताभ्यां भूम्यादिकमाघ्नंति वल्गंति-मल्लवद्बाहुभ्यां परस्परं संप्रलगंति सिंहनादं नदंति-कुर्वंति अप्येककाः सर्वाणि-पीनत्वादीनि क्रमेण कुर्वंति, अप्येकका हयहेषितं-हेषारवं कुर्वंति।

'एव'मित्यप्येककाः हस्तिगुलुगुलायितं-गजवद् गर्जिं विदधाति रथघनघनायितं-रथवत् चीत्कुर्वंति, गुलुगुलुघनघन इत्यनुकरणशब्दौ, अप्येककाः हयहेषितादीनि त्रीण्यपि कुर्वंति, अप्येककाः उच्छोलंति-अग्रतोमुखा चपेटां ददति, अप्येककाः पच्छोलंति-पृष्ठतोमुखां चपेटां ददति, अप्येककाः त्रिपदीं मल्ल इव रङ्गभूमौ त्रिपदीं छिंदंति, पाददर्दरकं-पादेन भूम्यास्फोटनरूपं कुर्वंति, भूमिचपेटां ददति-करेण भूमिमाघ्नंति, अप्येकका: महता २ शब्देन रावयंति-शब्दं कुर्वंति, एवमुक्तप्रकारेण संयोगा अपि-द्वित्रिपदमेलका अपि विभाषितव्याः-भणितव्याः, कोऽर्थः

केचित् उच्छोलनादिद्विकमपि कुर्वंति, तथा केचित् त्रिकं चतुष्कं पञ्चकं षट्कं च कुर्वंति, अप्येककाः हक्कारयंति-हक्कां ददति एवं पूत्कुर्वंति थक्कारयंति-थक्कथक्कमित्येवं शब्दं कुर्वंति अवपतंति-नीचैः पतंति उत्पतंति-ऊर्ध्वीभवंति तथा परिपतंति-तिर्यग्निपतंति ज्वलंति-ज्वालारूपा भवंति भास्वराग्नितां प्रतिपद्यंत इत्यर्थः, तपंति-मंदाङ्गाररूपतां प्रतिपद्यंते,

प्रतपन्ति–दीप्ताकारतां प्रतिपद्यंते गर्जंति–गर्जारवं कुर्वंति विद्युतं कुर्वंति वर्षंति च, अत्रापि संयोगा भणितव्याः, अप्पे० देवानां वातस्येवोत्कलिका– भ्रमविशेषस्तां कुर्वंति, एवं देवानां कहकहकं–प्रमोदभरजनितकोलाहलं कुर्वंति अप्पे० दुहदुहुगं कुर्वंति अनुकरणमेतत्, एवमादि विभाषेत यथा विजयदेवस्य, कियत्पर्यंतमित्याह–

यावत् सर्वतः समंतात् आधावेंति–ईषद्धावंति परिधावति–प्रकर्षेण धावति, यावत्करणात् अप्पेगइआ चेलुक्खेवं करेंति, अप्पेगइआ वंदणकलसहत्थगया अप्पेगइआ भिंगारहत्थगया एवं एएणं अभिलावेणं आयंसथालपाईवायकरगरयणकरंडगपुप्फचंगेरीजाव लोमहत्थचंगेरीपुप्फपडलगजावलोमहत्थपडलगसीहासणछत्तचामरतिल्लसमुग्गय जाव अंजणसमुग्गयहत्थगया अप्पेगइया देवा धूवकडुच्छुअहत्थगया हट्ठतुट्ठ जाव हियया' इति ग्राह्य, अत्र व्याख्या–अप्येकका: चेलोत्क्षेपं–ध्वजोच्छ्रायं कुर्वंति, अप्येकका: वंदनकलशहस्तगता–मङ्गल्यघटपाणयः अप्येकका: भृङ्गारहस्तगताः, एवमंतरोक्तस्वरूपेण एतेनानंतरवर्त्तित्वात् प्रत्यक्षेणाभिलापेन सूत्रपाठे अप्येककाः आदर्शहस्तगताः स्थालहस्तगताः यावद्धूपकडुच्छुकहस्तगताः आधावंति परिधावंतीत्यन्वयः शेषं निगदसिद्धं प्रागुक्ताभिषेकाधिकारगतैतत्सूत्रसमानगमत्वात् ।

अथाभिषेकनिगमनपूर्वकमाशीर्वादसूत्रमाह–

**मू. (२४१)** *ते णं से अच्चुइंदे सपरिवारे सामिं तेणं महया महया अभिसेएणं अभिसंचइ २ त्ता करयलपरिग्गहिअं जाव मत्थए अंजलिं कट्टु जएणं विजएणं वद्धावेइ २ त्ता ताहिं इट्ठाहिं जाव जयजयसद्दं पउंजंति पउंजित्ता जाव पम्हलसुकुमालाए सुरभीए गंधकासाईए गायाइं लूहेइ २ त्ता एवं जाव कप्परुक्खगंपिव अलंकियविभूसिअं करेइ २ त्ता जाव नट्टविहिं उववंसेइ २ त्ता अच्छेहिं सण्हेहिं रययामएहिं अच्छरसातण्डुलेहिं भगवओ सामिस्स पुरओ अट्ठट्ठमंगलगे आलिहइ, तंजहा–*

**मू. (२४२)** *"दप्पण १ भद्दासणं २ वद्धमाण ३ वरकलस ४ मच्छ ५ सिरिवच्छा ६ ।*
*सोत्थिअ ७ नंदावत्ता ८ लिहिआ अट्ठट्ठमंगलगा ॥*

**वृ.** 'तए ण'मित्यादि, ततः सोऽच्युतेंद्रः सपरिवारः स्वामिनं तेन अनंतरोक्तस्वरूपेण महता २–अतिशयेन महताऽभिषेकेणाभिषिञ्चति, निगमनसूत्रत्वान्न पौनरुक्त्यं, अभिषिच्य च करतलपरिगृहीतं यावत्पदसङ्ग्राह्यं प्राग्वत्, मस्तकेऽञ्जलिं कृत्वा जयेन विजयेन च -प्रागुक्तस्वरूपेन वर्द्धयति–आशिषं प्रयुङ्क्तेवर्धयित्वा च ताभिर्विशिष्टगुणोपेताभिरिष्टाभिः–श्रोतृणां वल्लभाभिर्यावत्करणात् 'कंताहिं पियाहिं मणुण्णाहिं मणामाहिं वग्गुहिं' इति ग्राह्यं, अत्र व्याख्या च प्राग्वत्, वाग्भिर्जय२ शब्दं प्रयुङ्क्ते, सम्भ्रमे द्विर्वचनं जयशब्दस्य, अत्र जयेन विजयेन वर्द्धयित्वा पुनर्जय- २शब्दप्रयोगो मंगलवचने पुनरुक्तिर्न दोषायेत्यभिहितः, अथाभिषेकोत्तरकालीनं कर्त्तव्यमाह–

'पउंजित्ता'इत्यादि, प्रयुज्य च यावच्छब्दात् 'तप्पढमयाए' इति ग्राह्यं, अत्र व्याख्या- तेष्वभिषेकोत्तरकालीनकर्त्तव्येषु प्रथमतया–आद्यत्वेन पक्ष्मलसुकुमारया सुरभ्या गंधकाषा-

चिक्या–गंधकषायद्रव्यपरिकर्मितया लघुशाटिकयेति गम्यं, गात्राणि रूक्षयति, एवमुक्तप्रकारेण यावत्कल्पवृक्षमिवालङ्कृतं वस्त्रालङ्कारेण विभूषितं आभरणालङ्कारेण करोति, यावत्करणात् लूहित्ता सरसेणं गोसीसचंदणेणं गायाइं अणुलिंपइ २ त्ता नासानीसासवायवोज्झं चक्खुहरं वण्णफरिसजुत्तं हयलालापेलवाइरेगधवलं कणगखचिअंतकम्मं देवदूसजुअलं निअंसावेइ २ त्ता' इति ग्राह्यं, अत्र व्याख्या प्राग्वत्, नवरं देवदूष्ययुगलं परिधानोत्तरीयरूपं निवासयति–परिधापयतीति कृत्वा च यावत्करणात् 'सुमिणदामं पिणद्धावेइ' इति ग्राह्यं, नाट्यविधिमुपदर्शयति उपदर्श्य च अच्छैः श्लक्ष्णैः रजतमयैः अच्छरसतंडुलैः भगवतः स्वामिनः पुरतोऽष्ट अष्टमङ्गलकानि आलिखति, तद्यथा–दप्पणेति पद्यं सुगमं।

मू. (२४३) *लिहिऊण करेइ उवयारं, किंते ?, पाडलमल्लिअचंपगसोगपुन्नागचूअ-मंजरिणवमालिअबउलतिलयकणवीरकुंदकुज्जगकोरंटपत्तदमणगवरसुरभिगंधगंधिअस्स कयग्गहगहिअकरयलपब्भट्ठविप्पमुक्कस्स दसद्धवण्णस्स कुसुमणिअरस्स तत्थ चित्तं जण्णुस्सेह-प्पमाणमित्तं ओहिनिकरंत करेत्ता चंदप्पभरयणवइरवेरुलिअविमलदण्डं कंचणमणिरयणभत्तिचित्तं कालागुरुपवरकुंदुरुक्कतुरुक्कधूवगंधुत्तमाणुविद्धं च धूमवट्टिं विनिम्मुअंतं वेरुलिअमयं कडुच्छुअं पग्गहित्तु पयएणं धूवं दाऊण जिनवरिंदस्स सत्तट्ठ पयाइं ओसरित्ता दसंगुलिअं अंजलिं करिअ मत्थयंमि पयओ अट्ठसयविसुद्धगंथजुत्तेहिं महावित्तेहिं अपुणरुत्तेहिं अत्थजुत्तेहिं संथुणइ २ त्ता वामं जाणुं अंचेइ २ त्ता जाव करयलपरिग्गहिअं मत्थए अंजलिं कट्टु एवं वयासी–*

*नमोऽत्थु ते सिद्धबुद्धनीरयसमणसामाहिअसमत्तसमजोगिसल्लगत्तणनिब्भय-नीरागदोसणिम्ममणिस्संगणीसल्लमाणमूरणगुणरयणसीलसागरमणंतमप्पमेय भविअधम्मवर-चाउरंतचक्कवट्टी नमोऽत्थु ते ईसाणस्स भाणिअव्वं, एवं भवणवइवाणमंतरजोइसिआ य सूरपज्जव-साणा सएणं परिवारेणं पत्तेअं २ अभिसिंचंति, तए णं से ईसाणे देविंदे देवराया पंच ईसाणे विउव्वइ २ त्ता एगे ईसाणे भगवं तित्थयरं करयलसंपुडेणं गिण्हइ २ त्ता सीहासणवरगए पुरत्थाभिमुहे सण्णिसण्णे एगे ईसाणे पिट्ठओ आयवत्तं धरेइ दुवे ईसाणा उभओ पासिं चामरुक्खेवं करेंति एगे ईसाणे पुरओ सूलपाणी चिट्ठइ।*

*तए णं से सक्के देविंदे देवराया आभिओगी देवे सद्दावेइ २ त्ता एसोवि तह चेव अभिसेआणत्तिं देइ तेऽवि तह चेव उवणेंति, तए णं से सक्के देविंदे देवराया भगवओ तित्थयरस्स चउद्दिसिं चत्तारि धवलवसभे विउव्वेइ सेए संखदलविमलनिम्मलदधिघनगोखीरफेणरयणिगरप्पगासे पासाईए दरसणिज्जे अभिरूवे पडिरूवे, तए णं तेसिं चउण्हं धवलवसभाणं अट्ठहिं सिंगेहिंतो अट्ठ तोअधाराओ निग्गच्छंति। तए णं ताओ अट्ठ तोअधाराओ उद्धं वेहासं उप्पयंति २ त्ता एगओ मिलायंति २ त्ता भगवओ तित्थयरस्स मुद्धाणंसि निवयंति। तए णं से सक्के देविंदे देवराया चउरासीईए सामानि-असाहस्सीहिं एअस्सवि तहेव अभिसेओ भाणिअव्वो जाव नमोऽत्थु ते अरहओत्ति कट्टु वंदइ नमंसइ जाव पज्जुवासइ।*

वृ. मङ्गलालेखनोत्तरकृत्यमाह–'लिहिऊण'त्ति, अनंतरोक्तान्यष्टमङ्गलानि लिखित्वा करोत्युपचारमित्याद्यारभ्या कडुच्छुकग्रहणपर्यंतं सूत्रं चक्ररत्नपूजाधिकारलिखितव्याख्यातो

व्याख्येयं, ततः प्रयतः सन् यथा बालभट्टारकस्य धूपधूमाकुले अक्षिणी न भवतस्तथा प्रयत्नवान् धूपं दत्वा जिनवरेंद्राय, सूत्रे षष्ठी आर्षत्वात्, अङ्गपूजार्थं प्रत्यासेदुषा मया निरुद्धो भगवद्दर्शन-मार्गोऽतोऽहं मा परेषां दर्शनामृतपानविघ्नकारी स्यामिति सप्ताष्टानि पदान्यपसृत्य दशाङ्गुलिकं मस्तकेऽञ्जलिं कृत्वा प्रयतो–यथास्थानमुदात्तादिस्वरोच्चारेषु प्रयत्नवानष्टशतैः–अष्टोत्तरशत-प्रमाणैर्विशुद्धेन ग्रंथेन–पाठेन युक्तैर्महावृत्तैः–महाकाव्यैर्यद्वा महाचरित्रैरपुनरुक्तैः अर्थयुक्तैः–चमत्कारिव्यङ्ग्ययुक्तैः सस्तीति संस्तुत्य च वामं जानुं अञ्चति–उत्पाटयति, अञ्चित्वा च यावत्पदात् 'दाहिणं जाणुं धरणिअलंसि निवाडेइ' इति ग्राह्यम्, अत्र व्याख्या प्राग्वत्, करतलपरिगृहीतं मस्तकेऽञ्जलिं कृत्वा एवं–वक्ष्यमाणमवादीत्, यदवादीत्तदाह–

'नमोऽत्थु ते सिद्धबुद्ध' इत्यादि, नमोऽस्तु ते–तुभ्यं हे सिद्ध एवं बुद्ध इत्यादिपदानि सम्बंधनीयानि, तत्र हे बुद्ध! ज्ञाततत्त्व! हे नीरजाः! कर्मरजोरहित! हे श्रमण!–तपस्विन्! हे समाहित–अनुकूलचित्त! हे समाप्त! कृतकृत्यत्वात् अथवा सम्यक्प्रकारेणाप्त! अविसंवादिवच-नात्वात् हे समयोगिन्! कुशलमनोवाक्काययोगित्वात् शल्यकर्तन् निर्भय नीरागद्वेष निर्मम निस्सङ्ग–निर्लेप निशल्य मानमूरण–मानमर्द्दन गुणेषु रत्नं–उत्कृष्टं यच्छीलं–ब्रह्मचर्यं तस्य सागर अनंत अनंतज्ञानात्मकत्वात् मकारोऽलाक्षणिकः एवमग्रेऽपि अप्रमेय–प्राकृतज्ञानापरिच्छेद्य अशरीरजीवस्वरूपस्य छद्मस्थैः परिच्छेत्तुमशक्यत्वादिति अथवाऽप्रमेय भगवद्गुणानामनंतत्वेन सङ्ख्यातुमशक्यत्वात् भव्य–मुक्तिगमनयोग्य अत्यासन्नभवसिद्धित्वात् धर्मेण–धर्मरूपेण वरेण–प्रधाने भावचक्रत्वात् चतुरंतेन–चतुर्गत्यंतकारिणा चक्रेण वर्त्तत इत्येवंशीलस्तस्य सम्बोधनं हे धर्मवरचतुरंतचक्रवर्त्तिन्! नमोऽस्तु तुभ्यं अर्हते–जगत्पूज्याय इति कृत्वा–इति संस्तुत्य वंदते नमस्यतीत्यादि सूत्रं प्राग्वत्, यच्चात्र विशेषणवर्णकस्यादौ नमोऽस्तु ते इत्युक्त्वा पुनरपि नमोऽस्तु ते इत्युक्तं तन्न पुनरुक्तये प्रत्युत लाघवाय यतो जगत्त्र्यप्रतिमप्रतश्चारिणो जगत्त्रयपतेस्तत्तदसाधा-रणैकैकविशेषणविभावनात् समुद्भूतप्रणामपरिणामेन हरिणा प्रतिविशेषणं नमोऽस्तु ते इति न प्रयुक्तमिति, इमानि च सर्वाणि विशेषणानि भव्यपदवर्जानि भाविनि भूतवदुपचारादन्यथा-ऽभिषेकसमये जिनानामेतादृशविशेषणानामसम्भवदिति।

अथावशिष्टानामिंद्राणां वक्तव्यं लाघवादाह–'एवं जहा' इत्यादि, एवमुक्तविधिना यथाऽच्युतेंद्रस्याभिषेककृत्यं तथा प्राणतेंद्रस्य यावदीशानेंद्रस्यापि भणितव्यं, शक्राभिषेकस्य सर्वतश्चरमत्वात्, एवं भवनपतिव्यंतरज्योतिष्काश्चंद्राः सूर्यपर्यवसानाः स्वकेन स्वकेन परिवारेण सह प्रत्येकं २ अभिषिञ्चन्ति। अथावशिष्टशक्रस्याभिषेकावसरः–'तए णं'मित्यादि, ततः–त्रिषष्टीन्द्राभिषेकानंतरमीशानो देवेंद्रो देवराजा पञ्चेशानान् विकुर्वति–एकः ईशानः पञ्चधा भवति, एतदेव विभजति–तत्र एक ईशानो भगवंतं तीर्थकरं करतलसम्पुटे गृह्णाति गृहीत्वा च सिंहासनवरगतः पूर्वाभिमुखः सन्निषण्णः एक ईशानः पृष्ठतः आतपत्रं धरति द्वावीशानावुभयोः पार्श्वयोः चामरोत्क्षेपं कुरुतः एक ईशानः पुरतः शूलपाणिस्तिष्ठति–ऊर्ध्वस्थो भवति।

सम्प्रत्यव्यग्रपाणि शक्रो यदकरोत्तदाह–'तए णं'मित्यादि, ततः–ईशानेंद्रेण भगवतः करसम्पुटे ग्रहणानंतरं स शक्रो देवेंद्रो देवराजा आभियोग्यान् देवान् शब्दयति, शब्दयित्वा च

एषोऽपि तथैव–अच्युतेंद्रवदभिषेकविषयकामाज्ञाम् ददाति तेऽप्याभियोग्यास्तथैव–अच्युतेंद्राभियोग्यदेवा इवाभिषेकवस्तूपनयंति, अथ शक्रः किं चकारेत्याह–'तए णं'मित्यादि, ततः–अभिषेकसामग्र्युपनयनानंतरं स शक्रो देवेंद्रो देवराजा भगवतस्तीर्थकरस्य चतुर्दिशि चतुरो धवलवृषभान् विकुर्वति श्वेतान् श्वेतत्वमेव द्रढयति–शङ्खस्य दलं–चूर्णं विमलनिर्मलः–अत्यंतनिर्मलो यो दधिघनो–दधिपिण्डो बद्धं दधीत्यर्थः गोक्षीरफेनः प्रतीतः रजतनिकरोऽपि एतेषामिव प्रकाशो येषां ते तथा तान्, 'पासाईए' त्यादि प्राग्वत्, तदनंतरं किमित्याह–'तए णं'मिति, ततस्तेषां चतुर्धवलवृषभानामष्टभ्यः श्रृङ्गेभ्योऽष्टौ तोयधारा निर्गच्छंति, ततस्ता अष्टौ तोयधारा ऊर्ध्वं विहायसि उत्पतंति–ऊर्ध्वं चलंति, उत्पत्य च एकतो मिलंति मिलित्वा च भगवतस्तीर्थकरस्य मूर्ध्नि निपतंति। अथ शक्रः किं कृतवानित्याह–

'तए णं'मित्यादि, ततः स शक्रो देवेंद्रो देवराजा चतुरशीत्या सामानिकसहस्रैस्त्रयस्त्रिंशता त्रायस्त्रिंशकैर्यावत् सम्परिवृतस्तैः स्वाभाविकवैकुर्विककलशैर्महता तीर्थकराभिषेकेणाभिषिंचति इत्यादिसूत्रोक्तोऽभिषेकविधि शक्रस्याच्युतेंद्रवदस्तीति लाघवमाह–एतस्यापि तथैवाभिषेको भणितव्यः, कियदंतइत्याह–योवन्नमोऽस्तु तेऽर्हतेइति कृत्वा वंदते नमस्यति २ त्वा यावत्पर्युपास्ते इति। अथ कृतकृत्यः शक्रो भगवतो जंमपुरप्रापणायोपक्रमते–

*मू. (२४४) तए णं से सक्के देविंदे देवराया पंच सक्के विउव्वइ २ त्ता एगे सक्के भयवं तित्थयरं करयलपुडेणं गिण्हइ एगे सक्के पिट्ठओ आयवत्तं धरेइ दुवे सक्का उभओ पासिं चामरुक्खेवं करेंति एगे सक्के वज्जपाणी पुरओ पगड्ढइ, तए णं से सक्के चउरासीईए सामानिअसाहस्सीहिं जाव अन्नेहि भवणवइवाणमंतरजोइसवेमाणिएहिं देवेहिं देवीहि अ सद्धिं संपरिवुडे सव्विड्ढीए जाव नाइअरवेणं ताए उक्किट्ठाए जेणेव भगवओ तित्थयरस्स जम्मणणयरे जेणेव जम्मणभवणे जेणेव तित्थयरमाया तेणेव उवागच्छइ २त्ता भगवं तित्थयरं माऊए पासे ठवेइ २ त्ता तित्थयरपडिरूवगं पडिसाहरइ २ त्ता ओसोवणिं पडिसाहरइ २ त्ता एगं महं खोमजुअलं कुंडलजुअलं च भगवओ तित्थयरस्स उस्सीसगमूले ठवेइ २ त्ता एगं महं सिरिदामगंडं तवणिज्जलंबूसगं सुवण्णपयरगमंडिअं नानामणिरयणविविह- हारद्धहारउवसोहिअसमुदयं भगवओ तित्थयरस्स उल्लोअंसि निक्खिवइ तण्णं भगवं तित्थयरे अनिमिसाए दिट्ठीए देहमाणे २ सुहंसुहेणं अभिरममाणे चिट्ठइ।*

*तए णं से सक्के देविंदे देवराया वेसमणं देवं सद्दावेइ २ त्ता एवं वदासी–खिप्पामेव भो देवाणुप्पिआ! बत्तीसं हिरन्नकोडीओ बत्तीसं सुवण्णकोडीओ बत्तीसं नंदाइं बत्तीसं भद्दाइं सुभगे सुभगरूवजुव्वणलावण्णे अ भगवओ तित्थयरस्स जम्मणभवणंसि साहराहि २ त्ता एअ-माणत्तिअं पच्चप्पिणाहि, तए णं से वेसमणे देवे सक्केणं जाव विनएणं वयणं पडिसुणेइ २ त्ता जंभए देवे सद्दावेइ २ त्ता एवं वदासि– खिप्पामेव भो देवाणुप्पिआ! बत्तीसं हिरन्नकोडीओ जाव भगवओ तित्थयरस्स जम्मण- भवणंसि साहरह साहरित्ता एअमाणत्तिअं पच्चप्पिणह, तए णं ते जंभगा देवा वेसमणेणं देवेणं एवं वुत्ता समाणा हट्ठतुट्ठ जाव खिप्पामेव बत्तीसं हिरन्नकोडीओ जाव च भगवओ तित्थगरस्स जम्मणभवणंसि साहरंति २ त्ता जेणेव वेसमणे देवे तेणेव जाव पच्चप्पिणंति, तए णं से वेसमणे देवे जेणेव सक्के देविंदे देवराया जाव पच्चप्पिणइ।*

*तए णं से सक्के देविंदे देवराया ३ अभिओगे देवे सद्दावेइ २ त्ता एवं वयासी—खिप्पामेव भो देवाणुप्पिआ ! भगवओ तित्थयरस्स जम्मणणयरंसि सिंघाडगजावमहापहपहेसु महया २ सद्देणं उग्घोसेमाणा २ एवं वदह—हंदि सुणंतु भवंतो बहवे भवणवइवाणमंतरजोइसवेमाणिया देवा य देवीओ अ जे णं देवाणुप्पिआ ! तित्थयरस्स तत्थयरमाऊए वा असुभं मनं पधारेइ तस्स णं अज्जगमंजरिआ इव संयधा मुद्धाणं फुट्टउत्तिकट्टु घोसणं घोसेह २ त्ता एअमाणत्तिअं पच्चप्पिणहत्ति*

*तए णं ते आभिओगा देवा जाव एवं देवोत्ति आणाए पडिसुणंति २ त्ता सक्कस्स देविंदस्स देवरन्नो अंतिआओ पडिनिक्खमंति २ खिप्पामेव भगवओ तित्थगरस्स जम्मणणगरंसि सिंघाडग जाव एवं वयासी—हंदि सुणंतु भवंतो बहवे भवणवइ जाव जे णं देवाणुप्पिआ ! तित्थयरस्स जाव फुट्टिहीतितिकट्टु घोसणगं घोसंति २ त्ता एअमाणत्तिअं पच्चप्पिणंति ।*

*तए णं ते बहवे भवणवइवाणमंतरजोइसवेमाणिआ देवा भगवओ तित्थगरस्स जम्मणमहिमं करेंति २ त्ता जेणेव नंदीसरदीवे तेणेव उवागच्छंति २ त्ता अट्ठाहियाओ महामहिमाओ करेंति २ जामेव दिसिं पाउब्भूआ तामेव दिसिं पडिगया ।*

**वृ.** 'तए णं'मित्यादि प्राग्वत् ! अथ जंमनगरप्रापणाय सूत्रं—'तए णं'मित्यादि, ततः स शक्रः पञ्चरूपविकुर्वणानंतरं चतुरशीत्या सामानिकसहस्रर्यावत् सम्परिवृतः सर्वर्द्धया यावन्नादित-स्वेन तयोत्कृष्टया दिव्यया देवगत्या व्यतिव्रजन् २ यत्रैव भगवतस्तीर्थकरस्य जंमनगरं यत्रैव च जंमभवनं यत्रैव च तीर्थकरमाता तत्रैवोपागच्छतीति उपागत्य च भगवंतं तीर्थकरं मातुः पार्श्वे स्थापयति स्थापयित्वा च तीर्थकरप्रतिबिम्बं प्रतिसाहरति प्रतिसंहृत्य चावस्वापिनीं प्रतिसंहरति प्रतिसंहृत्य चैकं महत् त्रोमयोः—दुकूलयोर्युगलं कुण्डलयुगलं (च) भगवतस्तीर्थकरस्योच्छीर्षकमूले स्थापयति, स्थापयित्वा च एकं महांतं श्रीदाम्नां—शोभावद्विचित्ररत्नमालानां गण्डं—गोलं वृत्ताका-रत्वात् काण्डं वा—समूहः श्रीदामगण्डं श्रीदामकाण्डं वा भगवतीस्तीर्थकरस्योल्लोचे निक्षिपति—अवलम्बयतीति क्रियायोगः, 'तपनीये'त्यादि पदत्रयं प्राग्वत्, नानामणिरत्नानां ये विविधहारा-र्द्धहारास्तैरुपशोभितः समुदायः—परिकरो येषां ते तथा, अयमर्थ—श्रीमत्यो रत्नालास्तथा ग्रथयित्वा गोलाकारेण कृता यथा चंद्रगोपके मध्यझुम्बनकतां प्रापिताः हारार्द्धहाराश्च परिकरझुम्बनकताम्

उक्तस्वरूपझुम्बनकविधाने प्रयोजनमाह—'तण्णं'मिति प्राग्वत्, भगवांस्तीर्थकरोऽ-निमिषया -निर्निमिषया दृष्ट्या अत्यादरेण प्रेक्षमाणः २ सुखंसुखेनाभिरममाणो—रतिं कुर्वंस्तिष्ठति अथ वैश्रमणद्वारा शक्रस्य कृत्यमाह—'तए णं'मित्यादि, ततः स शक्रो देवेंद्रो देवराजा वैश्रमणं उत्तरदिक्पालं देवं शब्दयति, शब्दयित्वा चैवमवादीत्—क्षिप्रमेव भो देवानुप्रिय ! द्वात्रिंशतं हिरण्यकोटीः द्वात्रिंशतं सुवर्णकोटीः द्वात्रिंशतं नंदानि—वृत्तलोहासनानि द्वात्रिंशतं भद्राणि—भद्रासनानि सुभगानि—शोभनानि सुभगयौवनलावण्यानि रूपाणि—रूपकाणि यत्र तानि तथा, सूत्रे पदव्यत्यय आर्षत्वात्, चः समुच्चये, भगवत्तीर्थकरस्य जंमभवने संहर आनयेत्यर्थः संहृत्य च एनामाज्ञप्तिं प्रत्यर्पय, ततः स वैश्रमणो देवः शक्रेण यावत्पदात् 'देविंदेणं देवरन्ना एवं वुत्ते समाणे हट्ठतुट्ठचित्तमाणंदिए एवं देवो तहत्ति आणाए' इति ग्राह्यं, विनयेन वचनं प्रतिशृणोति प्रतिश्रुत्य च जृम्भकान् देवान् तिर्यग्लोके वैताढ्यद्वितीयश्रेणिवासित्वेन तिर्यग्लोकगतनि-

धानादिवेदिनः शब्दयति २ त्वा चैवमवादीत्, शेषमनुवादसूत्रत्वात् सुबोधम्, अथास्मासु स्वस्थानं प्राप्तेषु निर्सौवर्याः सौवर्याधिके भगवति मा दुष्टा दुष्टदृष्टिं निक्षिपन्त्विति तदुपायार्थमाह–

'तए णं'मित्यादि, ततो–वैश्रमणेनाज्ञाप्रत्यर्पणानंतरं स शक्रः ३ अभियोगान् देवान् शब्दयति शब्दयित्वा चैवमवादीत्–क्षिप्रमेव भो देवानुप्रिया ! भगवतस्तीर्थकरस्य जंमनगरे शृङ्गाटकयावंमहापथपथेषु महता २ शब्देन उद्घोषयंतः २ एवं वदत–हंत ! इति प्राग्वत् शृण्वंतु भवंतो बहवो भवनपतिव्यंतरज्योतिष्कवैमानिका देवाश्च देव्यश्च योऽनिर्दिष्टनामा देवानांप्रिया ! इति सन्तोषणं भवतां यस्तीर्थकरस्य तन्मातुर्वोपर्यशुभं मनः प्रधारयति–दुष्टं सङ्कल्पयति तस्य 'आर्यकमञ्जरिकेव' आर्यको–वनस्पतिविशेषो यो लोके आजओ इति प्रसिद्धस्तस्य मञ्जरिका इव मूर्द्धा शतधा स्फुटत्विति कृत्वा–इत्युक्त्वा घोषणं घोषयत, घोषयित्वा चैतामाज्ञप्तिकां प्रत्यर्पयत इति, अथ ते यथाकुर्वस्तदाह–'तए णं' मित्यादि व्यक्तं अनुवादसूत्रत्वात्, अथ निगम- नसूत्रमाह–'तए णं, ततस्ते बहवो भवनपत्यादयो देवा भगवतस्तीर्थकरस्य जंममहिमानं कुर्वंति, कृत्वा च सिद्धसमीहितकार्या मङ्गलार्थं यत्रैव नंदीश्वरवरद्वीपस्तत्रैवोपागच्छंति उपागत्याष्टाह्निकामहामहिमाः–अष्टदिननिर्वर्त्तनीयोत्सवविशेषान् कुर्वंति, बहुवचनं चात्र सौधर्मेन्द्रादिभिः प्रत्येकं क्रियमाणत्वात्, अत्र यस्येन्द्रस्य यस्मिन् अञ्जनगिरौ येषु च दधिमुखगिरिषु तल्लोकपालानां अष्टाह्निकाधिकारः स प्राक् ऋषभदेवनिर्वाणाधिकारे उक्त इति नात्र लिख्यते ।।

वक्षस्कारः–५ समाप्तम्

इति सातिशयधर्मदेशनारससमुल्लासविस्मयमानएदंयुगीननराधिपतिचक्रवर्त्तिसमान-श्रीअकब्बरसुरत्राणप्रदत्तषाण्मासिकसर्वजगज्जंतुजाताभयप्रदानशत्रुञ्जयादिकरमोचनस्फुरंमान-प्रदाप्रभृतिबहुमानयुगप्रधानोपमानसाम्प्रतिविजयमानश्रीमत्तपागच्छाधिराजश्री हीरविजय-सूरीश्वरपदपद्मोपासनाप्रवणमहोपाध्यायश्रीसकलचंद्रगणिशिष्योपाध्यायश्रीशातिचंद्रगणिविर-चितायां जंबूद्वीपप्रज्ञप्तिवृत्तौ प्रमेयरत्नमञ्जूषानाम्न्यां तीर्थकृज्जंमाभिषेकाधिकावर्णनो नाम पञ्चमो वक्षस्कारः ॥

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता जंबूद्वीपप्रज्ञप्तिउपाङ्गसूत्रे पञ्चमवक्षस्कारस्य शातिचन्द्र वाचकेन विरचिता टीका परिसमाप्ता ।**

## वक्षस्कारः–६

वृ. पूर्वं जंबूद्वीपान्तर्वर्त्ति स्वरूपं, सम्प्रति तस्यैव चरमप्रदेशस्वरूपप्रश्नायाह–

**मू.** *(२४५) जंबुद्दीवस्स णं भंते ! दीवस्स पदेसा लवणसमुद्दं पुट्ठा ?, हंता पुट्ठा, ते णं भंते किं जंबुद्दीवे दी लवणसमुद्दे ?, गोअमा ? जंबुद्दीवे णं दीवे नो खलु लवणसमुद्दे, एवं लवणसमुद्दस्सवि पएसा जंबुद्दीवे पुट्ठा भाणिअव्वा इति । जंबुद्दीवे णं भंते ! जीवा उद्दाइत्ता २ लवणसमुद्दे पच्चायंति अत्थेगइआ पच्चयंति अत्थेगइआ नो पच्चायंति, एवं लवणस्सवि जंबुद्दीवे दीवे नेअव्वमिति ।*

**वृ.** 'जंबुद्दीवस्स णं'मित्यादि, जंबूद्वीपस्य णमिति पूर्ववत् द्वीपस्य प्रदेशा लवणसमुद्र-शब्दसहचाराच्चरमप्रदेशा इति व्याख्येयं अंयथा जंबूद्वीपमध्यवर्त्तिप्रदेशानां लवणसमुद्रस्य

संस्पर्शसम्भावनाया अभावात् लवणसमुद्रं स्पृष्टाः—स्पृष्टवंतः, कर्त्तरि क्तप्रत्ययः, अत्र काकुपाठात् प्रश्नसूत्रावगति, भगवानाह—हंता ! इति प्रत्यवधारणे । अथ सम्प्रदायादिना द्वीपानंतरीयाः समुद्राः समुद्रानंतरीया द्वीपाः तेन ये यदनंतरीयास्ते तत्संस्पर्शिन इति सुज्ञानेऽप्यस्मिन् प्रष्टव्येऽर्थे यत् प्रश्नविधानं तदुत्तरसूत्रे प्रश्नबीजाधानायेति तदाह— ते जंबूद्वीपचरमप्रदेशा भदंत ! किं जंबूद्वीपो द्वीपः उत इति गम्यस्तेन लवणसमुद्रो वा इत्यर्थः, पृच्छतोऽयमाशयः—यद्येन स्पृष्टं तत्किञ्चिदव्यपदेश लभते किञ्चित् पुनर्न तथा, यथा तर्जया संस्पृष्य ज्येष्ठालिज्येष्ठैवेति, तेन जंबूद्वीपचरमप्रदेशाः लवणसमुद्रं स्पृष्टाः कथं व्यपदेश्याः ?, अत्रोत्तरं—

गौतम ! निपातस्यावधारणार्थत्वात् ते चरमप्रदेशाः जंबूद्वीप एव द्वीपः जंबूद्वीपसीमावर्त्तित्वात् न खलु ते लवणसमुद्रो, जंबूद्वीपसीमानमतिक्रम्य लवणसमुद्सीमानमप्राप्तत्वात् किंतु स्वसीमागता एव लवणसमुद्रं स्पृष्टास्तेन तटस्थतया संस्पर्शभवनात् तर्जया संस्पृष्ट ज्येष्ठाङ्गुलिरिव स्वव्यपदेशं लभते, एवमुक्तरीत्या लवणसमुद्रस्यापि चरमप्रदेशा जंबूद्वीपं स्पृष्टा न जंबूद्वीपः किंतु लवणसमुद्रो लवणसमुद्रसीमावर्त्तित्वादित्यादि भणितव्यम् । अनंतरसूत्रे जंबूद्वीपलवणोदयः परस्परमव्यपदेश्यता उक्ता, सम्प्रति तयोरेव जीवानां परस्परमुत्पत्याधारता पृच्छयते इत्याह—

'जंबुद्दीवे' इत्यादि, जंबूद्वीपे भदंत ! द्वीपे जीवा अवद्राय २—मृत्वा २ लवणसमुद्रे प्रत्यायांति—आगच्छंति, अत्रापि काकुपाठात् प्रश्नावगतीः, भगवानाह—गौतम ! अस्तीति निपातोऽत्र बह्वर्थः, संत्येकका जीवा येऽवद्राय २ लवणसमुद्रे प्रत्यायाति संत्येकका ये न प्रत्यायाति, जीवानां तथा तथ स्वकर्मशतया गतिवैचित्र्यसम्भवात्, एवं लवणसमुद्रसूत्रमपि भावनीयम् ।

सम्प्रति प्रागुक्तानां जंबूद्वीपमध्यवर्त्तिपदार्थानां सङ्ग्रहगाथामाह—

**मू. (२४६)** *खंडा १ जोअण २ वासा ३ पव्वय ४ कूडा ५ य तित्थ ६ सेढीओ ७ ।*
*विजय ८ द्दह ९ सलिलाओ १० पिंडए होइ संगहणी ॥*

**वृ.** 'खंडा जोअण' इत्यादिसङ्ग्रहवाक्यस्य सङ्क्षिप्तत्वेन दुर्बोधत्वात् सूत्रकृदेव प्रश्नोत्तरीत्या विवृणोति, तत्र सूत्रम्—

**मू. (२४७)** *जंबुद्दीवे णं भंते ! दीवे भरहप्पमाणमेत्तेहिं खंडेहिं केवईअं खंडगणिएणं पं०, गो० ! नउअं खंडसयं खंडगणिएणं पन्नत्ते । जंबुद्दीवे णं भंते ! दीवे केवइअं जोअणगणिएणं पन्नत्ते ?, गोअमा ! –*

**वृ.** 'जंबुद्दीवे' इत्यादि, जंबूद्वीपो भदन्त ! द्वीपो भरतप्रमाणं—षट्कलाधिकषड्विंशतियोजनाधिकपञ्चशतयोजनानि तदेव मात्रापरिमाणं येषां तानि तथा एवंविधैः खण्डैः—शकलैः इत्येवंरूपेण खण्डगणितेन—खण्डसङ्ख्यया कियान् प्रज्ञप्तः ?, भगवानाह—गौतम ! नवत्यधिकं खण्डशतं खण्डगणितेन प्रज्ञप्तः, कोऽर्थः ? —भरतप्रमाणैः खण्डैर्नवत्यधिकशतसङ्ख्याकैर्मिलितैर्जम्बूद्वीपः सम्पूर्णलक्षप्रमाणो भवति, तत्र दक्षिणोत्तरतः खण्डमीलना प्राक् भरताधिकारवृत्तौ चिन्तितेति न पुनरुच्यते, पूर्व्वपश्चिमतस्तु यद्यपि खण्डगणितविचारणासूत्रे न कृता वनमुखादिभिरेव लक्षपूर्तेरभिधानात् तथापि खण्डगणितविचारे क्रियमाणे भरतप्रमाणानि तावन्त्येव खण्डानि भवन्ति, अथ 'योजने'तिद्वारसूत्रम्– 'जंबुद्दीवे णं०' जंबूद्वीपो भदन्त ! द्वीपः कियान्

योजनगणितेन–समचतुरस्रयोजन- प्रमाणखण्डसर्वसङ्ख्यया प्रज्ञप्तः ?, भगवानाह–गौतम !

मू. (२४८) *सत्तेव य कोडिसया नउआ छप्पन्न सयसहस्साइं ।*
*चउनवइं च सहस्सा सयं दिवड्ढं च गणिअपयं ॥*

वृ. सप्त कोटिशतानि एवोऽवधारणे च उत्तरत्र सङ्ख्यासमुच्चयार्थः नवतानि--नवतिकोट्यधिकानीति व्याख्येयं प्रस्तावात्, अन्यथा कोटिशततो द्वितीयस्थाने सत्सु लक्षादिस्थानेषु नवदशकरूपा नवतिर्न युज्यते गणितशास्त्रविरोधात्, तथा षट्पञ्चाशच्छतसहस्राणि लक्षाणीत्यर्थः चतुर्नवतिश्च सहस्राणि शतं च द्व्यर्द्ध–सार्द्धपञ्चाशदधिकं योजनानामित्येतावत्प्रमाणं जंबूद्वीपस्य गणितपदं क्षेत्रमित्यर्थः, सूत्रे च योजनसङ्ख्यायाः प्रकान्तत्वात् योजनावधिरेव सङ्ख्या निर्दिष्टा अन्यत्र तु भगवतीवृत्त्यादौ साधिकत्वं विवक्षितं, तच्चेदम्–

॥ १ ॥ 'गाउअमेगं पन्नरस धनुस्सया तह य धणूणि पन्नरस ।
सट्ठिं च अंगुलाइं जंबुद्दीवस्स गणिअपयं ॥' इति ।

मू. (२४९) जंबुद्दीवे णं भंते! दीवे कति वासा पन्नत्ता ?, गोअमा ! सत्त वासा, तंजहा–भरहे एरवए हेमवए हिरन्नवए हरिवासे रम्मगवासे महाविदेहे, जंबुद्दीवे णं भंते ! दीवे केवइआ वासहरा पन्नत्ता केवइआ मंदरा पव्वया पन्नत्ता केवइआ चित्तकूडा केवइआ विचित्तकूडा केवइआ जमगपव्वया केवइआ कंचणपव्वया केवइआ वक्खारा केवइआ दीहवेअद्धा केवइआ वट्टवेअद्धा पन्नत्ता ?, गोअमा ! जंबुद्दीवे छ वासहरपव्वया एगे मंदरे पव्वए एगे चित्तकूडे एगे विचित्तकूडे दो जमगपव्वया दो कंचणगपव्वयसया वीसं वक्खारपव्वया चोत्तीसं दीहवेअद्धा चत्तारि वट्टवेअद्धा, एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे दुन्नि अउणत्तरा पव्वयसया भवंती-तिमक्खायंति । जंबुद्दीवे णं भंते! दीवे केवइआ वासहरकूडा केवइआ वक्खारकूडा केवइआ वेअद्धकूडा केवइआ मंदरकूडा पं० ?, गो० ! छप्पन्नं वासहरकूडा छन्नउइं वक्खारकूडा तिन्नि छलुत्तरा वेअद्धकूडसया नव मंदरकूडा पन्नत्ता, एवामेव सपुव्वावरेणं जंबुद्दीवे चत्तारि सत्तट्ठा कूडसया भवंतीतिमक्खायं ।

जंबुद्दीवे दीवे भरहे वासे कति तित्था पं० ? गो० ! तओ तित्था पं०, –मागहे वरदामे पभासे, जंबुद्दीवे २ एरवए वासे कति तित्था पं० ?, गो० ! तओ तित्था पं० –मागहे वरदामे पभासे, एवामेव सपुव्वावरेणं जंबुद्दी० महाविदेहे वासे एगमेगे चक्कवट्टिविजए कति तित्था पं० गो० तओ तित्था पं०, तं०–मागहे वरदामे पभासे, एवामेव सपुव्वावरेणं जंबुद्दीवे २ एगे बिउत्तरे तित्थसए भवतीतिमक्खायंति । जंबुद्दीवे णं भंते ! दीवे केवइआ विज्जाहरसेढीओ केवइआ आभिओगसेढीओ पं० ?, गो० ! अट्ठसट्ठी विज्जाहरसेढीओ अट्ठसट्ठी आभिओगसेढीओ, एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे छत्तीसे सेढिसए भवतीतिमक्खायं, जंबु० केवइआ चक्कवट्टिविजया केवइआओ रायहाणीओ केवइआओ तिमिसगुहाओ केवइआओ खंडप्पवायगुहाओ केवइआ कयमालया देवा केवइया नट्टमालया देवा केवइआ उसभकूडा पं० ?, गो० ! जंबु० चोत्तीसं चक्कवट्टिविजया चोत्तीसं रायहाणीओ चोत्तीसं तिमिसगुहाओ चोत्तीसं खंडप्पवायगुहाओ चोत्तीसं कयमालया देवा चोत्तीसं नट्टमालया देवा चोत्तीसं उसभकूडा पव्वया पं०, जंबुद्दीवे णं भंते ! दीवे केवइआ महद्दहा पं० ?, गो० ! सोलस महद्दहा प० ।

जंबुद्दीवे णं भंते ! दीवे केवइयाओ महानईओ वासहरपवहाओ केवइआओ महानईओ कुंडप्पवहाओ पन्नत्ता ?, गोयमा ! जंबुद्दीवे २ चोद्दस महानईओ वासहरपव्वहाओ छावत्तरिं महानईओ कुंडप्पवहाओ, एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे नउतिं महानईओ भवंतीतिमक्खायं!

जंबुद्दीवे २ भरहेरवएसु वासेसु कइ महानइओ पं० ?, गोअमा ! चत्तारि महानईओ पन्नत्ताओ, तं०– गंगासिंधू रत्ता रत्तवई, तत्थ णं एगमेगा महानई चउद्दसहिं सलिलासहस्सेहिं समग्गा पुरत्थिमपच्चत्थिमेणं लवणसमुद्दं समप्पेइ, एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे भरहएरवएसु वासेसु छप्पन्नं सलिलासहस्सा भवंतीतिमक्खायंति, जंबुद्दीवे णं भंते ! हेमवयहेरन्नवएसु वासेसु कति महानईओ पन्नत्ताओ ?, गो० ! चत्तारि महानईओ पन्नत्ताओ, तंजहा–रोहिता रोहिअंसा सुवण्णकूला रुप्पकूला, तत्थ णं एगमेगा महानई अट्ठावीसाए अट्ठावीसाए सलिलासहस्सेहिं समग्गा पुरत्थिमपच्चत्थिमेणं लवणसमुद्दं समप्पेइ, एवामेव सपुव्वावरेणं जंबुद्दीवे २ हेमव- यहेरन्नवएसु वासेसु बारसुत्तरे सलिलासयसहस्से भवंतीतिमक्खायं इति ।

जंबुद्दीवे णं भंते ! दीवे हरिवासरम्मगवासेसु कइ महानईओ पन्नत्ताओ ?, गोयमा ! चत्तारि महानईओ पन्नत्ताओ, तंजहा–हरी हरिकंता नरकंता नारिकंता, तत्थ णं एगमेगा महानई छप्पन्नाए २ सलिलासहस्सेहिं समग्गा पुरत्थिमपच्चत्थिमेणं लवणसमुद्दं समप्पेइ, एवामेव सपुव्वावरेणं जंबुद्दीवे २ हरिवासरम्मगवासेसु दो चउवीसा सलिलासयसहस्सा भवंतीतिमक्खायं, जंबुद्दीवे णं भंते ! दीवे महाविदेहे वासे कइ महानईओ पन्नत्ताओ ?, गोयमा ! दो महानईओ पन्नत्ताओ, तंजहा–सीआ य सीओआ य, तत्थ णं एगमेगा महानई पंचहिं २ सलिलासयसहस्सेहिं बत्तीसाए अ सलिसहस्सेहिं समग्गा पुरत्थिमपच्चत्थिमेणं लवणसमुद्दं समप्पेइ, एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे महाविदेहे वासे दस सलिलासयसहस्सा चउसट्ठिं च सलिलामपच्चत्थिमेणं लवणसमुद्दं समप्पेइ, एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे महाविदेहे वासे दस सलिलासयसहस्सा चउसट्ठिं च सलिलासहस्सा भवंतीतिमक्खायं। जंबु० मंदरस्स पव्वयस्स दक्खिणेणं केवइया सलिलासयसहस्सा पुरत्थिमपच्चत्थिमाभिमुहा लवणसमुद्दं समप्पेंति ?, गो० ! एगे छन्नउए सलिलासयसहस्से पुरत्थिम- पच्चत्थिमाभिमुहे लवणसमुद्दं समप्पेतित्ति, जंबुद्दीवे णं भंते ! दीवे मंदरस्स पव्वयस्स उत्तरेणं केवइआ सलिलासयसहस्सा पुरत्थिमपच्चत्थिमाभिमुहा लवणसमुद्दं समप्पेंति ?, गो० ! एगे छन्नउए सलिलासयसहस्से पुरत्थिमपच्चत्थिमाभिमुहे जाव समप्पेइ ।

जंबुद्दीवे णं भंते ! दीवे केवइआ सलिलासयसहस्सा पुरत्थाभिमुहा लवणसमुद्दं समप्पेंति गो० ! सत्त सलिलासयसहस्सा अट्ठावीसं च सहस्सा जाव समप्पेंति, जंबुद्दीवे णं भंते ! दीवे केव- इआ सलिलासयसहस्सा पच्चत्थिमाभिमुहा लवणसमुद्दं समप्पेंति ?, गोअमा ! सत्त सलिलासय- सहस्सा अट्ठावीसं च सहस्सा जाव समप्पेंति, एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे चोद्दस सलिलासय- सहस्सा छप्पन्नं च सहस्सा भवंतीतिमक्खायं इति ।

करणं चात्र–'विक्खंभपायगुणिओ अ परिरओ तस्स गणिअपयं' इति वचनात् जंबूद्वीपपरिधिस्त्रलक्षषोडशसहस्रद्विशतसप्तविंशतियोज- नादिको जंबूद्वीपविष्कम्भस्य लक्षरूपस्य पादेन–चतुर्थांशेन पञ्चविंशतिसहस्ररूपेण गुणितो जंबूद्वीपगणितपदमिति, तथाहि–

जंबूद्वीपपरिधिस्तिस्रो लक्षाः षोडश सहस्राणि द्वे शते सप्तविंशत्यधिके योजनानां तथा गव्यूतत्रयं अष्टाविंशत्यधिकं शतं धनुषां त्रयोदशाङ्गुलानि एकं चार्द्धाङ्गुलं, यवादयस्तु श्रीजिनभद्रगणिक्षमाश्रमणप्रणीतक्षेत्रविचारसूत्रवृत्त्यादौ न विवक्षिता अतो न तद्विवक्षा क्रियते, तत्र योजनराशौ पञ्चविंशतिसहस्रैर्गुणिते सप्तकोटिशतानि नवतिकोट्यः षट्पञ्चाशल्लक्षाः पञ्चसप्तति सहस्राणि भवन्ति, तथा क्रोशत्रये पञ्चविंशतिसहस्रैर्गुणिते जाता पञ्चसप्ततिसहस्राणि गव्यूतानां, एषां च योजनानयनार्थं चतुर्भिर्भागे हृते लब्धान्यष्टादश सहस्राणि सप्त शतानि, पञ्चाशदधिकानि योजनानां अस्मिंश्च सहस्रादिके पूर्वराशौ प्रक्षिप्ते जातानि ९३ सहस्राणि ७ शतानि ५० अधिकानि कोट्यादिका सङ्ख्या तु सर्वत्र तथैव, तथा धनुषामष्टाविंशं शतं पञ्चविंशतिसहस्रैर्गुण्यते जाता द्वात्रिंशल्लक्षा धनुषां अष्टभिश्च धनुःसहस्रैर्योजनं भवति ततो योजनानयनार्थमष्टभि सहस्रार्भागे लब्धानि चत्वारि योजनशतानि अस्मिंश्च पूर्वराशौ प्रक्षिप्ते जातानि ९४ सहस्राणि शतं पञ्चाशदधिकं,

– अङ्गुलान्यपि त्रयोदश पञ्चविंशतिसहस्रैर्गुण्यन्ते जातानि त्रीणि लक्षाणि पञ्चविंशतिसहस्राधिकानि अर्द्धाङ्गुलमपि पञ्चविंशतिसहस्रैरभ्यस्यते जातान्यर्द्धाङ्गुलानां पञ्चविंशतसहस्राणि तेषामर्द्धे लब्धान्यङ्गुलानां द्वादश सहस्राणि पञ्चशताधिकानि तेषु पूर्वोक्ताङ्गुलराशौ प्रक्षिप्तेषु जातोऽङ्गुलराशिस्त्रिणि लक्षाणि सप्तत्रिंशत्सहस्राणि पञ्चशताधिकानि एषां धनुरानयनाय षन्नवत्या भागे हृते लब्धानि धनुषां पञ्चत्रिंशच्छतानि पञ्चदशाधिकानि शेषं षष्टिरङ्गुलानि, अस्य धनूराशेर्गव्यूतानयनाय सहस्रद्वयेन भागे हृते लब्धमेकं गव्यूतं शेषं धनुषां पञ्चदश शतानि पञ्चदशाधिकानि, सर्वाग्रेण जातमिदं—योजनानां सप्त कोटिशतानि नवतिकोट्यधिकानि षट्पञ्चाशल्लक्षाश्चतुर्णवतिसहस्राणि शतमेकं पञ्चाशदधिकं तथ गव्यूतमेकं धनुषां पञ्चदशशतानि पञ्चदशाधिकानि अङ्गुलानां षष्टिरिति। गतं योजनद्वारं, अथ वर्षाणि—'जंबुद्दीवे ण'मित्यादि व्यक्तं। अथ पर्वतद्वारं—'जंबुद्दीवे णं०' प्रश्नसूत्रं व्यक्तं, उत्तरसूत्रे सङ्ख्यामीलनाय किञ्चिदुच्यते—षट् वर्षधराः क्षुल्लहिमवदादयः एको मंदरो—मेरु एकश्चित्रकूटः एकश्च विचित्रकूटः, एतौ च यमलजातकाविव द्वौ गिरी देवकुरुवर्त्तिनौ, द्वौ यमकपर्वतौ तथैवोत्तरकुरुवर्त्तिनौ, द्वे काञ्चनकपर्वतशते देवकुरूत्तरकुरुवर्त्तिह्रददशकोभयकूलयोः प्रत्येकं दश२काञ्चनकसद्भावात्, तथा विंशतिर्वक्षस्कारपर्वताः, तत्र गजदन्ताकारा गंधमादनादयश्चत्वारः तथा चतुःप्रकारमहाविदेहे प्रत्येकं चतुष्क२सद्भावात् षोडश चित्रकूटादयः सरलाः द्वयेऽपि मिलिता यथोक्तसङ्ख्याकाः, तथा चतुस्त्रिंशद्दीर्घवैताढ्या द्वात्रिंशद्विजयेषु भरतैरावतयोश्च प्रत्येकमेकैकभावात्, चत्वारो वृत्तवैताढ्याः हैमवतादिषु चतुर्षु वर्षेषु एकैकभावात्, 'एवामेव सपुव्वावरेणं'ति प्राग्वत्, जंबूद्वीपे द्वीपे एकोनसप्तत्यधिके द्वे पर्वतशते भवतः इत्याख्यातं मयाऽन्यैश्च तीर्थकृद्भिः।

अथ कूटानि, तत्र सूत्रं—'जंबुद्दीवे द्वीपे कियन्ति वर्षधरकूटानि इत्यादिप्रश्नसूत्रं व्यक्तं, उत्तरसूत्रे षट्पञ्चाशद्वर्षधरकूटानि, तथाहि—क्षुद्रहिमवत्शिखरिणोः प्रत्येकमेकादश २२ महाहिमवद्रुक्मिणोः प्रत्येकमष्टौ १६ निषधनीलवतोः प्रत्येकं नव १८ सर्वसङ्ख्यया ५६, वक्षस्कारकूटानि षन्नवति, तद्यथा—सरलवक्षस्कारेषु षोडशसु १६ प्रत्येकं चतुष्टयभावात् ६४ गजदन्ताकृतिवक्षस्कारेषु गंधमादनसौमनसयोः सप्त १४ माल्यवद्विद्युत्प्रभयोः नव १८ इति उभयमीलने

यथोक्तसङ्ख्या, त्रीणि षडुत्तराणि वैताढ्यकूटशतानि, तत्र भरतैरावतयोर्विजयानां च वैताढ्येषु चतुस्त्रिंशति प्रत्येकं नवसम्भवादुक्तसङ्ख्यानयनं, वृत्तवैताढ्येषु च कूटाभावः अत एव वैताढ्यसूत्रे न दीर्घपदोपादानं विशेषणस्य व्यवच्छेदकत्वात् अत्र च व्यवच्छेद्यस्याभावादिति, मेरौ नव, तानि च नन्दनवनगतानि ग्राह्याणि न भद्रशालवनगतानि दिग्हस्तिकूटानि।

तेषां भूमिप्रतिष्ठितत्वेन स्वतन्त्रकूटत्वादिति, सङ्ग्रहणिगाथायां 'पव्वयकूडा ये'त्यत्र चोऽनुक्तसमुच्चये तेन चतुस्त्रिंशद् ऋषभकूटानि तथा अष्टौ जंबूवनगतानि तावन्त्येव शाल्मलीवनगतानि भद्रशालवनगतानि च सर्वसङ्ख्ययाऽष्टपञ्चाशत्सङ्ख्याकानि ग्राह्याणि, ननु तर्हि एतद्गाथाविवरणसूत्रे 'चत्तारि सत्तसट्ठा कूडसया' इत्येवंरूपे सङ्ख्याविरोधः, उच्यते, एषां गिर्यनाधारकत्वेन स्वतन्त्रगिरित्वान्न कूटेषु गणना, अयमेवाशय ऋषभकूटसङ्ख्यासूत्रपृथककरणेन सूत्रकृता स्वयमेव दर्शयिष्यते, यच्च प्राक् ऋषभकूटाधिकारे।

'कहि णं भंते ! जंबुद्दीवे उसमकूडे नामं पव्वए पन्नत्ते' इति सूत्रं, तिच्छिल्लोपयमात्रतापरं व्याख्येयमिति सर्वं सम्यक्, अथ तीर्थानि–'जंबुद्दीवे' इत्यादि, प्रश्नसूत्रे तीर्थानि चक्रिणां स्वस्वक्षेत्रसीमासुरसाधनार्थं महाजलावतारणस्थानानि, उत्तरसूत्रे भरते त्रीणि तीर्थानि प्रज्ञप्तानि, तद्यथा–मागधं पूर्वस्यां गङ्गासङ्गमे समुद्रस्य वरदाम दक्षिणस्यां प्रभासं पश्चिमायां सिंधुसंगमे समुद्रस्य एवमैरावतसूत्रमपि भावनीयं, नवरं नद्यौ चात्र रक्तारक्तवत्यौ तयोः समुद्रसङ्गमे मागधप्रभासे वरदामाख्यं च तत्रत्यापेक्षया तथैव, विजयसूत्रे चायं विशेषः–विजयसत्कगङ्गादिश्महानदीनां यथार्ह शीताशीतोदयोः सङ्गमे मागधप्रभासाख्यानि भावनीयानि वरदामाख्यानि तेषां मध्यगतानि भाव्यानि, एवमेव पूर्वापरमीलनेन एकं त्र्युत्तरं भवतीत्याख्यातमिति।

अथ श्रेणयः–'जंबुद्दीवे' इत्यादि, प्रश्नसूत्रं व्यक्तं, उत्तरसूत्रे गौतम ! जंबूद्वीपे द्वीपे अष्टषष्ठिविद्याधरश्रेणयः–विद्याधरावासभूता वैताढ्यानां पूर्वापरोदध्यादिपरिच्छिन्ना आयतमेखला भवन्ति, चतुस्त्रिंशत्यपि वैताढ्येषु दक्षिणत उत्तरतश्च एकैकश्रेणिभावात्, तथैवाष्टषष्टिराभियोग्यश्रेणयः, एवमेव पूर्वापरमीलनेन जंबूद्वीपे द्वीपे षट्त्रिंशं–षट्त्रिंशदधिकं श्रेणिशतं भवतीत्याख्यातं।

अथ विजयाः–'जंबुद्दीवे'त्ति प्रश्नसूत्रं व्यक्तं, उत्तरसूत्रे जंबूद्वीपे द्वीपे चतुस्त्रिंशच्चक्रवर्तिविजयाः तत्र द्वात्रिंशन्महाविदेहविजया द्वे च भरतैरावते उभयोरपि चक्रवर्तिविजेतव्यक्षेत्रखण्डरूपस्य चक्रवर्तिविजयशब्दवाच्यस्य सत्वात्, एवं चतुस्त्रिंशद्राजधान्यश्चतुस्त्रिंशत्तमिस्रगुहाः प्रतिवैताढ्यमेकैकसम्भवात् एवं चतुस्त्रिंशत् खण्डप्रपातगुहाः चतुस्त्रिंशत्कृतमालका देवाः चतुस्त्रिंशन्नक्तमालका देवाश्चतुस्त्रिंशत् ऋषभकूटनामकाः पर्वताः प्रज्ञप्ताः, प्रतिक्षेत्रं सम्भवतश्चक्रवर्तिनो दिग्विजयसूचकनामन्यासार्थमेकैकसद्भावात्, यच्चात्र विजयद्वारे प्रक्रान्तेराजधान्यादिप्रश्नोत्तरसूत्रे तद् विजयान्तर्गतत्वेनेति।

अथ ह्रदाः–'जंबुद्दीवे २' इत्यादि प्रश्नसूत्रं व्यक्तं, उत्तरसूत्रे षोडश महाह्रदाः षड् वर्षधराणां शीताशीतादयोश्च प्रत्येकं पञ्च पञ्च। अथ सलिलाः–'जंबुद्दीवे' इत्यादि, जंबुद्वीपे द्वीपे कियत्यो महानद्यो वर्षधरेभ्यः–'तात्स्थ्यात् तद्व्यपदेश' इति वर्षधरह्रदेभ्यः प्रवहंति–निर्गच्छन्तीति वर्षधरप्रवहाः, अन्यथा कुण्डप्रभवाणामपि वर्षधरनितम्बस्थकुण्डप्रभवत्वेन वर्षधरप्रभवा इति वाच्यं

स्यात्, कियत्यः कुण्डप्रभवा—वर्षधरनितम्बवर्त्तिकुण्डनिर्गताः प्रज्ञप्ताः ?, गौतम! जंबूद्वीपे द्वीपे चतुर्दश महानद्यो वर्षधरह्रदप्रभवा भरतगङ्गादयः प्रतिक्षेत्रं द्विद्विभावात्, कुण्डप्रभवाः षट्सप्ततिर्महानद्यः, तत्र शीताया उदीच्येष्वष्टसु विजयेषु शीतोदाया याम्येष्वष्टसु विजयेषु च एकैकभावेन षोडश गङ्गाः षोडश सिन्धवश्च तथा शीताया याम्येष्वष्टसु विजयेषु शीतोदाया उदीच्येष्वष्टसु विजयेषु चैकैकभावेन षोडश रक्ता रक्तावत्यश्च, एवं चतुःषष्टि द्वादश च प्रागुक्ता अन्तर्नद्यः सर्वमीलने षट्सप्ततिरिति कुण्डप्रभवानां तु शीताशीतोदापरिवारभूतत्वेनासम्भवदपि महानदीत्वं स्वस्वविजयगतचतुर्दशसहस्रनदीपरिवारसम्पदुपेतत्वेन भाव्यं, एवमेव सपूर्वापरेण चतुर्दशषट्सप्ततिरूपसङ्ख्यामीलनेन जंबूद्वीपे नवतिर्महानद्यो भवन्तीत्याख्यातमिति।

अथैतासां चतुर्दशमहानदीनां नदीपरिवारसङ्ख्यां समुद्रप्रवेशदिशं चाह– 'जंबुद्दीवे' इत्यादि व्यक्तं, नवरं यद् भरतैरावतयोर्युगपद्ग्रहणं तत्समानक्षेत्रत्वात्, भरते गङ्गा पूर्वलवणसमुद्रं सिन्धुः पश्चिमलवणसमुद्रं प्रविशति, ऐरावते च रक्ता पूर्वसमुद्रं रक्तावत्यपरसमुद्रं च, तथा 'जंबुद्दीवे' ति निगदसिद्धं, नवरं हैमवतहैरण्यवतयोः समानयुग्मिक्षेत्रत्वेन सहोक्ति, हैमवते रोहिता पूर्वं लवणं रोहितांशा पश्चिमं हिरण्यवते सुवर्णकूला पूर्वं लवणं रूप्यकूला पश्चिमं एवमेव पूर्वापरमीलनेन जंबूद्वीपे हैमवतहैरण्यवतयोः क्षेत्रयोर्द्वादशसहस्रोत्तरं नदीशतसहस्रं भवत्येवमाख्यातं, अत्र शतसहस्रशब्दसाहचर्यादग्रसङ्ख्यायां द्वादशोत्तराणीत्यत्र सहस्राणि प्रतीयन्ते, अन्यथा (द्वादशाधिकत्वे अर्ध–) षट्पञ्चाशत्सहस्राणां चतुर्गुणने सङ्ख्याशास्त्रबाधः स्यात्, दृश्यते च शब्दसाहचर्यादर्थ-प्रतिपत्तिर्यथा रामलक्ष्मणावित्यत्र रामशब्देन दाशरथिर्लक्ष्मणशब्दसाहचर्यात् प्रतीयते न तु रेणुकासुत इति, तथा 'जंबुद्दीवे' इत्यादि, सुबोधं, द्वयोर्वर्षयोः सहोक्तौ हेतुः प्राग्वदेव, हरीति–हरिसलिला पूर्वार्णवगा हरिवर्षे हरिकान्ता चापरार्णवगा रम्यके नरकान्ता पूर्वार्णवगा नारीकान्ता चापरार्णवगा सर्वसङ्ख्यया जंबूद्वीपे द्वीपे हरिवर्षरम्यकवर्षयोर्द्वे चतुर्विंशतिसहस्राधिके सलिलाशतसहस्रा भवत इति, षट्पञ्चाशत्सहस्राणां चतुर्गुणने एतावत एव लाभात्, अत्रापि सहस्रपरतया व्याख्यानं प्राग्वत्, तथा 'जंबुद्दीवे' इत्यादि व्यक्तं, नवरं शीता शीतोदा चेत्यत्र चकारो द्वयोस्तुल्यकक्षताद्योतनार्थी तेन समपरिवारत्वादिकं ग्राह्यं, समुद्रप्रवेशः शीतायाः पूर्वस्यां शीतोदायास्त्वपरस्यामिति, 'व्याख्यातो विशेषप्रतिपत्ति'रित्यत्र द्वादशान्तरनद्योऽधिका ग्राह्याः, महाविदेहनदीत्वाविशेषात्, शेषाः कुण्डप्रभवनद्यश्च सीताशीतोदापरिवारनदीष्वन्तर्गता इति न सूत्रकृता सूत्रे पृथग् विवृताः।

अथ मेरुतो दक्षिणस्यां कियत्यो नद्य इत्याह– 'जंबुद्दीवे दीवे मंदरपव्वय' इत्यादि व्यक्तं, नवरं उत्तरसूत्रे एकं षन्नवतिसहस्राधिकं सलिलाशतसहस्रं, तथाहि–भरते गङ्गायाः सिन्धोश्च चतुर्दश २ सहस्राणि हैमवते रोहिताया रोहितांशायाश्चाष्टाविंशतिरष्टाविंशति सहस्राणि हरिवर्षे हरिसलिलाया हरिकान्तायाश्च षट्पञ्चाशत् २ सहस्राणि सर्वमीलने यथोक्तसङ्ख्या। अथ मेरुत उत्तरवर्त्तिनीनां सङ्ख्यां प्रश्नयितुमाह– 'जंबुद्दीवे' इत्यादि व्यक्तं, नवरं उत्तरसूत्रे सर्वसङ्ख्या दक्षिणसूत्रवद् भावनीया, वर्षाणां नदीनां च नामसु विशेषः स्वयं बोध्यः, ननु मेरुतो दक्षिणोत्तरनदीसङ्ख्यामीलने सपरिवारे उत्तरदक्षिण-प्रवहे शीताशीतोदे कथं न मीलिते ?, उच्यते,

प्रश्नसूत्रं हि मेरुतो दक्षिणोत्तरदिग्भाववर्त्तिपूर्वा- परसमुद्रप्रवेशरूपविशिष्टार्थविषयकं तेन न मेरुतः शुद्धपूर्वापरसमुद्रप्रवेशिन्योनयोर्निर्वच- नसूत्रेऽन्तर्भावः, यथाप्रश्नं निर्वचनदानस्य शिष्टव्यवहारात्। अथ पूर्वाभिमुखाः कियत्यो लवणोदं प्रविशन्तीत्याह–

'जंबुद्दीवे दीवे' इत्यादि, जंबूद्वीपे द्वीपे कियत्यो नद्यः पूर्वाभिमुखं लवणोदं प्रविशन्ति– कियत्यः पूर्वसमुद्रप्रवेशिन्य इत्यर्थः, इदं च प्रश्नसूत्रं केवलं नदीनां पूर्वादिग्गामित्वरूपधर्मविषयकं तेन पूर्वस्मात् प्रश्नसूत्राद्भिद्यते, उत्तरसूत्रे सप्त नदीलक्षाणि अष्टाविंशतिश्च सहस्राणि यावत् समुपसर्प्पन्ति, तद्यथा–पूर्वसूत्रे मेरुतो दक्षिणदिग्वर्त्तिनीनामेकं षन्नवतिसहस्राधिकं लक्षमुक्तं, तदर्द्धं पूर्वाब्धिगामीत्यागतान्यष्टानवति सहस्राणि एवमुदीच्यनदीनामप्यष्टनवति सहस्राणि शीता- परिकरनद्यश्च ५ लक्षाणि द्वात्रिंशत्सहस्राणि च सर्वपिण्डे यथोक्तं मानं।

अथ पश्चिमाब्धिगामिनीनां सङ्ख्याप्रश्नार्थमाह–'जंबुद्दीवे दीवे' इत्यादि, इदं चानन्तरसूत्रवद्वाच्यं, सङ्ख्यायोजनायाः परस्परं निर्विशेषत्वात्, सम्प्रति सर्वसरितसङ्कलनामाह– 'एवामेव सपव्वावरेण'मित्यादि व्यक्तं, नवरं जंबूद्वीपे पूर्वाब्धगामिनीनामपराब्धिगामिनीनां च नदीनां संयोजने चतुर्दश लक्षाणि षट्पञ्चाशतसहस्राणि भवन्ति इत्याख्यातं, ननु इयं सर्वसरि- त्सङ्ख्या केवलपरिकरनदीनां महानदीसहितानां वा तासां ?, उच्यते, महानदीसहितानामिति सम्भाव्यते, सम्भावनाबीजं तु कच्छविजयगतसिन्धुनदीवर्णनाधिकारे प्रवेशे च 'सर्वसङ्ख्यया आत्मना सह चतुर्दशभिर्नदीसहस्रैः समन्विता भवती'ति श्रीमलयगिरिकृलबृहत्क्षेत्र विचार- वृत्यादिवचनमिति, श्रीरत्नशेखरसूरयस्तु स्वक्षेत्रसमासे।

॥ १ ॥ "अडसयरि महनईओ बारस अंतरनईउ सेसाओ।
परिअरनईओ चउदसलक्खा छप्पन्नसहसा य ॥" त्ति।

महानदीनां पृथग्गणनं चक्रुरिति तत्वं तु बहुश्रुतगम्यं, नन्वत्र प्रत्येकमष्टाविंशतिसहस्रनदी- परिवारा द्वादशान्तरनद्यः सर्वनदीसङ्कलनायां कथं न गणिताः ?, उच्यते, इयं सर्वसरित्सङ्ख्या चतुर्दशलक्षादिलक्षणा श्रीरत्नशेखरसूरिभिः स्वोपज्ञक्षेत्रसमासवृत्तौ तथा प्रतिमहानदिपरिवारमीलने स्वस्वक्षेत्रविचारसूत्रे श्रीजिनभद्रगणिक्षमाश्रमणादिसूत्रकारैः श्रीमलयगिर्यादिभिर्वृत्तिकारैश्चान्तर- नदीपरिवारासङ्ग्रहेणैवोक्ता, श्रीहरिभद्रसूरिभिस्तु 'खण्डा जोअणे'त्यादिगाथायाः सङ्ग्रहण्यां चतुरशीतिप्रमाणा कुरुनदीनरनन्तर्भाव्य तत्स्थाने इमा एव द्वादश नदीः चतुर्दशभिः २ नदीसहस्रैः सह निक्षिप्य यथोक्तसङ्ख्या पूरिता, तद्यथा–

॥ १ ॥ "चउदससहस्सगुणिआ अडतीस नईउ विजयमज्झिल्ला।
सीआनईइ निवडंति सीओआएवि एमेव ॥"

कैश्चित्तु य एव विजयगतयोर्गङ्गासिन्ध्वोः रक्तारक्तवत्योर्वा अष्टाविंशतिसहस्रनदीलक्षणः परिवारः स एवासन्नतयोपचारेणान्तरनदीनां परिवारतयोक्त इत्यतोऽवसीयते यदन्तरनदीपरिवार- माश्रित्य मतवैचित्र्यदर्शनादिना केनापि हेतुना प्रस्तुतसूत्रकारेणापि सर्वनदीसङ्कलनायां ता न गणिता इति, अत्रापि तत्वं बहुश्रुतगम्यमेव, यदि चान्तरनदीपरिवारनदीसङ्कलनापि क्रियते तदा जंबूद्वीपे द्विनवतिसहस्राधिकाः सप्तदश लक्षा नदीनां भवन्ति, यदुक्तम्–

॥ १ ॥　　"सुत्ते चउदसलक्खा छप्पन्नसहस्स जंबुदीवम्मि ।
　　　　दुंति उ सत्तर लक्खा बानवइसहस्स सलिलाओ ॥" इति ।

एतेषां जंबूद्वीपप्रज्ञप्त्युक्तार्थानां पिण्डके—मीलके विषयभूते इयं सङ्ग्रहणी गाथा भवतीति

अथ जंबूद्वीपव्यासस्य लक्षप्रमाणताप्रतीत्यर्थं दक्षिणोत्तराभ्यां क्षेत्रयोजनसर्वाग्रमीलनं जिज्ञासूनामुपकाराय दर्श्यते, यथा—

१ भरत क्षेत्रप्रमाणं ५२६ योजन कला ६
२ क्षुल्लहिमाचलपर्वतप्रमाणं० १०५२ योजन कला १२
३ हैमवतक्षेत्रप्रमाणं० २१०५ योजन कला ५
४ वृद्धहिमाचलपर्वतप्रमाणं० ४२१० योजन कला १०
५ हरिवर्षक्षेत्रप्रमाणं ८४२१ योजन कला १
६ निषधपर्वतप्रमाणं १६८४२ योजन कला २
७ महाविदेहक्षेत्रप्रमाणं ३३६८४ योजन कला ४
८ नीलवत्पर्वतप्रमाणं १६८४२ योजन कला २
९ रम्यकक्षेत्रप्रमाणं ८४२१ योजन कला १
१० रुक्मिपर्वतप्रमाणं ४२१० योजन कला १०
११ हैरण्यवतक्षेत्रप्रमाणं २१०५ योजन कला ५
१२ शिखरिपर्वतप्रमाणं १०५२ योजन कला १२
१३ ऐरवतक्षेत्रप्रमाणं ५२६ योजन कला ६

९९९९६ योजन ७६ कला दक्षिणोत्तरतः सर्वमीलने १००००० लक्षयोजनसर्वाग्रं, अत्र दक्षिणजगतीमूलविष्कम्भो भरतप्रमाणे उत्तरजगतीसत्कश्च ऐरावतेऽन्तर्भावनीय इति । पूर्वतः पश्चिमतश्चैवं सर्वाग्रमीलनं—औत्तराहं शीतावनमुखं २९२२ योजन विजयषोडशकं ३५४०६ योजन अन्तरनदीषट्कं ७५० योजन वक्षस्काराष्टकं ४००० योजन मेरुभद्रशालवनं ५४००० योजन औत्तराहं शीता (तोदा) मुखवनं २९२२ योजन १००००० अत्रापि जगतीसत्कमूलविष्कम्भः स्वस्वदिग्गतमुखवनेऽन्तर्भावनीय इति ।

वक्षस्कारः—६ समाप्तः

इति सातिशयधर्मदेशनारसमुल्लासविस्मयमानऐंदीयुगीननराधिपतिचक्रवर्तिसमान-श्रीअकब्बरसुरत्राणप्रदत्तषाण्मासिकसर्वजन्तुजाताभयदानशत्रुञ्जयादिकमोचनस्फुरन्मानप्रदान-प्रभृतिबहुमानयुगप्रधानोपमानसम्प्रतिविजयमानश्रीमत्तपपोगच्छाधिराजश्रीहीरविजयसूरीश्वर-पदपद्मोपासनाप्रवणमहोपाध्यायश्रीसकलचन्द्रगणिशिष्योपाध्यायश्रीशान्तिचन्द्रगणिविरचितायां जंबूद्वीपप्रज्ञप्तिवृत्तौ प्रमेयरत्नमञ्जूषानाम्न्यां जंबूद्वीपगतपदार्थसंङ्ग्रहवर्णनो नाम षष्ठो वक्षस्कारः

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता जंबूद्वीपप्रज्ञप्तिउपाङ्ग सूत्रे**
**षष्ठवक्षस्कारस्य शान्तिचन्द्रवाचकेन विरचिता टीका परिसमाप्ता ।**

## वक्षस्कारः-७

वृ. जंबूद्वीपे च ज्योतिष्काश्चरन्तीति तदधिकारः सम्प्रतिपाद्यते, तत्र प्रस्तावनार्थमिदं चन्द्रादिसङ्ख्याप्रश्नसूत्रम्-

मू. (२५०) *जंबुद्दीवे णं भंते ! दीवे कइ चंदा पभासिंसु पभासंति पभासिस्संति कइ सूरिआ तवइंसु तवेंति तविस्संति केवइया नक्खत्ता जोगं जोइंसु जोअंति जोइस्संति केवइआ महग्गहा चारं चरिंसु चरंति चरिस्संति केवइआओ तारागणकोडाकोडीओ सोभिंसु सोभंति सोभिस्संति ?, गोअमा ! दो चंदा पभासिंसु ३ दो सूरिआ तवइंसु ३ छप्पन्नं नक्खत्ता जोगं जोइंसु ३ छावत्तरं महग्गहसयं चारं चरिंसु ३ ।*

वृ. 'जंबुद्दीवे ण'मित्यादि, जंबूद्वीपे भगवन् ! द्वीपे कति चन्द्राः प्रभासितवन्तः-प्रकाशनीयं वस्तु उदद्योतितवन्तः प्रभासयन्ति-उदद्योतयन्ति प्रभासयिष्यन्ति-उदद्योतयिष्यन्ति, उदद्योतनामकर्मोदयाच्चन्द्रमण्डलानां, अनुष्णप्रकाशो हि जने उद्द्योत इति व्यवह्रियते तेन तथा प्रश्नः, अनादिनिधनेयं जगतस्थितिरिति जानतः शिष्यस्य कालत्रयनिर्देशेन प्रश्नः, प्रष्टव्यं तु चन्द्रादिसङ्ख्या, तथा कति सूर्यास्तापितवन्तः-आत्मव्यतिरिक्तवस्तुनि तापं जनितवन्तः, एवं तापयन्ति तापयिष्यन्ति, आतपनामकर्मोदाद्रविमण्डलानामुष्णः प्रकाशस्ताप इति लोके वयवह्रियते तेन यथा प्रश्नोक्ति तथा कियन्ति नक्षत्राणि योगं-स्वयं नियतमण्डलचारित्वेऽप्यनियतानेकमण्डलचारिभिर्निज- मण्डलमागतैर्ग्रहैः सह सम्बन्धं युक्तवन्ति-प्राप्तवन्ति युञ्जन्ति-प्राप्नुवन्ति योक्ष्यन्ति-प्राप्स्यन्ति, तथा कियन्तो महाग्रहाः-अङ्गारकादयश्चारं-मण्डलक्षेत्रपरिभ्रमिं चरितवन्तः-अनुभूतवन्तः चरन्ति-अनुभवन्ति चरिष्यन्ति-अनुभविष्यन्ति, यद्यपि समयक्षेत्रवर्तिनां सर्वेषामपि ज्योतिष्काणां गतिश्चार इत्यभिधीयते तथाप्यन्यव्यपदेशविशेषाभावेन वक्रातिचारादिभिर्गतिविशेषैर्गतिमत्वेन चैषां सामान्यगतिशब्देन प्रश्नः, तथा कियत्यस्तारगणकोटाकोट्यः शोभितवन्तः-शोभां धृतवन्त्यः शोभन्ते शोभिष्यन्ते ।

एषां च चन्द्रादिसूत्रोक्तकारणाभावेन बहुलपक्षादौ भास्वरत्वमात्रेण शोभमानत्वादित्थं प्रश्नाभिलापः, अत्र सूत्रेऽनुक्तोऽपि वाशब्दो विकल्पद्योतनार्थं प्रतिप्रश्नं बोध्यः भगवानाह-गौतम ! द्वौ चन्द्रौ प्रभासितवन्तौ प्रभासेते प्रभासिष्येते च, जंबूद्वीपे क्षेत्रे सूर्याक्रान्ताभ्यां दिग्भ्यामन्यत्र शेषयोर्दिशोश्चन्द्राभ्यां प्रकाश्यमानत्वात्, प्रश्नसूत्रे च प्रभासितवनत इत्यादौ यो बहुवचनेन निर्देशः सप्रश्नरीतिर्बहुवचनेनैव भवतीति ज्ञापनार्थः, एकाद्यन्यतरनिर्णयस्य तु सिद्धान्तोत्तरकाले सम्भवः, एवं सूर्यसूत्रेऽपि भावनीयं, तथा द्वौ सूर्यौ तापितवन्तौ ३ जंबूद्वपक्षेत्रमिति शेषः, अस्मिन्नेव क्षेत्रे चन्द्राक्रान्ताभ्यां दिग्भ्यामन्यत्र शेषयोर्दिशोः सूर्याभ्यां ताप्यमानत्वात्, तथा षट्पञ्चाशन्नक्षत्राणि एकैकस्य चन्द्रस्य प्रत्येकमष्टाविंशतिनक्षत्रपरिवारात् योगं युक्तवन्तीत्यादि प्राग्वत्, तथा षट्सप्ततं-षट्सप्तत्युत्तरं महाग्रहशतं एकैकस्य चन्द्रस्य प्रत्येकमष्टाशीतेर्ग्रहाणां परिवारभावात् चारं चरितवदित्यादि । तथा पद्येन तारामानमाह-

मू. (२५१) *एगं च सयसहस्सं तेत्तीसं खलु भवे सहस्साइं ।*

*नव य सया पन्नासा तारागणकोडिकोडीणं ॥ त्ति ।*

**वृ.** तारागणकोटाकोटी नामेकं लक्षं त्र्यस्त्रिंशच्च सहस्राणि नव च शतानि पञ्चाशानि-पञ्चाशदधिकानि भवन्ति, प्रतिचन्द्रं तारागणकोटाकोटीनां षट्षष्टिसहस्रनवशताधिकपञ्चसप्ततेर्लभ्यमानत्वादिति । अत प्रथमोद्दिष्टमपि चन्द्रमुपेक्ष्य बहुवक्तव्यत्वात् प्रथमं सूर्यप्ररूपणामाह, तत्रेमानि पञ्चदशानुयोगद्वाराणि–मण्डलसङ्ख्या १ मण्डलक्षेत्रं २ मण्डलान्तरं ३ बिम्बायामविष्कम्भादि ४ मेरुमण्ड- लक्षेत्रयोरबाधा ५ मण्डलायामादिवृद्धिहानी ६ मुहूर्त्तगति ७ दिनरात्रिवृद्धिहानी ८ तापक्षेत्रसंस्थानादि ९ दूरासन्नादिदर्शने लोकप्रतीत्युपपत्ति १० चारक्षेत्रेऽतीतादिप्रश्नः ११ तत्रैव क्रियाप्रश्नः १२ ऊर्ध्वादिदिक्षु प्रकाशयोजनसङ्ख्या १३ मनुष्यक्षेत्रवर्तिज्योतिष्कस्वरूपं १४ इन्द्राद्यभावे स्थितिप्रकल्पः १५ । तत्र मण्डलसङ्ख्यायामादिसूत्रम्–

**मू.** *(२५२) कइ णं भंते ! सूरमंडला पन्नत्ता ?, गोअमा ! एगे चउरासीए मंडलसए पन्नत्ते इति । जंबुद्दीवे णं भंते ! दीवे केवइअं ओगाहित्ता केवइआ सूरमंडला पन्नत्ता ? गोअमा ! जंबुद्दीवे २ असीअं जोअणसयं ओगाहित्ता एत्थ णं पन्नट्ठी सूरमंडला पन्नत्ता, लवणे णं भंते ! समुद्दे केवइअं ओगाहित्ता केवइआ सूरमंडला पन्नत्ता ? गोअमा ! लवणे समुद्दे तिन्नि तीसे जोअणसए ओगाहित्ता एत्थ णं एगूणवीसे सूरमंडलसए प०, एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे लवणे अ समुद्दे एगे चुलसीए सूरमंडलसए भवंतीतिमक्खायंति १ ।*

**वृ.** 'कइ ण'मित्यादि, कति भदन्त! सूर्ययोर्दक्षिणोत्तरायणे कुर्वतोर्निजबिम्बप्रमाणचक्रवालविष्कम्भानि प्रतिदिनभ्रमिक्षेत्रलक्षणानि मण्डपलानि प्रज्ञप्तानि ?, मण्डलत्वं चैषां मण्डलसदृशत्वात् न तु तात्त्विकं, मण्डलप्रथमक्षणे यद् व्याप्तं क्षेत्रं तत्समश्रेण्येव यदि परःक्षेत्रं व्याप्नुयात् तदा तात्त्विकी मण्डलता स्यात् तथा च सति पूर्वमण्डलादुत्तरमण्डलस्य योजनद्वयमन्तरं न स्यादिति, भगवानाह–गौतम ! एवं चतुरशीतं–चतुरशीत्यधिकं मण्डलशतं प्रज्ञप्तं, यथा चैभिश्चारक्षेत्रपूरणं तथा अनन्तरद्वारे प्ररूपयिष्यते । अथैतान्येव क्षेत्रविभागेन द्विधा विभज्योक्तसङ्ख्यां पुनः प्रश्नयति– 'जंबुद्दीवे'त्ति जंबूद्वीपे भदन्त ! द्वीपे कियत्क्षेत्रमवगाह्य कियन्ति सूर्यमण्डलानि प्रज्ञप्तानि गौतम ! जंबूद्वीपे २ अशीतं–अशीत्यधिकं योजनशतमवगाह्यात्रान्तरे पञ्चषष्टि सूर्यमण्डलानि प्रज्ञप्तानि ?, गौतम ! जंबूद्वीपे २ अशीतं–अशीत्यधिकं योजनशतमवगाह्यात्रान्तरे पञ्चषष्टि सूर्यमण्डलानि प्रज्ञप्तानि, तथा लवणे भदन्त ! समुद्रे कियदवगाह्य कियन्ति सूर्यमण्डलान प्रज्ञप्तानि ?, गौतम ! लवणे समुद्रे त्रिंशदधिकानि त्रीणि योजनशतानि सूत्रेऽल्पत्वादविवक्षितानप्यष्टचत्वारिंशदेकषष्टिभागान् अवगाह्यात्रान्तरे एकोनविंशत्यधिकं सूर्यमण्डलशतं प्रज्ञप्तं, अत्र पञ्चषष्ट्या मण्डलैरेकोनाशीत्यधिकं योजनशतं नव चैकषष्टिभागा योजनस्य पूर्यन्ते, जंबूद्वीपेऽवगाह्यक्षेत्रं चाशीत्यधिकं योजनशतं तेन शेषा द्वापञ्चाशदभागाः षट्षष्टितमस्य मण्डलस्य बोध्याः अल्पत्वाच्चात्र न विवक्षिताः, अत्र च पञ्चषष्टिमण्डलानां विषयविभागव्यवस्थायां सङ्ग्रहणीवृत्त्याद्युक्तोऽयं वृद्धसम्प्रदायः–मेरोरेकतो निषधमूर्द्धनि त्रिषष्टिर्मण्डलानि हरिवर्षजीवाकोटयां च द्वे द्वितीयपार्श्वे नीलवनमूर्ध्नि त्रिषष्टि रम्यकजीवाकोटयां च द्वे इति, एवमेव सपूर्वापरेण पञ्चषष्ट्येकोनविंशत्यधिकशतमण्डलमीलनेन जंबूद्वीपे लवणे च समुद्रे एकं चतुरशीतं सूर्यमण्डलशतं

भवतीत्याख्यातं मया चान्यत्तीर्थकृद्भिः ।

मू. (२५३) सव्वब्भंतराओ णं भंते ! सूरमंडलाओ केवइआए अबाहाए सव्वबाहिरए सूरमंडले पं० ?, गोयमा ! पंचदसुत्तरे जोअणसए अबाहाए सव्वबाहिरए सूरमंडले पन्नत्ते २ ।

वृ. गतं मण्डलसङ्ख्याद्वारम्, अथ मण्डलक्षेत्रद्वारं, तत्र सूत्रं–'सव्वब्भंतराओ ण'मित्यादि, सर्वाभ्यन्तरात्–प्रथमात् सूर्यमण्डलात् भदन्त ! कियत्या अबाधया–कियता अन्तरेण सर्वबाह्यं–सर्वेभ्यः परं यतोऽनन्तरं नैकमपीत्यर्थः सूर्यमण्डलं प्रज्ञप्तम् ?, गौतम ! दशोत्तराणि पञ्च योजनशतानि अबाधया–अन्तरालत्वाप्रतिघातरूपया सर्वबाह्यं सूर्यमण्डलं प्रज्ञप्तम्, अत्रानुक्ता अपि अष्टच- त्वारिंशदेकषष्टिभागाः 'ससिरविणो लवणंमि अ जोअण सय तिण्णि तीस अहिआइं'इति वचनादधि- का ग्राह्याः, अन्यथोक्तसङ्ख्याङ्कानां मण्डलानामनवकाशात्, कथमेतदवसीयते ?, उच्यते–

सर्वसङ्ख्यया चतुरशीत्यधिकं मण्डलशतं, एकैकस्य च मण्डलस्य विष्कम्भोऽष्टचत्वारिंश- देकषष्टिभागा योजनस्य, ततश्चतुरशीत्यधिकं शतमष्टाचत्वारिंशता गुण्यते, आतान्यष्टाशीति शतानि द्वात्रिंशदधिकानि, एतेषां योजनानयनार्थमेकषष्ट्या भागो ह्रियते, हृते च लब्धं चतुश्चत्वारिंश- दधिकं योजनशतं शेषमवतिष्ठतेऽष्टचत्वारिंशत्, चतुरशीत्यधिकशतसङ्ख्यानां च मण्डला- नामपान्तरालानि त्र्यशीत्यधिकशतसङ्ख्यानि, सर्वत्रापि ह्यपान्तरालानि रूपोनानि भवन्ति तथा च प्रतीतमेतत् चतसृणामङ्गुलीनामपान्तरालानि त्रीणीति, एकैकं मण्डलान्तरालं च द्वियोजन- प्रमाणं, ततस्त्र्यशीत्यधिकं शतं द्विकेन गुण्यते, जातानि त्रीणि शतानि षट्षष्ट्यधिकानि ३६६, पूर्वोक्तं च चतुश्चत्वारिंशं शतमत्र प्रक्षिप्यते, ततो जातानि पञ्चशतानि दशोत्तराणि योजनानि अष्टचत्वारिंशदेकषष्टिभागा योजनस्य, अनेन च मण्डलक्षेत्रस्य प्रमाणमभिहितं, मण्डलक्षेत्रं नाम सूर्यमण्डलैः सर्वाभ्यन्तरादिभिः सर्वबाह्यपर्यवसानैर्व्याप्तमाकाशं, तच्चक्रवालविष्कम्भतोऽव- सेयम् । उक्तं च –

मू. (२५४) सूरमंडलस्स णं भंते ! सूरमंडलस्स य केवइयं अबाहाए अंतरे पन्नत्ते ?, गोअमा ! दो जोअणाइं अबाहाए अंतरे पन्नत्ते ३ ।

वृ. अथ मण्डलान्तरद्वारम्–'सूरमंडल इत्यादि, भगवन् ! सूर्यमण्डलस्य सूर्यमण्डलस्य च कियदबाधया–अव्यवधानेनान्तरं प्रज्ञप्तम् ?, कोऽर्थः ?–पूर्वस्मादपरं मण्डलं कियद्दूरं इत्यर्थः, अत्र यथा योजनद्वयमुपपद्यते तथाऽनन्तरमेव मण्डलसङ्ख्याद्वारे दर्शितम् । गतं मण्डलान्तरद्वारं, अथ बिम्बायामविष्कम्भादिद्वारम्–

मू. (२५५) सूरमंडले णं भंते ! केवइअं आयामविक्खंभेणं केवइअं परिक्खेवेणं केवइअं बाहल्लेणं बाहल्लेणं पन्नत्ते ?, गोअमा ! अडयालीसं एगसट्ठिभाए जोअणस्स आयामविक्खंभेणं तं तिगुणं सविसेसं परिक्खेवेणं चउवीसं एगसट्ठिभाए जोअणस्स बाहल्लेणं पन्नत्ते इति ४ ।

वृ. 'सूरमंडले ण'मित्यादि, सूर्यमण्डलं णमिति प्राग्वत् भगवन् ! कियदायामविष्कम्भाभ्यां प्रज्ञप्तं, अयमर्थः–एकयोजनस्यैकषष्टिभागाः कल्प्यन्ते तद्रूपा येऽष्टचत्वारिंशद्भागास्तावत्प्रमाणा- वस्यायामविष्कम्भावित्यर्थः, तत्रिगुणं सविशेषं–साधिकं परिक्षेपेण, अष्टचत्वारिंशत्रिगुणिता

द्वे योजने द्वाविंशतिरेकषष्टिभागा अधिका योजनस्येत्यर्थः, चतुर्विंशतिरेकषष्टिभागान् योजनस्य बाहल्येन, विमानविष्कम्भास्यार्द्धभागेनोच्चत्वात् ।

गतं बिम्बायामविष्कम्भादिद्वारम्, अथ मेरुमण्डलयोरबाधाद्वारं, तत्रादिसूत्रम्—

**मू. (२५६)** *जंबुद्दीवे णं भंते ! दीवे मंदरस्स पव्वयस्स केवइआए अबाहाए सव्वब्भंतरे सूरमंडले पन्नत्ते ? गोअमा ! चोआलीसं जोअणसहस्साइं अट्ठ य वीसे जोअणसए अबाहाए सव्वब्भंतरे सूरमंडले पन्नत्ते, जंबुद्दीवे णं भंते ! दीवे मंदरस्स पव्वयस्स केवइअबाहाए सव्वब्भंतराणंतरे सूरमंडले पन्नत्ते ?, गो० ! चोआलीसं जोअणसहस्साइं अट्ठ य बावीसे जोअणसए अडयालीसं च एगसट्ठिभागे जोअणस्स अबाहाए अब्भंतराणंतरे सूरमंडले पं० ।*

*जंबुद्दीवे णं भंते ! दीवे मंदरस्स पव्वयस्स केवइआए अबाहाए अब्भंतरतच्चे सूरमंडले पन्नत्ते, ? गो० ! चोआलिसं जोअणसहस्साइं अट्ठ य पणवीसे जोअणसए पणतीसं च एगसट्ठिभागे जोअणस्स अबाहाए अब्भंतरतच्चे सूरमंडले पन्नत्ते इति, एवं खलु एतेणं उवाएणं निक्खममाणे सूरिए तयनंतराओ मंडलाओ तयनंतरं मंडलं संकममाणे २ दो दो जोअणाइं अडयालीसं च एगसट्ठिभाए जोअणस्स एगमेगे मंडले आबाहावुड्ढिं अभिवद्धेमाणे २ सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइत्ति । जंबु० दीवे मंदरस्स पव्वयस्स केवइआए अबाहाए सव्वबाहिरे सूरमंडले पं० गो० ! पणयालीसं जोअणसहस्साइं तिन्नि अ तीसे जोअणसए अबाहाए सव्वबाहिरे सूरमंडले पं० ।*

*जंबूद्दीवे णं भंते ! दीवे मंदरस्स पव्वयस्स केवइआए अबाहाए सव्वबाहिराणंतरं सूरमंडले प० गो० पणयालीसं जोअणसहस्साइं तिन्नि अ सत्तावीसे जोअणसए तेरस य एगसट्ठिभाए जोअणस्स अबाहाए बाहिराणंतरे सूरमंडले प० । जंबु० मंदरस्स पव्वयस्स केवइयाए अबाहाए बाहिरतच्चे सूरमंडले प० गो० ! पणयालीसं जोअणसहस्साइं तिन्नि अ चउवीसे जोअणसए छव्वीसं च एगसट्ठिभाए जोअणस्स अबाहाए बाहिरतच्चे सूरमंडले पन्नत्ते ।*

*एवं खलु एएणं उवाएणं पविसमाणे सूरिए तयानंतराओ मंडलाओ तयानंतरं मंडलं संकममाणे संकममाणे दो दो जोअणाइं अडयालीसं च एगसट्ठिभाए जोयणस्स एगमेगे मंडले अबाहावुड्ढिं निवुड्ढेमाणे २ सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ ५ ।*

**वृ.** 'जंबुद्दीवे ण'मित्यादि, जंबूद्वीपे द्वीपे भगवन् ! मंदरस्य पर्वतस्य कियत्या अबाधया सर्वाभ्यन्तरं सूर्यमण्डलं प्रज्ञप्तम् ?, गौतम ! चतुश्चत्वारिंशद्योजनसहस्राणि अष्ट च विंशत्यधिकानि योजनशतानि अबाधया सर्वाभ्यन्तरं सूर्यमण्डलं प्रज्ञप्तम्, अत्रोपपत्ति—मंदरात् जंबूद्वीपविष्कम्भः पञ्चचत्वारिंशद्योजनसहस्राणि, इदं हि मण्डलं जगतीतो द्वीपदिशि अशीत्यधिकयोजनशतोपसंक्रमे भवति, तेन ४५००० योजनरूपाद् द्वीपविष्कम्भादियति १८० योजनरूपे शोधिते जातं यथोक्तं मानं, एतच्च चक्रवालविष्कम्भेन भवति तेनापरसूर्यसर्वाभ्यन्तरमण्डलस्याप्यनेनैव करणेनैतावत्येवाबाधा बोद्धव्या, एतेन यदन्यत्र क्षेत्रसमासटीकादौ मेरुमवधीकृत्य सामान्यतो मण्डलक्षेत्राबाधापरिमाणद्वारं पृथक् प्ररूपितं तदनेनैव गतार्थं, अस्यैवाभ्यन्तरतो मण्डलक्षेत्रस्य सीमाकारित्वात्, अथ प्रतिमण्डलं सूर्यस्य दूरदूरगमनादबाधापरिमाणमनियतमित्याह—जंबूद्वीपे भदन्त ! द्वीपे मंदरस्य पर्वतस्य कियत्या अबाधया सर्वाभ्यन्तरादनन्तरं—निरन्तरया जायमानत्वात् द्वितीयं सूर्यमण्डलं प्रज्ञप्तम् ?, गौ० चतुश्चत्वारिंशद्योजनसहस्राणि अष्ट योजनशतानि द्वाविंशत्यधिकानि

अष्टचत्वारिंशतं चैकषष्टिभागान् योजनस्याबाधया सर्वाभ्यन्तरानन्तरं सूर्यमण्डलं प्रज्ञप्तं, पूर्वस्माधदत्राधिकं तद्बिम्बविष्कम्भादन्त- रमानाच्च समाधेयं, अथ तृतीयमण्डलं

'जंबुद्दीवे ण'मित्यादि व्यक्तं, नवरं 'अब्भंतरं तच्च'मिति अभ्यन्तरतृतीयं, अनेन बाह्यतृतीय-मण्डलस्य व्यवच्छेदः, उत्तरसूत्रे चतुश्चत्वारिंशद्योजनसहस्राणि अष्ट शतानि पञ्चविंशत्यधिकानि पञ्चत्रिंशतं चैकषष्टिभागान् योजनस्याबाधया अभ्यन्तरतृतीयं सूर्यमण्डलं प्रज्ञप्तम्, उपपत्तिस्तु द्वितीयमण्डलाबाधापरिमाणे ४४८२२ योजन $^{४९}/_{६१}$ इत्येवंरूपे प्रस्तुतमण्डलसत्के सान्तरबिम्बविष्कम्भे प्रक्षिप्ते जातं यथोक्तं मानम्, एवं प्रतिण्डलमबाधावृद्धावानीयमानायां मा भूद् ग्रन्थगौरवं तेन तज्जिज्ञासूनां बोधकमतिदेशमाह– एवमुक्तरीत्या मण्डलत्रयदर्शितयेत्यर्थः एतेनोपायेन–प्रत्यहोरात्रमेकैक- मण्डलमोचनरूपेण निष्क्रामन्–लवणाभिमुखं मण्डलानि कुर्वन् सूर्यस्तदनन्तरात्–विवक्षितात् पूर्वस्मात् मण्डलात् तदनन्तरं–विवक्षितुत्तरमण्डलं संक्रमन् २ द्वे द्वे योजने अष्टचत्वारिंशतं चैकषष्टिभागान् योजनस्य एकैकस्मिन् मण्डले अबाधाया वृद्धिमभिवर्द्धयन् २ सर्वबाह्यमण्डलमुपक्रम्य चारं चरति, पश्चात्रातिदेशरुथिरपि सूत्रकृन्मण्ड-लत्रयाभिव्यक्तिमदर्शयत् तत्प्रथमं ध्रुवाङ्कदर्शनार्थं द्वितीयं मण्डलाभिवृद्धिदर्शनार्थं तृतीयं पुनस्तदभ्यासार्थमिति। अथ पश्चानुपूर्व्यापि व्याख्यानाङ्गमित्यन्त्यमण्डलादारभ्य मेरुमण्डलयोरबाधां पृच्छन्नाह–

'जंबुद्दीवे'त्ति जंबूद्वीपे भदन्त! द्वीपे मंदरस्य पर्वतस्यकियत्या अबाधया सर्वबाह्यं सूर्यमण्डलं प्रज्ञप्तम्?, गौतम! पञ्चचत्वारिंशद्योजनसहस्राणि त्रीणि च योजनशतानि त्रिंशदधिकानि अबाधया सर्वबाह्यं सूर्यमण्डलं प्रज्ञप्तं, तत्र मंदरात् पञ्चचत्वारिंशद्योजनसहस्राणि जगती ततो लवणे त्रीणि शतानि त्रिंशदधिकानि, द्वितीयमण्डल० जंबुद्दीवे'त्ति प्रश्नसूत्रे बाह्यानन्तरं–पश्चानुपूर्व्या द्वितीयमित्यर्थः, उत्तरसूत्रे पञ्चचत्वारिंशद्योजनसहस्राणि तथैव जगती ततस्त्रिशदधिकत्रिशत-योजनातिक्रमे यत्सूरमण्डलमुक्तं तस्मान्तरमाने बिम्बविष्कम्भमाने च शोधिते जातं यथोक्तं मानमिति, अथ तृतीयं– 'जंबुद्दीवे'त्ति व्यक्तं, नवरं उत्तरसूत्रे पञ्चचत्वारिंशद्योजनसहस्राणि त्रीणि च शतानि चतुर्विंशत्यधिकानि षड्विंशतिं च एकषष्टिभागान् योजनस्येति, अत्र पूर्वमण्ड-लाङ्कात् सान्तरमण्डलविष्कम्भयोजने, शोधिते जातं यथोक्तं मानं, पूर्वमण्डलाङ्को ध्रुवाङ्कस्तत्र सबिम्बविष्कम्भोऽन्तरविष्कम्भः शोध्यस्तत उपपद्यते यथोक्तं मानं, उक्तावशिष्टेषु मण्ड-लेष्वतिदेशमाह–

'एवं खलु' इत्यादि, एवमुक्तरीत्या मण्डलत्रयदर्शितयेत्यर्थः, एतेनोपायेन प्रत्यहोरात्र-मेकैकमण्डलमोचनरूपेण प्रविशन् जंबूद्वीपमिति गम्यं, सूर्यस्तदनन्तरान्मण्डलात्तदनन्तरं मण्डलं संक्रमन् २ द्वे द्वे योजने अष्टचत्वारिंशतं चैकषष्टिभागान् योजनस् एकैकस्मिन् मण्डले अबाधावृद्धिं निवर्द्धयन् २ इदं समवायाङ्गवृत्त्यनुसारेणोक्तं यथा वृद्धेरभावो निवृद्धि निशब्दस्याभावार्थत्वात् निवरा कन्येत्यादिवत् तां कुर्वन्, निवृद्धयन् २ इदं स्थानाङ्गवृत्त्यनुसारिण, सूर्यप्रज्ञप्तिवृत्यादौ तु निवेष्टयन् २ इत्युक्तमस्ति, अत्र सर्वत्रापि हापयन् २ इत्यर्थः, सर्वाभ्यन्तरमण्डलमुपसंक्रम्य चारं चरतीति, गतमबाधाद्वारम्। अथ मण्डलायामदिवृद्धिहानिद्वारम्–

*मू. (२५७) जंबुद्दीवे दीवे सव्वब्भंतरे णं भंते! सूरमंडले केवइअं आयामविक्खंभेणं*

*केवइअं परिक्खेवेणं पन्नत्ते ?, गो० नवनउइं जोअणसहस्साइं छच्च पणाले जोअणसए आयामविक्खंभेणं तिन्नि य जोअणसयसहस्साइं पन्नरस य जोअणसहस्साइं एगूणनउइं च जोअणाइं किंचिविसेसाहिआइं परिक्खेवेणं। अब्भंतराणंतरे णं भंते! सूरमंडले केवइअं आयामविक्खंभेणं केवइअं परिक्खेवेणं पन्नत्ते गोअमा ? नवनउइं जोअणसहस्साइं छच्च पणयाले जोअणसए पणतीसं च एगसट्ठिभाए जोअणस्स आयामविक्खंभेणं तिन्नि जोअणसयसहस्साइं पन्नरस य जोअण सहस्साइं एगं सत्तुत्तरं जोअणसयं परिक्खेवेणं प० ।*

*अब्भंतरतच्चे णं भंते! सूरमंडले केवइअं आयामविक्खंभेणं केवइअं परिक्खेवेणं प० ?, गो० ! नवनउइं जोअणसहस्साइं छच्च एकावन्ने जोअणसए नव य एगसट्ठिभाए जोअणस्स आयामविक्खंभेणं तिन्नि अ जोअणसयसहस्साइं पन्नरस जोअणसहस्साइं एगं च पणवीसं जोअणसयं परिक्खेवेणं, एवं खलु एतेणं उवाएणं निक्खममाणे सूरिए तयाणंतराओ मंडलाओ तयानंतरं मंडलं उवसंकममाणे २ पंच २ जोअणाइं पणतीसं च एगसट्ठिभाए जोअणस्स एगमेगे मंडले विक्खंभवुड्ढिं अभिवड्ढेमाणे २ अट्ठारस २ जोअणाइं परिरयवुड्ढिं अभिवड्ढेमाणे २ सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ । सव्वबाहिरए णं भंते ! सूरमंडले केवइअं आयामविक्खंभेणं केव० परिक्खेवेणं प० गो ! एगं जोयणसयसहस्सं छच्च सट्ठे जोअणसए आयामविक्खंभेणं तिन्नि अ जोअणसयसहस्साइं अट्ठारस य सहस्साइं तिन्नि अ पन्नरसुत्तरे जोअणसए परिक्खेवेणं, बाहिराणंतरे णं भंते! सूर० केव० आ० वि० परि० प० गो० एगं जोअणसयसहस्सं छच्च चउपन्ने जोअणसए छव्वीसं च एगसट्ठिभागे जोअणस्स आयामविक्खंभेणं तिन्नि अ जोअणसयसहस्साइं अट्ठारस अ सहस्साइं दोन्नि य सत्ताणउए जोअनसए परिक्खेवेणंति ।*

*बाहिरतच्चे णं भंते! सूरमंडले केवइअं आयामविक्खंभेणं केवइअं परिक्खेवेणं पन्नत्ते ?, गो० ! एगं जोअणसयसहस्सं छच्च अडयाले जोअणसए बावन्न स एगसट्ठिभाए जोअणस्स सायामविक्खंभेणं तिन्नि जोअणसयसहस्साइं अट्ठारस य सहस्साइं दोन्नि अ अउणासीए जोअणसए परिक्खेवेणं। एवं खलु एएणं उवाएणं पविसमाणे सूरिए तयनंतराओ मंडलाओ तयानंतरं मंडपलं संकममाणे २ पंच पंच जोअणाइं पणतीसं च एगसट्ठिभाए जोअणस्स एगमेगे मंडले विक्खंभवुड्ढिं निव्वुड्ढेमाणे २ अट्ठारस २ जोअणाइं परिरयवुड्ढिं निव्वुड्ढेमाणे २ सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ ६ ।*

**वृ.** 'जंबुद्दीवे' इत्यादि, जंबूद्वीपे भदन्त! द्वीपे सर्वाभ्यन्तरं सूर्यमण्डलं कियदायामविष्कम्भाभ्यां कियच्च परिक्षेपेण प्रज्ञप्तं ?, गौतम ! नवनवतिं योजनसहस्राणि षट् च योजनशतानि चत्वारिंशदधिकानि आयामविष्कम्भाभ्यां, त्रीणि योजनशतसहस्राणि पञ्चदश च योजनसहस्राण्येकोननवतिं च योजनानि किञ्चिद्विशेषाधिकानि परिक्षेपेण, तत्रायामविष्कम्भयोरुत्पत्तिरेवं—जंबूद्वीपविष्कम्भादुभयोः पार्श्वयोः प्रत्येकमशीत्यधिकयोजनशतशोधने यथोक्तं मानं, तद्यथा—जंबूद्वीपमानं १००००० अस्मादशीत्यधिकयोजनशते १८० द्विगुणित ३६० शोधिते सति जातं ९९६४० इति, परिक्षेपस्त्वस्यैव राशेः 'विक्खम्भवग्गदहगुणे' त्यादिकरणवशादानेतव्यः, ग्रन्थविस्तरभयान्नात्रोपन्यस्यते, यदिवा यदेकतो जंबूद्वीपविष्कम्भादशीत्यधिकं योजनशतं यच्चापरतो तेषां त्रयाणां शतानां षष्ट्यधिकानां परिरयः एकादश शतान्यष्टत्रिंशदधिकानि एतानि

जंबूद्वीपपरिरयात् शोध्यन्ते, ततो यथोक्तं परिक्षेपमानं भवति, अथ । द्वितीयमण्डले –

'अब्भंतराण'मित्यादि, अन्वययोजना सुगमा, तात्पर्यार्थस्त्वयम्– सर्वाभ्यन्तरानन्तरं च–द्वितीयं सूर्यमण्डलमायामविष्कम्भाभ्यां नवनवतिं योजनसहस्राणि षट् च योजनशतानि पञ्चचत्वारिंशदधिकानि पञ्चत्रिंशतं चैकषष्टिभागान् योजनस्य ९९६४५, $^{35}/_{61}$ तथाहि–एकतोऽपि सर्वाभ्यन्तरानन्तरं मण्डलं सर्वाभ्यन्तरमण्डलगतानष्टचत्वारिंशत्सङ्ख्यानेक- षष्टिभागान् द्वे च योजने अपान्तराले विमुच्य स्थितमपरतोऽपि, ततः पञ्च योजनानि पञ्चत्रिंश- चैकषष्टिभागा योजनस्य पूर्वमण्डलविष्कम्भादस्य मण्डलस्य विष्कम्भे वर्द्धन्ते, अस्य च सर्वाभ्यन्त- रानन्तरमण्डलस्य परिक्षेपस्त्रीणि शतसहस्राणि पञ्चदश सहस्राण्येकं च सप्तोत्तरं योजनानां तथाहि–पूर्वमण्डलादस्य विष्कम्भे पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्य वर्द्धन्ते, पञ्चानां च योजनानां पञ्चत्रिंशत्सङ्ख्यैकभागाधिकानां परिरयः सप्तदश योजनानि अष्टत्रिंशत- चैकषष्टिभागाः समधिकाः योजनस्य परं व्यवहारतो विवक्ष्यन्ते परिपूर्णानि अष्टादश योजनानि, तानि पूर्वमण्डलपरिक्षेपे यदाऽधिकानि प्रक्षिप्यन्ते तदा यथोक्तं द्वितीयमण्डलपरिमाणं स्यात् ।

तृतीयमण्डले-'अब्भंतरतच्चे ण'मित्यादि व्यक्तं, नवरमुत्तरसूत्रे नवनवतिं योजनसहस्राणि षट् च एकपञ्चाशानि योजनशतानि नव चैकषष्टिभागान् योजनस्याभ्यन्तरतृतीयाख्यं मण्डल- मायामविष्कम्भेण, अत्रोपपत्ति–पूर्वमण्डलायामविष्कम्भे ९९६४५ योजन $^{35}/_{61}$ इत्येवंरूपे एतन्मण्डलवृद्धो ५ योजन प्रक्षिप्तायां यथोक्तं मानं भवति, परिक्षेपेण च त्रीणि योजनलक्षाणि पञ्चदश योजनसहस्राणि एकं च पञ्चविंशत्यधिकं योजनशतं, तत्रोपपत्ति–पूर्वमण्डलपरिक्षेप ३१५१०७ योजनरूपे प्रागुक्तयुक्तयाऽऽनीते अष्टादश १८ योजनरूपायां वृद्धौ प्रक्षिप्तायां यथोक्तं मानं भवति, अत्रोक्तातिरिक्तमण्डलायामादिपरिज्ञानाय लाघवार्थमतिदेशमाह–'एवं खलु एतेण' एवमुक्तरीत्या मण्डलत्रयदर्शितयेत्यर्थः, एतेनोक्तप्रकारेण निष्क्रामयन् २ सूर्यस्तदनन्त- रात्तदनन्तरं मण्डलं संक्रमन् २ पञ्च पञ्च योजनानि पञ्चत्रिंशतं चैकषष्टिभागान् योजनस्यैकैकस्मिन् मण्डले विष्कम्भवृद्धिमभिवर्द्धयन् २ तथा उक्तरीत्यैवाष्टादश योनानि परिरयवृद्धिमभिवर्द्धयन् २ सर्वबाह्यमण्डलमुपसंक्रम्य चारं चरति । अथ प्रकारान्तरेण प्रस्तुतविचारपरिज्ञाना पश्चानुपूर्व्या पृच्छन्नाह–'सव्वबाहिरए' इत्यादि प्रश्नसूत्रं व्यक्तं, उत्तरसूत्रे एकं योजनलक्षं षट्षष्ट्यधिकानि योजनशतान्यायामविष्कम्भाभ्यां, उपपत्तिस्तु जंबूद्वीपो लक्षं उभयोः पार्श्वयोश्च प्रत्येकं त्रिंश- द्रधिकानि त्रीणि योजनशतानि लवणान्तरमतिक्रम्य परतो वर्तमानत्वादस्य इदमेव मानं, त्रीणि योजनलक्षाण्यष्टादश च सहस्राणि त्रीणि च पञ्चदशोत्तराणि योजनशतानि 'व्याख्यातो विशेषप्रतिपत्ति'रिति किञ्चिदूनानि परिक्षेपेण भवन्ति, किञ्चिदूनत्वं चात्र परिक्षेपकरणेन स्वयं शोध्यं, संवादश्चात्र विष्कम्भायाममाने लक्षोपरि यानि षट्यधिकानि षट् योजनशतान्युक्तानि तस्य परिरयमानीय तस्य च जंबूद्वीपपरिरये प्रक्षेपणाद् भवति ।

अथ द्वितीयमण्डलं 'बाहिराणंतरे णं भंते ! इत्यादि प्रश्नः प्राग्वत्, उत्तरसूत्रे गौतम ! एकं योजनलक्षं षट् चतुःपञ्चाशानि योजनशतानि षड्विंशतिं चैकषष्टिभागान् योजनस्यायाम- विष्कम्भाभ्यां, संवदति चेदं सर्वबाह्यमण्डलविष्कम्भात् पञ्चत्रिंशदेकषष्टिभागाधिकपञ्चयोजनेषु शोधितेष्विति, त्रीणि योजनलक्षाण्यष्टादश च सहस्राणि द्वे च सप्तनवतियोजनशते परिक्षेपेण,

कथमुपपद्यते चेदिति यदामः, पूर्वमण्डलपरिरयादष्टादशयोजनशोधने सुस्थमिति

अथ तृतीयमण्डले तत्पृच्छा—'बाहिरतच्चे णं'मित्यादि प्रश्नः पूर्ववत्, उत्तरसूत्रे बाह्यतृतीयं एकं योजनलक्षं षट् चाष्टचत्वारिंशानि योजनशतानि द्वापञ्चाशतं चैकषष्टिभागान् योजनस्यायाम-विष्कम्भाभ्यां, युक्तिश्चात्र—अनन्तरपूर्वमण्डलात् पञ्चत्रिंशदेकषष्टिभागाधिकपञ्चयोजनवियोजने साधु भवति, त्रीणि योजनलक्षाण्यष्टादश च सहस्राणि द्वे चैकोनाशीते योजनशते परिक्षेपेण, पूर्वमण्डलपरिधेरष्टादशयोजनशोधने यथोक्तं प्रस्तुतमण्डलस्य परिधिमानं, अत्रातिदेशमाह—

'एवं खलु एएण'मित्यादि, प्राग्वद्वाच्यं, व्याख्यातार्थत्वात् । गतमायामविष्कम्भादि-वृद्धिहानिद्वारम्, अनेनैव क्रमेण द्वयोः सूर्ययोः परस्परमबाधाद्वारमप्यभ्यन्तरबाह्यमण्डलादिव्य-वसेयम् । सम्प्रति मुहूर्तगतिद्वारम्—

*मू. (२५८) जया णं भंते ! सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गो० ! पंच पंच जोअणसहस्साइं दोन्नि अ एगावन्ने जोअणसए एगूणतीसं च सट्ठिभाए जोअणस्स एगमेगेणं मुहुत्तेणं गच्छइ, तया णं इहगयस्स मणूसस्स सीआलीसाए जोअणसहस्सेहिं दोहि अ तेवट्ठेहिं जोअणसएहिं एगवीसाए अ जोअणस्स सट्ठिभाएहिं सूरिए चक्खुप्फासं हव्वमागच्छइत्ति, से निक्खममाणे सूरिए नवं संवच्छरं अयमाणे पढमंसि अहोरत्तंसि सव्वब्भंतराणंतरं मंडलं उवसंकमित्ता चारं चरइत्ति ।*

*जया णं भंते ! सूरिए अब्भंतराणंतरं मंडलं उवसंकमित्ता चारं चरति तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गोअमा ! पंच पंच जोअणसहस्साइं दोन्नि अ एगावन्ने जोअणसए सीआलीसं च सट्ठिभागे जोअणस्स एगमेगेणं मुहुत्तेणं गच्छइ, तया णं इहगयस्स मणुसस्स सीआली-साए जोअणसहस्सेहिं एगूणासीए जोअणसए सत्तावन्नाए अ सट्ठिभाएहिं जोअणस्स सट्ठिभागं च एगसट्ठिधा छेत्ता एगूणवीसाए चुण्णिआभागेहिं सूरिए चक्खुप्फासं हव्वमागच्छइ ।*

*एवं खलु एतेणं उवाएणं निक्खममाणे सूरिए तयानंतराओ मंडलाओ तयानंतरं मंडलं संकममाणे २ अट्ठारस २ सट्ठिभागे जोअणस्स एगमेगे मंडले मुहुत्तगइं अभिवड्ढेमाणे -२ चुलसीइं २ सआइं जोअणाइं पुरिसच्छायं निव्वुड्ढेमाणे २ सव्वबाहिरं मंडलं उवसं० चारं चरइ ।*

*जया णं भंते ! सूरिए सव्वबाहिरमंडलं उवसंकमित्ता चारं चरइ तया णं एगेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गोअमा ! पंच पंच जोअणसहस्साइं तिन्नि अ पंचुत्तरे जोअणसए पन्न-रस य सट्ठिभाए जोअणस्स एगमेगेणं मुहुत्तेणं गच्छइ, तया णं इहगयस्स मणुसस्स एगतीसाए जोअणसहस्सेहिं अट्ठहिं अ एगत्तीसेहिं जोअणसएहिं तीसाए अ सट्ठिभाएहिं जोअणस्स सूरिए चक्खुप्फासं हव्वमागच्छइत्ति, एस णं पढमे छम्मासे, एस णं पढमस्स छम्मासस्स पज्जवसाणे, से सूरिए दोच्चे छम्मासे अयमाणे पढमंसि अहोरत्तंसि बाहिराणंतरं मंडलं उवसंकमित्ता चारं चरइ ।*

*जया णं भंते ! सूरिए बाहिराणंतरं मंडलं उवसंकमित्ता चारं चरइ तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गोअमा ! पंच पंच जोअणसहस्साइं तिन्नि अ चउरुत्तरे जोअणसए सत्तावन्नं च सट्ठिभाए जोअणस्स एगमेगेणं मुहुत्तेणं गच्छइ, तया णं इहगयस्स मणुसस्स एगत्तीसाए जोअणसहस्सेहिं नवहिं अ सोलसुत्तरेहिं जोअणसएहिं इगुणालीसाए अ सट्ठिभाएहिं जोअणस्स सट्ठिभागं च एगसट्ठिधा छेत्ता सट्ठीए चुण्णिआभागेहिं सूरिए चक्खुप्फासं हव्वमागच्छइत्ति, से*

*पविसमाणे सूरिए दोच्चंसि अहोरत्तंसि बाहिरतच्चं मंडलं उवसंकमित्ता चारं चरइ।*

*जया णं भंते! सूरिए बाहिरतच्चं मंडलं उवसंकमित्ता चारं चरइ तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गोअमा! पंच पंच जोअणसहस्साइं तिन्नि अ चउरुत्तरे जोअणसए इगुणालीसं च सट्ठिभाए जोअणस्स एगमेगेणं मुहुत्तेणं गच्छइ, तया णं इहगयस्स मणुयस्स एगाहिएहिं बत्तीसाए जोअणसहस्सेहिं एगूणपन्नाए अ सट्ठिभाएहिं जोअणस्स सट्ठिभागं च एगसट्ठिधा छेत्ता तेवीसाए चुण्णिआभाएहिं सूरिए चक्खुप्फासं हव्वमागच्छइत्ति।*

*एवं खलु एएणं उवाएणं पविसमाणे सूरिए तयानंतराओ मंडलाओ तयानंतरं मंडलं संकममाणे २ अट्ठारस २ सट्ठिभाए जोअणस्स एगमेगे मंडले मुहुत्तगइं निवड्ढेमाणे २ सातिरेगाइं पंचासीतिं २ जोअणाइं पुरिसच्छायं अभिवड्ढेमाणे २ सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ, एस णं दोच्चे छम्मासे, एस णं दोच्चस्स छम्मासस्स पज्जवसाणे, एस णं आइच्चे संवच्छरे, एस णं आइच्चस्स संवच्छरस्स पज्जवसाणे पन्नत्ते।*

**वृ.** 'जया णं भंते! सूरिए सव्वब्भंतरं' इत्यादि, यदा भगवन्! सूर्य सर्वाभ्यन्तरं मण्डलमुपसंक्रम्य चारं चरति इति तदा एकैकेन मुहूर्त्तेन कियत् क्षेत्रं गच्छति ?, गौतम! पञ्च पञ्च योजनसहस्राणि द्वे चैकपञ्चाशे योजनशते एकोनत्रिंशतं च षष्टिभागान् योजनस्यैकैकेन मुहूर्त्तेन गच्छति, कथमिदमुपपद्यते चेत्, उच्यते, इह सर्वमपि मण्डलमेकेनाहोरात्रेण द्वाभ्यां सूर्याभ्यां परिसमाप्यते, प्रतिसूर्यं चाहोरात्रगणने परमार्थतो द्वावहोरात्रौ भवतः, द्वयोश्चाहोरात्रयोः षष्टिर्मुहूर्त्तास्ततो मण्डलपरिरयस्य षष्ट्या भागे हृते यल्लभ्यते तन्मुहूर्त्तगतिप्रमाणं, तथाहि—सर्वाभ्यन्तरमण्डलपरिरयस्त्रीणि लक्षाणि पञ्चदश सहस्राण्येकोननवत्यधिकानि योजनानां एतेषां षष्ट्या भागे हृते लब्धं यथोक्तं मुहूर्त्तगतिप्रमाणं ५२५१, $^{२९}/_{६०}$ अथ विनयावर्ज्जितमनस्केन प्रज्ञापकेनापृच्छतोऽपि विनेयस्य किञ्चिदधिकं प्रज्ञापनीयमित्याह, यत्तदोर्नित्याभिसम्बन्धादनुक्तमपि यच्छब्दगर्भितवाक्यमत्रावतारणीयं तेन यदा सूर्य एकेन मुहूर्त्तेन इयत् ५२५१ $^{२९}/_{६०}$ प्रमाणं गच्छति तदा सर्वाभ्यन्तरमण्डलसङ्क्रमणकाले इहगतस्य मनुष्यस्य अत्र तावेकवचनं ततोऽयमर्थइहगतानां भरतक्षेत्रगतानां मनुष्याणां सप्तचत्वारिंशता योजनसहस्रैर्द्वाभ्यां च त्रिषष्ट्या त्रिषष्ट्यधिकाभ्यां योजनशताभ्यामेकविंशत्या च योजनस्य षष्टिभागैरुदयमानः सूर्यश्चक्षुस्पर्शं—चक्षुर्विषयं हव्वं—शीघ्रमागच्छति, अत्र च स्पर्शशब्दो नेन्द्रियार्थसन्निकर्षपरश्चक्षुषोऽप्राप्यकारित्वेन तदसंभवादिति, काऽत्रोपपत्तिरिति चेत्, उच्यते, इह दिवसस्यार्द्धेन यावन्मात्रं क्षेत्रं व्याप्यते तावति व्यवस्थितः सूर्य उपलभ्यते, स एव लोके उदयमान इति व्यवह्रियते।

सर्वाभ्यन्तरमण्डले दिवसप्रमाणमष्टादश मुहूर्त्तास्तेषामर्द्धं नव मुहूर्त्ताः एकैकस्मिंश्च मुहूर्त्ते सर्वाभ्यन्तरे मण्डले चारं चरन् पञ्च योजनसहस्राणि द्वे च योजनशते एकपञ्चाशदधिके एकोनत्रिंशतं च षष्टिभागान् योजनस्य गच्छति, एतावन्मुहूर्त्तगतिपरिमाणं नवभिर्मुहूर्त्तैर्गुण्यते ततो भवति यथोक्तं दृष्टिपथप्राप्तताविषयपरिमाणमिति, एवं सर्वेष्वपि मण्डलेषु स्वस्वमुहूर्त्तगती स्वस्वदिवसार्द्धगतमुहूर्त्तराशिना गुणितायां दृष्टिपथप्राप्तता भवति, दृष्टिपथप्राप्तता चक्षुस्पर्श पुरुषच्छाया इत्येकार्थाः, सा च पूर्वतोऽपरतश्च समप्रमाणैव भवतीति द्विगुणिता तापक्षेत्रमुदयास्तान्तरमित्यादिपर्यायाः, इदं च सर्वबाह्यानन्तरमण्डलात् पश्चानुपूर्व्या गण्यमानं त्र्यशीत्यधिकशततमं, प्रतिमण्डलं

चाहोरात्रगणनादहोरात्रोऽपि त्र्यशीत्यधिकशततमस्तेनायमुत्तरायणस्य चरमो दिवसोऽयमेव च सूर्यसंवत्सरस्य पर्यन्तदिवस उत्तरायमपर्यवसानकत्वात् संवत्सरस्येति।

अथ नवसंवत्सरप्रारम्भप्रकारप्रज्ञापनाय सूत्रं प्रारभ्यते–'से निक्खममाणे' इत्यादि अथाभ्यन्तरान्मण्डलान्निष्क्रामन् जंबूद्वीपान्तः प्रवेशेऽशीत्यधिकयोजनशतप्रमामे क्षेत्रे चरमाकाशप्रदेशस्पर्शनानन्तरं द्वितीयसमये द्वितीयमण्डलाभिमुखं प्रसर्पन्नित्यर्थः, सूर्यो नवं–आगामिकालभाविनं संवत्सरमयमानः २–आददानः प्रथमेऽहोरात्रे सर्वाभ्यन्तरानन्तरं मण्डलमुपसंक्रम्य चारं चरति, एष चाहोरात्रो दक्षिणायनस्याद्यः संवत्सरस्यापि च दक्षिणायनादिकत्वात् संवत्सरस्य, अत्र चाधिकारे समवायाङ्गसूर्यप्रज्ञप्तिचन्द्रप्रज्ञप्तिसूत्रादर्शे प्रस्तुतसूत्रादर्शेषु च अयमाणे २ इत्यस्य स्थाने अयमीणे इति पाठो दृश्यते तेन यदि स समूलस्तदा आर्षत्वादिहेतुना साधुरेव, अयमाणे इति तु लक्षणसिद्धः, अर्थस्तूभयत्रापि स एवेति, अथात्र गतिप्रश्नाय सूत्रम्–

'जया ण' मित्यादि, यदा भगवन्! सर्वाभ्यन्तरानन्तरं द्वितीयं दक्षिणायनापेक्षया आद्यं मण्डलमुपसंक्रम्य चारं चरति तदा एकैकेन मुहूर्त्तेन कियत्क्षेत्रं गच्छति?, गौतम! पञ्च पञ्च योजनसहस्राणि द्वे चैकपञ्चाशे योजनशते सप्तचत्वारिंशतं च षष्टिभागान् योजनस्यैकैकेन मुहूर्त्तेन गच्छति, कथमिति चेत्, उच्यते अस्मिंश्च मण्डले परिरयपरिमाणं त्रीणि योजनलक्षाणि पञ्चदश सहस्राणि शतमेकं सप्तोत्तरं व्यवहारतः परिपूर्णं निश्चयमतेन तु किञ्चिदूनं ३१५१०७, ततोऽस्य प्रागुक्तयुक्तिवशात् षष्ट्या भागे लब्धं यथोक्तमत्र मण्डले मुहूर्त्तगतिप्रमाणं ५२५१, $^{४७}/_{६०}$ अथवा पूर्वमण्डलपरिरयपरिमाणादस्य परिरयपरिमाणे व्यवहारतः पूर्णान्यष्टादशयोजनानि वर्द्धन्ते निश्चयमतेन तु किञ्चिदूनानि, अष्टादशानां योजनानां षष्ट्या भागे लब्धा अष्टादश षष्टिभागा योजनस्य ते प्राक्तनमण्डलगतमुहूर्त्तगतिपरिमाणेऽधिकत्वेन प्रक्षिप्यन्ते, ततो भवति यथोक्तं तत्र मण्डले मुहूर्त्तगतिप्रमाणमिति, अत्रापि दृष्टिपथप्राप्ततविषयं परिमाणमाह–

यदा अभ्यन्तरद्वितीये मण्डले सूर्यश्चरति तदा इहगतस्य मनुष्यस्य–जातावेकवचनमित्यत्र गतानां मनुष्याणां सप्तचत्वारिंशता योजनसहस्रैकोनाशीत्यधिकेन योजनशतेन, सूत्रे तृतीयार्थे सप्तमी प्राकृतत्वात्, सप्पञ्चाशता च षष्टिभागैर्योजनस्य षष्टिभागं च एकषष्टिधा छित्त्वा–एकषष्टिखण्डान् कृत्वा एकषष्टिधा गुणयित्वेत्यर्थः, तस्य सत्कैरेकोनविंशत्या चूर्णिकाभागैः– भागभागैः सूर्यश्चक्षुस्पर्शमागच्छति, तथाहि–सर्वाभ्यन्तरानन्तरे द्वितीये मण्डले दिवसप्रमाणं द्वाभ्यामेकषष्टिभागाभ्यां हीना अष्टादश मुहूर्त्तास्तेषामर्द्धे नव मुहूर्त्ता एकेनैकषष्टिभागेन हीनास्ततः सामस्त्येनैकषष्टिभागकरणार्थं नवापि मुहूर्त्ता एकषष्ट्या गुण्यन्ते, तेभ्य एकषष्टिभागोऽपनीयते, ततः शेष जाता एकषष्टिभागाः पञ्च शतान्यष्टचत्वारिंशदधिकानि, प्रस्तुतमण्डले मुहूर्त्तगति ५२५१ योजन $^{४७}/_{६०}$ अयं च राशिः षष्टिच्छेद इति योजनराशिं षष्ट्या गुणयित्वा सवर्ण्यते जातं ३१५१०७, अयमेव राशि करणविभावनायां मलयगिरीयक्षेत्रसमासवृत्तौ च परिधिराशिरिति कृत्वा दर्शितो लाघवात् भाज्यराशिलब्धस्य भाजकराशिना गुणने मूलराशेरेव लाभात्, एष राशि पञ्चभि शतैरष्टाचत्वारिंशदधिकैर्गुण्यते जाताः सप्तदश कोट्यः षड्विंशतिर्लक्षाः अष्टसप्तति सहस्राणि षट् शतानि षट्त्रिंशदधिकानि १७२६७८६३६, अयं च राशिर्भागभागात्मकत्वान्न योजनानि प्रयच्छतीति एकषष्टेः षष्ट्या गुणिताया यावान् राशिर्भवति तेन भागो ह्रियते, इयं च गणितप्रक्रिया

लाघवार्थिका, अन्यथाऽस्य राशेरेकषष्ट्या भागे हृते षष्टिभागा लभ्यन्ते तेषां च षष्ट्या भागे हृते आगतं सप्तचत्वारिंशत्सहस्राणि शतमेकमेकोनाशीत्यधिकं योजनानां ४७१७९, शेषं ३४९६, छेदराशेः षष्ट्याऽपवर्त्तना क्रियते जाता एकषष्टिः तया शेषराशेर्भागो ह्रियते लब्धाः सप्तपञ्चाशत् षष्टिभागाः, एकोनविंशतिश्चैकस्य षष्टिभागस्य सत्काः एकषष्टिभागाः। अथाभ्यन्तरतृतीयमण्डलस्य चारं पिपृच्छिषुराद्यसूत्रं सूत्रयति–

'से निक्खममाणे सूरिए दोच्चंसि' इत्यादि, अथ निष्कामन् सूर्यो द्वितीयेऽहोरात्रे प्रस्तुतायनापेक्षया द्वितीयमण्डल इत्यर्थः अभ्यन्तरं तृतीयमण्डलमुपसंक्रम्य चारं चरति तदा एकैकेन मुहूर्त्तेन कियत् क्षेत्रं गच्छति ?, भगवानाह–गौतम ! पञ्च पञ्च योजनसहस्राणि द्वे च द्विपञ्चाशद्योजनशते पञ्चदश षष्टिभागान् योजनस्यैकैकेन मुहूर्त्तेन गच्छति, इदं च प्रस्तुतमण्डलपरिरयस्य षष्ट्या भजने संवादमादत्ते, तदा च इह गतस्य मनुष्यस्य सप्तचत्वारिंशता योजनसहस्रैः षन्नवत्या च योजनैस्त्रयस्त्रिंशता च षष्टिभागैर्योजनस्य षष्टिभागं चैकं एकषष्टिधा छित्वा द्वाभ्यां चूर्णिकाभागाभ्यां सूर्यश्चक्षुस्पर्शं हव्वं–शीघ्रमागच्छति, तथाहि–

अत्र मण्डले दिनप्रमाणमष्टादश मुहूर्त्ताश्चतुर्भिरेकषष्टिभागैर्हीनास्तेषामर्द्धं च नव द्वाभ्यामेकषष्टिभागाभ्यां हीनास्ततः सामस्त्येनैकषष्टिभागकरणार्थं नवापि मुहूर्त्ता एकषष्ट्या गुण्यन्ते तेभ्यश्च द्वावेकषष्टिभागावपनीयेते शेषाः पञ्च शतानि सप्तचत्वारिंशदधिकानि ५४७, प्रस्तुतमण्डले मुहूर्त्तगतिः ५२५२ $^{15}/_{60}$ इत्येवंरूपां योजनराशिं षष्ट्या गुणयित्वा सवर्ण्यते जातं ३१५१२५, अयमेव राशिरन्यैः परिधिराशित्वेन निरूपितः, अस्य च सप्तचत्वारिंशदधिकपञ्चशतैर्गुणने जाताः सप्तदश कोट्यस्त्रयोविंशतिः शतसहस्राणि त्रिसप्तति सहस्राणि त्रीणि शतानि पञ्चसप्तत्यधिकानि १७२३७३३७५, एतेषां षष्टिगुणितया एकषष्ट्या ३६६० भागे हृते आगतानि सप्तचत्वारिंशत् सहस्राणि षन्नवत्यधिकानि ४७०९६, शेषं विंशतिशतानि पञ्चदशोत्तराणि २०१५, छेदराशेः षष्ट्याऽपवर्त्तनायां जाता एकषष्टिः तया शेषराशेर्भजने लब्धास्त्रयस्त्रिंशत् षष्टिभागाः शेषौ च द्वावेकस्य षष्टिभागस्य सत्कावेकषष्टिभागौ इति। सम्प्रति चतुर्थमण्डलादिष्वतिदेशमाह–

'एवं खलु एतेणं उवाएणं' मित्यादि, एवं मण्डलत्रयदर्शितरीत्या खलु–निश्चितमेतेनान्तरोदितेनोपायेन शनैः शनैस्तत्तद्बहिर्मण्डलाभिमुखगमनरूपेण निष्कामन् सूर्यस्तदनन्तरान्मण्डलात्तदनन्तरं मण्डलं प्रागुक्तप्रकारेण संक्रामन् २ एकैकस्मिन् मण्डले मुहूर्त्तगतिमित्यत्र प्राकृतत्वात् सप्तम्यर्थे द्वितीया तेन मुहूर्त्तगतौ अष्टादश २ षष्टिभागान् योजनस्य व्यवहारतः परिपूर्णान् निश्चियतः किञ्चिदूनान् अभिवर्द्धयमानः चतुरशीतिं २ योजनानि शीतानि–किञ्चिन्यूनानि पुरिसच्छायमिति–पुरुषस्य छाया यतो भवति सा पुरुषच्छाया सा चेह प्रस्तावात् प्रथमतः सूर्यस्योदयमानस्य दृष्टिपथप्राप्तता, अत्रापि सप्तम्यर्थे द्वितीया, ततोऽयमर्थः–तस्या निवर्द्धयन् २–हापयन् २, कोऽर्थः ?–पूर्वं २ मण्डलसत्कपुरुषच्छायातो बाह्यबाह्यमण्डलपुरुषच्छाया किञ्चिन्यूनैश्चतुरशीत्या योजनैर्हीना इत्यर्थः, सर्वबाह्यमण्डलमुपसंक्रम्य चारं चरति, यच्चात्रोक्तं ८४ योजनानि किञ्चिन्यूनानि उत्तरोत्तरमण्डलसत्कपुरुषच्छायायां हीयन्ते इति तत्स्थूलत उक्तं, परमार्थतः पुनरिदं द्रष्टव्यं–त्र्यशीतिर्योजनानि त्रयोविंशतिश्च षष्टिभागा योजनस्य एकस्य षष्टिभागस्य एकषष्टिधाच्छिन्नस्य सत्का द्विचत्वारिंशद् भागाश्चेति दृष्टिपथप्राप्ततादिविषये हानौ ध्रुवं, ततः

सर्वाभ्यन्तरान्मण्डलात् तृतीयं यन्मण्डलं तत आरभ्य यस्मिन् मण्डले दृष्टिपथप्राप्तता ज्ञातुमिष्यते तत्तन्मण्डलसङ्ख्यया षट्त्रिंशत् गुण्यते, तद्यथा–

सर्वाभ्यन्तरान्मण्डलात्तृतीये मण्डले एकेन चतुर्थे द्वाभ्यां पञ्चमे त्रिभिर्यावत् सर्वबाह्यमण्डले द्व्यशीत्याधिकशतेन गुणयित्वा ध्रुवराशिमध्ये प्रक्षिप्यते, प्रक्षिप्ते सति यद्भवति तेन हीना पूर्वमण्डलसत्कदृष्टिपथप्राप्तता तस्मिन् विवक्षिते मण्डले दृष्टिपथप्राप्तता ज्ञातव्या, अथ त्र्यशीतियोजनादिकस्य ध्रुवराशेः कथमुपपत्ति ?, उच्यते, सर्वाभ्यन्तरमण्डले दृष्टिपथप्राप्ततापरिमाणे सप्तचत्वारिंशत्सहस्राणि द्वे शते त्रिषष्ट्यधिके योजनानामेकविंशतिश्च षष्टिभागा योजनस्य एतच्च नवमुहूर्त्तगम्यं तत एकस्मिन् मुहूर्त्तैकषष्टिभागे किमागच्छतीति चिन्तायां नव मुहूर्ता एकषष्ट्यां गुण्यन्ते जातानि पञ्च शतान्येकोनपञ्चाशदधिकानि तैर्भागे हृते लब्धानि षडशीतिर्योजनानि पञ्च षष्टिभागा योजनस्य एकस्य च षष्टिभागस्यैकषष्टिधाच्छिन्नस्य चतुर्विंशतिर्भागाः इदं च सर्वाभ्यन्तरे मण्डले एकस्य मुहूर्त्तैकषष्टिभागस्य गम्यं, द्वितीयमण्डलपरिरयवृद्धयङ्कभजनाद्यल्लभ्यते मुहूर्त्तैकषष्टिभागेन तच्छोधनार्थमुपक्रम्यते, पूर्वपूर्वमण्डलादनन्तरानन्तरे मण्डले परिरयपरिमाण-चिन्त्यामष्टादशाष्टादश योजनानि व्यवहारतः परिपूर्णानि वर्धन्ते, ततः पूर्वपूर्वमण्डलगतमुहूर्त्त-गतिपरिमाणादनन्तरानन्तरेमण्डले मुहूर्त्तगतिपरिमाणचिन्तायां प्रतिमुहूर्त्तमष्टादश २ षष्टिभागा योजनस्य वर्द्धन्ते, प्रतिमुहूर्त्तैकषष्टिभागं चाष्टादशैकस्य षष्टिभागस्य सत्का एकषष्टिभागाः ।

सर्वाभ्यन्तरानन्तरे च द्वितीयमण्डले नवमुहूर्त्तैरेकेन मुहूर्त्तैकषष्टिभागेनोनैर्यावत् क्षेत्रं व्याप्यते तावति स्थितः सूर्यो दृष्टिपथप्राप्तो भवति ततो नव मुहूर्ता एकषष्ट्या गुण्यन्ते जातान्यष्टनवतिशतानि चतुःषष्ट्यधिकानि, तेषां षष्टिभागानयनार्थमेकषष्ट्या भागो ह्रियते लब्धमेकषष्ट्यधिकं शतं षष्टिभागानां त्रिचत्वारिंशत् षष्टिभागस्य सत्का एकषष्टिभागाः, तत्र विंशत्यधिकेन षष्टिभागशतेन लब्धे द्वे योजने अवशेषा एकचत्वारिंशत् षष्टिभागाः एकस्य च षष्टिभागस्य सत्कास्त्रिचत्वा-रिंशदेकषष्टिभागाः, एतच्च द्वे योजने एकचत्वारिंशत्षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्कास्त्रिचत्वारिंशदेकषष्टिभागा इत्येवंरूपं प्रागुक्तात् षडशीतियोजनानि पञ्च षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्काश्चतुर्विंशतिरेकषष्टिभागा इत्येतस्माच्छोध्यन्ते, शोधिते च तस्मिन् स्थितानि त्र्यशीतिर्योजनानि त्रयोविंशति षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्का द्विचत्वारिंश-देकषष्टिभागाः एतावच्च सर्वाभ्यन्तरमण्डलगतदृष्टिपथप्राप्ततापरिमाणाद् द्वितीय- मण्डलगतदृ-पथप्राप्ततापरिमाणे हीनं स्यात्, एतच्चोत्तरोत्तरमण्डलदृष्टिपथप्राप्तता चिन्तायां हानौ ध्रुवं अत एव ध्रुवराशिरित्युच्यते ।

ततो द्वितीयस्मान्मण्डलादनन्तरे तृतीये मण्डले एष एव ध्रुवराशिरेकस्य षष्टिभागस्य सत्कैः षट्त्रिंशता भागभागैः सहितो यावान् राशि स्यात्, तथाहि–त्र्यशीतिर्योजनानि चतुर्विंशति षष्टिभागा योजनस्य सप्तदश च षष्टिभागस् सत्का एकषष्टिभागा इति तावान् द्वितीयमण्डलगताद् दृष्टिपथप्राप्त-तापरिमाणाच्छोध्यते, ततो भवति यथोक्तमत्र मण्डले दृष्टिपथप्राप्ततापरिमाणं ।

चतुर्थमण्डलं स एव ध्रुवराशिर्द्विसप्तत्या सहितः क्रियते, चतुर्थं हि मण्डलं तृतीयमण्डलापेक्षया द्वितीयं, ततः षट्त्रिंशद द्वाभ्यां गुणिता द्विसप्ततिः स्यात् तया सहितस्त्र्यशीत्यादिको राशिः ८३ $^{२४}/_{६०}$ $^{५३}/_{६१}$ इत्येवंस्वरूपो जातः, अयं च तृतीयमण्डलगतात् दृष्टिपथप्राप्ततापरिमामाच्छोध्यते

ततो यथावस्थितं तुर्यमण्डले दृक्पथप्राप्तिमानं, तच्चेदम् - सप्तचत्वारिंशद्योजनसहस्राणि त्रयोदशोत्तराणि अष्टौ च षष्टिभागा योजनस्य एकस्य च षष्टिभागस्य सत्का दशैकषष्टिभागाः, सर्वान्तिमे तु मण्डले तृतीयमण्डलापेक्षया द्व्यशीत्यधिकशततमे यदा दृष्टिपथप्राप्तिजिज्ञासा तदा षट्त्रिंशत् द्व्यशीत्यधिकशतेन गुण्यते जातानि पञ्चषष्टिशतानि द्विपञ्चाशदधिकानि ततः षष्टिभागानयनार्थमेकषष्ट्या भागे लब्धं समोत्तरं शतं षष्टिभागानां पञ्चविंशतिरवशिष्टाः एतद् ध्रुवराशौ प्रक्षिप्यते जातं पञ्चाशीतिर्योजनानि एकदश षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्काः षडेकषष्टिभागाः, इह षट्त्रिंशत एवमुत्पत्तिः – पूर्वस्मात् २ मण्डलादनन्तरेऽनन्तरे मण्डले दिवसो द्वाभ्यां २ मुहूर्तैकषष्टिभागाभ्यां हीनः स्यात्, प्रतिमुहूर्तैकषष्टिभागं चाष्टादश एकस्य षष्टिभागस्य सत्का एकषष्टिभागा हीयन्ते, ततः उभयमीलने षट्त्रिंशत् स्युः, ते चाष्टादश भागाः कलया न्यूना लभ्यन्ते न परिपूर्णा परं व्यवहारतः पूर्वं परिपूर्णा विवक्षिताः, तत्र कलया न्यूनत्वं प्रतिमण्डलं भवत् यदा द्व्यशीत्यधिकशततमण्डले एकत्र पिण्डितं सत् चिन्त्यते तदा अष्टषष्टिरेकषष्टिभागास्त्रुटयन्ति।

एतदपि व्यवहारतः परमार्थतः किञ्चिदधिकमपि त्रुट्यदवसेयम्, ततोऽमी अष्टषष्टिरेकषष्टिभागा अपसार्यन्ते, तदपसारणे पञ्चाशीतिर्योजनानि नव षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्काः षष्टिरेकषष्टिभागाः इति जातं सर्वबाह्यमण्डलानन्तरार्वाक्तन- न्द्वितीयमण्डलगतदृष्टिपथप्राप्ततापरिमाणादेकत्रिंशत्सहस्राणि नव शतानि षोडशोत्तराणि योजनानां एकोनचत्वारिंशत्षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्काः षष्टिरेकषष्टिभागाः, इत्येवंरूपाच्छोध्यते ततो यथोक्तं सर्वबाह्यमण्डले दृष्टिपथप्राप्ततापरिमाणं भवति, तच्चाग्रे वक्ष्यति, तत एवं पुरुषच्छायायां दृष्टिपथप्राप्ततारूपायां द्वितीयादिषु केषुचिन्मण्डलेषु चतुरशीतिं किञ्चिन्न्यूनानि उपरितनेषु मण्डलेष्वधिकान्यधिकतराणि उक्तप्रकारेणाभिवर्द्धयन् २ तावदवसेयो यावत्सर्वबाह्यमण्डलमुपसंक्रम्य चारं चरति, तत्र पञ्चाशीतिग्रहणं तद् देहलीप्रदीपन्यायेनो भयपार्श्ववर्तिन्योस्त्र्यशीतिपञ्चाशीत्योर्ग्रहणार्थमिति।

अथोक्ते एव मण्डलक्षेत्रे पश्चानुपूर्व्या सूर्यस्य मुहूर्तगत्याद्याह – 'जया णं' मित्यादि, यदा भगवन्! सूर्य सर्वबाह्यमण्डलमुपसंक्रम्य चारं चरति तदा एकैकेनमुहूर्तेन कियत् क्षेत्रं गच्छति गौतम! पञ्च पञ्च योजनसहस्राणि त्रीणि पञ्चोत्तराणि योजनशतानि पञ्चदशषष्टिभागान् योजनस्य एकैकेन गच्छति, कथमिति चेत्, उच्यते – अस्मिन् मण्डले परिरयपरिमाणं तिस्रो लक्षा अष्टादश सहस्राणि त्रीणि शतानि पञ्चदशोत्तराणि ततोऽस्य प्रागुक्तयुक्तिवशात् षष्ट्या भक्ते लब्धं यथोक्तमत्र मण्डले मुहूर्तगतिपरिमाणमिति, अत्र दृष्टिपथप्राप्ततापरिमाणमाह – सर्वबाह्यमण्डलचारचरणकाले इहगतस्य मनुष्यस्येति प्राग्वत् एकत्रिंशता योजनसहस्रैरष्टभिश्चैकत्रिंशदधिकैर्योजनशतैस्त्रिंशता च षष्टिभागैर्योजनस्य सूर्य शीघ्रं चक्षुस्पर्शमागच्छति।

तथाहि – अस्मिन् मण्डले सूर्ये चारं चरति दिवसो द्वादशमुहूर्तप्रमाणो, दिवसस्यार्द्धेन यावन्मात्रं क्षेत्रं व्याप्यते तावति स्थित उदयमानः सूर्य उपलभ्यते, द्वादशानां च मुहूर्तानामर्द्धं षट् मुहूर्तास्ततो यदत्र मण्डले मुहूर्तगतिपरिमाणं पञ्चयोजनसहस्राणि त्रीणि शतानि पञ्चोत्तराणि पञ्चदश च षष्टिभागा योजनस्य तत् षड्भिर्गुण्यते, दिवसार्द्धगुणितायाः एव मुहूर्तगतेर्दृष्टिप-

थप्राप्ततांकरणत्वात्, ततो यथोक्तमत्र मण्डले दृष्टिपथप्राप्ततापरिमाणं भवति, यद्यप्युपान्त्य-मण्डलदृष्टिपथप्राप्ततापरिमाणात् पञ्चाशीतिर्योजनानि नव षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्का: षष्टिरेकषष्टिभागा: इत्येवंराशौ शोधिते इदमुपपद्यते एतच्च प्राग् भावितं तथापि प्रस्तुतमण्ड-लस्योत्तरायणगतमण्डलानामवधिभूतत्वेनान्यमण्डलकरणनिरपेक्षतया करणान्तरमकारि ।

इदं च सर्वाभ्यन्तरानन्तरमण्डलात् पूर्वानुपूर्व्या गण्यमानं त्र्यशीत्यधिकशततमं, प्रतिमण्डलं [illegible]रात्रगणनायां राशौऽपि त्र्यशीत्यधिकशतात्मकस्तेनायं दक्षिणायनस्य चरमो दिवस इत्याद्यभिधातुमाह—'एस णं पढमे छम्मासे एस ण'मित्यादि, एष च दक्षिणायनसत्कत्र्यशीत्यधिक-शतदिनरूपो राशि प्रथम: षण्मास:—अयनरूप: कालविशेष:, षट्सङ्ख्याका: मासा: पिण्डीभूता यत्रेति व्युत्पत्तेरिदं समाधेयं, अन्यथा प्रथम: षण्मास इत्येकवचनानुपपत्तिरिति, अथवा पात्र्यादि गणान्त: पाठात् स्त्रत्वाभावे अदन्तद्विगुत्वेऽपि न ङीप्रत्ययस्तेनैव तत्प्रथमं षण्मासं आर्षत्वात् पुंस्त्वं, एतच्च प्रथमस्य षण्मासस्य दक्षिणायनरूपस्य पर्यवसानं, अथ सर्वबाह्यमण्डलचारानन्तरं सूर्यो द्वितीयं षण्मासं प्राप्नुवन् गृह्णन् इत्यर्थ: प्रथमे अहोरात्रे उत्तरायणस्येति गम्यं, बाह्यानन्तरं पश्चानुपूर्व्या द्वितीयं मण्डलमुपसंक्रम्य चारं चरति । अतात्र गत्यादिप्रश्नार्थं सूत्रमाह—

'जया णं यदा भगवन् ! सूर्य बाह्यानन्तर- मर्वाक्तनं द्वितीयं मण्डलमुपसंक्रम्य चारं चरति तदा भगवन् ! एकैकेन मुहूर्तेन कियत् क्षेत्रं गच्छति ?, भगवानाह—गौ० पञ्च योजनसहस्राणि त्रीणि च चतुरुत्तराणि योजनशतानि सप्तपञ्चाशतं च षष्टिभागान् योजनस्यैकैकेन मुहूर्तेन गच्छति तथाहि—अस्मिन् मण्डले परिरयपरिमाणं त्रीणि लक्षाणि अष्टादश सहस्राणि द्वे शते सप्तनवत्यधिके योजनानां ततोऽस्य षष्ट्या भागे हृते लब्धं यथोक्तमत्र मण्डले मुहूर्तगतिप्रमाणं, अत्रापि दृष्टिपथप्राप्तताप- रिमाणमाह—तदा इहगतस्य मनुष्यस्येति प्राग्वत् एकत्रिंशता योजनसहस्रै: षोडशाधिकै: नवभिश्च योजनशतैरेकोनचत्वारिंशता च षष्टिभागैर्योजनस्य एकं च षष्टिभागमेकषष्टिधा छित्वा तस्य सत्कै: षष्ट्या चूर्णिकाभागै: सूर्यश्चक्षु स्पर्शमागच्छति, तथाहि—

अस्मिन् मण्डले सूर्ये चारं चरति दिवसो द्वादशमुहूर्तप्रमाणो द्वाभ्यां मुहूर्तैकषष्टिभागा-भ्यामधिक: तेषां चार्द्धे षड् मुहूर्ता: एके मुहूर्तैकषष्टिभागेनाभ्यधिकास्तत: सवर्णनार्थं षडपि मुहूर्ता एकषष्ट्या गुण्यन्ते तत एक: षष्टिभागस्तत्राधिक: प्रक्षिप्यते, ततो जातानि त्रिणि शतानि सप्तषष्ट्यधिकानि एकषष्टिभागानां तत: प्रस्तुतमण्डले यत्परिमाणं त्रीणि लक्षाणि अष्टादशसहस्राणि द्वे शते सप्तनवत्यधिके, इदं च योजनराशिं षष्ट्या गुणयित्वा सवर्णिता मुहूर्तगतिरिति यथा व्यवह्रियते तथा प्रागुक्तम्, एतदेभिस्त्रिभि: शतै: सप्तषष्ट्याऽधिकैर्गुण्यते जाता एकादश कोट्योऽष्टपष्टिर्लक्षाश्चतुर्दशसहस्राणि नवशतानि नवनवत्यधिकानि, एतस्य एकषष्ट्या गुणितया षष्ट्या भागो ह्रियते लब्धान्येकत्रिंशत्सहस्राणि नव शतानि षोडशोत्तराणि, शेषमुद्धरति चतुर्विंशतिशतानि एकोनचत्वारिंशदधिकानि न चातो योजनान्यायान्ति तत: षष्टिभागान-यनार्थमेकषष्ट्या भागो ह्रियते लब्धा एकोनचत्वारिंशत् षष्टिभागा: एकस्य च षष्टिभागस्य सत्का: षष्टिरेकषष्टिभागा: । अथ तृतीयं मण्डलं—

'से पविसमाणे' इत्यादि, अथ प्रविशन्—जंबूद्वीपाभिमुखं चरन् सूर्य द्वितीयेऽहोरात्रे उत्तरायणसत्के इत्यर्थ: बाह्यतृतीयं मण्डलमुपसंक्रम्य चारं चरति, तदा किमित्याह— 'जया ण'मित्यादि,

यदा भगवन् ! सूर्य बाह्यतृतीयं मण्डलमुपसंक्रम्य चारं चरति तदा एकैकेन मुहूर्त्तेन कियत क्षेत्रं गच्छति ?, भगवानाह–गौतम ! पञ्च पञ्च योजनसहस्राणि त्रीणि चतुरुत्तराणि योजनशतानि एकोनचत्वारिंशतं च षष्टिभागान् योजनस्य एकैकेन मुहूर्त्तेन गच्छति, तथाहि–अस्मिन् मण्डले परिरयपरिमाणं तिस्रः लक्षा अष्टादश सहस्राणि द्वे शते एकोनाशीत्यधिके अस्य च षष्ट्या भागे हृते लब्धं यथोक्तमत्र मण्डले मुहूर्तगतिप्रमाणं

अथात्र दृष्टिपथप्राप्तता–तदा इहगतस्य मनुष्यस्य एकाधिकैर्द्वात्रिंशता सहस्रैकोनपञ्चाशता च षष्टिभागैरेकं च षष्टिभागमेकषष्टिधा छित्वा तस्य सत्कैस्त्रयोविंशत्या चूर्णिकाभागैः सूर्य चक्षुस्पर्शमागच्छति, तथाहि अस्मिन् मण्डले दिवसो द्वादशमुहूर्तप्रमाणश्चतुर्भिर्मुहूर्तैकषष्टि-भागैरधिकस्तस्यार्द्धं षट् मुहूर्त्ता द्वाभ्यामेकषष्टिभागाभ्यामधिकास्ततः सामस्त्येनैकषष्टिभागकरणार्थं षडपि मुहूर्त्ता एकषष्ट्या गुण्यंते गुणयित्वा च तत्र द्वावेकषष्टिभागौ प्रक्षिप्येते ततो जातानि त्रीणि शतानि अष्टषष्ट्यधिकानि एकषष्टिभागानां, ततोऽस्मिन् मण्डले यत्परिरयप्रमाणं त्रीणि लक्षाणि अष्टादशसहस्राणि द्वे शते एकोनाशीत्यधिके एतत् त्रिभिः शतैः अष्टषष्ट्- यधिकैर्गुण्यते जाता एकादश कोट्यः एकसप्तति शतसहस्राणि षड्विंशति सहस्राणि षट् शतानि द्विसप्तत्यधिकानि, अस्य एकषष्ट्या गुणितया षष्ट्या भागे लब्धानि द्वात्रिंशत्सहस्रं एकोत्तराणि शेषं त्रीणि सहस्राणि द्वादशोत्तराणि तेषां षष्टिभागा- नयनार्थमेकषष्ट्या भागे हृते लब्धा एकोनपञ्चाशत् षष्टिभागाः एकस्य षष्टिभागस्य सत्कास्त्र- योविंशतिश्चूर्णिकाभागाः इति, समवायाङ्गे।

'जया णं सूरिए बाहिराणंतरतच्चं मंडलं उवसंकमित्ता चारं चरइ तया णं इहगयस्स पुरिसस्स तेत्तीसाए जोअणसहस्सेहिं किंचिविसेसूणेहिं चक्खुफासं हव्वमागच्छइ'त्ति एतद्वृत्तौ च इह तु यदुक्तं त्रयस्त्रिंशत् किञ्चिन्न्यूनास्तत्र सातिरेकयोजनस्यापि न्यूनसहस्रता विवक्षितेति सम्भाव्यते इति, अथात्रापि चतुर्थमण्डलादिष्वतिदेशमाह–'एवं खलु' इत्यादि, एवमुक्तेन प्रकारेण खलु–निश्चितमेतेनोपायेन–शनैः २ तत्तदनन्तराभ्यन्तरमण्डलाभिमुखगमनरूपेणाभ्यन्तरं प्रविशन् सूर्यस्तदनन्तरान्मण्डलात् तदनन्तरं मण्डलं संक्रमन् २ एकैकस्मिन् मण्डले मुहूर्तगतिमित्यत्र द्वितीया पूर्ववत् मुहूर्तगतिपरिमाणे अष्टादश २ षष्टिभागान् योजनस्य व्यवहारतः परिपूर्णान् निश्चयतः किञ्चिदूनान् निवर्द्धयन् २ हापयन्नित्यर्थः, पूर्वमण्डलात् अभ्यन्तराभ्यन्तरमण्डलस्य परिरयमधिकृत्याष्टादशयोजनैर्हीनत्वात्, पुरुषच्छायामित्यत्रापि द्वितीया पूर्ववत्, ततोऽयमर्थः–

पुरुषच्छायायां दृष्टिपथप्राप्ततारूपायां नवभिः षष्टिभागैः षष्ट्या च चूर्णिकाभागैः सातिरेकाणि–समधिकानि पञ्चाशीतिं २ योजनान्यभिवर्द्धयन् २ प्रथमद्वितीयादिषु कतिपयेषु मण्डलेषु इयं वृद्धिर्ज्ञेया सर्वमण्डलापेक्षया तु येनैव क्रमेण सर्वाभ्यन्तरान्मण्डलात्परतो दृष्टिपथप्राप्ततां हापयन्निर्गतस्तेनैव क्रमेण सर्वबाह्यान्मण्डलादर्वाक्तनेषु दृष्टिपथप्राप्ततामभिवर्द्धयन् प्रविशति, तत्र सर्वबाह्यमण्डलादर्वाक्तनद्वितीयमण्डलगतात् दृष्टिपथप्राप्ततापरिमाणात् सर्वबाह्ये मण्डले पञ्चाशीतिं योजनानि नव षष्टिभागान् योजनस्य एकं च षष्टिभागमेकषष्टिधा भित्वा तस्य सत्कान् षष्टिभागान् हापयति, एतच्च प्रागेव भावितं तस्मात् सर्वबाह्यादर्वाक्तने द्वितीये मण्डले प्रविशन् तावद्भूयोऽपि दृष्टिपथप्राप्ततापरिमाणेऽभिवर्द्धयति तच्च ध्रुवं, ततोऽर्वाक्तनेषु मण्डलेषु यस्मिन्

मण्डले दृष्टिपथप्राप्तता ज्ञातुमिष्यते तृतीयमण्डलादारभ्य तत्तन्मण्डलसङ्ख्यया षट्त्रिंशद् गुण्यते, तद्यथा—तृतीयमण्डलचिन्तायामेकेन चतुर्थमण्डलचिन्तायां द्वाभ्यां एवं यावत् सर्वाभ्यन्तरमण्डलचिन्तायां द्वयशीत्यधिकेन शतेन, इत्थं च गुणयित्वा यल्लभ्यते तद् ध्रुवराशेरपनीय शेषेण ध्रुवराशिना सहितं पूर्व२ मण्डलगतं दृष्टिपथप्राप्ततापरिमाणं तत्र मण्डले द्रष्टव्यं ।

यथा तृतीये मण्डले षट्त्रिंशदेकेन गुण्यते, 'एकेन च गुणितं तदेव भवती'ति जाता षट्त्रिंशदेव सा ध्रुवराशेरपनीयते, जातं शेषमिदं—पञ्चाशीतिर्योजनानि नव षष्टिभागा योजनस्य एकस्य च षष्टिभागस्य सत्काश्चतुर्विंशतिरेकषष्टिभागाः एतेन पूर्वमण्डलगत दृष्टिपथप्राप्तापरिमाणं एकत्रिंशत् सहस्राणि नव शतानि षोडशोत्तराणि योजनानामेकोनचत्वारिंशदेव कषष्टिभागायोजनस्य एकस्य षष्टिभागस्य सत्काः षष्टिरेकषष्टिभागाः इत्येवंरूपसहितं क्रियते कृते च तृतीये मण्डले यथोक्तं दृष्टिपथप्राप्ततापरिमाणं भवति तच्च प्रागेव प्रदर्शितं, चतुर्थे मण्डले षट्त्रिंशद द्वाभ्यां गुण्यते गुणयित्वा ध्रुवराशेरपनीय शेषेण ध्रुवराशिना तृतीयमण्डलगतं दृष्टिपथप्राप्ततापरिमाणं सहितं क्रियते, तत इदं तत्र मण्डले दृष्टिपथप्राप्ततापरिमाणं भवति—द्वात्रिंशत्सहस्राणि षडशीत्यधिकानि योजनानामष्टपञ्चाशत् षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्काः एकादशैकषष्टिभागाः एवं शेषेष्वपि मण्डलेषु भावनीयं, यदा तु सर्वाभ्यन्तरे मण्डले दृष्टिपथप्राप्ततापरिमाणं ज्ञातुमिष्यते तदा षट्त्रिंशद् द्व्यशीत्यधिकेन शतेन गुण्यते ।

तृतीयमण्डलादारभ्य सर्वाभ्यन्तरस्य मण्डलस्य द्व्यशीत्यधिकशततमत्वात्, ततो जातानि पञ्चषष्टिः शतानि द्विपञ्चाशदधिकानि, तेषामेकषष्ट्या भागे हृते लब्धं सप्तोत्तरं शतं षष्टिभागानां शेषाः पञ्चविंशति, एतत्पञ्चाशीतिर्योजनानि नव षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्काः षष्टिरेकषष्टिभागाः इत्येवंरूपाद् ध्रुवराशेः शोध्यते, जातानि पश्चात् त्र्यशीतिर्योजनानि द्वाविंशति षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्काः पञ्चत्रिंशदेक-षष्टिभागाः, इह षट्त्रिंशदेकषष्टिभागाः कलया न्यूनाः परमार्थतो लभ्यन्ते, एतच्च प्रागेवोपदर्शितं, तच्च कलाया न्यूनत्वं प्रतिमण्डलं भवत् यदा द्वयशीत्यधिकशततमण्डले एकत्र पिण्डितं सत् चिन्त्यते तदा अष्टषष्टिरेकषष्टिभागा लभ्यन्ते ततस्ते भूयः प्रक्षिप्यन्ते ततो जातमिदंत्र्यशीतिर्योजनानि त्रयोविंशतिः षष्टिभागाः योजनस्य एकस्य षष्टिभागस्य सत्का द्विचत्वारिंशदेकषष्टिभागाः, एतेन सर्वाभ्यन्तरानन्तरद्वितीयमण्डलगतं दृष्टिपथप्राप्ततापरिमाणं सप्तचत्वारिंशत्सहस्राणि शतमेकोनाशीत्यधिकं योजनानां सप्तपञ्चाशत् षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्का एकोनविंशतिरेकषष्टिभागाः इत्येवंरूपसहितं क्रियते ततो यथोक्तं सर्वाभ्यन्तरे मण्डले दृष्टिपथप्राप्ततापरिमाणं भवति, तच्च सप्तचत्वारिंशत्सहस्राणि द्वे शते त्रिषष्ट्यधिके योजनानामेकविंशतिश्च षष्टिभागा योजनस्य एवं दृष्टिपथप्राप्ततायां कतिपयेषु मण्डलेषु सातिरेकाणि पञ्चाशीतिं २ योजनानि अग्रेतनेषु चतुरशीतिं २ पर्यन्ते यथोक्ताधिकसहितानि त्र्यशीतिं योजनानि अभिवर्द्धयन् २ तावद् वक्तव्यो यावत् सर्वाभ्यन्तरमण्डलमुपसंक्रम्य चारं चरति ।

इदं च सर्वाभ्यन्तरमण्डलं सर्वबाह्यानन्तरात् मण्डलात् पश्चानुपूर्व्या गण्यमानं त्र्यशीत्यधिकशततमं, प्रतिमण्डलं चाहोरात्रगणनादहोरात्रोऽपि त्र्यशीत्यधिकशततम- स्तेनायमुत्तरायणस्य चरमो दिवस इत्याद्यभिधातुमाह—'एस णं दोच्चे छम्मासे' इत्यादि, एष द्वितीयः

षण्मासः—प्रागुक्तयुक्तया अयनविशेषो ज्ञातव्यः, एतत् द्वितीयस्य षण्मासस्य पर्यवसानं त्र्यशीत्यधिकशततमाहोरात्रत्वात्, एष आदित्यः संवत्सरः—आदित्यचारोपलक्षितः संवत्सर इति, इत्यनेन नक्षत्रादिसंवत्सरव्युदासः, एतच्चादित्यस्य संवत्सरस्य पर्यवसानं चरमानयचरमदिवसत्वात् इति समाप्तं मुहूर्त्तगतिद्वारम्, तत्सम्बन्धाच्च दृष्टिपथवक्तव्यताऽपि ।

अथाष्टमं दिनरात्रिवृद्धिहानिद्वारं निरूप्यते—

**मू. (२९९)** *जया णं भंते ! सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ तया णं केमहालए दिवसे केमहालिया राई भवइ ?, गोअमा ! तया णं उत्तमकट्ठपत्ते उक्कोसए अट्ठारसमुहुत्ते दिवसे भवइ जहन्निआ दुवालसमुहुत्ता राई भवइ, से निक्खममाणे सूरिए नवं संवच्छरं अयमाणे पढमंसि अहोरत्तंसि अब्भंतराणंतरं मंडलं उवसंकमित्ता चारं चरइ ।*

*जया णं भंते ! सूरिए अब्भंतराणंतरं मंडलं उवसंकमित्ता चारं चरइ तया णं केमहालए दिवसे केमहालिया राई भवइ ?, गो० ! तया णं अट्ठारसमुहुत्ते दिवसे भवइ दोहिं एगट्ठिभागमुहुत्तेहिं ऊणे दुवालसमुहुत्ता राई भवइ दोहि अ एगट्ठिभागमुहुत्तेहिं अहिअत्ति, से निक्खममाणे सूरिए दोच्चंसि अहोरत्तंसि जाव चारं चरइ तया णं केमहालए दिवसे केमहालिया राई भवइ ?, गोयमा तया णं अट्ठारसमुहुत्ते दिवसे भवइ चउहिं एगट्ठिभागमुहुत्तेहिं ऊणे दुवालसमुहुत्ता राई भवइ चउहिं एगसट्ठिभागमुहुत्तेहिं अहिसत्ति, एवं खलु एएणं उवाएणं निक्खममाणे सूरिए तयाणंतराओ मंडलाओ तयानंतरं मंडलं संकममाणे दो दो एगट्ठिभागमुहुत्तेहिं मंडले दिवसखित्तस्स निव्वुड्ढेमाणे २ रयणिखित्तस्स अभिवड्ढेमाणे २ सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइत्ति ।*

*जया णं सूरिए सव्वबंभंतराओ मंडलाओ सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ तया णं सव्वब्भंतरमंडलं पणिहाय एगेणं तेसीएणं राइंदिअसएणं तिन्नि छावट्ठे एगसट्ठिभागमुहुत्तसए दिवसखेत्तस्स निव्वुड्ढेता रयणिखेत्तस्स अभिवुड्ढेता चारं चरइत्ति ।*

*जया णं भंते ! सूरिए सव्वाबाहिरं मंडलं उवसंकमित्ता चारं चरइ तया णं केमहालए दिवसे केमहालिया राई भवइ ?, गोअमा ! तया णं उत्तमकट्ठपत्ता उक्कोसिआ अट्ठारसमुहुत्ता राई भवइ जहन्नए दुवालसमुहुत्ते दिवसे भवइत्ति, एस णं पढमे छम्मासे एस णं पढमस्स छम्मासस्स पज्जवसाणे । से पविसमाणे सूरिए दोच्चं छम्मासं अयमाणे पढमंसि अहोरत्तंसि बाहिरानंतरं मंडलं उवसंकमित्ता चारं चरइ, जया णं भंते ! सूरिए बाहिरानंतरं मंडलं उवसंकमित्ता चारं चरइ तया णं केमहालए दिवसे भवइ केमहालिया राई भवइ ?, गो० ! अट्ठारसमुहुत्ता राई भवइ दोहिं एगसट्ठिभागमुहुत्तेहिं ऊणा दुवालसमुहुत्ते दिवसे भवइ दोहिं एगसट्ठिभागमुहुत्तेहिं अहिए, से पविसमाणे सूरिए दोच्चंसि अहोरत्तंसि बाहिरतच्चं मंडलं उवसंकमित्ता चारं चरइ ।*

*जया णं भंते ! सूरिए बाहिरतच्चं मंडलं उवसंकमित्ता चारं चरइ तया णं केमहालए दिवसे भवइ केमहालिया राई भवइ ?, गो० ! तया णं अट्ठारसमुहुत्ता राई भवइ चउहिं एगसट्ठिभागमुहुत्तेहिं ऊणा दुवालसमुहुत्ते दिवसे भवइ चउहिं एगसट्ठिभागमुहुत्तेहिं अहिए इति ।*

*एवं खलु एएणं उवाएणं पविसमाणे सूरिए तयानंतराओ मंडलाओ तयानंतरं मंडलं संकममाणे संकममाणे दो दो एगसट्ठिभागमुहुत्तेहिं एगमेगे मंडले रयणिखेत्तस्स निवुड्ढेमाणे २*

*दिवसखेत्तस्स अभिवुड्ढेमाणे २ सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइत्ति, जया णं भंते ! सूरिए सव्वाबाहिराओ मंडलाओ सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरई तया णं सव्वबाहिरं मंडलं पणिहाय एगेणं तेसीएणं राइंदिअसएणं तिन्नि छावट्ठे एगसट्ठिभागमुहुत्तसए रयणिखेत्तस्स णिव्वुड्ढेत्ता दिवसखेत्तस्स अभिवद्धेत्ता चारं चरइ, एस णं दोच्चे छम्मासे एस णं दुच्चस्स छम्मासस्स पज्जवसाणे एस णं आइच्चे संवच्छरे एस णं आइच्चस्स संवच्छरस्स पज्जवसाणे पन्नत्ते ८ ।*

**वृ.** 'जया ण'मित्यादि, यदा भगवन् ! सूर्य सर्वाभ्यन्तरमण्डलमुपसंक्रम्य चारं चरति तदा को महान् आलयो—व्याप्यक्षेत्ररूपः आश्रयो यस्यासौ किंमहालयः कियानित्यर्थः दिवसो भवति, किंहालया—कियती रात्रिर्भवति ?— भगवानाह—गौतम ! तदा उत्तमकाष्ठां प्राप्तः—उत्तमावस्थां प्राप्तः आदित्यसंवत्सरसत्कषट्षष्ट्यधिकत्रिशतदिवसमध्ये यतो नापरः कश्चिदधिक इत्यर्थः अत एवोत्कर्षकः उत्कृष्ट इत्यर्थः अष्टादशमुहूर्त्तप्रमाणो दिवसो भवति, यत्र मंडले यावत्प्रमाणो दिवसस्तत्र तदपेक्षया अ (शेषा) होरात्रप्रमाणा रात्रिरिति जघन्यिका द्वादशमुहूर्ता रात्रिः, सर्वस्मिन् क्षेत्रे काले वाऽहोरात्रस्य त्रिशन्मुहूर्त्तसङ्ख्याकत्वस्य नैयत्यात् ।

ननु यदा भरतेऽष्टादशमुहूर्तप्रमाणो दिवसस्तदा विदेहेषु जघन्या द्वादशमुहूर्तप्रमाणा रात्रिस्तर्हि द्वादशमुहूर्तेभ्यः परं रात्रेरतिक्रान्तत्वेन षट् मुहूर्तान् यावत्केन कालेन भाव्यं ?, एवं भरतेऽपि वाच्यम्, उच्यते, अत्र षण्मुहूर्त्तान्यक्षेत्रेऽवगिले इति अत्र सूर्योदयास्तमनेन लिनयोगेति, तच्च सूर्योदयास्तान्तरविचारणेन तन्मण्डलगतदृष्टिपथप्राप्ततविचारणेन च सूपपन्नं, आह—एवं सति सूर्योदयास्तमयने अनियसे आपन्ने, भवतु नाम, न चैतदनार्षम्, यदुक्तम्—

॥ १ ॥ "जह जह समए समए पुरओ संचरइ भक्खरो गयणे ।
तह तह इओवि नियमा जायइ रयणीइ भावत्थो ॥

॥ २ ॥ एवं च सइ नराणं उदयत्थमणाइं होंतऽनिययाइं ।
सइ देसकालभेए कस्सइ किंची य दिस्सए नियमा ॥

॥ ३ ॥ सइ चेव य निद्दिट्ठो रुद्दमुहुत्तो कमेण सव्वेसिं ।
केसिंचीदाणिंपिअ विसयपमाणो रवी जेसिं ॥ ति ।

यत्तु सूर्यप्रज्ञप्तिवृत्तौ सूर्यमण्डलसंस्थित्यधिकारे समचतुरस्रसंस्थितिवर्णनायां युगादौ एकः सूर्यो दक्षिणस्यां एकश्चन्द्रो दक्षिणापरस्यां द्वितीयः सूर्य पश्चिमोत्तरस्यां द्वितीयः चन्द्रः उत्तर-पूर्वस्यामित्युक्तं यत्तु दक्षिणादिभागेषु मूलोदयापेक्षया इति बोध्यं, अयं च सर्वोत्कृष्टो दिवसः पूर्वसंवत्सरस्य चरमो दिवस इति वक्तुमाह—'से निक्खममाणे' इत्यादि, अथ निष्क्रामन् सूर्य नवं संवत्सरमयमानः— प्राप्नुवन्नाददान इत्यर्थः, प्रथमे अहोरात्रेऽभ्यन्तरानन्तरं द्वितीयमण्डल-मुपसंक्रम्य चारं चरति इति, अथ दिनरात्रिवृद्ध्यपवृद्ध्यर्थमाह—

'जया णं'मित्यादि, यदा भगवन् ! सूर्य अभ्यन्तरानन्तरं द्वितीयं मण्डलमुपसंक्रम्य चारं चरति तदा भगवन् ! किंमहालयः—किंप्रमाण दिवसः किंमहालया—किंप्रमाणा रात्रि ?, भगवानाह—गौतम ! तदा अष्टादशमुहूर्त्तप्रमाणो द्वाभ्यां मुहूर्तैकषष्टिभागाभ्यामूनो दिवसो भवति, अत्र सूत्रे प्राकृतत्वात् पदव्यत्ययः, द्वादशमुहूर्त्तप्रमाणा द्वाभ्यां मुहूर्तैकषष्टिभागाभ्यामधिका रात्रिर्भवति,

अत्रोपपत्तिर्यथा—अष्टादशमुहूर्ते दिवसे द्वादश ध्रुवमुहूर्त्ताः षट् चरमुहूर्ताः, ते च मण्डलानां त्र्यशीत्यधिकशतेन वर्द्धन्ते चापवर्द्धन्ते, ततोऽत्र त्रैराशिकावतारः—यदि मण्डलानां त्र्यशीत्यधिकशतेन षट् मुहूर्ताः वर्द्धन्ते चापवर्द्धन्ते तदा एकेन मण्डलेन किं वर्द्धते चापवर्द्धते अत्रान्त्यराशिना एककलक्षणेन मध्यराशि षट्कलक्षणो गुण्यते, गुणिते च 'एकेन गुणितं तदेव' षडेव स्थितास्ते चादिराशिना भज्यन्ते अल्पत्वाद् भागं न प्रयच्छन्तीति भाज्यभाजकराश्योस्त्रिकेणापवर्त्तना कार्या, जात उपरितनो राशिद्विकरूपः अधस्तन एकषष्टिरूपः आगतं द्वावेकषष्टिभागौ मुहूर्त्तस्य अतो दिवसेऽपवर्द्धते रात्रौ च वर्द्धते इति, एवमग्रेऽपि करणभावना कार्या।

अथाग्रेतनमण्डलगते दिनरात्रिवृद्धिहानी पृच्छन्नाह—'से निक्खममाणे' इत्यादि, अथ निष्क्रामन् सूर्यो दक्षिणायनसत्के द्वितीये अहोरात्रे अत्र यावच्छब्दाद् 'अब्भंतरतच्चं मंडलं उवसंकमित्ता' इति ज्ञेयं, सर्वाभ्यन्तरमण्डलापेक्षया तृतीयं मण्डलमुपसंक्रम्य चारं चरतितदा किंप्रमाणो दिवसः किंप्रमाणा रात्रिर्भवति ?, गौतम ! तदा अष्टादशमुहूर्त्तप्रमाणो द्वाभ्यां पूर्वमण्डलसत्काभ्यां द्वाभ्यां च प्रस्तुतमण्डलसत्काभ्यामित्येवं चतुर्भिर्मुहूर्त्तैकषष्टिभागैरूनो दिवसो भवति द्वादशमुहूर्ता उक्तप्रकारेणैव चतुर्भिर्मुहूर्त्तैकषष्टिभागैरधिका रात्रिर्भवति, उक्तातिरिक्तमण्डलेष्वतिदेशमाह—

'एवं खलु एएणं' मित्यादि, एवं मण्डलत्रयदर्शितरीत्या खलु—निश्चितमेतेन—अनन्तरोक्तेनोपायेन—प्रतिमण्डलं दिवसरात्रिसत्कमुहूर्त्तैकषष्टिभागद्वयवृद्धिहानिरूपेण निष्क्रामन्—दक्षिणाभिमुखं गच्छन् सूर्यस्तदनन्तरान्मण्डलात्तदनन्तरं मण्डलं संक्रामन् द्वौ द्वौ मुहूर्त्तैकषष्टिभागावेकैकस्मिन् मण्डले दिवसक्षेत्रस्य निवर्द्धयन् २—ह्रापयन् २ रजनिक्षेत्रस्य तावेवाभिवर्द्धयन् २, कोऽर्थः मुहूर्त्तैकषष्टिभागद्वयगम्यं क्षेत्रं दिवसक्षेत्रे ह्रापयन् तावदेव रजनिक्षेत्रे अभिवर्द्धयन्निति सर्वबाह्यमण्डलमुपसंक्रम्य चारंचरति, प्रतिमण्डलं भागद्वयहानिवृद्धी उक्ते, असर्वमण्डलेषु भागानां हानिवृद्धिसर्वाग्रं वक्तुमाह—

'जया णं'मित्यादि, यदा सूर्य सर्वाभ्यन्तरान्मण्डलादित्यत्र यबलोपे पञ्चमी वक्तव्या, तेन सर्वाभ्यन्तरं मण्डलमारभ्य सर्वबाह्यमण्डलमुपसङ्क्रम्य चारं चरति तदा सर्वाभ्यन्तरं मण्डलं प्रणिधाय—मर्यादीकृत्य ततः परस्माद् द्वितीयान्मण्डलादारभ्येत्यर्थः एकेन त्र्यशीतेनत्र्यशीत्यधिकेन रात्रिन्दिवानां—अहोरात्राणां शतेन त्रीणि षट्षष्टानि—षट्षष्ट्यधिकानि मुहूर्त्तैकषष्टिभागशतानि दिवसक्षेत्रस्याभिवर्द्धय कोऽर्थः ?—षट्षष्ट्यधिकत्रिशतमुहूर्त्तैकषष्टिभागैर्यावन्मात्रं क्षेत्रं गम्यते तावन्मात्रं क्षेत्रं ह्रापयित्वा इत्यर्थः, तावदेव क्षेत्रं रजनिक्षेत्रस्याभि वर्द्धय चारं चरति, अयमर्थदक्षिणायनसत्कत्र्यशीत्यधिकमण्डलेषु प्रत्येकं हीयमान भागद्वयस्य त्र्यशीत्यधिकशतगुणनेन षट्षष्ट्यधिकत्रिशतराशिरुपपद्यत इति तावदेव रजनिक्षेत्रे वर्द्धते इत्यर्थः, एतदेव पश्चानुपूर्व्या पृच्छति—

'जया णं' मित्यादि, प्रश्नसूत्रंप्राग्वत्, उत्तरसूत्रे गौतम ! तदा उत्तमकाष्ठाप्राप्ता—प्रकृष्टावस्थ प्राप्ता अत एवोत्कर्षिका—उत्कृष्टा, यतो नान्या प्रकर्षवती रात्रिरित्यर्थः, अष्टादशमुहूर्त्तप्रमाणा रात्रिर्भवति तदा त्रिंशन्मुहूर्त्तसङ्ख्यापूरणाय जघन्यको द्वादशमुहूर्त्तप्रमाणो दिवसो भवति त्रिंशन्मुहूर्त्तत्वादहोरात्रस्य, एष चाहोरात्रो दक्षिणायनस्य चरम इत्यादि प्रज्ञापनार्थमाह—'एग

ण' मित्यादि, एतच्च प्रागुक्तार्थम्, अथात्र द्वितीयं मण्डलं पृच्छन्नाह– 'जया ण' मित्यादि, यदा भगवन् ! सूर्य सर्वबाह्यानन्तरं द्वितीयं मण्डलमुपसंक्रम्य चारं चरति तदा किंप्रमाणो दिवसो भवति, किंप्रमाणा रात्रिर्भवति ?, गौतम ! अष्टादशमुहूर्ता द्वाभ्यां मुहूर्तैकषष्टिभागाभ्यामूना रात्रिर्भवति, द्वादशमुहूर्तो द्वाभ्यां मुहूर्तैकषष्टिभागाभ्यामधिको दिवसो भवति, भागयोर्न्यूनाधिकत्वकरणयुक्ति प्राग्वत्, अथ तृतीयमण्डलप्रश्नायाह–

'से पविसमाणे' त्ति प्राग्वत्, प्रश्नसूत्रमपि तथैव, उत्तरसूत्रे गौतम ! तदा अष्टादशमुहूर्ता द्वाभ्यां पूर्वमण्डलसत्काभ्यां द्वाभ्यां च प्रस्तुतमण्डलसत्काभ्यां इत्येवं चतुर्भि–चतुःसङ्ख्याकैर्मुहूर्तैकषष्टिभागैरूना रात्रिर्भवति, द्वादशमुहूर्तश्च तथैव चतुर्भिर्मुहूर्तैकषष्टिभागैरधिको दिवसो भवति, उक्तातिरिक्तेषु मण्डलेष्वतिदेशमाह– 'एवं खलु' इत्यादि, एवं–मण्डलत्रयदर्शितरीत्या एतेनानन्तरोक्तेनोपायेन प्रतिमण्डलं दिवसरात्रिसत्कमुहूर्तैकषष्टिभागद्वयवृद्धिहानिरूपेण प्रविशन् जंबूद्वीपे मण्डलानि कुर्वन् सूर्यस्तदनन्तरान्मण्डलात् तदनन्तरं मण्डलं संक्रमन् २ द्वौ द्वौ मुहूर्तैकषष्टिभागौ एकैकस्मिन् मण्डले रजनिक्षेत्रस्य निवर्द्धयन् २ दिवसक्षेत्रस्य तावेवाभिवर्द्धयन् २ सर्वाभ्यन्तरमण्डलमुपसंक्रम्य चारं चरति, अत्रापि सर्वमण्डलेषु भागानां हानिवृद्धि निर्दिशन्नाह–

'जया णं' मित्यादि, यदा भगवन् ! सूर्य सर्वबाह्यात् सर्वाभ्यन्तरमण्डलमुपसंक्रम्य चारं चरति तदा सर्वबाह्यं मण्डलं प्रणिधाय–मर्यादीकृत्य तदर्वाकितनाद् द्वितीयान्मण्डलादारभ्येत्यर्थः एकेन त्र्यशीत्यधिकेन रात्रिन्दिवशतेन त्रीणि षट्षष्ट्यधिकानि मुहूर्तैकषष्टिभागशतानि रजनिक्षेत्रस्य निवर्द्धय २ दिवसक्षेत्रस्य तान्येवाभिवर्द्धय २ चारं चरति एष चाहोरात्र उत्तरायणस्य चरम इत्यादि निगमयन्नाह– 'एस ण' मित्यादि प्राग्वत् ॥ अथ नवमं तापक्षेत्रद्वारं–

**मू. (२६०)** *जया णं भंते ! सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ तया णं किंसंठिआ तावखित्तसंठिई पन्नत्ता ?, गो ! उद्धीमुहकलंबुआपुप्फसंठाणसंठिआ तावखेत्तसंठिई पन्नत्ता अंतो संकुआ बाहिं वित्थडा अंतो वट्टा बाहिं विहुला अंतो अंकमुहसंठिआ बाहिं सगडुद्धीमुहसंठिआ उत्तरपासे णं तीसे दो बाहाओ अवट्ठिआओ हवंति पणयालीसं २ जोअणसहस्साइं आयामेणं, दुवे अ णं तीसे बाहाओ अणवट्ठिआओ हवंति, तंजहा–सव्वब्भंतरिआ चेव बाहा सव्वबाहिरिआ चेव बाहा, तीसे णं सव्वब्भंतरिआ बाहा मंदरपव्वयंतेणं नवजोअणसहस्साइं चत्तारि छलसीए जोअणसए नव य दसभाए जोअणस्स परिक्खेवेणं,*

*एस णं भंते ! परिक्खेवविसेसे क आहिएति वएज्जा ?, गोअमा ! जे णं मंदरस्स परिक्खेवे तं परिक्खेवं तिहिं गुणेत्ता दसहिं छेत्ता दसहिं भागे हीरमाणे एस परिक्खेवविसेसे आहिएति वदेज्जा, तीसे णं सव्वबाहिरिआ बाहा लवणसमुद्दंतेणं चउनवई जोअणसहस्साइं अट्ठसट्ठे जोअणसए चत्तारि अ दसभाए जोअणस्स परिक्खेवेणं ।*

*से णं भंते ! परिक्खेवविसेसे कओ आहिएति वएज्जा ?, गो० ! जे णं जंबुद्दीवस्स परिक्खेवे तं परिक्खेवं तिहिं गुणेत्ता दसहिं छेत्ता दसभागे हीरमाणे एस णं परिक्खेवविसेसे आहिएत्ति वएज्जा इति । तया णं भंते ! तावखित्ते केवइअं आयामेणं पं० ?, गो० ! अट्ठहत्तरिं जोअणसहस्साइं तिन्नि अ तेतीसे जोअणसए जोअणस्स तिभागं च आयामेणं पन्नत्ते ।*

वृ. 'जया ण'मित्यादि, यदा भगवन् ! सूर्य सर्वाभ्यन्तरमण्डलमुपसंक्रम्य चारं चरति तदा किंसंस्थिता—किंसंस्थाना तापक्षेत्रस्य—सूर्यातपव्याप्ताकाशखण्डस्य संस्थितिः—व्यवस्था प्रज्ञप्ता सूर्यातपस्य किं संस्थानमितियावत्, भगवानाह—गौतम ! ऊर्ध्वमुखं अधोमुखत्वे तस्य वक्ष्यमाणाकारसम्भवात् यत् कलम्बुकापुष्पं—नालिकापुष्पं तत्संस्थानसंस्थिता प्रज्ञप्ता मया शेषैश्च तीर्थकृद्भिः, इदमेव संस्थान विशिनष्टि—अन्तः—मेरुदिशि सङ्कुचिता बहिः—लवणदिशि विस्तृता, तथा अन्तः—मेरुदिशि वृत्ता—अर्धवलयाकारा सर्वतो वृत्तमेरुगतान् त्रीन् द्वौ वा दशभागान् अभिव्याप्यास्या व्यवस्थितत्वात्, बहिः—लवणदिशि पृथुला—मुत्कलभावेन विस्तारमुपगता, एतदेव संस्थानकथनेन स्पष्टयति—अन्तर्मेरुदिशि अङ्कःपद्मासनोपविष्टस्योत्सङ्गरूप आसनबन्धस्तस्य मुखं—अग्रभागोऽर्द्धवलयाकारस्तस्येव संस्थितं—संस्थानं यस्याः सा तथा, बहि—लवणदिशि शकटस्योद्धिः प्रतीता तस्याः मुखं—यतः प्रभृति निश्रेणिकाया फलकानि बध्यन्ते तच्चातिविस्तृतं भवति तत्संस्थाना, अन्तर्बहिर्भागौ प्रतीत्य यथाक्रमं सङ्कुचिता विस्तृता इति भावः आदर्शान्तरे तु 'बाहिं सोत्थिअमुहसंठिआ' पाठस्तत्र स्वस्तिकः प्रतीतस्तस्य मुखं—अग्रभागस्तस्येवातिविस्तीर्णतया संस्थितं—संस्थानं यस्याः सा तथा, अथास्याः आयाममाह—

'उभओपासे ण'मित्यादि, उभयपार्श्वेन—मंदरस्योभयोः पार्श्वयोः तस्यास्तापक्षेत्रसंस्थितेः सूर्यभेदेन द्विधाव्यवस्थितायाः प्रत्येकमेकैकभावेन द्वे बाहे—द्वे द्वे पार्श्वे अवस्थिते—अवृद्धिहानिस्वभावे सर्वमण्डलेष्वपि नियतपरिमाणे भवतः, अयमर्थः—एका भरतस्थसूर्यकृता दक्षिणपार्श्वे द्वितीया ऐरवतस्थसूर्यकृता उत्तरपार्श्वे इति द्विप्रकारा, सा च पञ्चचत्वारिंशतं २ योजनसहस्राणि आयामेन, मध्यवर्त्तिनो मेरोरारभ्य द्वयोर्दक्षिणोत्तरभागयोः पञ्चचत्वारिंशता योजनसहस्रैर्व्यवहिते जंबूद्वीपपर्यन्ते व्यवस्थितत्वात्, एवं पूर्वापरभागयोरपि, यदा तत्र सूर्यौ तदाऽयमायामो बोध्यः, एतच्च सूत्रं जंबूद्वीपगतायाममपेक्ष्य बोध्यं, लवणसमुद्रे तु त्रयस्त्रिंशत्सहस्राणि त्रीणि शतानि त्र्यस्त्रिंशदधिकानि एकश्च त्रिभागो योजनस्येति, एतच्च एकत्र पिण्डितं अष्टासप्ततः सहस्राणि योजनानां त्रीणि शतानि इत्यादिकं सूत्रकृदग्रे वक्ष्यति तत्र सोपपत्तिकं निगदिष्यते तेनात्र पुनरुक्तभिया नोक्तं ।

सम्प्रत्यनवस्थितबाहास्वरूपमाह—तस्याः—एकैकस्यातापक्षेत्रसंस्थितेः द्वे च बाहे अनवस्थिते—अनियतपरिमाणे भवतः, प्रतिमण्डलं यथायोगं हीयमानवर्द्धमानपरिमाण- त्वात्, तद्यथा—सर्वाभ्यन्तरा सर्वबाह्या चैवशब्दौ प्रत्येकमनवस्थितस्वभावद्योतनार्थौ, तत्र या मेरुपार्श्वे विष्कम्भमधिकृत्य बाहा सा सर्वाभ्यन्तरा या तु लवणदिशि जंबूद्वीपपर्यन्तमधिकृत्य बाहा सा सर्वबाह्या, आयामश्च दक्षिणोत्तरायततया प्रतिपत्तव्यो विष्कम्भः पूर्वापरयततयेति, साम्प्रतं सर्वाभ्यन्तरापरिमाणं निर्दिशति 'तस्या—एकैकस्याः तापक्षेत्रसंस्थितेः सर्वाभ्यन्तरा बाहा मेरुगिरिसमीपे नव योजनसहस्राणि चत्वारि षडशीत्यधिकानि योजनशतानि नव च दशभागान् योजनस्य परिक्षेपेण, अत्रोपपत्त्यर्थं प्रश्नमाह— 'एस ण'मित्यादि, एषः—अनन्तरोक्तप्रमाणः परिक्षेपविशेषो मंदरपरिरयपरिक्षेपविशेषः कुतः—कस्मात् एवंप्रमाण आख्यातो नोनोऽधिको वा इति वदेत् ?, भगवानाह—गौ० यो मंदरस्य परिक्षेपस्तं त्रिभिर्गुणयित्वा दशभिश्छित्वा- दशभि-

विभज्य मेरुणा प्रतिहन्यमानः सूर्यातपो मेरुपरिधिं परिक्षिप्य स्थित इति मेरुसमीपेऽभ्यन्तरतापक्षेत्रविष्कम्भचिन्ता, अथैवं सति सत्रयो- विंशतिषट्शताधिकैकत्रिंशत्सहस्रयोजनमानः सर्वोऽपि मेरुपरिधिरस्य तापक्षेत्रस्य विष्कम्भतामा- पद्येत इति चेत्, न सर्वाभ्यन्तरे मण्डले वर्त्तमानः सूर्यो दीप्तलेश्याकत्वाज्जम्बूद्वीपचक्रवालस्य यत्र तत्र प्रदेशे तत्तचक्रवालक्षेत्रानुसारेण त्रीन् दशभागान् प्रकाशयति दशभागानां त्रयाणां मीलने यावत् प्रमाणं क्षेत्रं तावत्तापयतीत्यर्थः ।

ननु तर्हि मेरुपरिधेस्त्रिगुणीकरणं किमर्थं ? दशभागानां त्रिधागुणनेनैव चरितार्थत्वात्, सत्यं, विनेयानां सुखावबोधाय, भगवतीवृत्तौ तु श्रीअभयदेवसूरिपादा दशभागलब्धं त्रिगुणं चक्रुरिति, अथ दशभिर्भागे को हेतुरिति चेत्, उच्यते, जंबूद्वीपचक्रवालक्षेत्रस्य त्रयो भागा मेरुदक्षिणपार्श्वे त्रयस्तथैवोत्तरपार्श्वे द्वौ भागौ पूर्वतो द्वौ चापरतः सर्वमीलने दश, तत्र भरतगतः सूर्य सर्वाभ्यन्तरे मण्डले चरन् त्रीन् भागान् दाक्षिणात्यान् प्रकाशयति, तदानीं च त्रीनौत्तराहान् ऐरवतगतः तदा द्वौ भाग पूर्वतो रजनी द्वौ चापरतोऽपि, यथा यथा क्रमेण दाक्षिणात्य औत्तराहौ वा सूर्य सञ्चरति तथा तथा तयोः प्रत्येकं तापक्षेत्रमग्रतो वर्द्धते पृष्ठतश्च हीयते, एवं क्रमेण सञ्चरणशीले तापक्षेत्रे यदैकः सूर्य पूर्वस्यां परोऽपरस्यां वर्त्तते तदा पूर्वपश्चिमदिशोः प्रत्येकं त्रीन् भागांस्तापक्षेत्रं द्वौ भागौ दक्षिणोत्तरयोः प्रत्येकं रजनीति, अथ गणितकर्मविधानं, तत्र मेरुव्यासः १०००० एषां च वर्गो दश कोट्यः ततो दशभिर्गुणने जातं कोटिशतं अस्य वर्गमूलानयने लब्धान्येकत्रिंशद्योजनसहस्राणि षट् शतानि त्रयोविंशत्यधिकानि एष राशिस्त्रिभिर्गुण्यते जातानि चतुर्नवतिसहस्राणि अष्टौ शतान्येकोनसप्तत्यधिकानि एषा दशभिर्भागे लब्धानि नव योजनसहस्राणि चत्वारि शतानि षडशीत्यधिकानि नव च दशभागा योजनस्य । अथ सर्वबाह्यबाहापरिमाणं–

'तीसेण'मित्यादि, तस्याः–तापक्षेत्रसंस्थितेः सर्वबाह्या लवणसमुद्रस्यान्ते–समीपे चतुर्नवतिं योजनसहस्राणि अष्टौ च षट्यधिकानि योजनशतानि चतुरश्च दशभागान् योजनस्य परिक्षेपेण, अत्रोपपादकसूत्रमाह– 'से णं भंते ! परिक्खेवे' इत्यादि, स भदन्त ! परिक्षेपविशेषोऽनन्तरोक्तो य इति गम्यं कुत आख्यात इति गौतमो वदेद्, वदति भगवानाह–गौतम ! यो जंबूद्वीपपरिक्षेपस्तं परिक्षेपं त्रिभिर्गुणयित्वा दशभिश्छित्वा –दशभिर्विभज्य इदमेव पर्यायेणाह–दशभिर्भागे क्रियमाणे एष परिक्षेपविशेष आख्यातो मयाऽन्यैश्चार्हद्भिरिति वदेत् स्वशिष्येभ्यः, इदमुक्तं भवति–तापक्षेत्रस्य परमविष्कम्भः प्रतिपिपादयिषितव्यः, स च जंबूद्वीपपर्यन्त इति तत्परिधि स्थाप्यः योजन ३१६२२७ क्रोश ३ धनूंषि १२८ अं १३ अर्द्धाङ्गुलं १ एतावता च योजनमेकं किञ्चिदूनमिति व्यवहारतः पूर्णं विवक्ष्यते–सांशराशितो निरंशराशेर्गणितस्य सुकरत्वात्, ततो जातं ३१६२२८, एतत् त्रिगुणं क्रियते जातानि नव लक्षाणि अष्टचत्वारिंशत्सहस्राणि षट् शतानि चतुरशीत्यधिकानि ७४८६८४, एषां दशभिर्भजने लब्धानि चतुर्नवतिर्योजनसहस्राणि अष्टौ शतानि अष्टषष्ट्यधिकानि चत्वारश्च दशभागा योजनस्य, अत्रापि त्रिगुणकरणादौ युक्ति प्राग्वत्, नन्वन्यत्र ।

॥ १ ॥ 'रविणो उदयत्थंतरचउणवइसहस्स पणसय छवीसा ।
बायाल सट्ठिभागा कक्कडसंकंतिदिअहंमि ॥ इत्युक्तं ।

अत्रोदयास्तान्तरं प्रकाशक्षेत्रं तापक्षेत्रमित्येकार्थाः तत्र भेदे किं निबन्धनमिति चेत्, उच्यते,

सर्वाभ्यन्तरमण्डलवर्त्ती सूर्यो मंदरदिशि जंबूद्वीपस्य पूर्वतोऽपरतश्चाशीत्यदिकं शतं योजनाना-मवगाह्य चारं चरति तेनाशीत्यधिकशतयोजनानि द्विगुणानि ३६० अस्य वर्गदशगुणवर्गमूलानयने जातानि ११३८ एतच्च द्वीपपरिधितः ३१६२२७ रूपात् शोध्यते ततः स्थितं ३१५०८९, अस्य दशभिर्भागे आगतं ३१५०८ अवशिष्टभागाः, $^{9}/_{10}$ अनयोरंशच्छेदयोः षड्भिर्गुणने जातं, $^{54}/_{60}$ अथास्य राशेस्त्रिगुणने सम्पद्यते यथोक्तराशिः, तथाहि—९४५२६ $^{42}/_{60}$ इदं च सूक्ष्मेक्षिकया दर्शितं, न चैतत् स्वमत्युत्प्रेक्षितमिति भाव्यं, श्रीमुनिचन्द्रसूरिकृतसूर्यमंडलविचारेऽस्य सुविचारितत्वात्, प्रस्तुते च स्थूलन- याश्रयणेन द्वीपपर्यन्तमात्रविवक्षणेन सूत्रोक्तं प्रमाणं सम्पद्यते, द्वीपोदधिपरिधेरेव सर्वत्रा कगमे दशांशकला दि प्रधानात्, अपि परिधिः तरोलवणोदषड्भागं यावत् प्राप्यमाणे तापक्षेत्रे तच्चक्रवालक्षेत्रानुसारेण तत्र विष्कम्भसम्भवात् परमविष्कम्भस्तत्र कथनीय इति निरस्तं, अयमेव चतुर्नवतिसहस्रपञ्चशतादियोजनादिको राशिर्बहुबहुश्रुतैः प्रमाणीकृतः करणसंवादित्वात्, तथाहि—स्वस्वमण्डलपरिधिं षष्ट्या भक्तो मुहूर्त्तगतिं प्रयच्छति, सा च दिवसार्द्धगतमुहूर्तराशिना गुणिता चक्षुस्पर्शं सा चोदयतः सूर्यस्याग्रतो यावानस्तमयतश्च पृष्ठतोऽपि तावानिति द्विगुणितः सन् तापक्षेत्रं भवति, एतच्च चक्षुस्पर्शद्वारे सुव्यक्तं निरूपितमस्ति, इदं च तापक्षेत्रकरणं सर्वबा- ह्यमण्डलसत्कतापक्षेत्रबाहानिरूपणे विभावयिष्यत इति नात्रोदाह्रियते, यदुक्तं चेत् दशभागान् प्रकाशयति इति, तत्र भागः षण्मुहूर्ताक्रमणीयक्षेत्रप्रमाणः, कथं ? सर्वाभ्यन्तरे मण्डले चरति सूर्ये दिवसोऽष्टादशमुहूर्त्तमानः नवमुहूर्त्ताक्रमणीये च क्षेत्रे स्थितः सूर्यो दृश्यो भवति तत एतावत्प्रमाणं सूर्यात् प्राक् तापक्षेत्रं तावच्च अपरतोऽपि, इत्थं चाष्टादशमुहूर्ता-क्रमणयक्षेत्रप्रमाणमेकस्य सूर्यस्य तापक्षेत्रं, तच्च किल दशभागत्रयात्मकं ततो भवत्येकस्मिन् दशभागे षण्मुहूर्ताक्रमणीयक्षेत्रप्रमाणतेति ।

सम्प्रति सामस्त्येनायामतस्तापक्षेत्रपरिमाणं पिपृच्छिषुराह—'तया ण'मित्यादि, यदा भगवन् एतावांस्तापक्षेत्रपरमविष्कम्भ इति गम्यं तदा भगवंस्तापक्षेत्रं सामस्त्येन दक्षिणोत्तरायततया कियदायामेन प्रज्ञप्तम् ?, भगवानाह—गौतम ! अष्टसप्ततिं योजनसहस्राणि त्रीणि च त्रयस्त्रिंश-दधिकानि योजनशतानि योजनस्यैकस्य त्रिभागं च यावदायामेन प्रज्ञप्तं, पञ्चचत्वारिंशद्योजन-सहस्राणि द्वीपगतानि, त्रयस्त्रिंशद्योजनसहस्राणि त्रीणि च योजनशतानि त्रयस्त्रिंशदधिकानि उपरि च योजनत्रिभागयुक्तानि लवणगतानि, द्वयोः सङ्कलने यथोक्तं मानं, इदं च दक्षिणोत्तरत आयाम- परिमाणमवस्थितं न क्वापि मण्डलचारे विपरिवर्त्ततेति ।

मू. (२६१) *मेरुस्स मज्झयारे जाव य लवणस्स रुंदछब्भागो ।*
*तावायामो एसो सगडुद्धीसंठिओ नियमा ॥*

वृ. एनमेवार्थं सामस्त्येन प्रढयति 'मेरुस्स मज्झयारे' इत्यादि, इह मेरुणा सूर्यप्रकाशः प्रतिहन्यत इत्येकेषां मतं नेत्यपरेषां, तत्राद्यानां मते इतंय सम्मतिरूपा गाथा, तस्मिन् पक्षे एवं व्याख्येया—करणं कारो मध्ये कारो मध्यकारः—मध्ये करणं मेरोस्ततस्मिन् सति, कोऽर्थः ? — चक्रवालक्षेत्रत्तापक्षेत्रस्य मेरुं मध्ये कृत्वा यावल्लवणस्य रुंदस्य—निर्देशस्य भावप्रधानत्वाद्रुन्द-तायाः –विस्तारस्य षड्भागः—षष्ठो भागः एतावत्प्रमाणः तापस्य—तापक्षेत्रस्यायामः, तत्र मेरोरारभ्य

जंबूद्वीपपर्यन्तं यावत्पञ्चचत्वारिंशद्योजनसहस्राणि तथा लवणविस्तारो द्वे योजनलक्षे तयोः षष्ठो भागस्त्रयस्त्रिंशद्योजनसहस्राणि त्रीणि योजनशतानि त्रयस्त्रिंशद्योजनानि एको योजनत्रिभाग इति रूपः तत उभयमीलने यथोक्तप्रमाणः, एष च नियमात् शकटोद्धिसंस्थितः, शकटोद्धिसंस्थानोऽन्तः सङ्कुचितो बहिर्विस्तृत इति ।

– अथ येषां मेरुणा न सूर्यप्रकाशः प्रतिहन्यते इति मतं तेषामर्थान्तरसूचनायेयं गाथा तत्पक्षे चैवं व्याख्येया, मेरोर्मध्यभागो–मंदरार्धं यावच्च लवणछन्दताषड्भागः एतेन मंदरार्द्धरूपञ्चयोजन- सहस्राणि पूर्वराशौ प्रक्षिप्यन्ते जायते च त्र्यशीतिसहस्रयोजनानि त्रीणि योजनशतानि त्र्यस्त्रिंशदधिकानि एकश्च योजनत्रिभागः, अनेन च मंदरगतकन्दरादीनामप्यन्तः प्रकाशः स्यादिति लभ्यते, तत्वस्मिन् व्याख्याने श्रीमलयगिरिपादैः सूर्यप्रज्ञप्तिवृत्तौ - "युक्तं चैतत् सम्भावनया तापक्षेत्रायामपरिमाणमन्यथा जंबूद्वीपमध्ये तापक्षेत्रस्य पंचचत्वारिंशद्योजनसहस्रपरिमाणाभ्युपगमे यथा सूर्यो बहिर्निष्क्रामति तथा तत्प्रतिबद्धं तापक्षेत्रमपि, ततो यदा सूर्य सर्वबाह्यमण्डलमुपसंक्रम्य चारं चरति तदा सर्वथा मंदरसमीपे प्रकाशो न प्राप्नोति, अथ च तदापि तत्र मंदरपरिरयपरिक्षेपेणाविशेषं परिमाणमग्रे वक्ष्यते, तस्मात्पादलिप्तसूरिव्या- ख्यानमभ्युपगन्तव्यमिती"त्युक्तं, तत्र तत्रभवत्पादानां गम्भीरमाशयं न विद्मः, बाह्यमण्डलस्थेऽपि सूर्ये इयत्प्रमाणस्य तापक्षेत्रायामस्यावस्थितत्वेन प्रतिपादनात्, उक्ता सर्वाभ्यन्तरे मण्डले तापक्षेत्रसंस्थितिः ।

**मू. (२६२)** *तया णं भंते ! किंसंठिआ अंधकारसंठिई पन्नत्ता ? गोअमा ! उद्धीमुहकलंबुआपुप्फसंठाणसंठिआ अंधकारसंठिई पन्नत्ता, अंतो संकुआ बाहिं वित्थडा तं चेव जाव तीसे णं सव्वब्भंतरिआ बाहा मंदरपव्वयंतेणं छज्जोअणसहस्साइं तिन्नि अ चउवीसे जोअणसे छच्च दसभाए जोअणस्स परिक्खेवेणंति । से णं भंते ! परिक्खेवविसेसे कओ आहिएतिवएज्जा ?, गो० ! जे णं मंदरस्स पव्वयस्स परिक्खेवे तं परिक्खेवं दोहिं गुणेत्ता दसहिं छेत्ता दसहिं भागे हीरमाणे एस णं परिक्खेवविसेसे आहिएति वएज्जा, तीसे णं सव्वबाहिरिआ बाहा लवणसमुद्दंतेणं तेसट्ठी जोअणसहस्साइं दोन्नि य पणयाले जोअणसए छच्च दसभाए जोअणस्स परिक्खेवेणं ।*

*से णं भंते ! परिक्खेवविसेसे कओ आहिएतिवएज्जा ?, गो० ! जे णं जंबुद्दीवस्स परिक्खेवे तं परिक्खेवं दोहिं गुणेत्ता जाव तं चेव तया णं भंते ! अंधयारे केवइए आयामेणं पं० ?, गो० ! अट्ठहत्तरिं जोअणसहस्साइं तिन्नि अ तेत्तीसे जोअणसए तिभागं च आयामेणं पं० ।*

*जया णं भंते ! सूरिए सव्वबाहिरमंडलं उवसंकमित्ता चारं चरइ तया णं किंसंठिआ तावक्खित्तसंठिई पं० ?, गो० ? उद्धीमुहकलंबुआपुप्फसंठाणसंठिआ पन्नत्ता, तं चेव सव्वं नेअव्वं नवरं नाणत्तं जं अंधयारसंठिइए पुव्ववण्णिअं पमाणं तं तावखित्तसंठिईए नेअव्वं, जं तावखित्तसंठिईए पुव्ववण्णिअं पमाणं तं अंधयारसंठिईए नेअव्वंति ।*

**वृ.** सम्प्रति प्रकाशपृष्ठलग्नत्वेन तद्विपर्ययभूतत्वेन च सर्वाभ्यन्तरमण्डलेऽन्धकारसंस्थितिं पृच्छति–तदा–सर्वाभ्यन्तरमण्डलचरणकाले कर्कसंक्रान्तिदिने किंसंस्थाना अन्धकारसंस्थिति प्रज्ञप्ता ?, यद्यपि प्रकाशतमसोः सहावस्थायित्वविरोधात् समानकालीनत्वासंभवः तथापि अवशिष्टेषु चतुर्षु जंबूद्वीपचक्रवालदशभागेषु सम्भावनया पृच्छत आशयात्रोक्तविरोधः, ननु आलो-

शामावरूपस्य तमसः संस्थानासंभवेन कुतस्तत्पृच्छौचितीमंचति ?, उच्यते, नीलं शीतं बहलं तम इत्यादिपुद्गलधर्माणामभ्रान्तसार्वजनीनव्यवहारसिद्धत्वेनास्य पौद्गलिकत्वे सिद्धे संस्थानस्यापि सिद्धेः, यथा चास्य पौद्गलिकत्वं तथाऽन्यत्र पूर्वाचार्यैः सुचर्चितत्वान्नात्र विस्तारभिया चर्च्यते इति, ऊर्ध्वमुखकलम्बुकापुष्पसंस्थानसंस्थिता अन्धकारसंस्थिति प्रज्ञप्ता, अन्तः संकुचिता बहिर्विस्तृतेत्यादि तदेव—तापक्षेत्रसंस्थित्यधिकारोक्तमेव ग्राह्यं, कियत्पर्यन्तमित्याह—यावत्तस्याः—अन्धकारसंस्थितेः सर्वाभ्यन्तरिका बाहा मंदरपर्वतान्ते षड् योजनसहस्राणि त्रीणि चतुर्विंशत्यधिकानि योजनशतानि षट् च दशभागान् योजनस्य परिक्षेपेण। अत्रोपपत्तिं सूत्रकृदेवाह—'से णं०' प्राग्वत्, उत्तरसूत्रे यो मेरुपरिक्षेपः स त्रयोविंशतिषट्शताधिकैकत्रिंशद्योजनसहस्रमानस्तं परिक्षेपं द्वाभ्यां गुणयित्वा, सर्वाभ्यन्तरमण्डलस्थे सूर्ये तापक्षेत्रसत्कानां त्रयाणां भागानामपान्तराले रजनिक्षेत्रस्य दशभागद्वय २ मानत्वात् दशभि- र्विभज्य—दशभिर्भागे ह्रियमाणे एष परिक्षेपविशेष आख्यात इति वदेदेतद्भगवन् ! गौ० स्वशिष्येभ्यः, ३१६२३ एतद् द्वाभ्यां गुण्यते जातानि त्रिषष्टिसहस्राणि द्वे शते षट्चत्वा- रिंशदधिके एषां दशभिर्भागे लब्धं यथोक्तं मानं।

अथ बाह्यामाह—'सीए णं'मित्यादि, तस्याः—अन्धकारसंस्थितेः सर्वबाह्यबाहा पूर्वतोऽपरतश्च परमविष्कम्भो लवणसमुद्रान्ते त्रिषष्टिं योजनसहस्राणि द्वे च पंचचत्वारिंशदधिके योजनशते षट् च दशभागान् योजनस्य परिक्षेपेणेति, अत्रोपपत्तिं सूत्रकृदेवाह—'से ण'मित्यादि, व्यक्तं, नवरं जंबूद्वीपपरिक्षेपः ३१६२२८ तं परिक्षेपं प्रागुक्तहेतुना द्वाभ्यां गुणयित्वा दशभिर्भागे ह्रियमाणे एष परिक्षेपविशेष आख्यात इति वदेत्, अथास्या अवस्थितबाहामाह—तदा सर्वाभ्यन्तरमण्डलचारकाले अन्धकारं कियदायामेन प्रज्ञप्तम् ?, गौ० अष्टसप्ततिं योजनसहस्राणि त्रीणि च त्रयस्त्रिंशदधिकानि योजनशतानि योजनत्रिभागं चैकं, अवस्थिततापक्षेत्रसंस्थित्यायाम इवायमपि बोध्यः, तेन मंदरार्द्धसत्कपंचसहस्रयोज- नान्यधिकानि मन्तव्यानि सूर्यप्रकाशाभाववति क्षेत्रे स्वत एवान्धकारप्रसरणात्, कन्दरादौ तथा प्रत्यक्षदर्शनात्, सूत्रेऽविवक्षितान्यपि व्याख्यातो विशेषप्रतिपत्तिरिति दर्शितानि। अथ पश्चानुपूर्व्या तापक्षेत्रसंस्थितिं पृच्छति—

'जया ण'मित्यादि, यदा भगवन् ! सूर्य सर्वबाह्यमण्डलमुपसंक्रम्य चारं चरति तदा किंसंस्थानसंस्थिता तापक्षेत्रसंस्थिति प्रज्ञप्ता ?, गौतम ! ऊर्ध्वमुखकलम्बुकापुष्पसंस्थानसंस्थिता प्रज्ञप्ता, तदेव—अभ्यन्तरमण्डलगततापक्षेत्रसंस्थितिसत्कमेव सर्वमवस्थितानवस्थितबाहादिकं नेतव्यं, नवरमिदं नानात्वं—विशेषः यदन्धकार संस्थितेः पूर्वं-सर्वाभ्यन्तरमंडलगततापक्षेत्र संस्थिति प्रकरणे वर्णितं ६३२४५ $^{6}/_{10}$, इत्येवंरूपं प्रमाणं तत्तापक्षेत्र संस्थितेः प्रमाणं नेतव्यं, द्वीपपरिधिदशभागसत्कभागद्वयप्रमाणत्वात्, यत्तापक्षेत्रसंस्थितेः पूर्ववर्णितम् ९४८६८ $^{4}/_{10}$ इत्येवंरूपं प्रमाणं तदन्धकारसंस्थितेर्नेतव्यं द्वीपपरिधि- दशभागसत्कभागत्रयप्रमाणत्वात्, यदत्र तापक्षेत्रस्याल्पत्वं तमसश्चानल्पत्वं तत्र मंदलेश्याकत्वं हेतुरिति, एवं सर्वाभ्यन्तरमण्डलेऽभ्यन्तरबाहाविष्कम्भे यत्तापक्षेत्रपरिमाणं ९४८६ $^{9}/_{10}$ इत्येवंरूपं तदत्रान्धकारसंस्थितेर्ज्ञेयं, यच्च तत्रैव विष्कम्भेऽन्धकारसंस्थितेः ६३२४ $^{6}/_{10}$ इत्येवं तापक्षेत्रस्यात्र मन्तव्य, ननु इदं सर्वबाह्यमंण्डलसत्कतापक्षेत्रप्ररूपणं, यदि तन्मंडलपरिधौ ३१८३१५ रूपे षष्टिभक्ते लब्धा ५३०५ रूपा मुहूर्त्तगति तदा च

सर्वजघन्यो दिवसो द्वादशमुहूर्त्तप्रमाणोऽतो द्वादशभिः सा गुण्यते तथा च कृते ६३६६३ इत्येवंरूपो राशि स्यात् ! प्रदिवोक्तपरिधिर्द्विगुणितो दशभिर्भज्यते तदाप्ययमेव राशिर्द्विधाकरमरीतिलब्ध-स्तत्किमेतस्मात् सूत्रोक्तराशिर्विभिद्यते ?, उच्यते, सूत्रकारेण द्विप्रकारेऽप्यर्थपक्षयैव करणरीतिर्दर्श्य-मानत्वान्नात्र दोषः, अभ्यन्तरमण्डले परिधिर्यथा न न्यूनीक्रियते तथा बाह्यमंडले नाधिकीक्रियते तत्र विवक्षैव हेतुरिति ॥ सम्प्रति सूर्याधिकारादेतत्सम्बन्धिनं दूरासन्नादिदर्शनरूपं विचारं वक्तुं दशमं द्वारमाह–

*मू. (२६३) जंबुद्दीवे णं भंते ! दीवे सूरिआ उग्गमणमुहुत्तंसि दूरे अ मूले अ दीसंति मज्झंतिअमुहुत्तंसि मूले अ दूरे अ दीसंति अत्थमणमुहुत्तंसि दूरे अ मूले अ दीसंति ?, हंता गो० तं चेव जाव दीसंति, जंबुद्दीवे णं भंते ! सूरिआ उग्गमणमुहुत्तंसि अ मज्झंतिअमुहुत्तंसि अ अत्थमणमुहुत्तंसि अ सव्वत्थ समा उच्चत्तेणं ?, हंता तं चेव जाव उच्चत्तेणं । जइ णं भंते ! जंबुद्दीवे दीवे सूरिआ उग्गमणमुहुत्तंसि अ मज्झं० अत्थ० सव्वत्थ समा उच्चत्तेणं, कम्हा णं भंते ! जंबुद्दीवे दीवे सूरिया उग्गमणमुहुत्तंसि दूरे अ मूले अ दीसंति०, गो० लेसापडिघाएणं उग्गमणमुहुत्तंसि दूरे अ मूले अ दीसंति इति लेसाहितावेणं मज्झंतिअमुहुत्तंसि मूले अ दूरे अ दीसंति लेसापडिघाएणं अत्थमणमुहुत्तंसि दूरे अ मूले अ दीसंति, एवं खलु गो० जाव दिसंति ।*

वृ. जंबूद्वीपे द्वीपे भदन्त ! सूर्यौ उद्‌गमनमुहूर्ते–उदयोपलक्षिते मुहूर्ते एवमस्तमनमुहूर्ते, सूत्र यकारलोप आर्षत्वात्, दूरे च–द्रष्टस्थानापेक्षया विप्रकृष्टे मूले च–द्रष्टप्रतीत्यपेक्षया आसन्ने दृश्यते, द्रष्टारो हि स्वरूपतः सप्तचत्वारिंशता योजनसहस्रैः समधिकैर्व्यवहितमुद्‌गमनास्तमनयोः सूर्यं पश्यन्ति, आसन्नं पुनर्मन्यन्ते, विप्रकृष्टं सन्तमपि न प्रतिपद्यन्ते, 'मध्यान्तिकमुहूर्त' इति मध्यो–मध्यमोऽन्तो–विभागो गमनस्य दिवसस्य वा मध्यान्तः स यस्य मुहूर्तस्यास्ति स मध्यान्तिकः स चासौ मुहूर्त्तश्चेति मध्यान्तिको–मध्याह्नमुहूर्त इत्यर्थः, तत्र मूले चासन्ने देशे द्रष्टस्थानापेक्षया दूरे च–विप्रकृष्टे देशे द्रष्टप्रतीत्यपेक्षया सूर्यौ दृश्येते, द्रष्टा हि मध्याह्ने उदयास्तमयनदर्शनापेक्षया आसन्नं रविं पश्यति, योजनशताष्टकेनैव तदाऽस्य व्यवहितत्वात् मन्यते पुनरुदयास्तमयनप्रती-त्यपेक्षया व्यवहितं इति, अत्र सर्वत्र काका प्रश्नोऽवसेयः, अत्र भगवानाह–

तदेव यद्‌भवताऽनन्तरमेव प्रश्नविषयीकृतं तत्तथैवेत्यर्थः यावद् दृश्यते इति ।

अत्र चर्मदृशां जायमाना प्रतीतिर्मा ज्ञानदृशां प्रतीत्या सह विसंवदत्विति संवादाय पुनर्गौतमः पृच्छति–'जंबुद्दीवे ण'मित्यादि, जंबूद्वीपे भदन्त ! द्वीपे उदगमनमुहूर्ते च मध्यान्तिकमुहूर्ते च अस्तमयनमुहूर्ते च अत्र चशब्दा वाशब्दार्था सूर्यौ सर्वत्र–उक्तकालेषु समौ उच्चत्वेन, अत्रापि काकुपाठात् प्रश्नावगति, भगवानाह–तदेव यद्‌भवता मां प्रति पृष्टं यावदुच्चत्वेनेति, सर्वत्र–उद्‌गमनमुहूर्तादिषु समौ समव्यवधानादुच्चत्वेन समभूतलापेक्षयाऽष्टौ योजनशतानीतिकृत्वा, न हि सतीं जनप्रतीतिं वयमपलपाम इति भगवदुक्तमेवानुवदन्नत्र विप्रतिपत्तीबीजं प्रष्टुमाह–

'जइ ण'मित्यादि, प्रश्नसूत्रं स्पष्टं, उत्तरसूत्रे गौतम ! लेश्यायाः–सूर्यमंडलगततेजसः प्रतिघातेन दूरतरत्वादुद्‌गमनदेशस्य तदप्रसरणेनेत्यर्थः उद्‌गमनमुहूर्ते दूरे च मूले च दृश्यते, लेश्याप्रतिघाते हि सुखदृश्यत्वेन स्वभावेन दूरस्थोऽपि सूर्य आसन्नप्रतीतिं जनयति, एवमस्तमय-

नमुहूर्तेऽपि व्याख्येयं, द्वयोः समगमकत्वात्, मध्यान्तिकमुहूर्ते तु लेश्याया अभितापेन—प्रतापेन सर्वतस्तेजःप्रतापेनेत्यर्थः, मूले च दूरे च दृश्येते, मध्याह्ने ह्यासन्नोऽपि सूर्यस्तीव्रतेजसा दुर्दर्शत्वेन दूरप्रतीतिं जनयति, एवमेवासन्नत्वेन दीप्तलेश्याकत्वं दिनवृद्धिधर्म्मादयो भावा दूरतरत्वेन मन्दलेश्याकत्वं दिनहानिशीतादयश्च वाच्याः ।

मू. (२६४) *जंबुद्दीवे णं भंते! दीवे सूरिआ किं तीअं खेत्तं गच्छंति पडुप्पन्नं खेत्तं गच्छंति अनागयं खेत्तं गच्छंति?, गो० ! नो तीअं खेत्तं गच्छंति पडुप्पन्नं खेत्तं गच्छंति नो अनागयं खेत्तं गच्छंति, तं भंते! किं पुट्ठं गच्छंति जाव नियमा छद्दिसिंति, एवं ओभासेंति ।*

*तं भंते ! किं पुट्ठं ओभासेंति ? एवं आहारपयाइं नेअव्वाइं पुट्ठोगाढमनंतरअणुमहआदिविसयाणुपुव्वी अ जाव निअमा छद्दिसिं, एवं उज्जोवेंति तवेंति पभासेंति ।*

वृ. उद्गमनास्तमयनादीनि च ज्योतिष्काणां गतिप्रवृत्ततया जायन्ते इति तेषां गमनप्रश्नायैकादशं द्वारमाह—जंबूद्वीपे भदन्त ! द्वीपे सूर्यौ किमतीतं— गतिविषयीकृतं क्षेत्रं गच्छतः—अतिक्रामतः उत प्रत्युत्पन्नं—वर्त्तमानं गतिविषयीक्रियमाणं उत अनागतं-गतिविषयीकरिष्यमाणं, एतेन इह च यदाकाशखण्डं सूर्य स्वतेजसा व्याप्नोति तत्क्षेत्रमुच्यते तेनास्यातीतेत्यादिव्यवहारविषयत्वं नोपपद्यते अनादिनिधनत्वादिति शङ्का निरस्ता, भगवानाह—गौ० नोशब्दस्य निषेधार्थत्वान्नातीतं क्षेत्रं गच्छतः, अतीतक्रियाविषयीकृते वर्त्तमान- क्रियाया एवासम्भवात्, प्रत्युत्पन्नं गच्छतः वर्त्तमानक्रियाविषये वर्त्तमानक्रियायाः सम्भवात्, नो अनागतं अनागतक्रियाविषयेऽपि तदसम्भवात्, अत्र प्रस्तावाद् गतिविषयंक्षेत्रं कीदृक स्यादिति प्रष्टुमाह—

'तं भंते! किं पुट्ठं' इत्यादि, अत्र यावत्पदसंग्रहोऽयं—'पुट्ठं गच्छंति, गोअमा ! पुट्ठं गच्छंति, नो अपुट्ठं गच्छंति, तं भंते! किं ओगाढं गच्छंति अनोगाढं गच्छंति ?, गोअमा ! ओगाढं गच्छंति, नो अणोगाढं गच्छंति, तं भंते ! किं अनंतरोगाढं गच्छंति, परंपरोगाढं गच्छंति ?, गोअमा ! अनंतरोगाढं गच्छंति नो परंपरोगाढं गच्छंति, तं भंते ! किं अणुं गच्छंति बायरं गच्छंति ?, गोअमा ! अणुंपि गच्छंति बायरंपि गच्छंति । तं भंते ! किं उद्धं गच्छंति अहे गच्छंति तिरियं गच्छंति ?, गो० तिन्निवि । तं भंते ! किं आइं गच्छंति मज्झे गच्छंति पज्जवसाणे गच्छंति ? गो० तिन्निवि, तं भंते ! किं सविसयं गच्छंति, अविसयं गच्छंति ?, गोअमा ! सविसयं गच्छंति, नो अविसयं गच्छंति, तं भंते ! किं आणुपुव्विं गच्छंति अणाणुपुव्विं गच्छंति ?, गो० ! आणुपुव्विं गच्छंति नो अणाणुपुव्विं गच्छंति, तं भंते ! किं एगदिसिं गच्छंति छद्दिसिं गच्छंति?, गो० ! नियमा छद्दिसिं गच्छंति'त्ति, अत्र व्याख्या—

तद् भदन्त ! क्षेत्रं किं स्पृष्टं—सूर्यबिम्बेन सह स्पर्शमागतं गच्छतः—अतिक्रामतः उतास्पृष्टं, अत्र पृच्छकस्यायमाशयः— गम्यमानं हि क्षेत्रं किञ्चित्स्पृष्टमतिक्रम्यते यथाऽपवरकक्षेत्रं किंचिच्चास्पृष्टं यथा देहलीक्षेत्रमतोऽत्र कः प्रकार इति, भगवानाह—स्पृष्टं गच्छतः नास्पृष्टं, अत्र सूर्यबिम्बेन सह स्पर्शनं सूर्यबिम्बावगाहक्षेत्राद्बहिरपि सम्भवति स्पर्शनाया अवगाहनातोऽधिकविषयत्वात्, ततः प्रश्नयति—तद्भदन्त ! स्पृष्टं क्षेत्रं अवगाढं—सूर्यबिम्बेनाश्रयीकृतंअधिष्ठितमित्यर्थः उतानवगाढं तेनानाश्रयीकृतं नाधिष्ठितमित्यर्थः, भगवानाह—गौतम ! अवगाढं क्षेत्रं गच्छतः नानावगाढं,

आश्रितस्यैव त्यजनयोगात्, अथ यद्भदन्त! अवगाढं तदनन्तरावगाढं–अव्यवधानेनाश्रयीकृतं उत परम्परावगाढं–व्यवधानेनाश्रयीकृतं ?, भगवानाह–गौतम! अनन्तरावगाढं न पुनः परम्परावगाढं, किमुक्तं भवति ?–यस्मिन्नाकाशखण्डे यो मण्डलावयवोऽव्यवधानेनावगाढः स मण्डलावयवस्तमेवाकाशखण्डं गच्छति न पुनरपरमण्डलावयवावगाढं तस्य व्यवहितत्वेन परम्परावगाढत्वात्, तच्चाल्पमनल्पमपि यादित्याह–तद्भदन्त! अणुं गच्छतः बादरं वा ?, गौतम अण्वपि सर्वाभ्यन्तरमण्डलक्षेत्रापेक्षया बादरमपि सर्वबाह्यमण्डलक्षेत्रापेक्षया, तत्तन्मण्डलक्षेत्रानुसारेण गमनसम्भवात्, गमनं च ऊर्ध्वाधस्तिर्यग्गतित्रयेऽपि सम्भवेदिति प्रश्नयति–

तद्भदन्त! क्षेत्रमूर्ध्वमधस्तिर्यग्वा गच्छतः ?, गौतम! ऊर्ध्वमपि तिर्यगप्यधोऽपि, ऊर्ध्वाधस्तिर्यक्त्वं च योजनैकषष्टिभागरूपचतुर्विंशतिभागप्रमाणोत्सेधापेक्षया द्रष्टव्यं, अन्यथा 'जाव नियमाछद्दिसिं' इति चरमसूत्रेण सह विरोधः स्यात्, इदं च व्याख्यानं प्रज्ञापनोपाङ्गस्यैकादश भाषापदाष्टाविंशतितमाहारपदगतोर्ध्वाधस्तिर्यग्विषयकनिर्वचनसूत्रव्याख्यानुसारेण कृतमिति बोध्यं, गमनं च क्रिया सा च बहुसामयिकत्वात्त्रिकालनिर्वर्तनीया स्यादित्यादिमध्यादिप्रश्नः, तद्भदन्त! किमादौ गच्छतः किं मध्ये उत पर्यवसाने वा ?, भगवानाह– गौतम! षष्टिमुहूर्त्तप्रमाणस्य मण्डलसंक्रमकालस्यादावपि मध्येऽपि पर्यवसानेऽपि वा गच्छतः, उक्तप्रकारत्रयेण मंडलकालसमापनात्। अथ तद्भदन्त! स्वविषयं–स्वोचितं क्षेत्रं गच्छतः उत अविषयं वा स्वानुचितमित्यर्थः, गौ० स्वविषयं स्पृष्टावगाढनिरन्तरावगाढस्वरूपं गच्छतः न अविषयं–अस्पृष्टानवगाढपरम्परावगाढक्षेत्राणां गमनायोग्यत्वात्, तद्भदन्त! आनुपूर्व्या–क्रमेण यथासन्नं गच्छतः उत अनानुपूर्व्या–क्रमेणानासन्नमित्यर्थः, सूत्रे द्वितीया तृतीयार्थे, गौ० आनुपूर्व्या गच्छतः नानानुपूर्व्या व्यवस्थाहानेः, प्रागुक्तमेव दिक्प्रश्नं व्यक्त्या आह–तद्भदन्त! किमेकदिग्विषयकं क्षेत्रं गच्छतः यावत् षड्दिग्विषयकं ?, गौ० नियमात् षड्दिशि, तत्र पूर्वादिषु तिर्यगदिक्षु उदितः सन् स्फुटमेव गच्छन् दृश्यते, ऊर्ध्वाधोदिग्गमनं च यथोपपद्यते तथा प्राग्दर्शितं।

सम्प्रत्येतदतिदेशेनावभासनादिसूत्राण्याह–'एवं ओभासेंति' इत्यादि, 'एव' मिति गमनसूत्रप्रकारेण अवभासयतः–ईषदुद्योतयतः, यथा स्थूरतरमेव दृश्यते, तमेव प्रकारमीषद्दर्शयति–तद्भदन्त! क्षेत्रं स्पृष्टं–सूर्यस्तेजसा व्याप्तं अवभासयतः उतास्पृष्टं ?, भगवानाह–स्पृष्टं नास्पृष्टं, दीपादिभास्वरद्रव्याणां प्रभाया गृहादिस्पर्शपूर्वकमेवावभासकत्वदर्शनात्, एवं–स्पृष्टपदरीत्या आहारपदानि–चतुर्थोपाङ्गगताष्टाविंशतितमपदे आहारग्रहणविषयकानि पदानि–द्वाराणि नेतव्यानि, तद्यथा–'पुट्ठो' इत्यादि, प्रथमतः स्पृष्टविषयं सूत्रं, ततोऽवगाढसूत्रं ततोऽणुबादरसूत्रं तत ऊर्ध्वाधःप्रभृतिसूत्रं, तत आई इति उपलक्षणमेतत् आदिमध्यावसानसूत्रं ततो विषयसूत्रं तदनन्तरमानुपूर्वीसूत्रं, ततो यावत् नियमात् षड्दिशीति सूत्रं, अत्र यथासम्भवं विपक्षसूत्राण्युपलक्षणाद् ज्ञेयानि, अत्र चोर्ध्वादिदिग्भावना सूत्रकृत् स्वयमेव वक्ष्यति, एवमुद्द्योतयतो–भृशं प्रकाशयतः यथा स्थूलमेव दृश्यते, तापयतः–अपनीतशीतं कुरुतः, यथा सूक्ष्मं पिपीलिकादि दृश्यते तथा कुरुतः, प्रभासयतः–अतितापयोगादविशेषतोऽपनीतशीतं कुरुतो यथा सूक्ष्मतरं दृश्यते, उक्तमेवार्थं शिष्यहिताय प्रकारान्तरेण प्रश्नयितुं द्वादशद्वारमाह–

**मू. (२६५)** *जंबुद्दीवे णं भंते ! दीवे सूरिआणं किं तीते खित्ते किरिआ कज्जइ पडुप्पण्णे० अणागए० ?, गो ! नो तीए खित्ते किरिआ कज्जइ पडुप्पन्ने कज्जइ नो अणागए, सा भंते ! किं पुट्ठा कज्जइ० ?, गोअमा ! पुट्ठा० – नो अणापुट्ठा कज्जइ जाव निअमा छद्दिसिं ।*

**वृ.** 'जंबुद्दीवे ण'मित्यादि, जंबूद्वीपे भदन्त ! द्वीपे द्वयोः सूर्ययोः किमतीते क्षेत्रे –पूर्वोक्त-स्वरूपे क्रिया–अवभासनादिका क्रियते, कर्मकर्त्तरिप्रयोगोऽयं तेन भवतीत्यर्थः, प्रत्युत्पन्ने अनागते वा ?, भगवानाह –गौतम ! नोऽतीते क्षेत्रे क्रिया क्रियते, प्रत्युत्पन्ने क्रियते, नो अनागते, व्याख्यानं प्राग्वत्, सा क्रिया भगवन् ! किं स्पृष्टा क्रियते उतास्पृष्टा क्रियते ?, गौतम ! स्पृष्टा तेजसा स्पर्शनं स्पृष्टं भावे क्तप्रत्ययविधानात् तद्योगाद्या सा स्पृष्टा उच्यते, कोऽर्थः ? –सूर्यतेजसा क्षेत्र-स्पर्शने ऽवभासनमुद्योतनं तापनं प्रभासनं चेत्यादिका क्रिया स्यादिति, अथवा स्पृष्टात्–स्पर्शनादिति पञ्चमीपरतया व्याख्येयं न अस्पृष्टाक्रियते, अत्र यावत्पदात् आहारपदानि ग्राह्याणि, तत्रेयं सूत्रपद्धति

से णं भंते ! किं ओगाढा अनोगाढा ?, ओगाढा नो अणोगाढा, अत्रापि भावे क्तप्रत्ययविधानादवगाढं–अवगाहनं क्षेत्रे तेजःपुद्गलानामवस्थानं तद्योगाद्या साऽवगाढा क्रिया, एवमनन्तरावगाढपरम्परावगाढसूत्रं, 'सा णं भंते ! अणू किज्जइ बायरा किज्जइ ?, गोअमा ! अणूवि बायराविं' त्ति, सा क्रिया अवभासनादिका किमणुर्वा बादरा वा क्रियते ?, गौतम ! अणुरपि–सर्वाभ्यन्तरमण्डलक्षेत्रावभासनापेक्षया बादराऽपि–सर्वबाह्यमण्डलक्षेत्रावभासनापेक्षया, ऊर्ध्वाधस्तिर्यक्-सूत्रविभावनां सूत्रकृदनन्तरमेव करिष्यति, 'सा णं भंते ! किं आइं किज्जइ मज्झे किज्जइ पज्जवसाणे किज्जइ ?, गोअमा ! आईपि किज्जइ मज्झेवि किज्जइ पज्जवसाणेवि किज्जइ' त्ति गमनसूत्र इवात्रापि भावना एवं विषयसूत्रमानुपूर्वीसूत्रं षड्दिक्सूत्रं च ज्ञेयमिति । अथ त्रयोदशद्वारमाह–

**मू. (२६६)** *जंबुद्दीवे णं भंते ! दीवे सूरिआ केवइअं खेत्तं उद्धं तवयंति अहे तिरिअं च गोअमा ! एगं जोअणसयं उद्धं तवयंति अट्ठारससयजोअणाइं अहे तवयंति सीआलीसं जोअणसहस्साइं दोन्नि अ तेवट्ठे जोअणसए एगवीसं च सट्ठिभाए जोअणस्स तिरिअं तवयंतिति १ २ ।*

**वृ.** 'जंबुद्दीवे ण'मित्यादि, प्रश्नसूत्रं व्यक्तं, उत्तरसूत्रे गौतम ! ऊर्ध्वमेकं योजनशतं तापयतः, स्वविमानस्योपरि योजनशतप्रमाणस्यैव तापक्षेत्रस्य भावात्, अष्टादशशतयोजनान्य-धस्तापयतः, कथं ?, सूर्याभ्यामष्टासु योजनशतेष्वधोगतेषु भूतलं, तस्माच्च योजनसहस्रे अधोग्रामाः स्युस्तांश्च यावत्तापनात्, सप्तचत्वारिंशद्योजनसहस्राणि इत्यादि प्रमाणं क्षेत्रं तिर्य[illegible]पयतः, एतच्च सर्वोत्कृष्टदिवसचुःस्पर्शापेक्षया बोध्यं, तिर्यगदिक्कथनेन पूर्वपश्चिमयोरेवेदं ग्राह्यं, उत्तरतस्तु १८०न्यून ४५ योजनसहस्राणि याम्यतःपुनर्द्वीपे १८०योजनानि, लवणे तु योजनानि ३३ सहस्राणि ३ शतानि त्रयस्त्रिंशदधिकानि योजनत्रिभागयुतानी। अथ मनुष्यक्षेत्रवर्त्तिज्योतिष्कस्वरूपंप्रश्नु

**मू. (२६७)** *अंतो णं भंते ! माणुसुत्तरस्स पव्वयस्स जे चंदिमसूरिअगहगणनक्खत्ततारारूवा णं भंते ! देवा किं उद्धोववण्णगा कप्पोववण्णगा विमाणोववण्णगा चारोववण्णगा चारट्ठिईआ गइरइआ गइसमावण्णगा ?, गो० अंतो णं माणुसुत्तरस्स पव्वयस्स जे चंदिमसूरिअ जाव तारारूवे ते णं देवा नो उद्धोववण्णगा नो कप्पोववण्णगा विमाणोववण्णगा चारोववण्णगा नो चारट्ठिईआ गइरइआ गइसमावण्णगा उद्धीमुहकलंबुआपुप्फसंठाणसंठिएहिं जोअणसाहस्सिएहिं तावखेत्तेहिं*

*साहस्सिआहिं वेउव्विआहिं बाहिराहिं परिसाहिं महयाहयनट्टगीअवाइअतंतीतलतालतुडि-अघणमुइंगपडुप्पवाइअरवेणं दिव्वाइं भोगभोगाइं भुंजमाणा महया उक्किट्ठिसीहणायबोलकल-कलरवेणं अच्छं पव्वयरायं पयाहिणावत्तमण्डलचारं मेरुं अणुपरिअट्टंति ।*

**वृ.** 'अंतो णं भंते'इत्यादि, अन्तर्मध्ये भदन्त ! मानुषोत्तरस्य मनुष्येभ्य उत्तरः—अग्रवर्ती एनवमधीकृत्य मनुष्यामामुत्पत्तिविपत्तिसिद्धिसम्पत्तिप्रभृतिभावात् अथवा मनुष्याणामुत्तरो—विद्यादिशक्त्यभावेऽनुल्लंघनीयो मानुषोत्तरस्तस्य पर्वतस्य ये चन्द्रसूर्यग्रहगणनक्षत्रतारारूप-ज्योतिष्काः ते भदन्त ! अत्र सर्वत्रैव प्रश्ने भदन्तेति भगवत्संबोधनं पुनश्चक्रे तत्पृच्छकस्य भगवन्नामोच्चारेऽतिप्रीतिमत्वात् देवाः किमूर्ध्वोपपन्नाः—सौधर्मादिभ्यो द्वादशभ्यः कल्पेभ्य ऊर्ध्वं ग्रैवेयकानुत्तरविमानेषूपपन्नाः—उत्पन्नाः— कल्पातीता इत्यर्थः कल्पोपपन्नाः—सौधर्मादिदेव-लोकोत्पन्नाः विमानेषु—ज्योतिसम्बन्धिषु उपपन्नाः चारो—मण्डलगत्या परिभ्रमणं तमुपपन्नाः—आश्रितवन्तः उत चारस्य—यथोक्तस्वरूपस्य स्थितिः—अभावो येषां ते चारस्थितिका अपगतचारा इत्यर्थः गतौ रतिः—आसक्तिः प्रीतिर्येषां ते गतिरतिकाः, अनेन गतौ रतिमात्रमुक्तं ।

सम्प्रति साक्षाद् गतिं प्रश्नयति—गतिसमापन्ना—गतियुक्ताः ?, भगवानाह—गौतम ! अन्तर्मानुषोत्तरस्य पर्वतस्य ये चन्द्रसूर्यग्रहगणनक्षत्रतारारूपज्योतिष्कास्ते देवा नोर्ध्वोपपन्नाः नो कल्पोपपन्नाः विमानोपपन्नाः चारोपपन्नाः नो चारस्थितिकाः अत एव गतिरतिकाः गतिसमायुक्ताः, ऊर्ध्वमुखकलम्बुकापुष्पसंस्थानसंस्थितैरिति प्राग्वत्, योजनसाहस्रिकैः—अनेकयोजनसह-स्रप्रमाणैस्तापक्षेत्रैः, अत्रेत्थंभावे तृतीया, तेनेत्थंभूतैस्तैर्मेरुं परिवर्त्तन्त इति क्रियायोगः, कोऽर्थः उक्तस्वरूपाणि तापक्षेत्राणि कुर्वन्ति जंबूद्वीपगतं मेरु परितो भ्रमन्ति, तापक्षेत्रविशेषणं चन्द्रसूर्याणामेव, नतु नक्षत्रादीनां, यथासम्भवं विशेषणानां नियोज्यत्वात्, अथैतान् साधारण्येन विशेषयन्नाह—साहस्रिकाभिः, नाट्यगानवादनादिकर्मप्रवणत्वात्, न तु तृतीयपर्षद्रूपाभि, पर्षद्भि—देवसमूहरूपाभि कर्तृभूताभिः, बहुवचनं चात्र नाट्यादिगणापेक्षया, महता प्रकारेणाहतानि—भृशं ताडितानि नाट्ये गीते वादित्रे च—वादनरूपे त्रिविधेऽपि सङ्गीते इत्यर्थः, तन्त्रीतलतालरूपत्रुटितानि शेषं प्राग्वत् । तथा स्वभावतो गतिरतिकैः—बाह्यपर्षदन्तर्गतैर्देवैर्वेगेन गच्छत्सु विमानेषूत्कृष्टो यः सिंहनादो मुच्यते यौ च बोलकलकलौ क्रियेते, तत्र बोलो नाम मुखे हस्तं दत्वा महता शब्देन पूत्करणं, कलकलश्च व्याकुलशब्दसमूहस्तद्रवेण महता २ समुद्ररवभूतमिव कुर्वाणा मेरुमिति योगः, किंविशिष्टमित्याह—अच्छं—अतीवनिर्मलं जाम्बूनदमयत्वात् रत्नबहुलत्वाच्च पर्वत-राजं—पर्वतेन्द्रं 'प्रदक्षिणावर्त्तमण्डलचार'मिति प्रकर्षेण सर्वासु दिक्षु विदिक्षु च परिभ्रमतां चन्द्रादीनां दक्षिण एव मेरुर्भवति यस्मिन्नावर्त्तने—मण्डलपरिभ्रमणरूपे स प्रदक्षिणः प्रदक्षिणः आवर्त्तो येषां मण्डलानां तानि तथा तेषु यथा चारो भवति तथा क्रियाविशेषण तेन प्रदक्षिणावर्त्तमण्डलं चारं यथा स्यात्तथा मेरुं परिवर्त्तन्ते इति योज्यं, अयमर्थः—चन्द्रादयः सर्वेऽपि समयक्षेत्रवर्त्तिनो मेरुं परितः प्रदक्षिणावर्त्तमंडलचारेण भ्रमन्तीति । अथ पञ्चदशमं द्वारमाह—

**मू. (२६८)** *तेसि णं भंते ! देवाणं जाहे इंदे चुए भवइ से कहमियाणिं पकरेंति ?, गो० ! ताहे चत्तारि पंच वा सामानिआ देवा तं ठाणं उवसंपज्जित्ता णं विहरंति जाव तत्थ अन्ने इंदे उव-*

*वण्णो भवइ । इंदट्ठाणे णं भंते ! केवइअं कालं उववाएणं विरहिए ?, गो० ! जहन्नेणं एगं समयं उक्कोसेणं छम्मासे उववाएणं विरहिए ।*

*बहिआ णं भंते ! माणुसुत्तरस्स पव्वयस्स जे चंदिम जाव तारारूवा तं चेव नेअव्वं नामत्तं विमाणोववण्णा नो चारोववण्णगा चारठिईआ नो गइरइआ नो गइसमावण्णगा पक्किट्टगसंठाण-संठिएहिं जोअणसयसाहस्सिएहिं, तावखित्तेहिं सयसाहस्सिआहिं वेउव्विआहिं बाहिराहिं परिसाहिं महयाहयनट्ट जाव भुंजमाणा सुहलेसा मंदलेसा मंदातयलेसा चित्तंतरलेसा अन्नोन्नसमोगाढाहिं लेसाहिं कूडाविव ठाणठिआ सव्वओ समंता ते पएसे ओभासंति उज्जोवेंति पभासेंतित्ति । तेसि णं भंते ! देवाणं जाहे इंदे चुए से कहमियाणिं पकरेंति जाव जहन्नेणं एक्कं समयं उक्कोसेणं छम्मासा इति ।*

**वृ.** 'तेसि ण' मित्यादि, तेषां भदन्त ! ज्योतिष्कदेवानां यदा इन्द्रश्च्यवते तदा ते देवा इदानीं–इन्द्रविरहकाले कथं प्रकुर्वन्ति ?, भगवानाह–गौतम ! तदा चत्वारः पञ्च वा सामानिका देवाः संभूय एकबुद्धितया भूत्वेत्यर्थः तत्स्थानं–इन्द्रस्थानमुपसम्पद्य विहरन्ति–तदिन्द्रस्थानं परिपालयन्ति, कियन्तं का[illegible]दत आह-[illegible] भवति ।

इदानीमिन्द्रविरहकालं प्रश्नयन्नाह–'इंदट्ठाणे णं' मित्यादि, इन्द्रस्थानं भदन्त ! कियन्तं कालमुपपातेन–इन्द्रोत्पादेन विरहितं प्रज्ञप्तम् ?, भगवानाह–गौतम ! जघन्येनैकं समयं यावत् उत्कर्षेण षण्मासान् यावत्ततः परमवश्यमन्यस्येन्द्रस्योत्पादसम्भवात् इति । सम्प्रति समयक्षेत्रब-हिर्वर्तिज्योतिष्काणां स्वरूपं पृच्छति– 'बहिआ ण' मित्यादि, बहिस्ताद् भगवन् ! मानुषोत्तरस्य पर्वतस्य ये चन्द्रादयो देवास्ते किमूर्ध्वोपपन्ना इत्यादि प्रश्नसूत्रं प्राग्वत्, निर्वचनसूत्रे तु नोर्ध्वोपपन्नाः, नापि कल्पोपपन्नाः, किन्तु विमानोपपन्नाः तथा नो चारोपपन्नाः नो चारयुक्ताः, किन्तु चारस्थितिकाः, अत एव नो गतिरतयो नापि गतिसमापन्नकाः, पक्वेष्टकासंस्थानसंस्थितैर्योजनशतसाहस्रिकैस्ता-पक्षेत्रैस्तान् प्रदेशान् अवभासयन्तीत्यादिक्रियायोगः, पक्वेष्टकासंस्थानं चात्र यथा पक्वेष्टका आयामतो दीर्घा भवति विस्तरतस्तु स्तोका चतुरस्रा च, तेषामपि मनुष्यक्षेत्राद्बहिर्वर्तिनां चन्द्र-सूर्याणामातपक्षेत्राणि आयामतोऽनेकयोजनलक्षप्रमाणानि विष्कम्भत एकलक्षयोजन-प्रमाणानि ।

इयमत्र भावना–मानुषोत्तरपर्वतात् योजनलक्षार्द्धातिक्रमे करणविभावनोक्तकरणानुसारेण प्रथमा चन्द्रसूर्यपङ्क्तिस्ततो योजनलक्षातिक्रमे द्वितीया पंक्तिस्तेन प्रथमपंक्तिगतचन्द्रसूर्याणामेता-वांस्तापक्षेत्रस्यायामः विस्तारश्च, एकसूर्यादपरः सूर्यो लक्षयोजनातिक्रमे तेन लक्षयोजनप्रमाणः, इयं च भावना प्रथमपंक्त्यपेक्षया बोद्धव्या, एवमग्रेऽपि भाव्यं, 'सयसाहस्सिएहिं' इत्यादि प्राग्वत्, कथंभूता इत्याह– सुखलेश्याः, एतच्च विशेषणं चन्द्रान् प्रति, तेन ते नातिशीततेजसः मनुष्यलोके इव शीतकालादौ न एकान्ततः शीतरश्मय इत्यर्थः, मन्दलेश्या एतच्च सूर्यान् प्रति, तेन ते नात्युष्ण-तेजसः मनुष्यलोके इव निदाघ समये न एकान्तत उष्णरश्मय इत्यर्थः, एतदेव व्याचष्टे–मन्दात-पलेश्या–मन्दा–नात्युष्णस्वभावा आतपरूपा लेश्या–रश्मिसंघातो येषां ते तथा, तथा च 'चित्रान्त-रलेश्याः–चित्रमन्तरं लेश्या च येषां ते तथा, भावार्थश्चास्य चित्रमन्तरं सूर्याणां चन्द्रान्तरितत्वात्, चित्रलेश्या चन्द्रमसां शीतरश्मित्वात् सूर्याणामुष्णरश्मित्वात्, काभिरवभासयन्तीत्याह–अन्योऽन्य-

सवगाढाभि–परस्परं संश्लिष्टाभिर्लेश्याभिः, तथाहि–

चन्द्रमसां सूर्याणां च प्रत्येकं लेश्या यजनशतसहस्रप्रमाणविस्ताराश्चन्द्रसूर्याणां च सूचीपंक्त्या व्यवस्थितानां परस्परमन्तरं पञ्चाशद्योजनसहस्राणि ततश्चन्द्रप्रभामिश्राः सूर्यप्रभाः सूर्यप्रभामिश्राश्चन्द्रप्रभाः, इत्थं चन्द्रसूर्यप्रभाणां मिश्रीभावः एषां स्थिरत्वं दृष्टान्तेन द्योतयति–कूटानीव–पर्वतोपरिव्यवस्थितशिखराणीव स्थानस्थिताः–सदैवैकत्र स्थाने स्थिताः, सर्वतः समन्तात्, तान् प्रदेशान्–स्वस्वप्रत्यासन्नान् अवभासयन्ति उद्योतयन्ति तापयन्ति प्रभासयन्तीत्यादि प्राग्वत्। एषामपीन्द्राभावे व्यवस्थां प्रश्नयन्नाह–'तेसि णं भंते ! देवाण' मित्यादि प्राग्वत्।

इति कृता पञ्चदशानुयोगद्वारैः सूर्यप्ररूपणा, अथ चन्द्रवक्तव्यमाह–तत्र सप्तानुयोगद्वाराणि, मण्डलसङ्ख्याप्ररूपणा १ मण्डलक्षेत्रप्ररूपणा २ प्रतिमण्डलमन्तरप्ररूपणा ३ मण्डलायामादिमानं ४ मंदरमधिकृत्य प्रथमादिमण्डलाबाधा ५ सर्वाभ्यन्तरादिमण्डलायामादि ६ मुहूर्तगतिः ७। तत्रादौ मण्डलसङ्ख्याप्ररूपणां पृच्छति–

**मू. (२६९)** *कइ णं भंते ! चंदमंडला पं० ?, गो० ! पन्नरस चंदमंडला पन्नत्ता ! जंबुद्दीवे णं भंते ! दीवे केवइअं ओगाहित्ता केवइआ चंदमंडला पं० ?, गो० ! जंबुद्दीवे २ असीयं जोअणसयं ओगाहित्ता पंच चंदमंडला पन्नत्ता ! लवणे णं भंते ! पुच्छा, गो० ! लवणे णं समुद्दे तिन्नि तीसे जोअणसए ओगाहित्ता एत्थ णं दस चंदमंडला पन्नत्ता, एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे लवणे य समुद्दे पन्नरस चंदमंडला भवंतीतिमक्खायं।*

**वृ.** कति भदन्त ! चन्द्रमण्डलानि प्रज्ञप्तानि ?, भगवानाह–गौतम ! पञ्चदश चन्द्रमण्डलानि प्रज्ञप्तानि। अथैषां मध्ये कति द्वीपे कति लवणे इति व्यक्त्यर्थं पृच्छति–जंबूद्वीपे भदन्त ! द्वीपे कियदवगाह्य कियन्ति चन्द्रमण्डलानि प्रज्ञप्तानि ?, गौतम ! जंबूद्वीपे २ अशीत्यधिकं योजनशतमवगाह्य पञ्च चन्द्रमण्डलानि प्रज्ञप्तानि। अथ लवणसमुद्रे भदन्त ! प्रश्नः, गौ० लवणसमुद्रे त्रिंशदधिकानि त्रीणि योजशतानि अवगाह्य अत्रान्तरे दश चन्द्रमण्डलानि प्रज्ञप्तानि, एवमेव सपूर्वापरेण जंबूद्वीपे द्वीपे लणसमुद्रे पञ्चदश चन्द्रमण्डलानि भवन्तीति आख्यातमिति।

**मू. (२७०)** *सव्वब्भंतराओ णं भंते ! चंदमंडलाओ णं केवइआए अबाहाए सव्वबाहिरए चंदमंडले पं० ?, गोअमा ! पंचदसुत्तरे जोअणसए अबाहाए सव्वबाहिरए चंदमंडले पन्नत्ते।*

**वृ.** अथ मण्डलक्षेत्रप्ररूपणां प्रश्नयन्नाह–'सव्वब्भंतराओ ण' मित्यादि, सर्वाभ्यन्तराद्–भदन्त ! चन्द्रमण्डलात् कियत्या अबाधया सर्वबाह्यं चन्द्रमण्डलं प्रज्ञप्तं ? किमुक्तं भवति ? –चन्द्रमण्डलैः सर्वाभ्यन्तरादिभिः सर्वबाह्यान्तैर्यद्व्याप्तमाकाशं तन्मण्डलक्षेत्रं तत्र च चक्रवालतया विष्कम्भः पञ्च योजनशतानि दशोत्तराणि अष्टचत्वारिंशच्चैकषष्टिभागा योजनस्य इदं च व्याख्यातोऽधिकं बोध्यं, तथाहि–चन्द्रस्य मण्डलानि पञ्चदश चन्द्रबिम्बस्य च विष्कम्भः एकषष्टिभागात्मकयोजनस्य षट्पञ्चाशद्भागाः तेन ते पञ्चदशभिर्गुण्यन्ते जातं ८४० तत एतेषां योजनानयनार्थं एकषष्ट्या भागे हृते लब्धानि त्रयोदश योजनानि शेषाः सप्तचत्वारिंशत्, तथा पञ्चदशानां मण्डलानामन्तराणि चतुर्दश, एकैकस्यान्तरस्य प्रमाणं पञ्चत्रिंशद्योजनानि त्रिंशच्च एकषष्टिभागा योजनस्य एकस्य च एकषष्टिभागस्य सप्तधाच्छिन्नस्य सत्काश्चत्वारो भागाः।

ततः पञ्चत्रिंशच्चतुर्दशभिर्गुण्यन्ते जातानि चत्वारि योजनशतानि नवत्यधिकानि येऽपि च त्रिंशदेकषष्टिभागास्तेऽपि चतुर्दशभिर्गुण्यन्ते जातानि चत्वारि शतानि विंशत्यधिकानि, अयं च राशिरेकषष्टिभागात्मकस्तेन एकषष्टिभागास्तिष्ठन्ति, ये च एकस्यैकषष्टिभागस्य सत्काश्चत्वारः सप्तभागास्तेऽपि चतुर्दशभिर्गुण्यन्ते जाताः षट्पञ्चाशत तेषां सप्तभिर्भागे हृते लब्धा अष्टावेकषष्टिभागास्तेऽनन्तरोक्तचतुःपञ्चाशति प्रक्षिप्यन्ते जाता द्वाषष्टिः तत्रैकषष्टिभागैर्योजनं लब्धं तच्च योजनराशौ प्रक्षिप्यते एकश्चैकषष्टिभागः शेषः ४९७ योजन $^1/_{61}$ ।

इदं च मण्डलान्तरक्षेत्रं, योऽपि च बिम्बक्षेत्रराशिस्त्रयोदशयोजनसप्तचत्वारिंशदेकषष्टिभागात्मकः सोऽपि मण्डलान्तरराशौ प्रक्षिप्यते जातं योजनानि ५१०, यश्च पूर्वोद्धरितः एकः एकषष्टिभागः स सप्तचत्वारिंशति प्रक्षिप्यते जातं ४८ एकषष्टिभागाः, ननु पञ्चदशसु मण्डलेषु चतुर्दशान्तरालसम्भावाच्चतुर्दशभिर्भजनं युक्तिमत्, सप्तचत्वारो भागा इति कथं सङ्गच्छते ? उच्यते मण्डलान्तरक्षेत्र राशेः ४९७ $^1/_{61}$ मण्डलान्तरैश्चतुर्दशभिर्भजने लब्धानि ३५ योजनानि, उद्धरितस्य योजनराशेरेकषष्ट्या गुणने मूलराशिसत्कैकषष्टिभागप्रक्षेपे च जातं ४२८ एषां चतुर्दशभिर्भजने आगतोऽंशराशिः ३० शेषा अष्टौ तेषां चतुर्दशभिर्भागाप्राप्तौ लाघवार्थं द्वाभ्यामपवर्त्तने जातं भाज्यभाजकराश्योः $^4/_7$ इति सुस्थं ।

**मू. (२७१)** *चंदमंडलस्स णं भंते ! चंदमंडलस्स केवइआए अबाहाए अंतरे पं० ? गो० ! पणतीसं २ जोअणाइं तीसं च एगसट्ठिभाए जोअणस्स एगसट्ठिभागं च सत्तहा छेत्ता चत्तारि चुण्णिआभाए चंदमंडलस्स चंदमंडलस्स अबाहाए अंतरे पन्नत्ते ।*

**वृ.** सम्प्रति मण्डलान्तरप्ररूपणाप्रश्नमाह– चंदमंडलस्स ण मित्यादि, चन्द्रमण्डलस्य भदन्त चन्द्रमण्डलस्य कियत्या अबाधया अन्तरं प्रज्ञप्तम् ?, गौतम ! पञ्चविंशत्पञ्चत्रिंशद्योजनानि त्रिंशच्चैकषष्टिभागान् योजनस्य एकं च एकषष्टिभागं सप्तधा छित्वा चतुरश्चूर्णिकाभागान्, एतच्च चन्द्रमण्डलस्य २ अबाधया अन्तरं प्रज्ञप्तं, अत्र सप्त चत्वारश्चूर्णिका यथा समायान्ति तथाऽनन्तरं व्याख्यातं ।

**मू. (२७२)** *चंदमंडले णं भंते ! केवइअं आयामविक्खंभेणं केवइअं परिक्खेवेणं केवइअं बाहल्लेणं पन्नत्ते ?, गोअमा ! छप्पन्नं एगसट्ठिभाए जोअणस्स आयामविक्खम्भेणंतंतिगुणंसविसेसं परिक्खेवेणं अट्ठावीसं च एगसट्ठिभाए जोअणस्स बाहल्लेणं ४ ।*

**वृ.** सम्प्रति मण्डलायामादिमानद्वारम्– 'चंदमण्डले णं भंते ! केवइयं आयाम' इत्यादि, चन्द्रमण्डलं भगवन् ! कियदायामविष्कम्भाभ्यां कियत्परिक्षेपेण कियद्बाहल्येन–उच्चैस्त्वेन प्रज्ञप्तम् गौतम ! षट्पञ्चाशतमेकषष्टिभागान् योजनस्यायामविष्कम्भाभ्यां, एकस्य योजनस्य एकषष्टिभागीकृतस्य यावत्प्रमाणा भागास्तावत्प्रमाणषट्पञ्चाशद्भागप्रमाणमित्यर्थः, तत्त्रिगुणं सविशेषं–साधिकं परिक्षेपेण करणरीत्या द्वे योजने पञ्चपञ्चाशद्भागाः साधिका इत्यर्थः, अष्टाविंशतिमेकषष्टिभागान् योजनस्य बाहल्येन । अथ मंदरमधिकृत्य प्रथमादिमण्डलाबाधाप्रश्नमाह–

**मू. (२७३)** *जंबुद्दीवे दीवे मंदरस्स पव्वयस्स केवइआए आबाहाए सव्वब्भंतरए चंदमंडले पन्नत्ते ?, गोअमा ! चोआलीसं जोअणसहस्साइं अट्ठ य वीसे जोअणसए अबाहाए सव्वब्भंतरे चंदमंडले पन्नत्ते, जंबुद्दीवे २ मंदरस्स पव्वयस्स केवइयाए अबाहाए अब्भंतराणंतरे चंदमंडले*

*पन्नत्ते ?, गो० ! चोआलीसं जोअणसहस्साइं अट्ठ य छप्पन्ने जोअणसए पणवीसं च एगसट्ठिभाए जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता चत्तारि चुण्णिआभाए अबाहाए अब्भंतराणंतरे चंदमंडले पन्नत्ते । जंबुद्दीवे दीवे मंदरस्स पव्वयस्स केवइआए अबाहाए अब्भंतरतच्चे मंडले पं० ?, गो० चोआलीसं जोअणसहस्साइं अट्ठ य बानउए जोअणसए एगावण्णं च एगसट्ठिभाए जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता एगं चुण्णिआभागं अबाहाए अब्भंतरतच्चे मंडले पन्नत्ते, एवं खलु एएणं उवाएणं निक्खममाणे चंदे तयाणंतराओ मंडलाओ तयाणंतरं मंडलं संकममाणे २ छत्तीसं छत्तीसं जोअणाइं पणवीसं च एगट्ठिभाए जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता चत्तारि चुण्णिआभाए एगमेगे मंडले अबाहाए वुड्ढिं अभिवद्धेमाणे २ सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ ।*

*जंबुद्दीवे दीवे मंदरस्स पव्वयस्स केवइआए अबाहाए सव्वबाहिरे चंदमंडले पं० ?, पणयालीसं जोअणसहस्साइं तिन्नि अ तीसे जोअणसए अबाहाए सव्वबाहिरए चंदमंडले प०, जंबुद्दीवे दीवे मंदरस्स पव्वयस्स केवइआए अबाहाए बाहिराणंतरे चंदमंडले पन्नत्ते ?, गो० ! पणयालीसं जोअणसहस्साइं दोन्नि अ तेनउए जोअणसए पणतीसं च एगसट्ठिभाए जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता तिन्नि चुण्णिआभाए अबाहाए बाहिराणन्तरे चंदमंडले पन्नत्ते, जंबुद्दीवे दीवे मंदरस्स पव्वयस्स केवइआए अबाहाए बाहिरतच्चे चंदमंडले पं० ?, गो० ! पणयालीसं जोअणसहस्साइं दोन्नि अ सत्तावन्ने जोअणसए नव य एगट्ठिभाए जोअणसए [illegible] य एगट्ठिभाए जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता छ चुण्णिआभाए अबाहाए बाहिरतच्चे चंदमंडले पं० । एवं खलु एएणं उवाएणं पविसमाणे चंदे तयाणंतराओ मंडलाओ तयानंतरं मंडलं संकममाणे २ छत्तीसं २ जोअणाइं पणवीसं च एगसट्ठिभाए जोअणस्स एगट्ठिभागं एगट्ठिभागं च सत्तहा छेत्ता चत्तारि चुण्णिआभाए एगमेगे मंडले अबाहाए वुड्ढिं निव्वुड्ढेमाणे २ सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ ५ ।*

वृ. 'जंबुद्दीवे २' इत्यादि, जंबूद्वीपे २ भगवन् ! मंदरस्य पर्वतस्य कियत्या अबाधया सर्वाभ्यन्तरं चन्द्रमण्डलं प्रज्ञप्तं ?, गौतम ! चतुश्चत्वारिंशद्योजनसहस्राणि अष्ट च विंशत्यधिकानि योजनशतान्यबाधया सर्वाभ्यन्तरं चन्द्रमण्डलं प्रज्ञप्तमिति, उपपत्तिस्तु प्राक् सूर्यवक्तव्यतायां दर्शिता, द्वितीयमण्डलाबाधां प्रश्नयन्नाह—'जंबुद्दीवे २' इत्यादि, जंबूद्वीपे २ भगवन् ! मंदरस्य पर्वतस्य कियत्या अबाधया अभ्यन्तरानन्तरं द्वितीयं चन्द्रमण्डलं प्रज्ञप्तम् ?, गौतम ! चतुश्चत्वारिंशद्योजनसहस्राणि अष्टौ च षट्पञ्चाशदधिकानि योजनशतानि पञ्चविंशतिं चैकषष्टिभागान् योजनस्य एकं च एकषष्टिभागं सप्तधा छित्वा चतुरश्चूर्णिकाभागान् अबाधया सर्वाभ्यन्तरानन्तरं द्वितीयं चन्द्रमण्डलं प्रज्ञप्तं, अत्रोपपत्ति प्रागुक्तेऽभ्यन्तरमण्डलगतराशौ मण्डलान्तरक्षेत्रमण्डलविष्कम्भराश्योः प्रक्षेपे जायते, तथाहि -

४४८२० रूपः पूर्वमण्डलयोजनराशि, अस्मिन् मण्डलान्तरक्षेत्रयोजनानि ३५, तथाऽन्तरसत्कत्रिंशदेकषष्टिभागानां मण्डलविष्कम्भसत्कषट्पञ्चाशदेकषष्टिभागानां च परस्परमीलने जातं ८६ एकषष्ट्या भागे चागतं योजनमेकं तच्च पूर्वोक्तायां पञ्चत्रिंशति प्रक्षिप्यते जाता षट्त्रिंशद्योजनानां शेषाः पञ्चविंशतिरेकषष्टिभागाश्चत्वारश्चूर्णिकाभागाइति, अथ तृतीयं—'जंबुद्दीवे २' इत्यादि, प्रश्नसूत्रं प्राग्वत्, उत्तरसूत्रे द्वितीयमण्डलसत्कराशौ ३६ योजनानि २५ एकषष्टिभागा-

श्चत्वारश्चूर्णिकाभागा इत्यस्य प्रक्षेपे जातं यथोक्तं, अथ चतुर्थादिमण्डलेष्वतिदेशमाह–

'एवं खलु' इत्यादि, एवमुक्तरीत्या मण्डलत्रयदर्शितयेत्यर्थः, एतेनोपायेनप्रत्यहोरात्रमेकैक-मण्डलमोचनरूपेण निष्क्रामन्–लवणाभिमुखं मण्डलानि कुर्वन् चन्द्रस्तदनन्तराद्–विवक्षितात्पूर्व-स्मान्मण्डलाद्विवक्षितमुत्तरमण्डलं संक्रामन २ षट्त्रिंशद्योजनानि, अत्र योजनसंख्यागतवीप्सा भागसंख्यापदेष्वपि ग्राह्या, तंन पञ्चविंशतिं २ एकषष्टिभागान् योजनस्य एकं चैकषष्टिभागं सप्तधा छित्वा चतुरश्चूर्णिकाभागान् एकैकस्मिन् मण्डले अबाधाया वृद्धिं अभिवर्द्धयन् २ सर्वबा-ह्यमण्डलमुपसंक्रम्य चारं चरति, अथ पश्चानुपूर्व्यापि व्याख्यानाङ्गमित्यन्त्यमण्डलान्मण्डलाबाधां पृच्छन्नाह– 'जंबुद्दीवे'त्ति, जंबूद्वीपे द्वीपे भगवन् ! मंदरस्य पर्वतस्य कियत्या अबाधया सर्वबाह्यं चन्द्रमण्डलं प्रज्ञप्तं ?, गौ० पञ्चचत्वारिंशद्योजनसहस्राणि त्रीणि च त्रिंशदधिकानि योजनशता-न्यबाधया सर्वबाह्यं चन्द्रमण्डलं प्रज्ञप्तम्, उपपत्तिस्तु प्राग्वत्, अथ द्वितीयमण्डलं पृच्छन्नाह– जंबूद्वीपे भगवन् ! मंदरस्य पर्वतस्य कियत्या अबाधया सर्वबाह्यानन्तरं द्वितीयं चन्द्रमण्डलं प्रज्ञप्तं ?, गौतम ! पञ्चचत्वारिंशद्योजनसहस्राणि द्वे च त्रिनवत्यधिके योजनशते पञ्चत्रिंशच्चैकषष्टि-भागान् योजनस्य एकं चैकषष्टिभागं सप्तधा छित्वा त्रींश्चूर्णिकाभागानबाधया सर्वबाह्यानन्तरं द्वितीयं चन्द्रमण्डलंप्रज्ञप्तं, सर्वबाह्यमण्डलराशेः षट्त्रिंशद्योजनानि पञ्चविंशतिश्च योजनैकषष्टिभागा एकस्यैकषष्टिभागस्य सत्काश्चत्वारः सप्तभागाः पात्यन्ते जायते यथोक्तराशिः

अथ तृतीयमण्डलपृच्छा–'जंबुद्दीवे २'इत्यादि, प्रश्नसूत्रं सुगमं, एकषष्टिभागं सप्तधा छित्वा षट् चूर्णिकाभागान् अबाधया बाह्यतृतीयं चन्द्रमण्डलं प्रज्ञप्तं, उपपत्तिस्तु बाह्यद्वितीयमण्डल-राशेस्तमेव षट्त्रिंशदयोजनादिकं राशिं पातयित्वा यथोक्तं मानमानेतव्यं। अथ चतुर्थादिमण्ड-लेष्वतिदेशमाह–'एवं खलु' इत्यादि व्यक्तम्, नवरं अबाधायाः वृद्धिं निवर्द्धयन् २ ह्रापयन् २ इत्यर्थः।

अथ सर्वाभ्यन्तरादिमण्डलायामाद्याह–

*मू. (२७४) सव्वब्भंतरे णं भंते ! चंदमंडले केवइअं आयामविक्खम्भेणं केवइअं परिक्खेवेणं पन्नत्ते ?, गो० ! नवनउइं जोअणसहस्साइं छच्चचत्ताले जोअणसए आयामविक्खम्भेणं तिन्नि अ जोअणसयसहस्साइं पन्नरस जोअणसहस्साइं अउणानउतिं च जोअणाइं किंचिविसेसाहिए परिक्खेवेणं पं० । अब्भंतराणंतरे सा चेव पुच्छा, गो० ! नवनउइं जोअणसहस्साइं त य बारसुत्तरे जोअणसए एगावण्णं च एगट्ठिभागे जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता एगं चुण्णिआभागं आयामविक्खम्भेणं तिन्नि अ जोयणसयसहस्साइं पन्नर सहस्साइं तिन्नि अ एगूणवीसे जोअणसए किंचिवेसाहिए परिक्खेवेणं ।*

*अब्भंतरतच्चे णं जाव पं० ?, गो० ! नवनउइं जोअणसहस्साइं सत्त य पञ्चासीए जोअणसए इगतालीसं च एगतालीसं च एगट्ठिभाए जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता दोन्नि अ चुण्णिआभाए आयामविक्खंभेणं तिन्नि अ जोअणसयसहस्साइं पन्नरस जोअणसहस्साइं पंच य इगुणापन्ने जोअणसे किंचिविसेसाहिए परिक्खेवेणंति । एवं खलु एएणं उवाएणं णिक्खममाणे चंदे जाव संकममाणे २ बावत्तरिं २ जोअणाइं एगावण्णं च एगट्ठिभाए जोअणस्स एगट्ठिभागं च सत्तहा*

*छेत्ता एगं च चुण्णिआभागं एगमेगे मंडले विक्खम्भवुड्ढिं अभिवड्ढेमाणे २ दो दो तीसाइं जोअणसयाइं परिरयवुड्ढिं अभिवड्ढेमाणे २ सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ।*

*सव्वबाहिरए णं भंते! चंदमंडले केवइअं आयामविक्खम्भेणं केवइअं परिक्खेवेणं प० ?, गो० ! एगं जोयणसयसहस्सं छच्चसट्ठे जोअणसए आयामविक्खम्भेणं तिन्नि अ जोअणसयसहस्साइं अट्ठारस सहस्साइं तिन्नि अ पन्नरसुत्तरे जोअणसए परिक्खेवेणं।*

*बाहिराणंतरे णं पुच्छा, गो० ! एगं जोअणसयसहस्सं पंच सत्तासीए जोअणसए नव य एगट्ठिभाए जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता छ चुण्णिआभाए आयामविक्खम्भेणं तिन्नि अ जोअणसयसहस्साइं अट्ठारस सहस्साइं पंचासीइं च जोअणाइं परिक्खेवेणं।*

*बाहिरतच्चे णं भंते! चंदमण्डले० पं० ?, गो० ! एगं जोअणसयसहस्सं पंच य चउदसुत्तरे जोअणसए एगूणवीसं च एगसट्ठिभाए जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता पंच चुण्णिआभाए आयामविक्खम्भेणं तिन्नि अ जोअणसयसहस्साइं सत्तरस सहस्साइं अट्ठ य पणपन्ने जोअणसए परिक्खेवेणं, एवं खलु एएणं उवाएणं पविसमाणे चंदे जाव संकममाणे २ बावत्तरिं २ जोअणाइं एगावन्नं च एगट्ठिभाए जोअणस्स एगट्ठिभागं च सत्तहा छेत्ता एगं चुण्णिआभागं एगमेगे मंडले विक्खम्भवुड्ढिं निव्वुड्ढेमाणे २ दो दो तीसाइं जोअणसयाइं परिरयवुड्ढिं निवुड्ढेमाणे २ सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ ६ ।*

**वृ.** सर्वाभ्यन्तरं भदन्त ! चन्द्रमण्डलं कियदायामविष्कम्भाभ्यां कियत्परिक्षेपेण प्रज्ञप्तम्, गौतम ! नवनवतिं योजनसहस्राण्येकोननवतिं च योजनानि किञ्चिद्विशेषाधिकानि परिक्षेपेण प्रज्ञप्तं, उपपत्तिस्तूभयत्रापि सूर्यमण्डलाधिकारे दर्शिता, अथ द्वितीयं—

'अब्भंतराणंतरे' इत्यादि, अभ्यन्तरानन्तरे सैव पृच्छा या सर्वाभ्यन्तरे मण्डले, उत्तरसूत्रे—गौतम ! नवनवतिं योजनसहस्राणि सप्त च द्वादशोत्तराणि योजनशतानि एकपञ्चाशतं च एकषष्टिभागान् योजनस्य एकं चैकषष्टिभागं सप्तधा छित्वा एकं चूर्णिकाभागमायामविष्कम्भाभ्यां, तथाहि—

एकतश्चन्द्रमा द्वितीये मण्डले संक्रामन् षट्त्रिंशद्योजनानि पञ्चविंशतिं चैकषष्टिभागान् योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्कान् चतुरो भागान् विमुच्य संक्रामति अपरतोऽपि तावन्त्येव योजनानि विमुच्य संक्रामति उभयमीलने जातं द्वासप्ततिर्योजनानि एकपञ्चाशदेकषष्टिभागा योजनस्य एकस्य एकषष्टिभागस्य सप्तधा छिन्नस्य सत्क एको भागो द्वितीयमण्डले विष्कम्भायामचिंतायामधिकत्वेन प्राप्यत इति, तच्च पूर्वमण्डलराशौ प्रक्षिप्यते जायते यथोक्तं द्वितीयमण्डलायामविष्कम्भमानं, त्रीणि योजनशतसहस्राणि त्रीणि चैकोनविंशत्यधिकानि योजनशतानि किञ्चिद्विशेषाधिकानि परिक्षेपेण द्वितीयं मण्डलं प्रज्ञप्तं, उपपत्तिस्तु प्रथममण्डलपरिरये द्वासप्ततियोजनादीनां परिरये त्रिंशदधिकद्वियोजनशतरूपे प्रक्षिप्ते सति यथोक्तं मानं, अथ तृतीयं— 'अब्भंतरतच्चे णं० अभ्यन्तरतृतीयं चन्द्रमण्डले यावत्पदात् 'चन्दमण्डले केवइअं आयामविक्खम्भेणं केवइअं परिक्खेवेणं' मिति ग्राह्यं, उत्तरसूत्रे गौतम ! नवनवतिं योजनसहस्राणि सप्त च पञ्चाशीत्यधिकानि योजनशतानि एकचत्वारिंशतं चैकषष्टिभागान् योजनस्य एकं च एकषष्टिभागं सप्तधा छित्वा द्वौ च चूर्णिकभागावायामविष्कम्भाभ्यां, अथ द्वितीयमण्डल-

गतराशौ द्वासप्तति योजनान्येकपञ्चाशतं चैकषष्टिभागान् योजनस्य एकं च चूर्णिकाभागं प्रक्षिप्य यथोक्तं मानमानेतव्यं, त्रीणि योजनलक्षाणिपञ्चदश योजनसहस्राणि पञ्च चैकोनपञ्चाशदधिकानि योजनशतानि किञ्चिद्विशेषाधिकानि परिक्षेपेण, इह पूर्वमण्डलपरिरयराशौ द्वे योजनशते त्रिंशदधिके प्रक्षिप्योपपत्तिः कार्या, अथ चतुर्थादिमण्डलेष्वतिदेशमाह–

'एवं खलु' इत्यादि, पूर्ववत्, निष्क्रामंश्चन्द्रो यावत्पदात् 'तयानंतराओ मंडलाओ तयानंतरं मंडल'मितिग्राह्यं, संक्रामन् २ द्वासप्ततिं २ योजनानि योजनसंख्यापदगतावीप्सा भागसंख्याप-देष्वपि ग्राह्या, तेनैकपञ्चाशतं एकपञ्चाशतं चैकषष्टिभागान् योजनस्य एकं च एकषष्टिभागं सप्तधा छित्वा एकमेकं चूर्णिकाभागमेकैकस्मिन् मण्डले विष्कम्भवृद्धिमभिवर्द्धयन् २ द्वे द्वे त्रिंशदधिके योजनशते परिरयवृद्धिमभिवर्द्धयन् २ सर्वबाह्यमण्डलमुपसंक्रम्य चारं चरतीति ।

सम्प्रति पश्चानुपूर्व्या पृच्छति– 'सव्वबाहिरए णं' मित्यादि, सर्वबाह्यं भदन्त ! चन्द्रमण्डलं कियदायामविष्कम्भाभ्यां कियत् परिक्षेपेण प्रज्ञप्तम् ? , गौतम ! एकं योजनलक्षं षट् षष्ठानि– षष्ट्यधिकानि योजनशतान्यायामविष्कम्भाभ्या, उपपत्तिस्तु जंबूद्वीपो लक्षं उभयोः प्रत्येकं त्रीणि योजनशतानि त्रिंशदधिकानि उभयमीलने योजनानां षट् शतानि षष्ट्यधिकानीति, त्रीणि च योजनलक्षाणि अष्टादश सहस्राणि त्रीणि च पञ्चदशोत्तराणि योजनशतानि परिक्षेपेण, अत्रोपपत्ति जंबूद्वीपपरिधौ षष्ट्यधिकषट्शतपरिधौ प्रक्षिप्ते भवति यथोक्तं मानं । अथ द्वितीयं बाह्यानन्तरं द्वितीयं मण्डलमित्यर्थः पृच्छति प्रश्नालापकस्तथैव, उत्तरसूत्रे गौ० एकं योजनलक्षं पञ्च सप्ताशीत्यधिकानि योजनशतानि नव चैकषष्टिभागान् योजनस्य एकं च एकषष्टिभागं सप्तधा छित्वा षट् चूर्णिकाभागान् आयाम-विष्कम्भाभ्यां, अत्रोपपत्ति पूर्वराशेर्द्वासप्ततिं योजनान्येकपञ्चाशतं चैकषष्टिभागान् योजनस्य एकस्य च एकषष्टिभागस्य सप्तधा छिन्नस्य एकं भागमपनीय कर्तव्या, त्रीणि योजनलक्षाणि अष्टादश सहस्राणि पञ्चाशीतिं योजनानि परिक्षेपेण, सर्वबाह्यमण्डपरिधेर्द्वे शते त्रिंशदधिके योजनानामपनयने यथोक्तमानं ।

अथ तृतीयं 'बाहिरतच्चे णं' मित्यादि, बाह्यातृतीयं भदन्त ! चन्द्रमण्डलं यावच्छब्दात् सर्वं प्रश्नसूत्रं ज्ञेयं, उत्तरसूत्रे–गौतम ! एकं योजनलक्षं पञ्च चतुर्दशोत्तराणि योजनशतानि एकोनविंशतिं चैकषष्टिभागान् योजनस्य एकं चैकषष्टिभागं सप्तधा छित्वा पञ्च चूर्णिकाभागान् आयमविष्कम्भाभ्यां, अत्र सङ्गतिस्तु द्वितीयमण्डलराशेः द्वासप्ततियोजनादिकं राशिमपनीय कार्या त्रीणि योजनलक्षाणि सप्तदश सहस्राणि अष्ट च पञ्चपञ्चाशदधिकानि योजनशतानि परिक्षेपे, उपपत्तिस्तु पूर्वराशेर्द्वे शते त्रिंशदधिके अपनीय कार्या । अथ चतुर्थादिमण्डलेष्वतिदेशमाह– 'एवं खलु' इत्यादि, पूर्ववत्, प्रविशंश्चन्द्रो यावत्पदात् 'तयानंतराओ मंडलाओ तयानंतरं मण्डल' मिति ग्राह्यं, संक्रामन् २ द्वासप्ततिं २ योजनानि एकपञ्चाशतमेकपंचाशतं चैकषष्टिभागान् योजनस्य एकं एकषष्टिभागं च सप्तधा छित्वा एकमेकं चूर्णिकाभागमेकैकस्मिन् मण्डले विष्कम्भवृद्धिं निवर्द्धयन् २ हापयन् २ इत्यर्थः द्वे द्वे त्रिंशदधिके योजनशते परिरयवृद्धिं निवर्द्धयन् २ हापयन् हापयन्नित्यर्थः सर्वाभ्यन्तरमण्डलमुपसंक्रम्य चारं चरति ।। अथ मुहूर्त्तगतिप्ररूपणा–

मू. (२७५) *जया णं भंते ! चंदे सव्वब्भंतरमण्डलं उवसंकमित्ता चारं चरइ तया णं*

एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गोअमा ! पंच जोअणसहस्साइं तेवत्तरिं च जोअणाइं सत्तत्तरिं च चोआले भागसए गच्छइ मंडलं तेरसहिं सहस्सेहिं सत्तहि अ पणवीसेहिं सएहिं छेत्ता इति, तया णं इहगयस्स मणूसस्स सीआलीसाए जोअणसहस्सेहिं दोहि अ तेवट्ठेहिं जोअणएहिं एगवीसाए अ सट्ठिभाएहिं जोअणस्स चंदे चक्खुप्फासं हव्वमागच्छइ ।

जया णं भंते ! चंदे अब्भंतराणंतरं मंडलं उवसंकमित्ता चारं चरइ जाव केवइअं खेत्तं गच्छइ ?, गो० ! पंच जोअणसहस्साइं सतत्तरिं च जोअणाइं छत्तीसं च चोअत्तरे भागसए गच्छइ, मंडलं तेरसहिं सहस्सेहि जाव छेत्ता, जया णं भंते ! चंदे अब्भंतरतच्चं मंडलं उवसंकमित्ता चारं चरइ तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गो० ! पंच जोअणसहस्साइं असीइं च जोअणाइं तेरस य भागसहस्साइं तिन्नि अ एगूणवीसे भागसए गच्छइ मंडलं तेरसहिं जाव छेत्ता इति ।

एवं खलु एएणं उवाएणं निक्खममाणे चंदे तयाणंतराओ जाव संकममाणे २ तिन्नि २ जोअणाइं छन्नउइं च पंचावण्णे भागसए एगमेगे मंडले मुहुत्तगइं अभिवद्धेमाणे २ सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ ।

जया णं भंते ! चंदे सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गो० ! पंच जोअणसहस्साइं एगं च पणवीसं जोअणसयं अउणत्तरिं च नउए भागसए गच्छि मंडलं तेरसहिं भागसहस्सेहिं सतहि अ जाव छेत्ता इति, तया णं इहगसयस्स मणूसस्स एकतीसाए जोअणसहस्सेहिं अट्ठहि अ एगत्तीसेहिं जोअणसएहिं चन्दे चक्खुप्फासं हव्वमागच्छइ । जया णं भंते ! बाहिराणंतरं पुच्छा, गोअमा ! पंच जोअणसहस्साइं एक्कं एक्कवीसं जोअणसयं एक्कारस य सट्ठे भागसहस्से गच्छइ मंडलं तेरसहिं जाव छेत्ता, जया णं भंते ! बाहिरतच्चं पुच्छा, गोअमा ! पंच जोअणसहस्साइं एगं च अट्ठारसुत्तरं जोअणसयं चोद्दस य पंचुत्तरे भागसए गच्छइ मंडलं तेरसहिं सहस्सेहिं सत्तहिं पणवीसेहिं सएहिं छेत्ता ।

एवं खलु एएण उवाएणं जाव संकममाणे २ तिन्नि २ जोअणाइं छन्नउतिं च पंचावन्ने भागसए एगमेगे मंडले मुहुत्तगइं निवुड्ढेमाणे २ सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ ।

वृ. 'जया ण'मित्यादि, पूर्ववत्, भदन्त ! चन्द्र सर्वाभ्यन्तरमण्डलमुपसंक्रम्य चारं चरति तदा एकैकेन मुहूर्तेन कियत् क्षेत्रं गच्छति ?, भगवानाह—गौतम ! पंच योजनसहस्राणि त्रिसप्ततिं च योजनानि सप्तसप्ततिं च चतुश्चत्वारिंशदधिकानि भागशतानि गच्छति, कस्य सत्का भागा इत्याह—मण्डलं प्रक्रमात् सर्वाभ्यन्तरं त्रयोदशभि सहस्र सप्तभिश्च शतैः पञ्चविंशत्यधिकैर्भागैरि-छित्वा—विभज्यैतत् पंचसहस्रयोजनादिकं गतिपरमाणमानेतव्यं, तथाहि—प्रथमतः सर्वाभ्यन्त-रमण्डलपरिधि योजन ३१५०८९ रूपो द्वाभ्यामेकविंशत्यधिकाभ्यां शताभ्यां गुण्यते जातं ६९६३४६६९, अस्य राशेः त्रयोदशभिः सहस्रैः सप्तभिः शतैः पंचविंशत्यधिकैर्भागे हृते लब्धानि पंच योजनसहस्राणि त्रिसप्तत्यधिकानि अंशाश्च सप्तसप्ततिशतानि चतुश्चत्वारिंशदधिकानि ननु यदि मण्डलपरिधिस्त्रयोदशसहस्रादिकेन भाजकेन राशिना भाज्यस्तर्हि किमित्येकविंशत्यधि-काभ्यां द्वाभ्यां शताभ्यां मण्डलपरिधिर्गुण्यते ?, उच्यते, चन्द्रस्य मण्डलपूरणकालो द्वाषष्टिर्मुहूर्त्ता एकस्य च मुहूर्त्तस्य सत्कास्त्रयोविंशतिरेकविंशत्यधिकशतद्वयभागाः, अस्य च भावना चन्द्रस्य

मुहूर्तभागगत्यवसरे विधास्यते, मुहूर्तानां सवर्णनार्थमेकविंशत्यधिकशतद्वयेन गुणने त्रयोविंशत्यंशप्रक्षेपे च जातं १३७२५, अतः समभागानयनार्थं मण्डलस्याप्येकविंशत्यधि-कशतद्वयेन गुणनं सङ्गतमेवेति ।

अयं भावः—यथा सूर्य षष्ट्या मुहूर्तैर्मण्डलं समापयति शीघ्रगतित्वाद् लघुविमानगामित्वाच्च तथा चन्द्रो द्वाषष्ट्या मुहूर्तैः स्त्रयोविंशत्येक विंशत्यधिक धिकशतद्वयभागैर्मंडलं पूरयति मन्दगतित्वाद् गुरुविमानगामित्वाच्च, तेन मण्डलपूर्तिकालेन मण्डलपरिधिर्भक्तः सन् मुहूर्तगतिं प्रयच्छतीति सर्वसम्मतं, आह—

एकविंशत्यधिकशतद्वयभागकरणे किं बीजमिति चेद्, उच्यते, मण्डलकालानयने अस्यैव छेदकराशेः समानयनात्, मण्डलकालनिरूपणार्थमिदं त्रैराशिकं—यदि सप्तदशभि शतैः मण्डलकाला-नयने अस्यैव छेदकराशेः समानयनात्, मण्डलकालनिरूपणार्थमिदं रात्रिन्दिवानां लभ्यन्ते ततो द्वाभ्यामर्द्धमण्डलाभ्यामेकेन मण्डलेनेति भावः कति रात्रिन्दिवानि लभ्यन्ते ? , राशित्रयस्थापना—१७६८।१८३०।२ अत्रान्त्येन राशिना द्विकलक्षणेन मध्यस्य राशेः १८३० रूपस्य गुणने जातानि षट्त्रिंशच्छतानि षष्ट्यधिकानि ३६६० तेषामाद्येन राशिना १७६८ रूपेण भागे हृते लब्धे द्वे रात्रिन्दिवे, शेषं तिष्ठति चतुर्विंशत्यधिकं शतं १२४ तत एकस्मिन् रात्रिन्दिवे त्रिंशन्मुहूर्ता इति तस्य त्रिंशता गुणने जातानि सप्तत्रिंशच्छतानि विंशत्यधिकानि ३७२० तेषां सप्तदशभि शतैः अष्टषष्ट्यधिकैर्भागे हृते लब्धौ मुहूर्तौ, शेषाः १८४, अथ छेद्यच्छेदकराश्योरष्टकेनापवर्त्तने जातः छेद्यो राशिस्त्रयोविंशति छेदकराशिरेकविंशत्यधिकशतद्वयरूप इति ।

अथास्य दृष्टिपथप्राप्ततामाह—'तया णं इहगयस्स' इत्यादि, तदा इहगतानां मनुष्याणां सप्तचत्वारिंशता योजनसहस्रैर्द्वाभ्यां च त्रिषष्ट्यधिकाभ्यां योजनशताभ्यामेकविंशत्या च षष्टिभागैर्योजनस्य चन्द्रः चक्षुस्पर्शं शीघ्रमागच्छति, अत्रोपपत्ति सूर्याधिकारे दर्शितापि किञ्चिद्वि-शेषाधानाय दर्श्यते, यथा सूर्यस्य सर्वाभ्यन्तरमण्डले जंबूद्वीपचक्रवालपरिधेर्दशभागीकृतस्य दश त्रिभागान् यावत्तापक्षेत्रं तथास्यापि प्रकाशक्षेत्रं तावदेव पूर्वतोऽपरतश्च तस्यार्द्धे चक्षुपथ-प्राप्ततापरिमाणमायाति, यत्तु षष्टिभागीकृतयोजनस्यैकविंशतिभागाधिकत्वं तत्तु सम्प्रदायगम्यं, अन्यथा चन्द्राधिकारे साधिकद्वाषष्टिमुहूर्त्तप्रमाणमण्डलपूर्तिकालस्य छेदराशित्वेन भणनात् सूर्याधिकारे चाव्यस्य षष्टिमुहूर्तप्रमाणमण्डलपूर्तिकालरुपस्य छेदराशेरनुपपद्यमानत्वात् ।

अथ द्वितीयमण्डले मुहूर्त्तगतिमाह—'तया णं एगमेगेणं मुहुत्तेण' मिति गम्यते, कियत् क्षेत्रं गच्छति ? , गौतम ! पञ्च योजनसहस्राणि सप्तसप्ततिं च योजनानि षट्त्रिंशतं च चतुःसप्तत्यधि-कानि भागशतानि गच्छति, मण्डलं त्रयोदशभि सहस्रैः यावत्पदात् 'सत्तहि अ पणवीसेहिं सएहिं' मिति ग्रहाद्यं, छित्वा—विभज्य, एतत् सूत्रं प्राग्भावितार्थमिति नेह पुनरुच्यते, अत्रोपपत्तिः द्वितीयचन्द्रमण्डले परिरयपरिमाणं ३१५३१९ एतत् द्वाभ्यामेकविंशत्यधिकाभ्यां शताभ्यां गुण्यते जातं ६९६८५४९९ एषां त्रयोदशभिः सहस्रैः सप्तभिः शतैः पञ्चविंशत्यधिकैर्भागे लब्धानि पञ्च योजनसहस्राणि सप्तत्यधिकानि ५०७७, शेष षट्त्रिंशच्छतानि चतुःसप्तत्यधिकानि भागानां १३७२५ $^{३६७४}/_{१३७२५}$

अथ तृतीयं 'जया ण'मित्यादि, यदा भदन्त ! चन्द्रः अभ्यन्तरतृतीयमण्डलमुपसंक्रम्य चारं चरति तदा एकैकेन मुहूर्तेन कियत् क्षेत्रं गच्छति ?, गौतम ! पञ्च योजनसहस्राणि अशीतिं च योजनानि त्रयोदश च भागसहस्राणि त्रीणि च एकोनत्रिंशदधिकानि भागशतानि गच्छति, मण्डलं त्रयोदशभिः सहस्रैरित्यादि पूर्ववत्, अत्रोपपत्तिर्यथा—अत्र मण्डले परिरयः ३१५५४९ एतद् द्वाभ्यामेकविंशत्यधिकाभ्यां शताभ्यां गुण्यते जातं ६९७३६३२९, एषां त्रयोदशभिः सहस्र सप्तभिः शतैः पञ्चविंशत्यधिकैर्भागे हृते लब्धानि पञ्च सहस्राण्यशीत्यधिकानि ५०८०, शेषं त्रयोदश सहस्राणि त्रीणि शतान्येकोनत्रिंशदधिकानि भागानां १३३२९/१३७२५

अथ चतुर्थादिमण्डलेष्वतिदेशमाह—'एवं खलु एएण'मित्यादि, पूर्ववत्, निष्क्रामन् चन्द्रस्तदनन्तरात् यावतशब्दात् मण्डलात्तदनन्तरं मण्डलं संक्रामन् २ त्रीणि २ योजनानि षन्नवतिं च पञ्चपञ्चाशदधिकानि भागशतान्येकैकस्मिन् मण्डले मुहूर्त्तगतिमिवर्द्धयन् २ सर्वबाह्यमण्डलमुपसंक्रम्य चारं चरति, कथमेतदवसीयत इति चेत्, उच्यते, प्रतिचन्द्रमण्डलं परिरयवृद्धिर्द्वे शते त्रिंशदधिके, अस्य च त्रयोदशसहस्रादिकेन राशिना भागे हृते लब्धानि त्रीणि योजनानि शेषं षन्नवतिं पञ्चपञ्चाशदधिकानि भागशतानि ३ ९६५५/१३७२५ अथ पश्चानुपूर्व्या पृच्छति—'जया ण'मित्यादि, यदा भदन्त ! चन्द्रः सर्वबाह्यमण्डलमुपसंक्रम्य चारं चरति तदा एकैकेन मुहूर्तेन कियत् क्षेत्रं गच्छति ?, गौतम ! पञ्च योजनसहस्राणि एकं च पञ्चविंशत्यधिकं योजनशतमेकोनसप्ततिं च नवत्यधिकानि भागशतानि गच्छति, मण्डलं त्रयोदशभिर्भागसहस्रैः सप्तभिश्च यावच्छब्दात् पञ्चविंशत्यधिकैः शतैर्विभज्यअयथ अत्रोपपत्ति—अत्र मण्डले परिरयपरिमाणं ३१८३१५ एतद् द्वाभ्यामेकविंसत्यधिकाभ्यां शताभ्यां गुण्यते जातं ७०३४७६१५ एषांत्रोयदशभिः सहस्रैःसप्तभिः शतैः पञ्चविंशत्यधिकैर्भागे हृते लब्धानि ५१२५ शेषं भागा ६९९०/१३७२५

अथात्र मण्डले दृष्टिपथप्राप्ततामाह—'तया ण'मिति, तदा—सर्वबाह्यमण्डलचरणकाले इहगतानां मनुष्याणामेकत्रिंशता योजनसहस्रैः अष्टभिश्चैकत्रिंशदधिकैः योजनशतैश्चन्द्रश्चक्षुस्पर्शं शीघ्रमागच्छति, अत्र सूर्याधिकारोक्तं 'तीसाए सट्ठिभाए'इत्यधिकं मन्तव्यं, उपपत्तिस्तु प्राग्वत्, अथ द्वितीयं मण्डलं—'जया णमित्यादि, यदा भदन्त ! सर्वबाह्यानन्तरं द्वितीयमित्यादि प्रश्नः प्राग्वत्, गौतम ! पञ्च योजनसहस्राणि एकं चैकविंशत्यधिकं योजनशतं एकादश च षष्ट्यधिकानि भागसहस्राणि गच्छति, मण्डलं त्रयोदशभिर्यावतपदात् सहस्र सप्तभिः शतैः पञ्चविंशत्यधिकैः छित्वा, अत्रोपपत्ति—अत्र मण्डले परिरयः ३१८०८५ एतद् द्वाभ्यामेकविंशत्यधिकाभ्यां शताभ्यां गुण्यते जातं ७०२९६७८५ एषां १३७२५ एभिर्भागे हृते लब्धं ५१२१ शेषं ११०६०/१३७२५

अथ तृतीयं–'जया ण'मित्यादि, प्रश्नः प्राग्वत्, गौतम ! पञ्च योजनसहस्राण्येकं चाष्टादशाधिकं योजनशतं चतुर्दश च पञ्चाधिकानि भागशतानि गच्छति, मण्डलं त्रयोदशभिः सहस्रैः सप्तभिः शतैः पञ्चविंशत्यधिकैः छित्वा, अत्रोपपत्ति—अत्र मण्डले परिरयप्रमाणं ३१७८५५ एतद् द्वाभ्यामेकविंशत्यधिकाभ्यां शताभ्यां गुण्यते जातं ७०२४५९५५ एषां १३७२५ एभिर्भागे हृते लब्धं ५११८ शेषं भागा १४०५/१३७२५ अथ चतुर्थादिमण्डलेष्वतिदेशमाह—'एवं खलु'इत्यादि, एतेनोपायेन यावच्छब्दात् 'पविसमाणे चंदे तयानंतराओ मंडलाओ तयनंतरं मंडल'मिति ग्राह्यं,

संक्रामन् २ त्रीणि योजनानि पन्नवतिं च पञ्चपञ्चाशदधिकानि भागशतानि एकैकस्मिन् मण्डले मुहूर्त्तगतिं निवर्द्धयन् २ सर्वाभ्यन्तरमण्डलमुपसंक्रम्य चारं चरति, उपपत्तिं पूर्ववत्, अत्र सर्वाभ्यन्तरसर्वबाह्यचन्द्र- मण्डलयोर्दृष्टिपथप्राप्तता दर्शिता, शेषमण्डलेषु तु सा अत्र ग्रन्थे चन्द्रप्रज्ञप्तिबृहत्क्षेत्रसमासवृत्त्यादिषु च पूर्वैः क्वापि न दर्शिता तेनात्र न दर्श्यत इति ।

अथ नक्षत्राधिकारः, तत्राष्टौ द्वाराणि यथा मण्डलसङ्ख्याप्ररूपणा १ मण्डलचारक्षेत्रप्ररूपणा २ अभ्यन्तरादिमण्डलास्थायिनामष्टाविंशतेर्नक्षत्राणां परस्परमन्तरनिरूपणा ३ नक्षत्रविमानाना-मायामादिनिरूपणं ४ नक्षत्रमण्डलानां मेरुतोऽबाधानिरूपणं ५ तेषामेवायामादिनिरूपणं ६ मुहूर्तगतिप्रमाणनिरूपणं ७ नक्षत्रमण्डलानां चन्द्रमण्डलैः समवतारनिरूपणं ८ ।

तत्रादौ मण्डलसङ्ख्याप्ररूपणाप्रश्नमाह—

*मू. (२७६) कइ णं भंते ! नक्खत्तमण्डपा पं० ?, गोअमा ! अट्ठ नक्खत्तमण्डला प० १ जंबुद्दीवे दीवे केवइअं ओगाहित्ता केवइआ नक्खत्तमंडला पन्नत्ता ?, गोअमा ! जंबुद्दीवे दीवे असीअं जोअणसयं ओगाहेत्ता एत्थ णं दो नक्खत्तमंडला पन्नत्ता, लवणे णं समुद्दे केवइअं ओगाहेत्ता केवइआ नक्खत्तमंडला प० गो० ! तिन्नि तीसे जोअणसए ओगाहित्ता एत्थ णं छ नक्खत्तमंडला प०, एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे लवणसमुद्दे अट्ठ नक्खत्तमंडला भवंतीतिमक्खायमिति २ । सव्वब्भंतराओ णं भंते ! नक्खत्तमंडलाओ केवइआए अबाहाए सव्वबाहिरए नक्खत्तमंडले प० गो० पंचदसुत्तरे जोअणसए अबाहाए सव्वबाहिरए नक्खत्तमंडे प० नक्खत्तमंडलस्स णं भंते ! नक्खत्तमंडलस्स य एस णं केवइआए अबाहाए अंतरे प० गो० दो जोअणाइं अबाहाए अंतरे पन्नत्ते ३ ।*

*नक्खत्तमंडले णं भंते ! केवइअं आयामविक्खम्भेणं केवइअं परिक्खेवेणं केवइअं बाहल्लेणं प० गो० ! गाउअं आयामविक्खम्भेणं तं तिगुणं सविसेसं परिक्खेवेणं अद्धगाउअं बाहल्लेणं प०*

*जंबुद्दीवे णं भंते ! दीवे मंदरस्स पव्वयस्स केवइआए अवाहाए सव्वब्भंतरे नक्खत्तमंडले पन्नत्ते ?, गोअमा ! चोयालीसं जोअणसहस्साइं अट्ठ य वीसे जोअणसए अबाहाए सव्वब्भंतरे नक्खत्तमंडले पन्नत्ते इति, जंबुद्दीवे णं भंते ! दीवे मंदरस्स पव्वयस्स केवइआए अबाहाए सव्वबाहिरए नक्खत्तमंडले पन्नत्ते ?, गोअमा ! पणयालीसं जोअणसहस्साइं तिन्नि अ तीसे जोअणसए अबाहाए सव्वबाहिरए नक्खत्तमंडले पन्नत्ते इति ५ ।*

*सव्वब्भंतरे नक्खत्तमंडले केवइअं आयामविक्खंभेणं केवइअं परिक्खेवेणं पं० ?, गो० नवनउतिं जोअणसहस्साइं छच्चचत्ताले जोअणसए आयामविक्खंभेणं तिन्नि अ जोअणसय-सहस्साइं पन्नरस सहस्साइं एगूणनवतिं च जोअणाइं किंचिविसेसाहिए परिक्खेवेणं पन्नत्ते,*

*सव्वबाहिरए णं भंते ! नक्खत्तमंडले केवइअं आयामविक्खंभेणं प० गो० एगं जोअण-सयसहस्सं छच्च सट्ठे जोअणसए आयामविक्खंभेणं तिन्नि अ जोअणसयसहस्साइं अट्ठारस य सहस्साइं तिन्नि अ पन्नरसुत्ते जोअणसए परिक्खेवेणं, जया णं भंते ! नक्खत्ते सव्वब्भंतरमंडलं उवसंकमित्ता चारं चरइ तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गोअमा ! पंच जोअणसहस्साइं दोन्नि य पन्नट्ठे जोअणसए अट्ठारस य भागसहस्से दोन्नि अ तेवट्ठे भागसए*

*गच्छइ मंडलं एक्कवीसाए भागसहस्सेहिं नवहि अ सट्ठेहिं सएहिं छेत्ता।*

*जया णं भंते ! नक्खत्ते सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गोयमा ! पंच जोअणसहस्साइं तिन्नि अ एगूणवीसे जोअणसए सोलस य भागसहस्सेहिं तिन्नि अ पन्नट्ठे भागसए गच्छइ, मंडलं एगवीसाए भागसहस्सेहिं नवहि अ सट्ठेहिं सएहिं छेत्ता, एते णं भंते ! अट्ठ नक्खत्तमंडला कतिहिं चंदमंडलेहिं समोअरंति गो० ! अट्ठहिं चंदमंडलेहिं समोअरंति, तंजहा–*

*पढमे चंदमंडले ततिए छट्ठे सत्तमे अट्ठमे दसमे इक्कारसमे पन्नरसमे चंदमंडले, एगमेगेणं भंते ! मुहुत्तेणं केवइआइं भागसयाइं गच्छइ ?, गो० ! जं जं मंडलं उवसंकमित्ता चारं चरइ तस्स २ मंडलपरिक्खेवस्स सत्तरस अट्ठे भागसए गच्छइ, मंडलं सयसहस्सेणं अट्ठानउइए अ सएहिं छेत्ता इति। एगमेगेणं भंते ! मुहुत्तेणं सूरिए केवइआइं भागसयाइं गच्छइ ?, गोअमा ! जं जं मंडलं उवसंकमित्ता चारं चरइ तस्स २ मंडलपरिक्खेवस्स अट्ठारसतीसे भागसए गच्छइ, मंडलं सयसहस्सेहिं अट्ठाणउतीए स सएहिं छेत्ता, एगमेगेणं भंते ! मुहुत्तेणं नक्खत्ते केवइआइं भागसयाइं गच्छइ ?, गो० ! जं जं मंडलं उवसंकमित्ता चारं चरइ तस्स तस्स मंडलपरिक्खेवस्स अट्ठारस पणतीसे भागसए गच्छइ मंडलं सयसहस्सेणं अट्ठाणउईए अ सएहिं छेत्ता।*

**वृ.** 'कइ णं भंते !' इत्यादि, कति भदन्त ! नक्षत्रमण्डलानि प्रज्ञप्तानि ?, गौतम ! अष्ट नक्षत्र मण्डलानि प्रज्ञप्तानि, अष्टाविंशतेरपि नक्षत्राणां अतिनियतस्व स्वमण्डलेष्वेतावत्स्वेव सञ्चरणात्, यथा चैतेषु सञ्चरणं तथा निरूपयिष्यति एतदेव क्षेत्रविभागेन प्रश्नयति–जंबूद्वीपे द्वीपे कियत्क्षेत्रमवगाह्य कियन्ति नक्षत्रमण्डलानि प्रज्ञप्तानि ?, गौतम ! जंबूद्वीपे द्वीपे अशीतं–अशीत्यधिकं योजनशतमवगाह्यात्रान्तरे द्वे नक्षत्रमण्डले प्रज्ञप्ते, लवणसमुद्रे कियदवगाह्य कियन्ति नक्षत्रमण्डलानि प्रज्ञप्तानि ?, गौतम ! लवणसमुद्रे त्रीणि त्रिंशदधिकानि योजनशतान्यवगाह्यात्रान्तरे षट् नक्षत्रमण्डलानि प्रज्ञप्तानि, अत्रोपसंहारवाक्येनोक्तसङ्ख्यां मीलयति–एवमेव सपूर्वापरेण जंबूद्वीपे द्वीपे लवणसमुद्रे चाष्टौ नक्षत्रमण्डलानि भवन्ति इत्याख्यातं, मकारोऽत्रागमिकः।

अथ मण्डलचारक्षेत्रप्ररूपणा– 'सव्वब्भन्तरा' इत्यादि, सर्वाभ्यन्तराद् भदन्त ! नक्षत्रमण्डलात् कियत्या अबाधया सर्वबाह्यं नक्षत्रमण्डलं प्रज्ञप्तम् ?, गौतम ! पञ्चदशोत्तराणि योजनशतान्यबाधया सर्वबाह्यं नक्षत्रमण्डलं प्रज्ञप्तं, इदं च सूत्रं नक्षत्रजात्यपेक्षया बोद्धव्यं, अन्यथा सर्वाभ्यन्तरमण्डलस्थायिनामभिजिदादिद्वादशनक्षत्राणामवस्थितमण्डलकत्वेन सर्वबाह्यमण्डलस्थैवाभावात्, तेनायमर्थः सम्पन्नः–सर्वाभ्यन्तरनक्षत्रमण्डलजातीयात् सर्वबाह्यं नक्षत्रमण्डलजातीयं इयत्या अबाधया प्रज्ञप्तमिति बोध्यं। अथाभ्यन्तरादिमण्डलस्थायिनामष्टाविंशतेर्नक्षत्राणां परस्परमन्तरनिरूपणा– 'नक्खत्त'- इत्यादि, नक्षत्रमण्डलस्य–नक्षत्रविमानस्य नक्षत्रविमानस्यच भदन्त ! कियत्या अबाधया अन्तरं प्रज्ञप्तम् ?, गौतम ! द्वे योजने नक्षत्रविमानस्य नक्षत्रविमानस्य चाबाधयाऽन्तरं प्रज्ञप्तम्, अयमर्थः– अष्टास्वपि मण्डलेषु यत्र २ मण्डले यावन्ति नक्षत्राणां विमानानि तेषामन्तरबोधकमिदं सूत्रं, यथा अभिजिन्नक्षत्रविमानस्य श्रवणनक्षत्रविमानस्य च परस्परमन्तरं द्वे योजने, न तु नक्षत्रसत्कसर्वाभ्यन्तरादिमण्डलानामन्तरसूचकं, अन्यथा नक्षत्रमण्डलानां

वक्ष्यमाणचन्द्रमण्डलसमवतारसूत्रेण सह विरोधात् ।

अथ नक्षत्रविमानानामायामादिप्ररूपणा—'नक्खत्त'इत्यादि नक्षत्रमण्डलं भदन्त ! कियदायामविष्कम्भाभ्यां कियत् परिक्षेपेण कियद्बाहल्येन—उच्चैस्त्वेन प्रज्ञप्तम् ?, गौतम ! गव्युतमायामविष्कम्भाभ्यां तत्त्रिगुणं सविशेषं परिक्षेपेण अर्द्धक्रोशं बाहल्येन प्रज्ञप्तमिति ।

सम्प्रत्येषामेव मेरुमधिकृत्याबाधाप्ररूपणा—'जंबुद्दीवे'त्ति जंबूद्वीपे भदन्त ! द्वीपे मंदरस्य पर्वतस्य कियत्या अबाधया सर्वाभ्यन्तरं नक्षत्रमण्डलं प्रज्ञप्तम्, उपपत्तिस्तु सूर्याधिकारे निरूपिता, अथ बाह्यमण्डलाबाधां पृच्छति—'जंबुद्दीवे'त्ति, जंबूद्वीपे भदन्त ! द्वीपे मंदरस्य पर्वतस्य कियत्या अबाधया सर्वबाह्यं नक्षत्रमण्डलं प्रज्ञप्तम् ?, गौतम ! पंचचत्वारिंशद्योजनसहस्राणि त्रीणि च त्रिंशदधिकानि योजनशतान्यबाधया सर्वबाह्यं नक्षत्रमण्डलं प्रज्ञप्तम्, उपपत्तिस्तु प्राग्वत् ।

अथ एतेषमेवायामादिनिरूपणम्—'सव्वब्भन्तरे ण'मित्यादि, प्राग्वत्, अथ सर्वबाह्यमण्डलं पृच्छति—'सव्वबाहिरए'इत्यादि, प्राग्वत्, मध्यमेषु षट्सु मंडलेषु तु चन्द्रमंडलानुसारेणायाम-विष्कम्भपरिक्षेपाः परिभाव्याः, अष्टावपि नक्षत्रमंडलानि चन्द्रमंडले समवतरन्तीति भणिष्यमाणत्वात्

अथ मुहूर्त्तगतिद्वारम्—'जया ण'मित्यादि, यदा भदन्त ! नक्षत्रं सर्वाभ्यन्तरमंडलमुप-संक्रम्य चारं चरति तदैकैकेन मुहूर्त्तेन कियत्क्षेत्रं गच्छति ?, नक्षत्रमित्यत्र जात्यपेक्षयैकवचनं, अन्यथाऽभ्यन्तरमंडलगतिचिन्तायां द्वादशानामपि नक्षत्राणां संग्रहाय बहुवचनस्यौचित्यात्, गौतम ! पञ्च योजनसहस्राणि द्वे च पञ्चषष्ट्यधिके योजनशते अष्टादश च भागसहस्राणि द्वे च त्रिषष्ट्यधिकभागशते गच्छति, मंडलमेकविंशत्या भागसहस्रैर्नवभिश्च षष्ट्यधिकैः शतैः छित्वा इति, अत्रोपपत्ति—इह नक्षत्रमंलकाल एकोनषष्टिर्मुहूर्त्ताः एकस्य च मुहूर्त्तस्य सप्तषष्ट्यधिकत्रिशत-भागानां त्रीणि शतानि सप्तोत्तराणीति, अयं च नक्षत्राणां मुहूर्त्तभागो गत्यवसरे भावयिष्यते, इदानी-मेतदनुसारेण मुहूर्त्तगतिश्चिन्त्यते—

तत्र रात्रिन्दिवे त्रिंशन्मुहूर्त्ताः तेषु उपरितना एकोनत्रिंशन्मुहूर्त्ताः प्रक्षिप्यन्ते जाता एकोन-षष्टिर्मुहूर्त्तानां, ततः सवर्णनार्थं त्रिभि शतैः सप्तषष्ट्याऽधिकैः गुणयित्वा उपरितनानि त्रीणि शतानि सप्तोत्तराणि प्रक्षिप्यन्ते जातान्येकविंशतिसहस्राणि नव शतानि षष्ट्यधिकानि अयं च प्रतिमंडलं परिधेः छेदकराशि, तत्र सर्वाभ्यन्तरमंडलपरिधिः ३१५०८९, अयं च योजनात्मको राशिर्भागात्मकेन राशिना भजनार्थं त्रिभिः सप्तषष्ट्यधिकैः शतैः गुण्यते, जातं ११५६३७६६३, अस्य राशेरेकविंशत्या सहस्रैः नवभिः शतैः षष्ट्यधिकैर्भागे हृते लब्धानि ५२६५ शेषं $^{१८२६३}/_{२१९६०}$ भागाः, एतावती सर्वाभ्यन्तरमंडलेऽभिजिदादीनां द्वादशनक्षत्राणां मुहूर्त्तगतिः ।

अथ बाह्ये नक्षत्रमंडले मुहूर्त्तगतिं पृच्छति—'जया ण'मित्यादि, यदा भदन्त ! नक्षत्रं सर्वबाह्यं मण्डलं उपसंक्रम्य चारं चरति तदा एकैकेन मुहूर्त्तेन कियत् क्षेत्रं गच्छति ?, अत्राप्येकवचनं प्राग्वत्, गौतम ! पञ्च योजनसहस्राणि त्रीणि चैकोनविंशत्यधिकानि योजनशतानि षोडश च भागसहस्राणि त्रीणि च पञ्चषष्ट्यधिकानि भागशतानि गच्छति मण्डलमेकविंशत्या भागसह-स्रैर्नवभिश्च षष्ट्यधिकैः शतैः छित्वा इति, अत्रोपपत्तिः—अत्र मण्डले परिधिः ३१८३१५, अयं त्रिभिः सप्तषष्ट्यधिकैः शतैः गुण्यते जातं ११६८२१६०५, अस्य राशेरेकविंशत्या सहस्रैर्नवभिः

शतैः षष्ट्यधिकैः भागे लब्धानि ५३१९ योजनानि शेषं १५१६५/१२२०० भागाः, एतावती सर्वबाह्ये नक्षत्रमण्डले मृगशीर्षप्रभृतीनामष्टानां नक्षत्राणां मुहूर्त्तगति, उक्ता तावत् सर्वाभ्यन्तरसर्वबाह्यमण्डलवर्त्तिनां नक्षत्राणा मुहूर्त्तगति, अथ नक्षत्रतारकाणामयस्थितमण्डलकत्वेन प्रतिनियतगतिकत्वेन चावशिष्टेषु षट्सु मण्डलेषु मुहूर्त्तगतिपरिज्ञानं दुष्करमिति तत्कारणभूतं मण्डलपरिज्ञानं कर्तुं नक्षत्रमण्डलानां चन्द्रमण्डलेषु समवतारप्रश्नमाह—एतानि भदन्त ! अष्टौ नक्षत्रमण्डलानि कतिषु चन्द्रमण्डलेषु समवतरन्ति अन्तर्भवन्ति, चन्द्रनक्षत्राणां साधारणमण्डलानि कानीत्यर्थः, भगवानाह-गौतमाष्टासु चन्द्रमण्डलेषु समवतरन्ति, तद्यथा—प्रथमे चन्द्रमण्डले प्रथमं नक्षत्रमण्डलं, चारक्षेत्र-सञ्चारिणामनवस्थितचारिणां च सर्वेषां ज्योतिष्काणां जंबूद्वीपेऽशीत्यधिकयोजनशतमवगाह्यैव मण्डलप्रवर्त्तनात्, तृतीये चन्द्रमण्डले द्वितीयं, एते च द्वे जंबूद्वीपे, षष्ठे लवणे भाविनि चन्द्रमण्डले तृतीयं, तथैव भाविनि सप्तमे चतुर्थं अष्टमे पञ्चमं दशमे षष्ठं एकादशे सप्तमं पञ्चदशेऽष्टमं शेषाणि तु द्वितीयादीनि सप्त चन्द्रमण्डलानि नक्षत्रैर्विरहितानि, तत्र प्रथमे चन्द्रमण्डले द्वादश नक्षत्राणि,

तद्यथा—अभिजिच्छ्रवणो धनिष्ठा शतभिषक् पूर्वभद्रपदा उत्तरभद्रपदा रेवती अश्विनी भरणी पूर्वाफाल्गुनी उत्तराफाल्गुनी स्वातिश्च, द्वितीये पुनर्वसु मघा च, तृतीये कृत्तिका, चतुर्थे रोहिणी चित्रा च, पञ्चमे विशाखा षष्ठे अनुराधा सप्तमे ज्येष्ठा अष्टमे मृगशिरः आर्द्रा पुष्यः अश्लेषा मूलो हस्तश्च, पूर्वाषाढोत्तराषाढयोर्द्वे द्वे तारे अभ्यन्तरतो द्वे द्वे बाह्यत इति, एवं स्वस्वमण्डलावतारसत्कचन्द्रमण्डलपरिध्यनुसारेण प्रागुक्तरीत्या द्वितीयादीनामपि नक्षत्रमण्डलानां मुहूर्त्तगति परिभावनीया, उक्ता प्रतिमण्डलं चन्द्रादीनां योजनात्मिका मुहूर्त्तगति, अथ तेषामेव प्रतिमण्डलं भागात्मिकां मुहूर्त्तगतिं परिभावनीया, उक्ता प्रतिमण्डलं चन्द्रादीनां योजनात्मिका मुहूर्त्तगति, अथ तेषामेव प्रतिमण्डलं भागात्मिकां मुहूर्त्तगतिं प्रश्नयति।

'एगमेगे णं' मित्यादि, एकैकेन भगवन् ! मुहूर्त्तेन चन्द्रः कियन्ति भागशतानि गच्छति ?, गौतम ! यद्यन्मण्डलमुपसंक्रम्य चारं चरति तस्य तस्य मण्डलस्य सम्बन्धिनः परिक्षेपस्य सप्तदश शतान्यष्टषष्टिभागैरधिकानि गच्छति, मण्डलपरिक्षेपमेकेन लक्षेणाष्टनवत्या च शतैः छित्वा—विभज्य, इयमत्र भावना—इह प्रथमतश्चन्द्रस्य मंडलकालो निरूपणीयस्तदनन्तरं तदनुसारेण मुहूर्त्तगति-परिमाणं भावनीयं, तत्र मंडलकालनिरूपणार्थमिदं त्रैराशिकं—यदि सप्तदशभिः शतैरष्टषष्ट्यधिकैः सकलयुगवर्त्तिभिरर्द्धमंडलैश्चन्द्रद्वयापेक्षया तु पूर्णमंडलैरष्टादश शतानि त्रिंशदधिकानि रात्रिन्दिवानां लभ्यन्ते ततो द्वाभ्यामर्द्धमंडलाभ्यामेकेन मण्डलेनेति भावः।

कति रात्रिन्दिवानि लभ्यन्ते ?, राशित्रयस्थापना अत्रान्त्येन राशिना द्विकलक्षणेन मध्यराशेर्गुणनं जातानि षट्त्रिंशच्छतानि षष्ट्यधिकानि तेषामादि- राशिना भागहरणं लब्धे द्वे रात्रिन्दिवे शेषं तिष्ठति चतुर्विंशत्यधिकं शतं तत्रैकस्मिन् रात्रिन्दिवे त्रिंशन्मुहूर्ता इति तस्य त्रिंशता गुणने जातानि सप्तत्रिंशच्छतानि विंशत्यधिकानि तेषां सप्तदशभि शतैः अष्टषष्ट्यधिकैर्भागे हृते लब्धौ द्वौ मुहूर्त्तौ, ततः छेद्यच्छेदकराश्योरष्टकेनापवर्तना जातः छेद्यो राशिस्त्रयोविंशति छेदकराशिर्द्वे शते एकविंशत्यधिके आगतं मुहूर्त्तस्यैकविंशत्य- धिकशतद्वयभागास्त्रयोविंशति २, एतावताकालेन द्वे अर्द्धे मंडले परिपूर्णे चरति, किमुक्तं भवति ? एतावता कालेन परिपूर्णमेकं मंडलं चन्द्रश्चरति। तदेवं

चन्द्रमण्डलकालप्ररूपणा, अथैतदनुसारेण मुहूर्त्तगति, तत्र ये द्वे रात्रिन्दिवे ते मुहूर्त- करणार्थं त्रिंशता गुण्येते, जाताः षष्टिर्मुहूर्त्ताः उपरितनयोर्द्वयोः क्षेपे जाता द्वाषष्टिः, एषां सवर्णनार्थं द्वाभ्यां शताभ्यामेकविंशत्यधिकाभ्यां गुण्यते, गुणयित्वा चोपरितनांशत्रयोविंशति प्रक्षिप्यते, जातानि त्रयोदश सहस्राणि सप्त शतानि पञ्चविंशत्यधिकानीति, एतदेकमण्डलकालगत- मुहूर्त्त - सत्कैकविंशत्यधिकशतद्वयभागानां परिमाणं, ततस्त्रैराशिककरणं, यदि त्रयोदशभि :सहस्रैः सप्तभिः शतैः पञ्चविंशत्यधिकैरेकविंशत्यधिकशतद्वयभागानां मंडलभागा एकं शतसहस्रमष्टानव- तिशतानि लभ्यन्ते तत एकेन मुहूर्त्तेन किं लभामहे ? इहाद्यो राशिर्मुहूर्त्तगतैकविंशत्यधिकशतद्वयभागस्व- रूपस्ततः सवर्णनार्थमन्त्यो राशिरेकलक्षणो द्वाभ्यां शताभ्यामेकविंशत्यधि- काभ्यां गुण्यते, जाते द्वे शते एकविंशत्यधिके, ताभ्यां मध्यो राशिर्गुण्यते, जाते द्वे कोट्यौ द्विचत्वारिं- शल्लक्षाः पञ्चषष्टि सहस्राण्यष्टौ शतानि, तेषां त्रयोदशभिःसहस्रैः सप्तभि :शतैः पञ्चविंशत्यधिकैर्भागो ह्रियते, लब्धानि सप्तदश शतान्यष्ट- षष्ट्यधिकानि, एतावतो भागान् यत्र तत्र वा मण्डले चन्द्रो मुहूर्त्तेन गच्छति, अयमर्थः

इहाष्टाविंशत्या नक्षत्रैः स्वगत्या स्वस्वकालपरिमाणेन क्रमशो यावत् क्षेत्र बुध्या व्याप्यमानं सम्भाव्यते तावदेकमर्द्धमण्डलमुपकल्प्यते, एतावत्प्रमाणमेव द्वितीयमर्द्धमण्डलं द्वितीयाष्टावि- शतिनक्षत्रसत्कतद्भागजनितमित्येवंप्रमाणबुद्परिकल्पितमेकमण्डलश्छेदो ज्ञातव्यः एकं लक्षं परिपूर्णानि चाष्टानवतिशतानि, कथमेतस्योत्पत्तिरिति चेत्, उच्यते, इह त्रिविधानि नक्षत्राणि, तद्यथा—समक्षेत्राण्यर्द्धक्षेत्राणि द्व्यर्धक्षेत्राणि च, इह यावत्प्रमाणं क्षेत्रमहोरात्रेण गम्यते सूर्येण तावत्प्रमाणं चन्द्रेण सह योगं यानि नक्षत्राणि गच्छंति तानि समक्षेत्राणि, समं—अहोरात्रप्रमितं क्षेत्रं येषां तानि समक्षेत्राणीति व्युत्पत्तेः, तानि च पञ्चदश, तद्यथा—श्रवणं धनिष्ठा पूर्वभद्रपदा रेवती अश्वनी कृत्तिका मृगशिरः पुष्यो मघा पूर्वाफाल्गुनी हस्तः चित्रा अनुराधा मूलः पूर्वाषाढा इति, तथा यानि अर्द्धमहोरात्रप्रमितस्य क्षेत्रस्य चन्द्रण सह योगमश्नुवते तान्यर्द्धक्षेत्राणि, अर्ध— अर्द्धप्रमाणं क्षेत्रं येषां तान्यर्द्धक्षेत्राणीति व्युत्पत्तिभावात्, तानि च षट्, तद्यथा—शतभिषक् भरणी आर्द्रा अश्लेषा स्वातिर्ज्येष्ठेति, तथा द्वितीयमर्द्धं यस्य तद् द्व्यर्द्धं सार्द्धमित्यर्थः, द्व्यर्द्ध— अर्द्धेनाधिकं क्षेत्रमहोरात्रप्रमितं चन्द्रयोग्यं येषां तानि व्यर्द्धक्षेत्राणि, तान्यपि षट् ।

तद्यथा—उत्तरभद्रपदोत्तरफल्गुनी उत्तराषाढा रोहिणी पुनर्वसु विशाखा चेति, तत्रेह सीमापरिमाणचिन्तायामहोरात्रः सप्तषष्टिभागीकृतः परिकल्प्यते इति समक्षेत्राणां प्रत्येकं सप्तषष्टि- भागाः परिकल्प्यन्ते, अर्द्धक्षेत्राणां त्रयस्त्रिंशदर्द्धं च, द्व्यर्द्धक्षेत्राणां शतमेकमर्द्धं च, अभिजिन्न- क्षत्रस्यैकविंशति सप्तषष्टिभागाः, समक्षेत्राणि नक्षत्राणि पञ्चदशेति सप्तषष्टि पञ्चदशभिर्गुण्यते, जातं सहस्रं पञ्चोत्तरं , अर्द्धक्षेत्राणि षडिति सार्द्धास्त्रयस्त्रशत् षड्भिर्गुण्यते जाते द्वे शते एकोत्तरे, द्व्यर्द्धक्षेत्राण्यपि षट् ततः शतमेकमर्द्धं च षड्भिर्गुणितं जातानि षट् शतानि त्र्युत्तराणि, अभिजिन्नक्षत्रैकविंशति, सर्वसंख्यया जातान्यष्टादश शतानि त्रिंशदधिकानि, एतावद्भागपरिमाणमेकमर्द्धमंडलमेतावदेव द्वितीयमपीति त्रिंशदधिकान्यष्टादश शतानि द्वाभ्यां गुण्यन्ते जातानि षट्त्रिंशच्छतानि षष्ट्यधिकानि , एकैकस्मिन्नहोरात्रे किल त्रिंशन्मुहूर्त्ता इति प्रत्येकमेतेषु षष्ट्यधिकषट्त्रिंशच्छतसङ्ख्येषु भागेषु त्रिंशद्भागकल्पनायां त्रिंशता गुण्यन्ते,

जातमेकशतसहस्रमष्टानवति शतानि, तदेवं मंडलच्छेदपरिमाणमभिहितं, ननु यानि नक्षत्राणि यन्मण्डलस्थायीनि तेषां तन्मंडलेषु चन्द्रादियोगयोग्यमंडलभागस्थापनं युक्तिमत् न तु सर्वेष्वपि मंडलेषु सर्वेषां भागकल्पनमिति चेत्, उच्यते, नहि नक्षत्राणां चन्द्रादिभिर्योगो नियते दिने नियते देशे नियतवेलायामेव भवति किन्त्वनियतदिनादौ तेन तत्तन्मंडलेषु तत्तन्नक्षत्र-सम्बन्धिसीमाविष्कम्भे चन्द्रादिप्राप्ती सत्यां योगः सम्पद्यत इति, मंडलच्छेदश्च सीमाविष्कम्भादौ सप्तयोजनः ।

अथ सूर्यस्य भागात्मिकां गतिं प्रश्नयन्नाह– 'एगमेगे णं भंते !' इत्यादि, एकैकेन भगवन् मुहूर्तेन सूर्यः कियन्ति भागशतानि गच्छति ?, गौतम ! यद्यन्मण्डलमुपसंक्रम्य चारं चरति तस्य तस्य मंडलसम्बन्धिनः परिक्षेपस्याष्टादश भागशतानि त्रिंशदधिकानि गच्छति, मण्डलं शतसहस्रेणा-ष्टानवत्या च शतैः छित्वा, कथमेतदवसीयत इति चेत् ?, उच्यते, त्रैराशिककरणात्, तथाहि–षष्ट्या मुहूर्तैरेकं शतसहस्रमष्टानवति शतानि मंडलभागाना लभ्यन्ते ततः एकेन मुहूर्तेन कति भागान् लभामहे, अत्रान्त्येन राशिना एककलक्षणेन मध्यस्य राशेर्गुणनं, जातः स तावानेव, एकेन गुणितं तदेव भवतीति वचनात्, ततस्तस्याद्येन राशिना षष्टिलक्षणेन भागो ह्रियते, लब्धान्यष्टादश शतानि त्रिंशदधिकानि, एतावतो भागान् मण्डलस्य सूर्य एकैकेन मुहूर्तेन गच्छति, अथ नक्षत्राणां भागात्मिकां गतिं प्रश्नयन्नाह– 'एगमेगे ण'मित्यादि, प्रश्नसूत्रं सुगमं, उत्तरसूत्रे तु गौतम ! यद्यदात्मीयमात्मीयं प्रतिनियतं मण्डलमुपसंक्रम्य चारं चरति तस्य तस्यात्मीयस्य मण्डलस्य सम्बन्धिनः परिक्षेपस्य–परिधेरष्ट-दशभागशतानि पञ्चत्रिंशदधिकानि गच्छति, मण्डलं शतसहस्रेणाष्टनवत्या च शतैः छित्वा, इहापि प्रथमतो मण्डलकालो निरूपणीयस्ततस्तदनुसारेणैव मुहूर्तगतिपरिमाण-भावना, तत्र मण्डलकालप्रमाणचिन्तायां इदं त्रैराशिकं–यद्यष्टादशभिः शतैः पञ्चत्रिंशदधिकैः सकलयुग-वर्त्तिभिरर्द्धमण्डलैर्द्वितीयाष्टविंशतिनक्षत्रापेक्षया तु पूर्णमण्डलैरित्यर्थः अष्टादश शतानि त्रिंशदधिकानि रात्रिन्दिवानां लभ्यन्ते ततो द्वाभ्यामर्द्धमण्डलाभ्यामेकेन परिपूर्णेन मण्डलेनेति भावः किं लभामहे ?

अत्रान्त्येन राशिना मध्यराशेर्गुणनं जातानि षट्त्रिंशच्छतानि षष्ट्यधिकानि, तत आद्येन राशिना लक्षणेन भागहरणं लब्धमेकं रात्रिन्दिवं, शेषाणि तिष्ठन्त्यष्टादश शतानि पञ्चविंशत्यधिकानि, ततो मुहूर्त्तान- यनार्थमेतानि त्रिंशता गुण्यन्ते, जातानि चतुःपञ्चाशत्सहस्राणि सप्त शतानि पञ्चाशदधिकानि, तेषामष्टादशभिः शतैः पञ्चत्रिंशदधिकैर्भागे हृते लब्धा एकोनत्रिंशन्मुहूर्ताः, ततः शेषच्छेद्यच्छेदकराश्योः पञ्चकेनापवर्त्तना जात उपरितनो राशिस्त्रीणि शतानि सप्तोत्तराणि छेदकराशिस्त्रीणि शतानि सप्तषष्ट्यधिकानि, तत आगतमेकं रात्रिन्दिवमेकस्य च रात्रिन्दिव-स्यैकोनत्रिंशन्मुहूर्त्ताः एकस्य च मुहूर्त्तस्य सप्तषष्ट्यधिकत्रिशतभागानां त्रीणि शतानि सप्तोत्तराणि इदानीमेतदनुसारेण मुहूर्तगतिपरिमाणं चिन्त्यते, तत्र रात्रिन्दिवे त्रिंशन्मुहूर्त्ताः तेषु उपरितना एकोनत्रिंशन्मुहूर्त्ताः प्रक्षिप्यन्ते जाता एकोनषष्टिर्मुहूर्त्तानां ततः सा सवर्णनार्थं त्रिभिः शतैः षष्ट्यधिकैर्गुण्यते, गुणयित्वा चोपरितनानि त्रीणि शतानि सप्तोत्तराणि प्रक्षिप्यन्ते जातान्येकविंशति सहस्राणि नव शतानि षष्ट्यधिकानि, ततस्त्रैराशिकं–यदि मुहूर्तगतसप्तषष्ट्यधिकत्रिशतभागानामे-कविंशत्या सहस्रैः नवभिः शतैः षष्ट्यधिकैरेकं शतसहस्रमष्टानवति शतानि मण्डलभागानां लभ्यन्ते तत एकेन मुहूर्त्तेन किं लभामहे ? अत्राद्यो राशिर्मुहूर्तगतसप्तषष्ट्यधिकत्रिशतभागरूपस्ततोऽन्योऽपि

राशिस्त्रिभिः शतैः सप्तषष्ट्यधिकैर्गुण्यते जातानि त्रीण्येव शतानि सप्तषष्ट्यधिकानि तैर्मध्यो राशिर्गुण्यते जाताश्चतस्रः कोट्यो द्वे लक्षे षन्नवति सहस्राणि षट् शतानि , तेषामाद्येन राशिना एकविंशतिसहस्राणि नव शतानि षष्ट्यधिकानि इत्येवंरूपेण भागो हियते, लब्धान्यष्टादश शतानि पञ्चत्रिंशदधिकानि, एतावतो भागान्नक्षत्रं प्रतिमुहूर्त्तं गच्छति, इदं च भागात्मकं गतिविचारणं चन्द्रादित्रयस्य यथोत्तरं गतिशीघ्रत्वे सप्रयोजनं, तथाहि–

सर्वेभ्यो नक्षत्राणि शीघ्रगतीनि, मण्डलस्योक्तागीकृतस्य पञ्चत्रिंशदधिकाष्टादशशतभागानामेकैकस्मिन् मुहूर्त्ते आक्रमणात्, तेभ्यो मन्दगतयः सूर्या, एकैकस्मिन् मुहूर्त्ते त्रिंशदधिकाष्टादशभागानामाक्रमणात्, तेभ्यश्चन्द्रा मन्दगतयः एकैकस्मिन् मुहूर्त्ते अष्टषष्ट्यधिकसप्तशतभागानामाक्रमणात्, ग्रहास्तु वक्रानुवक्रादिगतिभावतोऽनियतगतिकास्तेन न तेषां मण्डलादिचिन्ता नापि गतिप्ररूपणा, तारकाणामप्यवस्थितमण्डलकत्वाच्चन्द्रादिभि सह योगाभावचिन्तनाद्ध न मण्डलादिप्ररूपणा कृता । सम्प्रति सूर्यस्योदगमनास्तमयने अधिकृत्य बहवो मिथ्याभिनिविष्टबुद्धयो विप्रतिपन्नास्तेन तद्विप्रतिपत्तिमपाकर्त्तु प्रश्नमाह–

**मू. (२७७)** *जंबुद्दीवे णं भंते ! दीवे सूरिआ उदीणपाईणमुग्गच्छ पाईणदाहिणमागच्छंति १ पाइणदाहिणमुग्गच्छ दाहिणपडिणमागच्छंति २ दाहिणपडीणमुग्गच्छ पडीणउदीणमागच्छंति ३ पडीणउदीममुग्गच्छ उदीणपाईणमागच्छंति ४ ?, हंता गोअमा ! जहा पंचमसए पढमे उद्देसे जाव नेवत्थि उस्सप्पिणी अवट्ठिए णं तत्थ काले पं० समणाउसो !, इच्चेसा जंबुद्दीवपन्नत्ती सूरपन्नत्ती वत्थुसमासेणं सम्मत्ता भवइ । जंबुद्दीवे णं भंते ! दीवे चंदिमा उदीणपाईणमुग्गच्छ पाईणदाहिणमागच्छंति जहा सूरवतव्वया जहा पंचमसयस्स दसमे उद्देसे जाव अवट्ठिए णं तत्थ काले प०सम०, इच्चेसा जंबुद्दीवपन्नत्ती वत्थुसमासेणं सम्मत्ता भवइ ।*

**वृ.** 'जंबुद्दीवे ण'मित्यादि, जंबूद्वीपे भदन्त ! द्वीपे द्वौ सूर्यौ जंबूद्वीपे द्वयोरेव भावात्, उदीचीनप्राचीनं उदगेव उदीचीनं त तदुदीच्या आसन्नत्वात् प्राचीनं च प्राच्याः प्रत्यासन्नत्वादुदीचीनप्राचीनं, अत्र स्वार्थे इन् प्रत्ययः, दिगन्तरं क्षेत्रदिगपेक्षयोत्तरपूर्वस्यामीशानकोणे इत्यर्थः, अत्र प्राकृतत्वात् सप्तम्यर्थे द्वितीया, उद्गत्य–पूर्वविदेहापेक्षयोदयं प्राप्य प्राचीनदक्षिणे दिगन्तरे प्रागदक्षिणस्यामाग्नेयकोणे इत्यर्थः आगच्छतः क्रमेणैवास्तं यात इत्यर्थः, इह चोदगमनमस्तमयनं च द्रष्टलोकविवक्षयाऽवसेयं, तथाहि–येषामदृश्यौ सन्तौ दृश्यौ तौ स्यातां, ते तयोरुदयं व्यवहरन्ति, येषां तु दृश्यौ सन्तावदृश्यौ तौ स्तस्ते तयोस्तमयं व्यवहरन्तीत्यनियतावुदयास्तमयाविति, अत्र काकुपाठात् प्रश्नोऽवगन्तव्यः, ततो भरतादिक्षेत्रापेक्षया प्रागदक्षिणस्यामुदगत्य दक्षिणप्रतीच्यामागच्छतस्तत्रापि दक्षिणप्रतीच्यामपरविदेहापेक्षयेद्गत्य प्रतीचीनोदीचीने–वायव्यकोणे आगच्छतस्तत्रापि च वायव्यामैरावतादिक्षेत्रायोद्गत्योदीचीनप्रतीचीनेईशानकोणे आगच्छतः, एवं सामान्यतः सूर्ययोरुदयविधिः ।विशेषतः पुनरेवं–यदैकः सूर्य आग्नेयकोणे उद्गच्छति तत्रोदगतश्च भरतादीनि मेरुदक्षिणदिग्वर्त्तीनि क्षेत्राणि प्रकाशयति तदा परोऽपि वायव्यकोणे उद्गतो मेरूत्तरदिग्भा- वीन्यैरावतादीनि क्षेत्राणि प्रकाशयति, भारतश्च सूर्यो मण्डलभ्राम्या भ्रमन् नैऋतकोणे उद्गतः सन्नपरमहाविदेहान् प्रकाशयति, ऐरावतस्तु ऐशान्यामुद्गतः पूर्वविदेहान्

प्रकाशयति, ततः एष पूर्वविदेहप्रकाशको दक्षिणपूर्वस्यां भरतादिक्षेत्रापेक्षयोदयमासादयति, अपरविदेहप्रकाशकस्त्वपरोत्तरस्यामैरवतादिक्षेत्रापेक्षयोदयमासादयति, अत्रैशान्यादिदिग्व्यवहारो मेरुतो बोध्यः, अन्यथा भरतादिजनानां स्वस्वसूर्योदयदिशि पूर्वदिकत्वे आग्नेयादिकोणव्यवहारानुपपत्तेरिति, एवं प्रश्ने कृते भगवानाह–

हन्तेत्यव्ययमभ्युपगमार्थे तेन हे गौतम ! इत्थमेवयथा त्वं प्रश्नयसि तथैवेत्यर्थः, अनेन च सूर्यस्य तिर्यगदिक्षु गतिरुक्ता, न तु 'तत्थ रवी दसजोअण' इत्यादिगाथोक्तस्वस्थानादूर्ध्वं नाप्यधः, तेन ये मन्यते 'सूर्य पश्चिमसमुद्रं प्रविश्य पातालेन गत्वा पुनः पूर्वसमुद्रे उदेती' त्यादि, तन्मतं निषिद्धमिति । अथ सूत्रकृद् ग्रन्थगौरवभयादतिदेशवाक्यमाह–यथा पञ्चमशते प्रथमे उद्देशके तथा भणितव्यं, कियत्पर्यन्तमित्याह–यावत् 'णेवऽत्थि उस्सप्पिणी नेवऽत्थि ओसप्पिणी अवट्ठिए णं तत्थ काले प०' इति सूत्रं, तद्यथा– "जया णं भंते ! जंबुद्दीवे दीवे दाहिणद्धे दिवसे भवइ तया णं उत्तरद्धेवि दिवसे भवइ, जया णं उत्तरद्धे दिवसे भवइ तया णं जंबुद्दीवे २ मंदरस्स पव्वयस्स पुरत्थिमपच्चत्थिमेणं राई भवइ ?, हंता गोअमा ! जया णं जंबुद्दीवेदीवे दाहिणद्धे दिवसे जाव राई भवइ, जया णं भंते ! जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरत्थिमेणं दिवसे भवइ तया णं पच्चत्थिमेणवि दिवसे भवइ, जया णं पच्चत्थिमे णं दिवसे भवइ तया णं जंबुद्दीवे २ मंदरस्स पव्वयस्स उत्तरदाहिणेणं राई भवइ ?, हन्ता ! गोअमा ! जया णं जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरत्थिमेणं दिवसे जाव राई भवइ, जया णं भंते ! जंबुद्दीवे दीवे दाहिणद्धे उक्कोसए अट्ठारसमुहुत्ते दिवसे भवइ तया णं जंबुद्दीवे दीवे मंदरस्स पुरत्थिमपच्चत्थिमेणं जहन्निया दुवालसमुहुत्ता राई भवइ ?, हन्ता गोअमा जाव दुवालसमुहुत्ता राई भवइ ।

जया णं भंते ! जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरत्थिमेणं उक्कोसए अट्ठारसमुहुत्ते दिवसे भवइ जाव तया णं जंबुद्दीवे २ दाहिणेणं जाव राई भवइ, जया णं भंते ! जंबुद्दीवे दीवे दाहिणद्धे अट्ठारसमुहुत्तानंतरे दिवसे भवइ तया णं उत्त० अट्ठारसमुहुत्तानंतरे दिवसे भवइ जया णं उत्तरद्धे अट्ठार० भवइ तया णं जंबुद्दीवे २ मंदर० पुरत्थिमेणं सातिरेगा दुवालसमुहुत्ता राई भवइ ? हंता ! गोअमा ! जया णं जंबुद्दीवे २ जाव राई भवइ । जया णं भंते ! जंबुद्दीवे २ मंदरस्स पुरत्थिमेमं अट्ठारसमुहुत्तानंतरे दिवसे भवइ तया णं पच्चत्थि०, जया णं पच्चत्थिमेणं तया णं जंबुद्दीवे दीवे मंदरस्स० उत्तरदाहिणेणं साइरेगा दुवाल- समुहुत्ता राई भवइ, एवं एतेणं कमेणं ऊसारेअव्वं, सत्तरसमुहुत्ते दिवसे तेरसमुहुत्ता राई सत्तरमुहुत्ता- नंतरे दिवसे सातिरेगतेरसमुहुत्ता राई सोलसमुहुत्ते दिवसे चोद्दसमुहुत्ता राई सोलसमुहुत्तानंतरे दिवसे सातिरेगा चोद्दसमुहुत्ता राई पन्नरसमुहुत्ते दिवसे पन्नरसमुहुत्ता राई पन्नरसमुहुत्ताणंतरे दिवसे साइरेगपन्नरसमुहुत्ता राई चोद्दसमुहुत्ते दिवसे सोलसमुहुत्ता राई चोद्दसमुहुत्ताणंतरे दिवसे सातिरेगसोलसमुहुत्ता राई भवइ तेरसमुहुत्ते दिवसे सत्तरसमुहुत्ता राई तेरसमुहुत्तानंतरे दिवसे सातिरेगसत्तरसमुहुत्ता राई, जया णं भंते ! जंबुद्दीवे दीवे दाहिणद्धे जहन्नए दुवालसमुहुत्ते दिवसे भवइ तया णं उत्तरद्धेवि ।

जया णं उत्तरद्धे० तया णं जंबुद्दीवे दीवे मंदरस्स पुरत्थिमपच्चत्थिमेणं उक्कोसिआ अट्ठारसमुहुत्ता राई भवइ ?, हंता ! गोअमा ! एवं चेव उच्चारेअव्वं जाव राई भवइ, जया णं भंते

जंबुद्दीवे २ मंदरपुरत्थिमेणं जहन्नए दुवालसमुहुत्ते दिवसे भवइ तया णं पच्चत्थिमेणवि० जया णं पच्चत्थिमेणवि० तया णं जंबुद्दीवे दीवे मंदरस्स उत्तरदाहिणेणं उक्कोसिआ अट्ठारसमुहुत्ता राई भवइ ?, हंता गोअमा ! जाव राई भवइ, जया णं भंते ! जंबुद्दीवे २ दाहिणद्धे वासाणं पढमे समए पडिवज्जइ तया णं उत्तरद्धेवि वासाणं पढमे समए पडिवज्जइ, जया णं उत्तरद्धे वासाणं पढमे समए पडिवज्जइ तया णं जंबुद्दीवे २ मंदरस्स पव्वयस्स पुरत्थिमपच्चत्थिमेणं अनंतरपुरे-क्खडसमयंसि वासाणं पढमे समए पडिवज्जइ तया णं जंबुद्दीवे २ मंदरस्स पुरत्थिमपच्चत्थिमेमं अनंतरपुरेक्खडसमयंसि वासाणं पढमे समए पडिवज्जइ ?, हंता गोअमा ! जया णं भंते ! जंबु-द्दीवे २ दाहिणद्धे वासाणं पढमे समए पडिवज्जइ तहेव जाव पडिवज्जइ, जया णं भंते ! जंबुद्दीवे २ मंदरस्स पव्वयस्स पुरत्थिमेणं वासाणं पढमे समए पडिवज्जइ तया णं पच्चत्थिमेणवि वासाणं पढमे समए। जया णं पच्चत्थिमेणं वासामं पढमे समए तया णं जाव मंदरस्स पव्वयस्स उत्तरदाहिणेणं अनंतरपच्छाकडसमयंसि वासाणं पढमे समए पडिवण्णे भवइ, हंता ! गोअमा ! जया णं भंते ! जंबुद्दीवे दीवे मंदरस्स पुरत्थिमेणं एवं चेव उच्चारेअव्वं जाव पडिवण्णे भवइ, एवं जहा समएणं अभिलावो भणिओ वासाणं तहा आवलिआएवि भणिअव्वो, आणापाणूवि थोवेणवि लवेणवि मुहुत्तेणवि अहोरत्तेणवि पक्खेणवि मासेणवि उऊणवि, एएसिं सव्वेसिं जहा समयस्स अभिलावो तहा भाणिअव्वो,जया णं भंते ! जंबुद्दीवे २ हेमंताणं पढमे समए पडिवज्जइ, जहेव वासाणं अभिलावो तहेव हेमंताणवि गिम्हाणवि भाणिअव्वो, जाव उत्तर०, एवं एए तिन्निवि, एतेसिं तीसं आलावगा भाणिअव्वा।

जया णं भंते ! जंबुद्दीवे २ मंदरस्स दाहिणद्धे पढमे अयणे पडिवज्जइ तया मं उत्तरद्धेवि पढमे अयणे पडिवज्जइ जहा समएणं अभिलावो तहेव अयणेणवि भाणिअव्वो जाव अनंतरपच्छा-कडसमयंसि पढमे अयमे पडिवण्णे भवइ, जहा अयणेणं अभिलावो तहा संवच्छरेणवि भाणिअव्वो जुएणवि वाससएणवि वाससहस्सेणवि वाससयसहस्सेणवि पुव्वंगेणवि पुव्वेणवि तुडिअंगेणवि तुडिएणवि, एवं पुव्वे २ तुडिए २ अडडे २ अववे २ हूहूए २ उप्पले २ पउमे २ नलिणे २ अत्थ-निउरे २ अउए २ नउए अ २ पउए अ २ चूलिए अ २ सीसपहेलिए अ २ पलिओवमेणवि सागरोवमेणवि भाणिअव्वो। जया णं भंते ! जंबुद्दीवे दीवे दाहिणद्धे पढमा ओसप्पिणी पडिवज्जइ तया णं उत्तरद्धेवि पढमा ओसप्पिणी पडिवज्जइ, तया णं उत्तरद्धेवि पढमा ओसप्पिणी पडिवज्जइ, जया णं उत्तरद्धे पढमा तया णं जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरत्थिमपच्चत्थिमेणं नेवत्थि ओसप्पिणी नेवत्थि उस्सप्पिणी अवट्ठिए णं तत्थ काले पन्नत्ते समणाउसो !, हंता गोअमा ! तं चेव उच्चारेअव्वं जाव समणाउसो !, जहा ओसप्पिणीए आलावओ भणिओ एवं उस्सप्पिणीएवि भाणि अव्वो'त्ति अत्र व्याख्या–अथोक्तक्षेत्रविभागानुसारेण दिवसरात्रिविभागमाह यदा भगवन् ! जंबूद्वीपे द्वीपे मेरुतो दक्षिणार्द्धे दक्षिणभागे दिवसो भवि तदोत्तरार्द्धेऽपि दिवसो भवति, एकस्य सूर्यस्यैकदिशि मण्डलचारेऽपरस्य सूर्यस्य तत्सम्मुखीनायामेवापरस्यां दिशि माण्डलचारसम्भवात्, इह यद्यपि यथा दक्षिणार्द्धे तथोत्तरार्द्धे इत्युक्तं तथापि दक्षिणभागे उत्तरभागे चेति बोध्यं, अर्द्धशब्दस्य भाग- मात्रार्थत्वात्, यतो यदि दक्षिणार्द्धे उत्तरार्द्धे च समग्र एव दिवसः

स्यात्तदा कथं पूर्वेणापरेण च रात्रि स्यादिति वक्तुं युज्येत ?, अर्द्धद्वयग्रहणेन सर्वक्षेत्रस्य गृहीतत्वात्, इतश्च दक्षिणार्द्धादिशब्देन दक्षिणादिभागमात्रमवसेयं, नत्वर्द्धं, तदा च जंबूद्वीपे द्वीपे मंदरस्य पर्वतस्य पूर्वस्यामपरस्यां च रात्रिर्भवति, तत्रैकस्यापि सूर्यस्याभावात्।

इत्येवं काक्वा प्रश्ने कृते भगवानाह–'हंता ! गोअमे'त्यादि, यदा जंबूद्वीपे द्वीपे दक्षिणार्द्धे दिवसो यावद्रात्रिर्भवतीत्यन्तं प्रत्युच्चारणीयं। अत्रपरावृत्त्या दिवसरात्रिविभागं पृच्छन्नाह–यदा भदन्त ! जंबूद्वीपे द्वीपे मंदरस्य पर्वतस्य पूर्वेण दिवसो भवति तदा पश्चिमायामपि दिवसो भवति, प्रागुक्तयुक्तेरेव, यदा च पश्चिमायां दिवसस्तदा मेरोर्दक्षिणोत्तरयो रात्रि, प्रश्नसूत्रं चैतत्, 'हंता ! गोअमे'त्यादि उत्तरसूत्रं तथैव, उक्तः सामान्यतो दिवसरात्रिविभागः, सम्प्रति तमेव विशेषत आह–यदा भदन्त ! जंबूद्वीपे द्वीपे दक्षिणार्द्धे उत्कर्षतोऽष्टादशमुहूर्त्तो दिवसो भवतीत्यादिकं सूत्रं प्रायो निगदसिद्धं, तथापि किञ्चिदेतदवृत्त्यादिगतं लिख्यते–इह किल सूर्यस्य चतुरशीत्यधिकं मण्डलशतं भवति, तत्र किल जंबूद्वीपमध्ये पञ्चषष्टिर्मण्डलानि भवन्ति, एकोनविंशत्यधिकं च शतं तेषां लवणसमुद्रमध्ये भवति, तत्र सर्वाभ्यन्तरे मण्डले यदा सूर्यो भवति तदाऽष्टादशमुहूर्त्तो दिवसो भवति, यदा सर्वबाह्ये मण्डले सूर्यो भवति तदा सर्वजघन्यो द्वादशमुहूर्त्तो दिवसो भवति, ततश्च द्वितीयमण्डलादारभ्य प्रतिमण्डलं द्वाभ्यां मुहूर्तैकषष्टिभागाभ्यां दिनस्य वृद्धौ त्र्यशीत्यधिकशततममण्डले षट् मुहूर्त्ता वर्द्धन्त इत्येवमष्टादशमुहूर्त्तो दिवसो भवति।

अत एव द्वादशमुहूर्त्ता रात्रिर्भवति, त्रिंशन्मुहूर्त्तत्वादहोरात्रस्य, 'अट्ठारसमुहुत्ताणंतरे'त्ति यदा सर्वाभ्यन्तर- मण्डलानन्तरे मण्डले सूर्यो भवति तदा मुहूर्त्तैकषष्टिभागद्वयहीनोऽष्टादशमुहूर्त्तो दिवसो भवति, स चाष्टादशमुहूर्त्तद्दिवसादनन्तरोऽष्टादशमुहूर्त्तानन्तर इति व्यपदिष्टः, तदा द्वाभ्यां मुहूर्तैक- षष्टिभागाभ्यामधिका द्वादशमुहूर्त्ता रात्रिर्भवति, यावता भागेन दिनं हीयते तावता रात्रिर्वर्द्धते, त्रिंशन्मुहूर्त्तत्वादहोरात्रस्येति, 'एवं एएणं कमेणं'ति एवमित्युपसंहारे एतेनानन्तरोक्तेनोपायेन 'जया णं भंते ! जंबुद्दीवे दीवे दाहिणद्धे' इत्येतेनेत्यर्थः, 'ऊसारेअव्वं'ति दिनमानं ह्रस्वीकार्यं, तदेव दर्शयति–तत्र सर्वाभ्यन्तरमण्डलानन्तरमण्डलादार- भ्यैकत्रिंशत्तम- मण्डलार्द्धे यदा सूर्यस्तदा सप्तदशमुहूर्त्तो दिवसो भवति, पूर्वोक्तहानिक्रमेण त्रयोदशमुहूर्त्ता च रात्रिरिति, 'सत्तर- समुहुत्ताणंतरे'त्ति मुहूर्त्तैकषष्टिभागद्वयहीनसप्तदशमुहूर्त्तप्रमाणो दिवसोऽयं च द्वितीयादारभ्य द्वात्रिंशत्तममण्डलार्द्धे भवति, एवमनन्तरत्वमन्यत्राप्यूह्यं, मुहूर्त्तैकषष्टिभागद्वयेन सातिरेकत्वं, एवं सर्वत्र, 'सोलसमुहुत्ते दिवसे'त्ति, द्वितीयादारभ्यैकषष्टितममण्डले षोडशमुहूर्त्तो दिवसो भवति, 'पन्नरसमुहुत्ते दिवसे'त्ति द्विनवतितमण्डलार्द्धे वर्त्तमाने सूर्ये 'चोद्दसमुहुत्ते दिवसे'त्ति द्वाविंशत्युत्तरशततमे मण्डले 'तेरसमुहुत्ते दिवसे'त्ति सार्द्धद्विपञ्चाशदुत्तरशततमे मण्डले 'बारसमुहुत्ते दिवसे'त्ति त्र्यशीत्यधिकशततमे मण्डले सर्वबाह्ये इत्यर्थः ! ।

कालाधिकारादिदमाह–'जया णं भंते ! जंबुद्दीवे २ दाहिणद्धे वासाण'मित्यादि, 'वासाण'- मिति चतुर्मासप्रमाणवर्षाकालस्य सम्बन्धी प्रथमः–आद्यः समयःक्षणः प्रतिपद्यते, सम्पद्यते भवती- त्यर्थः, तदोत्तरार्द्धेऽपि वर्षाणां प्रथमः समयो भवति, समकालनैयत्येन दक्षिणार्द्धे उत्तरार्द्धे च सूर्ययोश्चारभावात्, यदा चोत्तरार्द्धे वर्षाकालस्य प्रथमः समयः तदा जंबूद्वीपे द्वीपे मंदरस्य पर्तस्य पूर्वापरयोर्दिशोरनन्तरपुरस्कृते समये अनन्तरो–निर्व्यवधानो दक्षिणार्द्धवर्षाप्रथमतापेक्षया स

यातीतोऽपि स्यादतआह– पुरस्कृतः–पुरोवर्त्ती भविष्यन्नित्यर्थः समयः प्रतीतः ततः पदत्रयस्य कर्मधारयोऽतस्तत्र, तथा अनन्तरं पश्चात्–कृते समये पूर्वापरविदेहवर्षाप्रथमसमयापेक्षया योऽनन्तरः पश्चात्कृतः–अतीतः समयस्तत्र दक्षिणोत्तरयोर्वर्षाकालप्रथमसमयो भवतीति, इह यस्मिन् समये दक्षिणार्द्धे उत्तरार्द्धे च वर्षाकालस्य प्रथमः समयः तदनन्तरे अग्रेतने द्वितीये समये पूर्वपश्चिमयोर्वर्षाणां प्रथमः समयो भवतीत्येतावन्मात्रोक्तावपि यस्मिन् समये पूर्वपश्चिमयोः वर्षाकालस्य प्रथमः समयो भवति ततोऽनन्तरे पश्चाद्भाविनि समये दक्षिणोत्तरार्द्धयोः वर्षाकालस्य प्रथमः समयो भवतीति गम्यते तत्किमर्थमस्योपादानं ?, उच्यते, इह क्रमोत्क्रमाभ्यां अभिहितोऽर्थ प्रपश्चितज्ञानां शिष्याणामतिसुनिश्चितो भवति ततस्तेषामनुग्रहार्थंतदुक्तमित्यदोषः।

'एवं जहा समएण'मित्यादि, एवं यथा समयेन वर्षाणामभिलापो भणितस्तथा आवलिकाया अपि भणितव्यः, स चैवं–'जया णं भंते ! जंबुद्दीवे दीवे दाहिणड्ढे वासाणं पढमा आवलिआ पडिवज्जइ तया णं उत्तरड्ढेवि वासाणं पढमा आवलिआ पडिवज्जइ, जया णं उत्तरड्ढे वासाणं पढमा आवलिआ पडिवज्जइ, तया णं जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरत्थिमपच्चत्थिमेणं अनंतरपुरेक्खडसमयंसि वासाणं पढमा आवलिआ पडिवज्जइ ?, हंता गोअमा ! जया णं भंते ! जंबुद्दीवे दीवे दाहिणड्ढे वासाणं पढमा आवलिआ पडिवज्जइ तहेव जाव पडिवज्जइ, जया णं भंते जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरत्थिमेणं वासाणं पढमा आवलिआ पडिवज्जइ, तया णं जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरत्थिमपच्चत्थिमेणं अनंतरपुरेक्खडसमयंसि वासाणं पढमा आवलिआ पडिवज्जइ ?, हंता गोअमा ! जया णं भंते ! जंबुद्दीवे दीवे दाहिणड्ढे वासाणं पढमा आवलिआ पडिवज्जइ तहेव जाव पडिवज्जइ, जया णं भंते ! जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरत्थिमेणं वासाणं पढमा आवलिआ पडिवज्जइ, जया णं पच्चत्थिमेणं पढमा आवलिआ पडिवज्जइ, तया णं जंबुद्दीवे २ मंदरस्स पव्वयस्स उत्तरदाहिणेणं अनंतरपच्छाकडसमयंसि वासाणं पढमा आवलिआ पडिवन्ना भवइ ?, हंता ! गोअमे'त्यादि, तदेवोच्चारणीयमित्यर्थः, एवं आनप्राणादिपदेष्वपि, आवलिकाद्यर्थस्तु प्राग्वत्, 'हेमंताणं'ति शीतकालचतुर्मासानां, 'गिम्हाणं'ति ग्रीष्माणां चतुर्मासानां, 'पढमे अयमे'ति दक्षिणायनं श्रावणादित्वात् संवत्सरस्य 'जुएणवि'त्ति युगं पंचसंवत्सरमानं, अत्र च युगेन सहेत्यतिदेशकरणात् युगस्यापि दक्षिणोत्तरयोः पूर्वसमये प्रतिपत्ति प्रागपरयोस्तु तदनन्तरे पुरोवर्तिनि समये प्रतिपत्ति, ज्योतिष्करण्डे तु–

॥१॥ ''सावणबहुलपडिवए बालवकरणे अभीइनक्खत्ते।
सव्वत्थ पढमसमए जुगस्स आई विआणाहि ॥''

इत्यस्या गाथाया व्याख्याने सर्वत्र भरते ऐरवते महाविदेहेषु च श्रावणमासे बहुलपक्षे कृष्णपक्षे प्रतिपदि तिथौ बालवकरणे अभिजिन्नक्षत्रे प्रथमसमये युगस्यादिं विजानीहीतीदं वाचनान्तरं ज्ञेयं, यतो ज्योतिष्करण्डसूत्रकर्ता आचार्यो वालभ्यः एष भगवत्यादिसूत्रादर्शस्तु माथुरवाचनानुगत इति न किञ्चिदनुचितं, युक्त्यानुकूल्यं तु न युगपत्प्रतिपत्तिसमये सम्भावयामः, तथाहि–'सव्वे कालविसेसा सूरपमाणेण हुंति नायव्वा' इति वचनाद् यदि सूर्यचारविशेषेण कालविशेषप्रतिपत्तिर्दक्षिणोत्तरयोराद्यसमये प्रागपरयोरुत्तरसमये तर्हि दक्षिणोत्तरप्रतिपत्ति समये पूर्वकालस्याप-

र्यवसानं वाच्यं, पूर्वापरविदेहापेक्षयाऽस्त्येव तदिति चेत् सूर्ययोश्चीर्णचरणं अपरं वा सूर्यद्वयं वाच्यं, ययोश्चारविशेषाद्दक्षिणोत्तरप्रतिपत्तिसमयापेक्षयोत्तसमये पूर्वापरयोः कालविशेषप्रतिपत्तिरित्यादिको भूयान् परवचनावकाश इत्यलं प्रसङ्गेन, 'पुव्वंगेणवि'त्ति पूर्वाङ्गं–चतुरशीतिवर्षलक्षप्रमाणं ''पुव्वेणवि''त्ति पूर्वं–पूर्वाङ्गमेव चतुरशीतिवर्षलक्षगुणितं, एवं चतुरशीतिवर्षलक्षगुणितमुत्तरोत्तरं स्थानं भवति, चतुर्नवत्यधिकं चाङ्कशतमन्तिमे स्थाने भवतीति, 'पढमा ओसप्पिणी'त्ति अवसर्पिण्याः प्रथमो विभागः प्रथमाऽवसर्पिणी चाङ्कशतमन्तिमे स्थाने भवतीति, 'पढमा ओसप्पिणी'ति अवसर्पिण्याः प्रथमो विभागः प्रथमाऽवसर्पिणी ।

'जया णं भंते ! दाहिणद्धे पढमा ओस० पडि० तया णं उत्तरद्धेवि', इत्यादि व्यक्तं, नवरं नैवास्त्यवसर्पिणी नैवास्त्युत्सर्पिणी, कुत इत्याह–अवस्थितः–सर्वथा एकस्वरूपस्तत्र कालः प्रज्ञप्तः हे श्रमण ! हे आयुष्मन् ! इति, अथ प्रस्तुताधिकारमुपसंहरन्नाह–, इत्येषा–अनन्तरोक्तस्वरूपा जंबूद्वीपप्रज्ञप्ति–आद्यद्वीपस्य यथावस्थितस्वरूपनिरूपिका ग्रन्थपद्धतिस्तस्यामस्मिन्नुपाङ्गे इत्यर्थः, सूत्रे च विभक्तिव्यत्ययः प्राकृतत्वात्, सूर्याधिकारप्रतिबद्धा पदपद्धतिर्वस्तूनां–मण्डलसङ्ख्यादीनां समासः–सूर्यप्रज्ञप्त्यादिमहाग्रन्थापेक्षया संक्षेपस्तेन समाप्ता भवति ।

अथ चन्द्रवक्तव्यप्रश्नमाह–'जंबुद्दीवे णं'मित्यादि, जंबूद्वीपे भदन्त ! द्वीपे चन्द्रावुदीचीनप्राचीनदिग्भागे उद्गत्य प्राचीनदक्षिणदिग्भागे आगच्छतः इत्यादि यथा सूरवक्तव्यता तथा चन्द्रवक्तव्यता, यथा वाशब्दोऽत्र गम्यः पञ्चमशतस्य दशमे उद्देशके चन्द्रनाम्नि, कियत्पर्यन्तं सूत्रं ग्राह्यमित्याह–यावदवस्थितः तत्र कालः प्रज्ञप्तः हे श्रमण ! हे आयुष्मन् ! इति, अत्राप्युपसंजिहीर्षुराह–'इच्चेसा' इत्यादि, व्याख्यानं पूर्ववत्, परं सूर्यप्रज्ञप्तिस्थाने चन्द्रप्रज्ञप्तिर्वाच्या । एतेषां ज्योतिष्काणां चारविशेषात् संवत्सरविशेषाः प्रवर्त्तन्त इति तद्भेदप्रश्नमाह–

मू. (२७८) *कति णं भंते ! संवच्छरा पन्नत्ता ?, गो० ! पंच संवच्छरा पं०, तं०–नक्खत्तसंवच्छरे जुगसं० पमाणसं० लक्खणसंवच्छरे सणिच्छरसंवच्छरे । नक्खत्तसंवच्छरे णं भंते ! कइविहे प० ?, गो० ! दुवालसविहे पं०, सावणे भद्दवए आसोए जाव आसाढे, जं वा विहप्फई महग्गहे दुवालसेहिं संवच्छरेहिं सव्वनक्खत्तमंडलं समाणेइ सेत्तं नक्खत्तसंवच्छरे ।*

*जुगसंवच्छरे णं भंते ! कतिविहे प० गो० पंचविहे पं०, तंजहा–चंदे चंदे अभिवड्ढिए चंदे अभिवड्ढिए चेवेति, पढमस्स णं भंते ! चन्दसंवच्छरस्स कइ पव्वा प० ?, गो० चोव्वीसं पव्वा प० । बितिअस्स णं भंते ! चंदसंवच्छरस्स कइ पव्वा प०, गो० ! चउव्वीसं पव्वा प० एवं पुच्छा ततिअस्स, गो० ! छव्वीसं पव्वा प०, चउत्थस्स चंदसंवच्छरस्स चोव्वीसं पव्वा, पंचमस्स णं अहिवड्ढिअस्स छव्वीसं पव्वा य प० एवामेव सपुव्वावरेणं पंचसंवच्छरिए जुए एगे चउव्वीसे पव्वसए प० सेत्तं जुगसंवच्छरे ।*

*पमाणसंवच्छरे णं भंते ! कतिविहे पन्नत्ते ?, गोअमा ! पंचविहे पन्नत्ते, तंजहा–नक्खत्ते चन्दे उऊ आइच्चे अभिवड्ढिए, सेत्तं पमाणसंवच्छरे इति ।*

*लक्खणसंवच्छरे णं भंते ! कतिविहे पन्नत्ते ?, गोअमा ! पंचविहे प०, तंजहा–*

वृ. तत्र नक्षत्रेषु भवो नाक्षत्रः, किमुक्तं भवति ? –चन्द्रश्चारं चरन् यावता कालेनाभिजित आरभ्योत्तराषाढानक्षत्रपर्यन्तं गच्छति तत्प्रमाणो नाक्षत्रो मासः, यदिवा चन्द्रस्य नक्षत्रमण्डले

परिवर्त्तनतानिष्पन्न इत्युपचारतोमासोऽपि नक्षत्रं, स च द्वादशगुणोनक्षत्रसंवत्सरः, प्रमाणं—परिमाणं दिवसादीनां तेनोपलक्षितो वक्ष्यमाण एव नक्षत्रसंवत्सरादि प्रमाणसंवत्सरः, स एव लक्षणानां वक्ष्यमाणस्वरूपाणां प्रधानतया लक्षणसंवत्सरः, यावता कालेन शनैश्चरो नक्षत्रमेकमथवा द्वादशापि राशीन् भुङ्क्ते स शनैश्चरसंवत्सर इति ।

नामनिरुक्तमुक्त्वाऽथैतेषां भेदानाह—'नक्खत्त'इत्यादि, नक्षत्रसंवत्सरो भगवन् ! कतिविधः प्रज्ञप्तः ?, गौतम ! द्वादशविधः प्रज्ञप्तः, तद्यथा—श्रावणः भाद्रपदः आश्विनः यावत्पदात् कार्तिकादिसंग्रहः, द्वादश आषाढः, अयं भावः—इह एकः समस्तनक्षत्रयोगपर्यायो द्वादशभि-गुणितो नक्षत्रसंवत्सरः, ततो ये नक्षत्रसंवत्सरस्य पूरका द्वादशसमस्तनक्षत्रयोगपर्यायाः श्रावणभाद्र-पदादिनामानस्तेऽप्यवयवे समुदायोपचारात् नक्षत्रसंवत्सरः, ततः श्रावणादिद्वादशविधो नक्षत्र-संवत्सरः, वा इति पक्षान्तरसूचनं, अथवा बृहस्पतिर्महाग्रहो द्वादशभि सवत्सरैः योगमधिकृत्य यत्सर्वं नक्षत्रमण्डलमभिजिदादीन्यष्टाविंशतिनक्षत्राणि परिसमापयति तावान् कालविशेषो द्वादशवर्षप्रमाणो नक्षत्रसंवत्सरः ।

अथ द्वितीयः 'जुगसंवच्छरे'इत्यादि, प्रश्नः प्रतीतः, उत्तरसूत्रे गौतम ! युगसंवत्सरः पञ्चविधः प्रज्ञप्तः, तद्यथा—चन्द्रश्चन्द्रोऽभिवर्धितश्चन्द्रोऽभिवर्द्धितश्च, चन्द्रे भवश्चान्द्रः, युगादौ श्रावणमासे बहुलपक्षप्रतिपदः आरभ्य यावत्पौर्णमासीपरिसमाप्तिस्तावत्कालप्रमाणश्चान्द्रो मासः, एकपूर्णिमा-सीपरावर्तश्चान्द्रो मास इतियावत्, अथवा चन्द्रनिष्पन्नत्वादुपचारतो मासोऽपि चन्द्रः, स च द्वादश-गुणश्चन्द्रसंवत्सरः, चन्द्रमासनिष्पन्नत्वादिति, द्वितीयतुर्यावप्येवं व्युत्पत्तितोऽवगन्तव्यौ, तृतीयस्तु युगसंवत्सरोऽवर्द्धितो नाम मुख्यतस्त्रयोदशचन्द्रमासप्रमाणः संवत्सरो द्वादश[चन्द्र]मासप्रमाणः संवत्सर उपजायते, कियता कालेन सम्भवतीत्युच्यते—

इह युगं चन्द्रचन्द्राभिवर्द्धितचन्द्राभिवर्द्धितरूपपञ्चसंवत्सरात्मकं सूर्यसंवत्सरापेक्षया परिभाव्यमानमन्यूनातिरिक्तानि पंच वर्षाणि भवन्ति, सूर्यमासश्च सार्द्धत्रिंशदहोरात्रप्रमाणश्चन्द्र-मासश्चैकोनत्रिंशद्दिनानि द्वात्रिंशच्च द्वाषष्टिभागा दिनस्य तत गणितसम्भावनया सूर्यसंवत्सर-सत्कत्रिंशन्मासातिक्रमे एकश्चान्द्रमासोऽधिको लभ्यते, स च यथा लभ्यते तथा पूर्वाचार्यप्रदर्शितेयं करणगाथा—

॥ १ ॥ "चंदस्स जो विसेसो आइच्चस्स य हविज्ज मासस्स ।
तीसइगुणिओ संतो हवइ हु अहिमासगो इक्को ॥"

अस्या अक्षरगमनिका—आदित्यसम्बन्धिनो मासस्य मध्यात् चन्द्रस्य—चन्द्रमासस्य यो भवति विश्लेषः, इह विश्लेषे कृते सति यदवशिष्यते तदप्युपचाराद्विश्लेषः, स त्रिंशता गुणितः सन् भवत्येकोऽधिकमासः, तत्र सूर्यमासपरिमाणात् सार्द्धत्रिंशदहोरात्ररूपाच्चन्द्रमासपरिमाणमे-कोनत्रिंशद्दिनानि द्वात्रिंशच्च द्वाषष्टिभागा दिनस्येत्येवंरूपं शोध्यते ततः स्थितं पश्चाद्दिनमेकमेकेन द्वाषष्टिभागेन न्यूनं तच्च दिनं त्रिंशता गुण्यते जातानि त्रिंशद्दिनानि एकश्च द्वाषष्टिशद्दिनानि द्वात्रिंशच्च द्वाषष्टिभागा दिनस्य द्वाषष्टिभागास्ते त्रिंशद्दिनेभ्यः शोध्यन्ते ततः स्थितानि शेषाणि एकोनत्रिंशद्दिनानि द्वात्रिंशच्च द्वाषष्टिभागा दिनस्य एतावत्परिमाणश्चन्द्रमास इति भवति सूर्यसंवत्सरसत्कत्रि-शन्मासातिक्रमे एकोऽधिकमासो, युगे च सूर्यमासाः षष्टिः ततो भूयोऽपि सूर्यसंवत्सरसत्कत्रिंश-

न्मासातिक्रमे द्वितीयोऽधिकमासो भवति, उक्तं च–

॥ १ ॥ "सट्ठीए अइआए हवइ हु अहिमासगो जुगद्धंमि ।
बावीसे पव्वसए हवइ अ बीओ जुगंतंमि ॥"

अस्याप्यक्षरगमनिका–एकस्मिन् युगे–अनन्तरोदितस्वरूपे पर्वणां–पक्षाणां षष्ठी अतीतायां–षष्ठिसङ्ख्येषु पक्षेष्वतिक्रान्तेषु इत्यर्थः एतस्मिन् अवसरे युगार्द्धे–युगार्द्धप्रमाणे एकोऽधिकमासो भवति, द्वितीयस्त्वधिकमासो द्वाविंशे द्वाविंशत्यधि पर्वशते–पक्षशतेऽतिक्रान्ते युगस्यान्ते–युगस्य पर्यवसाने भवति, तेन युगमध्ये तृतीये संवत्सरेऽधिक मासः पञ्चमे वेति द्वौ युगेऽभिवर्द्धितसंवत्सरौ, यद्यपि सूर्यवर्षपंचकात्मके युगे चन्द्रमासद्वयवन्नक्षत्रमासाधिक्य-सम्भवस्तथापि नक्षत्रमासस्य लोके व्यवहाराविषयत्वात्, कोऽर्थः ? –यथा चन्द्रमासो लोके विशेषतो यवनादिभिश्च व्यवह्रियते तथा न नक्षत्रमास इति, एतेषां च नक्षत्रादिसंवत्सराणां मासदिनमाना-नयनादि प्रमाणसंवत्सराधिकारे वक्ष्यते ।एते च चन्द्रादयः पञ्च युगसंवत्सराः पर्वभिः पूर्यन्ते इति तानि कति प्रतिवर्षं भवन्तीति पृच्छन्नाह–

प्रथमस्य– युगादौ प्रवृत्तस्य भगवन् ! चन्द्रसंवत्सरस्य कति पर्वाणि– पक्षरूपाणि प्रज्ञप्तानि ?, गौ० ! चतुर्विंशति पर्वाणि, द्वादशमासात्मके नास्य प्रति- मासं पर्वद्वयसम्भवात्, द्वितीयस्य चतुर्थस्य च प्रश्नसूत्रे एवमेव, अभिवर्धितसंवत्सरसूत्रे षड्विंशति पर्वाणि तस्य त्रयोदश चन्द्रमासात्मके न प्रतिमासं पर्वद्वयसम्भवात्, एवमन्योऽभिव- र्द्धितोऽपि,एवमेव पूर्वापरमीलनेन चतुर्विंशं पर्वशतं भवतीत्याख्यातम् ।

अथ तृतीयः–'पमाणसंवच्छरे'इत्यादि, प्रमाणसंवत्सरः कतिविधः प्रज्ञप्तः ?, गौतम ! पंचविधः प्रज्ञप्तः, तद्यथा–नाक्षत्रं चान्द्रः ऋतुसंवत्सरः आदित्यः अभिवर्धितश्च, अत्र नक्षत्रचन्द्राभिव-र्द्धिताख्याः स्वरूपतः प्रागभिहिताः, ऋतवो–लोकप्रसिद्धा वसन्तादयः तदव्यवहारहेतुः संवत्सरः ऋतुसंवत्सरः, ग्रन्थान्तरे चास्य नाम सावनसंवत्सरः कर्मसंवत्सर श्चेति, आदित्यचारेण दक्षिणोत्त-रायणाभ्यां निष्पन्नः आदित्यसंवत्सरः ।

प्रमाणप्रधानत्वादस्य संवत्सरस्य प्रमाणमेवाभिधीयते, तस्य च मासप्रमाणाधीनत्वादादौ मासप्रमाणं, तथाहि–इह किल चन्द्रचन्द्राभिवर्द्धितचन्द्राभिवर्द्धितनामकसंवत्सरपंचकप्रमाणे युगे अहोरात्रराशिस्त्रिंशदशशतप्रमाणो भवति, कथमेतदवसीयते इति चेत्, उच्यते, इह सूर्यस्य दक्षिणमुत्तरं वाऽयनं त्र्यशीत्यधिकदिनशतात्मकं युगे च पंच दक्षिणायनानि पंच चोत्तरायणानि इति सर्वसङ्ख्यया दशायनानि, ततस्त्र्यशीत्यधिकं दिनशतं दशकेन गुण्यते इत्यागच्छति यथोक्तो दिनराशिः, एवंप्रमाणं दिनराशिं स्थापयित्वा नक्षत्रचन्द्रऋत्वादिमासानां दिनानयनार्थं यथाक्रमं सप्तषष्ट्येकषष्टिषष्टिद्वाषष्टिलक्षणैर्भागहारैर्भागं हरेत्, ततो यथोक्तं नक्षत्रादिमासचतुष्क-गतदिनपरिमाणमागच्छति, तथाहि–युगदिनराशि १८३० रूपः, अस्य सप्तषष्टिर्युगे मासा इति सप्तषष्ट्या भागो ह्रियते यल्लब्धं तन्नक्षत्रमासमानं तथाऽस्यै व युगदिनराशेः १८३० रूपस्य एकषष्टिर्युगे ऋतुमासा इति एकषष्ट्या भागहरणे लब्धं ऋतुमासमानं, तथा युगे सूर्यमासाः षष्टिरिति ध्रुवराशेः १८३० रूपस्य षष्ट्या भागहारे यल्लब्धं तत्सूर्यमासमानं, तथाऽभिवर्द्धिते वर्षे तृतीये पंचमे वा त्रयोदश चन्द्रमासा भवन्ति तद्वर्षं द्वादशभागीक्रियते तत एकैको भागोऽभिवर्द्धितमास

इत्युच्यते ।

इह किलाभिवर्द्धितसंवत्सरस्य त्रयोदशचन्द्रमासमानस्य दिनप्रमाणं त्र्यशीत्यधिकानि त्रीणि शतानि चतुश्चत्वारिंशच्च द्वाषष्टिभागाः, कथमिति चेत्, उच्यते–चन्द्रमासमानं दिन २९ ३२/६२ एतद्रूपं त्रयोदशभिर्गुण्यते जातानि सप्तसप्तत्युत्तराणि त्रीणि त्रीणि शतानि दिनानां, षोडशोत्तराणि चत्वारि शतानि चांशानां ते च दिनस्य द्वाषष्टिभागास्ततो दिनानयनार्थं द्वाषष्ट्या भागो ह्रियते, लब्धानि षड् दिनानि, तानि च पूर्वोक्तदिनेषु मील्यन्ते जातानि त्रीणि शतानि त्र्यशीत्यधिकानि दिनानां चतुश्चत्वारिंशच्च द्वाषष्टिभागाः, ततो वर्षे द्वादश मासा (इति मासा) नयनाय द्वादशभिर्भागो ह्रियते लब्धा एकत्रिंशदहोरात्राः, शेषास्तिष्ठन्त्यहोरात्रा एकादश, ते च द्वादशानां भागं न प्रयच्छंति तेन यदि एकादश चतुश्चत्वारिंशद् द्वाषष्टिभागमीलनार्थं द्वाषष्ट्या गुण्यन्ते तदा पूर्णो राशिर्न त्रुट्यति शेषस्य विद्यमानत्वात्, तेन सूक्ष्मेक्षिकार्थं द्विगुणीकृतया द्वाषष्ट्या चतुर्विंशत्यधिकशतरूपया एकादश गुण्यन्ते जाते १३६४ चतुश्चत्वारिंशद् द्वाषष्टिभागा अपि सवर्णनार्थं द्विगुणीक्रियन्ते कृत्वा च मूलराशौ प्रक्षिप्यन्ते जातं १४५२, एषां द्वादशभिर्भागे हृते लब्धमेकविंशत्युत्तरं शतं चतुर्विंशत्युत्तरशतभागानां, एतावदभिवर्द्धितमासप्रमाणं । नाक्षत्रादिसंवत्सरमानं, स एष प्रमाण-संवत्सर इति निगमनवाक्यं, एषां च मध्ये ऋतुमासऋतुसंवत्रावेव लोकैः पुत्रवृद्धिकलान्तरवृद्ध्यादिषु व्यवह्रियेते, निरंशकत्वेन सुबोधत्वात्, यदाह–

॥ १ ॥ "कम्मो निरंसयाए मासो ववहारकारगो लोए ।
संसाउ संसयाए ववहारे दुक्करा घेत्तु ॥"

अत्र व्याख्या–आदित्यादिसंवत्सरमासानां मध्ये कर्मसंवत्सरसम्बन्धी मासो निरंशतया–पूर्णत्रिंशदहोरात्रप्रमाणतया लोकव्यवहारकारकः स्यात्, शेषास्तु सूर्यादयो व्यवहारे ग्रहीतुं दुष्कराः सांशतया न व्यवहारपथमवतरन्तीति, निरंशता चैवं–षष्टि पलानि घटिका ते च द्वे मुहूर्तः ते च त्रिंशदहोरात्रः ते च पञ्चदश पक्षः तौ द्वौ मासः ते च द्वादश संवत्सर इति, शास्त्रवेदिभिस्तु सर्वेऽपि मासाः स्वस्वकार्येषु नियोजिताः, तथाहि–अत्र नक्षत्रमासप्रयोजनं सम्प्रदायगम्यं ।

॥ १ ॥ "वैशाखे श्रावणे मार्गे, पौषे फाल्गुन एव हि ।
कुर्वीत वास्तुप्रारम्भं, न तु शेषेषु सप्तसु ॥"

इत्यादौ चन्द्रमासस्य प्रयोजनं, ऋतुमासस्य तु पूर्वमुक्तं, 'जीवे सिंहस्थे धन्विमीनस्थितेऽर्के, विष्णौ निद्राणे चाधिमासे न लग्नं' इत्यादौ तु सूर्यमासाभिवर्द्धितमासयोरिति, पूर्वं नक्षत्रसंवत्सरादयः स्वरूपतो निरूपिताः अत्र तु दिनमानानयनादिप्रमाणकरणेन विशेषेण निरूपिता इति न पौनरुक्त्यं विभाव्यम्, निशीथभाष्यकाराशयेन 'नक्षत्रचन्द्रर्तुसूर्याभिवर्द्धितरूपकं मासपञ्चकं तद्द्वादशगुणः संवत्सर' इति संवत्सरपञ्चकमेव युक्तिमत्, अन्यथा उद्देशाधिकारे नक्षत्रसंवत्सरोद्देशकरणं युगसंवत्सराधिकारे चन्द्राभिवर्द्धितयोरुद्देशकरणं पुनः प्रमाणसंवत्सराधिकारे तेषामेव प्रमाणकरणमित्यादिकं गुरवे गौरवाय भवति, यत्तु स्थानाङ्गचन्द्रप्रज्ञप्त्यादावत्र चोपाङ्गे इत्थं संवत्सरपञ्चकवर्णनं तद् बहुश्रुतगम्यम् । अथ लक्षणसंवत्सरप्रश्नमाह– लक्षणसंवत्सरो भदन्त कतिविधः प्रज्ञप्तः ?, गौ० पंचविधः प्रज्ञप्तः, नक्षत्रादिभेदात्, तद्यथा–

मू. (२७९) *"समयं नक्खत्ता जोगं जोअंति समयं उऊ परिणामंति ।*

*नच्चुण्ह नाइसीओ बहूदओ होइ नक्खत्ते ॥*

वृ. समकंसमतया नक्षत्राणि-कृत्तिकादीनि योगं-कार्त्तिकीपूर्णिमास्यादितिथिभि सह सम्बन्धं योजयन्ति कुर्वन्तीत्यर्थः, इदमुक्तं भवति-यानि नक्षत्राणि यासु तिथिषूत्सर्गतो भवन्ति-यथा कार्तिक्या कृत्तिकास्तानि तास्वेव यत्र भवन्ति, यथोक्तम्-

॥ १ ॥ "जेट्ठो वच्चइ मूलेण, सावणो धनिट्ठाहिं ।
अद्दासु अ मग्गसिरो, सेसा नक्खत्तनामिआ मास ॥" त्ति ।

तथा यत्र समतयैव ऋतवः परिणमन्ति न विषमतया, कार्त्तिक्या अनन्तरं हेमन्तुर्तु पौष्याः अनन्तरं शिशिरर्तुरित्येवमवतरन्तीति भावः, यश्च संवत्सरो नात्युष्णः नातिशीतः तथा च बहूदकः स च भवति लक्षणतो निष्पन्न इति नक्षत्रचारलक्षणलक्षितत्वात् नक्षत्रसंवत्सर इति, अत्र गाथाच्छन्दसि प्रथमार्द्धे मात्राया आधिक्यमप्यार्षत्वादस्य न दुष्टं, न ह्यार्षाणि छन्दांसि सर्वाणि व्यक्त्या वक्तुं शक्यानि, किञ्च यथादर्शनमनुसर्त्तव्यानि, एवमन्यत्रापि ज्ञेयमिति ।

मू. (२८०) *ससि समगपुण्णमासिं जोएंती विसमचारिनक्खत्ता ।*
*कडुओ बहुदओ आ तमाहु संवच्छरं चंदं ॥*

वृ. अथ चन्द्र 'ससि समग' इत्यादि, विभक्तिलोपात् शशिना समकं योगमुपगतानि विषमचारीणि-मासविसदृशनामकानि नक्षत्राणि तां तां पौर्णमासीं-मासान्ततिथिं योजयन्ति-परिसमापयन्ति यस्मिन्निति गम्यं, यश्च कटुकः-शीतातपरोगादिदोषबहुलतया परिणामदारुणो बहूदकः, चस्य दीर्घत्वं प्राकृतत्वात्, तमाहुर्महर्षयश्चान्द्र-चन्द्रसम्बन्धिनं चन्द्रानुरोधात् तत्र मासानां परिसमाप्तेः, न माससदृशनामकनक्षत्रानुरोधतः ।

मू. (२८१) *विसमं पवालिणो परिणमंति अणुऊसु दिंति पुप्फफलं ।*
*वासं न सम्म वासइ तमाहु संवच्छरं कम्मं ॥*

वृ. अथ कर्माख्यः-'विसम' मित्यादि, यस्मिन् संवत्सरे वनस्पतयो विषमं-विषमकालं प्रवालिनः परिणमन्ति-प्रवालाः-पल्लवाङ्कुरास्तद्युक्ततया परिणमन्ति, तथा अनृतुष्वपि-स्वस्वऋतभावेऽपि पुष्पं च फलं च ददति, अकाले पल्लवान् अकाले पुष्पफलानि दधते इत्यर्थः तथा वर्षं-वृष्टिं न सम्यग् वर्षति-करोति मेघ इति तमाहुः-संवत्सरं कर्माख्यं ।

मू. (२८२) *पुढविदगाणं च रसं पुप्फफलाणं च देइ आइच्चो ।*
*अप्पेणवि वासेणं सम्मं निप्फज्जए सस्सं ॥*

वृ. अथ सौरः-'पुढवि' इत्यादि, पृथिव्या उदकस्य च तथा पुष्पाणां फलानां च रसमादित्यः-आदित्यसंवत्सरो ददाति, तथा अल्पेनापि-स्तोकेनापि वर्षेण-वृष्ट्या शस्यं निष्पद्यतेअन्तर्भूतण्यर्थत्वात् शस्यं निष्पादयति किमुक्तं भवति ?-यस्मिन् संवत्सरे पृथिवी तथाविधोदकसम्पर्कादतीव सरसा भवति उदकमपि परिणामसुन्दररसोपेतं परिणमति पुष्पानां च-मधूकादिसम्बन्धिनां फलानां च-आम्रफलादीनां रसः प्रचुरो भवति, स्तोकेनापि वर्षेण धान्यं सर्वत्र सम्यक् निष्पद्यते तमादित्यसंवत्सरं पूर्वर्षय उपदिशन्ति ।

मू. (२८३) *आइच्चतेअतविआ खणलवदिवसा उऊ परिणमंति ।*
*पूरेइ अ निन्नथले तमाहु अभिवड्ढिअं जाण ॥*

वृ. अथाभिवर्द्धितः–'आइच्च'इत्यादि, यस्मिन् संवत्सरे क्षणलवदिवसा ऋतव आदित्यतेजसा कृत्वा अतीवतप्ताः परिणमन्ति, यश्च सर्वाण्यपि निम्नस्थानानि स्थलानि च जलेन पूरयति तं संवत्सरं जानीहि यथा तं संवत्सरमभिवर्द्धितमाहुः पूर्वर्षय इति।

*मू. (२८४) सनिच्छरसंवच्छरे णं भंते! कतिविहे प०गो० अट्ठाविसइविहे प० तं०– –जाव उत्तराओ आसाढाओ जं वा सणिच्चरे महग्गहे तीसाए संवच्छरेहिं सव्वं नक्खत्तमंडलं समाणेइ सेत्तं सणिच्चरसंवच्छरे।*

मू. (२८५) *अभिई सवणे धनिट्ठा सयभिसया दो अ होंतिं भद्दवया।*
*रेवइ अस्सिणि भरणी कत्तिअ तह रोहिणी चेव॥*

वृ. सम्प्रति शनैश्चरसंवत्सरप्रश्नमाह–'सणिच्छर'इत्यादि, शनैश्चरसंवत्सरो भदन्त! कतिविधः प्रज्ञप्तः?, गौतम! अष्टाविंशतिविधः प्रज्ञप्तः, तद्यथा– अभिजिच्छनैश्चरसंवत्सरः श्रवणशनैश्चरसंवत्सरः धनिष्ठशनैश्चरसंवत्सरः भरणीशनैश्चर- संवत्सरः कृत्तिकाशनैश्चरसंवत्सरः रोहिणीश० सं० यावत्पदात् मृगशिरःशनैश्चरसंवत्सर इत्यादि ग्राह्यं।

अन्ते चोत्तराषाढाशनैश्चरसंवत्सरः, तत्र यस्मिन् संवत्सरे अभिजिता नक्षत्रेण सह शनैश्चरो योगमुपादत्ते सोऽभिजिच्छनैश्चरसंवत्सरः श्रवणेन सह यस्मिन् संवत्सरे योगमुपादत्ते स श्रवण- शनैश्चरसंवत्सरः, एवं सर्वत्र भावनीयं, अथवा शनैश्चरो महाग्रहस्त्रिंशता संवत्सरैः सर्वनक्षत्र- मण्डलमभिजिदादिकं समापयति एतावान् कालविशेषः त्रिंशद्वर्षप्रमाणः शनैश्चरसंवत्सर इति। उक्ताः संवत्सराः, अथैतेषु कति मासा भवन्तीति पृच्छन्नाह–

*मू. (२८६) एगमेगस्स णं भंते! संवच्छरस्स कइ मासा पन्नता?, गोअमा! दुवालस मासा पन्नता, तेसि णं दुविहा नामधेज्जा पं० तं०– लोइआ लोउत्तरिआ य, तत्त लोइआ नामा इमे, तं०–सावणे भद्दवए जाव आसाढे, लोउत्तरिआ नामा इमे, तंजहा–*

वृ. एकैकस्य भदन्त! संवत्सरस्य कति मासाः प्रज्ञप्ताः?, गौतम! द्वादश मासाः प्रज्ञप्ताः, तेषां द्विविधानि नामधेयानि प्रज्ञप्तानि, तद्यथा–लौकिकानि लोकोत्तराणि च, तत्र लोकः– प्रवचनबाह्यो जनस्तेषु प्रसिद्धत्वेन तत्सम्बन्धीनि लौकिकानि लोकः प्रागुक्त एव तस्मात्सम्यग्ज्ञा- नादिगुणयुक्तत्वेन उत्तराः–प्रधानाः लोकोत्तराः–जैनास्तेषु प्रसिद्धत्वेन तत्सम्बन्धीनि लोकोत्तराणि, अत्र वृद्धिविधानस्य वैकल्पिकत्वेन यथाश्रुतरूपसिद्धिः, तत्र लौकिकानि नामान्यमूनि, तद्यथा– श्रावणो भाद्रपदः यावत्करणात् आश्वयुजः कार्त्तिको मार्गशीर्ष पौषो माघः फाल्गुनश्चैत्रः वैशाखो ज्येष्ठ आषाढ इति,लोकोत्तराणि नामान्यमूनी, तद्यथा-

मू. (२८७) *अभिनंदिए पइट्ठे अ, विजए पीइवद्धणे।*
*सेअंसे य सिवे चेव, सिसरे अ सहेमवं॥*

मू. (२८८) *नवमे वसंतमासे, दसमे कुसुमसंभवे।*
*एक्कारसे निदाहे अ, वनविरोहे अ बारसमे॥*

वृ-प्रथमः श्रावणोऽभिनन्दितो द्वितीयः प्रतिष्ठितस्तृतीयो विजयः चतुर्थ प्रतिवर्द्धनः पञ्चमः श्रेयान् षष्ठः शिवः सप्तमः शिशिरः अष्टमः हिमवान्, सूत्रे च पदपूरणाय सहशब्देन समासः तेन हिमवता सह शिशिर इत्यागतं शिशिरः हिमवांश्चेति नवमो वसन्तमासः दशमः कुसुमसम्भवः

एकादशो निदाघः द्वादशो वनविरोह इति, अत्र सूर्यप्रज्ञप्तिवृत्तौ अभिनन्दितस्थाने अभिनन्दः वनविरोहस्थाने तु वनविरोधी इति । अथ प्रतिमासं कति पक्षा इति प्रश्नयन्नाह-

*मू. (२८९) एगमेगस्स णं भंते ! मासस्स कति पक्खा पन्नत्ता ? गोअमा ! दो पक्खा प० तं० बहुलपक्खे अ सुक्कपक्खे अ । एगमेगस्स णं भंते ! पक्खस्स कइ दिवसा प० गो० पन्नरस दिवसा प०तं०—पडिवादिवसे बितिआदिवसे जाव पन्नरसीदिवसे, एतेसि णं भंते ! पन्नरसण्हं दिवसाणं कइ नामधेज्जा प०गो० पन्नरस नामधेज्जा प०तं०—*

वृ. 'एगमेगस्स'इत्यादि, एकैकस्य भदन्त ! मासस्य कति पक्षाः प्रज्ञप्ताः ?, गौतम ! द्वौ पक्षौ प्रज्ञप्तौ, तद्यथा-कृष्णपक्षो यत्र ध्रुवराहुः स्वविमानेन चन्द्रविमानमावृणोति तेन योऽन्धकारबहुलः पक्षः स बहुलपक्षः शुक्लपक्षो यत्र स एव चन्द्रविमानमावृत्तं मुञ्चति तेन ज्योत्स्नाधवलिततया शुक्लः पक्षः स शुक्लपक्षः, द्वौ चकारौ तुल्य ताद्योतनार्थौ तेन द्वावपि पक्षौ सदृशतिथिनामकौ सदृशसङ्ख्याकौ भवत इति अथानयोर्दिवससङ्ख्यां पृच्छन्नाह 'एगमेगस्स ण'मित्यादि, एकैकस्य पक्षस्य कृष्णशुक्लान्यतरस्य भदन्त ! कति दिवसाः प्रज्ञप्ताः ?, यद्यपि दिवसशब्दोऽहोरात्रे रूढस्तथापि सूर्यप्रकाशवतः कालविशेषस्यात्र ग्रहणं, रात्रिविभागप्रश्नसूत्रस्याग्रे विधास्यमानत्वात्, गौतम ! पञ्चदश दिवसाः प्रज्ञप्ताः, एतच्च कर्ममासापेक्षया द्रष्टव्यं, तत्रैव पूर्णानां पञ्चदशानामहोरात्राणां सम्भवात्तद्यथा-प्रतिपद्दिवसः प्रतिपद्यते पक्षस्याद्यतया इति प्रतिपत् प्रथमो दिवस इत्यर्थः, तथा द्वितीया द्वितीयो दिवसो यावत्करणात् तृतीया तृतीयो दिवस इत्यादिग्रहः अन्ते पञ्चदशी पञ्चदशो दिवसः, एतेषां भदन्त ! पञ्चदशानां दिवसानां कति ! नामधेयानि प्रज्ञप्तानि ?, गौतम ! पञ्चदश नामधेयानि प्रज्ञप्तानि, तद्यथा-

*मू. (२९०) पुव्वंगे सिद्धमनोरमे अ तत्तो मनोरहे चेव ।*
*जसभद्दे अ जसधरे छट्ठे सव्वकामसमिद्धे अ ॥*

*मू. (२९१) इंदमुद्धाभिसित्ते अ सोमनस धनंजए अ बोद्धव्वे ॥*
*अत्थसिद्धे अभिजाए अच्चसणे सयंजए चेव ॥*

वृ.-प्रथमः पूर्वाङ्गो द्वितीयः सिद्धमनोरमस्तृतीयः मनोहरः चतुर्थो यशोभद्रः पञ्चमो यशोधरः षष्ठः सर्वकामसमृद्धः सप्तम इन्द्रमूर्द्धाभिषिक्तोऽष्टमः सौमनसो नवमो धनञ्जयः दशमोऽर्थसिद्धः एकादशोऽभिजातो द्वादशोऽत्यशनः त्रयोदशः शतञ्जयः चतुर्दशोऽग्निवेश्म पञ्चदश उपशम इति दिवसानां भवन्ति नामधेयानि इति ।सम्प्रत्येषां दिवसानां पञ्चदश तिथीः पिपृच्छिषुराह-

*मू. (२९२) अग्गिवेसे उवसमे दिवसाणं होंति नामधेज्जा ॥ एतेसि णं भंते ! पन्नरसण्हं दिवसाणं कति तिही पन्नत्ता ?, गो० ! पन्नरस तिही पन्नत्ता, तं०—नंदे भद्दे जए तुच्छे पुण्णे पक्खस्स पंचमी । पुनरवि नंदे भद्दे जए तुच्छे पुण्णे पक्खस्स दसमी । पुनरवि नंदे भद्दे जए तुच्छे पुण्णे पक्खस्स पन्नरसी, एवं ते तिगुणा तिहीओ सव्वेसिं दिवसाणंति । एगमेगस्स णं भंते ! पक्खस्स कइ राईओ पन्नत्ताओ ?, गोअमा ! पन्नरस राईओ पन्नत्ताओ, तं०—पडिवाराई जाव पन्नरसीराई, एआसि णं भंते ! पन्नरसण्हं राईणं कइ नामधेज्जा पन्नत्ता ?, गो० ! पन्नरस नामधेज्जा पन्नत्ता, तंजहा—*

वृ- 'एतेसि ण'मित्यादि, एषेषां-अनन्तरोक्तानां पञ्चदशानां दिवसानां भदन्त ! कति

तिथयः प्रज्ञप्ताः ?, गौतम! पञ्चदश तिथयः प्रज्ञप्ताः, तद्यथा-नन्दो भद्रो जयस्तुच्छोऽन्यत्र रिक्तः पूर्णः, अत्र तिथिशब्दस्य पुंसि निर्दिष्टतया नन्दादिशब्दानामपि पुंसि निर्देशः, ज्योतिष्कण्डकसूर्यप्रज्ञप्तिवृत्यादौ तु नन्दा भद्रा जया इत्यादिस्त्रीलिङ्गनिर्देशेन संस्कारो दृश्यते, स च पूर्णः पञ्चदश तिथ्यात्मकस्य पक्षस्य पञ्चमी इति रूढः, एतेन पञ्चमीतः परेषां षष्ठ्यादितिथीना नन्दादिक्रमेणैव पुनरावृत्तिर्दर्शिता, तथैव सूत्रे आह-पुनरपि नन्दः भद्रः जयः तुच्छः पूर्णः, स च पक्षस्य दशमी, अनेन द्वितीया आवृत्तिः पर्यवसिता, पुनरपि नन्दः भद्रः जयः तुच्छः पूर्ण, स च पक्षस्य पञ्चदशी, उक्तमर्थं निगमयति-एवमुक्तरीत्या आवृत्तित्रयरूपया एते अनन्तरोक्ता नन्दाद्याः पंच त्रिगुणाः पञ्चदशसंख्याकास्तिथयः सर्वेषां-पञ्चदशानामपि दिवसानां भवन्ति,

एताश्च दिवसतिथय उच्यन्ते, आह-दिवसतिथ्योः कः प्रतिविशेषो येन तिथिप्रश्नसूत्रस्य पृथग्विधानं? उच्यते, सूर्यचारकृतो दिवसः स च प्रत्यक्षसिद्ध एव, चन्द्रचारकृता तिथि, कथमिति चेत्? उच्यते, पूर्वपूर्णिमापर्यवसानं प्रारभ्य द्वाषष्टिभागीकृतस्य चन्द्रमण्डलस्य सदानावरणीयौ द्वौ भागौ वर्जयित्वा शेषस्य षष्टिभागात्मकस्य चतुर्भागात्मकः पंचदशो भागो यावता कालेन ध्रुवराहुविमानेन आवृतो भवति अमावास्यान्ते च स एव प्रकटितो भवति तावान् कालविशेषस्तिथि

अथ रात्रिवक्तव्यप्रश्नमाह-'एगमेगस्स' इतियादि, एकैकस्य भदन्त! पक्षस्य कति रात्रयोऽनन्तरोक्तदिवसानामेव चरमांशरूपाः प्रज्ञप्ताः ?, गौतम! पञ्चदश रात्रय प्रज्ञप्ताः, तद्यथा-प्रतिपद्रात्रि यावत्करणाद् द्वितीयादिरात्रिपरिग्रहः, एवं पंचदशीरात्रिरिति। 'एआसि ण' मित्यादि, प्रश्नसूत्रं सुगमं, उत्तरसूत्रे गौतम! पञ्चदश नामधेयानि प्रज्ञप्तानि, तद्यथा--

मू. (२१३) *उत्तमा य सुनक्खत्ता, एलावत्ता जसोहरा।*
*सोमनसा चेव तहा, सिरिसंभूआ य बोद्धव्वा॥*

मू. (२१४) *विजया य वेजयंति जयंति अपराजिआ य इच्छा य।*
*समाहारा चेव तहा तेआ य तहा अईतेआ॥*

वृ. उत्तमा प्रतिपद्रात्रिः सुनक्षत्रा द्वितीयारात्रिः एलापत्या तृतीया यशोधरा चतुर्थी सौमनसा पञ्चमी श्रीसम्भूता षष्ठी विजया सप्तमी वैजयन्ती अष्टमी जयन्ती नवमी अपराजिता दशमी इच्छा एकादशी समाहारा द्वादशी तेजास्त्रयोदशी अतितेजाश्चतुर्दशी देवानन्दा पंचदशी निरत्यपि पंचदश्या नामान्तरं, इमानि रजनीनां नामधेयानि। यथा अहोरात्राणां दिवसरात्रिविभागेन संज्ञान्तराणि कथितानि तथा दिवसतिथिसंज्ञान्तराणि प्रागुक्तानि।

मू. (२१५) *देवानंदा निरई रयणीणं नामधिज्जाइं। एयासि णं भंते! पन्नरसण्हं राईणं कइ तिही पं० ?, गो० ! पन्नरस तिही पं०, तं०—उग्गवई भोगवई जसवई सव्वसिद्धा सुहनामा, पुनरवि जाव सुहनामा, पुनरवि जाव सुहनामा, एवं तिगुणा एते तिहीओ सव्वेसिं राईणं, एगमेगस्स णं भंते! अहोरत्तस्स कइ मुहुत्ता प०गो० तीसं मुहुत्ता पं०, तं०—*

वृ- अथ रात्रितिथिसंज्ञान्तराणि प्रश्नयन्नाह- 'एतासि णं' इत्यादि, एतासां भदन्त! पञ्चदशानां रात्रीणां कति तिथयः प्रज्ञप्ताः ? गौतम! पञ्च तिथयः प्रज्ञप्ताः, तद्यथा-प्रथमा उग्रवती नन्दातिथिरात्रिः, द्वितीया भोगवती भद्रातिथिरात्रिः, तृतीया यशोमती जयातिथिरात्रिः, चतुर्थी सर्वसिद्धा तुच्छातिथिरात्रिः, पञ्चमी शुभनामा पूर्णतिथिरात्रिः, पुनरपि षष्ठी उग्रवती नन्दातिथिरात्रिः भोगवती

भद्रातिथि सप्तमी रात्रिः, यशोमती जयातिथिरष्टमी रात्रिः, सर्वसिद्धा तुच्छा तिथिर्नवमी रात्रिः, शुभनामा पूर्णातिथिर्दशमी रात्रिः, पुनरपि उग्रवती नन्दातिथिरेकादशी रात्रिः, भोगवती भद्रातिथिर्द्वादशी रात्रिः, यशोमती जयातिथिस्त्रयोदशी रात्रिः सर्वसिद्धा तुच्छा तिथिश्चतुर्दशी रात्रिः, शुभनामा पूर्णातिथि पञ्चदशी रात्रिरिति, यथा नन्दादिपञ्चतिथीनां त्रिरावृत्या पंचदश (दिन) तिथयो भवन्ति तथोग्रवतीप्रभृतीनां त्रिरावृत्या पंचदश रात्रितिथयो भवन्तीति। अथैकस्याहोरात्रस्य मुहूर्तानि गणयितुं पृच्छति—'एगमेगस्स ण'मित्यादि, एकैकस्य भदन्त अहोरात्रस्य कति मुहूर्ताः प्रज्ञप्ताः ?, गौतम ! त्रिंशन्मुहूर्ताः प्रज्ञप्ताः, तद्यथा—

**मू. (२९६)** *रुद्दे सेए मित्ते वाउ सुबीए तहेव अभिचंदे।*
*माहिंद बलव बंभे बहुसच्चे चेव ईसाणे॥*

**मू. (२९७)** *तट्ठे अ भाविअप्पा वेसमणे वारुणे अ आनंदे।*
*विजए अ वीससेणे पायावच्चे उवसमे अ॥*

**मू. (२९८)** *गंधव्व अग्गिवेसे सयवसहे आयवे य अममे अ।*
*अणवं भोमे वसहे सव्वट्ठे रक्खसे चेव॥*

**वृ.** प्रथमो रुद्र- द्वितीयः श्रेयान् तृतीयो मित्रः चतुर्थो वायुः पंचमः सुपीतः षष्ठोऽभिचन्द्रः सप्तमो माहेन्द्रः अष्टमो बलवान् नवमो ब्रह्म दशमो बहुसत्यः एकादश ऐशानः द्वादशस्त्वष्टा त्रयोदशो भावितात्मा चतुर्दशो वैश्रमणः पंचदशो वारुणः षोडश आनन्दः सप्तदशो विजयः अष्टादशो विश्वसेनः एकोनविंशतितमः प्राजापत्यः विंशतितम उपशमः एकविंशतितमो गंधर्व्वः द्वाविंशतितमोऽग्निवेश्यः त्रयोविंशतितमः शतवृषभः चतुर्विंशतितमः आतपवान् पंचविंशतितमोऽममः षड्विंशतितमऋणवान् सप्तविंशतितमो भौमः अष्टाविंशतितमो वृषभः एकोनत्रिंशत्तमः सर्वार्थ त्रिंशत्तमो राक्षसः। अथ तिथिप्रतिबद्धत्वात्करणानां तत्स्वरूपप्रश्नमाह—

**मू. (२९९)** *कति णं भंते ! करणा प०गो० एक्कारस करणा प०तं० बवं बालवं कोलवं थीविलोअणं गराइ वणिजं विट्ठी सउणी चउप्पयं नागं किंत्थुग्घन, एतेसि णं भंते ! एक्कारसण्हं करणाणं कति करणा चरा कति करणा थिरा प०गो० ! सत्त करणा चरा चत्तारि करणा थिरा प०तं० बवं बालवं कोलवं थिविलोअणं गरादि वणिजं विट्ठी, एते णं सत्त करणा चरा, चत्तारि करणा थिरा पं०तं०—सउणी चउप्पयं नागं किंत्थुग्घं, एते णं चत्तारि करणा थिरा प०।*

*एते णं भंते ! चरा थिरा वा कया भवन्ति ?, गोअमा ! सुक्कपक्खस्स पडिवाए राओ बवे करणे भवइ, बितियाए दिवा बालवे करणे भवइ, राओ कोलवे करणे भवइ, ततिआए दिवा थीविलोअणं करणं भवइ, राओ गराइ करणं भवइ, चउत्थीए दिवा वणिजं राओ विट्ठी, पंचमीए दिवा बवं राओ बालवं, छट्ठीए दिवा कोलवं राओ थीविलोअणं, सत्तमीए दिवा गराइ राओ वणिजं अट्ठमीए दिवा विट्ठी राओ बवं नवमीए दिवा बालवं राओ कोलवं दसमीए दिवा थीविलोअणं राओ गराइं एक्कारसीए दिवा वणिजं राओ विट्ठी बारसीए दिवा बवं राओ बालवं तेरसीए दिवा कोलवं राओ थीविलोअणं चउद्दसीए दिवा गरातिं करणं राओ वणिजं पुण्णिमाए दिवा विट्ठीकरणं राओ बवं करणं भवइ। बहुलपक्खस्स पडिवाए दिवा बालवं राओ कोलवं बितिआए दिवा थीविलोअणं छट्ठीए दिवा गराइं राओ वणिज्जं राओ विट्ठी चउत्थीए दिवा बवं राओ बालवं*

*पंचमीए दिवा कोलवं राओ थीविलोअणं छट्ठीए दिवा गराइं राओ वणिज्जं सत्तमीए दिवा विट्ठी राओ बवं अट्ठमीए दिवा बालवं राओ कोलवं नवमीए दिवा थीविलोअणं राओ गराइं दसमीए दिवा वणिज्जं राओ विट्ठी एक्कारसीए दिवा बवं राओ बालवं बारसीए दिवा कोलवं राओ थीविलोअणं तेरसीए दिवा गराइं राओ वणिज्जं चउद्दसीए दिवा विट्ठी राओ सउणी अमावासाए दिवा चउप्पयं राओ नागं सुक्कपक्खस्स पाडिवए दिवा किंत्थुग्घं करणं भवइ ।*

**वृ.** 'कति णं भंते !'इत्यादि कति भदन्त ! करणानि प्रज्ञप्तानि ?, गौतम ! एकादश करणानि प्रज्ञप्तानि, तद्यथा—बवं बालवं कौलवं स्त्रीविलोचनं अन्यत्रास्य स्थाने तैतिलमिति गरादि अन्यत्र गरं वणिजं विष्टि शकुनि चतुष्पदं नागं किंस्तुघ्नमिति । एतेषां च चरस्थिरत्वादिव्यक्तिप्रश्नमाह— एतेषां भदन्त ! एकादशानां करणानां मध्ये कति करणानि चराणि कति करणानि स्थिराणि प्रज्ञप्तानि ?, चकारोऽत्र गम्यः, भगवानाह—गौतम ! सप्त करणानि चराणि अनियततिथिभावित्वात् चत्वारि करणानि स्थिराणि नियततिथिभावित्वात्, तद्यथा—बवादीनि सूत्रोक्तानि ज्ञेयानि, एतानि सप्त करणानि चराणि इत्येतन्निगमनवाक्यं, चत्वारि करणानि स्थिराणि प्रज्ञप्तानि, तद्यथा—शकुन्यादीनि सूत्रोक्तानि, एतानि चत्वारि करणानि स्थिराणि प्रज्ञप्तानि इति तु निगमनवाक्यं, प्रारम्भकनिगमनवाक्यद्वयभेदेन नात्र पुनरुक्तिः ।

एतेषां स्थाननियमं प्रष्टुमाह—'एतेसि णं'मित्यादि, सर्वं चैतन्निगदसिद्धम्, नवरं दिनरात्रिविभागेन यत्पृथक्कथनं तत्करणानां तिथ्यर्द्धप्रमाणत्वात्, कृष्णचतुर्दश्यां रात्रौ शकुनि अमावास्यायां दिवा चतुष्पदं रात्रौ नागं शुक्लपक्षप्रतिपदि दिवा किंस्तुघ्नं चेति चत्वारि स्थिराणि आस्वेव तिथिषु भवन्तीत्यर्थः । अथ यद्यपि सर्वस्यापि कालस्य सदा परिवर्त्तनस्वभावत्वेनाद्यन्ताभावाद्वक्ष्यमाणसूत्रारम्भोऽनुपपन्नस्तथाप्यस्त्येव कालविशेषस्याद्यन्तविचारः अतीतः पूर्व संवत्सरः सम्प्रतिपन्नोत्तर— संवत्सर इत्यादिव्यवहारस्याध्यक्षसिद्धत्वात्, तेन कालविशेषाणामादिं पृच्छति—

**मू. (३००)** *किमाइआ णं भंते ! संवच्छरा किमाइआ अयणा किमाइआ उऊ किमाइआ मासा किमाइआ पक्खा किमाइआ अहोरत्ता किमाइआ मुहुत्ता किमाइआ करणा किमाइआ नक्खत्ता पन्नत्ता ?, गोअमा ! चंदाइआ संवच्छरा दक्खिणाइया अयणा पाउसाइआ उऊ सावणाइआ मासा बहुलाइआ पक्खा दिवसाइआ अहोरत्ता रोद्दाइआ मुहुत्ता बालवाइआ करणा अभिजिआइआ नक्खत्ता पन्नत्ता समणाउसो ! इति ।*

*पंचसंवच्छरिए णं भंते ! जुगे केवइआ अयणा केवइआ उऊ एवं मासा पक्खा अहोरत्ता केवइआ मुहुत्ता पन्नत्ता ?, गो० ! पंचसंवच्छरिए णं जुगे दस अयणा तीसं उऊ सट्ठी मासा एगे वीसुत्तरे पक्खसए अट्ठारसतीसा अहोरत्तसया अट्ठारस तीसा अहोरत्तसया चउप्पन्नं मुहुत्तसहस्सा नव सया पन्नत्ता ।*

**वृ.** 'किमाइआ ण'मित्यादि, कश्चन्द्रादिपंचकान्तर्वर्त्ती आदि—प्रथमो येषां ते किमादिकाः संवत्सराः, इदं च प्रश्नसूत्रं चन्द्रादिसंवत्सरापेक्षया ज्ञेयं, अन्यथा परिपूर्णसूर्यसंवत्सरपंचकात्मकस्य युगस्य कः आदि कश्चरम इति प्रश्नावकाशोऽपि न स्यात्, किं—दक्षिणोत्तरायणयोरन्यतरदादिर्ययोस्ते किमादिके अयने, बहुवचनं च सूत्रे प्राकृतत्वात्, कः प्रावृडादीनामन्यतर आदी येषां ते किमादिकाः ऋतवः, कः श्रावणादिमध्यवर्त्ती आदिर्येषां ते किमादिका मासाः, एवं किमादिकौ पक्षौ कमादिका अहोरात्राः किमादिकानि करणानि किमादिकानि नक्षत्राणि प्रज्ञप्तानीति प्रश्नसूत्रं,

भग० गौ० चन्द्र आदिर्येषां ते चन्द्रादिकाः संवत्सराः, चन्द्रचन्द्राभिवर्द्धितचन्द्राभिवर्द्धितनामकसंवत्सरपंचकात्मकस्य युगस्य प्रवृत्तौ प्रथमतोऽस्यैव प्रवर्त्तनात्, न त्वभिवर्द्धितस्य, तस्य युगे त्रिशन्मासातिक्रमे सद्भावादिति, ननु युगस्यादौ वर्त्तमानत्वात् चन्द्रसंवत्सरः संवत्सराणामादिरुक्तस्तर्हि युगस्यादित्वं कथं ?, युगे प्रतिपद्यमाने सर्वे कालविशेषाः सुषमसुषमादयः प्रतिपद्यन्ते युगे पर्यवस्यति ते पर्यवस्यन्ति, अन्यच्च सकलज्योतिश्चक्रमूलस्य सूर्यदक्षिणायनस्य चन्द्रोत्तरायणस्य च युगपत् प्रवृत्तिर्युगस्यादावेव सोऽपि चन्द्रायणस्याभिजियोगप्रथमसमय एव सूरायणस्य तु पुष्यस्य त्रयोविंशतौ सप्तषष्टिभागेषु व्यतीतेषु तेन सिद्धं युगस्यादित्वमिति, तथा दक्षिणायनं–संवत्सरस्य प्रथमे षण्मासास्तदादिर्ययोस्ते तथा, आदित्वं चास्य युगप्रारम्भे प्रथमतः प्रवृत्तत्वात्।

एतच्च सूर्यायनापेक्षं वचनं, चन्द्रायनापेक्षया तु उत्तरायणस्यादिता वक्तव्या स्यात्, युगारम्भे चन्द्रस्योत्तरायणप्रवृत्तत्वात्, प्रावृड्‌ऋतुः–आषाढश्रावणरूपमासद्वयात्मक आदिर्येषां ते प्रावृडादिका ऋतवः, युगादौ ऋत्वेकदेशस्य श्रावणमासस्य प्रवर्त्तमानत्वात्, एवं श्रावणादिका मासाः प्रागुक्तहेतोरेव, बहुलपक्षादिको पक्षौ श्रावणबहुलपक्ष एव युगादिप्रवृत्तेः, दिवसादिका अहोरात्राः, मेरुतो दक्षिणोत्तरयोः सूर्योदय एव युगप्रतिपत्तेः, भरतैरवतापेक्षया इदं वचनं, विदेहापेक्षया तु रात्रौ तत्प्रवृत्तेः, तथा रुद्रस्त्रशतो मुहूर्त्तानां मध्ये प्रथमः स आदिर्येषां ते तथा प्रातस्तस्यैव प्रवृत्तेः, तथा बालवादिकानि करणानि, बहुलप्रतिपद्दिवसे तस्यैव सम्भवात्, तथाऽभिजिदादिकानि नक्षत्राणि, तत एवारभअय नक्षत्राणां क्रमेण युगे प्रवर्त्तमानत्वात्, तथाहि–

उत्तराषाढानक्षत्रचरमसमयपाश्चात्ये युगस्यान्तः ततोऽभिनवयुगस्यादिनक्षत्रभिजिदेवेति, हे श्रमण ! हे आयुष्मन् !, अन्ते च सम्बोधनं शिष्यस्य पुनः प्रश्नविषयकोद्यमविधापनार्थं अत एवोल्लसन्मूर्मना युगे युगेऽयनादिप्रमाणं पृच्छति–पञ्च संवत्सरा सौरा मानमस्येति पञ्चसंवत्सरिकं युगं, अनेन नोत्तरसूत्रेण दश अयना इत्यादिकेन विरोधः, चन्द्रसंवत्सरोपयोगिनां चन्द्रायणानां तु चतुस्त्रिंशदधिकशतस्य सम्भवात्, तत्र भवन्त कत्ययनानि प्रज्ञप्तानि ?, कियन्त ऋतवः, एवमित सौत्रं पदं एवं सर्वत्र योजना कार्येत्यर्थाभिव्यञ्जकं, तेन यन्तो मासाः पक्षाः अहोरात्राः कियन्तो मुहूर्त्ता प्रज्ञप्ताः ? भगवानाह– गौ० पञ्चसंवत्सरिके युगे दश अयनानि, प्रतिवर्षमयनद्वयसम्भवात्, एवं त्रिंशदृतवः प्रत्ययनं ऋतुत्रयसम्भवात्, अत्र सूर्यसंवत्सरषष्ठांश एकषष्टिदिनमानः सूर्यऋतुरेव, न तु ऋतुसंव- त्सरषष्ठांशः षष्ठिदिनप्रमाणो लौकिकर्तु, तथा च सति षष्टिर्मासा इत्युत्तरसूत्रं विरुणद्धि, तथा षष्टिर्मासाः सौराः प्रतिऋतु मासद्वयसम्भवात्, एकविंशत्युत्तरं पक्षशतं, प्रतिमासं पक्षद्वयसम्भवात्, अष्टादश शतानि त्रिंशदधिकान्यहोरात्राणां प्रत्ययनं अहोरात्रास्ते च दशगुणाः मुहूर्त्ताश्च चतुष्पञ्चाशत्सहस्राणि नव च शतानि प्रत्यहोरात्रं त्रिंशन्मुहूर्त्ता इति युगाहोरात्राणां सङ्ख्याङ्कानां त्रिंशता गुणने उक्तसङ्ख्यासम्भवात् ॥

उक्तं चन्द्रसूर्यादीनां गत्यादिस्वरूपम्, अथ योगादीन् दशार्थान् विवक्षुर्द्वारगाथामाह–

**मू. (३०१)** *जोगा १ देवय २ तारग्ग ३ गोत्त ४ संठाण ५ चंदरविजोगा ६ ।*
*कुल ७ पुण्णिम अवमंसा य ८ सण्णिवाए ९ अ नेता य १० ॥*

**वृ.** 'जोगो देवय' इत्यादि, योगोऽष्टाविंशतेर्नक्षत्राणा किं नक्षत्रं चन्द्रेण सह दक्षिणयोगि किं नक्षत्रमुत्तरयोगि इत्यादिको दिग्योगः १ देवताः–नक्षत्रदेवताः २ ताराग्रं–नक्षत्राणां तारापरिमाणं

३ गोत्राणि नक्षत्राणां ४ संस्थानानि नक्षत्राणां ५ चन्द्ररवियोगो–नक्षत्राणां चन्द्रेण रविणा च सह योगः ६, कुलानि–कुलसंज्ञकानि नक्षत्राणि उपलक्षणादुपकुलानि कुलोपकुलानि च ७ कति पूर्णिमाः कति अमावास्याश्च ८ सन्निपातः–एतासामेव पूर्णिमामावास्यानां परस्परापेक्षया नक्षत्राणां सम्बन्धः ९, चः समुच्चये, नेता–मासस्य परिसमापकस्त्रिचतुरादिनक्षत्रगणः १०, चः समुच्चये, छायाद्वारं तु नेतृद्वारानुयायित्वेन न पृथक्कृतमिति ।

मू. (३०२) *कति णं भंते ! नक्खत्ता पं० ?, गो० ! अट्ठावीसं नक्खत्ता पं०, –अभिई १ सवणो २ धणिट्ठा ३ सयभिसया ४ पुव्वभद्दवया ५ उत्तरभद्दवया ६ रेवई ७ अस्सिणी ८ भरणी ९ कत्तिआ १० रोहिणी ११ मिअसिर १२ अद्दा १३ पुणव्वसू १४ पूसो १५ असेसा १६ मघा १७ पुव्वफग्गुणि १८ उत्तरफग्गुणि १९ हत्थे २० चित्ता २१ साई २२ विसाहा २३ अणुराहा २४ जिट्ठा २५ मूलं २६ पुव्वासाढा २७ उत्तरासाढा २८ इति ।*

वृ. अथ चन्द्रस्य नक्षत्रैः सह दक्षिणादिदिग्योगो भवति तेन प्रथमतो नक्षत्रपरिपाटीमाह–अत्र शब्दसंस्कारा इमे, अभिजित् १ श्रवणः २ धनिष्ठा ३ शतभिषक् ४ पूर्वभद्रपदा ५ उत्तरभद्रपदा ६ रेवती ७ अश्विनी ८ भरणी ९ कृत्तिका १० रोहिणी ११ मृगशिरः १२ आर्द्रा १३ पुनर्वसु १४ पुष्यः १५ अश्लेषा १६ मघा १७ पूर्वाफाल्गुनी १८ उत्तराफाल्गुनी १९ हस्तः २० चित्रा २१ स्वाति २२ विशाखा २३ अनुराधा २४ ज्येष्ठा २५ मूलं २६ पूर्वाषाढा २७ उत्तराषाढा २८ ।

अयं च नक्षत्रावलिकाक्रमोऽश्विन्यादिकं कृत्तिकादिकं वा लौकिकं क्रममुल्लङ्घ्य यज्जिनप्रवचने दर्शितः स युगादौ चन्द्रेण सहाभिजिद्योगस्य प्रथमं प्रवृत्तत्वात्, न चात्र 'बहि मूलोऽभंतरे अभिई' इति वचनादभिजितः सर्वतोऽभ्यन्तस्थायित्वेन नक्षत्रावलिकाक्रमेण पूर्वमुपन्यास इति वाच्यं, नक्षत्रक्रमनियमे चन्द्रयोगक्रमस्यैव कारणत्वात् न तु सर्वाभ्यन्तरादिमण्डलस्थायित्वस्य अन्यथा षष्ठादिमण्डलस्थायिनां कृत्तिकादीनां भरण्यनन्तरमुपन्यासो न स्यात्, अथ यद्यभिजितः प्रारभ्य नक्षत्रावलिकाक्रमः क्रियते तर्हि सप्तविंशतिनक्षत्राणामिव कथमस्य व्यवहारासिद्धत्वं ?, उच्यते, अस्य चन्द्रेण सह योगकालस्याल्पीयस्त्वेन नक्षत्रान्तरानुप्रविष्टतया विवक्षणात्, यदुक्तं समवायाङ्गे सप्तविंशतितमे समवाये– "जंबुद्दीवे दीवे अभिईवज्जेहिं सत्तावीसाए नक्खत्तेहिं संववहारे वट्टइ" एतद्वृत्तिर्यथा–"जंबूद्वीपे न धातकीखण्डादौ अभिजिद्वर्ज्जैः सप्तविंशत्या नक्षत्रैः व्यवहारः प्रवर्त्तते, अभिजिन्नक्षत्रस्योत्तराषाढाचतुर्थपादानुप्रवेशनादिति," ॥ अथ प्रथमोद्दिष्टं योगद्वारमाह–

मू. (३०३) *एतेसि णं भंते ! अट्ठावीसाए नक्खत्ताणं कयरे नक्खत्ता जे णं सया चंदस्स दाहिणेणं जोअं जोएंति कयरे नक्खत्ता जे णं सया चंदस्स उत्तरेणं जोअं जोएंति कयरे नक्खत्ता जे णं चंदस्स दाहिणेणवि उत्तरेणवि पमद्दंपि जोगं जोएंति कयरे नक्खत्ता जे णं चंदस्स दाहिणेणंपि पमद्दंपि जोअं जोएंति कयरे नक्खत्ता जे णं सया चंदस्स पमद्दं जोअं जोएंति ?, गो० ! एतेसि णं अट्ठावीसाए नक्खत्ताणं तत्थ जे ते नक्खत्ता जे णं सया चंदस्स दाहिणेणं जोअं जोएंति ते णं छ, तंजहा–*

वृ. 'एतेसि णं'मित्यादि, एतेषां भदन्त ! अष्टाविंशतेर्नक्षत्राणां मध्ये कतराणि नक्षत्राणि यानि सदा चन्द्रस्य दक्षिणेन–दक्षिणस्यां दिशि व्यवस्थितानि योगं योजयन्ति ?–सम्बन्धं कुर्वन्ति १ तथा कतराणि नक्षत्राणि यानि सदा चन्द्रस्योत्तरस्यां दिशि व्यवस्थितानि योगं योजयन्ति २

तथा कतराणि नक्षत्राणि यानि चन्द्रस्य दक्षिणस्यामप्युत्तरस्यामपि प्रमर्दमपिनक्षत्रविमानानि विभिद्य मध्ये गमनरूपं योगं योजयन्ति, केषां नक्षत्रविमानानां मध्येन चन्द्रो गच्छतीत्यर्थः ३ तथा कतराणि नक्षत्राणि यानि चन्द्रस्य दक्षिणस्यामपि प्रमर्दमपि योगं योजयन्ति ४ तथा कतरन्नक्षत्रं यत् सदा चन्द्रस्य प्रमर्दं योगं योजयति ? ५, भगवानाह–गौतम ! एतेषामष्टाविंशतेर्नक्षत्राणां दिग्विचारं ब्रूम इति शेषः, तत्र यानि तानीति भाषामात्रे नक्षत्राणि यानि सदा चन्द्रस्य दक्षिणस्यां योगं योजयन्ति तानि षट्, तद्यथा–

*मू. (३०४) संठाण १ अद्द २ पुस्सो ३ ऽसिलेस ४ हत्थो ५ तहेव मूलो अ ६ ।*
*बाहिरओ बाहिरमंडलस्स छप्पेत नक्खत्ता ॥*

वृ. संस्थानं–मृगशिरः १ आर्द्रा २ पुष्यः ३ अश्लेषा ४ हस्तः ५ तथैव मूलश्च ६ बहिस्तात् बाह्यमण्डलस्य–चंद्रसत्कपञ्चदशमण्डलस्य भवन्ति ।

*मू. (३०५) तत्थ णं जे ते नक्खत्ता जे णं सया चंदस्स उत्तरेणं जोगं जोएंति ते णं बारस, तं०–अभिई सवणो धनिट्ठा सयभिसया पुव्वभद्दवया उत्तरभद्दवया रेवइ अस्सिणी भरणी पुव्वाफग्गुणी उत्तराफग्गुणी साई, तत्थ णं जे ते नक्खत्ता जे णं सया चंदस्स दाहिणओवि उत्तरओवि पमद्दंपि जोगं जोएंति ते णं सत्त, तंजहा–*

*कत्तिआ रोहिणी पुणव्वसू मघा चित्ता विसाहा अणुराहा, तत्थ णं जे ते नक्खत्ता जे णं सया चन्दस्स दाहिणओवि पमद्दंपि जोगं जोएंति, ताओ णं दुवे आसाढाओ सव्वबाहिरए मंडले जोगं जोअंसु वा ३, तत्थ णं जे से णक्खत्ते जे णं सया चन्दस्स पमद्दं जोएइ सा णं एगा जेट्ठा इति ।*

वृ. कोऽर्थः ?–समप्रचारक्षेत्रप्रान्तवर्तित्वादिमानि दक्षिणदिग्व्यवसायीनि चंद्रश्च द्वीपतो मण्डलेषु चरन् २ तेषामुत्तरस्यायीति दक्षिणदिग्योगः, ननु 'बहि मूलोऽब्भंतरे अभिई' इति वचनात् मूलस्यैव बहिश्चरत्वं तथाऽभिजित एवाभ्यन्तरचरत्वं तर्हि कथमत्र षडित्युक्तानि, वक्ष्यमाणेऽनन्तरसूत्रे च द्वादशाभ्यन्तरस इति वक्ष्यते ?, उच्यते, मृगशिरआदीनां षण्णां समानेऽपि बहिश्चारित्वे मूलस्यैव सर्वतो बहिश्चरत्वं, तेन बहिर्मूलो इत्युक्तं, तथा अनन्तरोत्तरसूत्रे वक्ष्यमाणानां द्वादशानामप्यभ्यन्तरमण्डलचारित्वे समानेऽपि अभिजित एव सर्वतोऽभ्यन्तरवर्तित्वात् 'अब्भंतरे अभिई' इति, तत्र यानि तानीति प्राग्वत् नक्षत्राणि यानि सदा चन्द्रस्योत्तरस्यां योगं योजयन्ति तानि द्वादश, तद्यथा– अभिजित श्रवणो धनिष्ठा शतभिषक् पूर्वभद्रपदा उत्तरभद्रपदा रेवती अश्विनी भरणी पूर्वाफाल्गुनी उत्तराफाल्गुनी स्वाति, यदा चैतैः सह चंद्रस्य योगस्तदा स्वभावाच्चन्द्रः शेषेष्वेव मण्डलेषु स्यात्, यथा च भिन्नमण्डलस्थायिना चन्द्रेण सह भिन्नमण्डलस्थायिनक्षत्राणां योगस्तथा मण्डलविभागकरणाधिकारे प्रतिपादितं, यतः सदैवैतान्युत्तरदिगवस्थितान्येव चन्द्रेण सह योगमायान्तीति, यत्तु समवायाङ्गे 'अभिजिआइआ णं नव नक्खत्ता चंदस्स उत्तरेणं जोगं जोएंति, अभिई सवणो जाव भरणी' इत्युक्तं तन्नवमसमवायानुरोधेनाभिजिन्नक्षत्रमादौ कृत्वा निरन्तर-योगित्वेन नवानामेव विवक्षितत्वात् ।

उत्तरयोगिनामपि पूर्वफाल्गुन्युत्तरफाल्गुनीस्वातीनां कृत्तिकारोहिणीमृगशिरःप्रमुखनक्षत्र-योगानन्तरमेव योगसम्भवात्, तत्र यानि तानि नक्षत्राणि यानि सदा चन्द्रस्य दक्षिणेनापि उत्तरेणापि प्रमर्दमपि योगं योजयन्ति अपि सर्वत्र परस्परसमुच्चयार्थः तानि सप्त, तद्यथा–कृत्तिका रोहिणी

पुनर्वसु मघा चित्रा विशाखा अनुराधा, एतेषांच त्रिधापि योग इत्यर्थः, समवायाङ्गेऽष्टमसमवाये च– 'अट्ठ नक्खत्ता चंदेण सद्धिं पमद्दं जोगं जोएंति कत्तिआ रोहिणी पुनवसु महा चित्ता विसाहा अनुराहा जेट्ठा' इति, तत्राष्टसङ्ख्यानुरोधेनैकस्यैव प्रमर्दयोगस्य विवक्षितत्वेन ज्येष्ठापि सङ्गृहीता ।

यत्तु लोकश्रीटीकाकृता उभययोगीतिपदं व्याख्यानयता एतानि नक्षत्राण्युभययोगीनि चन्द्रस्योत्तरेण दक्षिणेन च युज्यन्ते कदाचित्प्रमेदमपि उपयान्तीति, तच्च वक्ष्यमाणज्येष्ठासूत्रेण सह विरोधीति न प्रमाणं, तथा तत्र ये ते नक्षत्रे सदा चन्द्रस्य दक्षिणतोऽपि प्रमर्दमपि च योगं योजयतस्ते द्वे आषाढे–पूर्वाषाढोत्तराषाढारूपे, ते हि प्रत्येकं चतुस्तारे, तत्र द्वे द्वे तारे सर्वबाह्यस्य पञ्चदशस्य मण्डलस्याभ्यन्तरतो द्वे द्वे बहिः, तयो ये द्वे द्वे तारे अभ्यन्तरतस्तयोर्मध्येन चन्द्रो गच्छति इति तदपेक्षया प्रमर्दं योगं युक्त इत्युच्यते, ये तु द्वे द्वे तारे बहिस्ते चन्द्रस्य पञ्चदशेऽपि मण्डले चारं चरतः सदा दक्षिणदिग्व्यवस्थिते ततस्तदपेक्षया दक्षिणेन योगं युक्त इत्युक्तं, अनेन चाषाढाद्वयमपि प्रमर्दयोगिनक्षत्रगणमध्ये कथं नोक्तमिति वदतो निरासः, अनयोर्दक्षिणदिग्योग-विशिष्टप्रमर्दयोगस्य सम्भवादिति, सम्प्रत्येतयोरेव प्रमर्दयोगभावनार्थं किञ्चिदाह– ते च नक्षत्रे सदा सर्वबाह्ये मण्डले व्यवस्थिते चन्द्रेण सह सह योगमयुक्तां युक्तो योक्ष्यते इति, तथा यतन्नक्षत्रं यत् सदा चन्द्रस्य प्रमर्द–प्रमर्दरूपं योगं युनक्ति एका सा ज्येष्ठा । अथ देवता द्वारमाह–

**मू. (३०६)** *एतेसि णं भंते ! अट्ठावीसाए नक्खत्ताणं अभिई नक्खत्ते किंदेवयाए पन्नत्ते गो० ! बम्हदेवया पन्नत्ते, सवणे नक्खत्ते विण्हुदेवयाए पन्नत्ते, धणिट्ठा वसुदेवया प० ।*

*एए णं कमेणं नेअव्वा अणुपरिवाडी इमाओ देवयाओ–बम्हा विण्हु वसू वरुणे अय अभिवद्धी पूसे आसे जमे अग्गी पयावई सोमे रुद्दे अदिती बहस्सई सप्पे पिउ भगे अज्जम सविआ तट्ठा वा इंदग्गी मित्तो इंदे निरई आउ विस्सा य, एवं नक्खत्ताणं एआ परिवाडी नेअव्वा जाव उत्तरासाढा किंदेवया पन्नत्ता ?, गोअमा ! विस्सदेवया पन्नत्ता ।*

**वृ.** 'एतेसि ण'मित्यादि, एतेषामष्टाविंशतेर्नक्षत्राणां मध्ये भदन्त ! अभिजिन्नक्षत्रं को देवताऽस्येति किंदेवताकं प्रज्ञप्तम् ?, अत्र बहुव्रीहौ कः प्रत्ययः, देवता चात्र स्वामी अधिप इतियावत् यत् तुष्टया नक्षत्रं तुष्टं भवति अतुष्टया चातुष्टं, एवमग्रेऽपि ज्ञेयं, ननु नक्षत्राण्येव देवरूपाणि तर्हि किं तेषु देवानामाधिपत्यं ?, उच्यते, पूर्वभवार्जिततपस्तारतम्येन तत्फलस्यापि तारतम्यदर्शनात्, मनुष्येष्विव देवेष्वपि सेव्यसेवकभावस्य स्पष्टमुपलभ्यमानत्वात्, यदाह–"सक्कस्स देविंदस्स देवरन्नो सोमस्स महारन्नो इमे देवा आणाउववायवयणनिद्देसे चिट्ठंति, तंजहा–

सोमकाइआ सोमदेवकाइआ विज्जुकुमारा विज्जुकुमारीओ अग्गिकुमारा अग्गिकुमारीओ वाउकुमारा वाउकुमारीओ चंदा सूरा गहा नक्खत्ता तारारूवा जे आवण्णे तहप्पगारा सव्वे ते तब्भत्तिआ तब्भारिआ सक्कस्स देविंदस्स देवरन्नो सोमस्स महारन्नो आणावयणणिद्देसे चिट्ठंती" ति, भगवानाह– गौतम ! ब्रह्मदेवताकं प्रज्ञप्तम्, अत्राशयज्ञो गुरु सूत्रेऽदृश्यमनत्वात् गूढान्यपि शिष्यप्रश्नानि निर्वचनसूत्रेणैव समाधत्ते, श्रवणं नक्षत्रं विष्णुदेवताकं प्रज्ञप्तं, धनिष्ठा वसुदेवता प्रज्ञप्ता, एतेनोक्तवक्ष्यमाणेन क्रमेण नेतव्या–पाठं प्रापणीया भणितव्या इत्यर्थः अनुपरि-पाटि–अभिजिदादिनक्षत्रपरिपाट्यनुसारेण देवतानाम्नामावलिका ।

इमाश्च देवतास्ताः—ब्रह्मा १ विष्णुः २ वसुः ३ वरुणः ४ अजः ५ अभिवृद्धि ६ अन्यत्राहिर्बुध्न इति, पूषा—पूषनामको देवो न तु सूर्यपर्यायस्तेन रेवत्येव पौष्णमिति प्रसिद्धं, अश्वनामको देवविशेषः ८ यमः ९ अग्नि १० प्रजापतिरिति ब्रह्मनामको देवः, अयं च ब्रह्मणः पर्यायान् सहते, तेन ब्राह्मयमित्यादि प्रसिद्धम् ११ सोमः—चन्द्रस्तेन सौम्यं चान्द्रमित्यादि प्रसिद्धम् १२ रुद्रः—शिवस्तेन रौद्री कालिनीति प्रसिद्धं १३ अदिति देवविशेषः १४ बृहस्पति प्रसिद्धः १५ सर्प्पः १६ पितृनामा १७ भगनामा देवविशेषः १८ अर्यमा—अर्यमनामको देवविशेषः १९ सविता—सूर्य २० त्वष्टात्वष्टनामको देवस्तेन त्वाष्ट्री चित्रा इति प्रसिद्धं २१ वायुः २२ इन्द्राग्नी २३ तेन विशाखा द्विदैवतमिति प्रसिद्धं, मित्रो—मित्रनामको देवः २४ इन्द्रः २५ नैऋतः—राक्षसस्तेन मूलः आस्रप इति प्रसिद्धं २६ आपो—जलनामा देवस्तेन पूर्वाषाढा तोयमिति प्रसिद्धं २७ विश्वे देवास्त्रयोदश २८ । सूत्रालापकान्तस्थितश्चकारः समुच्चये, एवमभिजितसूत्रदर्शितप्रश्नोत्तररीत्या नक्षत्राणां देवा इत्यधिकारतो गम्यम् । एतया—ब्रह्मविष्णुवरुणादिरूपया परिपाट्या न तु परतीर्थिक-प्रयुक्तअश्वयमदहनकमलजादिरूपया नेतव्या—परिसमाप्तिं प्रापणीया यावदुत्तराषाढा किंदेवता प्रज्ञप्ता ?, गौतम ! विश्वदेवता प्रज्ञप्तेति ।

*मू. (३०७) एतेसि णं भंते ! अट्ठावीसाए नक्खत्ताणं अभिईणक्खत्ते कतितारे प० ?, गोअमा ! तितारे पं०, एवं नेअव्वा जस्स जइआओ ताराओ, इमं च तं तारग्गं—*

वृ. अथ तारासङ्ख्याद्वारमाह— 'एतेसि ण'मित्यादि, एतेषां भदन्त ! अष्टाविंशतेर्नक्षत्राणां मध्येऽभिजिन्नक्षत्रं कति तारा अस्येति कतितारं प्रज्ञप्तम् ?, भगवानाह—गौतम ! तिस्रस्तारा अस्येति त्रितारं प्रज्ञप्तम्, ताराश्चात्र ज्योतिष्कविमानानि, अधिकारान्नक्षत्रजातीयज्योतिष्काणां विमानानीत्यर्थः, न तु पञ्चमजातीयज्योतिष्कास्तारकाः, नहि तासां द्वित्रादिविमानैरेकं नक्षत्रमिति व्यवहारः सम्यक्, अन्यजातीयेन समुदायेनान्यजातीयः समुदायीति विरोधात् ।

विरोधश्चात्र नक्षत्राणां विमानानि महान्ति तारकाणां च विमानानि लघूनि, तथा जंबूद्वीपे एकशशिनस्तारकाणां कोटाकोटीनां षट्षष्टि सहस्राणि नव शतानि पञ्चसप्ततिश्चेति या सङ्ख्या साऽप्यतिशयीत नक्षत्रसङ्ख्या चाष्टविंशतिरूपा मूलत एव समुच्छिद्येत, ननु तर्हि एतेषां विमानानां केऽधिपाः ?, उच्यते, अभिजिदादिर्नक्षत्र एव, यथा कश्चित् महर्द्धिको गृहद्वयादिपतिर्भवति, एवमभिजिन्नक्षत्रन्यायेन नेतव्या यस्य नक्षत्रस्य यावत्यस्तारा, इदं च तत्ताराग्रं—

*मू. (३०८) तिगतिगपंचगसयदुग दुगबत्तीसगतिगं तह तिगं च ।*
*छप्पंचगतिगएक्कगपंचगतिग छक्कगं चेव ॥*

*मू. (३०९) सत्तगदुगदुग पंचग एक्केक्कग पंच चउतिगं चेव ।*
*एक्कारसग चउक्कं चउक्कगं चेव तारग्गं ॥ इति ।*

वृ. तारासङ्ख्यापरिमाणं, यथा त्रिकमभिजितः १ त्रिकं श्रवणस्य २ पञ्चकं धनिष्ठायाः ३ शतं शतभिषजः ४ द्विकं पूर्वभद्रपदायाः ५ द्विकमुत्तरभद्रपदायाः ६ द्वात्रिंशद्रेवत्यः ७ त्रिकम-श्विन्याः ८ तथा त्रिकं भरण्याः ९, चः समुच्चये, षट् कृत्तिकायाः १० पञ्चकं रोहिण्याः ११ त्रिकं मृगशिरसः १२ एककं आर्द्रायाः १३ पञ्चकं पुनर्वस्वोः, यदन्यत्र चतुष्कमाहुस्तन्मतान्तरं १४ त्रिकं पुष्यस्य १५ षट्कमश्लेषायाः १६ चैवेति समुच्चये सप्तकं मघायाः १७ द्विकं पूर्वफाल्गुन्याः

१८ द्विकमुत्तरफाल्गुन्याः १९ पञ्चकं हस्तस्य २० एकश्चित्रायाः २१ एककः स्वातेः २२ पञ्च विशाखायाः २३ चत्वारः अनुराधायाः २४ त्रिकं ज्येष्ठायाः २५ चैवशब्दः पूर्ववत् एकादशकं मूलस्य २६ चतुष्कं पूर्वाषाढायाः २७ चतुष्कमुत्तराषाढायाः २८ चैवेति तथैव ताराग्रमिति ।

तारासङ्ख्याकथनप्रयोजनं च यन्नक्षत्रं यावत्तारासंख्यापरिमाणकं भवति तत्संख्याकां तिथिं शुभकार्ये वर्जयेत्, शतभिषग्रेवत्योस्तु क्रमेण शतस्य द्वात्रिंशतश्च तिथिभिर्भागे हृते यदवशिष्टं तत्प्रमाणा तिथिर्वर्जनीयेति । अथ गोत्रद्वारम्–इहनक्षत्राणां स्वरूपतो न गोत्रसम्भवः, यत इदं गोत्रस्य स्वरूपं लोके प्रसिद्धिमुपागमत्–प्रकाशकाद्यपुरुषाभिधानस्तदपत्यसन्तानो गोत्रं, यथा गर्गस्यापत्यसन्तानो गर्गाभिधानो गोत्रमिति, न चैवंस्वरूपं नक्षत्राणां गोत्रं सम्भवति, तेषामौपपातिकत्वात्, तत इत्थं गोत्रसम्भवो द्रष्टव्यो–यस्मिन्नक्षत्रे शुभैरशुभैर्वा ग्रहैः समानं यस्य गोत्रस्य यथाक्रमं शुभमशुभं वा भवति तत्तस्य गोत्रं, ततः प्रश्नोपपत्ति, तत्सूत्रम्–

**मू. (३१०)** *एतेसि णं भंते ! अट्ठावीसाए नक्खत्ताणं अभिई नक्खत्ते किंगोत्ते पं० ?, गो० ! मोग्गलायणसगोत्ते, गाथा–*

**वृ.** 'एतेसि ण'मित्यादि, एतेषामष्टाविंशतेर्नक्षत्राणां मध्ये भदन्त ! अभिजिन्नक्षत्रं किंगोत्रं प्रज्ञप्तम् ?, गौतम ! मोद्गल्यायनैः–मौद्गल्यगोत्रैः सगोत्रं–समानगोत्रं मौद्गल्यायनगोत्र-मित्यर्थः–, एवमग्रेऽपि ज्ञेयं, अथाऽभिजितः प्रारभ्य लाघवार्थमत्र गाथा इति, ताश्चेमाः–

**मू. (३११)** *मोग्गल्लायण १ संखायणे २ अ तह अग्गभाव ३ कण्णिल्ले ४ ।*
*तत्तो अ जाउकण्णे ५ धनंजए ६ चेव बोद्धव्वे ॥*

**मू. (३१२)** *पुस्सायणे ७ अ अस्सायणे अ ८ भग्गवेसे ९ अ अग्गिवेसे १० अ ।*
*गोअम ११ भारद्दाए १२ लोहिच्चे १३ चेव वासिट्ठे १४ ॥*

**मू. (३१३)** *ओमज्जायण १५ मंडव्वायणे १६ अ पिंगायणे १७ अ गोवल्ले १८ ।*
*कासव १९ कोसिय २० दब्भा २१ य चामरच्छाय २२ सुंगा य २३ ॥*

**मू. (३१४)** *गोवल्लायण २४ तेगिच्छायणे २५ अ कच्चायणे २६ हवइ मूले ।*
*ततो वज्झिआयण २७ वग्घावच्चे अ गोत्ताइं २८ ॥*

**वृ.** 'मोग्गलायण'मित्यादि, मौद्गल्यायनं १ साङ्ख्यायनं २ तथा अग्रभावं ३ 'कण्णि-ल्ल'मित्यत्र पदैकदेशे पदसमुदायोपचारात् कण्णिलायनमिति गाह्यं ४, ततश्च जातुकर्णं ५ धनञ्जयं ६ चैवशब्दः समुच्चये बोद्धव्यम् पुष्यायनं ७ चः समुच्चये आश्वायनं च ८ भार्गवेशं च ९ अग्निवेश्यं च १० गौतमं ११ भारद्वाजं १२ लौहित्यं चैवेति अत्रापि पूर्ववदुपचारे लौहित्यायनं १३ वासिष्टं १४ अवमज्जायनं १५ माण्डव्यायनं च १६ पिङ्गायनं च १७ गोवल्लमित्यत्रापि पदैकदेशे पदसमुदाया-पचारात् गोवल्लायनं १८ काश्यपं १९ कौशिकं २० दार्भायनं २१ चामरच्छायनं २२ शुङ्गायनं २३ त्रिष्वेषु णकारलोपः प्राकृतशैलीप्रभवः गोलव्यायनं २४ चिकित्सायनं २५ कात्यायनं भवति मूले २६ ततश्च वज्झियायणनामकं बाभ्रव्यायनं २७ व्याघ्रापत्य २८ चेति गोत्राणि ।

**मू. (३१५)** *एतेसि णं भंते ! अट्ठावीसाए नक्खत्ताणं अभिईनक्खत्ते किंसंठिए पन्नत्ते गोअमा ! गोसीसावलिसंठिए पं०, गाहा–*

वृ. अथ संस्थानद्वारम्–'एतेसि णं'मित्यादि, एतेषां भदन्त ! अष्टाविंशतेर्नक्षत्राणां अभिजिन्नक्षत्रं कस्येव संस्थितं–संस्थानं यस्य तत्तथा, प्रज्ञप्तम् ?, गौतम ! –

*मू. (३१६) गोसीसावलि १ काहार २ सउणि ३ पुप्फोवयार ४ वावी य ५–६ ।*
*नावा ७ आसक्खंधग ८ भग ९ छुरघरए १० अ सगडुद्धी ११ ॥*

*मू. (३१७) मिगसीसावलि १२ रुहिरबिंदु १३ तुल १४ वद्धमाणग १५ पडागा १६ ।*
*पागारे १७ पलिअंके १८ १८ हत्थे २१० मुहफुल्लए २१ चेव ॥*

*मू. (३१८) खीली लग २२ दामणि २३ एगावली २४ अ गयदंत २५ विच्छुअसले य २६ ।*
*गयविक्कमे २७ अ तत्तो सीहनिसीही य २८ संठाणा ॥*

वृ. गोशीर्षं तस्यावली–तत्पुद्गलानां दीर्घरूपा श्रेणिस्तत्समसंस्थानं प्रज्ञप्तम्, एवं शेषनक्षत्रसंस्थानानि ज्ञेयानि, तानीमानि–अभिजितो गोशीर्षावलिसंस्थानं श्रवणस्य कासारसंस्थानं धनिष्ठायाः शकुनिपञ्जरसंस्थानं शतभिषजः पुष्पोपचारसंस्थानं पूर्वभद्रपदायाः अर्द्धवापीसंस्थानं उत्तरभद्रपदाया अप्यर्द्धवापीसंस्थानं एतदर्द्धवापीद्वयमीलनेन परिपूर्णा वापी भवति तेन सूत्रे वापीत्युक्तं, अतः संस्थानानां न संख्यान्यूनता विचारणीया, रेवत्या नौसंस्थानं, अश्विन्याः अश्वस्कन्धसंस्थानं, भरण्याः भगसंस्थानं, कृत्तिकायाः क्षुराधारसंस्थानं, रोहिण्याः शकटोद्धिसंस्थानं, मृगशिरसः मृगशीर्षसंस्थानं, आर्द्राया रुधिरबिन्दुसंस्थानं, पुनर्वस्वोः तुलासंस्थानं, पुष्यस्य सुप्रतिष्ठितवर्द्धमानकसंस्थानं, अश्लेषायाः पताकासंस्थानं, मघायाः प्राकारसंस्थानं, पूर्वफल्गुन्या अर्द्धपल्यङ्कसंस्थानं उत्तरफल्गुन्या अप्यर्द्धपल्यङ्कसंस्थानं, अत्रापि अर्द्धपल्यङ्कद्वयमीलनेन परिपूर्णं पल्यङ्कं भवति तेन संख्यान्यूनता न, हस्तस्य हस्तसंस्थानं, चित्रायाः मुखमण्डनसुवर्णपुष्पसंस्थानं, स्वातेः कीलकसंस्थानं, विशाखायाः दामनिः–प शुरज्जुसंस्थानं, अनुराधाया एकावलिसंस्थानं, ज्येष्ठायाः गजदन्तसंस्थानं मूलस्य वृश्चिकलांगूल- संस्थानं, पूर्वाषाढायाः गजविक्रमसंस्थानं, उत्तराषाढायाः सिंहनिषीदनसंस्थानं इति संस्थानानि । अथ चन्द्रवियोगद्वारम्–

*मू. (३१९) एतेसि णं भंते ! अट्ठावीसाए नक्खत्ताणं अभिईनक्खत्ते कतिमुहुत्ते चंदेण सद्धिं जोगं जोएइ ?, गोअमा ! नव मुहुत्ते सत्तावीसं च सत्तट्ठिभाए मुहुत्तस्स चंदेण सद्धिं जोगं जोएइ, एवं इमाहिं गाहाहिं अनुगंतव्वं–*

वृ. 'एतेसि णं'मित्यादि, एतेषां च भदन्त ! अष्टाविंशतेर्नक्षत्राणां मध्ये अभिजिन्नक्षत्रं कति मुहूर्त्तान् चन्द्रेण सार्द्धं योगं योजयति ?, सम्बन्धं करोतीत्यर्थः, गौ० नव मुहूर्त्तान् एकस्य च मुहूर्त्तस्य सप्तविंशतिं सप्तषष्टिभागान् चन्द्रेण सार्द्धं योगं योजयति, कथमेतदवसीयते ?

*मू. (३२०) अभिइस्स चंदजोगो सत्तट्ठिखंडिओ अहोरत्तो ।*
*ते हुंति नव मुहुत्ता सत्तावीसं कलाओ अ ॥*

वृ. इहाभिजिन्नक्षत्रं सप्तषष्टिखण्डीकृतस्याहोरात्रस्यैकविंशतिभागान् चन्द्रेण सह योगमुपैति, ते च एकविंशतिरपि भागा मुहूर्त्तगतभागकरणार्थं अहोरात्रे त्रिंशन्मुहूर्त्ता इति त्रिंशता गुण्यन्ते जातानि षट् शतानि त्रिंशदधिकानि एषां सप्तषष्ट्या भागे हृते लब्धा नव मुहूर्त्ता एकस्य मुहूर्त्तस्य सप्तविंशतिं सप्तषष्टिभागा अयं च सर्वजघन्यः चन्द्रस्य नक्षत्रयोगकालः, यत्तु श्री अभयदेवसूरिपादैः समवायाङ्गे नवमसमवाय वृत्तौ नव मुहूर्त्तान् चतुर्विंशतिं च द्वाषष्टिभागानेकस्य च द्वाषष्टिभागस्य

सप्तषष्टिधा छिन्नस्य षट्षष्टिभागान् यावदस्य चन्द्रयोग उक्तस्तत्तु पूर्णिमाऽमावास्यापरिसमाप्तिकालभाविनक्षत्रपरिज्ञानोपाये उक्तात् षट्षष्टिर्मुहूर्ताः पञ्च च द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य सप्तषष्टिच्छिन्नस्यैकः सप्तषष्टिभाग इत्येवंरूपाद् ध्रुवराशेर्नक्षत्रशोधनाधिकारे सप्तविंशति सप्तषष्टिभागाः दुःशोधा इति सप्तविंशति सप्तषष्टिभागाः सवर्णनार्थं द्वाषष्ट्या गुण्यन्ते जातं १६७४ एषां सप्तषष्ट्या भागे हृते आगतं $^{२७}/_{६२}$ $^{११}/_{६७}$ ।

'एव'मिति यथाऽभिजित एकविंशतिभागेभ्यः समधिकनवमुहूर्तरूपो योगकाल आनीतस्तथाप्रकारेणेत्यर्थः, इमाभिर्वक्ष्यमाणाभिर्गाथाभिरवगन्तव्यं, चन्द्रयोगकालमानमिति गम्यं, तद्यथा--अभिजितश्चन्द्रयोगः सप्तषष्टिखण्डीकृतोऽहोरात्रः कल्प्यते, ते पूर्वोक्ता एकविंशतिभागाः पूर्वोक्तेन करणेन नव मुहूर्ताः सप्तविंशतिश्च कला भवन्ति तथा शतभिषक् भरणी आर्द्रा आश्लेषा स्वातिः ज्येष्ठा चः समुच्चये एतानि षट् नक्षत्राणि पञ्चदश मुहूर्तान् यावत् चन्द्रेण सह संयोगः--सम्बन्धो येषां तानि तथा, तद्यथा—एतेषां षण्णामपि नक्षत्राणां प्रत्येकं सप्तषष्टिखण्डीकृतस्याहोरात्रस्य सत्कान् सार्द्धांस्त्रयस्त्रिंशद्भागान् यावच्चन्द्रेण सह योगो भवति ततो मुहूर्तगतसप्तषष्टिभागकरणार्थं त्रयस्त्रिंशत् त्रिंशता गुण्यन्ते जातानि नव शतानि नवतानि—नवत्यधिकानि यदपि चार्द्धं तदपि त्रिंशता गुणयित्वा द्विकेन भज्यते लब्धाः पञ्चदश मुहूर्तस्य सप्तषष्टिभागास्ते पूर्वराशौ प्रक्षिप्यन्ते जातः पूर्वराशि सहस्रं पञ्चोत्तरं, अस्य सप्तषष्ट्या भागे हृते लब्धा पञ्चदश मुहूर्ता इति ।

मू. (३२१) *सयभिसया भरणीओ अद्दा अस्सेस साइ जेट्ठा य ।*
*एते छन्नक्खत्ता पन्नरसमुहुत्तसंजोगा ॥*

वृ. तिस्र उत्तराः—उत्तरफल्गुनी उत्तराषाढा उत्तरभद्रपदा इत्येवंरूपाः पुनर्वसू रोहिणी विशाखा, चः समुच्चये, एतानि एवकारस्य भिन्नक्रमत्वादेतान्येवेति योज्यं, सूत्रे पुंस्त्वनिर्देशः प्राकृतत्वात्, षट् नक्षत्राणि पञ्चचत्वारिंशतं मुहूर्तान् यावच्चन्द्रेण सह संयोगो येषां तानि तथा, तद्यथा—अत्रापि षण्णां नक्षत्राणां प्रत्येकं सप्तषष्टिखण्डीकृतस्याहोरात्रस्य सत्कानां भागानां शतमेकमेकस्य च भागस्यार्द्धं चन्द्रेण सह योगस्तत्रैषां भागानां मुहूर्तगतभागकरणार्थं शतं प्रथमतस्त्रिंशता गुण्यते जातानि त्रीणि सहस्राणि पञ्चदशोत्तराणि एतेषां सप्तषष्ट्या भागे हृते लब्धाः पञ्च चत्वारिंशन्मुहूर्ता इति ।

मू. (३२२) *तिन्नेव उत्तराइं पुनव्वसू रोहिणी विसाहा य ।*
*एए छन्नक्खतता पणयालमुहुत्तसंजोगा ॥*

वृ. तथा अवशेषाणि—उक्तातिरिक्तानि नक्षत्राणि श्रवणो धनिष्ठा पूर्वभद्रपदा रेवती अश्विनी कृत्तिका मृगशिरः पुष्यो मघा पूर्वाफाल्गुनी हस्तश्चित्राऽनुरा मूलः पूर्वाषाढा इति पञ्चदशापि भवन्ति त्रिंशन्मुहूर्तानीति—त्रिंशन्मुहूर्तान् यावच्चन्द्रेण सह योगमश्नुवते, तद्यथा-एषां पञ्चदशानां नक्षत्राणां चन्द्रेण सह सम्पूर्णमहोरात्रं यावद्योगस्ततो मुहूर्तगतभागकरणार्थं सप्तषष्टि त्रिंशता गुण्यते जाते द्वे सहस्रे दशोत्तरे एषां च सप्तषष्ट्या भागे हृते लब्धास्त्रिंशन्मुहूर्ता इति, चन्द्रे—चन्द्रविषये एषः—अनन्तरोक्तो योगो नक्षत्राणां ज्ञातव्य इति । 'एतानि चाभिजिद्वर्जानि क्रमेणार्द्धत्रद्व्यर्द्ध-क्षेत्रसमक्षेत्रसंज्ञकानि सिद्धान्ते रूढानि, एषां किल चिरन्तनज्योतिशास्त्रेष्वेवं मुक्तिरासीत् ननु

यथाऽधुना सर्वाण्यप्येतानि कुयोगानी''ति श्रीमत्क्षेत्रसमासबृहद्वृत्तिटिप्पनके, एषां चोपयोगः ।

॥ १ ॥　　"दुन्नि उ दिवड्डखित्ते दब्भमया पुत्तला उ कायव्वा ।
समखित्तंमि अ इक्को अवड्डखित्ते न कायव्वो ॥

इत्यादि उक्तश्चन्द्रयोगः, अथ रवियोगः—

मू. (३२३)　　*अवसेसा नक्खत्ता पन्नरसवि हुंति तीसइमुहुत्ता ।*
*चंदंमि एस जोगो नक्खत्ताणं मुणेअव्वो ॥*

वृ. 'एतेसि णं भंते !' इत्यादि, एतेषां भदन्त ! अष्टाविंशतेर्नक्षत्राणां मध्ये अभिजिन्नक्षत्रं कति अहोरात्रान् सूर्येण सार्द्धं योगं योजयति ?, गौतम ! चतुरोऽहोरात्रान् षट् च मुहूर्तान् सूर्येण सार्द्धं योगं योजयति, कथमिति चेत्, उच्यते, यन्नक्षत्रमहोरात्रस्य यावतः सप्तषष्टिभागान् चन्द्रेण सह समवतिष्ठते तन्नक्षत्रं तावतः एकविंशत्यादीनित्यर्थः पञ्चभागान्—रात्रिन्दिवस्य पञ्चमांशरूपान्, तैः पञ्चभिरेकं रात्रिन्दिवं भवतीत्यर्थः, सूर्येण समं व्रजति, इदमत्र हृदयं—यस्य नक्षत्रस्य यावंतः सप्तषष्टिभागाश्चन्द्रयोगयोग्यास्ते पञ्चभिर्भज्यन्ते, लब्धं तत्पञ्चमभागात्मकमहोरात्रं, शेषं त्रिंशता गुणयित्वा पञ्चभिर्भज्यते लब्धं मुहूर्ताः, उक्तं च—

॥ १ ॥　　"जं रिक्खं जावइए वच्चइ चन्देण भागसत्तट्ठी ।
तं पणभागे राइंदिअस्स सूरेण तावइए ॥" त्ति ।

मू. (३२४) *एतेसि णं भंते ! अट्ठावीसाए नक्खत्ताणं अभिईनक्खत्ते कति अहोरत्ते सूरेण सद्धिं जोगं जोएइ ?, गो० ! चत्तारि अहोरत्ते छच्च मुहुत्ते० एवं इमाहिं गाहाहिं नेअव्वं—*

मू. (३२५)　　*अभिई छच्च मुहुत्ते चत्तारि अ केवले अहोरत्ते ।*
*सूरेण समं गच्छइ एत्तो सेसाण वोच्छामि ॥*

वृ. तद्यथा—अभिजिन्नक्षत्रमेकविंशतिं सप्तषष्टिभागान् चन्द्रेण समं वर्तते ततः एतावतः पञ्चभागान् अहोरात्रस्य सूर्येण समं वर्तनमवसेयम्, एकविंशतेश्च पञ्चभिर्भागे हृते लब्धाः षट् मुहूर्ता इति, एवमभिजिन्न्यायेन शेषनक्षत्राणां सूर्ययोगकालप्ररूपणं इमाभिर्वक्ष्यमाणाभिर्गाथाभिर्नेतव्यं, तत्राभिजिन्नक्षत्रं षण्मुहूर्त्तान् चतुरश्च केवलान्—परिपूर्णान् अहोरात्रान् सूर्येण समं गच्छति, अत्रोपपत्तिः प्रथमत एव कृता, अथ ऊर्ध्वं शेषाणां नक्षत्राणां सूर्येण समं योगान् कालपरिमाणमधिकृत्येति गम्यं वक्ष्यामि ।

मू. (३२६)　　*सयभिसया भरणीओ अद्दा अस्सेस साइ जेट्ठा य ।*
*वच्चंति मुहुत्ते इक्कवीस छच्चेवऽहोरत्ते ॥*

वृ. तथाहि—शतभिषक् भरणी आर्द्रा अश्लेषा स्वाति ज्येष्ठा चेत्येतानि षट् नक्षत्राणि प्रत्येकं सूर्येण समं व्रजन्ति मुहूर्तानेकविंशतिं षट् चाहोरात्रानिति, तद्यथा—एतानि नक्षत्राणि चन्द्रेण समं सार्द्धान् त्रयस्त्रिंशत् संख्यान् सप्तषष्टिभागान् व्रजन्ति, तत एतावतः पञ्चभागान् अहोरात्रस्य सूर्येण समं व्रजन्तीति प्रत्येकं प्रागुक्तकरणप्रामाण्यात् त्रयस्त्रिंशतश्च पञ्चभिर्भागे लब्धाः षट् अहोरात्राः शेषाः परिपूर्णमुहूर्तानयनाय दशभिर्भागो ह्रियते लब्धा एकविंशतिर्मुहूर्ताः ।

मू. (३२७)　　*तिन्नेव उत्तराइं पुनव्वसू रोहिणी विसाहा य ।*
*वच्चंति मुहुत्ते तिन्नि चेव वीसं अहोरत्ते ॥*

वृ. तथा तिस्र उत्तराः—उत्तरभद्रपदा उत्तरफाल्गुनी उत्तराषाढा इत्येवंरूपाः पुनर्वसू रोहिणी विशाखा च एतानि षट् नक्षत्राणि सूर्येण समं व्रजन्ति मुहूर्त्तान् त्रीण्येव विंशतिं चाहोरात्रानिति, तद्यथा—एतानि षट् नक्षत्राणि चन्द्रेण समं सप्तषष्टिभागानां शतमेकमेकस्य च भागस्यार्द्धमेकं प्रत्येकं व्रजन्ति, ततः एतावतः पञ्चभागानहोरात्रस्य सूर्येण समं व्रजनमवगन्तव्यम्, तेन शतस्यपञ्चभिर्भागे हृते लब्धा विंशतिरहोरात्राः, यदर्द्धं तत् त्रिंशता गुण्यते जातास्त्रिंशत् तस्या दशभिर्भागे हृते लब्धास्त्रयो मुहूर्ता इति ।

मू. (३२८) *अवसेसा नक्खत्ता पन्नरसवि सूरसहगया जंति ।*
*बारस चेव मुहुत्ते तेरस य समे अहोरत्ते ॥*

वृ. तथा अवशेषाणि—श्रवणधनिष्ठापूर्वभद्रपदारेवत्यश्विनीकृत्तिकामृगशिरःपुष्य-मघापूर्वफल्गुनीहस्तचित्राअनुराधामूलपूर्वाषाढारूपाणि नक्षत्राणि पञ्चदशापि सूर्येण सहगतानि-यान्ति द्वादशैव मुहूर्त्तान् त्रयोदश च समान्—परिपूर्णाहोरात्रानिति, तद्यथा—एतानि परिपूर्णान् सप्तषष्टिभागान् चन्द्रेण समं व्रजन्ति, ततः सूर्येण सह तानि पञ्चभागान् अहोरात्रस्य सप्तषष्टिसंख्यान् गच्छंति, सप्तषष्ट्श्च पञ्चभिर्भागे हृते लब्धास्त्रयोदश अहोरात्राः शेषौ द्वौ भागौ तौ त्रिंशता गुण्येते जाता षष्टिः तस्याः पञ्चभिर्भागे हृते लब्धा द्वादश मुहूर्ता इति, अत्र चप्रसङ्गसङ्गत्या सूर्ययोगदर्शन-तश्चन्द्रयोगपरिमाणं यथा जायते तथा दर्श्यते ज्योतिष्करण्डोक्तं—

॥ १ ॥ 'नक्खत्तसूरजोगो मुहुत्तरासीकओ अ पञ्चगुणा ।
सत्तट्ठीएविभत्तो लद्धो चन्दस्स सो जोगो ॥

नक्षत्राणां अर्द्धक्षेत्रादीनां यः सूर्येण सह योगः स मुहूर्तराशीक्रियते कृत्वा च पञ्चभिर्गुण्यते ततः सप्तषष्ट्या भागे हृते सति यल्लब्धं स चन्द्रस्य योगः, इयमत्र भावना—कोऽपि शिष्यः पृच्छति, यत्र सूर्य षट् दिवसान् एकविंशतिं च मुहूर्त्तान् अवतिष्ठते तत्र चन्द्रः कियन्तं कालं तिष्ठतीति, तत्र मुहूर्तराशिकरणार्थं षट् दिवसास्त्रिंशता गुण्यन्ते गुणयित्वा चोपरितना एकविंशतिर्मुहूर्ता प्रक्षिप्यन्ते जाते द्वे शते एकोत्तरे, ते पञ्चभिर्गुण्यन्ते, जातं पञ्चोत्तरं सहस्रं, तस्य सप्तषष्ट्या भागे हृते लब्धाः पञ्चदश मुहूर्ताः, एतावानर्द्धक्षेत्राणां प्रत्येकं चन्द्रेण समं योगः ।

एवं समक्षेत्राणां द्व्यर्द्धक्षेत्राणामभिजितश्च चन्द्रेण समं योगो ज्ञेय इति । अथ कुलद्वारम्—

मू. (३२९) *कति णं भंते ! कुला कति उवकुला कति कुलोवकुला पन्नत्ता ?, गो० ! बारस कुला बारस उवकुला चत्तारि कुलोवकुला पन्नत्ता, बारस कुला, तंजहा—धनिट्ठाकुलं १ उत्तरभद्दवयाकुलं २ अस्सिणीकुलं ३ कत्तियाकुलं ४ मिगसिरकुलं ५ पुस्सो कुलं ६ मघाकुलं ७ उत्तरफग्गुणीकुलं ८ चित्ताकुलं ९ विसाहाकुलं १० मूलो कुलं ११ उत्तरासाढाकुलं १२ ।*

वृ. 'कति णं भंते ! कुला' इत्यादि, कति भदन्त ! कुलानि—कुलसंज्ञकानि नक्षत्राणि तथा कति उपकुलानि तथा कति कुलोपकुलानि प्रज्ञप्तानि ?, सूत्रे पुंस्त्वनिर्देशः प्राकृतत्वात्, भगवानाह—गौतम ! द्वादश कुलानि द्वादश उपकुलानि चत्वारि कुलोपकुलानि प्रज्ञप्तानि, तत्र द्वादश कुलानि, तद्यथा—धनिष्ठा कुलं उत्तरभद्रपदा कुलं अश्विनी कुलं कृत्तिका कुलं मृगशिरः कुलं पुष्यः कुलं मघा कुलं उत्तरफल्गुनी कुलं चित्रा कुलं विशाखा कुलं मूलः कुलं उत्तराषाढा कुलं, अथ किं कुलादीनां लक्षणं ?, उच्यते—

मू. (३३०) *मासाणं परिणामा होंति कुला उवकुला उ हेट्ठिमगा।*
*होंति पुण कुलोवकुला अभीभिसय अद्द अनुराहा ॥*

वृ. मासानां परिणामानि–परिसमापकानि भवन्ति कुलानि, कोऽर्थः ? – इह यैर्नक्षत्रैः प्रायो मासानां परिसमाप्तय उपजायन्ते माससदृशनामानि च तानि नक्षत्राणि कुलानीति प्रसिद्धानि, तद्यथा–श्राविष्ठो मासः प्रायः श्रविष्ठया धनिष्ठापरपर्यायया परिसमाप्तिमुपैति भाद्रपदः उत्तरभद्रपदया अश्वयुक् अश्विन्या इति, श्रविष्ठादीनि प्रायो मासपरिसमापकानि माससदृशनामानि, प्रायोग्रहणादुपकुलादिभिरपि नक्षत्रैर्मासपरिसमाप्तिर्जायते इत्यसूर्थः ।

मू. (३३१) *बारस उवकुला तं०–सवणो उवकुलं १ पुव्वभद्दवया उवकुलं रेवई उवकुलं भरणीउवकुलं रोहीणीउवकुलं पुन्नव्वसू उवकुलं उवकुलं अस्सेसा पुव्वफग्गुणी उवकुलं हत्थो उवकुलं साई उवकुलं जेट्ठा उवकुलं पुव्वासाढा उवकुलं । चत्तारि कुलोवकुला, तंजहा–अभिई कुलोवकुला सयभिसया कुलोवकुला अद्दा कुलोवकुला अनुराहा कुलोवकुला ।*

*कति णं भंते ! पुण्णिमाओ कति अमावासाओ पन्नत्ताओ ?, गोअमा ! बारस पुण्णिमाओ बारस अमावासाओ पं०, तं०–साविट्ठी पोट्ठवई आसोई कत्तिगी मग्गसिरी पोसी माही फग्गुणी चेत्ती वइसाही जेट्ठा मूली आसाढी, साविट्ठिण्णिं भंते ! पुण्णिमासिं कति नक्खत्ता जोगं जोएंति गो० ! तिन्नि नक्खत्ता जोगं जोएंति, तं०–अभीई सवणो धनिट्ठा ३ । पोट्ठवईणि भंते ! पुण्णिमं कइ नक्खत्ता जोगं जोएंति ?, गो० ! तिन्नि नक्खत्ता जोएंति, तं०–सयभिसया पुव्वभद्दवया उत्तरभद्दवया, अस्सोइण्णि भंते ! पुण्णिमं कति नक्खत्ता जोगं जोएंति ?, गो० ! दो जोएंति तं०–रेवई अस्सिणी अ, कत्तइण्णं दो–भरणी कत्तिआ य, मग्गसिरिन्नं दो–रोहिणी मग्गसिरं च, पोसिं तिन्नि–अद्दा पुणव्वसू पुस्सो, माघिण्णं दो–अस्सेसा मघा य, फग्गुणिं णं दो–पुव्वाफग्गुणी य उत्तराफग्गुणी य, चेत्तिण्णं दो–हत्थो चित्ता य, विसाहिण्णं दो–साई विसाहा य, जेट्ठामूलिण्णं तिन्नि–अणुराहा जेट्ठा मूलो, आसाढिण्णं दो–पुव्वासाढा उत्तरासाढा ।*

*साविट्ठिण्णं भंते ! पुण्णिमं किं कुलं जोएइ उवकुलं जोएइ कुलोवकुलं जोएइ ?, गो० ! कुलं वा जोएइ उवकुलं वा जोएइ कुलोवकुलं वा जोएइ, कुलं जोएमाणे धनिट्ठा नक्खत्ते जोएइ उवकुलं जोएमाणे सवणे नक्खत्ते जोएइ कुलोवकुलं जोएमाणे अभिई नक्खत्ते जोएइ, साविट्ठीण्णं पुण्णिमासिं णं कुलं वा जोएइ जाव कुलोवकुलं वा जोएइ, कुलेण वा जुत्ता उवकुलेण वा जुत्ता कुलोवकुलेण वा जुत्ता साविट्ठी पुण्णिमा जुत्तति वत्तव्वं सिआ ।*

*पोट्ठवदिण्णं भंते ! पुण्णिमं किं कुलं जोएइ ३ पुच्छा, गो० ! कुलं वा उवकुलं वा कुलोवकुलं वा जोएइ, कुलं जोएमाणे उत्तरभद्दवया नक्खत्ते जोएइ उ० पुव्वभद्दवया० कुलोव० सयभिसया० नक्खत्ते जोएइ, पोट्ठवइण्णं पुण्णिमं कुलं वा जोएइ जाव कुलोवकुलं वा जोएइ कुलेण वा जुत्ता जाव कुलोवकुलेण वा जुत्ता पोट्ठवई पुण्णमासी जुत्तत्तिवत्तव्वं सिया ।*

*अस्सोइण्णं भंते ! पुच्छा, गो० ! कुलं वा जोएइ उवकुलं वा जोएइ नो लब्भइ कुलोवकुलं, कुलं जोएमाणे अस्सिणीनक्खत्ते जोएइ उवकुलं जोएमाणे रेवइनक्खत्ते जोएइ, अस्सोइण्णं पुण्णिमं कुलं वा जोएइ उवकुलं वा जोएइ कुलेण वा जुत्ता उवकुलेण वा जुत्ता अस्सोई पुण्णिमा जुत्तति० कत्तिइण्णं भंते ! पुण्णिमं किं कुलं ३ पुच्छा, गो० ! कुलं वा जोएइ उवकुलं वा जोएइ नो*

*कुलोवकुलं जोएइ, कुलं जोएमाणे कत्तिआनक्खत्ते जोएइ उव- भरणी कत्तिइण्णं जाव वत्तव्वं, मग्गसिरिन्नं भंते ! पुण्णिमं किं कुलं तं चेव दो जोएइ नो भवइ कुलोवकुलं, कुलं जोएमाणे मग्गसिरनक्खत्ते जोएइ उ० रोहिणी मग्गसिरन्नं पुण्णिमं जाव वत्तव्वं सिआ इति।*

*एवं सेसिआओऽवि जाव आसाढिं, पोसिं जेट्ठामूलिं च कुलं वा उ० कुलोवकुलं वा, ससिआणं कुलं वा उवकुलं वा कुलोवकुलं न भण्णइ।*

*साविट्ठिण्णं भंते ! अमावासं कति नक्खत्ता जोएंति ?, गो० ! दो नक्खत्ता जोएंति, तं०-अस्सेसा य महा य, पोट्ठवइण्णं भंते ! अमावासं कति नक्खत्ता जोएंति ? गोअमा ! दो पुव्वाफग्गुणी उत्तराफग्गुणी अ, अस्सोइण्णं भंते ! दो-हत्थे चित्ता य, कत्तिइण्णं दो-साई विसाहा य, मग्गसिरिन्नं तिन्नि-अणुराहा जेट्ठा मूलो अ, पोसिण्णि दो-पुव्वासाढा उत्तरासाढा, माहिण्णं तिन्नि-अभिई सवणो धणिट्ठा, फग्गुणिं तिन्नि-सयभिसया पुव्वभद्दवया उत्तरभद्दवया, चेत्तिण्णं दो-रेवई अस्सिणी अ, वइसाहिण्णं दो-भरणी कत्तिआ य, जेट्ठामूलिण्णं दो-रोहिणी मग्गसिरं च, आसाढिण्णं तिन्नि-अद्दा पुनव्वसू पुस्सो इति।*

*साविट्ठिण्णं भंते ! अमावासं किं कुलं जोएइ उवकुलं जोएइ कुलोवकुलं जोएइ ?, गो० कुलं वा जोइए उवकुलं वा जोएइ नो लब्भइ कुलोवकुलं, कुलं जोएमाणे महानक्खत्ते जोएइ, उवकुलं जोएमाणे अस्सेसानक्खत्ते जोएइ, साविट्ठिण्णं अमावासं कुलं वा जोएइ उवकुलं वा जोएइ, कुलेण वा जुत्ता उवकुलेण वा जुत्ता साविट्ठीअमावासा जुत्तत्तिवत्तव्वं सिआ, पोट्ठवईण्णं भंते ! अमावासं तं चेव दो जोएइ कुलं वा जोएइ उवकुलं०, कुलं जोएमाणे उत्तराफग्गुणीनक्खत्ते जोएइ उव० पुव्वाफग्गुणी, पोट्ठवइण्णं अमावासं जाव वत्तव्वं सिआ, मग्गसिरिन्नं त चेव कुलं मूले नक्खत्ते जोएइ उ० जेट्ठा कुलोवकु० अनुराहा जाव जुत्तत्तिवत्तव्वं सिआ, एवं माहीए फग्गुणीए आसाढीए कुलं वा उवकुलं वा कुलोवकुलं वा, अवसेसिआणं कुलं वा उवकुलं वा जोएइ। जया णं भंते ! साविट्ठी पुण्णिमा भवइ तया णं माही अमावासा भवइ ?,*

*जया णं भंते ! माहीपुण्णिमा भवइ तया णं साविट्ठी अमावासा भवइ ?, हंता ! गो० ! जया णं साविट्ठी तं चेव वत्तव्वं, जया णं भंते ! पोट्ठवई पुण्णिमा भवइ तया णं फग्गुणी अमावासा भवइ जया णं फग्गुणी पुण्णिमा भवइ तया णं पोट्ठवई अमावासा भवइ ?, हंता ! गोअमा ! तं चेव, एवं एतेणं अभिलावेणं इमाओ पुण्णिमाओ अमावासाओ नेअव्वाओ-अस्सिणी पुण्णिमा चेत्ती अमावासा कत्तिगी पुण्णिमा वइसाही अमावासा मग्गसिरी पुण्णिमा जेट्ठामूली अमावासा पोसी पुण्णिमा आसाढी अमावासा।*

**वृ.** कुलानामधस्तनानि नक्षत्राणि श्रवणादीनि उपकुलानि कुलानां समीपमुपकुलं तत्र वर्तन्ते यानि नक्षत्राणि तान्युपचारादुपकुलानीति व्युत्पत्तेः, यानि कुलानामुपकुलानां चाधस्तनानि तानि कुलोपकुलानि, अभिजिदादीनि द्वादशोपकुलानि, तद्यथा-श्रवणः उपकुलं पूर्वभद्रपदा उपकुलं रेवती उपकुलं भरणी उपकुलं रोहिणी उपकुलं पुनर्वसू उपकुलं अश्लेषा उपकुलं पूर्वाफाल्गुनी उपकुलं हस्तः उपकुलं स्वाति उपकुलं ज्येष्ठा उपकुलं पूर्वाषाढा उपकुलं, चत्वारि कुलोपकुलानि तद्यथा-अभिजित् कुलोपकुलं शतभिषक् कुलोपकुलं आर्द्रा कुलोपकुलं अनुराधा कुलोपकुलं, कुलादिसंज्ञाप्रयोजनं तु-

॥ १ ॥ 'पुर्वेषु जाता दातारः, संग्रामे स्थायिनां जयः ।
अन्येषु त्वन्यसेवार्ता, यायिनां च सदा जयः ॥' इत्यादि ।

अथ पूर्णिमामावास्याद्वारम्–'कति णं भंते !' इत्यादि, कति भदन्त ! पूर्णिमाः–परिस्फुटषोडशकलाकचन्द्रोपेतकालविशेषरूपाः, पूर्णेन चन्द्रेण निर्वृत्ता इति व्युत्पत्तेः भावादिमः इतीमप्रत्यये रूपसिद्धिः, कति अमावास्याः–एककालावच्छेदेनैकस्मिन्नक्षत्रे चन्द्रसूर्यावस्थानाधारकालविशेषरूपाः, अमा–सह चन्द्रसूर्यौ वसतोऽस्यामिति व्युत्पत्तेः, औणादिकेऽप्रत्यये स्त्रीलिङ्गे ङीप्रत्यये, प्रज्ञप्ताः, गौ० जातिभेदमधिकृत्य द्वादश पूर्णिमाः द्वादश अमावास्याः प्रज्ञप्ताः

तद्यथा–श्रविष्ठा–धनिष्ठा तस्यां भवा श्राविष्ठी–श्रावणमासभाविनी प्रौष्ठपदा–उत्तरभद्रपदा तस्यां भवा प्रौष्ठपदी–भाद्रपदभाविनी अश्वयुग्–अश्विनी तस्यां भवा आश्वयुजी–आश्विनेयमासभाविनी, एवं कार्तिकी मार्गशीर्षी पौषी माघी फाल्गुनी चैत्री वैशाखी ज्येष्ठामूली आषाढी इति, प्रश्नसूत्रे पूर्णिमामावास्ययोर्भेदेन निर्देशेऽपि उत्तरसूत्रे यदभेदेन निर्देशस्तन्नामैक्यदर्शनार्थं, तेनामावास्या अपि श्राविष्ठी प्रौष्ठपदी आश्वयुजी इत्यादिभिर्व्यपदेश्याः, ननु श्राविष्ठी पूर्णिमा श्रविष्ठायोगाद्भवति, अमावास्या तु श्राविष्ठी न तथा, अस्या अश्लेषामघायोगस्य भणिष्यमाणत्वात्, उच्यते, श्राविष्ठी पूर्णिमा अस्येति श्राविष्ठः–श्रावणमासः तस्येयं श्राविष्ठी श्रावणमासभाविनीत्यर्थः, एवं प्रौष्ठपद्यादिष्वमावास्यासु वाच्यं ।

सम्प्रति यैर्नक्षत्रैरेकैका पौर्णिमासी परिसमाप्यते तानि पिपृच्छिषुराह–श्राविष्ठीं पौर्णमासीं भदन्त ! कति नक्षत्राणि योगं योजयन्ति–योगं कुर्वन्ति !, कति नक्षत्राणि चन्द्रेण सह संयुज्य परिसमापयन्तीत्यर्थः, भग०–गौ० त्रीणि नक्षत्राणि योगं योजयन्त, त्रीणि नक्षत्राणि चन्द्रेण सह संयुज्य परिसमापयन्ति, तद्यथा–अभिजित् श्रवणो धनिष्ठा, इह श्रवणधनिष्ठारूपे द्वे एव नक्षत्रे श्राविष्ठीं पौर्णमासीं परिसमापयतः, पञ्चस्वपि युगभाविनीषु पूर्णिमासु क्वाप्यभिजितः परिसमापकादर्शनात्, केवलमभिजिन्नक्षत्रं श्रवणेन सह सम्बद्धमिति तदपि परिसमापयतीत्युक्तं, किञ्च–सामान्यत इदं श्राविष्ठीसमापकनक्षत्रदर्शनं ज्ञेयं, पञ्चस्वपि श्राविष्ठीषु पूर्णिमासु कां पूर्णिमां किं नक्षत्रं कियत्सु मुहूर्तेषु कियत्सु भागेषु कियत्सु प्रतिभागेषु च गतेषु गम्येषु च परिसमापयतीति सूक्ष्मेक्षिकादर्शनार्थं त्विदं प्रवचनप्रसिद्धं करणं भावनीयं–

॥ १ ॥ 'नाउमिह अमावासं जइ इच्छसि कंमि होइ रिक्खंमि ।
अवहारं ठावेज्जा तत्तिअरूवेहिं संगुणिए ॥'

याममावास्यामिह युगे ज्ञातुमिच्छसि यथा कस्मिन्नक्षत्रे वर्त्तमाना परिसमाप्ता भवतीति, यावद्रूपैर्यावत्यो अमावस्या अतिक्रान्तास्तावत्या सङ्ख्यया इत्यर्थः, वक्ष्यमाणस्वरूपमवधार्यते–प्रथमतया स्थाप्यते इत्यवधार्यो–ध्रुवराशि तमवधार्यराशिं पट्टिकादौ स्थापयित्वा सङ्गुणयेत्, अथ किंप्रमाणोऽसावधार्यराशिरिति तत्प्रमाणनिरूपणार्थमाह–

॥ २ ॥ 'छावट्ठी य मुहुत्ता बिसट्ठिभागा य पंच पडिपुण्णा ।
बासट्ठिभागसत्तट्ठिगो अ एक्को हवइ भागो ॥'

षट्षष्टिर्मुहूर्त्ता एकस्य च मुहूर्त्तस्य पञ्च परिपूर्णा द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य एकः सप्तषष्टितमो भाग इत्येतावत्प्रमाणोऽवधार्यराशिः, कथमेतावत्प्रमाणस्योत्पत्तिरिति चेत्, उच्यते, इह यदि चतुर्विंशत्यधिकेन पर्वशतेन पञ्च सूर्यनक्षत्रपर्यायाः लभ्यन्ते ततो द्वाभ्यां पर्वभ्यां

किं लभामहे ?, अत्रान्त्येन राशिना द्विकलक्षणेन मध्यो राशि पञ्चकलक्षणो गुण्यते जाता दश तेषां च चतुर्विंशत्यधिकेन शतेन भागहरणं, तत्र छेद्यच्छेदक- राश्योर्द्विकेनापवर्त्तना जात उपरितनश्छेद्यो राशि पञ्चकरूपोऽधस्तनो द्वाषष्टिरूपः लब्धाः पञ्च द्वाषष्टिभागाः, एतेन नक्षत्राणि कर्त्तव्यानीति नक्षत्रकरणार्थमष्टादशभिस्त्रिंशदधिकैः शतैः सप्तष- ष्टिभागरूपैः गुण्यन्ते जातानि एकनवति शतानि पञ्चादधिकानि, छेदराशिरपि द्वाषष्टिप्रमाणः सप्तषष्ट्या गुण्यते जातान्येकचत्वारिंशच्छतानि चतुष्पञ्चाशदधिकानि, उपरितनराशिर्मुहूर्त्तानयनाय भूयस्त्रिशता गुण्यते, जाते द्वे लक्षे चतुःसप्ततिसहस्राणि पद्यं शतानि, तेषा चतुष्पंचाशदधिकैकचत्वारिंशच्छतैर्भागहरणं लब्धाः षट्षष्टिर्मुहूर्त्ताः शेषा अंशास्तिष्ठन्ति त्रीणि शतानि षट्त्रिंशदधिकानि ततो द्वाषष्टिभागा- नयनार्थं तानि षष्ट्या गुण्यन्ते जातानि विंशतिसहस्राणि अष्टौ शतानि द्वात्रिंशदधिकानि, तेषामनन्तरोक्तच्छेदराशिना ४१५४ भागो ह्रियते लब्धाः पंच द्वाषष्टिभागाः शेषास्तिष्ठन्ति द्वाषष्टिः ततश्चास्या द्वाषष्ट्या अपवर्त्तना क्रियते जात एकः छेदराशेरपि द्वाषष्ट्याऽपवर्त्तनायां जाता सप्तषष्टिः, तत आगतं षट्षष्टिर्मुहूर्त्ता एकस्य च मुहूर्त्तस्य पंच परिपूर्णा द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य एकः सप्तषष्टिभागं इति तदेवमुक्तमवधार्यराशिप्रमाणं, सम्प्रति शेषविधिमाह—

॥ ३ ॥ 'एअमवहाररासिं इच्छअमावाससंगुणं कुज्जा ।
नक्खत्ताणं इत्तो सोहणगविहिं निसामेह ॥'

एवं—अनन्तरोदितस्वरूपमवधार्यराशिमिच्छामावास्यासंगुणं—याममावास्यां ज्ञातुमिच्छति तत्संगुणितं कुर्यात्, अत ऊर्ध्वं च नक्षत्राणि शोधनीयानि ततोऽत ऊर्ध्वं नक्षत्राणां शोधनकविधिं—शोधनप्रकारं वक्ष्यमाणं निशामयत—आकर्णयत । तत्र प्रथमतः पुनर्वसुशोधनकमाह—

॥ ४ ॥ 'बावीसं च मुहुत्ता छायालीसं बिसट्ठिभागा य ।
एअं पुणव्वसुस्स य सोहेअव्वं हवइ पुण्णं ॥'

द्वाविंशतिर्मुहूर्त्ताः एकस्य च मुहूर्त्तस्य षट्चत्वारिंशद् द्वाषष्टिभागाः एतत्—एतावत्प्रमाणं पुनर्वसुनक्षत्रस्य परिपूर्णं भवति शोद्धव्यं, कथमेवप्रमाणस्य शोधनकस्योत्पत्तिरिति चेत् ?, उच्यते, यदि चतुर्विंशत्यधिकेन पर्वशतेन पञ्च सूर्यनक्षत्रपर्याया लभ्यन्ते तत एकं पर्वातिक्रम्य कति पर्यायास्तेनैकेन पर्वणा लभ्यन्ते ?, अत्रान्त्येन राशिना एककलक्षणेन मध्यराशि पञ्चकरूपो गुण्यते जाताः पञ्चैव, 'एकेन गुणितं तदेव भवती'ति वचनात्, तेषां चतुर्विंशत्यधिकेन शतेन भागो ह्रियते, लब्धाः पञ्च चतुर्विंशत्यधिकशतभागाः, ततो नक्षत्रानयनाय एतेऽष्टादशभिः शतैः त्रिंशदधिकैः सप्तषष्टिभागरूपैर्गुणयितव्या इति गुणकारराशिच्छेदराश्योर्द्विकेना- पवर्त्तना जातो गुणकारराशि नव शतानि पञ्चदशोत्तराणि छेदराशिर्द्वाषष्टिः ।

तत्र पञ्च नवभि शतैः पञ्चदशोत्तरैर्गुण्यंते जातानि पञ्चचत्वारिंशच्छतानि पञ्चसप्तत्यधिकानि छेदराशिर्द्वाषष्टिलक्षणः सप्तषष्ट्या गुण्यते जातान्येकचत्वारिंशच्छतानि चतुष्पञ्चाशदधिकानि, तथा पुष्यस्य त्रयोविंशतिभागाः प्राक्तन- युगचरमपर्वणि सूर्येण सह योगमायान्ति ते द्वाषष्ट्या गुण्यन्ते जातानि चतुर्दश शतानि षड्विंशत्यधिकानि, तानि प्राक्तनात्, पञ्चसप्तत्यधिकपञ्च- चत्वारिंशत्प्रमाणात् शोध्यन्ते, शेषं तिष्ठति एकत्रिंशच्छतानि एकोनपञ्चाश- दधिकानि, एतानि मुहूर्त्तानयनार्थं त्रिंशता गुण्यन्ते, जातानि चतुर्नवतिसहस्राणि चत्वारि शतानि सप्तत्यधिकानि

तेषां छेदराशिना चतुष्पञ्चाशदधिकै- कचत्वारिंशच्छतरूपेण भागो ह्रियते, लब्धा द्वाविंशतिर्मुहूर्ताः शेषं तिष्ठति त्रीणि सहस्राणि द्व्यशीत्यधिकानि, एतानि द्वाषष्टिभागानयनार्थं द्वाषष्ट्या गुण्यन्ते, जातमेकं लक्षं एकनवतिसहस्राणि चतुरशीत्यधिकानि, तेषां छेदराशिना ४१५४ भागो ह्रियते लब्धा षट्चत्वारिंशत् मुहूर्त्तस्य द्वाषष्टिभागाः एषा पुनर्वसुनक्षत्रशोधनकनिष्पत्ति । अथ शेषनक्षत्राणां शोधनकान्याह–

॥ ५ ॥ 'बावत्तरं सयं फग्गुणीण बानउअ बे विसाहासु ।
चत्तारि अ बायाला सोज्झा तह उत्तरासाढा ॥'

द्वासप्ततं–द्वासप्तत्यधिकं शतं फल्गुनीनां–उत्तरफल्गुनीनां शोध्यं, द्विसप्तत्यधिकेन शतेन पुनर्वसुप्रभृतीनि उत्तरफल्गुनीपर्यन्तानि नक्षत्राणि शोध्यन्ते, एवमुत्तरत्रापि भावार्थो भावनीयः, तथा विशाखासु–विशाखापर्यन्तेषु नक्षत्रेषु शोधनकं द्वे शते द्विनवत्यधिके, अथानन्तरमुत्तराषाढापर्यन्तानि नक्षत्राण्यधिकृत्य शोध्यानि–चत्वारि शतानि द्विचत्वारिंशदधिकानि ।

॥ ६ ॥ 'एअं पुनव्वसुस्स य बिसट्ठिभागसहिअं तु सोहणगं ।
एतो अभिईआइं बीअं वोच्छामि सोहणगं ॥'

एतद्–अनन्तरोक्तं शोधनंक सकलमपि पुनर्वसुसत्कद्वाषष्टिभागसहितमवसेयं, एतदुक्तं भवति–ये पुनर्वसुसत्का द्वाविंशतिर्मुहूर्तास्ते सर्वेऽपि उत्तरस्मिन् २ शोधनके अन्तःप्रविष्टा वर्तन्ते न तु द्वाषष्टिभागास्ततो यत् यत् शोधनकं शोध्यते तत्र तत्र पुनर्वसुसत्काः षट्चत्वारिंशद् द्वाषष्टिभागाः उपरितनाः शोधनीया इति, एतच्च पुनर्वसुप्रभृति उत्तराषाढापर्यन्तं प्रथमं शोधनंक, अत ऊर्ध्वमभिजितमादिं कृत्वा द्वितीयं शोधनंक वक्ष्यामि, तत्र प्रतिज्ञातमेव निर्वाहयति–

॥ ७ ॥ 'अभिइस्स नव मुहुत्ता बिसट्ठिभागा य हौंति चउवीसं ।
छावट्ठी य समत्ता भागा सत्तट्ठिछेअकया ॥
॥ ८ ॥ इगुणट्ठं पोट्ठवया तिसु चेव नवोत्तरेसु रोहिणिआ ।
तिसु नवनवएसु भवे पुनव्वसू फग्गुणीओ अ ॥
॥ ९ ॥ पंचेव इगुणवन्नं सयाइं इगुणत्तराइं छच्चेव ।
सोज्झाणि विसाहासु मूले सत्तेव चोआला ॥
॥ १० ॥ अट्ठसय इगूणवीसा सोहणगं उत्तराण साढाणं ।
चउवीसं खलु भागा छावट्ठी चुण्णिआओ अ ॥

अभिजितो नक्षत्रस्य शोधनकं नव मुहूर्ता एकस्य च मुहूर्त्तस्य सत्काश्चतुर्विंशतिर्द्वाषष्टिभागाः एकस्य च द्वाषष्टिभागस्य सप्तषष्टिच्छेदकृताः परिपूर्णा षट्षष्टिभागाः, तथा एकोनषष्टं–एकोनषष्ट्यधिकं शतं प्रोष्ठपदानां–उत्तरभद्रपदानां शोधनकं, किमुक्तं भवति ? –एकोनषष्ट्यधिकेन शतेनोत्तरभद्रपदापर्यन्तानि नक्षत्राणि शुद्ध्यन्ति, एवमुत्तरत्रापि भावनीयं, तथा त्रिषु नवोत्तरेषु रोहिणीपर्यन्तानि शुद्ध्यन्ति, तथा त्रिषु नवनवतेषु–नवनवत्यधिकेषु शतेषु शोधितेषु पुनर्वसुपर्यन्तं नक्षत्रजातं शुद्ध्यति, तथा एकोनपञ्चाशदधिकानि पञ्च शतानि प्राच्यफाल्गुन्युत्तरफल्गुनीपर्यन्तानि नक्षत्राणि शुद्ध्यन्ति, तथा विशाखासु–विशाखापर्यन्तेषु नक्षत्रेषु एकोनसप्तत्यधिकानि षट् शतानि ६६९ शोध्यानि, मूलपर्यन्ते नक्षत्रजाते सप्त शतानि चतुश्चत्वारिंशदधिकानि ७४४शोध्यानि, उत्तराषाढानां–उत्तराषाढापर्यन्तानां नक्षत्राणां शोधनकं अष्टौ शतान्येकोनविंशत्यधिकानि ८१९,

सर्वष्वपि च शोधनकेषु उपरि अभिजितो नक्षत्रस्य सम्बन्धिनो मुहूर्त्तस्य द्वाषष्टिभागाश्चतुर्विंशति षट्षष्टिश्च चूर्णिकाभागा एकस्य द्वाषष्टिभागस्य सप्तषष्टिभागाः शोधीयाः ।

॥ ११ ॥ 'एआइं सोहइत्ता जं सेसं तं हवइ नक्खत्तं ।
इत्थं करेइ उडुवइ सूरेण समं अमावासं ॥'

एतानि—अनन्तरोदितानि शोधनकानि यथायोगं शोधयित्वा यच्छेषमवतिष्ठते तद्भवति नक्षत्रं, एतस्मिंश्च नक्षत्रे करोति सूर्येण समं उडुपतिरमावास्यामिति करणगाथासमूहाक्षरार्थः, भावना त्वियं—केनापि पृच्छयते--युगस्यादौ प्रथमा अमावास्या केन नक्षत्रेणोपेता समाप्तिमुपैतीति तत्र पूर्वोदितस्वरूपोऽवधार्यराशि षट्षष्टिर्मुहूर्ताः पञ्च द्वाषष्टिभागाः एकस्य च द्वाषष्टिभागस्य एकः सप्तषष्टिभाग इत्येवंरूपो ध्रियते, धृत्वा चैकेन गुण्यते, प्रथमायाः अमावास्यायाः पृष्ठत्वात्, 'एकेन गुणितं तदेव भवती'ति जातस्तावानेव राशि, ततस्तस्माद् द्वाविंशतिर्मुहूर्त्ताः एकस्य च मुहूर्त्तस्य षट्चत्वारिंशद् द्वाषष्टिभागा इत्येवंरूपं पुनर्वसु शोध्यते, तत्र षट्षष्टिमुहूर्तेभ्यो द्वाविंशतिर्मुहूर्त्ताः शुद्धाः स्थिताः पश्चात् चतुश्चत्वारिंशत् ४४, तेभ्य एकं मुहूर्त्तमपकृष्य स्य द्वाषष्टिभागाः क्रियन्ते कृत्वा च ते द्वाषष्टिभागराशिमध्ये प्रक्षिप्यन्ते जाताः सप्तषष्टि तेभ्यः षट्चत्वारिंशच्छुद्धाः शेषास्तिष्ठन्त्येकविंशति, त्रिचत्वारिंशतो मुहूर्तेभ्यस्त्रिंशता मुहूर्त्तैः पुष्यः शुद्धः, पश्चात् त्रयोदश मुहूर्ताः, अश्लेषानक्षत्रं चार्द्धक्षेत्रमिति पञ्चदशमुहूर्त्तप्रमाणं, तत इदमागतं—अश्लेषानक्षत्रस्यैकस्मिन् मुहूर्त्ते एकस्य च मुहूर्त्तस्य चत्वारिंशति द्वाषष्टिभागेषु एकस्य च द्वाषष्टिभागस्य सप्तषष्टिधाच्छिन्नस्य षट्षष्टिभागेषु शेषेषु प्रथमामावास्यासमाप्तिमुपगच्छतीति, एवं सर्वास्वप्यमावास्यासु करणं भावनीयम् । अत्र पूर्णिमाप्रक्रमे यदमावास्याकरणमुक्तं तत्करणगाथानुरोधेन युगादावमावस्यायाः प्राथम्येन क्रमप्राप्तत्वेन च । अथ प्रस्तुतं पूर्णिमाकरणं ।

॥ १ ॥ 'इच्छापुण्णिमगुणिओ अवहारो सोऽत्थ होइ कायव्वो ।
तं चेव य सोहणगं अभिईआइं तु कायव्वं ॥''

॥ २ ॥ सुद्धंमि अ सोहणगे जं सेसं तं हवेज्ज नक्खत्तं ।
तत्थ य करेइ उडुवइ पडिपुण्णं पुण्णिमं विमलं ॥

यथा पूर्वममावास्याचन्द्रनक्षत्रपरिज्ञानार्थमवधार्यराशिरुक्तः स एवात्रापि--पौर्णमासी-चन्द्रानक्षत्रपरिज्ञानविधौ ईप्सितपूर्णिमासीगुणितः—यां पूर्णमासीं ज्ञातुमिच्छसि तत्सङ्ख्यया गुणितः कर्त्तव्यः, गुणिते च सति तदेव—पूर्वोक्तं शोधनकं कर्तव्यं, केवलमभिजिदादिकं न तु पुनर्वसुप्रभृतिकं, शुद्धे च शोधनके यच्छेषमवतिष्ठते तद्भवेन्नक्षत्रं पौर्णमासीयुक्तं, तस्मिंश्च नक्षत्रे करोति उडुपति—चन्द्रमाः परिपूर्णा पूर्णमासीं विमलामिति करणगाथाद्वयाक्षरार्थः, भावना त्वियं—कोऽपि पृच्छति--युगस्यादौ प्रथमा पौर्णमासी कस्मिन् चन्द्रनक्षत्रयोगे समाप्तिमुपगच्छतीति, तत्र षट्षष्टिर्मुहूर्ता एकस्य च मुहूर्त्तस्य पञ्च द्वाषष्टिभागा एकस्य द्वाषष्टिभागस्यैकः सप्तषष्टिभाग इत्येवंरूपोऽवधार्यराशिर्ध्रियते, स प्रथमायां पौर्णमास्यां किल पृष्टमित्येकेन गुण्यते,

ततस्तस्माद- भिजितो नव मुहूर्त्ता एकस्य च मुहूर्त्तस्य चतुर्विंशतिर्द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य षट्षष्टि सप्तषष्टिभागा इत्येवंप्रमाणं शोधनकं शोधनीयम्, तत्र च षट्षष्टेर्नव मुहूर्ताः शुधाः स्थिताः पश्चात् सप्तपञ्चाशत् तेभ्यः एको मुहूर्तो गृहीत्वा द्वाषष्टिभागीकृतः ते च

द्वाषष्टिभागराशौ पञ्चकरूपे प्रक्षिप्यन्ते जाताः सप्तषष्टिभागास्तेभ्यश्चतुर्विंशति शुद्धाः स्थिताः पश्चात् त्रिचत्वारिंशत्तेभ्यः एकं रूपमादाय सप्तषष्टिभागीक्रियते ते च सप्तषष्टिरपि भागाः सप्तषष्टिभागैकमध्ये प्रक्षिप्यन्ते जाता अष्टषष्टिभागास्तेभ्यः षट्षष्टि शुद्धाः स्थितौ पश्चाद् द्वौ सप्तषष्टिभागौ, ततस्त्रिंशता मुहूर्तैः श्रवणः शुद्धः स्थिताः पश्चान्मुहूर्ताः षड्विंशति, तत इदमागतं- धनिष्ठानक्षत्रस्य त्रिषु मुहूर्तेषु एकस्य च मुहूर्तस्य एकोनविंशतिसंख्येषु द्वाषष्टिभागेषु एकस्य च द्वाषष्टिभागस्य पञ्चषष्टिसंख्येषु सप्तषष्टिभागेषु शेषेषु प्रथमा पौर्णमासी समाप्तिमियर्त्ति, एवं पञ्चानां युगभाविनीनां श्राविष्ठीनां पूर्णिमानां कचित् श्रवणेन कचिद् धनिष्ठया च परिसमाप्तिर्भावनीया।

तथा प्रौष्ठपदीमिति—भाद्रपदी भदन्त ! पौर्णमासीं कति नक्षत्राणि योगं योजयन्ति ?, भगवानाह—गौतम ! त्रीणि नक्षत्राणि योजयन्ति, तद्यथा—शतभिषक् पूर्वभद्रपदा उत्तरभद्रपदा, आसां पञ्चानामपि युगभाविनीनामुक्तनक्षत्राणां मध्ये अन्यतरेण परिसमापनात्।

आश्वयुजीं भदन्त ! पौर्णमासीं कति नक्षत्राणि योजयन्ति ?, गौतम ! द्वे योजयतः—रेवती अश्विनी च, इहोत्तरभद्रपदानक्षत्रमपि कांचिदाश्वयुजीं पौर्णमासीं परिसमापयति परं तत्प्रौष्ठपदीमपि, लोके च प्रौष्ठपद्यामेव तस्य प्राधान्य तन्नाम्ना तस्याः अभिधानाद् अतस्तदिह न विवक्षितमित्यदोषः, अतो द्वे समापयत इत्युक्त, आसां बह्वीनां युगभाविनीनामुक्तनक्षत्र- योर्मध्येऽन्यतरेण परिसमापनात्, तथा कार्त्तिकीं पौर्णमासीं द्वे नक्षत्रे, तद्यथा—भरणी कृत्तिका च, इहाप्यश्विनीनक्षत्रं कांचित् कार्त्तिकीं पौर्णमासीं परिसमापयति परं तदाश्वयुज्यां पौर्णमास्यां प्रधानमितीह न विवक्षितमित्यदोषः।

अतोऽत्रापि द्वे इत्युक्तं, आसां बह्वीनां युगभाविनीनां उक्तनक्षत्रयोर्मध्येऽन्यत्रेण परिसमापनात्, तथा मार्गशीर्षी, पौर्णमासीं द्वे नक्षत्रे, तद्यथा—रोहीणी मृगशिरश्च, आसां पंचानामपि युगभाविनोनां उक्तनक्षत्रयोर्मध्येऽन्यतरेण परिसमापनात्, तथा पौषीं पौर्णमासीं त्रीणि नक्षत्राणि, तद्यथा—आर्द्रा पुनर्वसुः पुष्यश्च, आसां युगमध्येऽधिकमाससम्भवेन षण्णामपि युगभाविनीनां उक्तनक्षत्राणां मध्योन्यतरेण परिसमापनात्, तथा माघीं पौर्णमासीं द्वे नक्षत्रे, तद्यथा—अश्लेषा मघा चशब्दात् पूर्वफल्गुनीपुष्यौ ग्राह्यौ, तेनासां युगभाविनीनां पञ्चानामपि मध्ये काश्चिदश्लेषा काश्चिन्मघा काश्चित् पूर्वफल्गुनी कांचित्पुष्यश्च परिसमापयति, तथा फाल्गुनीं पौर्णमासीं द्वे नक्षत्रे, तद्यथा—पूर्वफल्गुनी उत्तरफल्गुनी च, आसां पंचानामपि युगभाविनीनां उक्तयोर्नक्षत्र- योर्मध्येऽन्यतरेण समापनात्।

तथा चैत्रीं पौर्णमासीं द्वे नक्षत्रे, तद्यथा—हस्तः चित्रा च, आसां पंचानामपियुग- भाविनीनामुक्तयोर्नक्षत्रयोर्मध्येऽन्यतरेण समापनात्, तथा वैशाखीं द्वे, तद्यथा—स्वातिर्विशाखा चशब्दादनुराधा, इदं हि अनुराधानक्षत्रं विशाखातः परं, विशाखा चास्यां पूर्णिमास्यां प्रधाना ततः परस्यामेव पौर्णमास्यां तत्साक्षादुपात्तं नेहेति अतो द्वे इत्युक्तं, आसां बह्वीनां युगभाविनीनां उक्तमक्षत्रयोर्मध्येऽन्यतरेण समापनात्। तथा ज्येष्ठामूलीं पौर्णमासीं त्रीणि, तद्यथा—अनुराधा ज्येष्ठा मूलं च, आसां पंचानामपि युगभाविनीनां उक्तनक्षत्राणां मध्येऽन्यतरेण समापनात्, तथा आषाढीं पौर्णमासीं द्वे, तद्यथा— पूर्वाषाढा उत्तराषाढा च, आसां युगान्ते अधिकमाससम्भवेन षण्णामपि युगभाविनीनां उक्तन- क्षयोर्मध्येऽन्यतरेण समापनात्।

सम्प्रति कुलद्वारप्रतिपादनेन स्वतः सिद्धामपि कुलादियोजनां मन्दमतिशिष्यबोधनाय प्रश्नयन्नाह–'साविट्ठिण्ण' मित्यादि, श्राविष्ठीं भदन्त ! किं कुलं युनक्ति उपकुलं युनक्ति कुलोपकुलं युनक्ति ?, भगवानाह–गौतम ! कुलं वा युनक्ति वाशब्दः समुच्चये ततः कुलमपि युनक्तीत्यर्थः, एवमुपकुलमपि कुलोपकुलमपि, तत्र कुलं युञ्जत् धनिष्ठानक्षत्रं युनक्ति, तस्यैव कुल (तया) प्रसिद्धस्य सतः श्राविष्ठ्यां पौर्णमास्यां भावात्, उपकुलं युञ्जत् श्रवणनक्षत्रं युनक्ति, कुलोपकुलं युञ्जत् अभिजिन्नक्षत्रं युनक्ति, तद्धि तृतीयायां श्राविष्ठ्यां पूर्णिमास्यां द्वादशमुहूर्तेषु किञ्चितसमधिकेषु शेषेषु सह योगमुपैति, ततः श्रवणसहचरत्वात् स्वयमपि तस्याः पौर्णमास्याः पर्यन्तवर्तित्वात् तदपि तां परिसमापयति इति विवक्षितत्वाद्युनक्तीत्युक्तं ।

सम्प्रत्युपसंहारमाह–यत एवं त्रिभिरपि कुलादिभि श्राविष्ठ्याः पौर्णमास्यां योजनाऽस्ति ततः श्राविष्ठीं पौर्णमासीं कुलं वा युनक्ति उपकुलं वा युनक्ति कुलोपकुलं वा युनक्तीति वक्तव्यं स्यात्–इति स्वशिष्येभ्यः प्रतिपादनं कुर्यात्, यदिवा कुलेन वा युक्ता सती श्राविष्ठी पौर्णमासी उपकुलेन वा युक्ता कुलोपकुलेन वा युक्ता युक्तेति वक्तव्यं स्यात् । तथा 'पोट्ठवदिण्णं भंते ! इत्यादि, प्रौष्ठपदीं पौर्णमासीं भदन्त ! किं कुलं वा युनक्तीत्यादि पृच्छा, गौतम ! कुलं वा उपकुलं वा कुलोपकुलं वा युनक्ति, तत्र कुलं युञ्जत् उत्तरभद्रपदानक्षत्रं युनक्ति, उपकुलं युञ्जत् पूर्वभद्रपदानक्षत्रं युनक्ति, कुलोपकुलं युञ्जत् शतभिषक् नक्षत्रं युनक्ति, उपसंहारमाह–

यत एवं त्रिभिरपि कुलादिभिः प्रौष्ठपद्याः पौर्णमास्याः योजनाऽस्ति ततः प्रौष्ठपदीं पौर्णमासीं कुलं वा युनक्ति उपकुलं वा युनक्ति कुलोपकुलं वा युनक्तीति वक्तव्यं स्यात् इति स्वशिष्येभ्यः प्रतिपादनं कुर्यात्, यदिवा कुलेन वा युक्ता सती प्रौष्ठपदी पौर्णमासी उपकुलेन वा युक्ता कुलोपकुलेन वा युक्ता युक्तेति वक्तव्यं स्यात् इति । तथा 'अस्सोइण्ण'मिति आश्वयुजी भदन्तेति पृच्छा, गौतम ! कुलं वा युनक्ति उपकुलं वा युनक्ति नो लभते कुलोपकुलं, तत्र कुलं युञ्जत् अश्विनीनक्षत्रं युनक्ति, उपकुलं युञ्जत् रेवतीनक्षत्रं युनक्ति, उपसंहारमाह–यत एवं द्वाभ्यां कुलादिभ्या आश्वयुज्याः पौर्णमास्या योजनास्ति तत आश्वयुजीं पौर्णमासीं कुलं वा युनक्ति उपकुलं वा युनक्तीति वक्तव्यं स्यात्–इति स्वशिष्येभ्यः प्रतिपादनं कुर्यात्, यदिवा कुलेन वा उपकुलेन वा युक्ता सती आश्वयुजी पौर्णमासी युक्तेति वक्तव्यं स्यात् इति ।

तथा कार्तिकीं भदन्त ! पौर्णमासीं किं कुलमित्यादि पृच्छा, गौतम ! कुलं वा युनक्ति न कुलोपकुलं युनक्ति न कुलोपकुलं युनक्ति, तत्र कुलं युञ्जत् कृत्तिकानक्षत्रं युनक्ति उपकुलं युञ्जत् भरणीनक्षत्रं युनक्ति कार्तिकीमित्याद्युपसंहारवाक्यं प्राग्वत् इति, मार्गशीर्षी भदन्त ! पौर्णमासीं किं कुलं तदेवेति द्वे युक्तः, कोऽर्थः ? –कुलमुपकुलं वा युनक्ति न भवति कुलोपकुलं, तत्र कुलं युञ्जत् मृगशिरो नक्षत्रं युनक्ति, उपकुलं युञ्जत् रोहिणी, मार्गशीर्षी पौर्णमासीमित्याद्युपसंहारवाक्यं प्राग्वत्, अथ लाघवार्थमतिदेशमाह–'एवं सेसिआओ' इत्यादि, एवं शेषिका अपि–पौष्याद्यास्तावद्वक्तव्याः यावदाषाढीपूर्णिमा इत्यर्थः, पौषीं ज्येष्ठामूलीं च पूर्णिमं कुलं वा युनक्ति उपकुलं वा युनक्ति कुलोपकुलं वा युनक्ति, शेषिकायां–माध्यादीनां कुलं वा युनक्ति उपकुलं वा युनक्ति, कुलोपकुलं न भण्यते, तदभावादिति ।

अथामावास्याः–'साविट्ठिण्णं' इत्यादि, श्राविष्ठीं–श्रावणमासभावीनीं अमावास्यां कति

नक्षत्राणि युञ्जन्ति ? –यथायोगं चन्द्रेण सह संयुज्य श्राविष्ठीं अमावास्यां परिसमापयन्ति ? –, भगवानाह–गौतम ! द्वे नक्षत्रे युक्तः, तद्यथा– अश्लेषा मघा, इह व्यवहारनयमतेन यस्मिन्नक्षत्रे पौर्णमासी भवति तत आरभ्यार्वाक्तने पञ्चदशे चतुर्दशे वा नक्षत्रे अमावास्या भवति, यस्मिंश्च नक्षत्रे अमावास्या तत आरभ्य परतः पञ्चदशे चतुर्दशे वा नक्षत्रे पौर्णमासी, तत्र श्राविष्ठी पौर्णमासी किल श्रवणे धनिष्ठायां चोक्ता ततोऽमावास्यायामप्यस्यां अश्लेषा मघा चोक्ता, लोके च तिथिगणितानुसारतोगतायामप्यमावास्यायां वर्तमानायामपि प्रतिपदि यस्मिन्नहोरात्रे प्रथमतोऽमावास्याऽभूत् ततः सकलोऽप्यहोरात्रोऽमावास्येति व्यवह्रियते, ततो मघानक्षत्रमप्येवं व्यवहारतोऽमावास्यायां प्राप्यते इति न कश्चिद्विरोध, परमार्थतः पुनरिमाममावास्यां इमानि त्रीणि नक्षत्राणि परिसमापयन्ति, तद्यथा–पुनर्वसुपुष्योऽश्लेषा च, अस्यां पञ्चानामपि युगभाविनीनां नक्षत्रत्रयाणां मध्येऽन्यतरेण समापनात्, करणं चात्र प्रागुक्तं ।

तथा प्रौष्ठपदीं भदन्त ! अमावास्यां कति नक्षत्राणि युञ्जन्ति ? , गौतम ! द्वे नक्षत्रे युक्तः, तद्यथा–पूर्वफल्गुनी उत्तरफल्गुनी चशब्दान्मघा ग्राह्या, अस्यास्तु भाद्रपदपूर्णिमावर्त्तिशतभिषक्तो व्यवहारतोऽपि चारणीका, निश्चयतस्त्वार्यागणने पंचदशत्वात्, आसां पंचानामपि युगभाविनीनां नक्षत्रत्रयाणां मध्येऽन्यतरेण समापनाच्च, करणं च पूर्ववत् ।

तथा आश्वयुजीममावास्यां कति नक्षत्राणि युञ्जन्ति ? , गौतम ! द्वे नक्षत्रे युक्तः, तद्यथा–हस्तश्चित्रा च, इदमपि व्यवहारतः निश्चयतस्तु आश्वयुजीममावास्यां त्रीणि नक्षत्राणि समापयन्ति, तद्यथा–उत्तरफल्गुनी हस्तश्चित्रा च, यच्च पूर्वमाश्वयुज्यां पूर्णिमायामुत्तरभद्रपदा प्रागुक्तहेतोर्न विवक्षिता परं निश्चयतः सा आयातीति तस्याः पंचदशत्वादुत्तरफल्गुन्यत्र गृहीता, आसां च पंचानां युगभाविनीनां नक्षत्रत्रयाणां मध्येऽन्यतरेण समापनात् भावना प्राग्वत्, तथा कार्त्तिकीं अमावास्यां द्वे नक्षत्रे युक्तः, तद्यथा–स्वातिर्विशाखा च, एतदपि व्यवहारतः निश्चयतस्तु त्रीणि स्वातिर्विशाखा चित्रा च, अस्यामपि पूर्णिमायां अश्विन्यनुरोधेन चित्रोक्ता, आसां पंचानामपि युगभाविनीनां नक्षत्रत्रयाणां मध्येऽन्यतरेण समापनादिति ।

तथा मार्गशीर्षी त्रीणि नक्षत्राणि युञ्जन्ति, तद्यथा–अनुराधा ज्येष्ठा मूलश्च, एतदपि व्यवहारतो निश्चयतः पुनरिमानि त्रीणि नक्षत्राणि अमावास्या परिसमापयन्ति, तद्यथा–विशाखा अनुराधा ज्येष्ठा च आसां पंचानां युगभाविनीनां नक्षत्रत्रयाणां मध्येऽन्यतरेण समापनात्, तथा पौषीममावास्यां द्वे नक्षत्रे युक्तः–पूर्वाषाढा उत्तराषाढा च, एतदपि व्यवहारत उक्तं निश्चयतः पुनस्त्रीणि नक्षत्राणि परिसमापयन्ति, तद्यथा–मूलं पूर्वाषाढा उत्तराषाढा च, आसां युगमध्येऽधिकमाससम्भवेन षण्णामपीत्यादि पूर्ववत्, तथा माघीममावास्यां त्रीणि–अभिजित् श्रवणो धनिष्ठा, एतत्पूर्णिमावर्त्तिभ्यामश्लेषामघाभ्यामभिजितः षोडशत्वेन व्यवहारातीतत्वेऽपि श्रवणसम्बद्धत्वात् पंचदशत्वं समाधेयम्, एतदपि व्यवहारतः निश्चयतः पुनस्त्रीणि उत्तराषाढा अभिजित् श्रवणश्च, आसां पंचानामपीत्यादि पूर्ववत् ।

तथा फल्गुनीं त्रीणि तद्यथा–शतभिषक् पूर्वभद्रपदा उत्तरभद्रपदा, एतदपि व्यवहारतः निश्चयतस्त्रीणि तद्यथा–धनिष्ठा शतभिषक् पूर्वभद्रपदा च, आसां पंचानामपीत्यादि तथैव, तथा चैत्रीं द्वे नक्षत्रे–रेवती आश्विनी च, एतदपि व्यवहारतः निश्चयतस्तु त्रीणि तद्यथा–पूर्वभद्रपदा उत्तरभद्रपदा रेवती च, आसामपीत्यादि तथैव, तथा (विशाखी द्वे नक्षत्रे–भरणी कृत्तिका च,

एतदपि व्यवहारतः निश्चयतस्तु त्रीणि तद्यथा–रेवती अश्विनी भरणी च, आसामपीत्यादि तथैव) ज्येष्ठामूलीं द्वे–रोहिणी मृगशिरश्च, एतदपि व्यवहारतः निश्चयतस्तु इमे द्वे नक्षत्रे–रोहिणी कृत्तिका च, आसामपीत्यादि पूर्ववत्, तथा आषाढीं त्रीणि नक्षत्राणि–आर्द्रा पुनर्वसू पुष्यः, एतदपि व्यवहारतः परमार्थतस्तु इमानि त्रीणि नक्षत्राणि–मृगशिरः आर्द्रा पुनर्वसू च, आसां युगान्तेऽधिकमाससम्भवेन षण्णामपि [पञ्चानां] तथैवेति, अत्र सर्वत्र नक्षत्रगणनामध्ये तत्राभिजिदन्तर्भवति तन्न न गण्यं, स्तोककालत्वात्, यत उक्तं समवायाङ्गे–"जंबुद्दीवे २ अभिईवज्जेहिं सत्तावीसाए नक्खत्तेहिं संववहारो वट्टइ'त्ति।

अथामावास्यासु कुलादियोजनाप्रश्नमाह–'साविट्ठिण्ण'मित्यादि, श्राविष्ठीं भदन्त ! अमावास्यां किं कुलं युनक्ति उपकुलं युनक्ति कुलोपकुलं युनक्ति ?, भगवानाह–गौतम ! कुलं वा युनक्ति उपकुलं वा युनक्ति वाशब्दः समुच्चये, नो लभते कुलोपकुलं, तत्र कुलं युञ्जत् श्राविष्ठीममावास्यां मघानक्षत्रं युनक्ति, एतच्च प्रागुक्तयुक्त्या व्यवहारत उक्तं परमार्थतः पुनः कुलं युञ्जत् पुष्यनक्षत्रं युनक्तीति, एतच्च प्रागेवोक्तम्, एवमुत्तरसूत्रमपि व्यवहारमधिकृत्य यथायोगं परिभावनीयमति, उपकुलं युञ्जत् अश्लेषानक्षत्रं युनक्ति, अथोपसंहारमाह– यत उक्तप्रकारेण द्वाभ्यां कुलाभ्यां श्राविष्ठ्या अमावास्यायाश्चन्द्रयोगः समस्ति, न तु कुलोपकुलेन, ततः श्राविष्ठीममावास्यां कुलमपि युनक्ति उपकुलमपि युनक्ति इति वक्तव्यं स्यात्, यदिवा कुलेन वा युक्ता उपकुलेन वा युक्ता सती श्राविष्ठी अमावास्या युक्तेति वक्तव्यं स्यात्।

तथा प्रौष्ठपदीं भदन्त ! अमावास्यामित्यादि तदेव प्रश्नसूत्रं, उत्तरसूत्रे द्वे कुलोपकुले युक्तः नो युनक्ति कुलोपकुलं, तत्र कुलं युञ्जत् उत्तरफल्गुनीनक्षत्रं युनक्ति उपकुलं युञ्जत् पूर्वफल्गुनीनक्षत्रं युनक्ति, उपसंहारसूत्रं तथैव, मार्गशीर्षी तदेव प्रश्नसूत्रं किं कुलं जोएईत्यादि, तत्र कुलं युंजत् मूलनक्षत्रं युनक्ति उपकुलं युंजत् ज्येष्ठानक्षत्रं कुलोपकुलं युंजत् अनुराधानक्षत्रं युनक्ति, यावत्करणादुपसंहारसूत्रं युक्तेति वक्तव्यं स्यात्, एवं माघ्याः फाल्गुन्याः आषाढ्याश्च कुलं वा उपकुलं वा कुलोपकुलं वा, अवशेषिकाणां कुलं वा उपकुलं वा युनक्तीति वाच्यम्।

अथ सन्निपातद्वारम्–तत्र सन्निपातो नाम पूर्णिमानक्षत्रात् अमावास्यायाममावास्यानक्षत्राच्च पूर्णिमायां नक्षत्रस्य नियमेन सम्बन्धस्तस्य सूत्रम्–'जया णं भंते'इत्यादि, यदा भदन्त ! श्राविष्ठी–श्रविष्ठानक्षत्रयुक्ता पूर्णिमा भवति तदा तस्या अर्वाक्तनी अमावास्या माघी–मघानक्षत्रयुक्ता भवति यदा तु माघी–मघानक्षत्रयुक्ता पूर्णिमा भवति तदा पाश्चात्या अमावास्या श्राविष्ठी–श्रविष्ठायुक्ता भवतीति, काक्वा प्रश्नः, भगवानाह–हन्तेति भवति, तत्र गौतम ! यदा श्राविष्ठीत्यादि तदेव वक्तव्यं, प्रश्नेन समानोत्तरत्वात्, अयमर्थः–इह व्यवहारनयमतेन यस्मिन्नक्षत्रे पौर्णमासी भवति त आरभ्य अर्वाक्तने पंचदशे चतुर्दशे वा नक्षत्रे नियमतोऽमावास्या, ततो यदा श्राविष्ठी–श्रविष्ठानक्षत्रयुक्ता पौर्णमासी भवति तदा अर्वाक्तनी अमावास्या माघी–मघानक्षत्रयुक्ता भवति, श्रविष्ठानक्षत्रादारभ्य मघानक्षत्रस्य पूर्वं चतुर्दशत्वात्।

अत्र सूर्यप्रज्ञप्तिचन्द्रप्रज्ञप्तिवृत्त्योस्तु मघा- नक्षत्रादारभ्य श्रविष्ठानक्षत्रस्य पञ्चदशत्वादिति पाठस्तेनात्र विचार्यं, एवञ्च श्रावणमासमधिकृत्य भावनीयं, यदा भदन्त ! माघी–मघानक्षत्रयुक्ता पूर्णिमा भवति तदा श्राविष्ठी–श्रविष्ठानक्षत्रयुक्ता पाश्चात्या अमावास्या भवति, मघानक्षत्रादारभ्य पूर्वं श्रविष्ठानक्षत्रस्य पंचदशत्वात्।

इदं च माघमासमधिकृत्य भावनीयं, यदा भदन्त ! प्रौष्ठपदी-उत्तरभद्रपदायुक्ता पौर्णमासी भवति तदा पाश्चात्या अमावास्या उत्तरफल्गुनीनक्षत्रयुक्ता भवति, उत्तरभद्रपदात् आरभ्य पूर्वमुत्तर-फल्गुनीनक्षत्रस्य पञ्चदशत्वात्, एतच्च भाद्रपदमासमधिकृत्यावसेयं, यदा चोत्तरफाल्गुनीनक्षत्रयुक्ता पौर्णमासी भवति तदा अमावास्या प्रौष्ठपदी-उत्तरभद्रपदोपेता भवति, उत्तरफल्गुनीमारभ्य पूर्वमुत्तरभद्रपदानक्षत्रस्य चतुर्दशत्वात्, इदं च फाल्गुनमासमधिकृत्योक्तं, एवमेतेनाभिलापेन इमाः पूर्णिमा अमावास्याश्च नेतव्याः, यदा आश्विनी अश्विनीनक्षत्रोपेता भवति तदा पाश्चात्यानन्तरा अमावास्या चैत्री-चित्रानक्षयुक्ता भवति, अश्विन्या आरभ्य पूर्वं चित्रानक्षत्रस्य पञ्चदशत्वात्, एतच्च व्यवहारनयमधिकृत्योक्तमवसेयं निश्चयत एकस्यामप्यश्वयुग्मासभाविन्याममावास्यां चित्रानक्षत्रासम्भवात्, एतच्च प्रागेव दर्शितं, यदा च चैत्री-चित्रानक्षोपेता पौर्णमासी भवति तदा पाश्चात्या अमावास्या आश्विनी-अश्विनीनक्षत्रयुक्ता भवति, एतदपि व्यवहारतः निश्चयत एकस्यामपि चैत्रमासभाविन्याममावास्यायां अश्विनीनक्षत्रस्यासम्भवात् ।

एतदपि सूत्रमाश्विनचैत्रमासावधिकृत्य प्रवृत्तं, यदा च कार्तिकी-कृत्तिकानक्षत्रयुक्ता पौर्णमासी भवति तदा वैशाखी-विशाखानक्षत्रयुक्ता अमावास्या भवति, कृत्तिकातोऽर्वाक् विशाखायाः पञ्चदशत्वात्, यदा वैशाखी-विशाखानक्षत्रयुक्ता पौर्णमासी भवति तदा ततोऽनन्तरा पाश्चात्यामावास्या कार्तिकी-कृत्तिकानक्षत्रोपेता भवति, विशाखातः पूर्वं कृत्तिकायाः चतुर्दश-त्वात्, एतच्च कार्तिकवैशाखमासावधिकृत्योक्तं, यदा च मार्गशीर्षी-मृगशिरोयुक्ता पौर्णमासी भवति तदा ज्येष्ठामूली-ज्योष्ठामूलनक्षत्रोपेता अमावास्या, यदा ज्येष्ठमूली पौर्णमासी तदा मार्गशीर्षी अमावास्या, एतच्च मार्गशीर्षज्येष्ठमासावधिकृत्य भावनीयं, यदा पौषी-पुष्यनक्षत्रयुक्ता पौर्णमासी तदा आषाढी-पूर्वाषाढानक्षत्रयुक्ता अमावास्या भवति, यदा पूर्वाषाढानक्षत्रयुक्ता पौर्णमासी भवति तदा पुष्यनक्षत्रयुक्ता अमावास्या भवति, एतच्च पौषाषाढमासावधिकृत्योक्तं, उक्तानि मासार्द्धमासपरिसमापकानि नक्षत्राणि । सम्प्रति स्वयमस्तंगमनेनाहोरात्रपरिसमापकतया मासपरिसमापकं नक्षत्रवृन्दमाह, प्रथमतो वर्षाकालाहोरात्रपरिसमापकनक्षत्रसूत्रम्-

**मू. (३३२)** वासाणं पढमं मासं कति नक्खत्ता नेंति ?, गो० ! चत्तारि नक्खत्ता नेंति, तं०-उत्तरासाढा अभिई सवणो धणिट्ठा, उत्तरासाढा चउद्दस अहोरत्ते नेइ, अभिई सत्त अहोरत्ते नेइ, सवणो अट्ठऽहोरत्ते नेइ धनिट्ठा एगं अहोरत्तं नेइ, तंसि च णं मासंसि चउरंगुलपोरिसीए छायाए सूरिए अणुपरिअट्टइ, तस्स णं मासस्स चरिमदिवसे दो पदा चत्तारि अ अंगुला पोरिसी भवइ ।

वासाणं भंते ! दोच्चं मासं कइ नक्खत्ता नेंति ?, गो० ! चत्तारि-धनिट्ठा सयभिसया पुव्वभद्दवया उत्तराभद्दवया, धनिट्ठा णं चउद्दस अहोरत्ते नेइ सयभिसया सत्त अहोरत्ते नेइ पुव्वाभद्दवया अट्ठ अहोरत्ते नेइ उत्तराभद्दवया एगं, तंसि च णं मासंसि अट्ठंगुलपोरिसीए छायाए सूरिए अणुपरियट्टइ, तस्स मासस्स चरिमे दिवसे दो पया अट्ठ य अंगुला पोरिसी भवइ ।

वासाणं भंते ! तइअं मासं कइ नक्खत्ता नेंति ?, गो० ! तिन्नि नक्खत्ता नेंति तं०-उत्तर-भद्दवया रेवई अस्सिणी, उत्तरभद्दवया चउद्दस राइंदिए नेइ रेवई पन्नरस अस्सिणी एगं, तंसि च णं मासंसि दुवालसंगुलपोरिसीए छायाए सूरिए अणुपरिअट्टइ, तस्स णं मासस्स चरिमे दिवसे लेहट्ठाइं तिन्नि पयाइं पोरिसी भवइ । वासाणं भंते ! चउत्थं मासं कति नक्खत्ता णेति ?, गो० ! तिन्नि-अस्सिणी भरणी कत्तिआ, अस्सिणी चउद्दस भरणी पन्नरस कत्तिआ एगं, तंसि च णं

मासंसि सोलसंगुलपोरिसीए छायाए सूरिए अणुपरिअट्टइ, तस्स णं मासस्स चरमे दिवसे तिण्णि पयाइं चत्तारि अंगुलाइं पोरिसी भवइ ।

हेमंताणं भंते ! पढमं मासं कति नक्खत्ता नेंति ?, गो० ! तिन्नि–कत्तिआ रोहिणी मिगसिरं, कत्तिआ चउद्दस रोहिणी पन्नरस मिगसिरं एगं अहोरत्तं नेइ, तंसि च णं मासंसि वीसंगुलपोरिसीए छायाए सूरिए अणुपरिअट्टइ, तस्स णं मासस्सजे से चरिमे दिवसे तंसि च णं दिवसंसि तिन्नि पयाइं अट्ठ य अंगुलाइं पोरिसी भवइ ।

हेमंताणं भंते ! दोच्चं मासं कति नक्खत्ता नेंति ?, गोअमा ! चत्तारि नक्खत्ता नेंति, तंजहा– मिअसिरं अद्दा पुणव्वसू पुस्सो, मिअसिरं चउद्दस राइंदिआइं नेइ अद्दा अट्ठ नेइ पुणव्वसू सत्त राइंदिआई पुस्सो एगं राइंदिअं नेइ, तया णं चउव्वीसंगुलपोरिसीए छायाए सूरिए अणुपरिअट्टइ, तस्स णं मासस्स जे से चरिमे दिवसे तंसि च णं दिवसंसि लेहट्ठाइं चत्तारि पयाइं पोरिसी भवइ ।

हेमंताणं भंते ! तच्चं मासं कति नक्खत्ता नेंति ?, गोअमा ! तिन्नि–पुस्सो असिलेसा महा, पुस्सो चोद्दस राइंदिआइं नेइ असिलेसा पन्नरस महा एक्कं, तया णं वीसंगुलपोरिसीए छायाए सूरिए अणुपरिअट्टइ, तस्स णं मासस्स जे से चरिमे दिवसे तंसि च णं दिवसंसि तिण्णि पयाइं अट्ठंगुलाइं पोरिसी भवइ । हेमंताणं भंते ! चउत्थं मासं कति नक्खत्ता नेंति ?, गोअमा ! तिन्नि ण०, तं०–महा पुव्वाफग्गुणी उत्तरफग्गुणी, महा चउद्दस राइंदिआइं नेइ पुव्वाफग्गुणी पन्नरस राइंदिआइं नेइ उत्तराफग्गुणी एगं राइंदिअं नेइ, तया णं सोलसंगुलपोरिसीए छायाए सूरिए अणुपरिअट्टइ, तस्स णं मासस्स जे से चरिमे दिवसे तंसि च णं दिवसंसि तिन्नि पयाइं चत्तारि अंगुलाइं पोरिसी भवइ ।

गिम्हाणं भंते ! पढमं मासं कति नक्खत्ता नेंति ?, गोअमा ! तिन्नि नक्खत्ता णेंति– उत्तराफग्गुणी हत्थो चित्ता, उत्तराफग्गुणी चउद्दस राइंदिआइं नेइ हत्थो पन्नरस राइंदिआइं नेइ चित्ता एगं राइंदिअं नेइ, तया णं दुवालसंगुलपोरिसीए छायाए सूरिए अणुपरिअट्टइ, तस्स णं मासस्स जे से चरिमे दिवसे तंसि च णं दिवसंसि लेहट्ठाइं तिन्नि पयाइं पोरिसी भवइ ।

गिम्हाणं भंते ! दोच्चं मासं कति नक्खत्ता णेंति ?, गोअमा ! तिन्नि नक्खत्ता नेंति, तं०–चित्ता साई विसाहा, चित्ता चउद्दस राइंदिआइं नेइ साई पन्नरस राइंदिआइं नेइ विसाहा एगं राइंदिअं नेइ, तया णं अट्ठंगुलपोरिसीए छायाए सूरिए अणुपरिअट्टइ, तस्स णं मासस्स जे से चमि दिवसे तंसि च णं दिवसंसि दो पयाइं अट्ठंगुलाइं पोरिसी भवइ ।

गिम्हाणं भंते ! तच्चं मासं कति नक्खत्ता नेंति ?, गो० ! चत्तारि नक्खत्ता नेंति, तंजहा– विसाहाऽणुराहा जेट्ठा मुलो, विसाहा चउद्दस राइंदिआइं नेइ अणुराहा अट्ठ राइंदिआइं नेइ जेट्ठा सत्त राइंदिआइं नेइ मूलो एक्कं राइंदिअं, तया णं चउरंगुलपोरिसीए छायाए सूरिए अणुपरिअट्टइ, तस्स णं मासस्स जे से चरिमे दिवसे तंसि च णं दिवसंसि दो पयाइं चत्तारि य अंगुलाइं, पोरिसी भवइ ।

गिम्हाणं भंते ! चउत्थं मासं कति नक्खत्ता नेंति ?, गोअमा ! तिन्नि नक्खत्ता नेंति, तं०- मूलो पुव्वासाढा उत्तरासाढा, मूलो चउद्दस राइंदिआइं नेइ पुव्वासाढा पन्नरस राइंदिआइं नेइ उत्तरासाढा एगं राइंदिअं नेइ, तया णं वट्टाए समचउरंससंठाणसंठिआए नग्गोहपरिमण्डलाए

सकायमणुरंगिआए छायाए सूरिए अणुपरिअट्टइ, तस्स णं मासस्स जे से चरिमे दिवसे तंसि च णं दिवसंसि लेहट्ठाइं दो पयाइं पोरिसी भवइ। एतेसि णं पुव्ववण्णिआणं पयाणं इमा संगहणी

मू. (३३३) *जोगो देवयतारग्गगोत्तसंठाण चंदरविजोगो।*
*कुलपुण्णिमअवमंसा नेआ छाया य बोद्धव्वा ॥*

वृ. वर्षाणां–वर्षाकालस्य चतुर्मासप्रमाणस्य प्रथममासं–श्रावणलक्षणं कति नक्षत्राणि स्वयमस्तंगमनेनाहोरात्रपरिसमापकतया क्रमेण नयन्ति ?, द्विकर्मकत्वादस्य समाप्तिति गम्यते, कोऽर्थः ?–वक्ष्यमाणसङ्ख्याङ्कस्वस्वदिनेषु इमानि नक्षत्राणि यदा अस्तमयन्ति तदा श्रावणमासेऽहोरात्रसमाप्तिरित्यर्थः, तेनैतानि रात्रिपरिसमापकत्वाद्रात्रिनक्षत्राण्युच्यन्ते, भगवनाह–गौतम चत्वारि नक्षत्राणि नयन्ति, तद्यथा–उत्तराषाढा अभिजिच्छ्रवणो धनिष्ठा च, तत्रोत्तराषाढा प्रथमान् चतुर्दश अहोरात्रान् नयति, तदनन्तरमभिजिन्नक्षत्रं सप्ताहोरात्रान्नयति, ततः श्रवणनक्षत्रमष्टौ अहोरात्रान्नयति, एवं च सर्वसङ्कलनया श्रावणमासस्यैकोनत्रिंशदहोरात्रा गतास्ततः परं श्रावणमासस्य सम्बन्धिनं चरममेकमहोरात्रं धनिष्ठानक्षत्रं नयति, एवं श्रावणमासं चत्वारि नक्षत्राणि नयन्ति, तद्यथा–धनिष्ठा शतभिषक् पूर्वभद्रपदा उत्तरभद्रपदा च, तत्र धनिष्ठा आद्यान् चतुर्दश अहोरात्रान् नयति तदनन्तरं शतभिषक् सप्ताहोरात्रान् नयति ततः परमष्टावहोरात्रान् पूर्वभद्रपदा नयति तदनन्तरमेकमहोरात्रमुत्तरभद्रपदा नयति, एवमेन भाद्रपदमासं चत्वारि नक्षत्राणि नयन्ति, तस्मिंश्च मासेऽष्टाङ्गुलपौरुष्या–अष्टाङ्गुलाधिकपौरुष्या छायया सूर्योऽनुपरावर्त्तते अत्र भावार्थः प्राग्वद् भाव०, एतदेवाह–तस्य भाद्रपदमासस्य चरमे दिवसे द्वे पदे अष्ट चाङ्गुलानि पौरुषी।

अथ तृतीयं पृच्छति–'वासाणं भंते !'त्ति, इत्यादि, वर्षाणां भदन्त ! तृतीयं मासं कति नक्षत्राणि नयन्ति ?, गौतम ! त्रीणि नक्षत्राणिउत्तरभद्रपदा रेवती अश्विनी च, तत्रोत्तरभद्रपदा चतुर्दश रात्रिन्दिवान् नयति, रेवती पञ्चदश रात्रिन्दिवान् नयति, अश्विनी एकं रात्रिन्दिवं नयति, एवं तृतीयं मासं त्रीणि नक्षत्राणि नयन्ति, तस्मिंश्च मासे द्वादशाङ्गुलपौरुष्या–द्वादशाङ्गुलाधिकपौरुष्या छायया सूर्योऽनुपरावर्त्तते, भावार्थः पूर्ववत्, एतदेवाह–तस्य मासस्य चरमे दिवसे रेखा–पादपर्यन्तवर्तिनी सीमा तत्स्थानि त्रीणि पदानि पौरुषी भवति, किमुक्तं भवति ?–परिपूर्णानि त्रीणि पदानि पौरुषी भवति।

अथ चतुर्थं पृच्छति–'वासाण'मित्यादि, वर्षाणां–वर्षाकालस्य भदन्त ! चतुर्थं कार्तिकलक्षणं मासं कति नक्षत्राणि नयन्ति ?, गौतम ! त्रीणि–अश्विनी भरणी कृत्तिका च, तत्राश्विनी चतुर्दशाहोरात्रान् भरणी पञ्चदशाहोरात्रान् कृत्तिका एकमहोरात्रं नयति, तस्मिंश्च मासे षोडशांगुलपौरुष्या–षोडशांगुलाधिकपौरुष्या छायया सूर्योऽनुपरावर्त्तते, भावार्थ पूर्ववत्, एतदेवाह–तस्य मासस्य चरमे दिवसे त्रीणि पदानि चत्वारि चांगुलानि पौरुषी भवति। गतो वर्षाकालः।

अथ हेमन्तकालं पृच्छति–हेमन्तानां–हेमन्तकालस्य भदन्त ! प्रथमं मार्गशीर्षलक्षणं मासं कति नक्षत्राणि नयन्ति ?, गौ० त्रीणि न०–कृत्तिका रोहिणी मृगशिरश्च, तत्र कृत्तिका चतुर्दशाहोरात्रान् रोहिणी पञ्चदशाहोरात्रान् मृगशिर एकमहोरात्रं नयति, तस्मिंश्च मासे विंशत्यङ्गुलपौरुष्या–विंशत्यङ्गुलाधिकपौरुष्या छायया सूर्योऽनुपरावर्त्तते, भावार्थः पूर्ववत्, एतदेवाह–तस्य मासस्य यश्चरमो दिवसस्तस्मिन् दिवसे त्रीणि पदानि अष्ट चांगुलानि पौरुषी भवतीति।

अथ द्वितीयं पृच्छति–'हेमंताणं भंते!' इत्यादि, हेमन्तकालस्य भदन्त! द्वितीयं पौषनामकं मासं कति नक्षत्राणि नयन्ति ?, गौतम ! चत्वारि नक्षत्राणि नयन्ति, तद्यथा–मृगशिरः आर्द्रा पुनर्वसू पुष्यश्च, तत्र मृगशिरश्चतुर्दश रात्रिन्दिवान्नयति, आर्द्रा अष्टौ नय, पुनर्वसू सप्त रात्रिन्दिवान्, पुष्यः एकं रात्रिन्दिवं नयति, तदा चतुर्विंशत्यङ्गुलपौरुष्या–चतुर्विंशत्यङ्गुलाधिकपौरुष्या छायया सूर्योऽनुपरावर्त्तते, भावार्थः पूर्ववत्, तस्य मासस्य चरमे दिवसे रेखा–पादपर्यन्तवर्त्तिनी सीमा तत्स्थानि चत्वारि पदानि पौरुषी भवति, –परिपूर्णानि चतवारि पदानि पौरुषी भवति।

अथ तृतीयं पृच्छति–'हेमंताणं'मित्यादि, एतत् सुगमं, अथ चतुर्थं पृच्छति–'हेमंताणं भंते! चउत्थं'इत्यादि, सुगमं। अतीतो हेमन्तः, अथ ग्रीष्मं पृच्छति–'गिम्हाणं भंते! चउत्थं' इत्यादि चत्वार्यपि इमानि ग्रीष्मकालसूत्राणि सुबोधानि, प्रायः प्राक्तनसूत्रानुसारित्वात्, नवरं तस्मिंश्चाषाढे मासे प्रकाश्यवस्तुनो वृत्तस्य वृत्तया समचतुरस्रसंस्थानसंस्थितस्य समचतुरस्रसंस्थानसंस्थितया न्यग्रोधपरिमण्डलसंस्थानस्य न्यगोधपरिमण्डलया उपलक्षणमेतत् शेषसंस्थानसंस्थितस्य प्रकाश्यस्य वस्तुनः शेषसंस्थानसंस्थितया, आषाढे हि मासे प्रायः सर्वस्यापि प्रकाश्यस्य वस्तुनो दिवसस्य चतुर्भागेऽतिक्रान्ते शेषे वा स्वप्रमाणा छाया भवति, निश्चयतः पुनराषाढमासस्य चरमदिवसे तत्रापि सर्वाभ्यन्तरे मण्डले वर्त्तमाने सूर्ये, ततो यत् प्रकाश्यं वस्तु यत्संस्थानं भवति तस्य छायाऽपि तथासंस्थानोपजायते, तत उक्तम्–वृत्तस्य वृत्तया इत्यादि, एतदेवाह–

'स्वकायमनुरङ्गिन्या' स्वस्य–स्वकीयस्य छायानिबन्धनस्य वस्तुनः कायः–शरीरं स्वकायस्तमनुरज्यते–अनुकारं विदधातीत्येवंशीला अनुरङ्गिनी 'द्विषद्रुहे'त्यादिना घिनञ्प्रत्यय–स्तया स्वकायमनुरङ्गिन्या छायया सूर्योऽनु–प्रतिदिवसं परावर्त्तते यथा सर्वस्यापि प्रकाश्यस्य वस्तुनो दिवसस्य चतुर्भागेऽतिक्रान्ते शेषे वा स्वानुकारा स्वप्रमाणा च छाया भवतीति, शेषं सुगमं, इदं च पौरुषीप्रमाणं व्यवहारत उक्तं, निश्चयतः सार्द्धैस्त्रिंशताऽहोरात्रैश्चतुरंगुला वृद्धिर्हानिर्वा वेदितव्या, तथा च निश्चयतः पौरुषीप्रमाणप्रतिपादनार्थमिमाः पूर्वाचार्यप्रसिद्धाः करणगाथाः–

॥१॥ 'पव्वे पन्नरसगुणे तिहिसहिए पोरिसीइ आणयणे।
छलसीअसियविभत्ते जं लद्धं तं विआणाहि॥

॥२॥ जइ होइ विसमलद्धं दक्खिणमयणं ठविज्ज नायव्वं।
अह हवइ समं लद्धं नायव्वं उत्तरं अयणं॥

॥३॥ अयणगए तिहिरासी चउग्गुणे पव्वपायभइयंमि।
जं लद्धमंगुलाणि य खयवुड्ढी पोरिसीए उ॥

॥४॥ दक्खिणवुड्ढी दुपया अंगुलाणं तु होइ नायव्वा।
उत्तरअयने हानी कायव्वा चउहि पायाहिं॥

॥५॥ सावणबहुलपडिवया दुपया पुन पोरिसी धुवा होइ।
चत्तारि अंगुलाइं मासेणं वड्ढए तत्तो॥

॥६॥ इक्कतीसइभागा तिहिए पुण अंगुलस्स चत्तारि।
दक्खिणअयणे वुड्ढी जाव य चत्तारि उ पयाइं॥

॥७॥ उत्तरअयने हानी चउहिं पायाहिं जाव दो पाया।

एवं तु पोरिसीए वुड्डिखया हुंति नायव्वा ॥
॥ ८ ॥ वुड्डी वा हाणी वा जावइआ पोरिसीइ दिट्ठा उ ।
तत्तो दिवसगएणं जं लद्धं तं खु अयनगयं ॥

अत्र व्याख्या—युगमध्ये यस्मिन् पर्वणि यस्या तिथौ पोरुषीपरिमाणं ज्ञातुमिष्यते ततः पूर्वं युगादित आरभ्य यानि पर्व्वाणि अतिक्रान्तानि तानि ध्रियन्ते धृत्वा च पञ्चदशभिर्गुण्यन्ते गुणयित्वा च विवक्षितायास्तिथेः याः प्रागतिक्रान्तास्तिथयस्ताभि सहितानि क्रियन्ते कृत्वा च षडशीत्यधिकेन शतेन तेषां भागो ह्रियते, इहैकस्मिन् अयने त्र्यशीत्यधिकमण्डलशतपरिमाणे चन्द्रनिष्पादितानां तिथीनां षडशीत्यधिकं शतं भवति ततस्तेन भागे हृते यल्लब्धं तद्विजानीहि सम्यगवधारयेत्यर्थः, तत्र यदि लब्धं विषमं भवति यथा एककस्त्रिकः पञ्चकः सप्तको नवको वा तदा तत्पर्यन्तवर्त्ति दक्षिणमयन ज्ञातव्य, अथ भवाते लब्धं समं यथा द्विकश्चतुष्कः षट्कः अष्टको दशको वा तदा तत्पर्यन्तवर्ति उत्तरायणमवसेयं, तदेवमुक्तो दक्षिणोत्तरायणपरिज्ञानोपायः, सम्प्रति षडशीत्यधिकेन भागे हृते यच्छेषमवतिष्ठते यदिवा भागासम्भवेन यच्छेषं तिष्ठति तद्गतविधिमाह—

'अयणगए' इत्यादि, यः पूर्वं भागे हृते भागासम्भवे वा शेषीभूतोऽयनगतस्तिथिरा-शिर्वर्त्तते स चतुर्भिर्गुण्यते गुणयित्वा च 'पर्वपादेण' युगमध्ये यानि सङ्ख्यया पर्वाणि चतुर्विंशत्यधिकश-तसङ्ख्यानि तेषां पादेन—चतुर्थेनांशेनैकत्रिंशता इत्यर्थः, (भागो ह्रियते) तथा भागे हृते यल्लब्धं तान्यङ्गुलानि चकारादङ्गुलांशाश्च पौरुष्याः क्षयवृद्ध्योर्ज्ञातव्यानि, दक्षिणायने पदध्रुवराशेरुपरि वृद्धौ उत्तरायणे पदध्रुवराशेः क्षये ज्ञातव्यानीत्यर्थः, अथैवंभूतस्य गुणकारस्य भागहारस्य कथमुत्प-त्तिरिति, उच्यते, यदि षडशीत्यधिकेन चतुर्विंशत्यङ्गुलानि क्षये वृद्धौ वा प्राप्यन्ते ततः एकस्यां तिथौ का वृद्धि क्षयो वा ? अत्रान्त्येन राशिना एककलक्षणेन मध्यमो राशिश्चतुर्विंशतिरूपो गुण्यते, जातः स तावानेव, 'एकेन गुणितं तदेव भवती'ति वचनात्, तत आद्येन राशिना षडशीत्यधिकशतरूपेण भागो ह्रियते, तत्रोपरितनराशेः स्तोकत्वाद् भागो न लभ्यते ततः छेद्यच्छेदकराश्योः षट्केनापवर्त्तना जात उपरितनो राशिश्चतुष्करूपोऽधस्तन एकत्रिंशत् लब्धमेकस्यां तिथौ चत्वार एकत्रिंशदभागाः क्षये वृद्धौ वेति चतुष्को गुणकार उक्तः एकत्रिंशद् भागहार इति, इह यल्लब्धं तान्यङ्गुलानि क्षये वृद्धौ वा ज्ञातव्यानीत्युक्तं, तत्र कस्मिन्नयने कियत्प्रमाणध्रुवराशेरुपरि वृद्धौ कस्मिन् वा अयने किंप्रमाणध्रुवराशौ क्षये इत्येतन्निरूपणार्थमाह—

'दक्खिणवुड्डी' इत्यादि, दक्षिणायने द्विपदात्—पदद्वयस्योपरि अंगुलानां वृद्धिर्ज्ञातव्या, उत्तरायणे चतुर्भ्यः पादेभ्यः सकाशादङ्गुलानां हानि, तत्र युगमध्ये प्रथमे संवत्सरे दक्षिणायने यतो दिवसादारभ्य वृद्धिस्तन्निरूपयति 'सावणे' त्यादि, गाथाद्वयं, युगस्य प्रथमे संवत्सरे श्रावण-मासबहुलपक्षे प्रतिपदि पौरुषी द्विपदा—पदद्वयप्रमाणा ध्रुवा भवति, ततस्तस्याः प्रतिपद आरभ्य प्रतितिथि क्रमेण तावद्वर्द्धते यावन्मासेन—सूर्यमासेन सार्द्धत्रिंशदहोरात्रप्रमाणेन चन्द्रमासापेक्षया एकत्रिंशततिथिभिरित्यर्थः चत्वारि अङ्गुलानि वर्द्धन्ते, कथमेतदवसीयते ? —यथा मासेन सार्द्धत्रिं-शदहोरात्रप्रमाणेन एकत्रिंशत्तिथ्यात्मकेनेत्यत आह—

'एक्कतीसे' त्यादि, यत एकस्यां तिथौ चत्वार एकत्रिंशद्भागा वर्द्धन्ते, एतच्च प्रागेव भावितं, परिपूर्णे तु दक्षिणायने वृद्धि परिपूर्णानि चत्वारि पदानि, ततो मासेन सार्द्धत्रिंशदहोरात्रप्रमाणेन

एकत्रिंशततिथ्यात्ममेकेनेत्युक्तं, तदेवमुक्ता वृद्धि, सम्प्रति हानिमाह- 'उत्तरे'त्यादि, युगस्य प्रथमे संवत्सरे माघमासे बहुलपक्षे सप्तम्या आरभ्य चतुर्भ्यः पादेभ्यः सकाशात् प्रतितिथि एकत्रिंश-द्भागचतुष्टयहानिस्तावदवसेया यावदुत्तरायणपर्यन्ते द्वौ पादौ पौरुषीति ।

एष प्रथमसंवत्सरगतो विधिः, द्वितीये संवत्सरे श्रावणमासे बहुलपक्षे त्रयोदशीमादौ कृत्वा वृद्धिः, माघमासे शुक्लपक्षे चतुर्थीमादिं कृत्वा क्षयः, तृतीये संवत्सरे श्रावणमासे शुक्लपक्षे दशमी वृद्धेरादिः, माघमासे बहुलपक्षे प्रतिपत् क्षयस्यादिः, चतुर्थे संवत्सरे श्रावणमासे बहुलपक्षे सप्तमी वृद्धेरादिः, माघमासे बहुलपक्षे त्रयोदशी क्षयस्यादि, पञ्चमे संवत्सरे श्रावणे मासे शुक्लपक्षे चतुर्थी वृद्धेरादिः, माघमासे शुक्लपक्षे दशमी क्षयस्यादि, एतच्च करणगाथानुपात्तमपि पूर्वाचार्य-प्रदर्शितव्याख्यानादवसितं । सम्प्रत्युपसंहारमाह-

एवमुक्तेन प्रकारेण पौरुष्यां-पौरुषीविषये वृद्धिक्षयौ यथाक्रमं दक्षिणायनेषूत्तरायणेषु वेदितव्यौ, तदेवमक्षरार्थमधिकृत्य व्याख्याताः करणगाथाः । सम्प्रत्यस्य करणस्य भावना क्रियते, कोऽपि पृच्छति-युगादितः आरभ्य पञ्चाशीतितमे पर्वणि पञ्चम्यां तिथौ कतिपदा पौरुषी भवति ?, तत्र चतुरशीतिर्ध्रियते, तस्याश्चाधस्तात् पञ्चम्यां तिथौ पृष्टमिति पञ्च चतुरशीतिश्च पञ्चदशभिर्गुण्यते जातानि द्वादश शतानि षष्ट्यधिकानि तेषु मध्येऽधस्तनाः पञ्च प्रक्षिप्यन्ते जातानि तेषां षडशीत्यधिकेन शतेन भागो ह्रियते लब्धाः षट्, आगतं षड् अयनान्यतिक्रान्तानि सप्तममयनं वर्त्तते, तदगतं च शेषमेकोनपञ्चाशदधिकं शतं तिष्ठति ततश्चतुर्भिर्गुण्यते जातानि पञ्च शतानि षन्नवत्यधिकानि तेषामेकत्रिंशता भागहरणे लब्धाः एकोनविंशतिः, शेषास्तिष्ठन्ति सप्त, तत्र द्वादशांगुलानि पाद इत्येकोनविंशतेः द्वादशभिः, पदं लब्धं, शेषाणि तिष्ठन्ति सप्तांगुलानि, षष्ठं चायनमुत्तरायणं तद् गतं सप्तमं तु दक्षिणायनं वर्त्तते, ततः पदमेकं सप्त चांगुलानि पदद्वयप्रमाणे ध्रुवराशौ प्रक्षिप्यन्ते, जातानि त्रीणि पदानि सप्तांगुलानि, ये च सप्त एकत्रिंशद्भागाः शेषीभूता वर्त्तन्ते तान् यवान् कुर्मः, तत्राष्टौ यवा अंगुले इति ते सप्ताष्टभिर्गुण्यन्ते जातानि षट्पञ्चाशत् तस्या एकत्रिंशता भागे हृते लब्ध एको यवः शेषास्तिष्ठन्ति यवस्य पञ्चविंशतिरेकत्रिंशदभागाः, आगतं पञ्चाशीतितमे पर्व्वणि पञ्चम्यां त्रीणि पदानि सप्तांगुलानि एको यवः एकस्य च यवस्य पञ्चविंशतिरेकत्रिंशद्भागा इत्येतावती पौरुषीति, अपरः कोऽपि पृच्छति-

सप्तनवतितमे पर्वणि पञ्चम्यां तिथौ कतिपदा पौरुषी ?, तत्र षन्नवतिर्ध्रियते, तस्याश्चाधस्तात्पञ्च, षन्नवतिश्च पञ्चदशभिर्गुण्यते जातानि चतुर्दश शतानि चत्वारिंशदधिकानि तेषां मध्येऽधस्तनाः पञ्च प्रक्षिप्यन्ते जातानि चतुर्दश शतानि पञ्चचत्वारिंशदधिकानि, तेषां षडशीत्यधिकेन शतेन भागो ह्रियते लब्धानि सप्त अयनानि शेषं तिष्ठति त्रिच- त्वारिंशदधिकं शतं तच्चतुर्भिर्गुण्यते जातनि पञ्च शतानि द्विसप्तत्यधिकानि तेषा- मेकत्रिंशता भागो ह्रियते लब्धान्यष्टादशांगुलानि तेषां मध्ये द्वादशभिरंगुलैः पदमिति लब्धमेकं पदं षड् अंगुलानि उपरि चांशा उद्धरिताश्चतुर्दशः ते यवानयनार्थमष्टभिर्गुण्यन्ते जातं द्वादशोत्तरं शतं तस्यैकत्रिंशता भागे हृते लब्धास्त्रयो यवाः शेषास्तिष्ठन्ति यवस्य एकोनविंश- तिरेकत्रिंशद्भागाः, सप्त चाय- नान्यतिक्रान्तानि अष्टमं चायनमुत्तरायणं उत्तरायणे च पदचतुष्टयरूपाद् ध्रुवराशेर्हानिर्वक्तव्या

तत् एकं पदं सप्तांगुलानि त्रयो यवा एकस्य च यवस्य एकोनविंशति- रेकत्रिंशदभागा इति पदचतुष्टयात् पात्यते, शेषं तिष्ठति द्वे पदे चत्वार्यगुलानि चत्वारो यवाः एकस्य च यवस्य द्वादश एकत्रिंशद्भागाः, एतावती युगे आदित आरभ्य सप्तनवतितमे पर्व्वणि पञ्चम्यां तिथौ पौरुषीति, एवं सर्वत्रं भावनीयं।

सम्प्रति पौरुषीपरिमाणतोऽयनगतपरिमाणज्ञापनार्थमियं करणगाथा—'वुड्ढी वे'त्यादि, पौरुष्यां यावती वृद्धिरुपलब्धा ततः सकाशाद्दिवसगतेन प्रवर्त्तमानेन च त्रैराशिककरणानुसारेण यल्लब्धं तत् अयनगतं—अयनस्य तावत्प्रमाणं गतं वेदितव्यं, एष करणगाथाक्षरार्थः, भावना त्वियम्—तत्र दक्षिणायने पदद्वयस्योपरि चत्वारि अङ्गुलानि वृद्धौ दृष्टानि, ततः कोऽपि पृच्छति—किं गतं दक्षिणायनस्य ?, अत्र त्रैराशिककर्मावतारो—यदि चतुर्भिरङ्गुलस्य एकत्रिंशद्भागैरेका तिथिर्लभ्यते ततश्चतुर्भिरंगुलैः कति तिथीर्लभामहे ?, अत्रान्त्यो राशिरंगुलरूप एकत्रिंशद्भागकरणार्थमेकत्रिंशता गुण्यते जातं चतुर्विंशत्यधिकं शतं तेन मध्यो राशिर्गुण्यते जातं तदेव चतुर्विंशत्यधिकं शतं तस्य चतुष्करूपेणादिराशिना भागो ह्रियते लब्धा एकत्रिंशत्तिथयः, आगतं दक्षिणायने एकत्रिंशत्तमायां तिथौ चतुरंगुला पौरुष्यां वृद्धिरिति।

तथा उत्तरायणे पदचतुष्टयाद्गुलाष्टकहीनं पौरुष्यामुपलभ्य कोऽपि पृच्छति—किं गतमुत्तरायणस्य ?, अत्रापि त्रैराशिकं—यदि चतुर्भिरंगुलस्य एकत्रिंशद्भागैरेका तिथिर्लभ्यते ततोऽष्टभिरंगुलैर्हीनैः कति तिथयो लभ्यन्ते ?, अत्रान्त्यो राशिरेकत्रिंशद्भाग- करणार्थमेकत्रिंशता गुण्यते जाते द्वे शते अष्टचत्वारिंशदधिके ताभ्यां मध्यो राशिरेककरूपो गुण्यते जाते एव द्वे शते अष्टचत्वारिंशदधिके तयोराद्येन राशिना चतुष्करूपेण भागहरणं लब्धा द्वाषष्टिः, आगतमुत्तरायणे द्वाषष्टितमायां तिथौ अष्टावंगुलानि पौरुष्या हीनानीति। अथोपसंहारवाक्यमाह- एतेषामनन्तरोक्तानां पूर्ववर्णितानां पदानामियं—वक्ष्यमाणा संग्रहणीगाथा।

तद्यथा—'जोगो देवय तारग्ग' इत्यादि, प्राग्व्याख्यातस्वरूपा, अस्या निगमनार्थं पुनरुपन्यासत्वेन न पुनरुक्तिर्भावनीयेति, यत्तु पूर्वमुद्देशसमये सन्निपातद्वारं सूत्रे साक्षादुपात्तं सम्प्रति च छायाद्वारं तद्विचित्रत्वात् सूत्रकाराणां प्रवृत्तेः, पूर्णिमामावास्याद्वारे सन्निपातद्वारमन्तर्भावितं छायाद्वारं च नेतृद्वारानुयोग्यपि भिन्नस्वरूपतया पृथक्त्वेन विवक्षितमिति ध्येयम्।

अथास्मिन्नेवाधिकारे षोडशभिर्द्वारैरर्थान्तरप्रतिपादनाय गाथाद्वयमाह—

मू. (३३४) *हिट्ठिं ससिपरिवारो मंदरऽबाधा तहेव लोगंते।*
*धरणितलाओ अबाधा बाहिं च उद्धमुहे॥*

वृ. अधः चन्द्रसूर्ययोस्तारामण्डलं उपलक्षणात् समपंक्ती उपरि च अणुं समं वेत्यादि वक्तव्यं १, शशिपरिवारो वक्तव्यः २ ज्योतिश्चक्रस्य मन्दरतोऽबाधा वक्तव्या ३ तथैव लोकान्तज्योतिश्चक्रयोरबाधा ४ धरणितलात् ज्योतिश्चक्रस्याबाधा ५ किञ्च—नक्षत्रमन्तः—चारक्षेत्रस्याभ्यन्तरे किं बहि किं चोर्ध्वं किञ्चाधश्चरतीति वक्तव्यं ६।

मू. (३३५) संठाणं च पमाणं वहंति सीहगई इड्ढिमंता य।
तारंतरऽग्गमहिसी तुडिअ पहु ठिई अ अप्पबहू॥

वृ. ज्योतिष्कविमानानां संस्थानं वक्तव्यं ७ एषामेव प्रमाणं वक्तव्यं ८ चन्द्रादीनां विमानानि

कियन्तो वहन्तीति वक्तव्यं ९ एषां मध्ये के शीघ्रगतयः के मन्दगतय इति वक्तव्यं १०, एषां मध्ये केऽल्पर्द्धयो महर्द्धयश्चेति वक्तव्यं ११ ताराणां परस्परमन्तरं वक्तव्यं १२ अग्रमहिष्यो वक्तव्याः १३, तुटिकेन—अभ्यन्तरपर्षत्सत्कस्त्रीजनेन सह प्रभुः—भोगं कर्तुं समर्थश्चन्द्रादिर्नवा इति वक्तव्यं १४ स्थितिरायुषो वक्तव्या १५ ज्योतिष्काणामल्पबहुत्वं वक्तव्यं १६ इति।

**मू. (३३६)** *अत्थि णं भंते ! चंदिमसूरिआणं हिट्ठिंपि तारारूवा अणुंपि तुल्लावि समेवि तारारूवा अणुंपि तुल्लावि उप्पिंपि तारारूवा अणुंपि तुल्लावि ?, हंता ! गो० ! तं चेव उच्चारेअव्वं*

**वृ.** अथ प्रथमं द्वारं पिपृच्छिषुराह—'अत्थि ण'मित्यादि, अस्त्येतद् भगवन् ! चन्द्रसूर्याणां देवानां 'हिट्ठिंपि'त्ति क्षेत्रापेक्षया अधस्तना अपि तारारूपः तारा विमानाधिष्ठातारो देवा द्युतिविभवादिकमपेक्ष्य केचिदणवोऽपि—हीना अपि भवन्ति केचित्तुल्या अपि—सदृशा अपि भवन्ति, अधिकत्वं तु स्वस्वेन्द्रेभ्यः परिवारदेवानां न सम्भवतीति न पृष्टं, तथा समेऽपीति चन्द्रादिविमानैः क्षेत्रापेक्षया समाः—समश्रेणिस्थिता अपि तारारूपाः—ताराविमानाधिष्ठातारो देवास्तेऽपि चन्द्रसूर्याणां देवानां द्युतिविभवादिकमपेक्ष्य केचिदणवोऽपि केचित्तुल्या अपि भवन्ति तथा चन्द्रादिविमानानां क्षेत्रापेक्षया उपरि—उपरिस्थितास्तारारूपाः—ताराविमानाधिष्ठातारो देवास्तेऽपि चन्द्रसूर्याणां देवानां द्युतिविभवादिकमपेक्ष्य केचिदणवोऽपि केचित्तुल्या अपि भवन्ति, अत्र काकुपाठात् प्रश्नावगमः, एवं गौतमेन पृष्टे भगवानाह—गौतम ! हन्तेति यदेव पृष्टं तत्सर्वं तथैवास्ति अतस्तदेवोच्चारणीयं।

**मू. (३३७)** *से केणट्ठेणं भंते ! एवं वुच्चइ—अत्थि णं० जहा णं तेसिं देवाणं तवनियमबंभचेराणि ऊसिआइं भवंति तहा तहा णं तेसिं णं देवाणं एवं पण्णायए तंजहा—अणुत्ते वा तुल्लत्ते, वा, जहा जहा णं तेसिं देवाणं तवनियमबंभचेराणि नो ऊसिआइं भवंति तहा तहा णं तेसिं देवाणं एवं (नो) पण्णायए, तं० अणुत्ते वा तुल्लत्ते वा।*

**वृ.** अत्रार्थे हेतुप्रश्नायाह—अथ केनार्थेन भगवन्नेवमुच्यते—'अत्थि ण'मित्यादिना, तदेव सूत्रमनुस्मरणीयं, अत्रोत्तरमाह—यथा यथा तेषां—तारारूपविमानाधिष्ठातॄणां देवानां प्राग्भवे तपोनियमब्रह्मचर्याण्युच्छ्रितानि—उत्कटानि भवन्ति, तत्र तपः—अनशनादि द्वादशविधं नियमः—शौचादि ब्रह्मचर्यं—मैथुनविरति, अत्र च शेषव्रतानामनुपदर्शनमुत्कटव्रतधारिणा ज्योतिष्केषु उत्पादासम्भवात्, उच्छ्रितानीत्युपलक्षणं तेन यथा यथा अनुच्छ्रितानीत्यपि बोध्यं, अन्यथोत्तरसूत्रे वक्ष्यमाणमणुत्वं नोपपद्येत, यच्छब्दगर्भितवाक्यस्य तच्छब्दगर्भितवाक्यसापेक्षत्वादुत्तर-वाक्यमाह— तथा तथा तेषां देवानामेवं प्रज्ञायते—ज्ञायते इति, तद्यथा—अणुत्वं वा तुल्यत्वं वा, न चैतदनुचितं, दृश्यते हि मनुष्यलोकेऽपि केचिज्जन्मान्तरोपचिततथाविधपुण्यप्राग्भारा राजत्वमप्राप्ता अपि राज्ञा सह तुल्यविभवा इति, अत्र व्यतिरेकमाह—यथा यथा तेषां देवानां—ताराविमानाधिष्ठातॄणां प्राग्भवार्जितान्युच्छ्रितानि तपोनियमब्रह्मचर्याणि न भवेयुस्तथा तथा तेषां देवानां नो एवं प्रज्ञायते—अणुत्वं वा तुल्यत्वं वा, अभियोगिककर्मोदयेनातिनिकृष्टत्वात्, अयमर्थः—अकामनि-र्जरादियोगाद्देवत्वप्राप्तावपि देवर्द्धेरलाभेन चन्द्रसूर्येभ्यो द्युतिविभवाद्यपेक्षयाऽणुएकैकस्य भदन्त चन्द्रस्य कियन्तो तेषां तैस्सह तुल्यत्वमिति।

**मू. (३३८)** *एगमेगस्स णं भंते ! चंदस्स केवइआ महग्गहा परिवारो केवइआ नक्खत्ता*

*परियारो केवइया तारागणकोडाकोडीओ पन्नत्ताओ ?, गो– अट्ठासीइ महग्गहा परिवारो अट्ठावीसं नक्खत्ता परिवारो छावट्ठिसहस्साइं नव सया पन्नत्तरा तारागणकोडाकोडीओ पन्नत्ता ।*

**वृ.** अथ द्वितीयं द्वारं प्रश्नयति–'एगमेगस्स णं भंते !'इत्यादि, एकैकस्य भदन्त चन्द्रस्य कियन्तो महाग्रहाः परिवारः तथा कियन्ति नक्षत्राणि परिवारः तथा कियत्यस्तारागण- कोटाकोट्यः परिवारभूताः प्रज्ञप्ताः ?, भगवानाह–गौतम ! अष्टाशीतिर्महाग्रहाः परिवारोऽ- ष्टाविंशतिर्नक्षत्राणि परिवारः षट्षष्टिसहस्राणि नव शतानि पञ्चसप्तत्यधिकानि तारागणकोटाकोटीनां परिवारभूतानि प्रज्ञप्तानि, यद्यप्यत्र एते चन्द्रस्यैव परिवारतयोक्तस्तथापि सूर्यस्यापीन्द्रत्वादेते एव परिवातयाऽवगन्तव्याः, समवायाङ्गे जीवाभिगमसूत्रवृत्यादौ तथा दर्शनात् ।

***मू. (३३९)** मंदरस्स णं भंते ! पव्वयस्स केवइआए अबाहाए जोइसं चारं चरइ ?, गो० इक्कारसहिं इक्कवीसेहिं जोअणसएहिं अबाहाए जोइसं चारं चरइ, लोगंताओ णं भंते ! केवइआए अबाहाए जोइसे पन्नत्ते ?, गो० एक्कारस एक्कारसेहिं जोअणसएहिं अबाहाए जोइसे पन्नत्ते ! धरणितलाओ णं भंते !, सत्तहिं नउएहिं जोअणसएहिं जोइसे चारं चरइत्ति, एवं सूरविमाणे अट्ठिहिं सएहिं, चंदविमाणे अट्ठिहिं असीएहिं, उवरिल्ले तारारूवे नवहिं जोअणसएहिं चारं चरइ*

*जोइसस्स णं भंते ! हेट्ठिल्लाओ तलाओ केवइआए अबाहाए सूरविमाणे चारं चरइ ?, गो० दसहिं जोअणेहिं आबाहाए चारं चरइ, एवं चंदविमाणे नउईए जोअणेहिं चारं चरइ, उवरिल्ले तारारूवे दसुत्तरे जोअणसए चारं चरइ, चंदविमाणाओ वीसाए जोअणेहिं उवरिल्ले णं तारारूवे चारं चरइ ।*

**वृ.** अथ तृतीयं द्वारं पृच्छति–'मंदरस्स णं भंते !' इत्यादि, मन्दरस्य भदन्त ! पर्वतस्य कियत्याऽधया–अपान्तरालेन ज्योतिश्चक्रं चारं चरति ?, भगवानाह–गौतम ! जगतस्वभावात् एकादशभिरेकविंशत्यधिकैर्योजनशतैरित्येवंरूपयाऽबाधया ज्योतिषं चारं चरति, किमुक्तं भवति ?–मेरुतश्चक्रवालेनैकविंशत्यधिकान्येकादशयोजनशतदानि मुक्त्वा चलं ज्योतिश्चक्रं तारारूपं चारं चरति, प्रक्रमाज्जम्बूद्वीपगतमवसेयं, अन्यथा लवणसमुद्रादिज्योतिश्चक्रस्य मेरुतो दूरवर्त्तित्वेन उक्तप्रमाणासम्भवः, पूर्वं तु सूर्यचन्द्रवक्तव्यताधिकारे अबाधाद्वारे सूर्यचन्द्रयोरेव मेरुतोऽबाधा उक्ता साम्प्रतं तारापटलस्येति न पूर्वापरविरोध इति ।

अथ स्थिरं ज्योतिश्चक्रमलोकतः कियत्या अबाधया अर्वाक् अवतिष्ठत इति पिपृच्छिषुश्चतुर्थं द्वारमाह–'लोगन्ताओ ण' मित्यादि, लोकान्ततो–अलोकादितोऽर्वाक् कियत्या अबाधया प्रक्रमात् स्थिरं ज्योतिश्चक्रं प्रज्ञप्तं ?, भगवानाह–गौतम ! जगत्स्वभावात् एकादशभिरेकादशाधिकैर्योजनशतैरबाधया ज्योतिषं प्रज्ञप्तं, प्रक्रमात् स्थिरं बोध्यम्, चरज्योतिश्चक्रस्य तत्राभावादिति

अथ पञ्चमं द्वारं पृच्छति–'धरणितलाओ णं भंते' ! इत्यनेन तत्सूत्रैकदेशेन परिपूर्णप्रश्नसूत्रं बोध्यं, तच्च 'धरणित. ! उद्धं उप्पइत्ता केवइआए अबाहाए हिट्ठिल्ले जोइसे चारं चरइ ?, गो० !' इत्यन्तं, वस्त्वेकदेशस्य वस्तुस्कन्धस्मारकत्वनियमात्, तत्रायमर्थः–धरणितलात्– समयप्रसिद्धात् समभूतलभूभागादूर्ध्वमुत्पत्य कियत्याऽबाधया अधस्तनं ज्योतिषं तारापटलं चारं चरति ?, भगवानाह–गौतम ! सप्तभिर्नवतैः–नवत्यधिकैर्योयनशतैरित्येवंरूपया अबाधया अधस्तनं ज्योतिश्चक्रं चारं चरति । अथ सूर्यादिविषयमबाधास्वरूपं संक्षिप्य भगवान् स्वयमेवाह–'एवं

सूरविमाणे अट्ठहिं सएहिं चन्द'० एवमुक्तन्यायेन यथा समभूमिभागादधस्तनं ज्योतिश्चक्रं नवत्यधिकसप्त- योजनशतैस्तथा समभूमिभागादेव सूर्यविमानमष्टभिर्योजनशतैश्चन्द्र-विमानमशीत्यधिकैरष्टभि- र्योजनशतैः उपरितनं तारारूपं नवभिर्योजनशतैश्चारं चरति ।

अथ ज्योतिश्चक्रचारक्षेत्रापेक्षया अबाधाप्रश्नमाह–'जोइसस्स णं'मित्यादि, ज्योतिश्चक्रस्य दशोत्तरयोजनशतबाहल्यस्याधस्तनात् तलात् कियत्या अबाधया सूर्यविमानं चारं चरति ?, गौतम! दशभिर्योजनैरित्येवंरूपया अबाधया सूर्यविमानं चारं चरति, अत्र च सूत्रे समभूमागादूर्ध्वं नवत्यधिकसप्तयोजनातिक्रमेण ज्योतिश्चक्रबाहल्यमूलभूत आकाशप्रदेशप्रतरः सोऽवधिर्मन्तव्यः, एवंचन्द्रादिसूत्रेऽपि, एवं चन्द्रविमानं नवत्या योजनैरित्येवंरूपया अबाधया चारं चरति, तथोपरितनं तारारूपं दशाधिके योजनशते ज्योतिश्चक्रबाहल्यप्रान्ते इत्यर्थ चारं चरति । अथ गतार्थमपि शिष्यव्युत्पादनाय सूर्यादीनां परस्परमन्तरं सूत्रकृदाह– सूर्यविमानात् चन्द्रविमानं अशीत्या योजनैश्चारं चरति, सूर्यविमानात् योजनशतेऽतिक्रान्ते उपरितनं तारापटलं चारं चरति, चन्द्रविमानात् विंशत्या योजनैरुपरितनं तारापटलं चारं चरति, अत्र सूचामात्रत्वात् सूत्रेऽनुक्तापि ग्रहाणां नक्षत्राणां च क्षेत्रविभागव्यवस्था मतान्तराश्रिता संग्रहणिवृत्यादौ दर्शिता लिख्यते–

॥१॥ 'शतानि सप्त गत्वोर्ध्वं, योजनानां भुवस्तलात् ।
नवतिं च स्थितास्ताराः, सर्वाधस्तान्नभस्तले ॥
॥२॥ तारकापटलाद् गत्वा, योजनानि दशोपरि ।
सूराणां पटलं तस्मादशीतिं शीतरोचिषाम् ॥
॥३॥ चत्वारि तु ततो गत्वा, नक्षत्र पटलं स्थितम् ।
गत्वा ततोऽपि चत्वारि, बुधाना पटलं भवेत् ॥
॥४॥ शुक्राणां च गुरूणां च, भौमानां मन्दसंज्ञिनाम् ।
त्रीणि त्रीणि च गत्वोर्ध्वं, क्रमेण पटलं स्थितम् ॥' इति ॥

अथ षष्ठं द्वारं पृच्छन्नाह–

*मू. (३४०) जंबुद्दीवे णं दीवे अट्ठावीसाए नक्खत्ताणं कयरे नक्खत्ते सव्वब्भंतरिल्लेणं चारं चरइ ?, कयरे नक्खत्ते सव्वबाहिरं चारं चरइ ?, कयेर सव्वहिट्ठिल्लं चारं चरइ, कयरे सव्वउवरिल्लं चारं चरइ ?, गो० ! अभिई नक्खत्ते सव्वब्भंतरं चारं चरइ, मूलो सव्वबाहिरं चारं चरइ, भरणी सव्वहिट्ठिल्लगं साई सव्वुवरिल्लगं चारं चरइ । चंदविमाणे णं भंते ! किंसंठिए पन्नत्ते ?, गो० ! अद्धकविट्ठसंठाणसंठिए सव्वफालिआमए अब्भुग्गयमुसिए एवं सव्वाइं नेअव्वाइं, चंदविमाणे णं भंते ! केवइयं आयामविक्खंभेणं केवइयं बाहल्लेणं ?, गो० !*

**वृ.** जम्बूद्वीपे भदन्त ! द्वीपेऽष्टाविंशतेर्नक्षत्राणां मध्ये कतरन्नक्षत्रं सर्वाभ्यन्तरं–सर्वेभ्यो मण्डलेभ्योऽभ्यन्तरः सर्वाभ्यन्तरः तं, अनेन द्वितायदिमण्डलचारव्युदासः, चारं चरति ?, तथा कतरन्नक्षत्रं सर्वबाह्यं–सर्वतो नक्षत्रमण्डलिकाया बहिश्चारं चरति–भ्रमति, तथा कतरन्नक्षत्रं सर्वेभ्योऽधस्तनं चारं चरति, तथा कतरन्नक्षत्रं सर्वेषां नक्षत्राणामुपरितनं चारं चरति, सर्वेभ्यो नक्षत्रेभ्य उपरिचारीत्यर्थः, भगवानाह–गौतम ! अभिजिन्नक्षत्रं सर्वाभ्यन्तरं चारं चरति, यद्यपि सर्वाभ्यन्तरमण्डलचारीण्यभिजिदादिद्वादशनक्षत्राण्यभिहितानि तथापीदं शेषैकादशनक्षत्रापेक्षया

मेरुदिशि स्थितं सत् चारं चरतीति सर्वाभ्यन्तरचारीत्युक्तं।

तथा मूलो—मूलनक्षत्रं सर्वबाह्यं चारं चरति, यद्यपि पञ्चदशमण्डलाद्बहिश्चारीणि मृगशिरःप्रभृतीनि षड् नक्षत्राणि पूर्वाषाढयोश्चतुर्णा तारकाणां मध्ये द्वे द्वे च तारे उक्तानि तथाप्येतदपरबहिश्चारिनक्षत्रापेक्षया लवणदिशि स्थितं सच्चारं चरतीति सर्वबहिश्चारीत्युक्तं, तथा भरणीनक्षत्रं सर्वाधस्तनं चारं चरति, तथा स्वातिनक्षत्रं सर्वोपरितनं चारं चरति, अयं भावः—दशोत्तरशतयोजनरूपे ज्योतिश्चक्रबाहल्ये यो नक्षत्राणां क्षेत्रविभागश्चतुर्योजन-प्रमाणस्तदपेक्षयोक्तनक्षत्रयोः क्रमेणाद्यादिकमस्तीत्याहु'रिति।

अथ सप्तमं द्वारं पृच्छति—'चन्दविमाणे ण'मित्यादि, चन्द्रविमानं भदन्त ! किं संस्थितं—किंसंस्थानं प्रज्ञप्तम् ?, गौतम ! उत्तानीकृतार्द्धकपित्थफलसंस्थानसंस्थितं सर्वस्फटिकमयं 'अभ्युद्गतोत्सृत'मित्यनेन विजयद्वारपुरस्थप्रकण्ठकगतप्रासादवर्णकः नेतव्यानि संस्थाननैयत्यबुद्धिं प्रापणीयानि, ननु यदि सर्वाण्यपि ज्योतिष्कविमानान्यर्द्धीकृतकपित्थाकाराणि ततश्चन्द्रसूर्यविमानानान्यतिस्थूलत्वादुदयकालेऽस्तमयकाले वा यदिवा तिर्यक् परिभ्रमन्ति कस्मात्तथाविधानानि नोपलभ्यन्ते ?, यत्तु शिरस उपरि वर्त्तमानानां तेषामधस्थायिजनेषु वर्तुलतया प्रतिभासः अर्द्धकपित्थस्य शिरस उपरि दूरमवस्थापितस्य परभागादर्शनतो वर्तुलतया दृश्यमानत्वात् सोऽपि न सम्यगभावमश्नुते पूर्णवृत्तस्यापि तथा दर्शनात्।

*मू. (३४१)* *छप्पन्नं खलु भाए विच्छिन्नं चंदमंडलं होइ।*
*अट्ठावीसं भाए बाहल्लं तस्स बोद्धव्वं।*

*मू. (३४२)* *अडयालीसं भाए विच्छिन्नं सूरमंडलं होइ।*
*चउवीसं खलु भाए बाहल्लं तस्स बोद्धव्वं॥*

*मू. (३४३)* *दो कोसे अ गहाणं नक्खत्ताणं तु हवइ तस्सद्धं।*
*तस्सद्धं ताराणं तस्सद्धं चेव बाहल्लं॥*

वृ. अत्र पद्येनोत्तरसूत्रमाह—गौतम ! खल्विति पदं निश्चयेऽलङ्कारे वा षट्-पञ्चाशदेकषष्टिभागान् योजनस्य विस्तीर्णं चन्द्रमण्डलं भवति, अयमर्थः—एकस्य प्रमाणांगुलयोजनस्यैकषष्टिभागीकृतस्य षट्पञ्चाशता भागैः समुदितैर्यावत्प्रमाणं भवति तावत्प्रमाणोऽस्य विस्तार इत्यर्थः, वृत्तवस्तुनः सदृशायामविष्कम्भत्वात्, एवमेवोत्तरसूत्रं, तेनायामोऽपि तावानेव, परिक्षेपस्तु स्वयमभ्युह्यः, वृत्तस्य सविशेषस्त्रिगुणः परिधिरिति प्रसिद्धेः, बाहल्यं चाष्टाविंशतिभागान् यावत्तस्य बोद्धव्यं, षट्पञ्चाशद्भागानामर्द्धे एतावत एव लाभात्, सर्वेषामपि ज्योतिष्क विमानानां स्वस्वव्यासप्रमाणात् अर्द्धप्रमाणबाहल्यानीति वचनात्, तथा अष्टचत्वारिंशतं भागान् विस्तीर्णं सूर्यमण्डलं भवति, चत्वारिंशद् भागान् यावद् बाहल्यं तस्य बोद्धव्यं, तथा द्वौ क्रोशौ च ग्रहाणां तदेवार्द्धं योजनमित्यर्थ, तथा नक्षत्राणां तु भवति तस्यार्द्धं—एकं क्रोशमित्यर्थः।

तस्यार्द्धं क्रोशार्द्धमित्यर्थः ताराणां विमानानि विस्तीर्णानि, ग्रहदिविमानानां मध्ये यस्य यो व्यासस्तस्य तदर्द्धं बाहल्यं भवति, यथा क्रोशद्वयस्यार्द्धः क्रोशो ग्रहविमानबाहल्यं, क्रोशार्द्धं नक्षत्रविमानबाहल्यं, क्रोशतुर्यांशस्ताराविमानबाहल्यमिति, एतच्चोत्कृष्टस्थितिकतारादेव विमानमाश्रित्योक्तं, यत्पुनर्जघन्यस्थितिकतारादेवविमानं तस्यायामविष्कम्भपरिमाणं पञ्चधनुःशतानि

उच्चत्वपरिमाणमर्द्धतृतीयानि धनुःशतानीति तत्वार्थभाष्ये।

अथ नवमं द्वारं प्रश्नविषयीकुर्वन्नाह-

*मू. (३४४) चंदविमाणेणं भंते! कति देवसाहस्सीओ परिवहंति?, गो०! सोलस।*

*चंदविमाणस्स णं पुरत्थिमे णं सेआणं सुभगाणं सुप्पभाण संखतलविमलनिम्मलदधिघणगोखीरफेणरयणिगरप्पगासाणं थिरलट्ठपउट्ठवट्टपीवरसुसिलिट्ठविसिट्ठतिक्खदाढाविडंबिअमुहाणं रत्तुप्पलपत्तमउयसूमालतालुजीहाणं महुगुलिअपिंगलक्खाणं पीवरवरोरुपडिपुण्णविउलखंधाणं मिउविसयसुहुमलक्खणपसत्थवरवण्णकेसरसडोवसोहिआणं ऊसिअसुनमियसुजायअप्फोडिअलंगूलाणं वइरामयणक्खाणं वइरामयदाढाणं वइरामयदंताणं तवणिज्जजीहाणं तवणिज्जतालुआणं तवणिज्जजोत्तगसुजोइआणं कामगमाणं पीइगमाणं मनोगमाणं मनोरमाणं अमिअगईणं अमिअबलवीरिअपुरिसक्कारपरक्कमाणं महया अप्फोडिअसीहणयबोलकलकलरवेणं महुरेणं मणहरेणं पूरेंता अंबरं दिसाओ अ सोभयंता चत्तारि देवसाहस्सीओ सीहरूवधारीणं पुरत्थिमिल्लं बाहं वहंति।*

*चंदविमाणस्स णं दाहिणेणं सेआणं सुभगाणं सुप्पभाणं संखतलविमलनिम्मलदधिघनगोखरफेणरययणिगरप्पगासाणं वइरामयकुंभजुअलसुट्ठिअपीवरवर- वइरसोंडवट्टि- अदित्तसुरतपउमप्पगासाणं अब्भुण्णयमुहाण तवणिज्जविसालकण्णचंचलचलंतवि- मलुज्जलाणं महुवण्णभिसंतणिद्धपत्तलनिम्मलतिवण्णमणिरयणलोअणाणं अब्भुग्गयम- उलमल्लिआधवलसरिससंठिअणिव्वणदढकसिणफालिआमयसुजायदन्तमुसलोवसोभिआणं कंचणकोसीपविट्ठदन्तग्गविमलमणिरयणरुइलपेरंतचित्तरूवगविराइआणं तवणिज्जविसाल- तिलगप्पमुहपरिमण्डिआणं नानामणिरयणमुद्धगेविज्जबद्धगलयवरभूसणाणं वेरुलिअविचित्तदण्ड- निम्मलवइरामयतिक्खलट्ठअंकुसकुंभजुअलयंतरोडिआणं तवणिज्जसुबद्धकच्छदप्पिअबलुद्धराणं विमुलघणमण्डलवइरामयलालाललियतालणं नानामणिरयणघण्टपासगरजतामयबद्धलज्जुलंबिअघंटाजुअलमहुरसरमणहराणं अल्लीणपमाणजुत्तवट्टिअसुजायलक्खणपसत्थरमणिज्जवालगत्तपरिपुंछणाणं उवचिअपडिपुण्णकुम्मचलणलहुविक्कमाणं अंकमयणक्खाणं तवणिज्जजीहाणं तवणिज्जतालुआणं तवणिज्जजोत्तगसुजोइआणं कामगमाणं पीइगमाणं मणोगमाणं मणोरमाणं अमिअगईणं अमिअबलवीरिअपुरिसक्कारपरक्कमाणं महयागंभीरगुलुगुलाइतरवेणं महुरेणं पूरेंता अंबरं दजिसाओ अ सोभयंता चत्तारि देवसाहस्सीओ गयरूवधारीणं देवाणं दक्खिणिल्लं बाहं परिवहंतिति।*

*चंदविमाणस्स णं पच्चत्थिमेणं सेआणं सुभगाणं सुप्पभाणं चलचवलककुहसालीणं घणनिचिअसुबद्धलक्खणुण्णयईसिआणयवसभोट्ठाणं चंकमिअललिअपुलिअचलचवलगव्विअगईणं सन्नतपासाणं संगतपासाणं सुजायपासाणं पीवरवट्टिअसुसंठिअकडीणं ओलंबपलंबलक्खणपमाणजुत्तरमणिज्जवालगण्डाणं समखुरवालिधाणाणं समलिहिअसिंगतिक्खग्गसंगयाणं तणुसुहुमसुजायणिद्धलोमच्छविधराणं उवचिअमंसलविसालपडिपुण्णखंधपएससुंदराणं वेरुलिअभिसंतकडक्खसुनिरिक्खणाणं जुत्तपमाणपहाणलक्खणपसत्थरमणिज्जगग्गरगल्लसोभिआणं घरघरगसुसद्दबद्धकंठपरिमंडिआणं नानामणिकणगरयणघंटिआवेगच्छिगसुकयमालिआणं वरघंटाग-*

*लयमालुज्जलसिरिधराणं पउमुप्पलसगलसुरभिमालाविभूसिआणं वइरखुराणं विविहविक्खुराणं फालिआमयदंताणं तवणिज्जजीहाणं तवणिज्जतालुआणं तवणिज्जजोत्तगसुजोइआणं कामगमाणं पीइगमाणं मणोगमाणं मनोरमाणं अमिअगईणं अमिअबलवीरिअपुरिसक्कारपरक्कमाणं महया-गज्जिअगंभीररवेणं महुरेणं मणहरेणं पूरेंता अंबरं दिसाओ अ सभयंता चत्तारि देवसाहस्सीओ वसहरूवधारीणं देवाणं पच्चत्थिमिल्लं बाहं रिवहंतिति ।*

*चंदविमाणस्स णं उत्तरेणं सेआणं सुभगाणं सुप्पभाणं तरमल्लिहायणाणं हरिमेलमउल-मल्लिअच्छाणं चंचुच्चिअललिअपुलिअचलचवलचंचलगईणं लंघणवग्गणधावणधोरणतिवइजइण-सिक्खिअगईणं ललंतलामगललायवरभूसणाणं सन्नयपासाणं संगयपासाणं सुजायपासाणं पीवर-वट्टिअसुसंठिअकडीणं ओलंबपलंबलक्खणपमाणजुत्तरमणिज्जचालपुच्छाणं तणुसुहुमसुजा-यणिद्धलोमच्छविहराणं मिउविसयसुहुमलक्खणपसत्थविच्छिण्णकेसरवालिहराणं ललंतथासगलला-डवरभूसणाणं मुहमंडगओचूलगचामरथासगपरिमण्डिअकडीणं तवणिज्जखुराणं तवणिज्जजीहाणं तवणिज्जतालुआणं तवणिज्जजोत्तगसुजोइआणं कामगमाणं जाव मनोरमाणं अमिअगईणं अमिअ-बलवीरिअपुरिसक्कारपरक्कमाणं महयाहयहेसिअकिलकिलाइअरवेणं मणहरेणं पूरेंता अंबरं दिसाओ अ सोभयंता चत्तारि देवसाहस्सीओ हयरूवधारीणं देवाणं उत्तरिल्लं बाहं परिवहंतित्ति । गाहा—*

वृ. चन्द्रविमानं भदन्त ! कति देवसहस्राणि परिवहन्ति ?, गौतम ! षोडश देवसहस्राणि परिवहन्ति, एकैकस्यां दिशि चतुश्चतुःसहस्राणां सद्भावात्, इयमत्र भावना—इह चन्द्रादीनां विमानानि तथा जगत्स्वभावात् निरालम्बनानि वहमानान्यवतिष्ठन्ते, केवलं ये आभियोगिका देवास्ते तथाविधनामकर्मोदयवशात् समानजातीयानां हीनजातीयाना वा देवानां निजम-हिमातिशयदर्शनार्थमात्मानं बहुमन्यमानाः प्रमोदभृतः सततवहनशीलेषु विमानेष्वधः स्थित्वा २ केचित् सिंहरूपाणि केचिद् गजरूपाणि केचिद्वृषभरूपाणि केचित्तुरगमरूपाणि कृत्वा तानि विमानानि वहन्ति, न चैतदनुपपन्नं, तथाहि यथेह कोऽपि तथाविधाभियोग्यनामकर्मोपभोगभागी दासोऽन्येषां समानजातीयानां हीनजातीयानां वा पूर्वपरिचितानामेवमहं नायकस्यास्य सुप्रसिद्धस्य सम्मत इत निजमाहात्म्यातिशयदर्शनार्थं सर्वमपि स्वोचितं कर्म प्रमुदितः करोति तथा आभियोगिका अपि देवास्तथाविधाभि- योग्यनामकर्मोपभोगभाजः समानजातीयानां हीनजातीयानां वा देवानामन्येषामेवं वयं समृद्धा यत्सकललोकप्रसिद्धानां चन्द्रादीनां विमानानि वहाम इत्येवं निजमाहात्म्यातिशयदर्शनार्थमात्मानं बहुमन्यमाना उक्तप्रकारेण चन्द्रादिविमानानि वहन्तीति ।

अथैषामेव षोडशसहस्राणां व्यक्तिमाह—'चन्दविमाण' इत्यादि, चन्द्रविमानस्य पूर्वस्यां—यद्यपि जङ्गमस्वभावेन ज्योतिष्काणां सूर्योदयाङ्कितैव पूर्वा न संभवति चारानुसारेण परापरदिक्परा-वर्त्तसम्भवात् तथापि जिगमिषितदिशं गच्छतोऽभिमुखा दिक् पूर्वेति व्यवह्रियते, यथा क्षुतदिक्, सिंहरूपधारिणां देवानां चत्वारि सहस्राणि पौरस्त्यां बाहां—पूर्वपार्श्वं वहन्तीति सम्बन्धः, तेषामेव विशेषायाह—'सेआण' मित्यादि, श्वेतानां—अश्वेतवर्णानां तथा सुभगानां—सौभाग्यवतां जनप्रिया-णामित्यर्थः, तथा सुप्रभाणां—सुष्ठु—शोभना प्रभा—दीप्तिर्येषां ते तथा तेषां, तथा शङ्खतलं—शंखमध्य-भागो विमलनिर्मलः—अत्यन्तनिर्मलो यो दधिघनः—स्त्यानीकृतं दधि गोक्षीरफेनः प्रसिद्धः, रजतनिकरो—रूप्यराशिस्तेषामिव प्रकाशः—तेजःप्रसारो येषा ते तथा तेषा तथा स्थिरौ—दृढौ

लष्टी—कान्तौ प्रकोष्ठकौ—कलाचिके येषां ते तथा, तथा वृत्ताः—वर्तुलाः पीवराः—पुष्टाः सुश्लिष्टाः—अविवराः विशिष्टाः—तीक्ष्णा भेदिका या दंष्ट्रास्ताभिर्विडम्बितं—विवृतं मुखं येषां ते तथा, प्रायो हि सिंहजातीया दाढाभिर्व्यात्तमुखा एव भवन्तीति, अथवा विडम्बितं—धातूनामनेकार्थत्वात् शोभितं मुखं येषां ते तथा, ततः कर्मधारयस्तेषां, तथा रक्तोत्पलपत्रवत् मृदुसुकुमाले—अतिकोमले तालुजिह्वे येषां ते तथा तेषां, तथा मधुगुटिका—घनीभूतक्षौद्रपिण्डस्तद्वत्पिङ्गले अक्षिणी येषां ते तथा तेषां, प्रायो हि हिंस्रजीवानां चक्षूंषि पीतवर्णानीति, तथा पीवरे—उपचिते वरे—प्रधाने ऊरू—जंघे येषां ते तथा, परिपूर्ण अत एव विपुलो—विस्तीर्ण स्कन्धो येषां ते तथा।

ततः पदद्वयकर्मधारयस्तेषां, तथा मृदवो विशदाः—स्पष्टाः सूक्ष्माः—प्रतलाः लक्षणैः प्रशस्ताः वरवर्णाः—प्रधानवर्णाः या केसरसटाः—स्कन्धकेसरच्छटास्ताभिरुपशोभितानां तथा उच्छ्रितं—ऊर्ध्वीकृतं सुनमितं—सुष्ठु अधोमुखीकृतं सुजातं—शोभनतया जातमास्फोटितं च—भूमावास्फालितं लाङ्गूलं यैस्तथा तेषां तथा वज्रमयनखानां तैलादित्वाद् द्वित्वं वज्रमयदंष्ट्राणां वज्रमयदंतानां, त्रयाणामप्यवयवानामभङ्गुरत्वोपदर्शनार्थं वज्रोपमानं, तथा तपनीयमयजिह्वानां तथा तपनीयमयतालुकानां तथा तपनीयं योक्त्रकं प्रतीतं सुयोजितं येषु ते तथा तेषां कामेन—स्वेच्छया गमो—गमनं येषां ते तथा तेषां, यत्र जिगमिषन्ति तत्र गच्छन्तीत्यर्थ, अत्र 'युवर्णवृदृवशरणगमृद्ग्रह' इत्यनेनाल-प्रत्ययः, तथा प्रीति—चित्तोल्लासस्तेन गमो—गमनं येषां ते तथा तेषां, तथा मनोवद् गमो—गमनं वेगवत्वेन येषां ते तथा तेषां तथा मनोरमाणां मनोहराणां तथा अमितगतीनां—बहुतरगतीनामित्यर्थः, तथा अमितबलेत्यादिपदानि प्राग्वत्, तथा महता आस्फोटितसिंहनादबोलकलकलरवेण मधुरेण पूरयन्ति—शब्दाद्वैतं विदधानानि अम्बरं—नभोमण्डलं दिशश्च—पूर्वाद्याः शोभयन्ति—शोभयमानानीति विशेषणद्वयं सहस्राणीति विशेष्येण सह योज्यं। अथ द्वितीयबाहावाहकानाह—

चन्द्रविमानस्य दक्षिणस्यां—जिगमि- षितदिशो दक्षिणे पार्श्वे गजरूपधारिणां देवानां चत्वारि देवसहस्राणि दाक्षिणात्यां बाहां परिवहन्तीत्यन्वयः, एषां विशेषणान्याह—'सेआण' मित्यादि विशेषणचतुष्टयं प्राग्वत्, तथा वज्रमयं कुम्भयुगलं येषां ते तथा सुस्थिता—सुसंस्थाना पीवरा—पुष्टा वरा वज्रमयी शुण्डा वर्त्तिता—वृत्ता पदव्यत्ययः प्राकृतत्वात् तस्यां दीप्तानि सुरक्तानि यानि पद्मानि—बिन्दुजालरूपाणि येषां प्रकाशो—व्यक्तभावो येषां ते तथा, पालकाप्यशास्त्र हि तारुण्ये हस्तिदेहे जायमाना रक्तबिन्दवः पद्मानीति व्यवह्रियन्ते इति, ततः पदद्वयकर्मधारयस्तेषां, तथा अभ्युन्नतमुखानां पुरत उन्नतत्वाद् तथा तपनीयमयावन्तर- रुणत्वेन विशालौ—इतरजीवकर्णापेक्षया विस्तीर्णौ चञ्चलौ—सहजचापल्ययुक्तौ अत एव चलन्तौ— इतस्ततो दोलायमानौ विमलौ—आगन्तुकमलरहितौ उज्ज्वलौ—भद्रजातीयहस्त्यवयवत्वेन बहिश्श्वेत- वर्णौ कर्णौ येषां ते तथा तेषां, तत्र पदव्यत्ययः प्राग्वत्, तथा मधुवर्णे—क्षौद्रसदृशे 'भिसंति' त्ति भासमाने स्निग्धे पत्रले—पक्ष्मवती निर्मले—छायादिदोषरहिते त्रिवर्णे—रक्तपीतश्वेतवर्णाश्रये मणिरत्नमये लोचने येषां ते तथा तेषां, तथा अभ्युद्गतानि—अत्युन्नतानि मुकुलमल्लिकेव—कोरकाव- स्थविचकिलकुसुमवद् धवलानि तथा सदृशं—समं संस्थानं येषां तानि तथा, निर्व्रणानि—व्रणवर्जितानि दृढानि कृत्स्नस्फटि-कमयानि—सर्वात्मना स्फटिकमयानीत्यर्थः सुजातानि—जन्मदोषरहितानि दन्तमुसलानि तैरुपशोभितानां,

तथा विमलमणिरत्नमयानि रुचिराणि पर्यन्तचित्ररूपकाणि अर्थात् कोशीमुखवर्त्तीनीत्यर्थः तैर्विराजिता या काञ्चनकोशीपोलिकेति प्रसिद्धा तस्यां प्रविष्टा दन्ताग्रा—अग्रदन्ता येषां ते तथा तेषां, पदव्यत्ययः प्राकृतत्वात्, तथा तपनीयमयानि विशालानि तिलकप्रमुखाणि यानि मुखाभरणानि आदिशब्दाद्रत्नशुण्डिकाचामरादिपरिग्रहस्तैः परिमण्डितानां, तथा नानामणिरत्नमयो मूर्द्धा येषां ते तथा ग्रैवेयेन सह बद्धानि गलकवरभूषणानि—कण्ठाभरणानि घण्टादीनि येषां ते तथा, ततः पदद्वयकर्मधारयस्तेषां, तथा कुम्भयुगलान्तरे—कुम्भद्वयमध्ये उदितः—उदयं प्राप्तः तत्र स्थित इत्यर्थ, तथा वैडूर्यमयो विचित्रदण्डो यस्मिन् स तथा, निर्मलवज्रमयस्तीक्ष्णो लष्टो—मनोहरोऽङ्कुशो येषां ते तथा तेषां तथा तपनीयमयी सुबद्धा कक्षा—हृदयरज्जुर्येषा ते तथा, दर्पिता—सञ्जातदर्पास्ते तथा, बलोद्धुरा—बलोत्कटास्ते तथा, ततः पदत्रयस्य पदद्वयमीलने २ कर्मधारयस्तेषां, तथा विमलं तथा घनं मण्डलं यस्य तत् तथा, वज्रमयलालाभिर्ललितं श्रुतिसुखं ताडनं यस्य तत् तथा, नानामणिरत्नमय्यः पार्श्वगाः—पार्श्ववर्त्तिन्यो घण्टा अर्थाल्लघुघण्टा यस्य तत् तथा एवंविधं रजतमयी तिर्यग्बद्धा या रज्जुस्तस्यां लम्बितं यद् घण्टायुगलं तस्य यो मधुरस्वरः तेन मनोहराणां,-

तथा आलीनं—सुश्लिष्टं निर्भरभरकेसरत्वात् प्रमाणयुक्तं—चरणावधि लम्बमानत्वात् वर्त्तितं—वर्तुलं सुजातं—लक्षणप्रशस्तं रमणीयं—मनोहरा वाला यस्य तत् एवंविधं गात्रपरिपुञ्छनं—पुच्छं येषां ते तथा तेषां, तिर्यञ्चो हि पुच्छेनैव गात्रं प्रमार्जयन्तीति, तथा उपचिता—मांसलाः परिपूर्णा—पूर्णावयवास्तथा कूर्मवदुन्नताश्चरणास्तैर्लघुलाघवोपेतः—शीघ्रतर इत्यर्थ विक्रमः—पादविक्षेपो येषां ते तथा तेषां, तथा अङ्करत्नमयनखानां तवणिज्जजीहाणमित्यादि नव पदानि प्राग्वत्, महता—बहुव्यापिना गम्भीरः—अतिमन्द्रो गुलुगुलायितरवो—बृंहितशब्दस्तेन मधुरेण मनोहरेण अम्बरं पूरयन्ति दिशश्च शोभयन्तीत्यादि प्राग्वत्।

अथ तृतीयबाहावाहकानाह—'चंदविमाणस्स ण' मित्यादि, चन्द्रविमानस्य पश्चिमायांजिगमिषितदिशः पृष्ठभागे वृषभरूपधारिणां देवानां चत्वारि देवसहस्राणि पश्चिमां बाहां परिवहन्तीत्यर्थः, श्वेतानां सुभगानामित्यादि प्राग्वत्, चलचपलं—इतस्ततो दोलायमानत्वेनास्थिरत्वादतिचपलं ककुदं—अंसकूटं तेन शालिनां—शोभायमानानां तथा घनवद्—अयोघनवन्निचितानां—निर्भरभृतशरीराणामत एव सुबद्धानां—अश्लथानां लक्षणोन्नतानां प्रशस्तलक्षणानां तथा ईषदानतं—किञ्चिन्नम्रभावमुपागतं वृषभौष्ठं—वृषभौ—प्रधानौ लक्षणोपेतत्वेनौष्ठौ यत्र तत्, समर्थविशेषणेन विशेष्यं लभ्यत इति मुखं येषां ते तथा, ततः पूर्ववत् पदचतुष्टयकर्मधारयस्तेषां, तथा चंक्रमितं—कुटिलगमनं ललितं—विलासवद्गमनं पुलितं—गतिविशेषः स चाकाशक्रमणरूपः एवंरूपा चलचपला—अत्यन्तचपला गर्विता गतिर्येषां ते तथा सन्नतपार्श्वानां अधोऽधःपार्श्वयोरवनतत्वात् तथा सङ्गतपार्श्वानां—देहप्रमाणोचितपार्श्वानां तथा सुजातपार्श्वानां—सुनिष्पन्नपार्श्वानां तथा पीवरा—पुष्टा वर्त्तिता—वृत्ता सुसंस्थिता—सुसंस्थाना कटिर्येषा ते तथा तेषा तथा अवलम्बानि—अवलंबनस्थानानि तेषु प्रालम्बानि—लम्बायमानानि लक्षणैः प्रमाणेन च यथोचितेन युक्तानि रमणीयानि वालगण्डानि—चामराणि येषां ते तथा तेषां, तथा समाः—परस्परं सदृशाः खुराः प्रतीताः वालिधानं—पुच्छं च येषां ते तथा तेषां, तथा 'समलिखितानि' समानि—परस्परं सदृशानि लिखितानीवोत्कीर्णानीवेत्यर्थ तीक्ष्णाग्राणि सङ्गतानि—यथोचितप्रमाणानि शृङ्गाणि येषां ते तथा

तेषां, पदव्यत्ययः प्राग्वत्,

तथा तनुसूक्ष्माणि—अत्यन्तसूक्ष्माणि सुजातानि—सुनिष्पन्नानि स्निग्धानि लोमानि तेषां या छविस्तां धरन्ति ते तथा, उपचितः—पुष्टोऽत एव मांसलो विशालो धूर्वहनसमर्थत्वात् परिपूर्ण्य-त्वात् यः स्कन्धप्रदेशस्तेन सुन्दराणां, तथा वैडूर्यमयानि 'भिसंतकडक्ख'त्ति भासमानकटाक्षाणि—शोभमानाक्षिप्रेक्षितानि सुनिरीक्षणानि—सुलोचनानि येषां ते तथा तेषां, तथा युक्तप्रमाणो—यथोचितमानोपेतः प्रधानलक्षणः प्रतीतः प्रशस्तरमणीयः—अतिरमणीयो गग्गरकः—परिधानविशेषो लोकप्रसिद्धस्तेन शोभितगलानां पदव्यत्ययः प्राग्वत्, तथा घरघरकाः—कण्ठाभरविशेषः सुशब्दा बद्धा यत्र स चासौ कण्ठश्च तेन परिमण्डितानां, तथा नानाप्रकारमणिकनकरत्नमय्यो या घण्टिकाः—क्षुद्रघण्टाः—क्षुद्रघण्टाः किङ्किण्य इत्यर्थस्तासां वैकक्षिकास्तिर्यग्वक्षसि स्थापितत्वेन सुकृताः—सुष्ठु रचिता मालिकाः—श्रेणयो येषां ते तथा तेषां, तथा वरघण्टिकाः—उक्तघंटिकातो विशिष्टत्वेन प्रधानघण्टा गले येषां ते वरघण्टागलकाः तथा मालया उज्ज्वलास्ते तथा ततः पदद्वयकर्मधारयस्तेषां

तथा पुष्पालङ्कारमेव विशेषेणाह—पद्मानि—सूर्यविकासीनि उत्पलानि—चन्द्रविकासीनि सकलानि—अखण्डितानि सुरभीणि तेषां मालास्ताभिर्विभूषितानां पदव्यत्ययः प्राग्वत्, तथा वज्ररत्नमयाः खुराः प्रतीता येषां ते तथा तेषां विविधाः मणिकनकादिमयत्वेन नानाप्रकारा विखुरा—उक्तखुरेभ्य ऊर्ध्ववर्त्तित्वेन विकृष्टाः खुरा येषां ते तथा तेषां, तथा स्फटिकमयदन्तानां तथा तपनीयमजिह्वानां तथा तपनीयमयतालुकानां तथा तपनीययोक्त्रके सुयोजितानां तथा 'कामगमाणं' ० षट्पदानि प्राग्वत्, महता—गम्भीरेण गर्जितरवेण—भास्वरशब्दरूपेणेत्यादि प्राग्वदिति ।

अथ चतुर्थबाहावाहकानाह—'चंदविमाणस्स णं'मित्यादि, चन्द्रविमानस्योत्तरस्यां जिगमिषितदिश उत्तरपार्श्वे वामपार्श्वे इत्यर्थ, हयरूपधारिणां देवानां चत्वारि देवसहस्राणि उत्तरां बाहां परिवहन्तीति सम्बन्धः, श्वेतानामित्यादि प्राग्वत्, तथा तरो—वेगो बलं वा तथा 'मलि मल्लि धारणे'ततश्च तरोधारको वेगादिधारको हायनः—संवत्सरो येषां ते तरोमल्लिहायना यौवनवन्त इत्यर्थः अतस्तेषां वरतुरगमाणामित्यादियोगः, तथा हरिमेलको—वनस्पतिविशेषस्तस्य मुकुलं—कुड्मलं तथा मल्लिका—विचकिलस्तद्वदक्षिणी येषां ते तथा तेषां शुक्लाक्षाणामित्यर्थः, तथा 'चंचुच्चिय'त्ति प्राकृतत्वेन चंचुरितं—कुटिलगमनं अथवा चंचुः—शुकचंचुस्तद्वद्वक्रतयेत्यर्थ उच्चितं—उन्नताकरणं पादस्योच्चितं वा—उत्पाटनं पादस्यैव चंचूच्चितं च तत् ललितं च—विलासवद् गति पुलितं च—गतिविशेषः प्रसिद्धः एवंरूपा तथा चलयतीति चलो—वायुः कम्पनत्वात् तद्वच्चपलचञ्चलाअ-तीवचपला गतिर्येषां ते तथा तेषां तथा लंघनं—गर्तादिरतिक्रमणं वल्गनं—उत्कूर्दनं धावनं—शीघ्रमृजुगमनं धोरणं—गतिचातुर्यं त्रिपदी—भूमौ पदत्रयन्यासः जयिनीव—गमनान्तरजयवती जविनी वा—वेगवती शिक्षिता—अभ्यस्ता गतिर्यैस्ते तथा तेषां तथा ललन्ति—दोलायमानानि "लोमत्ति प्राकृतत्वाद्रम्याणि गललातानि—कण्ठे न्यस्तानि वरभूषणानि येषां ते तथा तेषां, तथा सन्नतपार्श्वा-नामित्यादि पञ्च पदानि प्राग्वत्, नवरं वालप्रधानानि पुच्छानि वालपुच्छान्यर्थाच्चामराणीत्यर्थः ।

तथा 'तनुसुहुमे'त्ति पदं प्राग्वत् तथा मृद्वी विशदा—उज्ज्वला अथवा परस्परमसम्मिलिता प्रतिरोमकूपमेकैकसम्भवात् सूक्ष्मा—तन्वी लक्षणप्रशस्ता विस्तीर्णा या केसरपालि—स्कन्धकेश-श्रेणिस्तां धरंति ये ते तथा तेषां, तथा ललन्तः—सुबद्धत्वेन सुशोभाका ये स्थासका—दर्पणाकारा आभरणविशेषास्त एव ललाटवरभूषणानि येषां ते तथा तेषां, तथा मुखमण्डकं च—मुखाभरणं

अवचूलाश्च-प्रलम्बमानगुच्छाः चामराणि च स्थासकाश्च प्रतीता एषां द्वन्द्वस्तत एते यथास्थाने नियोजिता येषां सन्ति ते तथा, अभ्रादित्वादप्रत्यये रूपसिद्धि, परिमण्डिता कटिर्येषां ते तथा, ततः पदद्वयकर्मधारयस्तेषां, तथा तपनीयखुराणां तथा तपनीयजिह्वानामित्यादि नव पदानि प्राग्वत्, तथा महता-बहुव्यापिना हयहेषितरूपो यः किलकिलायितरवः-सानन्दशब्दस्तेनेत्यादि प्राग्वत्, एषु च चतुर्ष्वपि विमानवाहावाहकसिंहादिवर्णकसूत्रेषु कियन्ति पदानि प्रस्तुतोपाङ्गसूत्रादर्शगत-पाठानुसारीण्यपि श्रीजीवाभिगमोपाङ्गसूत्रादर्शपाठानुसारेण व्याख्यातानि, न च तत्र वाचनाभेदात् पाठभेदः सम्भवतीति वाच्यं ।

यतः श्रीमलयगिरिपादैर्जीवाभिगमवृत्तावेव "क्वचित् सिंहादीनां वर्णनं दृश्यत तद्बहुषु पस्तकेषु न दृष्टमित्युपेक्षितं, अवश्यं चेत्तदव्याख्यानेन प्रयोजनं तर्हि जम्बूद्वीपटीका परिभावनीया, तत्र सविस्तरं तदव्याख्यानस्य कृतत्वादि" त्यतिदेशविषयीकृत्वेन द्वयः सूत्रयोः सदृशपाठकत्वमेव सम्भाव्यत इति ।

यत्तु जीवाभिगमपाठदृष्टान्यपि 'मिअमाइअपीणरइअपासाण' मित्यादिपदानि न व्याख्यानि तत् प्रस्तुतसूत्रे सर्वथा अदृष्टत्वात्, यानि च पदानि प्रस्तुतसूत्रादर्शपाठे दृष्टानि तान्येव जीवाभिगम-पाठानुसारेण सङ्गतपाटीकृत्य व्याख्यातानीत्यर्थः । अथ चन्द्रवक्तव्यस्य सूर्यादिवक्तव्यविषयेऽ-तिदेशं चन्द्रादीनां सिंहादिसङ्ख्यासंग्रहणिगाथे चाह गाथा-

मू. (३४५) *सोलसदेवसहस्सा हवंति चंदेसु चेव सूरेसु ।*
*अट्ठेव सहस्साइं एक्कंमी गहविमाणे ।*

मू. (३४६) *चत्तारि सहस्साइं नक्खत्तंमि अ हवंति इक्किक्के ।*
*दो चेव सहस्साइं तारारूवेक्कमेक्कंमि ॥*

मू. (३४७) *एवं सूरविमाणाणं जाव तारारूवविमाणाणं, नवरं एस देवसंघाएत्ति ।*

वृ. "सोलस देवसहस्सा" इत्यादि, अत्र सङ्गतिप्राधान्याद् व्याख्यानस्य दृश्यमानप्रस्तुत-सूत्रादर्शेषु पुरः स्थितोऽपि प्रथमं 'एवं सूरविमाणाण' मित्याद्यालापको व्याख्येयो, यथा एवं-चन्द्रविमानवाहकानुसारेण सूर्यविमानानामपि वाहका वर्णनीयाः यावत्तारारूपाणामपि विमान वाहका वर्णनीयाः यावत्पदात् ग्रहविमानानां नक्षत्रविमानानां च विमानवाहका वर्णनीयाः, नवरं एष देवसंघातः, अयमर्थः-सर्वेषां ज्योतिष्काणां विमानवाहकवर्णनसूत्रं सममेव तेषां सङ्ख्याभेदस्तु व्याख्यास्यमानगाथाभ्यामवगन्तव्यः, ते चेमे वक्ष्यमाणे गाहात्यादि, षोडशदेवसहस्राणि भवन्ति चन्द्रविमाने चैवेति समुच्चये तथा सूर्यविमानेऽपि षोडश देवसहस्राणि, बहुवचनं चात्र प्राकृतत्वात्, तथा अष्टौ देवसहस्राण्येकैकस्मिन् ग्रहविमाने तथा चत्वारि सहस्राणि नक्षत्रे चैकैकस्मिन् भवन्ति, तथा द्वे चैव सहस्रे तारारूपविमाने एकैकस्मिन्निति । अथ दशमद्वारप्रश्नमाह-

मू. (३४८) *एतेसि णं भंते ! चंदिमसूरिअगहगणनक्खत्ततारारूवाणं कयरे सव्वसिग्घगई कयरे सव्वसिग्घतराए चेव ?, गो० ! चंदेहिंतो सूरा सव्वसिग्घगई सूरेहिंतो गहा सिग्घगई गहेहिंतो नक्खत्ता सिग्घ० नक्खत्तेहिंतो तारारूवा सिग्घ०, सव्वप्पगई चंदा सव्वसिग्घगई तारारूवा ।*

वृ. 'एतेसि ण' मित्यादि, एतेषां भदन्त ! चन्द्रसूर्यग्रहगणनक्षत्रतारारूपाणां मध्ये कतरः 'सर्वशीघ्रगति' सर्वेभ्यश्चन्द्रादिभ्यश्चरज्योतिष्केभ्यः शीघ्रगति, इदं च सर्वाभ्यन्तरमण्डलापेक्षया, कतरश्च सर्वशीघ्रगतितरकः, अत्र द्वयोः प्रकृष्टे तरप्, इदं च सर्वबाह्यमण्डलापेक्षयोक्तं, अभ्यन्तर-

मण्डलापेक्षया सर्वबाह्यमण्डलस्य गतिप्रकर्षस्य सुप्रसिद्धत्वात्, प्रज्ञप्त इति गम्यं, भगवानाह—गौतम चन्द्रेभ्यः सूर्या सर्वशीघ्रगतयः, सूर्येभ्यः ग्रहाः शीघ्रगतयः, ग्रहेभ्यो नक्षत्राणि शीघ्रगतीनि, नक्षत्रेभ्यस्ताराररूपाणि शीघ्रगतीनि, मुहूर्त्तगतौ विचार्यमाणायां परेषां परेषां गतिप्रकर्षस्यागम-सिद्धत्वात्, अत एव सर्वेभ्योऽल्पा—मन्दा गतिर्येषां ते तथा एवंविधाश्चन्द्रास्तथा सर्वेभ्यः शीघ्रगतीनि तारारूपाणीति।

*मू. (३४९) एतेसि णं भंते ! चंदिमसूरिअगहनक्खत्ततारारूवाणं कयरे सव्वमहिड्ढिआ कयरे सव्वप्पड्ढिआ ?, गो० ! तारारूवेहिंतो नक्खत्ता महिड्ढिआ नक्खत्तेहिंतो गहा महिड्ढिआ गहेहिंतो सूरिआ महिड्ढिआ सूरेहिंतो चंदा महिड्ढिआ सव्वप्पिड्ढिआ तारारूवा सव्वमहिड्ढिआ चंदा।*

**वृ.** अथैकादशद्वारं प्रश्नयति—'एतेसि णं'मित्यादि, एतेषां भदन्त ! चन्द्रसूर्यग्रहन-क्षत्रतारारूपाणां मध्ये कतरे सर्वमहर्द्धिकाः कतरे च चकारोऽत्र गम्यः सर्वाल्पर्द्धिकाः ?, भगवानाह—गौ० ! तारारूपेभ्यो नक्षत्राणि महर्द्धिकानि नक्षत्रेभ्यो ग्रहा महर्द्धिकाः ग्रहेभ्यः सूर्या महर्द्धिकाः सूर्येभ्यश्चन्द्रा महर्द्धिकाः, अत एव सर्वाल्पर्द्धिकास्तारारूपाः सर्वमहर्द्धिकाश्चन्द्राः

*मू. (३५०) जंबुद्दीवे णं भंते ! दीवे ताराए अ ताराए अ केवइए अबाहाए अंतरे पन्नत्ते गोअमा ! दुविहे-वाघाइए अ निव्वाघाइए अ, निव्वाघाइए जहन्नेणं पंचधणुसयाइं उक्कोसेणं दो गाऊआइं, वाघाइए जहन्नेणं दोन्नि छावट्ठे जोअणसए उक्कोसेणं बारस जोअणसहस्साइं दोन्नि अ बायाले जोअणसए तारारूवस्स २ अबाहाए अंतरे पन्नत्ते।*

**वृ.** इयमत्र भावना—गतिविचारणायां ये येभ्यः शीघ्रा उक्तास्ते तेभ्यः ऋद्धिविचार-णायामुक्तमतो महर्द्धिका ज्ञेया इति। अथ द्वादशद्वारप्रश्नमाह—'जंबुद्दीवे णं०' जम्बूद्वीपे भदन्त ! द्वीपे तारायास्तारायाश्च कियदबाधया अन्तरं प्रज्ञप्तम् ?, भगवानाह—गौ० ! द्विविधं— व्याघातिकं निर्व्याघातिकं च, व्याघातः—पर्वतादिस्खलनं तत्र भवं व्याघातिकं, निर्व्याघातिकं व्याघातिकान्निर्गतं स्वाभाविकमित्यर्थः, तत्र यन्निर्व्याघातिकं तज्जघन्यतः पञ्चधनुःशतानि उत्कृष्टतो द्वे गव्यूते, एतच्च जगत्स्वाभाव्यादेवावगन्तव्यं, यच्च व्याघातिकं तज्जघन्यतो द्वे योजनशते षट्ष-ष्टयधिके, एतच्च निषधकूटादिकमपेक्ष्य वेदितव्यं।

तथाहि—निषधपर्वतः स्वभावतोऽप्युच्चैश्चत्वारि योजनशतानि तस्य चोपरि पञ्चयोज-नशतोच्चानि कूटानि तानि च मूले पञ्चयोजनशतान्यायामविष्कम्भाभ्यां मध्ये त्रीणि योजनशतानि पञ्चसप्तत्यधिकानि उपरि अर्द्धतृतीये द्वे योजनशते तेषां चोपरितनभागसमश्रेणिप्रदेशे तथाजग-त्स्वाभाव्यादष्टावष्टौ योजनान्यबाधया कृत्वा ताराविमानानि परिभ्रमन्ति ततो जघन्यतो व्याघातिकमन्तरं द्वे योजनशते षट्षष्टयधिके भवतः, उत्कर्षतो द्वादश योजनसहस्राणि द्वे योजनशते द्विचत्वारिंशदधिके, एतच्च मेरुमपेक्ष्य द्रष्टव्यं।

तथाहि—मेरौ दशयोजनसहस्राणि मेरोश्चोभयतोऽबाधया एकादशयोजनशतान्येकविंशत्य-धिकानि, ततः सर्वसङ्ख्यामीलने भवन्ति द्वादशयोजनसहस्राणि द्वे च योजनशते द्विचत्वा-रिंशदधिके, एवं तारारूपस्य तारारूपस्य अन्तरं प्रज्ञप्तमिति। अथ त्रयोदशं द्वारं प्रश्नयन्नाह—

मू. (३५१) चंदस्स णं भंते ! जोइसिंदस्स जोइसरन्नो कइ अग्गमहिसीओ प० गो० !

*चत्तारि अग्गमहिसीओ प० तं०–चंदप्पभा दोसिनाभा अच्चिमाली पभंकरा, तओ णं एगमेगा देवीचत्तारि २ देवीसहस्साइं परिवारो प०, पभू णं ताओ एगमेगा देवी अन्नं देवीसहस्सं विउव्वित्तए, एवामेव सपुव्वावरेणं सोलस देवीसहस्सा, सेत्तं तुडिए।*

*पहू णं भंते! चंदे जोइसिंदे जोइसराया चंदवडेंसए विमाणे चंदाए रायहाणीए सभाए सुहम्माए तुडिएणं सद्धिं महयाहयनट्टगीअवाइअ जाव दिव्वाइं भोगभोगाइं भुंजमाणे विहरित्तए?, गोअमा! नो इणट्ठे समट्ठे, से केणट्ठेणं जाव विहरित्तए?, गो०! चंदस्स णं जोइसिंदस्स० चंदवडेंसए विमाणे चंदाए रायहाणीए सभाए सुहम्माए माणवए चेइअखंभे वइरामएसु गोलवट्टसमुग्गएसु बहूईओ जिनसकहाओ सन्निखित्ताओ चिट्ठंति ताओ णं चंदस्स अन्नेसिं च बहूणं देवाण य देवीण य अच्चणिज्जाओ जाव पज्जुवासणिज्जा, से तेणट्ठेणं गोयमा! नो पभूत्ति।*

*पभू णं चंदे सभाए सुहम्माए चउहिं सामाणिअसाहस्सीहिं एवं जाव दिव्वाइं भोगभोगाइं भुंजमाणे विहरित्तए केवलं परिआरिद्धीएण नो चेव णं मेहुणवत्तिअं, विजया १ वेजयंती २ जयंती ३ अपराजिआ ४ सव्वेसिं गहाईणं एआओ अग्गमहिसीओ, छावत्तरस्सवि गहसयस्स एआओ, अग्गमहिसीओ वत्तव्वाओ, इमाइ गाहाहिंति-*

**वृ.** 'चंदस्स णं' मित्यादि, प्रश्नसूत्रं सुगमं, उत्तरसूत्रे चतस्रोऽग्रमहिष्यः, तद्यथा–चन्द्रप्रभा 'दोसिणाभे' ति ज्योत्स्नाभा अर्चिर्माली प्रभङ्करा, ततश्च–चतुःसङ्ख्याकथनानन्तरं परिवारो वक्तव्य इत्यर्थः एकैकस्या देव्याश्चत्वारि २ देवीसहस्राणि परिवारः प्रज्ञप्तः, किमुक्तं भवति? –एकैका अग्रमहिषी चतुर्णां २ देवीसहस्राणां पट्टराज्ञी, अथ विकुर्वणासामर्थ्यमाह–

प्रभुः समर्था णमिति वाक्यालङ्कारे 'ताओ' ति वचनव्यत्ययात् सा इत्थंभूता अग्रमहिषी परिचारणावसरे तथाविधां ज्योतिष्कराजचन्द्रदेवेच्छामुपलभ्यात्मसमानरूपं देवीसहस्रं विकुर्वितुं, स्वाभाविकानि पुनरेवं–उक्तप्रकारेणैव, सपूर्वापरमीलनेन षोडशदेवीसहस्राणि चन्द्रदेवस्य भवन्ति, चतस्रोऽग्रमहिष्य एकैका चात्मना सह चतुश्चतुर्देवीसहस्रपरिवारा, ततः सर्वसङ्कलने भवन्ति षोडश देवीसहस्राणि, इह यथा चमरेन्द्रादितुडिकवक्तव्यताधिकारे स्वस्वपरिवारसङ्ख्यानुसारेण विकुर्वणीयसङ्ख्या उक्ता तथैव जीवाभिगमादौ चन्द्रदेवानामपि चतुःचतुःसहस्रस्वपरिवारानुसारेण चतुश्चतुर्देवीसहस्रविकुर्वणा दृश्यते अत्र तु न तथेति मतान्तरमवसेयं प्रस्तुतसूत्रादर्शलेखकवैगुण्यं वा ज्ञेयमिति, 'सेत्तं तुडिए' इति, तदेतत् चन्द्रदेवस्य तुटिकं–अन्तःपुरं, उक्तं च जीवाभिगमचूर्णौ– "तुटिकमन्तःपुरमुपदिश्यते" इति।

अथ चतुर्दशं द्वारं प्रश्नयति–प्रभुर्भदन्त! चन्द्रो ज्योतिषेन्द्रो ज्योतिषराजश्चन्द्रावतंसके विमाने चन्द्रायां राजधान्यां सुधर्मायां सभायां तुटिकेनेति–अन्तःपुरेण सार्द्धं 'महया' इत्यादि प्राग्वत् विहर्तुमित्यन्वयः, अत्र काकुपाठात् प्रश्नसूत्रमवगन्तव्यं, भगवानाह–गौतम! नायमर्थः समर्थः, अथ केनार्थेन भदन्त! एवमुच्यते–यावतकरणात् नो पभू चंदे जोइसिंदे जोइसराया चन्दवडेंसए विमाणे चन्दाए रायहाणीए सभाए सुहम्माए तुडिएणं सद्धिं महयाहय-गीअवाइअणट्ट जाव दिव्वाइं भोगभोगाइं भुंजमाणे' इति ग्राह्यं विहर्तुमिति, अत्रोत्तरसूत्रमाह–गौतम चन्द्रस्य ज्योतिषेन्द्रस्य चन्द्रावसंतके विमाने चन्द्राणां राजधान्यां सभायां सुधर्मायां माणवकनाम्नि चैत्यस्तम्भे-चैत्यवत् पूज्यः स्तम्भः चैत्यस्तम्भस्तस्मिन् वज्रमयेषु गोलवद्व तेषु समुद्गकेषु–

सम्पुटरूपभाण्डेषु बह्वयो जिनसकथा–जिनसक्थीनि सन्निक्षिप्ताः–स्थापितास्तिष्ठन्ति साक्ष णमिति प्राग्वत् चन्द्रस्य अन्येषां च बहूनां देवानां देवीनां चार्चनीयाश्चन्दनादिना यावत्करणाद् वन्दनीयाः स्तुतिभिर्नमस्यनीयाः प्रणामतः पूजनीयाः पुष्पैः सत्कारणीया वस्त्रादिभिः सन्माननीयाः प्रतिपत्तिविशेषैरिति ग्राह्यं, पर्युपासनीयाः कल्याणमित्यादिबुद्धया, अथ तेनार्थेन एवमुच्यते–गौतम ! न प्रभुरिति, जिनेष्विव जिनसक्थिष्वपि तेषां बहुमानपरत्वेनाशातनाभीरुत्वादिति, अथैवं सति कल्पाती- तदेवानामिवास्यापि अप्रविचारता उत नेत्याशङ्कामपाकर्तुमाह–

'पभू ण'मिति, प्रभुश्चन्द्रसभायां सुधर्मायां चतुर्भि सामानिकसहस्र एवमित्युक्तप्रकारेण यावत्करणात् चतसृभिरग्रमहिषीभि सपरिवाराभिरित्यादिकः सर्वोऽप्यालापको वाच्यः, दिव्यान् भोगार्हा ये भोगाः–शब्दादयस्तान् भुञ्जानो विहर्तुमिति, अत्रैव विशेषमाह–केवलं–नवरं परिवारः परिकरस्तस्य ऋद्धिः–सम्पत्तया, एते सर्वेऽपि मम परिचारकाः अहं चैषां स्वामीत्येवं निजस्फातिविशेषदर्शनाभिप्रायेणेति भावः, नैव च मैथुनप्रत्ययं–सुरतनिमित्तं यथा भव्यत्येवं भोगभोगान् भुञ्जानो विहर्तुं प्रभुरिति ।

अथ प्रस्तुतोपाङ्गादर्शेष्वदृष्टमपि जीवाभिगमाद्युपाङ्गादर्शदृष्टं सूर्याग्रमहिषीवक्तव्यमुपदर्श्यते, 'सूरस्स जोइसरण्णो कइ अग्गमहिसीओ पन्नत्ताओ ?, गोअमा ! चत्तारि अग्गमहिसीओ पं०, तंजहा–सूरप्पभा आयवाभा अच्चिमालि पभंकरा एवं अवसेसं जहा चन्दस्स णवरं सूरवडेंसए विमाणे सूरंसि सीहासणंसी'ति व्यक्तम् । अथ ग्रहादीनामग्रमहिषीवक्तव्यमाह–

ग्रहादीना-मादिशब्दात्नक्षत्रतारकापरिग्रहः सर्वेषामपि विजया वैजयन्तीत्यादिचतुर्भिर्नामभिरेवाग्रमहिष्यो ज्ञेयाः, उक्तमेव विशिष्य आह–'छावत्तर' इत्यादि, षट्सप्तत्यधिकस्य ग्रहशतस्यापि जम्बूद्वीपवर्तिचन्द्रद्वयपरिवारभूतानां ग्रहाणां द्विगुणिताया अष्टाशीतेरित्यर्थः, एता–अनन्तरोक्ता विजयाद्या अग्रमहिष्यो वक्तव्याः इमाभिर्वक्ष्यमाणाभिर्गाथाभिरुक्तनामभिः इति गम्यं, इदं च ग्रहशतस्य विशेषणं बोध्यं, अत्र सूत्रादर्शे प्रथमदृष्टमपि नक्षत्रदैवतसूत्रमुपेक्ष्य क्रमप्राधान्याद् व्याख्यानस्येति प्रथममष्टाशीतिग्रहनामसूत्रं व्याख्यायते–

**मू. (३५२)** *इंगालए विआलए लोहिअंके सनिच्छरे चेव ।*
*आहुणिए पाहुणिए कणगसणामा य पंचे व ॥*

**वृ.** 'इंगालए' इत्यादि, अङ्गारकः १ विकालकः २ लोहिताङ्कः ३ शनैश्चरः ४ आधुनिकः ५ प्राधुनिकः ६ कनकेन सह एकदेशेन समानं नाम येषां ते कनकसमाननामानस्ते पञ्चैव प्रागुक्तसङ्ख्यापरिपाट्या योजनीयाः, तद्यथा–कणः ७ कणकः ८ कणकणकः ९ कणवितानकः १० कणसन्तानकः ११ ।

**मू. (३५३)** *सोमे १२ सहिए १३ आसणेय १४ कज्जोवए १५ अ कब्बूरए १६ ।*
*अयकरए १७ दुंदुभए संखसनामेवि तिन्नेव ।*

**मू. (३५४)** *एवं भाणियव्वं जाव भावकेउस्स अग्गमहिसीओत्ति ॥*

**वृ.** 'सोमे' त्यादि सोमः १२ सहितः १३ आश्वासनः १४ कार्योपगः १५ कर्बुरकः १६ अजकरकः १७ दुन्दुभकः १८ शंख समान नामानो नाम्नि शंख शब्दाङ्किता इत्यर्थः ते त्रयः तद्यथा-शंखः १९शंखनामः २० शंखवर्णाभः २१ एवं उक्तेन प्रकारेण भणितव्यं,

प्रत्येकमग्रमहिषीसंख्याकथनाय अष्टाशतेर्ग्रहाणां नामसंग्राहकगाथाकदम्बकमिति शेषः, यावत् भावकेतोर्ग्रहस्याग्रमहिष्यः, यावत्करणात् इदं द्रष्टव्यं–

॥ १ ॥ इंदग्गिधूमकेऊ हरिपिंगलए बुहे अ सुक्के अ।
वहस्सइराहु अगत्थी माणवगे कामफासे अ॥

॥ २ ॥ धुरए पमुहे वियडे पमुहे वियडे विसंधि कप्पे तहा पयल्ले य।
जडियालए य अरुणे अग्गिलकाले महाकाले॥

॥ ३ ॥ सोत्थिअ सोवत्थिअए वद्धमाणग तहा पलंबे अ।
निच्चालोए निच्चुज्जोए सयंपभे चेव ओभासे॥

॥ ४ ॥ सेयंकरखेमंकर आभंकर पभंकरे अ नायव्वो।
अरए विरए अ तहा असोग तह वीतसोगे य॥

॥ ५ ॥ विमल वितत्थ वितत्थे विसाल तह साल सुव्वए चेव।
अनियट्टी एगजडी अ होइ विजडी य बोद्धव्वे॥

॥ ६ ॥ कर करिअ राय अग्गल बोद्धव्वे पुप्फभावकेऊ अ।
अट्ठासीई गहा खलु नायव्वा आनुपुव्वीए॥

अत्र व्याख्या–कंसशब्दोपलक्षितं नाम येषां ते कंसनामानः ते त्रय एव तद्यथा–कंसः २२ कंसनाभः २३ कंसवर्णाभः २४ नीले रूप्ये च शब्दे विषयभूते द्विद्विनामसंभवात् सर्वसंख्यया भवन्ति चत्वारस्तद्यथा–नीलः २५ नीलावभासः २६ रुप्पी २७ रुप्यावभासः २८ इति नामद्वयोपलक्षणं तद्यथा–भस्म २९ भस्मराशि ३० तिलः ३१ तिलपुष्पवर्णः ३२ दकः ३३ दकवर्ण ३४ कायः ३५ वन्ध्यः ३६ चः समुच्चये इंद्राग्नि ३७ धूमकेतुः ३८ हरि ३९ पिङ्गलकः ४० बुधः ४१ तथैव, एकमग्रेऽपि, शुक्रः ४२ बृहस्पति ४३ राहुः ४४ अगस्ति ४५ माणवकः ४६

कामस्पर्श ४७ धुरकः ४८ प्रमुखः ४९ विकटः ५० विसन्धिकल्पः ५१ तथा प्रकल्पः ५२ जटालः ५३ अरुणः ५४ अग्नि ५५ कालः ५६ महाकालः ५७ स्वस्तिकः ५८ सौवस्तिकः ५९ वर्धमानकः ६० तथा प्रलम्बः ६१ नित्यालोकश्च ६२ नित्योद्योतः ६३ स्वयंप्रभः ६४ अवभासः ६५ श्रेयस्करः ६६ क्षेमङ्करः ६७ आभङ्करः ६८ प्रभङ्करः ६९ बोद्धव्यः अरजाः ७० विरजाः ७१ तथा अशोकः ७२ तथा वीतशोकः ७३ विमलः ७४ विततः ७५ विवस्त्र ७६ विशालः ७७ शालः ७८ सुव्रतः ७९ अनिवृत्ति ८० एकजटी ८१ भवति द्विजटी ८२ बोद्धव्यः करः ८३ करिकः ८४ राजा ८५ अर्गलः ८६ बोद्धव्यः पुष्पकेतुः ८७ भावकेतुः ८८ इति अष्टाशीतिर्ग्रहाः खलु ज्ञातव्या आनुपूर्व्येति।

मू. (३५५) *चंदविमाणे णं भंते! देवाणं केवइअं कालं ठिई पन्नत्ता?, गो०! जहन्नेणं चउभागपलिओवमं उक्कोसेणं पलिओवमं वाससयसहस्समब्भहिअं, चंदविमाणे णं देवीणं जहण्णेणं चउभागपलिओवमं उ० अद्धपलिओवमं पन्नासाए वाससहस्सेहिमब्भहिअं।*

*सूरविमाणे देवाणं चउब्भागपलिओवमं उक्कोसेणं पलिओवमं वाससहस्समब्भहियं, सूरविमाणे देवीणं जहन्नेणं चउब्भागपलिओवमं उक्कोसेणं अद्धपलिओवमं पंचहिं वाससएहिं अब्भहियं।*

*गहविमाणे देवाणं जहन्नेणं चउब्भागपलिओवमं उक्कोसेणं पलिओवमं गहविमाणे देवीणं जहन्नेणं चउब्भागपलिओवमं उक्कोसेणं अद्धपलिओवमं, नक्खत्तविमाणे देवाणं जहन्नेणं चउब्भागपलिओवमं उक्कोसेणं अद्धपलिओवमं।*

*नक्खत्तविमाणे देवीणं जहन्नेणं चउब्भागपलिओवमं उक्को० साहिअं चउब्भाग- पलिओवमं। ताराविमाणे देवाणं जह० अट्ठभागपलिओवमं उक्कोसेणं चउब्भागपलिओवमं ताराविमाणदेवीणं जहण्णेणं अट्ठभागपलिओवमं उक्कोसेणं साइरेगं अट्ठभागपलिओवमं।*

**वृ.** अथ पञ्चदशं द्वारं प्रश्नविषयीकर्तुमाह— 'चन्दविमाणे णं भंते!' इत्यादि, प्रायः सुगमं, नवरं चतुर्भागपल्योपमस्थिति—चतुर्भागमात्रं पल्योपमं चतुर्भागपल्योपममिति विशेषणसमासः पल्योपमचतुर्भाग इत्यर्थ प्राकृतत्वात् पूरणप्रत्ययलोपः, एवमग्रेऽष्टभागपल्योपमादावपि बोध्यं, चन्द्रविमाने हि चन्द्रदेवः सामानिकाश्च आत्मरक्षकादयश्च परिवसन्ति तेन चन्द्रसामानिकापेक्षया उत्कृष्टमायुर्बोध्यं तेषामेवोत्कृष्टायुःसंभवात्, जघन्यं चात्मरक्षकादिदेवापेक्षयेति, एवं सूर्यविमानादिसूत्रेष्वपि भाव्यम्। अथ सूर्यायुःसूत्रम्—'सूरविमाणे' इत्यादि, व्यक्तं, अथ ग्रहादीनां स्थितिसूत्राणि 'गहविमाणे' इत्यादि, एतानि त्रीण्यपि सूत्राणि निगदसिद्धानीति।

तारकाणां च सपञ्चसप्ततिसहस्राधिकषट्षष्टिकोटाकोटीप्रमाणत्वेन बहुसंख्याकतया नामव्यवहारस्यासंव्यवहार्यत्वेन चोपेक्षा, परमेषामप्येता एव चतस्रोऽग्रमहिष्यो बोध्या इति।

अथ 'सव्वेसिं गहाईणं' मित्यादिपदेन सूचितानां नक्षत्राणामधिदैवतद्वारा नामप्रतिपादनाय गाथाद्वयमाह—

**मू. (३५६)** *बम्हा विण्हू अ वसू वरुणे अ वुड्ढी पूस आस जमे।*
*अग्गि पयावइ सोमे रुद्दे अदिती बहस्सई सप्पे॥*

**मू. (३५७)** *पिउ भगअज्जमसविआ तट्ठा वाऊ तहेव इंदग्गी।*
*मित्ते इंदे निरुई आऊ विस्सा य बोद्धव्वे॥ इति।*

**मू. (३५८)** *इमा संगहणी गाहा।*

**वृ.** ब्रह्मा अभिजित् १ विष्णुः श्रवणः २ वसुर्धनिष्ठा ३ वरुणः शतभिषक् ४ अजः पूर्वभाद्रपदा ५ वृद्धिरित्यत्र पदैकदेशे पदसमुदायोपचारात् अभिवृद्धि उत्तरभाद्रपदा ६ अन्यत्राहिर्बुध्न इति, पूषा रेवती ७ अश्वोऽश्विनी ८ यमो भरणि ९ अग्नि कृत्तिका १० प्रजापती रोहिणी ११ सोमो मृगशिरः १२ रुद्र आर्द्रा १३ अदितिः पुनर्वसुः १४ बृहस्पतिः पुष्यः १५ सर्पोऽश्लेषा १६ पिता मघा १७ भगःपूर्वफाल्गुनी १८ अर्यमा उत्तराफाल्गुनी १९ सविता हस्तः २० त्वष्टा चित्रा २१ वायुः स्वातिः २२ इंद्राग्नी विशाखा २३ मित्रोऽनुराधा २४ इन्द्रो ज्येष्ठा २५ निर्ऋतिर्मूलं २६ आपः पूर्वाषाढा २७ विश्वे उत्तराषाढा २८ चेति नक्षत्राणि बोद्धव्यानि।

- ननु स्वस्वामिभावसम्बन्धप्रतिपादकभावमन्तरेण कथं देवतानामभिर्नक्षत्रनामानि संपद्येरन् उच्यते, अधिष्ठातरि अधिष्ठेयस्योपचारात् भवति, एतेषां चाष्टाविंशतेरपि नक्षत्राणां विजयादिनामभिरेव पूर्वोक्ताश्चतस्रोऽग्रमहिष्यो वक्तव्या इति। षोडशं द्वारं पृच्छति। -

**मू. (३५९)** *एतेसि णं भंते! चंदिमसूरिअगहनक्खत्ततारारूवाणं कयरे२ हिंतो अप्पा वा बहुआ वा तुल्ला वा विसेसाहिआ वा?, गो०! चंदिमसूरिआ दुवे तुल्ला सव्वत्थोवा नक्खत्ता*

*संखेज्जगुणा गहा संखेज्जगुणा तारारूवा संखेज्जगुणा इति ।*

वृ. "एतेसि णं मित्यादि, एतेषां—अनन्तरोक्तानां प्रत्यक्षप्रमाणगोचराणां वा भदन्त ! चन्द्रसूर्यग्रहनक्षत्रतारारूपाणां कतरे कतरेभ्योऽल्पाः—स्तोकाः वा विकल्पसमुच्चयार्थे कतरे कतरेभ्यो बहुका वा कतरे कतरेभ्यस्तुल्या वा, अत्र विभक्तिपरिणामेन तृतीया व्याख्येया, कतरे कतरेभ्यो विशेषा वेति, गौतम ! चन्द्रसूर्या एते द्वयेऽपि परस्परं तुल्याः, प्रतिद्वीपं प्रतिसमुद्रं चन्द्रसूर्याणां समसङ्ख्याकत्वात्, शेषेभ्यो ग्रहादिभ्यः सर्वेऽपि स्तोकाः, तेभ्यो नक्षत्राणि सङ्ख्येयगुणानि अष्टाविंशतिगुणत्वात्, तेभ्योऽपि ग्रहाः सङ्ख्येयगुणा— सातिरेकत्रिगुणत्वात्, तेभ्योऽपि तारारूपाणि सङ्ख्येयगुणानि प्रभूतकोटाकोटीगुणत्वादिति, व्याख्यातं षोडशमल्पबहुत्वद्वारं ।

मू. (३६०) *जंबुद्दीवे णं भंते ! दीवे जहन्नपए वा उक्कोसपए वा केवइआ तित्थयरा सव्वग्गेणं पं० ?, गो० ! जहन्नपए चत्तारि उक्कोसपए चोत्तीसं तित्थयरा सव्वग्गेणं पन्नत्ता । जंबुद्दीवे णं भंते ! दीवे केवइआ जहन्नपए वा उक्कोसपए वा चक्कवट्टी सव्वग्गेणं पं० ?, गो० जहन्नपदे चत्तारि उक्कोसपदे तीसं चक्कवट्टी सव्वग्गेणं पन्नत्ता इति, बलदेवा तत्तिआ चेव जत्तिआ चक्कवट्टी, वासुदेवावि तत्तिया चेवत्ति ।*

*जंबुद्दीवे दीवे केवइआ निहिरयणा सव्वग्गेणं पं० ?, गो० ! तिन्नि छलुत्तरा निहिरयणसया सव्वग्गेणं प०, जम्बुद्दीवे २ केवइआ निहिरयणसया परिभोगत्ताए हव्वमागच्छंति ?, गो० ! जहन्नपए छत्तीसं उक्कोसपए दोन्नि सत्तरा णिहिरयणसया परिभोगत्ताए हव्वमागच्छंति ।*

वृ. अथ जम्बूद्वीपे जघन्योत्कृष्टपदाभ्यां तीर्थकरान् पिपृच्छिषुराह—'जंबुद्दीवे णं भंते ! दीवे जहन्नपए' इत्यादि, जम्बूद्वीपे भदन्त ! द्वीपे जघन्यपदे सर्वस्तोके स्थाने वा उत्कृष्टपदे सर्वोत्कृष्टस्थाने वा विचार्यमाणे इति शेषः कियन्तस्तीर्थकराः सर्वाग्रेण—सर्वसंख्यया केवलिदृष्टमात्रया इत्यर्थः प्रज्ञप्ताः ?, गौतम ! जघन्यपदे चत्वारः प्राप्यन्ते, तथाहि—जम्बूद्वीपस्य पूर्वविदेहे शीतामहानद्या द्विभागीकृते दक्षिणोत्तरदिग्भागयोरेकैकस्य सद्भावात् द्वौ अपरविदेहेऽपि शीतोदया महानद्या द्विभागीकृते तथैव द्वौ जिनेन्द्रौ मिलिताश्चत्वारः, भरतैरावतयोस्तु एकान्तसुषमादावभाव एव, उत्कृष्टपदे चतु० स्त्रिंशत्तीर्थकराः सर्वाग्रेण प्रज्ञप्ताः, तथाहि—महाविदेहे प्रतिविजयं भरतैरावतयोश्चैकैकस्य सम्भव इति सर्वमीलने चतु० स्त्रिंशत्, एषां हि भगवतां स्वस्वक्षेत्रवर्त्तिभिश्चक्रिभिरर्द्धचक्रिभिश्च महानवस्थानलक्षणविरोधासम्भवात्, एतच्च विहरमानजिनापेक्षया बोद्धव्यं, न तु जन्मापेक्षया, तच्चिन्तायां तूत्कृष्टपदे चतुस्त्रि०शतस्तीर्थकराणामसम्भवादिति ।

अथात्रैव जघन्योत्कृष्टपदाभ्यां चक्रिणः पृच्छति—'जंबुद्दीवे' इत्यादि, जम्बूद्वीपे भदन्त ! द्वीपे कियन्तो जघन्यपदे वा उत्कृष्टपदे वा चक्रवर्तिनः प्रज्ञप्ताः ?, भगवानाह—गौतम ! जघन्यपदे चत्वारः उपपत्तिस्तु तीर्थङ्कराणामिव, उत्कृष्टपदे त्रिंशच्चक्रवर्त्तिनः सर्वाग्रेण प्रज्ञप्ताः, कथमिति चेत्, उच्यते, द्वात्रिंशद्विजयेषु वासुदेवस्वामिकान्यतरविजयचतुष्कवर्जितविजयसत्काऽष्टाविंशति भरतैरावतयोस्तु द्वाविति पूर्वापरमीलितास्त्रिंशत्, यदा महाविदेहे उत्कृष्टपदेऽष्टाविंशतिश्चक्रिणः प्राप्यन्ते तदा नियमाच्चतुर्णामर्द्धचक्रिणां सम्भवेन तन्निरुद्धक्षेत्रेषु चक्रिणामसम्भवात्, चक्रिणामर्द्धचक्रिणां च सहानवस्थानलक्षणविरोधादिति । अथात्र तथैव बलदेवानर्द्धचक्रिणश्चाह—बलदेवा अपि तावन्त एवोत्कृष्टपदे जघन्यपदे च यावन्तश्चक्रवर्त्तिनः, वासुदेवा अपि तावन्त एव

बलदेवसहचारित्वात्, कोऽर्थः ? यदा चक्रवर्त्तिनः उत्कृष्टपदे त्रिंशद् तदा अवश्यं बलदेववासुदेवा जघन्यपदे चत्वारः तेषां चतुर्णामवश्यं भावात्, यदा च बलदेवा वासुदेवा उत्कृष्टपदे त्रिंशत् तदा चक्रिणां जघन्यपदे चत्वारः तेषामपि चतुर्णामवश्यं भावात्, तेनैतेषां परस्परं सहानवस्थानलक्षणविरोधमा- श्रेनान्यतराश्रितक्षेत्रे तदन्यतरस्याभाव इति।

अथैते निधिपतयो भवन्तीति जम्बूद्वीपे निधिसङ्ख्यां प्रष्टुमाह– 'जम्बुद्दीवे दीवे' इत्यादि, जम्बूद्वीपे द्वीपे कियन्ति निधिरत्नानिउत्कृष्टनिधानानि यानि गङ्गादिनदीमुखस्थानि चक्रवर्त्ती हस्तगतपरिपूर्णषट्खण्डदिग्विजयव्यावृत्तोऽष्टमतपःकरणानन्तरं स्वसात्करोति तानि सर्वाग्रेण–सर्वसङ्ख्यया प्रज्ञप्तानि ?, भगवानाह–गौतम ! त्रीणि षडुत्तराणि निधिरत्नशतानि सर्वाग्रेण प्रज्ञप्तानि, तद्यथा–नवसङ्ख्याकानि निधानानि चतुस्त्रिंशता गुण्यन्त इति यथोक्तसङ्ख्येति, इयं च सत्तामाश्रित्य प्ररूपणा कृता, अथ निधिपतीनां कति निधानानि विवक्षितकाले भोग्यानि भवन्तीति प्रश्नमाह - 'जम्बुद्दीवे दीवे' इत्यादि, जम्बूद्वीपे द्वीपे कियन्ति निधिरत्नशतानि परिभोग्यतया उत्पन्ने प्रयोजे चक्रवर्त्तिभिव्यापार्यमाणत्वेन हव्वमिति–शीघ्रं चक्रवर्त्यभिलाषोत्पत्त्यनन्तरं निर्विलम्बमित्यर्थः आगच्छन्ति ?, भगवानाह–गौतम ! जघन्यपदे षट्त्रिंशत् जघन्यपदभाविनां चक्रवर्त्तिनां नवनिधानानि चतुर्गुणितानि यथोक्तसङ्ख्याप्रदानीति, उत्कृष्टपदे तु द्वे सप्तत्यधिके निधिरत्नशते परिभोग्यतया शीघ्रमागच्छतः, उत्कृष्टपदभाविनां चक्रिणां त्रिंशतो नव नव निधानानि भवन्तिति नव त्रिंशता गुण्यन् इत्युपपद्यते यथोक्तसंख्येति ।

**मू. (३६१)** *जंबुद्दीवे २ केवइआ पंचिंदिअरयणसया सव्वग्गेणं पन्नत्ता ?, गो० ! दो दसुत्तरा पंचिंदिअरयणसया सव्वग्गेणं पन्नत्ता, जंबुद्दीवे २ जहन्नपदे वा उक्कोसपदे वा केवइआ पंचिंदिअरयणसया परिभोगत्ताए हव्वमागच्छंति ?, गो० ! जहन्नपए अट्ठावीसं उक्कोसपए दोन्नि दसुत्तरा पंचिंदिअरयणसया परिभोगत्ताए हव्वमागच्छंति । जम्बुद्दीवे णं भंते ! दीवे केवइआ एगिंदिअरयणसया सव्वग्गेणं पं० ?, गो० ! दो दसुत्तरा एगिंदिअरयणसया सव्वग्गेणं पं०, जंबुद्दीवे णं भंते ! दीवे केवइआ एगिंदिअरयणसया परिभोगत्ताए हव्वमागच्छंति ?, गो० ! जहन्नपए अट्ठावीसं उक्कोसेणं दोन्नि दसुत्तरा एगिंदिअरयणसया परिभोगत्ताए हव्वमागच्छंति ।*

**वृ.** अथ जम्बूद्वीपवर्त्तिरत्नसंख्यां पिपृच्छिषुराह– 'जंबुद्दीवे' त्ति, जम्बूद्वीपे २ भदन्त ! कियन्ति पञ्चेन्द्रियरत्नानि–सेनापत्यादीनि सप्त तेषां शतानि सर्वाग्रेण प्रज्ञप्तानि ? भगवानाह–गौतम! द्वे दशोत्तरे पञ्चेन्द्रियरत्नशते सर्वाग्रेण प्रज्ञप्ते, तद्यथा–उत्कृष्टपदभाविनां त्रिंशतश्चक्रिणां प्रत्येकं सप्तपञ्चेन्द्रियरत्नसद्भावेन सप्तसंख्या त्रिंशता गुण्यते भवति यथोक्तं मानं, ननु निधिसर्वाग्रपृच्छायां चतुस्त्रिंशता गुणनं पञ्चेन्द्रिरत्नसर्वाग्रपृच्छायां तु किमिति त्रिंशता गुणनं ?, उच्यते, चतुर्षु वासुदेव-विजयेषु तदा तेषामनुपलम्भात्, निधीनां तु नियतभावत्वेन सर्वदाऽप्युपलब्धेः, तेन रत्नसर्वाग्रसूत्रे रत्नपरिभोगसूत्रे च न कश्चित् संख्याकृतो विशेष इति । अथ रत्नपरिभोगप्रश्न-सूत्रमाह–'जम्बुद्दीवे' इत्यादि, प्रायो व्याख्यातत्वाद् व्यक्तं, अथैकेन्द्रियरत्नानि प्रश्नयितु-माह–'जम्बुद्दीवे' त्ति व्यक्तं । अथ जम्बूद्वीपस्य विष्कम्भादीनि पृच्छन्नाह–

**मू. (३६२)** *जंबुद्दीवे णं भंते ! दीवे केवइअं आयामविक्खंभेणं केवइअं परिक्खेवेणं केवइअं उव्वेहेणं केवइअं उद्धं उच्चत्तेणं केवइअं सव्वग्गेणं पं० ?, गो० ! जम्बुद्दीवे २ एगं*

*जोअणसयसहस्सं आयामविक्खंभेणं तिन्नि जोअणसयसहस्साइं सोलस य सहस्साइं दोन्नि अ सत्तावीसे जोअणसए तिन्नि अ कोसे अट्ठावीसं च धनुसयं तेरस अंगुलाइं अद्धंगुलं च किंचिविसेसाहिअं परिक्खेवेणं पं०, एगं जोअणसहस्सं उव्वेहेणं नवनउतिं जोअणसहस्साइं साइरेगाइं उद्धं उच्चत्तेणं साइरेगं जोअणसयसहस्सं सव्वग्गेणं पन्नत्ते।*

*जंबुद्दीवे णं भंते! दीवे किं सासए असासए?, गोअमा! सिअ सासए सिअ असासए, से केणट्ठेणं० गो०! दव्वट्ठयाए सासए वण्णपज्जवेहिं गंध० रस) फासपज्जवेहिं असासए, से तेणट्ठेणं गो० एवं वुच्चइ सिअ सासए सिअ असासए। जंबुद्दीवे णं भंते! दीवे कालओ केवचिरं होइ?, गो०! न कयावि नासि न कयावि नत्थि न कयावि न भविस्सइ, भुविं च भवइ अ भविस्सइ अ धुवे निइए सासए अव्वए अवट्ठिए निच्चे जंबुद्दीवे दीवे प०।*

वृ. 'जंबुद्दीवे'त्ति, अत्र सूत्रे विष्कम्भायामपरिक्षेपः प्राग्व्याख्यातः, पुनः प्रश्नविषयीकरणं तु उद्वेधादिशेषत्रधर्मप्रश्नकरणप्रस्तावाद्विस्मरणशीलविनेयजनस्मरणरूपोपकारायेति, तेन उद्वेधादिसूत्रे जम्बूद्वीपं द्वीपं अत्र द्वीपशब्दस्य क्लीबत्वनिर्देशः क्लीबेऽपि वर्त्तमानत्वात् कियदुद्वेधेन—उण्डत्वेन भूमिप्रविष्टत्वेनेत्यर्थः कियदूर्ध्वोच्चत्वेन—भूनिर्गतोच्चत्वेनेत्यर्थ कियच्च सर्वाग्रेण—उण्डत्वोच्चत्वमीलनेन प्रज्ञप्तम्?, भगवानाह—गौतम! विष्कम्भायामपरिक्षेपविषयं निर्वचनसूत्रं प्राग्वत् उद्वेधादिनिर्वचनसूत्रे तु एकं योजनसहस्रमुद्वेधेन सातिरेकाणि नवनवतिं योजनसहस्राणि ऊर्ध्वोच्चत्वेन सातिरेकं योजनशतसहस्रं सर्वाग्रेण प्रज्ञप्तम्, ननु ऊण्डत्वव्यवहारो जलाशयादौ उच्चत्वव्यवहारस्तु पर्वतविमानादौ प्रसिद्धः द्वीपे तु सं किं?, व्यवहाराविषयत्वादिति, उच्यते, समभूतलादारभ्य रत्नप्रभायामधः सहस्रयोजनानि यावद् गमनेऽधोग्रामविजयादिषु जम्बूद्वीपव्यवहारस्योपलभ्यमानत्वेनोण्डत्वव्यवहारः सुप्रसिद्ध एव, तथा जम्बूद्वीपोत्पन्नानां तीर्थकृतां जम्बूद्वीपमेरोः पण्डगवनेऽभिषेकशिलायामभिषिच्यमानत्वात् जम्बूद्वीपव्यपदेशपूर्वकमभिषेकस्य जायमानत्वेनोच्चत्वव्यवहारोऽप्यागमे सुप्रसिद्ध एवेति। अथास्यैव शाश्वतभावादिकं प्रश्नयन्नाह—इदं च यथा प्राक् पद्मवरवेदिकाधिकारे व्याख्यातं तथाऽत्र जम्बूद्वीपव्यपदेशेन बोध्यमिति, एवं च शाश्वताशाश्वतो घटो निरन्वयविनश्वरो दृष्टः किमसावपि तद्वत् उत नेत्याह—'जंबूद्दीवे ण'मित्यादि, इदमपि प्राक् पद्मवरवेदिकाधिकारे व्याख्यातमिति।

*मू. (३६३) जंबुद्दीवे णं भंते! दीवे किं पुढविपरिणामे आउपरिणामे जीवपरिणामे पोग्गलपरिणामे?, गोअमा! पुढविपरिणामेवि आउपरिणामेवि जीवपरिणामेवि पुग्गलपरिणामेवि जंबुद्दीवे णं भंते! दीवे सव्वपाणा सव्वजीवा सव्वभूआ सव्वसत्ता पुढविकाइअत्ताए आउ० तेउ० वाउ० वणस्सइकाइ० उववण्णपुव्वा?, हंता गो०! असइं अदुवा अणंतखुत्तो।*

वृ. अथ किंपरिणामोऽसौ द्वीप इति पिपृच्छिषुराह—'जंबुद्दीवे णं भंते!'इत्यादि, जम्बूद्वीपो भदन्त! द्वीपः किं पृथिवीपरिणामः—पृथिवीपिण्डमयः किमप्परिणामः—जलपिण्डमयः, एतादृशौ च स्कन्धावचित्तरजः स्कन्धादिवदजीवपरिणामावपि भवत इत्याशङ्कयाह—किं जीवपरिणामः—जीवमयः, घटादिरजीवपरिणामोऽपि भवतीत्याशङ्कयाह—किं पुद्गलपरिणामः—पुद्गलस्कन्धनिष्पन्नः केवलपुद्गलपिण्डमय इत्यर्थः, तेजसस्त्वेकान्तसुषमादावनुत्पन्नत्वेन एकान्तदुष्षमादौ तु विध्वस्तत्वेन जम्बूद्वीपेऽस्य तत्परिणामेऽङ्गीक्रियमाणे कादाचित्कत्वप्रसङ्गः वायोस्त्वतिचलत्वेन

तत्परिणामे द्वीपस्यापि चलत्त्वापत्तिरिति तयोः स्वत एव सन्देहाविषयत्वेन न प्रश्नसूत्रे उपन्यासः, भगवानाह—गौतम ! पृथिवीपरिणामोऽपि पर्वतादिमत्त्वात् अप्परिणामोऽपि नदीह्रदादिमत्त्वात् जीवपरिणामोऽपि भुखवनादिषु वनस्पत्यादिमत्त्वात्, यद्यपि स्वसमये पृथिव्यपकायपरिणामत्वग्रहणेनैव जीवपरिणामत्वं सिद्धं तथापि लोके तयोर्जीवत्वस्याव्यवहारात् पृथग्ग्रहणं, वनस्पत्यादीनां तु जीवत्वव्यवहारः स्वपरसम्मत इति, पुद्गलपरिणामोऽपि मूर्त्तत्वस्य प्रत्यक्षसिद्धत्वात्, कोऽर्थः ? —जम्बूद्वीपो हि स्कन्धरूपः पदार्थः, स चावयवैः समुदितैर्भवति, समुदायरूपत्वात् समुदायिन इति ।

अथ यदि चायं जीवपरिणामस्तर्हि सर्वे जीवा अत्रोत्पन्नपूर्वा उत नेत्याशङ्कयाह— 'जंबुद्दीवे णं भंते !' इत्यादि, जम्बूद्वीपे भदन्त ! द्वीपे सर्वे प्राणाः—द्वित्रिचतुरिन्द्रियाः सर्वे जीवाः—पञ्चेन्द्रियाः सर्वे भूताः—तरवः सर्वे सत्वाः—पृथिव्यप्तेजोवायुकायिकाः, अनेन च सांव्यवहारिकराशिविषयक एवायं प्रश्नः, अनादिनिगोदनिर्गतानामेव प्राणजीवादिरूपविशेषपर्यायप्रतिपत्तेः, पृथिवीकायिकतया अपकायिकतया तेजस्कायिकतया वायुकायिकतया वनस्पतिकायिकतया उपपन्नपूर्वा— उत्पन्नपूर्वा ?, भगवानाह—'हंता गोअमा !' एवं गौतम ! यथैव प्रश्नसूत्रं तथैव प्रत्युच्चारणीयं पृथिवीकायिकतया यावद्वनस्पतिकायिकतया उपपन्नपूर्वा कालक्रमेण संसारस्यानादित्वात्, न पुनः सर्वे प्राणादयो जीवविशेषा युगपदुत्पन्नाः सकलजीवनामेककालं जम्बूद्वीपे पृथिव्यादिभावेनोत्पादे सकलदेवनारकादिभेदाभावप्रसक्तेः, न चतदस्ति, तथा जगत्स्वभावादिति, कियन्तो वारानुत्पन्ना इत्याह—असकृद्—अनेकशः अथवा अनन्तकृत्वः—अनन्तवारान् संसारस्यानादित्वादिति । अथ जम्बूद्वीपेतिनाम्नो व्युत्पत्तिनिमित्तं जिज्ञासिषुः पृच्छति—

*मू. (३६४) से केणट्ठेणं भंते ! एवं वुच्चइ जंबुद्दीवे २ ?, गो० ! जंबुद्दीवे णं दीवे तत्थ २ देसे तहिं २ बहवे जंबूरुक्खा जंबूवणा जंबूवणसंडा निच्चं कुसुमिआ जाव पिंडिमंजरिवडेंसगधरा सिरीए अईव उवसोभेमाणा चिट्ठंति, जंबूए सुदंसणाए अनाढिएणामं देवे महिड्ढीए जाव पलिओवमट्ठिइए परिवसइ, से तेणट्ठेणं गोअमा ! एवं वुच्चइ जंबुद्दीवे दीवे इति ।*

वृ. 'से केणट्ठेणं भंते ! एवं वुच्चइ—जंबुद्दीवे दीवे' इत्यादि, अथ केनार्थेन भदन्त ! एवमुच्यते जम्बूद्वीपो द्वीपः ?, भगवानाह—गौतम ! जम्बूद्वीपे २ तत्र तत्र देशे तस्य देशस्य २ तत्र तत्र प्रदेशे बहवो जम्बूवृक्षाः एकैकरूपाः विरलस्थितत्वात् तथा बहूनि जम्बूवनानि—जम्बूवृक्षा एव समूहभावेन स्थिताः अविरलस्थितत्वात् 'एकजातीयतरुसमूहो वन'मिति वचनात्, तथा बहवो जम्बूवनखण्डाः— जम्बूवृक्षसमूहा एव विजातीयतरुमिश्रिताः, 'अनेकजातीयतरुसमूहो वनखण्ड' इति वचनात्, तत्रापि जम्बूवनखण्डाः—जम्बूवृक्षसमूहा एव विजातीयतरुमिश्रिताः, 'एनेकजातीयतरुसमूहो वनखण्ड' इति वचनात्, तत्रापि जम्बूवृक्षाणामेव प्राधान्यमिति प्रस्तुते वर्णकसाफल्यं, अन्यथा अपरवृक्षाणां वनखण्डेर्निमित्तभूतैर्जम्बूद्वीपपदप्रवृत्तिनिमित्तत्वेऽसाफल्यात्, ते च कथंभूता इत्याह— नित्यं—सर्वकालं कुसुमिताः यावत्पदात् 'निच्चं माइया निच्चं लवइआ निच्चं थवइआ जाव निच्चं कुसुमिअमाइअलवइअथवइअगुलइअगोच्छइअजमलिअजुवलिअविणमिअसुविभत्त' इति ग्राह्यम्

एतदव्याख्यानं प्राग्वनखण्डवर्णके कृतमिति ततो ज्ञेयं, उक्तवर्णकोपेताश्च वृक्षाः श्रिया अतीव उपशोभमानास्तिष्ठन्ति, इदं च नित्यकुसुमित्वादिकं जम्बूवृक्षाणामुत्तरकुरुक्षेत्रापेक्षया

बोध्यं, अन्यथैषां प्रावृट्कालभाविपुष्पफलोदयवत्त्वेन प्रत्यक्षबाधात्, एतेन च जम्बूवृक्षबहुलो द्वीपो जम्बूद्वीप इत्यावेदितं भवति, अथवा जम्ब्वां सुदर्शनाभिधानायामनाढतनामा–पूर्वं जम्बूवृक्षाधिकारे व्याख्यातनामा देवो महर्द्धिको यावत्करणात् 'महज्जुईए' इत्यादि ग्राह्यं, पल्योपमस्थितिकः परिवसति, अथ तेनार्थेन भदन्त ! एवमुच्यते–स्वाधिपत्यनाढतनामदेवाश्रयभूतया जम्ब्वोपलक्षितो द्वीपो जम्बूद्वीप इति, सूत्रैकदेशो ह्यपरं सूत्रैकदेशं स्मारयतीति 'अदुत्तरं च णं जंबुद्दीवस्स सासए नामधेज्जे पन्नत्ते जंन कयाइ न आसी न कयाइ नत्थि न कयाइ न भविस्सइ जाव निच्चे' इति ज्ञेयम्, जीवाभिगमादर्शे तथादर्शनात्, एतेन किमाकारभावप्रत्यवतारो जंबूद्वीप इति चतुर्थ प्रश्नो निर्व्यूढ इति ।

**मू. (३६५)** *तए णं समणे भगवं महावीरे मिहिलाए नयरीए माणिभद्दे चेइए बहूणं समणाणं बहूणं समणीणं बहूणं सावयाणं बहूणं सावियाणं बहूणं देवाणं बहूणं देवीणं मज्झगए एवमाइक्खइ एवं भासइ एवं पन्नवेइ एवं परूवेइ जंबूदीवपन्नती नामत्ति अज्जो ! अज्झयणे अट्ठं च हेउं च पसिणं च कारणं च वागरणं च भुज्जो २ उवदंसेइत्तिबेमि ॥*

**वृ.** अथ प्रस्तुततीर्थद्वादशाङ्गीसूत्रसंसूत्रणविश्वकर्मा श्रीसुधर्मस्वामी स्वस्मिन् गुरुत्वाभिमानं परिजिहीर्षु प्रस्तुतग्रन्थनामोपदर्शनपूर्वकं निगमनवाक्यमाह–'तए णं' मित्यादि, शाश्वतत्वाच्छाश्वतनामकत्वाच्च सद्रूपोऽयं जम्बूद्वीपरूपो भावः, सन्तं हि भावं नापलपन्ति वीतरागास्ततः श्रमणो भगवान् महावीरो मिथिलायां नगर्यां माणिभद्रे चैत्ये बहूनां श्रमणानां बहूनां श्रमणीनां बहूनां श्रावकाणां बहूनां श्राविकाणां बहूनां देवानां बहूनां देवीनां मध्यगतो न पुनरेकान्ते एकतरस्य कस्य चित् पुरतः एवं–यथोक्तमुक्तानुसारेणेत्यर्थ आख्याति–प्रथमतो वाच्यमात्रकथनेन एवं भाषते–विशेषवचनकथनतः एवं प्रज्ञापयति–व्यक्तपर्यायवचनतः एवं प्ररूपयत्युपपत्तितः, आख्येयस्याभिधानमाह–जम्बूद्वीपप्रज्ञप्तिरिति नाम षष्ठोपाङ्गमिति शेषः, एतच्च ग्रन्थाग्रेण साधिकैकचत्वारिंशच्छतश्लोकमानं, यत्तु श्रीमलयगिरिपादैः सूर्यप्रज्ञप्तिटीकायां द्वितीयप्राभृतप्राभृते 'एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे चउद्दस सलिलासयसहस्साइं छप्पन्नं च सलिलासहस्साइं भवंतीतिम- क्खाय' मित्यंतं श्लोकसहस्रचतुष्टयमानमुक्तं, ज्योतिष्काधिकारसूत्रमीलनेन च सप्तचत्वारिंशच्छ- ताधिकमपि, तत्तु यावत्पदसंग्रहेण जन्माधिकारबृहद्वाचनाप्रक्षेपेण च तावत्परिमाणं सम्भाव्यत इति बोध्यं ।

अत्र गुणान् विभावयन्नाह–'अज्जो अज्झयणे अट्ठं च हेउं च पसिणं च' इत्यादि, आरात्–सर्वपापाद् दूरं यातः आर्य–श्रीवर्द्धमानस्वामी अत एव सर्वसावद्यवर्जकत्वेन 'सावद्यं निरर्थकं तुच्छार्थकं च ब्रूयादि'ति वक्तृप्रामाण्येन वचनप्रामाण्यमावेदितं भवति, अथवा श्रीसुधर्म्मस्वामिसम्बोधनं श्रीजम्बूस्वामिनं प्रति हे आर्य ! इति, अध्ययने–प्रस्तुतजम्बूद्वीपप्रज्ञप्तिनामके स्वतन्त्राध्ययने न तु शस्त्रपरिज्ञादिवत् श्रुतस्कन्धाद्यन्तर्गते अर्थं च चाः परस्परं समुच्चयार्था हेतुं च प्रश्नं च कारणं च व्याकरणं च भूयो भूयो–विस्मरणशीलश्रोत्रनुग्रहार्थं वारंवारं प्रकाशनेन अथवा प्रतिवस्तु नामार्थादिप्रकाशनेनोपदर्शयतीति सम्बन्धः, अनेन गुरुपारतन्त्र्यमभिहितं, तत्रार्थो जम्बूद्वीपादिपदानामन्वर्थः, स यथा 'से केणट्ठेणं भंते ! एवं वुच्चइ–जंबुद्दीवे दीवे गो० ! जम्बु० तत्थ २ देसे तहिं २ बहवे जम्बूरुक्खा जम्बूवणा जम्बूवणसंडा जाव

पिंडिममंजरिवडेंसगधरा सिरीए अईव २ उवसोभेमाणा चिट्ठंति, जम्बूए अ सुदंसणाए अणाढिए णामं देवे महिड्ढीए जाव पलिओवमट्ठिईए परिवसइ, से तेणट्ठेणं गोअमा एवं वुच्चइ–

जम्बुद्दीवे २' इति, तथा हेतुः–निमित्तं स यथा 'पभू णं भंते ! चंदे जोइसिंदे जोइसराया चन्दवडेंसए विमाणे चंदाए रायहाणीए सभाए सुहम्माए तुडिएणं सद्धिं महयाहयनट्टगी अवाइअ जाव दिव्वाइं भोगभोगाइं भुंजमाणे विहरित्तए ?, गोअमा ! नो इणट्ठे समट्ठे' इत्यत्राभिधातव्यार्थस्य 'से केणट्ठेणं जाव विहरित्तए ?, गोअमा ! चंदस्स जोइसंदस्स० चंदवडेंसए विमाणे चंदाए रायहाणीए सभाए सुहम्माए माणवए चेइअखंभे वइरामएसु गोलवट्टसमुग्गएसु बहूईओ जिनसकहाओ संनिक्खित्ताओ चिट्ठंति, ताओ णं चंदस्स अन्नेसिं च बहूणं देवाण य देवीण य अच्चणिज्जाओ जाव पज्जुवासणिज्जाओ, से तेणट्ठेणं गो० ! नो पभू' त्ति, इदं सूत्रं हेतुप्रतिपादकम्

तथा प्रश्नः–शिष्यपृष्टस्यार्थस्य प्रतिपादनरूपः, यथा लोकेऽप्युच्यते–अनेन प्रश्नानि सम्यक् कथितानि, अन्यथा सर्वथा सर्वभावविदो भगवतः प्रष्टव्यार्थाभावेन कुतः प्रश्नसम्भव इति, यथा –'कहि णं भंते ! जंबुद्दीवे दीवे केमहालए णं भंते ! जंबुद्दीवे दीवे किंसंठिए णं भंते ! जंबुद्दीवे दीवे किमायारभावपडोआरे णं भंते ! जंबुद्दीवे दीवे पन्नत्ते ?, गोअमा ! अयण्णं जंबुद्दीवे दीवे सव्वदीवसमुद्दाणं सव्वब्भंतरए सव्वखुड्डाए वट्टे तेल्लापूअसंठाणसंठिए वट्टे पुक्खर-कण्णिआसंठाणसंठिए वट्टे पडिपुण्णचंदसंठाणसंठिए एगं जोअणसयसहस्सं आयामविक्खंभेणं तिन्नि जोअणसयसहस्साइं सोलस य सहस्साइं दोन्नि अ सत्तावीसे जोअणसए तिन्नि अ कोसे अट्ठावीसं च धणुसयं तेरस अंगुलाइं अद्धंगुलं च किंचिविसेसाहिअं परिक्खेवेणं प०' इति, तथा करणं–अपवादो विशेषवचन मितियावत्, तच्च नवरंपदगर्भितसूत्रवाच्यं, यथा–

'कहि णं भंते ! जंबुद्दीवे दीवे एरवए नामं वासे पन्नत्ते ?, गोअमा ! सिहरिस्स उत्तरेणं उत्तरलवणसमुद्दस्स दक्खिणेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं एत्थ णं जंबुद्दीवे दीवे एरवए नामं वासे पन्नत्ते, खाणुबहुले कंटकबहुले एवं जच्चेव वत्तव्वया भरहस्स सच्चेव सव्वा निरवसेसा नेअव्वा सओअवणा सनिक्खमणा सपरिणिव्वाणा' इत्यतिदेशसूत्रे नवरं एरावओ चक्कवट्टी देवे एरावए से तेणट्ठेणं एरावए वासे' इति, तथा व्याकरणं–अपृष्टोत्तररूपं, तद्यथा– जया णं भंते ! सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गोअमा ! पंच पंच जोअणसहस्साइं दोन्नि अ एगावन्ने जोअणसए एगूणतीसं च सट्ठिभाए जोअणस्स एगमेगेणं मुहुत्तेणं गच्छइ' इत्यन्तसूत्रे 'तया णं इहगयस्स मणूसस्स सीआलीसाए जोअणसहस्सेहिं दोहि अ तेवट्ठेहिं जोयणसएहिं एगवीसाए अ जोअणस्स सट्ठिभागेहिं सूरिए चक्खुप्फासं हव्वमागच्छइ' इत्येवंरूपेण सूत्रेण सूर्यस्य चक्षुपथप्राप्तता शिष्येणा- पृष्टापि परोपकारैकप्रवृत्तेन भगवता स्वयं व्याकृतेति, इति ब्रवीमीति सुधर्म्मा स्वामी जम्बूस्वामिनं प्रति ब्रूते अहमिति ब्रवीमि, कोऽर्थः ? –गुरुसम्प्रदायागतमिदं जम्बूद्वीपप्रज्ञप्तिनामकमध्ययनं, नतु मया स्वबुद्ध्योत्प्रेक्षितमिति, उपदर्शयतीत्यत्र वर्त्तमाननिर्देशस्तत्कालभाविस्वर्हत्सु जम्बूद्वीप- प्रज्ञप्त्युपाङ्गविषयकार्थप्रणेतृत्वरूप-विधिदर्शनार्थं, अत्र च ग्रन्थपर्यवसाने श्रीमन्महावीरनामकथनं चरममङ्गलमिति ॥

वक्षस्कारः–७ समाप्तः

इति सातिशयधर्मदिशनारससमुल्लासविस्मयमानेऐदंयुगीननराधिपतिचक्रवर्तिसमान श्रीअकब्बरसुरत्राणप्रदत्तषाण्मासिकसर्वजन्तुजा तामयदानशत्रुंजयादिकरमोचनस्फुरन्मान प्रदानप्रभृतिबहुमानयुगप्रधानोपमानसाम्प्रतविजयमाश्रीमत्तपागच्छाधिराजश्रीहीरविजय सूरिश्वरपदपद्मोपासनाप्रवणमहोपाध्यायश्रीसकलचन्द्रगणिशिष्योपाध्यायश्रीशान्तिचन्द्रगणिविरचितायां जम्बूद्वीपप्रज्ञप्तिवृत्तौ रत्नमञ्जूषानाम्न्यां ज्योतिष्काधिकारवर्णनो नाम सप्तमो वक्षस्कारः समाप्तः, तत्समाप्तौ च समाप्तयेयं श्री जम्बूद्वीप प्रज्ञप्ति उपाङ्ग वृत्ति ॥

**मुनि दीपरत्न सागरेण संशोधिता सम्पादिता जम्बूद्वीपप्रज्ञप्तिउपाङ्गसूत्रे शान्तिचन्द्रवाचकेन विरचिता वृत्तिः परिसमाप्ता।**

## प्रशस्तिः।

॥ १ ॥ श्रेयःश्रीप्रतिभूप्रभूततपसा यो मोहराजं रिपुं,
दध्वंसे सहसा श्रितो गतमलं ज्ञानं च यः केवलम्।
यो जुष्टश्च सदा त्रिविष्टपसदां वृन्दैस्तथा तथ्यवाग्,
यस्तीर्थाधिपति श्रियं स ददतां श्रीवीरदेवः सताम् ॥

॥ २ ॥ अर्हत्स्विवात्र निखिलेषु गणाधिपेषु,
वामेयदेव इव यो विदितो जगत्याम्।
आदेयतामदधदभ्दुतलब्धिधाम श्री
गौतमोऽस्तु सम (मम) पूरितसिद्धिकामः ॥

॥ ३ ॥ यं पञ्चमं प्रथमतोऽपि रतोपयेमे, श्रीवीरपट्टपदुलक्ष्मिसरोरुहाक्षी।
रुद्राङ्कितेषु गणभृत्सु सुधर्म्मनामा, भूयादयं सुभगतानिधिरिष्टसिद्धयै ॥

॥ ४ ॥ तस्य प्रभोः स्थविरवृन्दपरम्परायां,
तत्ताद्वसत्कुलगणावलिसम्भवायाम्।
जातः क्रमाद् वटगणेन्द्रतपस्विसूरेः,
श्रीमांस्तपागण इति प्रथितः पृथिव्याम् ॥

॥ ५ ॥ पद्मावतीवचनतोऽभ्युदयं विभाव्य,
यत्सूरये स्तवनसप्तशतीं स्वकीयाम्।
सूरिर्जिनप्रभ उपप्रददे प्रयायै,
सोऽयं सत तपगणो न कथं प्रशस्यः ॥

॥ ६ ॥ तत्रानेके बभूवुः सुविहितगुरवः श्रीजगच्चन्द्रमुख्याः,
दोषायां वा दिवा वा सदसि रहसि वा स्वक्रियास्वेकभावाः।
आदिक्रोडैरिवोर्व्वी चिकिलभरगता दुष्षमादावमग्ना,
यैरुद्दध्रे वितन्द्रैः स्वपरहितकृते सक्रिया सक्रियार्हा ॥

॥ ७ ॥ अदुष्यं वैदुष्यं चरणगुणवैदुष्यसहितं,
प्रमादाद्विमुख्यं प्रवचनविधेः सत्कथकता
गुणौधो यस्येत्थं न खलदुर्वाक्यविषयः,

क्रमादासीदस्मिन् परमगुरुरानन्दविमलः ॥
॥८॥ अन्तर्बाह्यमिति द्विधापि कुमतं श्रद्धावतां स्वागतं,
निश्शङ्कैस्तु यथाशयं प्रकटितं विच्छिन्दतोऽस्य प्रभोः ।
बाह्यध्वान्तविभेदिनो दिनमणेः साम्यं न रम्यं न वा,
ध्वान्तद्वैतभिदोऽपि मन्दिरमणेः संरक्षतोऽधस्तमः ॥
॥९॥ स्वगच्छे स्वस्मिंश्च प्रथयति तरां स्म प्रथम
तस्तथा साधोश्चर्यां ध्रुवसमय एव प्रभुरसौ ।
यथा सैतत्पट्टाधिपतिपुरुषे संयतगणे,
क्रमादुर्वी गुर्वी प्रजनियशस्काऽनुववृते ॥
॥१०॥ तत्पट्टभूषणमणि सुगुरुः धर्मबीजप्रवर्द्धनपटुर्भरतक्षमायाम् ।
सूरीश्वरो विजयदानगुरुर्बभूव, के वादिनो विजयदा न बभूवुरस्य ॥
॥११॥ नालीकनीरनिधिनिर्जरसिन्धुसेवा,
चक्रुश्चतुर्मुखचतुर्भुजचन्द्रचूडाः ।
यस्य प्रतापपरितापभृतो न भीता,
एते जडाश्रयिण इत्यपवादतोऽपि ॥
॥१२॥ तत्पट्टे गुरुहीरहीरविजयो [illegible],
जाग्रद्भाग्यनिधि प्रियागमविधिश्चारित्रिणां चावधि ।
यं सम्प्राप्य जगत्त्रयैकसुभगं मुक्तो मिथो मत्सरः,
श्रीवाग्भ्यामिव दीर्घकालजनितो ज्ञानक्रियाभ्यामपि ॥
॥१३॥ सौभाग्यं यस्य नाम्नो नृपसदसि गुणिभ्याविताया प्रसिद्धेः,
सौभाग्यं देशनाया अकबरनृपति पादयोः पादुकाख्या ।
सौभाग्यं यस्य पाणेरुपपदविजयः सेनसूरीश्वरोऽसौ,
सौभाग्यं दर्शनस्य त्वहमहमिकया स्वान्यलोकोपपातः ॥
॥१४॥ इदानीं तत्पट्टे गुरुविजयसेनो विजयते,
कलौ काले मूर्तः सुविहितजनाचारनिचयः ।
विरेजे राजन्वान् शशधरगणो येन विभुना,
गुणग्रामो यस्माद् भवति विनयेनैव सुभगः ॥
॥१५॥ खलास्तेजोराशिं चरणगुणराशिं सुविहिता,
विनेयाश्चिवराशिं प्रतिवचनराशिं कुमतिनः ।
कविं कीर्त्ते राशिं वरविनयराशिं च गुरवो,
विदुः स्थाने जाने शुचिसुकृतराशिं पुनरमुम् ॥
॥१६॥ गुरोरस्य श्रुत्वा श्रवणमधुरं चारु चरितं,
स्वगन्धर्वोदगीतं शुचिगुणगणोपार्जनभवम् ।
चमत्कारोत्कर्षात् ससलिलसहस्रनिमिषदृक्,
पटक्लेदक्लेशं सुबहु सहते गिर्यसहनः ॥

॥१७॥ तेषां गणे गुणवतां धुरि गण्यमानः,
श्रीवाचकः सकलचन्द्रगुरुर्बभूव।
मेघाविषु प्रथमतः प्रथमानकीर्त्ति,
स्फूर्तिर्यदीयकविकर्मणि सुप्रसिद्धा ॥
॥१८॥ पुनः पुनः संस्मृतिमीयुषीणां, प्रतिक्रियेयं यदुपक्रियाणाम्।
पुनः पुनर्लोचनसान्द्रभावः, पुनः पुनर्निश्वसनस्वभावः ॥
॥१९॥ तेषां शिष्याणुनेयं गुरुजनविहितानुग्रहादेव
जम्बूद्वीपप्रज्ञप्तिवृत्ति स्वपरहितकृते शान्तिचन्द्रेण चक्रे।
वर्षे श्रीविक्रमार्काद्विधुशरभूवक्रधात्री १६५१ प्रमाणे,
राज्ये प्राज्ये श्रिया श्रीअकबरनृपतेः पुण्यकारुण्यसिन्धोः ॥
॥२०॥ अस्योपाङ्गस्य गाम्भीर्यान्मदीयमतिमान्द्यतः।
सम्प्रदायव्यपायाश्च, पूर्ववृत्तिनिवृत्तितः ॥
॥२१॥ विरुद्धमागमादिभ्यो, यदत्र लिखितं मया।
धीलोघनैस्तदालोच्य, शोध्यं सानुग्रहैर्मयि ॥ युग्मम् ॥
॥२२॥ तुष्यन्तु साधवः सर्वे, मा रुष्यन्तु खला मयि।
नमस्करोमि निशेषान्, प्रीत्या भीत्या क्रमादिमान् ॥
॥२३॥ गम्भीरमिदमुपाङ्गं यथामति विवृण्वता विशदमतिना।
यदवापि मया कुशलं कुशलमतिस्तेन भवतु जनः ॥
॥२४॥ अर्थे यावन्नीलौकसि नभसि नक्षत्र
कुसुमव्रजं राज्ञः श्यामाभिगमसमये पूरिततरम्
मृजाकारः सूर्य करश्चबहुकरेणापनयति,
ध्रुवा तावद्भूयादियमखिललोकैः परिचिता
॥२६॥ अथ शोधनसमयगता पुरोऽनुसन्धीयते प्रशस्तिरियम्।
तपगणसाम्राज्यरमां श्रयति श्रीविजयसेनगुरौ ॥
॥२७॥ यत्सौभाग्यमनुत्तरं गुणगणो येषां वचोगोचरातीतः
कोऽप्यभवत् पुरापि विनयाधारः (सदा) पूजितः।
हित्वा येन पतिंवरावदपरान् यानेव सतन्नातुरो
युक्ताचार्यपदव्युदाररचिता सौवश्रियेऽशिश्रियत् ॥
॥२८॥ यद्रूपं मदनं सदा विमदनं निर्म्माति रम्यश्रिया,
यत्कीर्तिश्चपदातिकं वितनुते कान्त्या निशानायकम्
चित्रं सञ्चिनुते च चेतसि सतां यद्देशनावाक् सुधा
देश्या शासनदीपिकुश्च सतपो यद् ध्यानमत्यद्भुतम् ॥
॥२९॥ इति श्रीअकब्बरमहीधरदत्तमान-विख्यातिमद्विजयसेनगणाधिपानाम्।
नन्दिन्ति पट्टयुवराजपदं दधानाः, श्री सूरयो विजयदेवयतिप्रधानाः ॥
॥३०॥ श्रीविजयसेनसूरीश्वरगणनायकनिदेशकरणचणाः।

चत्वारोऽस्या वृत्तेः शुद्धिकृते सङ्गता निपुणाः ॥ तथाहि—

॥ ३१ ॥ श्रीसूरेर्विजयादिदानसुगुरोः श्रीहीरसूरेरपि,
प्राप्ता वाङ्मयतत्वमद्भुततरं ये सम्प्रदायागतम् ।
ये जैनागमसिन्धुतारणविधौ सत्कर्णधारयिता,
ये ख्याताः क्षितिमण्डले च गणितग्रन्थकारेखामृतः ॥

॥ ३२ ॥ लुम्पाकमुख्यकुमतैकतमःप्रपञ्चे,
रोचिष्णुचण्डरुचयः प्रतिभासमानाः ।
श्रीवाचका विमलहर्षवराभिधानास्ते
ऽत्रादिमा गुणगणेषु कृतावधानाः ॥

॥ ३३ ॥ तथा—ये संविग्नधुरन्धराः समभवन्नाबालकालादपि,
प्रज्ञावत्स्वपि ये च बन्धुरतरा प्रापुः प्रसिद्धिं पराम् ।
श्रीवीरे गणधारिगौतम इव श्रीहीरसूरौ गुरौ,
ये राजद्विनयास्तदातनसुधाभानोः पदुर्वाकसुधाम् ॥

॥ ३४ ॥ तर्कलक्षणदिशालजिनागमादिशास्त्रवगाहनकलाकुशलाद्वितीयाः ।
श्रीसोमयुगविजयवाचकनामधेयास्ते सद्गुणैरपि परैर्ध्रुवमप्रमेयाः ॥

॥ ३५ ॥ किञ्च--ये वैरङ्गिकतादिकैर्वरगुणैः सम्प्राप्तसद्गौरवाः,
सर्वादेयगिरः कलावपि युगे साम्नायजैनागमाः ।
जह्नु श्रीवरदानरर्षिविबुधास्तच्छिष्यमुख्याश्च ये, किं
तन्मूर्त्तिरिवापरेत्यभिमतास्तैस्तैर्गुणैर्धीमताम् ॥

॥ ३६ ॥ प्रज्ञागुणगुरुगेहं परिभावितसूरिशास्त्रवरतत्वाः ।
श्रीआनन्दविजयविबुधपुङ्गवास्ते तृतीयास्तु ॥

॥ ३७ ॥ अपि च—येऽद्वैतस्तुतयः कुशाग्रधिषणाः सल्लक्षणाम्भोधरा
श्छन्दोऽलंकृतकिकाव्यवाङ्मयमहान्यासैर्भृशं विश्रुताः ।
सिद्धान्तोपनिषत्प्रकाशनपरा विज्ञावतंसायिता
स्तत्तन्नूतनशास्त्रशुद्धिकरणे पारिणतां संश्रिताः ॥

॥ ३८ ॥ श्रीकल्याणविजयवरवाचकशिष्येषु मुख्यतां प्राप्ताः ।
श्रीलाभविजयविबुधास्ते तुर्या इह बहुयुक्ताः ॥

॥ ३९ ॥ एतेषां प्रतिभाविशेषविलसत्तीर्थे प्रयागमागते,
नानाशास्त्रविचारचारुसलिलापूर्णे चतुर्णामपि ।
शास्त्र वाचकवाच्यदूषणमलान्मुक्ता सुवर्णाञ्चिता,
सत्यश्रीरजनिष्ठ शिष्टजनताकाम्येव वृत्ति कनी ॥

॥ ४० ॥ श्रीमद्विक्रमभूपतोऽम्बरंगुणक्ष्माखण्डदाक्षायणी
प्राणेशाङ्कितवत्सरे (१६५०)ऽतिरुचिरे पुष्येन्दुभूवासरे ।
राधे शुद्धतिथौ तथा रस,मिते श्रीराजधन्ये पुरे,
पार्श्वे श्रीविजयादिसेनसुगुरोः शुद्धा समग्राऽभवत् ॥

॥ ४१ ॥ श्रीशान्तिचन्द्राभिधवाचकेन्द्रशिष्येष्वनेकेषु भणीयमानाः ।
ध्वस्तान्तरध्वान्तजिनेन्द्रचन्द्रराद्धान्तरम्यस्मृतिलब्धमानाः ॥
॥ ४२ ॥ अस्यामनेकशो लिखनशुद्धिगणनादिविधिषु साहाय्यम् ।
गुरुभक्ताः कृतवन्तः श्रीमन्तास्तेजचन्द्रबुधाः ॥
॥ ४३ ॥ दैवादिन्द्रातिथितां गतेष्विवंवृत्तिवृत्तिसूत्रधारेषु ।
तन्मन्त्रिनिजमनीषाविशेषमिव वीक्षितुं व्यक्तम् ॥
॥ ४४ ॥ तेषामन्तषदामखिलशिष्यसमुदायमुख्यतां दधताम् ।
गुरुकार्ये धुर्याणां पण्डितवररत्नचन्द्राणाम् ॥
॥ ४५ ॥ श्रीतपगणपूर्वागिरिसूरैः श्रीविजयसेनसूरिवरैः ।
निजहस्तेन वितीर्णा प्रवर्त्तनार्थं प्रसादपरैः ॥
॥ ४६ ॥ बहुभिश्च सम्मतेयं कृता तथा विदितसमयतत्त्वार्थैः ।
श्री विजयदेवसूरिश्रीवाचकमुख्यगीतार्थैः ॥
॥ ४७ ॥ रत्नानीव प्रमेयानि, नानाशास्त्रखनीनि चेत् ।
भूयांसि लिप्सवो यूयं, विज्ञरत्नवणिग्वराः ॥
॥ ४८ ॥ श्रीजम्बूद्वीपप्रज्ञप्तेरुपाङ्गस्य सविस्तरा ।
प्रमेयरत्नमञ्जूषा, वृत्तिरेषा तदेक्ष्यताम् ॥ युग्मम् ।
॥ ४९ ॥ श्रीशान्तिचन्द्रवाचकशिष्यवरो विबुधरत्नचन्द्रगणि ।
अस्य बहादर्शनलीलिखद् भक्तियुक्तमनाः ॥
॥ ५० ॥ वाच्यमाना श्रूयमाणा, गीतार्थैः श्रावकोत्तमैः ।
शोध्यमाना लेख्यमाना जीयासुस्ते चिरं भुवि ॥
॥ ५१ ॥ तच्छिष्यो धनचन्द्रः स्फुरदुरुधीर्लिपिकाविधिवितन्द्रः ।
अकरोत्प्रथमादर्शं सूत्रार्थविवेचने चतुरः ॥

❋ ❋ ❋

भाग : १२

| १८ | सप्तमंउपाङ्गं ' जम्बूद्वीपप्रज्ञप्ति समाप्तम् |
| --- | --- |